"नैव व्यावर्त्ततेऽर्थात्मा विद्यमानः स्वरूपतः ।
अविद्यमानरूपस्तु दैवेनैव निवर्त्तितः ॥२४५॥

विशेषणसहस्रेपि न पूर्वस्य निवर्त्तनम्,
व्यक्तिनिर्धारणात् तस्मात् सामान्यस्य विनिश्चयः ॥२४६॥

समानता हि सामान्यव्यक्तीनांश्च समानता ।
संस्थानशक्तिभेदेन तस्माज्जातिरनर्थिका ॥२४७॥

तस्मात् संवृतिसत् सर्व्वं सामान्यमिति गृह्यताम्,
वस्तुसामान्यभावे हि न वृत्तिर्न्न निवर्त्तनम् ॥३३३॥

—भाष्ये (१८७, ४८८, ५४७, ५७२)

(९) **भाषाशैली**—प्रज्ञाकरेण प्रायेण अनुष्टुप् छन्दो व्यवहृतं, अनेकत्र अन्यान्यपि छन्दांसि स्वाच्छन्द्येन प्रयुक्तानि । तत्र भाषाया लालित्यं प्रौढ़ता च स्फुटं दृश्येते, यथा—

सत्यमेतदत एव विभागः पारमार्थिकतया न समस्ति ।
सांवृतेस्तु परमेष विभागः संवृतेर्नहि विचारसहत्वम् ॥५३॥ (९२)

आकाशवायुप्रभवो हि शब्दः कथं न वायोर्गुण उक्त एषः ।
आकाश एव श्रुतिरस्य तेन व्योम्नो गुणत्वं प्रतिपन्न एषः ॥१५३॥

ज्वालादिराकाशगतो न दृष्टः किं तद्गुणत्वं कथितं न तस्य ।
अन्योपि तस्याश्रय इत्ययुक्तं ध्वनेरपि स्यात् पटहादिरन्यः ॥१५४॥ (५१५)

अवस्तुवृत्तिव्यवहारमात्रात् प्रसिद्धसंबंधतयानुमानम् ।
न बाधितं यत्र परस्य बाधा भविष्यतीत्यत्र कथं विमर्षः ॥२११॥

अर्थोयमेवं प्रतिपद्यमानो न न्यायधर्मानुगतत्वहीनः ।
इच्छापराधीनविधेश्च दृष्टस्त्यागोपि तत्त्यागकृतावतारः ॥२१२॥

सुखोपनीतस्य समीहितस्य त्यागोपि तत्तस्य विधान एव ।
न वस्तुवृत्तं पुनरेवमस्ति धराधरः कंपयितुं न शक्यः ॥२१३॥

इति सकलमशंकं कापथावृत्तिजातं यदि परममुनीनां वृत्तमेतन्न वाध्यम् ।
कथमिह दुरितानां दर्शनं नास्तिकानामुपहतनयनानां स्पष्टभावानदृष्टेः ॥२१४॥ (५३८)

अन्तर्विंध्यनिवासिसांद्रविततध्वान्तोद्धतध्वंसिधीः ।
अत्युच्चैरदयाद्रिसंततवचः प्रेंखन्मयूखोत्करः ॥

आचार्यो न विमार्गगः प्रतिहतो नान्यैरपूर्वो रविः ।
नास्तव्यस्तगभस्तिहस्तविफलप्रारंभसंभावितः ॥२३७॥ (५४५)

संक्षेपतः कृतमिदं परबोधसिद्धये वक्तुं पुनः सुबहु साधु च शक्यमत्र ।
रत्नाकरादधिगतस्य हि रत्नराशेः प्रौढ़ः प्रतिग्रहकृदस्ति न तेन भाष्यम् ॥६२१॥ (६४८)

## ३. प्रज्ञाकरकालः भारतीया नैयायिकाश्च

| (A.D.) | बौद्धाः | ब्राह्मणाः | जैनाः |
|---|---|---|---|
| १७५ | नागार्जुनः | .. | .. |
| २५० | .. | अक्षपादः | .. |
| ३७५ | (मैत्रेयः) | | |
| ४०० | असंगः वसुबन्धुः | वात्स्यायनः | |
| | BLDP | | |
| ४२५ | दिङ्नागः | | |
| ४५० | शंकरस्वामी | (कालिदासः) | सिद्धसेनः (श्वेतांबरः) |
| ५०० | | उद्योतकरः | |
| ५५० | | | |
| ५७५ | चन्द्रगोमी धर्मपालः ईश्वरसेनः | | |
| | TBLDP | | |
| ६०० | धर्मकीर्तिः | कुमारिलः | सिद्धसेनः समन्तभद्रः |
| ६५० | देवेन्द्रबुद्धिः | | |
| ६७५ | शाक्यबुद्धिः | | |
| ७०० | जिनेंद्रबुद्धिः प्रज्ञाकरगुप्तः धर्माकारदत्तः कल्याणरक्षितः | | |
| | L B | | |
| ७२५ | रविगुप्तः धर्मोत्तरः | | |
| | DPL | | |
| ७५० | यमारिः | | अकलंकदेवः (दिगंबरः) |
| | BL | | |
| ७७५ | विनीतदेवः | (शंकराचार्यः) (७८५) | |
| | B | | |
| ८०० | शंकरानन्दः | | माणिक्यनंदी विद्यानंदः |
| ८२५ | शांतरक्षितः अर्चटः | | मल्लवादी |
| ८५० | कमलशीलः जिनमित्रः | वाचस्पतिमिश्रः (८४१) | प्रभासनंदी |
| ९०० | | | अमृतचन्द्रः |
| ९२५ | | | प्रभाचन्द्रः (दि०) वादिराजः (दि०) |
| ९५० | जयानंतः | भासर्वज्ञः | देवसेनभट्टारकः |
| ९७५ | कर्णकगोमी | उदयनः (९८४) | |

१००० मुक्ताकलशः रत्नकीर्तिः जितारिः   जयन्तः   कल्याणचंद्रः, समन्तभद्रः (लघु०)
१०२५ ज्ञानश्रीमित्रः रत्नाकरशांतिः   दुर्वेकमिश्रः
| V
१०५० रत्नवज्रः दीपंकरश्रीज्ञानः
| T
१०७५ महाजनः
| T
११०० सज्जनः
११५० शंकुपंडितः   वरदराजः   हेमचन्द्रः   देवसूरिः
| L   (१०८८-११७२)(१०८८-६९)
१२०० मोक्षाकरगुप्तः दानशीलः शाक्यश्रीभद्रः   गंगेशः
L |   बर्धमानः
१२५० स-सक्य-पण्-छेन्   वल्लभः

## ४. भोटभाषान्तरीकरणम्

भोटदेशे भाष्यं इदं बहुमतमिति अस्य स्वटीकासहितस्य षष्टिसहस्रश्लोकग्रंथस्य भाषान्तरीकरणमेव प्रकाशयति । प्रमाणवार्त्तिकतत्परिवारग्रंथा भोटभाषायां निम्नक्रमेण अनूदिता :—

### (१) भाषान्तरकाराः

(A·D) भाषान्तरकारः

| | भारतीयः | भोटदेशीयः | ग्रंथाः |
|---|---|---|---|
| | शांतरक्षित-युगे— | | |
| ८४० | विशुद्धसिंहः | पल् चेग्स् (क.व.) | न्यायबिंदु-टीका (कमलशीलस्य) |
| | | | संतानान्तरसिद्धिः (धर्मकीर्त्तेः) |
| | | | ०टीका (विनीतदेवस्य) |
| | प्रज्ञावर्मा | ,, | हेतुबिन्दुः (धर्मकीर्तेः) |
| | | | ०विवरणं (अर्चटस्य) |
| | दीपंकरश्रीज्ञानयुगे— | | |
| १०४० | देवेन्द्रभद्रः | प्रगस्–ब्योर्–शेस्–रब् | तत्त्वसंग्रहपंजिका (कमलशीलस्य) |

[१]. B. (History of Buddhism by Buston ) (1322A. D.) L. क्लोङ-र्दल्-ग्सुङ-बुम् (1707A. D.) D. देब्-ग्तेर्-स्ङोन्-पो P. [२]. ऽग्रुग्-पपम-द्कर्-पो (1520A. D.) छोस्-ऽब्युङ । ऽस्तन्-ऽग्युर् (ग्र्युद् Xcviii)

[३]. (Cviii), V. (Vidyabhushana's History of Indian Logic) विशेषस्तु "वादन्याय" भूमिकायां द्रष्टव्यः

| | | | |
|---|---|---|---|
| १०५० | सुभूतिश्रीशान्तिः | ग्ने-वडि-ब्लो-ग्रोस् | प्रमाणवार्त्तिकं (धर्मकीर्तेः) |
| | | | ०वृत्तिः (") |
| | | | ०पंजिका (देवेन्द्रबुद्धेः) |
| | | | ०टीका (शाक्यबुद्धेः) |
| | | | वादन्यायः (धर्मकीर्तेः) |
| १०७० | भव्यराजः | ङ्गोग्-ब्लो-ल्दन्-शेस्-रब्- | प्रमाणवार्त्तिकभाष्यं (प्रज्ञाकरस्य) |
| | | | ०टीका (यमारेः) |
| | | | प्रतिबंधसिद्धिः (शंकरानंदस्य) |
| | | | अपोहप्रकरणं (धर्मोत्तरस्य) |
| | | | क्षणभंगसिद्धिः (धर्मोत्तरस्य) |
| १०८० | ,, | प-छब्-ञि-म-ग्रग्स् | परलोकसिद्धिः (धर्मोत्तरस्य) |
| .. | परहितभद्रः | ङ्गोग्० | प्रमाणविनिश्चयः (धर्मकीर्तेः) |
| | | | ०टीका (धर्मोत्तरस्य) |
| | | | न्यायविन्दुः (धर्मकीर्तेः) |
| | ,, | ग्ने-वडि-र्दो-र्जे | सम्बंधपरीक्षावृत्तिः (शंकरानंदस्य) |

प्रमाणवार्त्तिकस्य प्रथमे परिच्छेदे धर्मकीर्त्तेः ३५०० ग्रंथपरिमिता स्ववृत्तिः, अवशिष्टेषु त्रिषु च तच्छिष्यस्य देवेन्द्रबुद्धेः "पंजिका" उभयोश्च देवेन्द्रान्तेवासिनः शाक्यबुद्धेः १७०४६ श्लोकमिता महती टीका। प्रज्ञाकरीये भाष्ये तु यमारिजयानन्तयोः टीकयोः परिमाणं यथाक्रमं २६५५२–१८१४८ श्लोकमितम्।

## (२) प्रमाणवार्त्तिकस्य परिवारग्रंथाः—

| ग्रंथः (श्लोक-परिमाणं) | कर्त्ता (कालः A. D.) | भाषान्तरकारः भारतीयः | भोटदेशीयः (लोचवा) |
|---|---|---|---|
| प्रमाणसमुच्चयः | दिङनागः (425) | कनकवर्मा | दद्-पडि-शेस्-रब् |
| प्रमाणवार्त्तिकम् (१४५९) | धर्मकीर्त्तिः (600) | सुभूतिश्रीशांतिः | ग्ने-वडि-ब्लो-गोस |
| ०वृत्तिः (८०००) | मनोरथनंदी | न भाषान्तरीकृता | |
| ०वृत्तिः (३५००) | धर्मकीर्त्तिः | सुभूति० | ग्ने-वडि० |
| ०वृत्ति-टीका (१००००) | कर्णकगोमी (900) | न भाषान्तरीकृता | |
| प्र० वा० पंजिका (८७४८) | देवेन्द्रबुद्धिः (650) | सुभूति० | ग्ने-वडि० |
| ०टीका (१७०४६) | शाक्यबुद्धिः (675) | | |
| ०टीका (७५५२) | रविगुप्तः (725) | ... | ... |
| ०टीका (७५७८) | शंकरानन्दः (800) | | |
| ०भाष्यं (१६२७६) | प्रज्ञाकरगुप्तः (700) | भव्यराजः | ङोग-ब्लो-ल्दन्० |
| ०भाष्यटीका (२६५५२): | यमारिः (750) | .... | ... |
| ०भाष्यटीका (१८१४८) | जयानन्तः (950) | दीपंकररक्षितः | ब्यङ-छुब्-शेस्-रब् |

(३) व्याख्या-परम्परा—




(४) भोटभाषन्तरकालः—

बौद्धग्रंथानां भाषान्तरीकरणं पूर्वतोपि प्रवृत्तम्। कैस्तवाष्टमशताब्द्यां शतसाहस्रिका-दशसाहस्रिकाष्टसाहस्रिका-प्रज्ञापारमिता अनूदिताः, अन्यानि च गम्भीराण्यनेकानि बौद्धसूत्राणि परिवर्तितानि। अथापि भोटभाषायाः परिपक्वता तस्यां च अध्ययनाध्यापनयोः परम्परा यावन्न दृढीभूता, तावत् गम्भीराणां बौद्धन्यायग्रंथानां भाषान्तरपरिवर्तनस्य नासीदवकाशः। कैस्तवनवमशताब्द्या मध्येधुनापि गुणैर्गुरुभूतानि कायतः लघून्येव न्यायप्रकरणानि भाषान्तरीकृतानि। अयमेव कालः, यदा तत्त्वसंग्रहकर्त्ता आचार्यः शान्तरक्षितः स्वयं भोटदेशं गतः तत्रैव च शरीरं तत्याज। शान्तरक्षितकाले न्यायग्रंथानां स्पर्श एव जातः, भाषान्तर-कार्यपूर्तिस्तु शताब्दिद्वयानंतरं तदैवारब्धा, यदा दीपंकरश्रीज्ञानो भोटदेशं प्राप्तः। देवेन्द्रभद्रः सुभूतिश्रीशान्तिश्चास्यैव समसामयिकौ, याभ्यां बौद्धप्रमाणशास्त्रस्य भाषापरिवर्तनं सुसमारब्धं। सपरिवारस्य प्रमाणवार्त्तिकस्य भाषान्तरीकरणं सुभूतिश्रीशान्तिना भव्यराजेन च स्वसहकारिभिः कल्याणमति-धीमत्प्रज्ञ-बोधिप्रज्ञैश्च सह समापितं। एवामेव तपसः प्रभावेण इदानीं तादृशानि ग्रंथरत्नानि कलेवरान्तरे जीवन्ति। देववाण्यामपि केचन ग्रंथा भोटदेशे समुपलब्धाः, समुपलप्स्यन्ते च केचनान्येऽपीति आशासे।

## हस्तलेखा

अस्य ग्रंथस्य द्वे एव आदर्शपुस्तके भोटदेशीये स-स्क्य-विहारेऽधिगते। तयोरेकं तालपत्रीयं दानशीलस्य, अपरं कागतीयं तत्सतीर्थ्यस्य विभूतिचन्द्रस्य। तुरुष्कैर्ध्वस्तेषु नालन्दा-विक्रमशिला-जगत्तला-विहारेषु अन्तिमो भारतीयो बौद्धसंघराजः शाक्यश्रीभद्रः (११२७–१२२५ कै०) अनेकैरन्तेवासिभिस्सह नेपालं गतः। ततश्च भोटसामन्तेन कीर्तिध्व-

जेन (ग्रग्स्-प-र्ग्यल्-म्छन्) निमंत्रितः १२०६ ख्रैस्तव-संवत्सरे तद्राजधानीं स-स्क्य-नगरीं गत्वा तत्रान्यत्र च भोटदेशे दशवर्षाणि निन्ये। तस्यान्तेवासिषु आस्तां दानशील-विभूति-चन्द्रौ। विभूतिचन्द्रः तरुणतर आजीवनं तत्रैवावसत् भोटभाषायां पाण्डित्यं चाध्यगच्छत्। अस्माकं द्वे आधारपुस्तके अनयोरेव।

(१) विभूतिचन्द्र-पुस्तकं (A)—द्वितीययात्रायां (१९३४ ख्रै० संवत्सरे) एतत् कागगतपुस्तकं स-स्क्य-विहारस्य गु-रिम्-ल्ह-खङ् नामके देवालये भोटचीनभाषयोः बहुशत-हस्तलेखेषु मया लब्धम्। ख्रैस्तवत्रयोदशशताब्द्यां भारते तालपत्रं भुर्जपत्रं चैव लेखाधाररूपेण उपयुज्येते स्म। उत्तरस्यां (भोटदेशे) तु चीनसान्निध्याद् आसीत् कागगतव्यवहारः इत्यस्य निदर्शनभूतं इदं पुस्तकम्। विभूतिचन्द्रेण स्वहस्तेन लिखितं—

लिखिता भूतिचन्द्रेण भिक्षुणा ज्ञानकांक्षिणा। यदस्पष्टमशुद्धं वा सज्जनाः क्षन्तुमर्हथ ॥

छन्दोनुरोधाद् विभूतिचन्द्रस्थाने भूतिचन्द्र इति प्रयोगोऽत्र। तत्रैव ग्रंथान्ते "लिखितालंकृतिरुत्तरस्यां" इत्यत्र उत्तरदिग्विभागे स्थितस्य भोटदेशस्य संकेतः।

अस्याकारः २७"×४", पत्राणि ५८॥ परिगणितानि, ४२ तमस्य पत्रस्य द्विः परिगणनात् पत्राणां संख्या ५९॥ भवति। अस्यैकस्य पृष्ठस्य मुद्रिते पुस्तके पादोन-पृष्ठत्रये समावेशः, तेन ज्ञायते अक्षराणां सूक्ष्मता पंक्तीनां च सघनता। त्रुटितोंऽशः बहिः-पंक्ति उपर्यधस्ताद् वा संकेतपुरस्सरं सन्निवेशितः।

अस्य लिपिः कुटिला (वर्तुला) या तदानीं मगध-मिथिलांग-बंगादिदेशेषु प्रचलिताऽभूत्। तदानीन्तनेषु ग्रंथेषु "मोऽनुस्वारः" इति वचनं आद्रियमाणं अत्र दृश्यते। प्रमादबाहुल्यं नास्ति, तथापि व-स्थाने बकारः बहुत्र, न-स्थाने णकारः, श-सयोः श-सौ च क्वचिद् दृश्यन्ते। अन्ये विपर्यासास्तु—

| | | | |
|---|---|---|---|
| च = ध = व | ल = न | ए = ो | य = प |
| त = भ | श = ण = ग | अ = स्व | ा = ं |
| र्थ = न्य | त्व = नु | ऽ = ऽऽ | ङ्श = ंश |
| त = तु | व = ् | त = द | स = ङ |
| त्य = स | च्च = व्व | त्र = द | |
| र = व | ो = ि | मु = सु | |

ग्रंथस्योत्तरार्धे ३४१तमपृष्ठतः प्रस्थाय अयमेव हस्तलेखः आदर्शरूपेण गृहीतः, दानशीलग्रंथस्य पाठास्तु पादटिप्पण्यां निवेशिताः।

(२) दानशील-पुस्तकं (B)—तृतीयभोटयात्रायां (१९३६ ख्रै०) इदं ताल-पत्रीयं पुस्तकं स-स्क्य-नगरे कुबिलेखानपुत्रस्य फग्स्-पा-संघराजेन निर्मितस्य ल्ह-खङ्-छेन्-मो (महादेवालय) नाम्ना प्रसिद्धस्य महाविहारस्याज्ञातकल्पे छग्-पे-ल-खङ् नाम्नि क्षुद्रकोष्ठके बहुशतभोटहस्तलेखानां मध्ये चत्वारिंशदधिकैः तालपत्रीयसंस्कृतग्रंथैस्सार्धं अधिगतम्। अत्र द्वि—प्रथम(ख)पृष्ठे "दानशीलस्य पुस्तिका" १२०(ख)तमपृष्ठे च "दानशीलस्य"

इति लिखितं, तेन पुस्तकस्वामी भारतीयसंघराजस्यान्तेवासी दानशील एव। अत्र १–४७ पत्राक्षराणि सुन्दराणि केनचित् मसीजीविना सुलेखकेन लिखितानि। ततोऽग्रे त्रुटितानि ३६ पत्राणि (४८-८३) अन्येन केनचित् (मन्ये दानशीलेनैव) सम्पूरितानि। अन्यानि १३१ पृष्ठानि (८४-२१४) प्राक्लिखितानि क्वचित् परिशोधितान्यपि।

अस्याकारः २२"×९.२", प्रतिपृष्ठं प्रथमभागे प्रायेणाष्टौ पंक्तयः, द्वितीयभागे सप्त, चरमे च प्रथमवत्। इह मुद्रिते ग्रंथे ३४१ तमपृष्ठं यावत् दानशीलस्य हस्तलेख एक एव आधारभूतः ततोऽग्रे विभूतिचन्द्रस्य। दानशीलग्रंथस्य पाठभेदास्तत्र पादटिप्पण्यां प्रदर्शिताः।

(३) **भोटभाषापुस्तकं** (T)—प्रायः ११०० क्रैस्तवसंवत्सरे भव्यराज-धीमत्प्रज्ञाभ्यां मूलतोऽयं ग्रंथो भोटभाषायां परिवर्तितः, तदनु कुमारश्र्यार्यप्रज्ञाभ्यां च पुनर्निरीक्षितः, पश्चात् स्तन्-ग्युर-संग्रहस्य सूत्र(म्दो)वर्गे ते-थे-पुटयोः प्रवेशितः। स्नेर्-गि-मुद्रतः संग्रहो मयात्र संस्कृत-भोट-संदर्भयोः तुलनार्थं व्यवहृतः, पाठभेदाश्च ततः पादटिप्पण्यां निवेशिताः।

इतः षोडशवर्षतः पूर्वं लंकासूनुना न्यायाचार्येण परेरोपनामकेनाभयसिंहेन मया च भोटदेशे ग्रंथोऽयं लिपीकृतः (मुद्रितस्य १८४ पृष्ठानि "न चासौ कार्यकारणभावः" इति यावत् महतायासेन अभयसिंहाचार्येण लिखितानि)। विघ्नवात्या स्वदेहे जराम्प्राप्य मुमूर्षुरेवासीत् अयं ग्रंथः, यदि विनायकरूपेण नावतीर्णौ स्यातां, बिहारशिक्षासचिवो माथुरोपनामको जगदीशचन्द्रः, आचार्यश्च अलतेकराह्वयोऽनन्तोऽनन्तगुणगरीयान्।

एतावतो विशालस्य ग्रंथस्य मुद्रणं त्रिचतुर्षु मासेषु "प्राणैः कंठगतैरिव" द्रुतवेगेन व्यधायि। राज्यतो लब्धं धनं अवध्यभ्यन्तर एव विनियोक्तव्यमिति राजाज्ञा, मुद्रणाध्यक्षोपि शोध्यपत्रस्य तूर्णं अपरावर्तने अवहितभारोऽहमिति न मदीयो दोषः कृत्यसमाप्तिकालातिपात इति सत्यं "इतस्तटमितो व्याघ्रः"। एवं अत्र भूयांसि प्रमादस्थानानि। तदत्र विभूतिचन्द्रवचनक्रमेण—"यदत्राष्टमशुद्धं वा सज्जनाः क्षन्तुमर्हथ"। शीर्षकवाक्यानि तु विषयसूच्यनुसारं शोध्यानीति,

मसूरीस्थः<br>१–७–५३

विज्ञापयति—<br>राहुलः सांकृत्यायनः

# विषयानुक्रमणिका[1]



[1]. ग्रंथे प्रमादमुद्रितः पाठ इतः शोधनीयः

# नामाद्यनुक्रमणिका

# १. परिच्छेदः

## §१. विधिभावनादि वार्त्तिकं प्रथमम्

### १. प्रमाण-लक्षणम्

#### (१) अविसंवादि ज्ञानं प्रमाणं

नमोबुद्धाय ।

[१]प्रमाणभूताय जगद्धितैषिणे प्रणम्य शास्त्रे सुगताय तायिने ।
कुतर्कसम्भ्रान्तजनानुकम्पया प्रमाणसिद्धिर्विधिवद् विधीयते ।।१।।
प्रायः प्रस्तुतवस्तुविस्तरभृतो नेक्ष्यन्त एवोच्चकैर्-
व्वक्तारः परमार्थसंग्रहधिया व्याधूतफल्गुक्रमाः ।
तेनास्मिन् विरलक्रमव्यपगमादत्यन्तशुद्धान्धियं
धन्यानां विदधातुमुद्धतधियां धीः सम्विदे धीयते ।।२।।

अत्र भगवतो हेतुफलसम्पत्त्या प्रमाणभूतत्वेन स्तोत्राभिधानं शास्त्रादौ शास्त्रार्थत्वात् । भगवानेव हि प्रमाणभूतोऽस्मिन् प्रसाध्यते ।

तत्र हेतुराशयप्रयोगसम्पत् सांव्यवहारिकप्रमाणापेक्षया । आशयो जगद्धितैषिता (।) प्रयोगो जगच्छासनात् शास्तृत्वं (।) फलं स्वपरार्थसम्पत् । स्वार्थसम्पत् सुगतत्वेन त्रिविधमर्थमुपादाय । प्रशस्तत्वं स्वरूपवत् । अपुनरावृत्त्यर्थं सुनष्टज्वरवत् । निःशेषार्थं सुपूर्णघटवत् (।) परार्थसम्पत् जगत्तारणात् तायित्वं । सन्तानार्थञ्चापरिनिर्व्वाणधर्म्मत्वात् एवम्भूतं भगवन्तं प्रणम्य 'प्रमाणसिद्धिर्विधीयते' । प्रमाणाधीनो हि प्रमेयाधिगमो भगवानेव च प्रमाणं । प्रमाणलक्षणसद्भावात् । प्रमीयतेऽनेनेति प्रमाणम् ।

तत्र सामान्येन प्रमाणलक्षणं निर्दिशति ।

**प्रमाणमविसंवादि ज्ञानं ;**

ज्ञानं प्रमाणन्तत्र सति प्रमितिसिद्धेः । अविसम्वादि[२] (।) विसम्वादे सति विपर्ययात् इन्द्रियार्थसंयोगादयो हि विसम्वादविविक्तज्ञानोपलक्षिता एव तत्त्वं प्रतिलभन्ते । अविसम्वादार्थी हि सर्व्वः प्रमाणान्वेषणप्रयुक्तः ।

ननु (अ)विसम्वादित्वं[३] तस्य साधनज्ञानस्य स्वरूपमेव । तस्मिंश्च स्वरूपेण ज्ञायमाने ज्ञातमेव तदिति किं परीक्ष्यते । अथ न स्वरूपसम्वेदनं (।) तदा प्रमाणमेव नास्तीत्यापतितं । न चायं पक्षः क्षमो भवतामिति ।

तदसत् । न स्वरूपमेव ज्ञानस्य प्रामाण्यं सम्वादित्वम्वा (।) अपि तु (।)

---

[१]T. इह प्रारभ्यते वम्-पो-दङ्-पो (प्रथमाह्निकम्)। टिप्पणियां भोट-भाषान्तरपाठाः
[२]T. प्रमाणं हि अविसंवादि तत्र सति प्रमेयसिद्धेः [३] अविसंवादित्वं

## अर्थक्रियास्थितिः।

**अविसम्वादनं ;**

न खलु ज्ञानस्वरूपमात्रावगताविदं प्रमाणमिति भवति। किन्तर्हि (।) अर्थस्य दाहपाकादेः क्रियानिष्पत्तिस्तस्याः स्थितिरविचलनमविसम्वादनं व्यवस्था वा। सा चार्थ-क्रिया भाविनी न तत्काले (।) ततस्तत्सम्बन्धो न स्वरूपसम्वेदनमात्रावधृतः।

ननु तत्सम्बन्धिता स्वरूपमेव (नास्ति।) तत् कथं न स्वरूपसम्वेदनमात्रावधारणं।

नैतदस्ति (।)

द्विष्ठसम्बन्धसम्वित्तिर्नैकरूपप्रवेदनात्। द्वयस्वरूपग्रहणे सति सम्बन्धवेदनम् ॥३॥

कथं तर्हि प्रवर्त्तनाकाले तज्ज्ञानं। एतदुत्तरत्र वक्ष्यामः। यद्यर्थक्रियाधिगमे पूर्वकं प्रमाणं (।) सोप्यर्थक्रियाधिगमः प्रमाणमप्रमाणम्वा। अप्रमाणेनार्थक्रियाधिगमाभावात् प्रमाणन्तत्। ततस्ततोप्यर्थक्रियाधिगमः परान्वेषणीय इत्यनवस्था।

नेदं साधीयः।

उत्तरार्थक्रियाभावात् पूर्वस्य यदि मानता। तदैवार्थाक्रियाभावादुत्तरस्य कथन्न सा ॥४॥

यत्रार्थक्रियास्थितिरपरोपकल्पिता तद् यावत् प्रमाणं (।) यत्र तु स्वतस्तदैवार्थ-क्रियानुभवः (।) तत् सुतरामेव प्रमाणं (।) अर्थक्रियास्थितिरविसम्वादनमिति सामान्ये-नाभिधानात्।

ननु दाहपाकाद्यर्थक्रियेयं स्वप्नेपि सम्भवति पीतस(?श)ङ्खादिज्ञाने च (।) शब्द-विषये तु ज्ञाने न दाहपाकाद्यर्थक्रिया स्वतः परतश्चार्थक्रियाभावात्। तस्मादबाधितो बोधः प्रमाणमिति युक्तं।

तदप्ययुक्तं यतः।

## शाब्देप्यभिप्रायनिवेदनाद् (।१)

**अविसम्वादनं ;**

शब्दविषयं ज्ञानं शाब्दं। अपिशब्दादन्यत्रापि। अयमर्थः (।)

स्वरूपबोधमात्रेण[1] सर्वं ज्ञानं भवेत् प्रमा। अथाबाधितबोधत्वात् स्वप्नादावपि किन्न तत् ॥५॥

बोधमात्रसंगमो हि स्वप्नेतरप्रत्ययसम्भवी समान एव सर्व्वत्र। (स हि)[2] न पुरुषार्थस्य साधकः। अथाबाधितबोधत्वं तदपि समानमेव। जाग्रत्प्रत्ययेन बाधमानता चेत्। कोयं बाधो नाम।

परेण विषयाभावज्ञापनं स (यदि)[2] हीष्यते। स्वार्थे प्रवृत्तिमज्ञानमभावं ज्ञापयेत् कथं ॥६॥

न तावज्ज्ञानान्तरेणाभावः स्वप्नज्ञानस्यान्यस्य वा केनचित् क्रियते। तत्काले तस्य स्वयमेव नाशात्। न चाक्षिनिमीलनान्नष्टे ज्ञाने बाध्यता प्रतीयते। अन्येन नहि ज्ञानेन

---

[1] बोधस्वरूपमात्रेण [2] T

तस्य विषयापहारोऽसत्ताज्ञापनलक्षणो बाधः। न च स्वविषये प्रवृत्तमन्यविषयापहारं रचयितुमलं। स्वविषय(ज्ञान)[१]स्वविषयस्य रूपसाधनं हि ज्ञानानां धर्म्मः। परविषयापहरणन्तु नराधिपधर्म्मः।

कथन्तर्हि बाध्यबाधकभावः। न कथञ्चित्। अत एवाबाधितत्वं प्रमाणत्वं। तस्माद् यत्रार्थक्रिया नास्ति तदप्रमाणं।

स्वयमन्येन वा यत्र ज्ञायते न क्रियोदयः। तदप्रमाणं न स्वप्नास्वप्नभेदोस्ति तत्त्वतः ॥७॥

व्यवहारमात्रमेवेदं स्वप्नास्वप्नभेदो नाम। तथा प्रमाणाप्रमाणभेद इति हि वक्ष्यते। न चासावर्थक्रियास्थितिरविचलितत्वाभावात्। भावनामात्रावसायतार्थक्रिया स्वप्ने। न तत्र परितोषः। अबाधितत्वे त्वनवस्थैव। प्रथममबाधनं सर्वत्रैव। तदुत्तरकालमबाधने(।) तत्राप्युत्तरकालमबाधनमिति कुतः।

बाधकस्य पुरोभावः सर्वविज्ञानसम्भवी। परन्तु बाधकाभाव[१]स्तत्राप्याशंक्यतेन किं ॥८॥

पीतसं(?शं)खादिविज्ञानन्तु [२] न प्रमाणमेव। तथार्थक्रियावाप्तेरभावात्। संस्थानमात्रार्थक्रियाप्रसिद्धावन्यदेव ज्ञानं प्रमाणमनुमानं (।) तथा हि (।)

प्रतिभास[३] एवम्भूतो यः स न संस्थानवर्जितः। एवमन्यत्र दृष्टत्वादनुमानं तथा च तत् ॥

येन न कदाचिद् व्यभिचार उपलब्धः स यथाभिप्रेते विसम्वादाद् विसम्वाद्यत एव। यस्तु व्यभिचारसम्वेदी स विचार्य प्रवर्त्तते (।) संस्थानमात्रन्तावत् प्राप्यते। परत्र सन्देहो विपर्ययो वा (।) ततोऽनुमानं संस्थाने। संशयः परत्रेति प्रत्ययद्वयमेतत् प्रमाणमप्रमाणं च।

अनेन मणिप्रभायां मणिज्ञानं व्याख्यातं। तथा च वक्ष्यामः।

अथ केन द्वयमेतदिति प्रतीयते। एतदपि वक्ष्यामः। शब्दविषयन्तु ज्ञानमभिप्रायनिवेदनात् प्रमाणं। अभिप्रेतार्थक्रियास्वरूपनिवेदनमेव सम्वादनं।

ज्ञेयस्वरूपसंसिद्धिरेव तत्र क्रिया मता। चित्रेपि दृष्टिमात्रेण फलं परिसमाप्तिमत् ॥९॥

न खलु स्वरूपसम्वेदनादपरमत्रार्थक्रियाज्ञानं [४] क्वचिदुपलभ्यते। रूपादयो हि स्वस्वरूपसम्वेदनपरा एव (।) न तद्विषयः प्रत्ययः परत्र प्रमाणं। तत्स्वरूपः सम्वेदनमात्रकञ्च सर्व्वत्र ज्ञाने समानमिति न सांव्यवहारिकप्रमाणावतारः।

ततो भाव्यर्थविषयम्विषयान्तरगोचरं। प्रमाणमध्यारोपेण व्यवहारावबोधकृत् ॥१०॥

भाव्यर्थविषयान्तरप्राप्त्यर्था हि प्रमाणाप्रमाणान्वेषणापरः[५]। यथा च भिन्नो विषयस्पर्शादिकः[६] न रूपादिस्वरूपग्रहणेऽन्तर्याति तथा भाविस्वरूपमपि परमार्थतः। अध्यारोपेण तु तदेकता विषयान्तरस्यापि। ततस्तद्द्वारेण सम्वादनमुक्तं ज्ञाने[७]। यत्र तु तदेवार्थक्रिया तत्राविवाद एव। तत्र भाविस्वरूपे तत्कारणत्वेनैकतारोपः। परत्र तु स्पर्शादौ तदेकसाम-

---

[१] बाधकभावःT [२] पीतशंखविज्ञानादि [३] आभासः।
[४] क्रियासिद्धिः [५] अन्वेषणा
[६] यथा स्पर्शादिको भिन्नविषय (:) [७] त्यक्तः—ज्ञाने।

**प्र्यधीनत्वेनेति न विशेषः। यत्र तु अभिमतार्थक्रिया [१] यथा [२] जलग्राहिविज्ञानात् मरीचि-कार्थक्रियावाप्तिस्तदप्रमाणमेव। अत एवाह। 'शाब्देप्यभिप्रायनिवेदनाद्' (।)**

**अन्यत्रापि चित्रादौ (।) तथा च घटज्ञाने पटप्राप्तौ शुक्तिकायाञ्च रजतज्ञानपरम्प-रायामपि न प्रमाणता(। अ)भिप्रायाविसम्वादाभावात्।**

अभिप्रायाविसम्वादात् प्रमाणं सर्व्वमुच्यते। न सजातिविजातीयविज्ञानोत्पत्तिमात्रतः ॥११॥
बाधकप्रत्यस्यापि[3] स्थितेरेवंप्रकारता (।)। तत्त्वतस्तु विजातीयविज्ञानोत्पत्तिमात्रकं ॥१२॥
विजातीयविदुत्पत्तिर्यदि बाधकमुच्यते। घटज्ञाने पटज्ञानं बाधकं किन्न युक्तिमत् ॥१३॥
नेति प्रत्ययबुद्धचा चेत् बाधकं किंचिदिष्यते। स एव प्रत्ययो नेति प्रमाणाद भेद [४]आगतः ॥१४॥
अभावलक्षणं मानं ततश्चेत्तन्निरूप्यते। किमन्यरूपसम्वित्तिः किमभावस्य तस्य वित् ॥१५॥
अन्यरूपस्य वित्तिश्चेदविशेषात् प्रसज्यते। तदभावस्य वित्तौ स्यात् तस्येति न समन्वयः ॥१६॥

**अभा(वो) हि स्वरूपेण प्रतीयते। स्वरूपञ्चाभावस्य न घटादिसम्बन्धितया प्रतीयते। प्रतीयमाने हि घटे न तत्सम्बन्धिता(ऽ)भावस्य। तदाऽभावाभावात्। नहि जीवत एव देवदत्तस्य मरणं। अप्रतीयमाने(न)तु घटेन सम्बिन्धिता (ऽ)भावस्य न शक्या ग्रहीतुं।**

**अथ कार्यकारणभाववत् प्रतीतिः। कारणे सति पश्चात् कार्यं भवति (।) तदनन्तरं तस्योपलब्धिक्रमेण स्वरूप-प्रतिपत्तौ कार्यकारणसम्बन्धपरिग्रहः एवं भावे सत्यभावो(ऽ)भावे च सति भाव इति भवति सम्बन्धप्रतिपत्तिः।**

**तदप्यसत्। यतः।**

अत्यन्ताभावसम्बन्धः कस्यचिन्न प्रसिध्यति। न भावे सत्यभावोऽसौ न च तत्र विपर्ययः ॥१७॥

**किञ्च (।)**

कार्यकारणयो रूपं विना तेन प्रतीयते। अभावस्तु विना भावं भवतो न प्रतीयते ॥१८॥
देशस्य शून्यता या तु तस्याः सर्वत्र तुल्यता। प्रागभावादिभेदस्य[५] तत्रात्यन्तमसम्भवः ॥१९॥
यथा च वस्तुनो भेदः प्रत्यक्षेण प्रतीयते। प्रागभावादिभेदोपि प्रतीयेत तथा (ऽ)क्षतः ॥२०॥
अभावेण प्रमाणेन प्रतीतिस्तस्य चेन्मता। कस्याभावः प्रमाणस्य प्रमाणाभावाद्धि(?)वेदने ॥२१॥
किन्न भावस्य सर्व्वस्य किन्न सुप्तस्य सर्व्वथा। अभावग्राहिका वित्तिरभावो यदि सम्मतः ॥२२॥
भाववित्तिं विनैवासौ कस्यचित् किन्न लक्ष्यते। एषैव तत्र सामग्री यदि नाभावनिश्चयः ॥२३॥
वस्तुतो व्यतिरिक्तस्य नाभावस्यास्ति वेदन। इदन्नास्तीति विज्ञानं वेत्ति तद्व्यतिरेकितां ॥२४॥
कुत उत्पद्यतामेतन्नेन्द्रियात् स्मरणम्विना। इन्द्रियस्मृतिसंयोगादभावज्ञानसम्भवे ॥२५॥
प्राप्तं प्रत्यक्षमेवेदम(क्ष)भावानुसारतः। अन्यत्र वृत्तमक्षञ्चेन्नान्यविज्ञानकारणं ॥२६॥
मानसं नास्तिताज्ञानं कथमस्य प्रमाणता। प्रमाणमविसम्वादादपरं मानमेव तत् ॥२७॥
व्यतिरिक्ते हि नाभावे विसम्वादोस्ति कस्य चित्। केवलत्वे विसम्वादस्तत्प्रत्यक्षेण गृह्यते ॥२८॥
विना भावमतिं तच्च केवलग्रहणं सदा[६]। परानन्नुप्रवेशेन प्रतीतिः केवलग्रहः ॥२९॥

---

[१] अभिमता नानर्थक्रिया [२] मरीचिकाया [३] बाधकप्रमाणस्य
[४] मतः [५] T. भेदस्तु [६] मतं

केवलग्रहणेध्यक्षे[1] विसम्वादस्य सम्भवः । ततः प्रत्यक्षमेवेदमन्यथानुपलम्भनं ॥३०॥
ननु केवलसम्वित्तिरभावावित्तितः कुतः । सापि केवलसम्वित्तिं विना नेति समानता ॥३१॥
यथा वा केवलोऽभावो विना भावेन मीयते । तथा भावोपि नैवञ्चेदनवस्थाप्र सज्यते ॥३२॥

अभावप्रतीतिं विना न केवलप्रतीतिरिति चेत् । केवलप्रतीतिम्विना नाभावप्रतीतिरिति समानं । अभावो वा केवलः कथमभावान्तरम्विना[2] (।) तत्राप्यभावकल्पनेऽनवस्था । स एव स्मर्यमाणपदार्थपेक्षोऽनुपलम्भोऽभावसाधनः प्रत्यक्षः प्रत्ययः । अभावव्यवहारस्तु वासनानुरोधात् क्वचिदेव भवति नान्यत्रेति विभागः ।

तस्माद् यथा जाग्रत्प्रत्ययः स्वप्नप्रत्यस्य बाधकस्तथा विपर्ययोऽपि केवलग्रहणादिति न्याय एषः । तस्माच्छाब्देऽप्यभिप्रायनिवेदनात् प्रामाण्यमिति निराकृतमेतत् (।)

श्रोत्रधीश्चाप्रमाणं स्यादितरा(न)भिसङ्गतेः ।

ननु प्रमाणभूतेन भगवता कोऽर्थः (व्यावहारिक) प्रमाणादेव सर्व्वपुरुषार्थसिद्धेः ।

नैतदस्ति (।)

स्वरूपग्रहणे ध्यक्षमनुमान्यत्र प्र (?) वर्त्तते । वक्ष्यतेदः पुनः पाश्चादपरस्याप्रमाणता ॥३३॥

न तावत् प्रत्यक्षं परलोकादौ प्रवर्त्तते । तस्य स्वरूपमात्रग्रहणादिति प्रतिपादयिष्यते । अनुमानन्तु सम्बन्धग्रहणमन्तरेण नास्ति । न च सम्बन्धो व्याप्यसर्वविदा ग्रहीतुं शक्यः । स्वरूपसम्वेदननिष्ठेन हि प्रत्यक्षात्मना न सम्बन्धग्रहणम् (।) अनुमानेनैव सम्बन्धग्रहणे इतरेतराश्रयणदोषः । संव्यवहारमात्रेण तु[3] प्रत्यक्षानुमाने प्रमाणं सर्व्वज्ञसाधनानुगुणत्वेनैव नान्यथेति । पश्चादेतत् प्रतिपादयिष्यते । (१)

ननु यदि नाम प्रमाणं परलोकादौ प्रत्यक्षानुमानलक्षणं न प्रवर्त्तते । तस्य स्वरूपविषयत्वादनुमानस्य च सम्बन्धग्रहणसापेक्षत्वात् । शास्त्रन्तु नैवमिति तत एव समीहितसिद्धिः । किम्भगवान् प्रमाणभूतः प्रसाध्यते ।

अत्रोच्यते ।

वक्तृव्यापारविषयो योऽर्थो बुद्धौ प्रकाशते ।
प्रामाण्यन्तत्र शब्दस्य नार्थतत्त्वनिबन्धनं ॥२॥

शब्दस्य हि नापौरुषेयतेति पश्चात् प्रतिपादयिष्यते । पौरुषेयता तु स्यात् । तत्र च वक्तुर्व्यापारो विवक्षा (।) वक्ता विवक्षिता । विवक्षाया विषयो योर्थः श्रोतृबुद्धौ प्रकाशते (।) प्रमाण्यन्तत्रैव शब्दस्य तत्रैव च व्यापरः शब्दस्य (।) अन्यथान्यथा विवक्षितमन्यथा प्रतिपादयतीत्यप्रेक्षापूर्वकारी स्यात् । तथा च सुतरामेवाप्रामाण्यं (।) स च विवक्षिता न सर्व्वः सर्ववेदी । अन्यथा परस्परविरुद्धता शास्त्राणां न स्यात् । न च परस्परविरुद्धोर्थोनुष्ठातुं शक्यः । यथानुष्ठानमात्रार्थसिद्धौ व्यर्थतया प्रमाणमलं शास्त्रस्य । स्वमनीषिकानुष्ठानेपि फलसिद्धिप्रसङ्गात् ।

तथा च निर्विवादं स्याद् यथेष्टं संप्रवर्त्ततां । नहि किंचिदनुष्ठानं निष्फलं कस्यचित् क्वचित् ॥३४॥

---

[1] केवलाभावप्रत्यक्षे [2] प्रतीयते—अधिकः [3] व्यवहारे—अधिकः

तस्माद् वक्तृव्यापारविषये[1] शब्दस्य प्रामाण्यं नार्थतत्त्वनिबन्धनं । यदि वक्ता न सर्वज्ञः। अपौरुषेयेपि योर्थो बुद्धौ प्रकाशते यदा स्वयमेवार्थं प्रतिपद्यते । यदा तु व्याख्यातुस्तदा वक्तृव्यापारविषयो व्याख्यातैव वक्ता । यश्च बुद्धावर्थः प्रतिभाति न स एवार्थः[2] । अन्यथा सकलसमीहितार्थसिद्धेर्न्न[3] कश्चिदनुष्ठानार्थी भवेत् । अनुष्ठेयतयैव तस्यार्थस्य प्रतिपादनान्नैवमिति चेत् । स तर्हि तदा स्वरूपेण नास्ति (इति) न तस्य प्रतिपत्तिः । अन्यप्रतिपत्तौ सम्बन्धाभावात् सन्देह एव । ततश्च योर्थः प्रतीयते स सिद्ध एव न तदर्थी प्रवर्त्तते । यदर्थी च न स प्रतिपन्न इति नार्थतत्त्वनिबन्धनं प्रामाण्यं ।

## (२) नियोगप्रत्याख्यानम्—

ननु नियोगो (न) वाक्यार्थः । नियुक्तोहमिति प्रतीतेः । ततो नियोगादेव नासितुं समर्थः ।

कोयन्नियोगो नाम । निशब्दो निःशेषार्थो योगार्थो युक्तिः । निरवशेषो योगो नियोगः । निरवशेषत्वं अयोगस्य मनागप्यभावात् । अवश्यकर्त्तव्यता हि नियोगः । नियोगप्रामाणिका हि नियोगप्रतिपत्तिमात्रतः प्रवर्त्तन्ते ।

अत्राह । "वक्तृव्यापार"[4] इत्यादि । अयमर्थः ।

नियोगो भावना धातोरर्थो विधिरितीरिताः । यन्त्रारूढादयो न स्युः स्वभावादर्थसाधनाः ॥३५॥

तस्माद् यो यस्य प्रतिभासते यथाप्रतिभं स वाक्यस्यार्थो न चेवमर्थतत्त्वं[5] । यश्च यथा व्याचष्टे तथा स शब्दो विगुणो न भवति न च तथार्थतत्त्वस्थितिः ।

किञ्च ।

नियुक्तेन निवृत्तिश्चेत्[6] सर्व्वस्यातः प्रसज्यते । तत्स्वभावतयाकाशमनाकाशं न कस्यचित् ॥३६॥
स्वभावोऽपि विपर्यासादन्यथा यदि गम्यते । विपर्य्यासाविपर्यासव्यवस्था कः करिष्यति ॥३७॥

यदि विपर्यासान्नियोगपरादपि वचनान्न प्रवर्त्तते । तथा सति विपर्यासकल्पना प्रवर्त्तमानेपि न व्याहन्यते । यथैव हि द्वेषादयं न प्रवर्त्तते विपर्यस्तस्तथा तत्पक्षपातादपरोपि प्रवर्त्तेत इति समानमेतत् ।

न च नियुक्तोहमित्येतत् प्रवर्त्तते । निष्फलनियोगे प्रवृत्तेरभावात् । प्रचण्डप्रभुनियोगे निष्फलेप्यपायभयात् प्रवर्त्तते । प्रमाणान्तराच्च प्रतिपन्नोऽपायः । अत्र तु न प्रमाणान्तरं । व्यर्थको नियोगस्तथा चेत् ( । ) भवतु[7] को दोषः । न हि दृष्टेऽनुपपन्नं नाम । प्रेक्षापूर्वकारी निष्फलनियोगे हि प्रेक्षावत्ता न स्यादित्युपालभ्यते(।) अपौरुषेये तु

कस्योपालम्भः । अपौरुषेये व्यर्थतयैव न युक्तेति चेत् । नात्र किञ्चित् प्रमाणमन्यत्रापौरुषेये तथाऽदृष्टेः ॥

यदि च नियोगमात्रात् प्रवर्त्ततेऽपौरुषेयात् स्वर्गकाम इति निष्फलं । जुहुयादिति

---

[1] व्याख्यातृ० [2] एव सदर्थः [3] अभीष्टार्थान्त० [4] व्याख्यातृ०
[5] चैवम० [6] प्रवृत्तिः [7] मेद्-मोद्-दे

नियोगमात्रादेव नियोगप्रतिपत्तेः । अथ फलाभिलाषिणः फलोपदर्शनं । फलमेव तर्हि तस्योपदर्शनीयं किन्नियोगेन (।) स्वयमेव फलाभिलाषात् प्रवर्त्तिष्यते ।

अपौरुषेयत्वादसम्बद्धतायामपि न चोद्यमेतदिति चेत् । निष्फलचोदनायामपि न चोद्यमिति व्यर्थको वेदो नायुक्तः । किञ्च (।)

नियुज्यमानविषयनियोक्तॄणां यदीष्यते । धर्म्मे नियोगः सर्व्वत्र न शब्दार्थोऽवतिष्ठते ॥३८॥

नियोगो नामायं हि कस्य धर्म इति चिन्त्यतां । न खलु नियोगः पटादिपदार्थवद-परतन्त्रतया प्रतीयते । तत्रानेन नियमे नियोज्यादीनामन्यतमस्य धर्म्मेण भवितव्यमपरप्रकारा-सम्वेदनात् ।

नियोज्यधर्मिभावो हि तस्यानुष्ठेयता कुतः । सिद्धोऽपि यद्यनुष्ठेयो नानुष्ठाविरतिर्भवेत् ॥३९॥

न खलु परिनिष्पन्नमनुष्ठातुं शक्यम् (।) अनुष्ठानं हि तत्र क्रियाविशेषः । स्वरूप-जननम्वा । क्रियाविशेषस्तावदनर्थक एव । परिनिष्पन्नस्य क्रिया किमर्थकारिणी । स्वरूपनिष्पादनन्तु परिनिष्पन्नस्येति व्याहतं । न च परिनिष्पन्नस्यापरमपरिनिष्पन्नमास्ते । अपरिनिष्पन्नस्य परिनिष्पन्नपदार्थस्वभावत्वायोगात् ।[1] यो हि यद्रूपतयोपलभ्यते स तत्स्वभावः (।) न चानिष्पन्नमुपलब्धुं शक्यं । पश्चादुपलभ्यत इति चेत् । तदयुक्तं यतः ।

तत्स्वभावतया पश्चादुपलब्धुं न शक्यते । वर्तमानस्वरूपस्य ग्रहणेध्यक्षवृत्तितः ॥४०॥

न खलु वर्त्तमानरूपोपग्रहप्रवृत्तमध्यक्षं पूर्वापररूपमीक्षितुं क्षमते । तस्मात्—

न पूर्वमेकतावृत्तिर्न [2] पश्चादक्षजन्मनः । ज्ञानस्याक्षानुसरणादध्यक्षमिति मीयते ॥४१॥

तस्मान्नियोज्यपुरुषधर्मे नियोगे न शब्दार्थता ।

विषयधर्मतायामपि विषयस्यापरिनिष्पत्तेः स्वरूपाभावात् कथं शब्दादसौ प्रत्येतुं शक्यः । न ह्यविद्यमानं शशविषाणादिकं तथा दृश्यतेऽनुष्ठानविषयत्वेन । केनचिद् रूपेण विद्यमानं केनचिद् रूपेण नेति चेत् । तदसत् ।

येनासौ विद्यते भावस्तेनानुष्ठीयते न सः । विद्यते येन नैवासौ न तेनापि प्रतीयते ॥४२॥
प्रतीयमानता तस्य सिद्धानुष्ठेयता न चेत् । तदेव तस्य स्वं रूपं न नियोगोऽन्यथा भवेत् ॥४३॥
प्रतीयमानतामात्रं सामान्यं सर्व्ववस्तुनः । अनुष्ठेयतयैवास्य नियोगत्वमनन्यथा ॥४४॥
यद्यनुष्ठेयता तत्र प्रतिभाति न चापरा । अनुष्ठानं भवेत् तत्र न तु सामान्यवेदने ॥४५॥
सामान्यवेदने तत्र नानुष्ठेयार्थवेदनं । वाक्यस्य न भवेदर्थो नियोगस्तत्प्रवादिनां ॥४६॥

ननु यागादिविषये नियुक्तोहमिति प्रतीयते । इयमेव च नियोगस्य प्रतीतिः शब्दाद् या नियुक्तोहमत्रानेनेति प्रतीतिः । तत्र नियोक्ता शब्दे पुरुषः वेदे प्रमाणाभावात् । नियोज्यः पुरुषो यागो विषयः सकलमिदं प्रतीयते । तत्र प्रतीतिर्भाव एव कथं प्रतीयत इति कोयं पर्य्यनुयोगः ।

तदसत् ।

प्रतीयमानेन विना कस्य तत्र स्वरूपवित् । वेद्यते यत्स्वरूपेण तस्य तद्वेदनं मतं ॥४७॥

---

[1] निष्पन्नस्यानिष्पन्नस्वभावायोगात् [2] तावित्ति ।

न च स्वरूपस्याभावे स्वरूपस्यास्ति वेदनं । उपलम्भो यतः सत्ता सास्ति नास्ति नु सा कथं ।।४८।।
न च प्रतीतिमात्रेण[१] वस्त्वस्तीति प्रतीयते । परस्परविरुद्धार्था नागमेषु[२] भवेदसौ ।।४९।।
वेदादेव प्रतीतिश्चेद्धेतुदोषामलीमसात् । न लोकाननुसारेण वेदाद् बुद्धेरसम्भवात् ।।५०।।
यागादेरुपलब्धत्वाल्लोके शब्दार्थसम्भवात् । पूर्व्वदृष्टानुसारेण प्रतीतिर्नार्थसाधिका ।।५१।।
"कामशोकभयोन्माददोषोपप्लुतचेतसां । बुद्धिः पूर्व्वानुसारेण न दृष्टेष्टस्य साधिका" ।।५२।।
लोके च दृश्यते वाक्यपदार्थोपप्लवः क्वचित् । वेदे तदनुसारेणोपप्लवः किमसम्भवी ।।५३।।
न तत्राशयदोषोस्ति कस्यचिन्मूढतादिकः । तत्राप्यप्रतिपत्तिः किन्न दोषः कस्यचिन्मतः ।।५४।।
लोकेक्षाशयदोषेण [३] वस्तुसम्बन्धहानितः । न प्रमाणत्वमेषा च न न वेदेपि किं प्रमा ।।५५।।
लोके वाक्यपदार्थानां विप्लवस्योपलब्धित. । वेदे त एव चेच्छब्दाः किन्न विप्लवसम्भवः ।।५६।।

**ननु यदि वेदः सत्यार्थो न भवति स्वतस्तदा लोके यागादिपदार्थस्य स्वयमप्रवृत्तेः । कथं यागादिक्रिया वृत्त्यनुपलम्भः[४] । न हि स्वयं व्युत्पादयितुमिदं शक्यं । ततोऽविसम्वादभाग्यर्थप्रतिपादनात् प्रमाणं वेदः । एतत् सर्व्वागमेषु समानं । न हि प्रतिनियतागमार्थावान्तरविभागाः सर्व्वागमेष्वपि समुपलब्धाः स्वयमुत्प्रेक्ष्य विधातुं शक्याः पुरुषमात्रेण । अथवा सा किमशब्दलिङ्गं स्वयं कथञ्चिदनुस्मरतो न भवति बुद्धिर्यथा तथा क्रिया परिकल्प्यते ।।**

सर्व्वागमसमानत्वाद् यागाद्यर्थक्रियात्मनः । न सर्व्वैः करणन्तस्य तुल्यं वेदे पि किन्न तत् ।।५७।।
न चेदादृतता शिष्टैरित्यन्योन्यसमाश्रयः । वेदार्थाचरणाच्छिष्टास्तदाचाराच्च स प्रमा ।।५८।।

**किञ्च ।**

द्विजातयोपि जायन्ते आगमान्तरसङ्गिनः । न भवत्येव चेत् तेषां न पापे रमते मतिः ।।५९।।
पापेतरव्यवस्थेयमायाता मानतः कुतः । पापात्मता(ऽ)द्विजत्वेन पापत्वादद्विजात्मता ।।६०।।
किंच द्विजातिता नाम जातिगोत्रक्रियादितः । शक्या ज्ञातुं विवेकान्न द्विजानां शिष्टता कुतः ।।६१।।

**न खलु द्विजादिभाव. प्रमाणगोचरचारी । स हि जातियोगलक्षणो गोत्रलक्षणः क्रियासामर्थ्यातिशययोगो वा भवेत् । न तावद् गोत्वादिजातिमिव तज्जातिमाकारविशेषादेव केचिदवधारयितुमीशते । आकृतिसङ्करस्य दर्शनात् । शूद्राद्यभिमतानामपि सैवाकृतिरुपलभ्यते । न खलु वाहुलेयाद्याकृतय इव कौण्डिन्यादीनामपि विजातीयाभिमतव्यक्तिविलक्षणा व्यक्तय उपलभ्यन्ते । अतएव व्यक्तिसङ्करेण सन्देहविषयत्वादुपदेशसहितं प्रत्यक्षं प्रमाणं ।**

परोपदेशप्रामाण्यं प्रत्यक्षार्थे न युक्तिमत् । उपदेशो हि लोकानामन्यथापि प्रवर्त्तते ।।६२।।

**यदि खलु ब्राह्मणत्वादिजातिः प्रत्यक्षेणेक्ष्यते । परोपदेशस्य व्यर्थता । नहि प्रत्यक्षार्थे परोपदेशो गरीयान् । तथा चेन्न परोपदेशतः सन्देहः स्यात् । अतएव प्रत्यक्षं सहायमपेक्षते ।**

उपदेशं विनाध्यक्षं यद्यर्थस्य प्रसाधकं । तदोपदेशसत्यत्वं विधातुं नान्यथा क्षमं ।।६३।।

**यदा तु पुनः ( प्रत्यक्षं ) केवलमसमर्थमुपदेशश्च तदा द्वयमसमर्थं पृथक् सहितमपि तादृशमेवेति । न जातिग्रहणे सामर्थ्यमासादयेत् । सामग्र्याः सामर्थ्यमिति चेत् । नास्त्येतत् ।**

---

[१] न चोपलब्धिमात्रेण　[२] नहि तत्र　[३] लोक आशय०　[४] वृत्त्युपलम्भः

कार्यदर्शनतः सर्वा सामग्रीयं प्रवीयते । अंकुरादिवदत्रापि न कार्यं किञ्चिदीक्ष्यते ॥६४॥

**न हि घटपटसामग्री शाल्यङ्कुरेऽन्यत्र वा भवति । अन्वयव्यतिरेकाभ्यां हि जलादीनामेव तत्त्वोपलब्धेः । न चात्र तथा कार्यं जातिनिश्चयलक्षणमुपलभ्यते । काञ्चनाद्युपदेशस्य हि यदा सत्यताशङ्का तदा प्रत्यक्षदर्शनादसौ निवर्त्तते । नैवं जात्युपदेशस्यासत्यता शङ्का तदा प्रत्यक्षदर्शनादसौ निवर्तते । नैवं जात्युपदेशस्यासत्यता शङ्कायां प्रत्यक्षात् सत्यता जातिस्वरूपग्रहणाकारात् । सुवर्णादौ हि रूपविशेषसद्भावादेवं भूतमेव सुवर्णं भवतीति व्यवहारस्य परिसमाप्तेर्दृष्टस्य न काचित् क्षतिः । अत्र तु पुनरेवंविधमेव ब्राह्मण्यमिति न पादप्रसारणमात्रं त्राणं । पारमार्थिकपरलोकव्यवहारस्य वाञ्छितत्वात् । एक वाक्यतया हि सुवर्णं सत्यं भवति न तु ब्राह्मण्यं । किञ्च । तच्छङ्कायां गोत्रोपदेशान्तरादिनिरूपणमेव क्रियते । नान्य उपायः ।**

**अथाध्ययनादिना क्रियाविशेषणं ज्ञायते नोपदेशमात्रात् । तदप्यसत् ।**

द्विजातित्वे क्रिया साध्या न क्रियातो द्विजातिता ।
सस्कारा अपि नैव स्युर्जाति-निश्चय-वर्जिता ॥६५॥

**जातिवर्जितस्य हि न स्वाध्यायाध्ययनसंस्कारादयो द्विजातित्वादिकमादधति । सर्व्वस्य तथा द्विजत्वप्रसङ्गात् । अपि च ।**

यदि प्रत्यक्षतो जातिर्न प्रतीयेत केवलात् । वचनादपि नैवास्याः प्रतीतिरविरोधिनी ॥६६॥

**प्रथमं हि प्रवर्त्तमानमध्यक्षं न तावद् द्विजत्वादिविवेकमुपकल्पयितुमलं ततः परमुपदेशोऽपेक्ष्यते । यदि प्रत्यक्षतो न प्रतीयाद् वचनादपि नैव प्रत्येष्यति । तदपि हि वचनमुपलम्भमेव ख्यापयति । न खलु पुरुषवचनपरिज्ञानप्रवर्त्तितं निश्चयमुपजनयति । पुरुषो पर्यनुयुक्तः कथम्भवतेदमज्ञायीति गोत्रसंस्कारादिकमेव परिज्ञानविषयतयोपदिशति । न जात्युपलम्भं कथयति । सैव जातिरिति चेदुक्तमत्रोत्तरं (।) द्विजातित्वे क्रिया न तु तदेव द्विजातित्वं ।**

**अथ गोत्रलक्षणा जातिः । तथा च (।) ब्रह्मणोऽपत्यं ब्राह्मण इति हि व्यपदिशन्ति ।**

ब्रह्मणोऽपत्यतामात्रात् ब्राह्मण्यति प्रसज्यते । न कश्चिदब्राह्मतनोरुत्पन्नः क्वचिदिष्यते ॥६७॥
अन्तरा जातिभदश्चेन्निर्निमित्तः कथम्भवेत् । अन्तराले क्रियाभेदाद् गोत्रेणार्थो न कस्यचित् ॥६८॥
अथ द्विजादिगोत्राणामनादिर्भेद इष्यते । ज्ञायतां स कथन्नाम प्रमाणस्याप्रवृत्तितः ॥६९॥
क्रिया तदपरिज्ञानादक्रियैव प्रसज्यते । अविच्छेदश्च गोत्रस्य प्रत्येतुं शक्यते न च ॥७०॥
अविच्छेदो न नियतः कस्यचिद् गोत्रभाविनः । सूतमागधचण्डालाः कथं सम्भविनोन्यथा ॥७१॥
ज्ञायन्त एव ते तज्ज्ञैरिति चेन्नियमो न हि । अनादिगोत्रपद्धत्यामस्यान्न स्खलनं स्त्रिया ॥७२॥
इति ज्ञातं कथं नाम कामार्त्ता हि सदा स्त्रियः । ब्राह्मणत्वे स्थिते पूर्व तद्गोत्रत्वस्य[१] सम्भवः ॥७३॥
तदास्थितेः कथङ्गोत्रं सेयमन्धपरम्परा । अथ शक्तिविशेषेण योगो ब्राह्मण्यमिष्यते ॥७४॥
इदानीन्दृश्यते नैव शक्तेरतिशयः क्वचित् । श्रूयते पूर्वकालश्चेत् सर्वत्रेति वृथा वचः ॥७५॥
सर्वागमप्रसिद्धानां शक्तेरतिशयो महान् । योगिनां गीयते पूर्व्वसिद्धानामविगानतः ॥७६॥

---

[१] तद्गोत्रस्य हि

तस्मान्न शक्तिविशेषयोगो द्विजातित्वं युक्तं ।

न च वेदवचः किञ्चिद् द्विजातित्वादि प्र[1](?)साधकं ।
व्यक्तेः सामान्यवचनमनुक्तसममेव तत् ॥७७॥

नहि वेदो देवदत्तादीनां ब्राह्मणत्वमुपदिशति । सर्व्वदाऽविद्यमानत्वात् । वेदस्य च सर्वदा भावात् । अर्थस्याभावकाले वेदोपदेशः कथं सार्थकः । यदा भविष्यति तदा तथैति चेत् ।

अनर्थकः कथं वेदः पश्चादर्थेन सङ्गतः । उदासीनस्वरूपस्य[2] तत्र व्यापृतता कथं ॥७८॥

न खलु स्वभावाभावयो[3]र्व्वेदस्य विशेष उपलभ्यते । तत्स्वभावत्वे च सर्व्वदा कथमयं विभागं प्रतीयात् ।

तस्मान्नेदं ब्राह्मणत्वादिकं प्रत्यक्षादुपदेशादुभयाद् वेदाद् वा प्रतीयते । तदप्रतीयमानं कथमुपयोगीति किन्तेन कर्त्तव्यं । ततः संव्यवहारमात्रप्रसिद्धं ब्राह्मण्यं । ततो ब्राह्मणा अपि वेदान्नार्थक्रियाक्रमकृत इति कथं व्यवहारसंवादो वेदात् । कस्यचित्तु व्यवहारो वेदविपर्य्यया-दपीति न वेदावेदयोर्विशेषः । तस्मान्नापरीक्षिताद् वेदान्नियोगमात्रादेव प्रवर्त्तनं युक्तं । ततोऽ-प्रवर्त्तकत्वादप्रामाण्यं ।

अथ नियोक्तृधर्मता नियोगस्य । तदयुक्तं ।

नियोक्तुःसिद्धरूपत्वान्नियोगस्यापि सिद्धता । सम्पाद्यो न नियोगःस्यात् सिद्धं सम्पाद्यतां कथं ॥७९॥

न खलु सिद्धमपरनिरपेक्षं कथञ्चित् सम्पादयितुं शक्यं । तथा चेदनुपरतिरेव सम्प-(ा)दनाया इति व्यर्थता प्रमाणस्य ।

अथ नियोजकधर्मत्वेपि नियोज्यविषयापेक्षया नियोगस्तथात्वं प्रतिलभते । नियोज्य-रहितः कश्चिन्न नियोगः प्रतीयते । तथा नियोगविषयम्विना नास्ति नियोगता । तथाहि(।)

नियुक्तोहमनेनात्र विषय(ये नियोग) इति प्रतीतिः ।

यतः (।)

नियोगः प्रेरणारूपो विना न विषयं क्वचित् ।
नियोज्योपि नियोज्यत्वमात्मनः सोऽवगच्छति[4] ॥८०॥

स च तथाभूतो नियोगः साध्य एव । न खलु स्वव्यापारसाधनं विना नियोगः साधित इति भवति । एवन्तर्हि धात्वर्थनियोगभावनानां परस्परसम्बन्धो नियोगः । स च प्रतीतिकाले नास्ति । तत् कथं नियोगे वाक्यार्थे निरालम्बनता न भवेत् । न च नियोगः परस्परसापेक्षधात्वर्थाविव्यतिरेकेणापर उपलभ्यते । सम्बन्धश्च हेतुफलभावेन व्यवस्थितानां क्रमभाविनां न प्रतिभासगोचरः स्वरूपप्रतिभासस्य विद्यमानविषयत्वात् । पररूपप्रतिभासस्य चातत्प्रतिभासत्वात् । न खल्वन्यदन्यरूपेण प्रतिभासते । तथा च निरालम्बने कान्यापोह-विषया श्रुतिः । तथा हि । कुरु यागादिकमिति । यागकर्तृकत्वमात्मनः प्रतीतिविषयप्राप्तं मन्यमानः प्रवर्त्तते । क्रियानिष्ठता च कर्त्तृत्वं । न च प्रतीतिकाले तदस्ति । न च

---

[1] द्विजत्वादि [2] निष्क्रियस्वरूपस्य [3] सदसदर्थयो०
[4] नियोज्योऽपि (नि)योज्यस्यात्मनि स हि न स्यात् ।

**शब्दात् प्रागप्रतिपन्नं प्रत्येतुं शक्यं। येन हि प्राग् यागाविक्रियाविष्टो परः प्रतिपन्नः स एवात्मनः परस्य वा तथाभावमवगच्छति नान्यः। पूर्व्वानुसारेण चेयं प्रतीतिरन्यापोह-विषयतामात्मनो नातिक्रामति। न च प्रत्यक्षतः कर्तृत्वमपि पूर्वं प्रतिपन्नं। पौर्व्वा-पर्य्ये प्रत्यक्षस्यावृत्तेः। सांव्यवहारिकप्रत्यक्षापेक्षया तु प्रतीतिरित्युच्यते। सर्व्वथा पूर्व्व-प्रतीत्यनुसरणादात्मनः कर्तृत्वप्रतीतिः।**

**अथापि न कर्त्तृत्वेनासौ प्रेर्यते किन्त्वधिकारित्वेनैव (।) न ह्यकुर्व्वन् कर्त्ता भवति। अधिकारित्वन्तु योग्यतया। तदप्यसत्।**

योग्यताविषये क्वापि विना न विषयेण सा। विषयात्यक्षतायाञ्च प्रतीता योग्यता कथं ॥८१॥

**न खलु योग्यताविषयं स्वव्यापारमजानानस्तद्विषयविशिष्टां योग्यतां स्वरूपतोऽवगच्छति। ततः कर्त्तृत्ववदत्रापि दोष एव।**

विचारगोचरातीतो वचारचरितैः कथं। नियोग इष्यते वाक्यस्यार्थ आचार्यमुष्टितः[१] ॥८२॥

**न खलु विचार्यमाणो नियोगः कश्चिदस्ति। यथा कल्पनमयोगात्।**

शुद्धकार्यस्य किं रूपनियोगः कीर्त्तितः परैः। केवला प्रेरणा कार्यसङ्गताथ विपर्ययः ॥८३॥
प्राधान्यात् कार्यरूपत्वं नियोगस्य किमिष्यते। किं वा प्रेरकता तस्य प्राधान्यादुच्यते परैः ॥८४॥
कार्यस्य प्रेरणायाश्च सम्बन्धे किन्नियोगता। नियोगः समुदायोथ यद्वा तदुभयात् परः ॥८५॥
यन्त्रारूढस्तथाभीष्टो भोग्यरूपो थवा स किं। पुरुषो वा नियोगःस्यादिति पक्षाः परैः कृताः ॥८६॥

**(१) शुद्धकार्यनियोगवादिनां मतं।**[२]

प्रत्ययार्थो नियोगश्च यतः शुद्धः प्रतीयते। कार्यरूपश्च तेनात्र शुद्धं कार्यमसौ मतः ॥८७॥
विशेषणन्तु यत्तस्य किंचिदन्यत् प्रतीयते। प्रत्ययार्थो न तद् युक्तं धात्वर्थः स्वर्गकामवत् ॥८८॥
प्रेरकत्वन्तु यत् तस्य विशेषणमिहेष्यते। तस्याप्रत्ययवाच्यत्वाच् छब्दे कार्यनियोगता ॥८९॥

**(२) शुद्धप्रेरणानियोगवादः।**[३]

प्रेरणैव नियोगेत्र शुद्धा सर्व्वत्र गम्यते। नाप्रेरितो यतः कश्चिन्नियुक्तं स्वम्प्रबुध्यते ॥९०॥

**(३) प्रेरणासङ्गतकार्यनियोगपक्षः।**

ममेदं कार्यमित्येवं ज्ञातं पूर्वं यदा भवेत्। स्वसिद्धौ प्रेरकन्तत् स्यादन्यथा तन्न सिध्यति ॥९१॥

**(४) कार्यसङ्गतप्रेरणावादिनः प्राहुः।**

प्रेर्यते पुरुषो नैव कार्येणेह विना क्वचित्। ततश्च प्रेरणा प्रोक्ता नियोगः कार्यसङ्गता ॥९२॥

**(५) कार्यस्यैवोपचारतः प्रवर्त्तकत्ववादिनः प्राहुः।**

प्रेरणाविषयः कार्यं न तु तत् प्रेरकं स्वतः। व्यापारस्तु प्रमाणस्य प्रमेय उपचर्यते[१] ॥९३॥

**(६) सम्बन्ध एवोभयोर्नियोग इत्यपरे।**

प्रेरणा हि विना कार्यं प्रेरिका नैव कस्यचित्। कार्यं वा प्रेरणा योगो नियोगस्तेन सम्मतः ॥९४॥

**(७) समुदायवादेप्ययमभिप्रायः।**

---

[१] आचार्यदेशनात्　　[२] पद्यबद्धमेतद् वाक्यम्।　　[३] ०वादे

परस्पराविनाभूतं द्वयमेतत् प्रतीयते । नियोगः समुदायोऽस्मात् कार्यप्रेरणयोर्यतः ॥९५॥

(८) **अपरे पुनराहुः । उभयस्वभावनिर्मुक्तो वाक्यार्थः ।**

सिद्धमेकं यतो ब्रह्मगतमाम्नायतः सदा । सिद्धत्वेन न तत् कार्यं प्रेरकं कुत एव तत् ॥९६॥

(९) **यन्त्रारूढनियोगवादिनां[1] मतं ।**

कामी यत्रैव यः कश्चिन्नियोगे सति तत्र स । विषयारूढमात्मानं मन्यमानः प्रवर्तते ॥९७॥

(१०) **भोग्यरूपनियोगवादिनां प्रवादः ।**

ममेदं भोग्यमित्येवं भोग्यरूपं प्रतीयते । ममत्वेन च विज्ञानं भोक्तर्येव व्यवस्थितं ॥९८॥
स्वामित्वेनाभिमानो हि भोक्तर्यत्र भवेदयं । भोग्यन्तदेव विज्ञेयं तदेव स्वं निरूप्यते ॥९९॥
साध्यरूपतया येन ममेदमिति गम्यते । तत्प्रसाध्येन रूपेण भोग्यं स्वं व्यपदिश्यते ॥१००॥
सिद्धरूपं[2] हि यद् भोग्यं न नियोगः स तावता । साध्यत्वेनेह भोग्यस्य प्रेरकत्वान्नियोगता ॥१०१॥

(११) **पुरुषनियोगवादिनः ।**[3]

ममेदं कार्यमित्येवं मन्यते पुरुषः सदा । पुंसः कार्यविशिष्टत्वं नियोगोस्य च वाच्यता ॥१०२॥
कार्यस्य सिद्धौ जातायां तद्युक्तःपुरुषस्तदा । भवेत् साधित इत्येवं पुमान् वाक्यार्थ उच्यते ॥१०३॥

**सर्व्वत्र च वाक्यार्थेऽष्ट प्रकारो भेदः ।**

प्रमाणं किन्नियोगः स्यात् प्रमेयमथवा पुनः । उभयेन विहीनो वा द्वयरूपोथवा पुनः ॥१०४॥
शब्दव्यापाररूपो वा व्यापारः पुरुषस्य वा । द्वयव्यापाररूपो वा द्वयाव्यापार एव वा ॥१०५॥

**अत्रोच्यते । सर्व्वमेतदसङ्गतं** (।) **यतः ।**

प्रेरणारहितं कार्यं नियोज्येन विवर्जितं । नियोगो नैव कस्यापि[4] नियोग इति कीर्त्यते ॥१०६॥
वृत्तिर्नियोगशब्दस्य शुद्धे कार्ये यदा मता । संज्ञा मात्रान्नियोगत्वं भवत् केन निवार्यते ॥१०७॥
यक्तस्तु पुरुषः कार्ये तत्र नैव प्रतीयते । नियोगः स कथन्नाम सिद्धातीतादिबोधवत् ॥१०८॥
नियोजकस्य धर्म्मोयं नियोगो लोकसम्मतः । तदेव कार्यमिति चेत् सिद्धत्वान्नास्य साध्यता ॥१०९॥
साध्यत्वेन नियोगोयमिति चेद व्यपदिश्यते । विषये तस्य तत्त्वेन उपचारात् प्रकीर्त्तनं ॥११०॥
असिद्धस्य च तस्यास्तु कथं प्रेरकरूपता । साध्यत्वेनावबोधोस्य प्रेरकत्वं यदीष्यते ॥१११॥
अप्रसिद्धस्य साध्यत्वं बोधः सिद्धात्मकस्य च । परस्परविरुद्धत्वमेकस्य कथमिष्यते ॥११२॥
साध्यरूपतयातस्य प्रतीतिः प्रेरिका यदि । नियोगत्वं प्रतीतेः स्यान्न नियोगस्य तत्त्वतः ॥११३॥

[5]**तथा** (।)

नियोगो यदि वाक्यार्थः प्रमाणं किं भविष्यति । मानरूपो नियोगश्चेत् प्रमेयं किं पुनर्भवेत ॥११४॥
नियोगः पुरुषस्येष्टो व्यापारस्तत्त्वतो यदि । व्यापारः पुरुषस्यासौ भावनैवान्यवा( ि)चका ॥११५॥
वाक्यव्यापारपक्षे तु भवेत् सा शब्दभावन । शब्दात्मभावनामाहुरन्यामेव लिङादयः ॥११६॥
शब्दादेव त्वसौ जाताः पुरुषः किं प्रवर्तते । शब्देन प्रेरितोनो चेत् स्वव्यापारे प्रवर्त्तते ॥११७॥
शब्देनाचोदितत्वेऽस्य कथमस्तु प्रवर्त्तनं । शब्देन चोदने तस्य निरालम्बनता धियः ॥११८॥

---

[1] नियोगेच्छावादिनां [2] सिद्धं० [3]ऊचुरित्यधिकम् [4] उपयोगो न कस्यापि
[5] इतः प्रारम्यते बम्-पो-गृञिस्-प (द्वितीयमाह्निकम्)

**एवं यन्त्रारुढादयोपि वाक्यार्था वाच्यदोषाः । यतः ।**

यन्त्रारूढतया भोग्यभोक्त्रो (ः) सम्बन्ध उच्यते ।
न सम्बन्धोऽस्ति भोग्यात्मारूढश्च न नरस्तदा ॥११९॥
प्रतीतिकाले सर्व्वस्य साध्यत्वेनास्वरूपता । तदेव तस्य रूपञ्चेन्न साध्यत्वस्य हानितः ॥१२०॥

**एवं नियोगः प्रत्याख्यातः ।**

## (२) भावना-प्रत्यख्यानम्—

**भावनेदानीं विचार्यते । भावना हि द्विधा । शब्दभावना अर्थभावना च । यदाह[१] (।)**

'शब्दात्मभावना[२]माहुरन्यामेव लिङादयः । इयन्त्वन्यैव सर्व्वार्था सर्व्वाख्या तेषु विद्यते ॥१२१॥

**शब्दभावना शब्दव्यापारः । शब्देन हि पुरुषव्यापारो भाव्यते । पुरुषव्यापारेण धात्वर्थो धात्वर्थेन च फलं ।**

**इदं चायुक्तं (।) शब्दव्यापारो हि (न) [२] शब्दवाच्यः । तं प्रति कारकः[3] शब्दो न वाचकः । अप्रतिपादकः (।) तथा हि (।)**

शब्दादुच्चरितादात्मा नियुक्तो गम्यते नरैः । भावनातः परः को वा नियोगः परिकल्प्यतां ॥१२२॥

**शब्दभावनैव खलु नियोग इति शब्दान्तरेणोच्यते ।[१]**

**तदसत् । यदि शब्दव्यापारः कथमगृहीतसङ्केतो नावगच्छति । स्वभावतो हि नियोजकत्वे न श(?सं)ङ्केतग्रहणमुपयोगि । सैव सामग्री चेत् । ननु सामग्री यदि प्रेरणे भावनायां वा व्याप्रियते (। अ)युक्तमेतत् ।[२] यावता (।)**

श(?सं) ङ्केतग्रहसामग्री व्यापृता(ऽ)र्थस्य वेदने । अर्थप्रतीतौ पुरुषः स्वयमेव प्रवर्त्तते ॥१२३॥

**इदं कुर्व्विति प्रेरणाध्येषणयोरेव प्रतीतिः । तदप्रतिपत्तौ न नियुक्तत्वप्रतिपत्तिः । नियुक्तत्वञ्च नाम कार्ये व्यापारितत्वं । कार्यव्यापृतामवस्थां प्रतिपद्य नियोजको निर्युंक्ते । सा च तस्य भाविन्यवस्था न स्वरूपेण साक्षात्कर्तुं शक्या । स्वरूपसाक्षात्करणे हि सर्व्वं तदैव सिद्धमिति न नियोगः स्यात् सफलः ।**

यथा प्रयोजकस्तत्र बाध्यमानप्रतीतिकः । प्रयोज्योपि तथैव स्याच्छब्दो बुद्ध्यर्थवाचकः ॥१२४॥

**यथैव हि प्रयोजकस्य प्रयोज्येन स्वव्यापारशून्यमात्मानं प्रतियता प्रयोजकप्रतीतिर्बाध्यमाना निरालम्बना तथा प्रयोज्यप्रतीतिरपि तेनैव स्वव्यापाराविष्ट[3]मात्मानमप्रतियता बाध्यते । शब्दात् तस्य सा प्रतीतिरिति चेत् । नास्त्येतत् । सोऽपि शब्दो बुद्ध्यर्थमेव ख्यापयति । एवं मया प्रतिपादितमेवं मया प्रतिपन्नमिति द्वयोरप्यध्यवसायात् । अथवा (एवं) तावत् प्रतिपन्नं मयास्य त्वभिप्रायो भवतु मा वा भूत् । तथा भवत्वेवमर्थो मा वा भूत् मया तावदेवं प्रतिपन्नं । अत एवाह ।**

**वक्तृव्यापारविषयो यर्थो बुद्धौ प्रकाशते ।**
**प्रामाण्यन्तत्र शब्दस्य नार्थतत्त्वनिबन्धनं ॥३॥**

---

[१] श्लोकवार्त्तिके †　　[२] तमपेक्ष्य कारकः शब्दो न वाच्यः । अथ प्रतिपादकः ।
[3] स्वव्यापाररहित०

'वक्तृव्यापारविषय' इति यत्र वक्तास्ति। 'बुद्धौ प्रकाशते' इति यत्र स नास्ति। अथवा तदुक्तेरेव तत्र वक्तास्तीति गम्यतां। (य)ज्जातीयो यत इति न्यायात्। अथवा तदविशेषात् सर्व्वमेवापौरुषेयं। पुरुषकृतेर्व्वाधनान्नैवं चेद् (।) अत्राप्यतीन्द्रियत्वात् पुरुषकृतेः सा न बाधिकेति कुत एतत्।

अथवा अपौरुषेयमेव तद्वचनं पुरुषस्य तु मया कृतमेतदिति भ्रान्तिः। तथाहि।

अत्यन्तनष्टो यो ग्रन्थः प्रतिभात्येव कस्यचित्। मया कृत इति प्राप्ताभिमानस्य क्षतस्मृतेः ॥१२५॥

कवयोपि जन्मान्तरानुभूतमेव ग्रन्थं कवित्वेनोत्प्रेक्ष्यन्त इति। कुत एतत्। तथा च सर्व्वमपौरुषेयं। व्यर्थकत्वमपि तथा भवतीति व्यर्थमपौरुषेयत्वं तत्र।

समानमत्र वेदेपि तत्रापि व्यर्थतेष्यते[1]। अन्यार्थकल्पनायाञ्च समानमुभयं भवेत् ॥१२६॥

वेदावेदयोर्व्यर्थता(ऽ)पौरुषेयताकल्पना च समानैव। अन्यार्थकल्पनायां न व्यर्थतेति चेत्।

सत्यार्थकल्पना तत्र पौरुषेय्येव कल्प्यतां। असत्यार्थविभासस्तु प्रथमो यः स वेदतः ॥१२७॥

अत आह। 'वक्तृव्यापार' (विषय)इत्यादि। वेदार्थं प्राथमिकं परित्यज्य योर्थो बुद्धिव्यापारविषयस्तत्र प्रामाण्यं पुरुषबुद्धेरेव नार्थतत्त्वनिबन्धनं न शब्दस्येति व्यस्तपदसम्बन्धः।

तथा हि तं परित्यज्य वेदार्थं प्रथमं नरः। प्रमाणशुद्धमन्यार्थं[2] कल्पयेत् तन्मतिः प्रमा ॥१२८॥
सोपि वेदार्थ एवेति न प्रमाणमिहास्ति वः। वेदाधिपत्यतो जातेरिति चेत् प्रथमो न किं ॥१२९॥
तस्यापि च तदर्थत्वे व्यर्थो वेदः कथन्न सः। तथा च सति सन्देहेऽपौरुषेये न मानता ॥१३०॥

वेदेर्थतत्त्वस्य प्राथमिकस्याभावात् 'चित्रया यजेत पशुकाम' इति व्यर्थकत्वात्। कर्मवैगुण्यवत् तत्रेति चेत्। न (।) प्रमाणाभावात्। अन्यार्थकल्पना तु पुरुषप्रयत्नाद् भवन्ती पुरुषकृतैव। तथा चोक्तं। 'सा किमशब्दलिङ्गा स्वयं कथञ्चिदनुस्मरतो न भवति।' सर्व एव च वेदावात्मानं नियुक्तं मन्यते पूर्व्वानुसारेण। नियोगश्च शब्दभावनारूपः (।) यदि स वाक्यार्थः। तथा सति देवदत्तः पचेदिति कर्त्तुरनभिधानात् 'कर्तृकरणयोस्तृतीये'[3]ति तृतीया प्राप्नोति। कर्त्रभिधाने तु 'अनभिहिताधिकारात्[4] तिङैवोक्तत्वान्न भवति। किंच। पचतीति कर्त्तापि प्रतीयते। व्यापारसामर्थ्यात् कर्त्तुराक्षेपादेवं प्रतीतिरिति चेत् (।) न (।)

क्रमप्रतीतिरेवं स्यात् प्रथमं भावनागतिः।
(।) तत्सामर्थ्यात् पुनस्तस्माद् यतः कर्त्ता प्रतीयते ॥१३१॥

न च क्रमप्रतीतिरुपलभ्यते। द्विवचनबहुवचने च न प्राप्नुतः एकत्वाद् व्यापारस्य।

अथ कारकभेदाद् व्यापरभेदो भविष्यतीति चेत्। क्रियते कटो देवदत्तयज्ञदत्ताभ्यामिति महदसमंजसत्वं स्यात्[5] (।) तथा हि।

एकत्वात् कर्म्मणः प्राप्तं क्रियैकत्वं तथा भिदः। कर्त्तुर्भेद इतीत्थञ्च किङ्कर्त्तव्यं विचक्षणैः ॥१३२॥

---

[1] व्यर्थतेक्ष्यते
[2] परिशुद्धार्थं
[3] पाणिनिः २।३।१८
[4] पाणिनिः २।३।१
[5] अधिकं—एकत्वाद् व्यापारस्य

**ननु धात्वर्थस्याभेदादेकवचनं देवदत्तयज्ञदत्ताभ्यामास्यते । स च धात्वर्थो न नियोगः । नियोगस्य प्रत्ययार्थत्वात् । स च धात्वर्थातिरिक्तः । कर्त्तृसाध्यस्तस्य कर्त्तृभेदाद् भेद इति ततः कटं कुरुत इति भवति । धात्वर्थस्तु शुद्धो न कारकभेदाद् भेदी । तदसत् ।**

सम्बन्धाद् यदि तद्भेदो धात्वर्थस्याप्यसौ भवेत् ।
सोपि निर्वर्त्त्य एव(तः) तद्भेदेनैव भिद्यतां ॥१३३॥

**अस्माकन्तु ।**

विवक्षापरतन्त्रत्वाद् भेदाभेदव्यवस्थितेः । लाभिधानात् कारकस्य सर्वमेतत् समञ्जसं ॥१३४॥

**क्रिया हि कर्त्तुः कर्मणश्च भेदेन विवक्ष्यते । सा यदि लकारेणाभिधीयते न कर्त्रा तदा कर्त्तरि तृतीया भवति । यदाभिधीयते तदा प्रथमार्थत्वात् प्रथमा भवति । 'क्रियते महात्मना' 'करोति महात्मे' ति ।**

यदा भेदविवक्षास्य भावनार्थस्य ज्ञायते । लकारेणाभिधानञ्च तृतीया कर्त्तरीप्स्यतां ॥१३५॥
यदा भेदविवक्षास्य कर्त्ता लेनाभिधीयते । तेनैवोक्तेस्तृतीयास्ति न कर्त्तुरिति गम्यता ॥१३६॥

**यदा तु कर्त्तृव्यापारस्तिपा प्रतिपाद्यते (तदा) स एव च भावना । तथा चाह । 'भावार्था कर्म्मशब्दाः । भावनं भावो ण्यन्तस्य प्रत्ययः ।'[१] तथा च सति भावनैवासौ । भावना च कर्त्तृव्यापारः (।) स चोदितः कर्त्रा स्वव्यापारे प्रवर्त्तते । नियोगस्य च तच्छेषत्वाद-प्रधानत्वादवाक्यार्थत्वं । नियोगविशिष्टत्वाच्च भावनायास्तथा प्रतिपादने नियमेन प्रवर्त्तते । कथञ्चासौ स्वव्यापारं प्रतिपन्ने (? न्नोत्र) न प्रवर्त्तते । अन्यथा स्वव्यापार एव तस्य[२] न चोदितो भवेत् । तदेतद सत् ।**

व्यापार एष मम किमवश्यमिति मन्यते । फलम्विनैव नैवं चेत् साफल्ये धिगमः[३] कुतः ॥१३७॥

**यद्यवश्यमेष मम व्यापार इति मतिस्तदयुक्तं । न हि फलमपश्यन्ममेवं कर्त्तव्यमिति कश्चित् प्रत्येति । सफलत्वे प्रवर्त्तते । सफलत्वं नावगम्यत इति प्रतिपादितं । किंच ।**

यजते पचतीत्यत्र भावना न प्रतीयते । यज्यर्थादतिरेकेण तस्या वाक्यार्थता कुतः ॥१३८॥
पाकं करोति यागञ्च यदि भेदः प्रतीयते । एवं सत्यनवस्था स्यादसमञ्जसताकरी ॥१३९॥

**करोति यागं स्वव्यापारं निष्पादयति यागनिर्वृत्तिं निर्व्वर्त्तयति । व्यपदेशा एते यथाकथंचिद् भेदपुरस्सरा (:।) नैतेभ्योस्ति पदार्थतत्त्वव्यवस्था । शिलापुत्रकस्य शरीरमिति न भेदव्यवहारा भेदमन्तरेणापि दृश्यन्ते ।[४]**

यथा द्विजस्य व्यापारो याग इत्यपि गीयते । ततः परा पुनर्दृष्टा करोतीति नहि क्रिया ॥१४०॥
यजि क्रियापि द्रव्यस्य विशेषादपरा न हि । सामानाधिकरण्येन देवदत्ततया गतिः ॥१४१॥

**ननु च किं करोति देवदत्तः पचति यजतीति प्रश्नोत्तरदर्शनात् । करोतीति निश्चिते सति यज्यादिषु सन्देहादन्यत्वं प्रसिद्धमेव । तथा चाह । न च शरीरमेव बुद्धिस्तत्सिद्धावपि बुद्धिविकल्पे संशयात् । तदेतदयुक्तं ।**

---

[१] शवबरभाष्ये (?) [२] त्यक्तः—तस्य [३] साफल्याधिगमः
[४] T. पद्यनिबद्धं—शिलापुत्रेत्यारभ्य दृश्यन्त इत्यन्तं वाक्यम् ।

करोत्यर्थयजत्यर्थौ विभिन्नौ यदि तत्त्वतः । अन्यत् संदिग्धमन्यस्य कथने दुर्घटः क्रमः ॥१४२॥

**यदि हि करोति क्रिया अन्या यज्यादिकायाः । तदा करोतीति निश्चिते कथमन्यत्र संदेहे प्रश्नः । अनिश्चित एव प्रश्नस्य युक्तत्वात् । सामान्यरूपोथ करोत्यर्थो विशेषरूपो यज्यादिरिति चेत् ।**

सामान्येन विशेषेण विना किंचित् प्रतीयते । सामान्याक्षिप्यमाणस्य नहि नामाप्रतीतता ॥१४३॥

**केवलसामान्यप्रतीतौ हि विशेषांशे संदेह इत्युक्तं ।**

**अथ सामान्येन विशेष आक्षिप्यते । तथा सति सोपि प्रतीत एव कथं संशयः । नहि प्रतीतत्वादपर आक्षेपः ।**

**अथ प्रतीत एवासौ तथापि प्रतीतता विशेषरूपेण नास्ति सामान्येनाक्षेपात् ।**

**ननु तदेव सामान्यमाक्षेपकं तदेवाक्षेप्यमिति कथमेतत् । न च सामान्यादपरं सामान्यताक्षेप्यं । तथा सति ततोप्यपरं ततोप्यपरमित्यनवस्था ।**

**ननु सामान्यप्रत्यक्षाद् विशेषाप्रत्यक्षात् विशेषस्मृतेश्च संशयो युक्त एव । न (।) अनुपलम्भादभाव एव युक्तः सामान्येनानुपलम्भप्रमाणवादिनः । अन्यथोपलब्धिलक्षणप्राप्तानुपलम्भादभावो नानुपलब्धिमात्रात् । तथाप्यनुपलब्धेरेव संशयो व्यर्थमेतत् सामान्यप्रत्यक्षादिति ।**

**यदि सामान्यप्रत्यक्षतायामपि उपलब्धिलक्षणप्राप्तानुपलब्धिर्न सामान्यसंशयः । आत्मोपलम्भलक्षणप्राप्तानुपलब्धिरेव न सम्भ(व)ति सामान्यप्रत्यक्षतायाम् (।) एवन्तर्हि सैवानुपलब्धिलक्षणप्राप्तस्यानुपलब्धिः संशयहेतुरिति प्राप्तं । विशेषस्मृतिरिति च व्यर्थं । नहि विशेषस्मृतिव्यतिरेकेणापरः संशयः । उभयांशावलम्बि (स्मृति)रूपत्वादस्य । दृश्यते (कान्य)कुब्जादिषु सामान्यप्रत्यक्षतामन्तरेणापि प्रथमतरमेव स्मरणात् संशयः (।) तदेव यज्यादिकमनियमेन प्रतीयमानं सामान्यतो दृष्टादनुमानात् सामान्यं । आह चात्र[1] ।**

अतद्रूपपरावृत्तवस्तुमात्र प्रसाधनात् । सामान्यविषयप्रोक्तं लिङ्गं भेदा प्रतिष्ठितेः ॥१४४॥

**भेदानवधारणमात्रमेव सामान्यपरिच्छेदः । क्वचिद् बुद्धिरेव तदाकारविविक्ता भावाभावसाधारणत्वात् संशयहेतुः । तथा[2] तथाभूतानुपलब्धिरेव संशयहेतुः । बुद्धिरूपा उपलभ्यमानपदार्थरूपा वा ।**

**ननु समानाकारानुभवाभावे दृश्यते संशयः स्थाणुर्वा पुरुषो वेति । ऊर्ध्वतासामान्यमुपलभ्यते ।[3] यद्यस्ति तदा द्वयाकारा बुद्धि[4]रुपलभ्यते ।**

न भेदाद् भिन्नमस्त्यत्र सामान्यं बुद्धिभेदतः । बुद्धयाकारस्य भदेन पदार्थस्य विभिन्नता ॥१४५॥

**अथोपलभ्यत एव पुरुषस्थाणुस्वरूपपरिहारेण दूरदेशमूर्ध्वतामात्रमन्यथा स्थाणुपुरुषाकारान्तर्गतानुभवे न तत्र[5] सन्देह उत्पद्येत । तस्मात् तत्परिहारेणावभासनमेव तद्व्यतिरेक एतावन्मात्रलक्षणत्वाद् व्यतिरेकस्य । (।)**

---

[1] अधिकः—तस्मात् करोतीति [2] त्यक्तः—तथा [3] यदि संस्थानस्य ऊर्ध्वतो सामान्यदर्शनात् अयं स्थाणुरस्ति नवेति समानाकारानुभवभावे संशयो न दृश्यत इति पुरुषस्थाण्वाकारोऽत ऊर्ध्वं सामान्यं क्वापि नोपलभ्यते—अधिकम् [4] द्वयाकारो भावः [5] स्थाणुपुरुषविकल्पानुभवेन तेन ।

**तन्न युक्तं ।**

तन्मात्रव्यतिरेकश्चेत्[1] किन्नादूरेवभासनं । दूरेवभासमानस्य सन्निधानेतिभासनं ॥१४६॥

**यत् खलु दूरदेशनिवेशिदशायामवभासते । तत्सन्निधानविधानाधीनं सुतरामवभासवत्[2] । पदार्थान्तरत्वे च सामान्यस्य तदेव प्रतिभासनं । कथम(न्यत्र)त्रास्पष्टप्रतिभासव्यवहारः । न खलु नीलपदार्थप्रतिभासनेऽस्पष्टशुक्लप्रतिभासव्यवहारः ।**

**ननु भवत्पक्षेपि केयमस्पष्टता नाम । अस्पष्टप्रतिभासता नाम [3] (।) अस्पष्टप्रतिभासता हि कदाचिदप्रतिभासता कदाचिदन्यप्रतिभासता (।) कदाचित्तु तत्प्रतिभासतेति [4] ।**

तस्यैव प्रतिभासश्चेदस्पष्टप्रतिभासता । अस्पष्टता कथं नाम स्वरूपेणावभासने ॥१४७॥
अन्यस्य प्रतिभासोपि तस्यैवास्पष्टता कुतः ।
अप्रतिभासं विना भावः कथं स्यात् प्रतिभासने ॥१४८॥
बुद्धिरेव तथा भूता यद्यस्पष्टावभासिता । बुद्धिस्वरूपनिर्भासेनार्थस्यास्पष्टभासिता ॥१४९॥

**तदेतदसत् ।**

बुद्धिरेवातदाकारा तत उपद्यते यदा । तदा(ऽ)स्पष्टप्रतीभासव्यवहारो जगन्मतः ॥१५०॥

**अथ तदेव सामान्यन्तथा सति वर्ण्णसंस्थानप्रतिभासनं न स्यात् (।) न खलु सामान्यं वर्ण्णसंस्थानवद् द्रव्याश्रितत्वात् तयोः । अथ द्रव्यगतं वर्ण्णसंस्थानं तथा सति ततोत्पन्न सामान्यमनवभासनात् । वर्ण्णसंस्थानयोरेव प्रतिभासनं, तयोश्च साधारणत्वात् स्थाणुपुरुषयोः सन्देह इति युक्तं ।**

**तदप्यसत् । यतः ।**

स वर्ण्णोन्येन रूपेण संस्थानं कथमन्यथा । तत्प्रतीयत इत्थञ्च भ्रान्ता बुद्धिः प्रतीयते ॥१५१॥

**यदि वर्ण्णसंस्थानमन्यथा प्रतिभाति भ्रान्तिरेव सा (।) कथं सामान्यप्रत्यक्षता । अथावयवी तत्र प्रतिभाति न सामान्यं नापि वर्ण्णसंस्थानमिति चेत् ।**

संस्थानवर्ण्णरूपाभ्यां व्यतिरेकावभासनं । कुतो द्रव्यस्य किन्तस्मादपरं प्रतिभासते ॥१५२॥

**श्यामतादि रूपं हि वर्ण्णादिकमवभासते । न च तत्रान्यदेव द्रव्यमवभासते । तद्व्यतिरेकेणापरस्य द्रव्यस्याप्रतिभासनात् । तदेव द्रव्यमिति चेत् (।) न (।) गुणत्वात् संस्थानवर्ण्णयोः ।**

**अथ वर्ण्णसंस्थानवद् द्रव्यम् (।) न (।) तद्व्यतिरकेणान्यथा प्रतिभासनाभावात् । न खलु स्पष्टास्पष्टवण्णसंस्थानव्यतिरेकेणापरं द्रव्यमुपलभ्यते । अस्पष्टवर्णसंस्थानस्य च तदपरसामग्रीप्रभवज्ञानेन बाध्यमानत्वात् । नेदमेवम्भूतमिति स्पष्टाकारप्रत्ययोदये सति भवतीति । तदनुपलब्धिरेव च तद्विपर्ययोपलब्धिरूपा[5]बाधकं । नेदमिति (कल्पना) प्रत्ययस्यानुत्पत्तेर्न्नैवमिति चेत् । न (।) उत्पद्यत एव सोपि नेदमिति प्रत्ययः । तथा हि । तद्वर्ण्णमेतत्संस्थानं न भवतीति तद्व्यतिरिक्तसंस्थानबाधकमुपजायत एव ज्ञानं । व्यतिरिक्तस्य**

---

[1] तस्मात् तद्व्यतिरेकश्चेत् [2] सुतरामवभासत एव [3] त्यक्त—अस्पष्ट०
[4] T. तदस्पष्टप्रतिभासिता वा [5] T. तद्विपर्ययरूपोपलब्धिः

न बाधकमिति चेत् । यत एवाव्यतिरिक्तसंस्थानबाधकमत एव व्यतिरेकि संस्थानं भविष्यति ।

तदसत् ।

यादृशस्य प्रतीतिः प्राग् बाधनं तादृशस्य चेत् । अन्यथा न प्रतीतिश्च[1] किमन्यदवशिष्यते ॥१५३॥

यादृशं संस्थानं द्रव्यं वा वर्णाव्यतिरिक्तं प्रतिपन्नं (।) यदि तादृशस्य बाधा किमपरमवशिष्यते । न खलु योगविभागो विद्यते । येन तत्रैकस्य बाधनमपरस्य नेति व्यवस्थाविभागः ।

अथापि स्यात् ।

तस्य वर्णस्य न प्राप्तिः संस्थानद्रव्ययोस्तदा ।
ततः प्राप्तेः परं द्रव्यन्तच्च प्रागिति वित्तिमत् ॥१५४॥

यच्च पूर्वोत्तरभावेन वेद्यते यच्च न तथा (।) तयोर्विरुद्धधर्म्माध्यासयोगो न[2] युक्तः । प्रभेदो हि सकल एवमेव साधनीयो परस्य भेदसाधनस्याभावात् ।

तदसत् ।

तदन्यद् यदि तत्त्वेन प्रत्यक्षे किन्न भासते । पूर्व्वे परे वा उभयोर्दृश्यते सम्भवः कदा ॥१५५॥

यदि तत् परमार्थतो भिन्नं वर्णसंस्थानं द्रव्यात् संस्थानं वा वर्णात् कथं पूर्व्वत्र परत्र वा प्रत्यक्षे न प्रतिभाति । प्रत्येकमप्रतिभासने समुदायस्य तद्व्यतिरिक्तस्याभावात् तत्र प्रतिभासनमिति महन्मोहसामर्थ्यं । न च द्वयोः समवधानमिति कुतः समुदायः । अनुसन्धानश्च न प्रत्यक्षादिति । तदभावादनुमानमपि नास्तीति कुतो व्यतिरेकप्रतीतिः ।

तस्मान्न साधारणं नाम किञ्चित् । सर्वस्य स्वात्मनि व्यवस्थितत्वात् विशेषतैव । तस्मान्न क्रिया करोतीति साधारणरूपा यजनादिक्रिया विशेषाणां (सामान्यम् ।) (।) ततो न भावना कर्त्तृव्यापाररूपा तद्व्यतिरेकेणाविभावनात् । न च धात्वर्थो पि द्रव्यव्यतिरेकेणास्ति । द्रव्यमेव पूर्वापरीभूतमन्वयव्यतिरेकेण कल्पितव्यतिरेकिस्वभावमभेदेपि भेदवदुपचर्य क्रियातो भिन्नं क्रिया च ततो भिन्नेति व्यवहारमात्रमेतत् । नेयं वस्तुतत्त्वव्यवस्थितिः । स्वव्यापारधात्वर्थौ च नियोगकाले भाविनौ प्रतीयेते । ततः कथन्तदालम्बना प्रतीतिः पूर्व्ववासनाबलादुपजायमाना न निरालम्बनेत्युक्तं ।

अथापि स्यात् (।) प्रत्यक्षस्य हि वर्त्तमानविष(य)त्वाद् भाविभूतविषये नालम्बनत्वं शब्दस्य तु तद्विषयत्वेपि न तत्त्वं । तदाह 'चोदने'[3] त्यादि ।

तदसत् ।

अदृश्यमानः सोप्यास्तीत्येतद् व्यवसितं कथं । अनुमाने तु सम्बन्ध इति तत्र तथा स्थितिः ॥१५६॥

सर्व्वा हि परोक्षविषया प्रतीतिरर्थसम्बन्धादेवाविसम्वादिनी यथा अनुमानप्रतीतिः । न हि यो येनासम्बद्धस्तदभावे तस्य भावनियमः । निरालम्बना तु तत्स्वरूपाभावादेव । न ह्यविद्यमानस्य स्वरूपग्रहणमित्युक्तं । न च भाविना सह सम्बन्धनियमः । अनुमाने तु

---

[1] T. चेत्　　[2] विरुद्ध धर्मस्थानाभेदः　　[3] मीमांसा-भाष्ये

कारणात् कार्यं प्रतीयते। तथा परत्र दर्शनात्। न च फलकारणताग्निहोत्रादेरुपलब्धा। नापि तदकरणे प्रत्यवाद्यनिश्चयः[१]।

अथात्मनः सामर्थ्यमवगच्छन् यागकरणतामात्मनः[२] प्रतिपद्यमानो यागे[३] प्रवर्त्तिष्यते।

कारणत्वं यदा (स्वर्गे)[१] तस्य न प्रतिपद्यते। यागस्य देशितोप्येष कस्मात् तत्र प्रवर्त्तते ॥१५७॥

अत एव 'भावनानियोगधात्वर्थानां परस्परसम्बन्धः फलाभिसम्बन्धो वा विधिर्वाक्यार्थ'[४] इति न युक्तं। सर्व्वस्य भावित्वेन ज्ञानेनाग्रहणान्निरालम्बनतैव बुद्धेः। अतो दृश्यविकल्प्यार्थैकीकरणात् प्रवर्त्तते। स एव चान्यापोह इति। न कश्चित् प्रेक्षापूर्वकारी वेदात् प्रवर्त्तत इत्यलमतिप्रसङ्गेन।

तस्माद् (।) 'वक्तृव्यापारविषयो योऽर्थो बुद्धौ प्रकाशतेऽध्यारोपितः। प्रामाण्यन्तत्र शब्दस्य नार्थतत्त्वनिबन्धनं।' (२।२)

न खल्वध्यारोपेण सत्यार्थविषयेण भवितव्यं प्रतिबन्धमन्तरेणे[५]ति व्यवस्थितमेतत्।

प्रथम[६] वार्त्तिकालङ्कारे विधिभावनादि वार्त्तिकं प्रथमं ॥२॥

## § २. प्रमाणसिद्धिवार्त्तिकं द्वितीयम्

### १. व्यवहारिकत्वेन प्रमाणता—

यदि तर्हि अर्थक्रियास्थितिरविसम्वादनं (। अथ)[७] प्रत्यभिज्ञादिप्रत्ययादपि 'स एवायमि'त्यादि ज्ञात्वा प्रवर्त्तमानोऽविसम्वादभागिति प्रमाणं स्यात्।

तत्रापूर्व्वार्थविज्ञानं निश्चितं बाधवर्जितं। अदुष्टकारणारब्धं प्रमाणं लोकसम्मतं ॥१५८॥

अवयव्यादिविषयत्वं सम्वादकत्वात् प्रमाणमिति। अथालोचनाज्ञानसामर्थ्यादसौ विकल्प उत्पद्यमानो न[८] प्रमाणं। अवयविनि चावयवविज्ञानसामर्थ्यात् (।) तथा सति तदप्यालोचनाज्ञानं चक्षुःसन्निकर्षादि(सामर्थ्यादि)[९]ति न स्यात् प्रमाणं। तत्र यदि कारणपरम्पराऽन्विष्यते चक्षुरादीनां प्रसङ्गः। अथानन्तरं विकल्पस्यैव प्रामाण्यप्रसङ्गः॥

अत्रोच्यते।

गृहीतग्रहणान्नेष्टं सांवृतं धीप्रमाणता।
प्रवृत्तेस्तत्प्रधानत्वाद्धेयोपादेयवस्तुनि ॥३॥

स एवायमिति प्रत्यय उत्पद्यमानो नैकत्वे प्रमाणं। (अपूर्वस्य)[१०] एकत्वस्याग्रहणात्। दृष्टस्यैव तस्य प्रतिपत्तेः। एकत्वं हि पूर्वेण सह गृह्यमाणमेकतां विवादविषयतां स्वीकरोति। वर्त्तमानता[११]मात्रस्यैकत्वे सिद्धसाधनमेव। तच्च पूर्व्वं पूर्व्वप्रत्येन गृहीतत्वान्नापरं (।) पूर्वप्रत्ययेन चासौ भूतपदवस्थ एवापूर्व्वतया च गृह्यते। ततः पुनरनुसन्धीयमानं यथाभूतं

---

[१] T. [२] T. यागादिकारणतामात्मनः [३] T. त्यक्तः—यागे
[४] T. मीमांसा··· [५] T.त्यक्तं—प्रतिबन्धमन्तेरण [६] T. त्यक्तं—प्रथम
[७] T. [८] T. त्यक्त :—न [९] T. [१०] T. वर्त्तमान०

गृहीतं तथा भूतमेव वानुसन्धातव्यं (।) गृहीतत्वेन च ग्रहणे स्मरणमेतदिति गृहीतग्राहित्वादप्रमाणमपरस्मरणवत्। संवादस्त्वर्थक्रियाकरणात्। न चैकत्वसाध्यार्थक्रिया। वस्तु सामर्थ्यमात्रादुत्पत्तेः।

तस्मात् स एवायमिति प्रत्ययद्वयमेवैतत्। अथैकता प्रतीयते पूर्व्वेण सह (अपरस्य) तदयुक्तं।

पूर्व्वमध्यक्षतोऽवित्तौ तेनैकत्वेस्ति न प्रमा। एकत्वमप्रतीतेन प्रतीतमिति साहसं ॥१५९॥
तेन सांवृतमेकत्वं पूर्व्वपूर्व्वविकल्पतः। प्रामाण्यं प्रत्ययस्यास्य सांवृतस्य न विद्यते ॥१६०॥
घटादिविषयो योपि प्रत्ययः सरसादिके। तत्प्रत्ययैर्गृहीतेर्थे समुदायविकल्पनात् ॥१६१॥
समुदायात् परस्त्वेको नैव केनचिदीक्ष्यते। अनादिवासनादार्ढ्यात् परस्याग्रहवैशसं ॥१६२॥

कथन्तर्हि धियः प्रामाण्यं यदि पूर्व्वापरादिकस्य (नैका)[1] प्रतिपत्तिः।

अत्रोच्यते। हेयोपादेयविषये प्रवर्त्तकं हि प्रमाणमुच्यते। तत्र च प्रवर्त्तने धीरेव प्रधानं (।) यद्यपि नाम भाव्यर्थो न प्रतिपन्नस्तथापि तत्र प्रवर्त्तनात् प्रमाणं। यथानुमानस्याग्रहणेपि (प्रामाण्यम्[1])। न ह्यनुमानेन वस्तुस्वरूपस्वीकार इति प्रतिपादयिष्यते। न च चक्षुरादिकात् प्रवर्त्तते ज्ञानमन्तरेण विकल्पमन्तरेणापि बुद्धचाभ्यासात्[2] प्रवर्त्तते। ततो हेयोपादेयविषये धीरेव पूर्व्विका प्रवर्त्तनात् प्रमाणं न विकल्पादयः। यत्र तु नाभ्यासस्तत्रानुमानमेव प्रत्यभिज्ञानादयोऽतो नातिप्रसङ्गः।

एवन्तावत् फलार्थितां व्यवहारिकत्वेन प्रमाणत्वं प्रतिपादितं।

## २—अधिगमफलविषयविभागकारितया प्रमाणता—

इदानीमधिगमफलविषयविभागकारितया प्रतिपाद्यते।

### विषयाकारभेदाच्च धियोधिगम भेदतः।

अपि च। धिय एव प्रामाण्यं नान्यस्य (।) यतः। विषयाकारभेदादधिगमस्य प्रमाणफलस्य भेदः।[3] न प्रवर्त्तनात् प्रमाणं अपि तु प्रतिपत्तिकरणात्। प्रतिपत्तौ हि ज्ञातायां प्रवर्त्ततां वा न वा (।) तथाप्यर्थतथाभावव्यवस्थापनात् प्रमाणं (।) व्यवस्थापितेर्थे यदि न प्रवर्त्तते। नायं प्रमाणस्य दोषः। प्रापकत्वात् प्रमाणमिति चेत्। न (।) प्रापणयोग्यत्वात् प्रमाणस्य। तदेव प्राप्तावसत्यां कथं ज्ञायते। रूपविशेषदर्शनात्। अव्यभिचारिणो रूपस्य कथं परिच्छित्तिः।

समाप्तस्तर्हि वाह्यार्थव्यवहारः। अव्यभिचारित्वाज्ज्ञाने[4] हि स्वरूपसम्वेदनमात्रमेव परिस्फुटं। तथा च कुतो वाह्यार्थपरसन्तानादिप्रतीतिः। एतच्चोत्तरत्र वक्ष्यामः। विषयाकार इवाकारोऽस्य विषयाकारं ज्ञानं (।) तस्य भेदो विषयाकारभेदः। विषये वा[5] आकारभेदो विषयाकारभेदः। आकरणमाकारः। उल्लेख इत्यर्थः। विषयसदृशता विषयोन्मुखता च (।) तद्भेदाद् धियोऽधिगमभेदः नीलस्य संवित्तिस्तदाकारस्य चेति। अर्थाधिगमश्च

---

[1] T. [2] T. न्तरेणाप्यभ्यासात् [3] T. विषयाकारभेदात् प्रमाणफलं बुद्धिप्रतिपत्तिभेदात्। [4] T. अव्यभिचारित्वादज्ञाने [5] विषय इव वा

प्रमाणफलं स्वरूपाधिगमो वा। तथा चाह। 'प्रमाणाधीनो हि प्रमेयाधिगमः।' स च विषयाकार आत्मभूतो ज्ञानस्य (।) ततो ज्ञानमेव प्रमाणं।

ननु यथाकारो ज्ञानात्मभूतस्तथाधिगमोपि। ततो ज्ञानमेव फलमिति प्राप्तं।

सत्यमेतत्।

प्रमाणतः फलन्नान्यत् प्रमाणं न फलात् परं। एवं प्रकारा सर्व्वा च क्रियाकारकयोः स्थितिः ॥१६३॥

एतच्चोत्तरत्र प्रतिपादयिष्यते।

यथा चक्षुरादयो न भवन्ति प्रमाणन्तथाऽऽकारोपि मा भूत्। यथा कारका अपि संवेदनस्य चक्षुरादयो न प्रमाणन्तथाकारोपीति[1] (।) आह।

भावादेवास्य तद्भावे,

तद्भावे आकारभावे। अस्याधिगमस्य फलस्य भावादेव(।) न खलु चक्षुरादिभावेस्य फलस्य भाव एव। आकारस्य तु भावे भाव एवाव्यतिरेकादिति साधकतमत्वं। 'साधकतमञ्च करणं'[2]। अव्यवधाने च साधकतमत्वमिति प्रतिपादयिष्यते।

कथन्तर्हि चक्षुषा पश्यति रूपमिति। कारणे कार्य्योपचारादेवमुच्यते। 'चौरैग्रामो दग्ध' इति यथा। तस्मात् ज्ञानमेव प्रमाणं।

ननु प्रापकमेतज्ज्ञानमिति कथं ज्ञातव्यं। न तावत् प्रत्यक्षतः। न खलु स्वसंवेदन-प्रत्यक्षं प्रमाणाप्रमाणविभागमुपदर्शयति। सर्व्वज्ञानेषु स्वसंवदेनस्य भावात्। न च तदुत्पत्तिकाल एव संवादीतरज्ञानविभागसंवेदने प्रवर्त्तमानः कश्चिद् विप्रलभ्यते। नापि सन्देहवान् स्यात्।

अथाबाधिततत्वलक्षणं प्रामाण्यं स्वत एव प्रसिध्यति(।) तदर्थापत्त्या प्रसाध्यमानं परोक्षज्ञानवादिनां कथं स्वतः सिद्ध्यति। यथार्थापत्त्या ज्ञानसत्ता सिद्धचति। तस्यार्थापत्त्या ज्ञानस्य नापरेण प्रामाण्यं ज्ञायते। स्वत एव तु प्रमाणता। अप्रामाण्यन्तु बाधकज्ञानात्(।) बाधकज्ञानस्य च स्वत एव प्रामाण्यं।

किञ्च। कारणादुत्पद्यते (वि)ज्ञानं, प्रामाण्यन्तु तस्य स्वत एव। तदप्यपवादेन बाधकज्ञानेनाबाधिततत्वलक्षणमपोद्यते[3]।

अत्रोच्यते।

यदि स्वतः प्रमाणत्वं निजकारणभावतः। तथोत्पन्नस्य तस्यान्यैर्ब्बाधकैर्नान्यथा क्रिया ॥१६४॥
अथात्मा ज्ञानरूपत्वात्[4] प्रमाणं स्वत उच्यते। बाधकानां सहस्रेपि तस्याप्यस्ति न विक्रिया ॥१६५॥
दुष्टकारणसद्भावादप्रामाण्यं भवेद् यदि। गुणवत्कारणासङ्गात् प्रामाण्यं न किमिष्यते ॥१६६॥
दोषाभावत एवास्य प्रामाण्यं यदि सम्मतं। अप्रामाण्यं गुणाभावात् कस्मादस्य न गम्यते ॥१६७॥
न च प्रमाणेतरतः कश्चिदात्मेक्ष्यते परः। प्रमाणत्वाप्रमाणत्वं येन तस्यान्यतो भवेत् ॥१६८॥

---

[1] T. त्यक्तं—यथाकारका तथाकारोपीति　　[2] T. पाणिनिः १।४।४२

[3] T. बाधकत्वलक्षणमपोद्यते　　[4] T. अथात्मेति (स्व)रूपत्वात्

बोधात्मकः स चेविष्टः स्वापावस्थागमादिषु[1]। स्वसंवेदनभावोस्य कदाचिन्नापगच्छति ॥१६९॥
न वेद्यते तदा किञ्चिदात्मास्तीति कथम्मतः। बोधेतरव्यवस्था तु दूराद् दूरतरं गता ॥१७०॥
तस्मादुत्पद्यते ज्ञानं प्रमाणमितरत् तथा। कारणादेव तद्भूतं न स्वतस्तस्य मानता ॥१७१॥
समानाकारसद्भावान्न तु तत्त्वेन निश्चयः। अबाधितत्वं सर्व्वस्य प्रथमन्तेन न प्रमा ॥१७२॥
पश्चाद् बाधस्तु[2] सन्दिग्धो निश्चयस्तस्य सोन्यतः। प्रत्यक्षतोऽनुमानाद्वा प्रमाणमपरं न हि ॥१७३॥
संवादप्रत्यय. सोन्यविषये यदि वर्त्तते। तेन पूर्वस्य मानत्वमतीतस्येक्ष्यते कथं ॥१७४॥
साधनप्रत्ययस्यापि सन्देहविषयत्वतः। साधनत्वं कथन्तस्य प्रमाणत्वाप्रती(ति)[3]तः ॥१७५॥
बोधात्मकत्वान्मानं चेत् प्रसक्ता सर्व्वमानता। अबाधितार्थबोधोपि प्रथमन्न प्रसिध्यति ॥१७६॥
अथार्थकारितां ज्ञात्वा तदर्थस्य प्रमात्ववित्। प्रमाणं प्रागसिद्धं यत् तस्य वित्तिः कथन्ततः ॥१७७॥
यदि प्रमाणं प्राक्सिद्धं क्रिया (स्यात्)[3] तस्य योगवित्।
अर्थक्रियातस्तज्ज्ञानं प्रमाणमिति गृह्यते ॥१७८॥
यत्रैवार्थक्रिया तत्र प्रमाणमथ तन्मतं। अर्थक्रियादयो दृष्टास्ते(ऽ)[3]प्रमाणाद् मतादपि ॥१७९॥
ततो नार्थक्रिया सा चेदन्यतोपि कथम्मता। ततः कदाचिदप्राप्तेः सान्यत्रापि समीक्ष्यते ॥१८०॥
यतो न प्राप्तिसंदेहः तत् प्रमाणम्मतं यदि। सन्देहस्य निवृत्तिर्हि समानाकारतः कुतः ॥१८१॥
अभ्यासाल्लक्ष्यते पश्चादाकारः सविलक्षणः। ततः प्राप्त्यविनाभाव एष सोन्योन्यसंश्रयः ॥१८२॥
तद्दृष्टावेव दृष्टेषु सवित्सामर्थ्यभाविनः। स्मरणाद् व्यवहारश्चेदनुमानात् तथा सति ॥१८३॥
तच्चानुमानमध्यक्षादध्यक्षमनुमानतः। इतरेतराश्रयादेवं नास्त्यन्यतरसंस्थितिः ॥१८४॥

**स्वभावालम्बनाकारपरिच्छेदि हि प्रत्यक्षं तृणस्यापि न कुब्जीकरणे समर्थं।[4]**

न पूर्व्वापरयोस्तेन सम्बन्धः परिगृह्यते। देशकालान्तरव्याप्त्या सङ्गतिर्योग उच्यते ॥१८५॥
देशकालान्तरव्याप्तेरध्यक्षं ग्रहणे क्षमं। यदि सर्व्वस्य सर्व्वार्थं दर्शितैव प्रसज्यते ॥१८६॥
सहभावस्तयोर्व्याप्त्या न तस्मादनुमोदयः। कादाचित्कतया तस्य सर्व्वत्रास्त्वनुमाथवा ॥१८७॥
इदानीमेवमाकारमेतदस्तीति वेद्यतां। अप्यक्षतो न देशाद्यन्तरस्थग्रहणन्ततः ॥१८८॥
अगृहीते च देशादौ तद्व्याप्तिर्गृह्यते कथं। तस्याग्रहे नानुमानं चैतदत्यन्तसाहसं ॥१८९॥
अनुमानान्तराक्षेपादनवस्थावतारतः। प्रकृता(ऽ)[3]प्रतिपत्तिः स्यात् तस्य तस्येत्यपेक्षणात् ॥१९०॥
तस्मात् स्वतः प्रमाणत्वमुत्सर्गेण व्यवस्थितं। बाधकारणदुष्टत्वज्ञानाभ्यान्तदपोह्यते ॥१९१॥
प्रमाणमविसंवादाद् बाधकं चेन्न विद्यते। प्रमाणमेव तद् व्यक्तं[5]तद्धि बाधकतोन्यथा[6] ॥१९२॥

**अत्रोच्यते।**

बाधकाभावमात्रेण न प्रमाणत्वनिश्चयः। प्राप्तिकाले च यो बाधः तस्याभावः पुरः कुतः ॥१९३॥
प्रमाणाज्ज्ञायतां प्राप्तेः प्राप्ता सा(ऽ)[3]र्थक्रियास्थितिः।
सा च स्वरूपसंवेद्यज्ञानात् पश्चाद् विभाव्यते ॥१९४॥
प्राक् तु तत्रानुमानस्य प्रवृत्तिर्भावितवस्तुनि। ततोनवस्था सैव स्यात् प्रमाणत्वगतिः कुतः ॥१९५॥
न प्रत्यक्षानुमानाभ्यामपरं मानमिष्यते ॥१९६॥

---

[1] T. निर्बोधस्वप्नाद्यवस्थासु ( सुषुप्त्याद्यवस्थासु) [2] T. पश्चादबाधः
[3] T. [4] T. पद्यबद्धं—स्वयं० समर्थं
[5] T. युक्तं [6] श्लोकवार्त्तिके

अत्रोच्यते ।

## • स्वरूपस्य स्वतो गतिः ॥ (४)

**प्रामाण्यं व्यवहारेण ;**

स्वतो हि स्वरूपस्यैव गतिर्न्न पररूपस्य (।) साक्षाद् गतिर्हि प्रत्यक्षं साक्षात्करणं च स्वरूपस्य न पररूपस्य प्राप्तिकालविशेषणस्य । प्रमाणता च प्राप्यपदार्थाव्यभिचारिता । न च प्राप्यपदार्थाग्रहणे तत्सम्बन्धग्रहणं । न च तथानवसीयमानं प्रमाणमित्यवसितं भवति । पुरोर्वात्तरूपासङ्गिता तु सर्व्वज्ञानानामविशिष्टा । न च यो भाविरूपसम्बन्धपरिग्रहः । नापि भाविनार्थक्रियाज्ञानेन पूर्व्वरूपसम्बन्धपरिग्रहः । (ततः स्वरूपसंवेदनात्मत्वान्न प्रत्येकं सम्बन्धपरिग्रहः) नापि समुदायसम्भवः । क्रमेण साधनार्थक्रियाग्रहणयोर्भावात् । तदुत्तरकालभावि तु स्मरणं यथानुभवं प्रवर्त्तमानमसंबद्धमेव द्वयं विकल्पयति । यथानुभवपरित्यागात्तु तदुपप्लुतमेवेति न ततः सम्बन्धप्रतिपत्तिः । ततस्तत्सम्बन्धाग्रहणात् पश्चादपि दृष्टसाधर्म्यात् कथं प्रतिपत्तिरनुमानादिति न प्रामाण्यप्रतिपत्त्युपाय इति 'स्वरूपस्यैव स्वतो गतिर्न' प्रामाण्यस्य ।

अथ प्रमाण्यं स्वरूपमेव भावप्रत्ययवाच्यस्य ततोऽव्यतिरेकात्[1] । तदयुक्तं ।

ज्ञानस्वरूपं प्रामाण्यं प्राप्यरूपसमन्वयि । स्वरूपमात्रग्रहणे तदग्राह्यमितीरितं ॥१९७॥

नहि ज्ञानस्वरूपमेव प्रामाण्यं प्राप्यरूपसम्बन्धेन तत्त्वव्यवस्थापनात् । तस्य चाग्रहणमिति प्रतिपादितमेव । ततोऽप्रवृत्तिनिवृत्तिकं स्वस्वरूपसंवेदनमात्रमेव न भदेवादावतारः । तस्मान्न प्रेक्षावद्भिः क्वचित् प्रवर्त्तितव्यं न निवर्त्तितव्यं वा कुतश्चित् ।

कथन्तर्हि प्रामाण्यमप्रमाणतो निवृत्तं व्यवस्थाप्यते । 'प्रामाण्यं व्यवहारेण ।' सांव्यवहारिकमेतदिति प्रतिपादितं । संव्यवहारश्च विचार्यमाणो विशीर्यत एव ।[2] तत्र यद्येतावता परितोषः तदा न किंचित् कर्त्तव्यमिति मुक्तिरेव संसारात् तस्यात्यन्तमभावात् । अथ व्यवहारप्रसिद्धः संसारः । तथा सति प्रमाणेतरविभागोप्यस्त्येवेति न प्रमाणत्वप्रतिपादनाय यत्न आस्थेयः ।

किञ्च । सांव्यवहारिकं प्रामाण्यं प्रतिपादयता परमार्थत एकमेव स्वसंवेदनं प्रत्यक्षमित्युक्तं भवति [3] ।

तथा हि यदि मानत्वमध्यक्षादनुमानतः । सिद्धिमृच्छति सन्देहं[4] व्यवहारपदं वृथा ॥१९८॥

यदि प्रत्क्षतोऽनुमानतो वा परिस्फुटा प्रमाणत्वसिद्धिः किमर्थमुच्यते व्यवहारेणेति । तस्माद् व्यवहारमात्रप्रसिद्धानुमानाश्रयेण प्रसिद्धं सम्बन्धमाश्रित्य तदेतदर्थक्रियासाधनमिति दर्शनेन स्पृश्यादिसाधनस्य प्रतिपत्तौ प्रवर्त्तते । पश्चादभ्यासानुमानमन्तरेणापि प्रतिभासमात्रादेव वृत्तिरिति प्रत्यक्षमपि प्रवर्त्तकत्वात् प्रमाणम् (।) अत उच्यते 'प्रामाण्यं व्यवहारेणे'ति ।

---

[1] T. व्यतिरेकात्　　[2] T. त्यक्तं—कथन्तर्हि० एव
[3] T त्यक्तं—किञ्च० भवति　　[4] T सिद्धिमिच्छत्यसन्देहं

**ननु दर्शनेन रूपमेवोपलभ्यते न स्पृश्यं। तथा वर्त्तमानमेव न भावि प्राप्यं। तथा स्वदृश्यत्यमेव न परदृश्यत्वमपि (तत्)[१] कथमन्यदर्शनेन्यप्राप्त्या प्रमाणं। उक्तमत्र 'स्वरूपस्य स्वतो गतिरि'ति।**

**किञ्च।**

व्यवहारत एकत्वात् प्रमाणत्वव्यवस्थितिः। देशाद्यभेदादेकत्वं द्रव्यस्य व्यपदिश्यते ॥१९९॥

**उक्तमेतत् (।) 'प्रामाण्यं व्यवहारेणे'ति। ततो व्यवहारप्रसिद्धमवयविन एकत्वं[२] समाश्रित्य यदेव दृष्टं तदेव प्राप्तमिति व्यवसायात् प्रमाणताव्यवहारः। स चैकत्वाध्यवसायो देशकालाद्यभेदात्। तदभेदोपि तत्सामर्थ्यस्य सामग्रीजननात्[३]। एवं भाविभूतयोरपि तदेकसन्तानपतितत्वेन[४] समानार्थक्रियातश्चैकत्वाभिमानः।**

**नन्वर्थक्रियाप्रापकत्वात् प्रमाणं। प्रामाण्यञ्च किमर्थक्रियाज्ञापकमथ कारकं (।) न तावत् कारकात् प्रमाणं करणं हि तदा स्यात्।**

**अथ ज्ञापकत्वात् प्रमाणमुच्यते[५]। तदप्ययुक्तं।**

ज्ञापकं न तदर्थस्य क्रियासंदेहभावतः। कादाचित्कार्थक्रियेति तस्या ज्ञापकता कुतः ॥२००॥

**साधनज्ञानमन्तरेणापि अर्थक्रियोपलब्धा (।) तत् कथं तत्कारणमर्थक्रियायाः। तदन्तरेणापि भाविना तत्कारणं स्यात् कार्यस्य। नापि ज्ञापकं दृष्टेप्यर्थो कदाचिदर्थक्रियाऽभावात्। न च तज्ज्ञानमप्रमाणमर्थाशून्यत्वात्। अतः कारकत्वज्ञापकत्वाभावे कथं प्रमाणं प्रापकमर्थक्रियायाः।**

**[६]अत्रोच्यते।**

उपेये[७] नाम सन्देहस्तावता न प्रमा न सा। निश्चितत्वादुपायस्य प्रमासौ किन्न तावता ॥२०१॥

**न खलूपेयसन्देहपरिजिहीर्षा। सर्व्वत्रोपायनिश्चयमात्रेण वृत्तेः। तत उपायनिश्चये सति कृषीवलादिवत् प्रामाणिकाः प्रवर्त्तन्तां।**

**तदसत्। यतः[८] (।)**

उपेयार्थितया सर्व्वः प्रवर्त्तननिवर्त्तने। करोति पुरुषस्तस्य सन्देहश्चेत् कथं प्रमा ॥२०२॥

**यदर्थमिष्यते प्रमाणन्तत्रोपेये सन्देहात् प्रमाणमिति कैषा वाचोयुक्तिः।**

**ननु प्रमाणेनार्थो ज्ञापयितव्यो नत्वर्थक्रिया कर्त्तव्या। अर्थक्रिया हि कुतश्चित् सामग्रीविशेषात् पश्चाद् भवन्ती कथं ज्ञापयितुं शक्या।**

**तदप्यसत्।**

यदर्थं एष प्रारम्भस्तदनिष्पत्तिरेव चेत्। असिद्धःसाध्यसम्बन्धः कथं साधक उच्यतां ॥२०३॥

---

[१] T [२] T अवयविमात्रमेकं। अत्र यन्-लग्-चम् इसि यन्-लग्-चम् स्थाने प्रमादपाठः
[३] T तत्सामर्थ्यजननसामग्रयाः [४] T प्रतिपत्त्वेन
[५] T प्रमाणमिष्यते [६] T प्रापकमर्थस्य। (इह बम्-पो-गसुम्-प प्रारभ्यते)
[७] T कार्ये [८] T एवं

अमुतः[1] प्रमाणादभिमतार्थसिद्धिमासादयेयमिति प्रमाणतान्वेषणपरः प्रेक्षावान् नान्यथा। व्यसनमेव त्वन्यथा भवेत्। अर्थश्च प्रकाशितो यदि नार्थक्रियाकारी कुतस्तस्यानर्थात् तैमिरिकोपलब्धकेशादेर्विशेषः।

अथ कदाचित् तत्रार्थक्रिया भवति न तैमिरिकादौ[2]। एवन्तर्हि तदर्थी कथं प्रवर्त्तते। न खलु सन्देहात् प्रवर्त्तमानः प्रमाणात् प्रवृत्तो भवति। प्रमाणं हि निश्चायकं न सन्देहकृत्। अर्थक्रियाकारिणि निश्चयश्चेत्। अर्थक्रियानिश्चये कथं तथा[3] निश्चयः। अथ तेन प्रमाणेनार्थसाधनवस्तु दर्शितं। अर्थक्रिया तु यदि कुतश्चित वैकल्यान्न भवति। न प्रमाणस्यासौ दोषः।

तदप्ययुक्तं।

अज्ञापकत्वं मानस्य न दोषो यदि दृश्यते। न तस्यास्त्यपरो दोष इति सर्व्वं प्रमा भवेत् ॥२०४॥

प्रमीयते येन परिच्छिद्यते समीहितोर्थस्तत् प्रमाणं। न चाज्ञापकस्य परिच्छेदशक्ति-रित्यप्रमाणं। तस्मादन्यथा प्रतिपद्यते।

अर्थक्रियास्वरूपस्य निश्चितस्यावबोधनात्। ज्ञानं प्रमाणं तदात्म्ये तदुत्पत्तिप्रभावतः ॥२०५॥

यत् खल्वर्थक्रियाज्ञानं तदर्थक्रियात्मत्वादर्थक्रियाङ्गमयति। तदर्थक्रियायान्तदेव साधन-ज्ञानं। पूर्व्वकन्तु साधनज्ञानं यदि स्थिरतयाऽसाववधृतोर्थस्तदा। पूर्व्वको हि स्वभावो भाविनं प्राप्तिकालेऽवश्यं भावयतीति[4] तत्प्राप्तिः। तत उत्तरः स्वभावः पूर्व्वकस्य स्वभाव एव वस्तुतः। ततस्तत्रापि तादात्म्यमेव।

अथवा तदवश्यम्भावि कार्यं कारणमेव तेन व्याप्तत्वात् कारणस्य। यच्च व्यति-रिक्तं व्यापकं तत् कारणमेव तेन विना तदभावात्। अनुत्पन्नं कथं कारणं। उत्पन्नमपि कथमिति समानो दोषः।

नन्वस्मिन् सतीदं भवति। अस्योत्पादादिदमुत्पद्यते। एतदत्र व्याप्रियते। एतदनेन क्रियत इति कार्यकारणभावमवगच्छन्ति लौकिकाः। न च भाविनः सत्ता नाप्युत्पादो न च व्यापारो नापि कारणं[5] तेनाविद्यमानत्वात् तदानीं।

अत्रोच्यते।

सत्तोत्पादादयो भावस्वभावत्वान्न परात्मकाः[6]।
अस्मिन् सतीति नैवास्मादपरार्थस्य सम्भवः ॥२०६॥

उत्पादो हि न सत्तास्वभावादपरः। कारणान्तरभाविनी चेत् सत्तोत्पादः किमन-न्तरभाविन्येव सत्तोत्पादः। एवं चेत् सुप्तस्य चिरमुत्थितस्य ये विकल्पास्तेषां पूर्व्वाभ्यासा-दुत्पादो न स्यात्। अनन्तरभावित्वाभावात्। शरीरादि च कारणं नेति प्रतिपादयिष्यामः। न च व्यापारः परः स्वभावात् स्वरूपमिति प्राप्तं। न च कार्यकाले स्वरूपं कालस्य[7]

---

[1] T केशादौ [2] T इतः [3] T तत्र
[4] T ज्ञापयतीति [5] ०करण
[6] T सत्तोत्पादावुभौ भावस्वभावान्न परात्मकाः [7] T कारणस्य

**पूर्व्वकस्याविनाभावितामात्रन्तु भाविन्यपि विद्यतेऽवश्यम्भाविकार्यस्य। कारणस्यापि (।) ततो भाव्यपि कारणं।**

**अथ दृष्टं यत् तत्र व्यापकं सत्कारणन्तथा पूर्व्वभावि तदेव कारणं न भावीति चेत। (न।)[1]**

न दृष्टस्य स्वरूपेण व्यापकत्वं प्रतीयते। आरोपितेन रूपेण भाविनोपि भवेदिदं ॥२०७॥

**दृश्यमानं हि न तावता व्यापकं व्याप्यस्य तदानीमप्रतीतेः। यदा च व्याप्यप्रतीतिस्तदा तद्भाविभूतरूपेण व्यापकमन्यथा भाविरूपाग्रहणे व्यापिता न स्यात्।**

**अथ येन रूपेण पूर्वभावित्वेन तद् दृष्टं तेनैव तस्य रूपेण व्यापकता प्रतीयते न भाविरूपेण।**

**तदसत्।**

भाविरूपाप्रतीतौ न व्यापकत्वं प्रतीयते।
प्रादेशिकी नहि व्याप्तिः [2] (स्यात्) व्याप्तिः सा तथा भवेत् ॥२०८॥

**तथा व्यापिताभावात्।[3] भूतभविष्यत्कालव्यापित्वेन हि प्रतीयमानं कारणं नान्यथा। सा च व्याप्तिः पूर्वं दृष्टस्य द्रक्ष्यमाणस्यापि समाना। द्रक्ष्यमाणस्य कथं कारणत्वं दृष्टस्यापि तदानीमसत्त्वात् कथमिति न प्रश्नावतारः। सत्त्वाच्चेत् द्रक्ष्यमाणस्यापि सा। तदा नेत्येतत् समानमुभयत्रापि। पूर्व्वता चेत्(।)कः पूर्व्वापरयोः स्वभावे विशेषः। द्वयमप्यारोपिताकारेण गृह्यते नापरेणेति न भेदः।**

**अथैकं पूर्व्वरूपतया दृष्टमारोप्यते। अपरन्तु द्रक्ष्यमाणतया पररूपतया च (।) तेन नास्ति द्वयोरपि कारणतेति।**

अन्योन्यमविनाभावो द्वयोरपि तयोः समः। अवान्तरविशेषस्तु[4] तत्र न क्वोपयोगवान् ॥२०९॥

**येन विना यन्न भवति तत् तस्य कारणं व्यतिरिक्तत्वे सति। यथा[5] च कारणस्य पूर्व्वं भावं विना न भवति कार्यन्तथावश्यंभावि कार्यं[6] कारणं कार्यस्य परभावं विना नेति समानं कार्यकारणभावनिबन्धनमिति[7] द्वयोरपि परस्परं कार्यकारणभावः।**

समानत्वान्निमित्तस्य कार्यकारणता द्वयोः। व्यापित्वव्यतिरेकस्य परलोकानुमाप्यतः ॥२१०॥

**न खलु व्यापितां व्यतिरेकस्य व्युदस्यापरमत्र जगति निबन्धमुपलमामहे। तेन द्वयोरपि कार्यावश्यम्भाविकार्यकारणयोः परस्परं कार्यकारणभाव इति युक्तं पश्यामः (।) तस्मात्।**

कारणं यदि तज्ज्ञानं स्वभावो वार्थजन्मनः। कार्यं वा सर्वथा तेन ज्ञाप्यतेऽर्थक्रियोदयः ॥२११॥

**यदि साधनज्ञानमर्थक्रियायाः कारणं यदि स्वभावो यदि कार्यं सर्व्वथा तेन सम्बन्धसम्भवाज् ज्ञाप्यते। एतच्च व्यापितादात्म्यं कार्यकारणभावश्च व्यवहारप्रसिद्ध इति व्यवहारेण प्रामाण्यं ज्ञायत इति।**

**ननु यावत् प्रत्यक्षं न भवति सम्बन्धसाधकं न तावदनुमानं। प्रत्यक्षेण हि सम्बन्ध-**

---

[1] T [2] T [3] T त्यक्तं—तथा [4] T विभागस्तु
[5] T त्यक्तः—यथा [6] T त्यक्तं—कार्यं [7] T कार्यकारणनिवन्धमिति

**ग्रहणेऽनुमानं प्रामाण्यं साधयति । प्रमाणं सत् प्रत्यक्षं सम्बन्धग्रहणे समर्थमिती तरेतराश्रयदोषः (न)।**[1]

**अथ नानुमानेन प्रामाण्यं साध्यतेऽपि स्वर्थक्रियानुभवेन । स च स्वसंवेदनप्रत्यक्ष प्रसिद्धः। तत्र नार्थक्रियाज्ञानं प्रत्यक्षं सत् प्रमाणतां पूर्व्वस्य गृह्णाति। नापि लिङ्गभूतं सदनुमापयति। प्रत्यक्षेण प्रामाण्यस्य ग्रहणाभावाद् अतीतत्वाच्च तद्व्यक्तेः। नहि व्यक्तिं विना सामान्यं मानत्वं प्रत्येतुं शक्यमभावात् सामान्यस्य । तस्मात् प्रमाणतायां संदेहमात्रं स चार्थक्रियासम्बन्धः सन्दिग्धः। अर्थक्रियानिर्भासात् तत्र संदेहो व्यावर्त्तत एव ।**

**तदप्यसत् यतः ।**[2]

संदेहमात्रव्यावृत्त्या न हि कश्चित् प्रवर्त्तते। प्रत्यक्षानिश्चयाद् वापि दृश्यते वृत्तिरर्थिनां ॥२१२॥
स एवार्थक्रियाभासः प्रत्यक्षमिति चेन्मतं। प्रत्यक्षादेव मानत्वप्रतिपत्तिरितीष्यताम् ॥२१३॥
प्रत्यक्षादनुमानाद्वा संदेहोपि निवर्त्तते। विरुद्धस्योपलब्धेर्न विनान्यस्य निवर्त्तनं[3] ॥२१४॥
यदि प्रत्यक्षभावात् सा तदा नाम निवर्त्तयेत् (।) संदेहं तदभावोस्तु तदैव कथमन्यदा ॥२१५॥
तत्संदेहनिवृत्या च नास्त्येवात्र प्रयोजनं। प्रवर्त्तनार्थं सेष्येत प्रवृत्तिः सा च साधिता ॥२१६॥
सर्व्वस्य चार्थसम्बन्धो न ज्ञानस्याक्षवीक्षितः। सामान्येन च सम्बन्धमनुमानं व्यवस्यति ॥२१७॥
न चापरा प्रमास्तीति कुतः सदेहविच्छिदः। तत उक्तं 'प्रामाण्यं व्यवहारेण' ति ॥२१८॥

**यदि तर्हि व्यवहारेण[4] प्रामाण्यं प्रमाणलक्षणशास्त्रं तर्हि किमर्थं। शास्त्रं हि निवृ (? दृं)[5] ष्टमपि न वचनमात्रात् तथा भवति (।) अपि तु व्यवहाराविसंवादेन। स चेदस्ति व्यर्थकं शास्त्रमित्याह ।**

## शास्त्रं मोहनिवर्त्तनं ।

**यदि व्यवहारतः प्रमाणस्वरूपमवगम्यते। कस्मात् परस्परविरोधीनि लक्षणशास्त्राणि (।) ततो व्यवहारेपि विमतिरेव व्यवहारिणां। तथाहि ।**

न सर्व्वो व्यवहारेण प्रामाण्यमवगच्छति । प्रमाणलक्षन्तेन परस्परविरोधवत् ॥२१९॥
प्रत्यक्षादिप्रमाणेन परलोको न गम्यते। आगमादपरः प्राहेत्यतो न व्यवहारतः ॥२२०॥

**तस्माद् (।)**

व्यवहारपरामर्शाच्छास्त्रं मोहनिवर्त्तनं। पूर्व्वापरस्यास्मरणं शास्त्रेणानेन वार्यते ॥२२१॥

**अतएव शास्त्रेणैव सर्व्वज्ञोक्तेन मोहो निवर्त्तते नान्येनेत्यनेन प्रकारेण सर्व्वज्ञवचनमेव प्रमाणमिति परमार्थतः[6] सर्व्वज्ञज्ञानमेव प्रमाणं[7] नापरमिति परमार्थः ।**

अन्यस्य न प्रमाणत्वं प्रमेयाव्याप्तिसम्भवात्। अव्यापिता न कार्यादिसम्बन्धस्य परिग्रहः ॥२२२॥

**कार्यकारणभावो ह्यतीतानागतवर्त्तमानकालदेशव्यापिसाहचर्यरूपो न खलु सर्व्वज्ञज्ञानस्य[8] विषयः। वर्तमानसन्निहितदेशमात्रग्रहणात्[9] प्रत्यक्षस्यानुमानस्य (तत्र) चानवतारात्। सर्व्वज्ञत्वं कथं ज्ञायते शास्त्रकारस्य चैतदुत्तरत्र वक्ष्यामः ।**

---

[1] T [2] T तथाप्यसत्। एवं। [3] T विरुद्धस्वभावोपलब्धेर्नान्यस्य
[4] T अधिक :—न [5] T [6] T. त्यक्तः—परमार्थतः
[7] T. सर्वज्ञ एव प्रमाणं [8] T. असर्वज्ञस्य [9] T. वर्तमानसन्निहितमात्रग्रहणात्

## (२) अज्ञातार्थप्रकाशकं प्रमाणं—

### अज्ञातार्थप्रकाशो वा;

अथवेदं प्रमाणलक्षणं (।) प्रकाश्यतेऽनेनेति प्रकाशः। अज्ञातस्यार्थस्य प्रकाशकं ज्ञानं प्रमाणं। सांवृतन्तु ज्ञानमज्ञातस्यार्थस्य (न) प्रकाशकः। नहि (तेन)[१] कश्चिदज्ञातोर्थः प्रकाश्यते। गृहीतानामेव रूपादीनामनेन पृथग्विकल्पनात्। प्रतीत्य परामर्शात् तु तदेक-मिति व्यवह्रियते।

ननु यद्यविसंवादनमन्तरेणाज्ञातप्रकाशनं प्रमाणं (।) द्विचन्द्राद्याकारस्यपि प्रमाणता-प्रसङ्गः। न (।) अर्थग्रहणादसौ हि नार्थः। नन्वर्थत्वमविसंवादे (न)[१] च ज्ञायते। ततश्चाविसंवादि ज्ञानमिति तदेव लक्षणमिति कथं लक्षणान्तरं। न (।) सामर्थ्याक्षिप्तस्या-लक्षणत्वात्[२]।

उक्तसामर्थ्यतो यस्य प्रतीतिस्तन्न लक्षणं। तथान्यस्यापि वस्तुत्वप्रभृते[३]र्लक्षणार्थता ॥२२३॥

लक्षणं हि यदुपात्तं साक्षात् तदेव। येन तु तल्लक्षणं साध्यते। तदपि सम्भवित्व-मात्रेण न लक्षणम् (।) अन्यथा वस्तुत्वादिकमपि भवेत्।

अथापि स्यात् (।) न वस्तुत्वं तत्रोपयोगि साक्षादन्यथा वा। अविसंवादस्तूपयोग्य-र्थत्वज्ञापने।

सत्यमेतत्। तथापि अज्ञानार्थग्रहणेन गृहीतग्राहि प्रत्ययः शक्यः परिहर्त्तुं नाविसंवादि-ग्रहणेन। तत्राप्यविसंवादग्रहणात्। न चाविसंवादेनार्थत्वगतिः[४] (।) अविसंवादेपि संवृतिसतामर्थत्वस्यासिद्धेः। कथन्तर्ह्यर्थत्वगतिः। परामर्शादिति मन्तव्यं।

अथवार्थशब्देनात्र परमार्थ उच्यते। अज्ञातार्थप्रकाश इति परमार्थप्रकाश इत्यर्थः। परमार्थश्चाद्वैतरूपता (।) तत्प्रकाशनमेव प्रमाणं। तथा च प्रत्ययादिस्वरूपस्य स्वतो गतिरिति। उक्तञ्च (।) 'प्रामाण्यं व्यवहारेणे' ति।

तत्र पारमार्थिकप्रमाणलक्षणमेतत् (।) पूर्वं तु सांव्यवहारिकस्य। यद्यज्ञातार्थप्रकाशकं प्रमाणं सामान्यार्थोप्यज्ञात एव प्रथमभाविना स्वलक्षणज्ञानेन तदुत्तरालभाविना प्रकाश्यते। तथा सम्बन्धादिरपीति तस्यापि प्रामाण्यं प्रसज्यते। न च गृहीतग्राहित्वात् स्मृतिरेवैषा। अगृहीते स्मरणाभावात्।

न स्वलक्षणविज्ञानं सामान्यं गृह्णदीष्यते। ग्रहणादगृहीतस्य प्राप्ता सामान्यवित्प्रमा ॥२२४॥

तदेवाह।

स्वरूपाधिगतेः परं ॥५॥

प्राप्तं सामान्यविज्ञानं;

प्रमाणमिति सम्बन्धार्थः। स्वसंवेदनेन च सामान्यं ज्ञानात्मभूतं प्रतीयत इत्यत्रा-

---

[१] T.  [२] T. अर्थाक्षिप्तस्या०

[३] T. वस्तुप्रभृते  [४] T नार्थगतिः

विवाद एव । ततो यदि परभूतं ज्ञानात् सामान्यमर्थाभूतं[१] (।) सर्व्वथा तज्ज्ञानं प्राप्तं। (न ।)[२] अत्रोच्यते (।)

**अविज्ञाते स्वलक्षणे ।**
**यज्ज्ञानमित्यभिप्रायात् स्वलक्षणविचारतः ॥६॥**

सत्यप्यगृहीतग्रहणे सा ज्ञानस्य न प्रमाणता । किङ्कारणम् (।) 'अविज्ञाते स्वलक्षणे' (।) यज्ज्ञानं तदेव प्रमाणमभिप्रेतं न सामान्येपि । अज्ञातसामान्यज्ञानं न प्रमाणम् (।) अपि त्वज्ञातस्वलक्षणज्ञानं । कुत एतत् (।) स्वलक्षणविचारतः । अस्ति नास्तीति वा व्यवस्थापनार्थं प्रमाणं प्रेक्षावतापेक्ष्यते । स चास्तिनास्तीति वा विचारः स्वलक्षणस्यैव न सामान्यस्य तत्र पुरुषाणामनादरात् । यत्र च विचारणा तत्र तदुत्तरकालं तत्स्वभावं वा प्रपद्यते प्रमाणमिति न सामान्ये वृत्तिः प्रमाणस्येति न तत्र प्रमाणं ।

अथ सामान्यानवबोधे कथं तदेदेदमिति ज्ञात्वा प्रवर्त्तते (।) न (।) सामान्यानवबोधेप्यत्यन्ताभ्यासात् प्रवर्त्तनात् । अथ तत्रापि सामान्यमेव प्रवर्त्तकं (।)अज्ञातस्य प्रवर्त्तकत्वाज्ञानात् । ज्ञानेपि तस्य यदि स्वलक्षणं न ज्ञायते न प्रवर्त्तते । स्वलक्षणज्ञाने तु सामान्यापरिच्छेदेप्यभ्यासात् । ततस्तत्राप्रवर्त्तकत्वात् दुन्मुखत्वाभावाच्च न सामान्ये ज्ञानं[३] प्रमाणं ।

भवतु वा प्रवर्त्तकत्वं । तथापि तदुन्मुखत्वाभावान्न तत्र प्रमाणं । स्वसंवेदनेन तु ग्रहणे स्वलक्षणमेव तदिति स्वलक्षणविषयमेव प्रमाणं । यदा तु पुनरद्वैतं तदा न सामान्यं(।) तत्र च स्वलक्षप्रतिपत्तेरूर्ध्वं अन्यद्वेति व्यपदेशः ।[४]

[५]'अवित्' । न विद्यते विदस्येति अवित् । क्व(।) ज्ञाते स्वलक्षणे तज्ज्ञानमिति । न खलु पूर्वोत्तरभावे प्रमाणं येन स्वलक्षणज्ञानादुत्तरकालमेतदिति विलक्षणता [६]वा प्रतीयते । स्वलक्षणमेवात्र सर्व्वत्र ज्ञाने प्रतीयते । न च भेद इति ।

किमर्थन्तर्हि प्रत्यक्षानुमानभेदो बाह्यविज्ञानभेदश्च **भगवता** निर्दिष्टः । संक्लेशव्यवदाने चेत्याह । 'अभिप्रायात्' अविसंवादाच्च । विनेयज्ञानाभिप्रायात् तमपेक्ष्य[७] स्वसंवेदनमेवैकं प्रत्यक्षं प्रमाणं नापरं । प्रपञ्चविनेयानुरोधात् । यथा यथा विनेयानां तत्त्वमार्गानुप्रवेशः सम्भवी तथा तथा **भगवतो** देशनेति न विरोधः । कुत एतत् 'स्वलक्षणविचारतः' । विचार्यमाणं हि सकलमेव विशीर्यते । नाद्वैतादपरन्तत्त्वमस्ति । तदेव क्रमेण भगवता विचार्यते । अक्रमेण विचारयितुमशक्यत्वात् ।

## (३) भगवतः प्रामाण्यम्

अथ बहिर्विपरिवर्तमानस्य कथं स्वसंवेदनता[८] नैतदस्ति ।

बहिरन्तरिति ज्ञानं देशकालाद्यपेक्षणात् । स्वरूपव्यतिरेकेण देशकालवसङ्गतो ॥२२५॥

एतच्च पश्चाद् दर्शयिष्यते ।

---

[१] T परभूतं सामान्यज्ञानादथ तदात्मभूतेपि युक्तं　　[२] T
[३] T. नाज्ञानं　　[४] T. सामान्यम् । स्वलक्षण० अन्यदिति न व्यपदेशः
[५] T. अधिकं—अभिप्रायेण यज्ज्ञानाविदो ज्ञाते स्वलक्षणे ।　　[६] T एतत्सदृशता
[७] T तादृशमपेक्ष्य　　[८] T अथ बहिः पक्षस्य कथं

**भगवतस्तर्हि कथं प्रामाण्यं (।) प्रत्यक्षानुमयोर्हि व्यवहारमात्रेण प्रामाण्यं। न भगवतः (।) तद्धि परं प्रमाणं।**

अत्रोच्यते।

**तद्वत् प्रमाणं भगवान्;**

तथागतो हि भगवान्। तद्वानिति कृत्वा प्रत्यक्षरूप एव भगवान् प्रमाणं पश्चात् प्रतिपादयिष्यते।

कुत एतत् प्रतीयते। तदाह।

**अभूतविनिवृत्तये।**
**भूतोक्तिः साधनापेक्षा ततो युक्ता प्रमाणता ॥७॥**

भ्रान्तिनिवृत्त्यर्थं। यतस्तस्य भगवतो 'भूतोक्ति'स्ततः स एव सर्व्वज्ञो नापरस्तथा च प्रमाणं। आह च। 'साधनापेक्षा ततो युक्ता प्रमाणता'। भगवत एव न वेदस्य। वेदस्य हि न किञ्चिदर्थसम्बन्धे प्रमाणं। अस्य तु भूतोक्तिरेव प्रमाणं प्रमाणविषये। अन्यत्र तु वक्ष्यामः।

अथवा परमार्थतस्तद्वदद्वैतावबोधादेव प्रमाणं भगवानपि न सर्व्वार्थपरिज्ञानतः। सर्व्वार्थपरिज्ञानन्तु लोकव्यवहारेण सांवृतमेव। तथा चोक्तं 'अद्वयं यानमुत्तमं'।[1]

## § ३. ईश्वरनिषेध-वार्त्तिकं तृतीयम्

### १ ईश्वरादेरप्रमाण्यम्

#### (१) नित्यानित्ययोरप्रमाणता

ननु यदि प्रत्यक्षानुमानयोरप्रमाणत्वात् सर्व्वज्ञ एव प्रमाणं तदा नित्य एवेश्वरादिको ज्ञाता प्रमाणं। वेदो वा नित्यः प्रमाणं (।) ततः किमन्यान्वेषणेनेत्याह।

**नित्यं प्रमाणं नैवास्ति प्रामाण्याद् वस्तुसङ्गतेः।**
**ज्ञेयानित्यतया तस्या अध्रौव्यात् क्रमजन्मनः ॥८॥**

नित्यादुत्पत्तिविश्लेषादपेक्षाया अयोगः। न खलु सदा स्थायि नित्यं प्रमाणमस्ति प्रमाणाभावात्। किञ्च (।) वस्तुसतो गतिः प्रमाणं न यस्य कस्य चित्। न च वस्तु सर्व्वदा विद्यते। येन गतेः सर्व्वदा भावः। ततो ज्ञेयानित्यतया तस्या अपि अध्रौव्यं।

ननु ज्ञेयानित्यतया ज्ञानमनित्यमिति कुतः। ज्ञेयरूपे व्यापारो वा प्रमाणत्वं ज्ञेयरूपादुत्पत्तिस्तत्स्वभावता वेति न पक्षान्तरसम्भवः। अत्र व्यापृतस्याव्यापृतस्य वा यदि न विशेषः कथं व्यापारेतरविवेकः।

अथ दर्पणस्थानीयं तद् यो य एवार्थः सन्निहितः स एव प्रतिभाती(ति) चेत्। अर्थ एव तर्हि स्वसामग्रीतस्तथा भवति न ज्ञातुर्व्यापारः।

---

[1] T अधिकं—प्रमाणवार्तिकालंकारे प्रमाणसिद्धिवार्त्तिकं द्वितीयम्

**अथ निश्चलोन्मिषितलोचनोपि समापततोर्थान् क्रमेण पश्यति (।) न कदाचिदपरापर-विलक्षणव्यापाररूपता परोपलक्ष्यते, तथा तस्यापि ।**

**अत्रोच्यते ।**

व्यापारश्चक्षुषस्तत्राप्यन्वयव्यतिरेकत. । नान्वयव्यतिरेकित्वं स्थाणोर्नित्यस्य विद्यते ॥२२६॥

**तस्मादर्थ एवायम्भूतो नास्य ग्रहणे व्यापारः कस्यचिदिति कथं प्रमाणं ।**

**अथ सोऽर्थो भवतु प्रमाण[1] स तु तत्सम्बन्धीति तेन ज्ञात उच्यते । नैतदुपपन्नं यतः ।**

सम्बन्धोन्वयपूर्व्वेण व्यतिरेकेण सिध्यति । नित्यस्याव्यतिरेकस्य कुतः सम्बन्धसम्भवः ॥२२७॥

**न खलु नित्यमव्यतिरेकं क्वचिदुपयोगीति शक्यं विज्ञातुं ।**

**अथ तेन दर्शनादुपयोगः । ननु तदेवेदं परिचोदितं कथन्तेनेति[2] । तस्मिन् सति तथाभूतमिति तेनेत्युच्यते आकाशादिष्वपि तदिति कथं स एव द्रष्टा । आकाशस्य तदर्थ-निर्देशाभावात् स एव द्रष्टा नाकाशादिः ।**

निर्देशो वचनं तस्मादेतदेव कुतो मतं । सर्व्वथा (ऽ) [3]व्यतिरेके च कारणत्वं न बध्यते ॥२२८॥
अतीतानागतो योर्थः स कथं प्रतिभासते । अतीतत्वेन विज्ञानमित्यतीतं कथम्भवेत् ॥२२९॥
न च दर्पणसंक्रान्तिरतीतादेः कथन्न च । प्रतिभासस्तथाभूतो दर्प्पणे सति सम्भवी ॥२३०॥
प्रतिभासो न नित्यस्य कार्यमित्युदितं पुरः[4] । आकाशादेरपि प्राप्तं तदर्थग्रहणन्न किं ॥२३१॥
सर्व्वार्थदर्शने तस्य वचसोऽर्थः क उच्यते । तदनन्तरभावित्वं नियतं चेन्न गम्यते ॥२३२॥
सर्व्वार्थदर्शनायातः शब्दः सर्व्वस्य वाचकः । विवक्षानियमो नाम न नित्यस्योपपत्तिमान् ॥२३३॥
विवक्षास्त.:[5] पृथग्भूता दर्शनानि तथा पृथक् । कनैकता भवद् द्रष्टुः प्रमाण स च व:कथ ॥२३४॥
विवक्षितस्य दृश्यस्य स एव ग्राहको यदि । विवक्षितनदन्यस्य कथमेकत उद्ग्रहः ॥२३५॥
प्रत्यक्षानुमयोरेवमेकना केन नोच्यते । परमार्थत एकत्वं तयोरपि मतं यदि ॥२३६॥
क्रमेण युगपद् वापि न भेदोस्ति तयोरपि । क्रमेणैवेकरूपत्व प्रमाणेन प्रतीयते ॥२३७॥
तेनान्येन च यद् वस्तु ज्ञात्रैकत्वे न मीयते । तदेकमिति किं सत्यमसत्यत्वे वृथा वचः ॥२३८॥
अथापि स स्वयं ज्ञा ा सर्व्वथात्मावगम्यते । केनैष गम्यतामेवमिति वाङ्मात्रमेव सः ॥२३९॥
न स्वसंवेदनादन्यदिति पूर्व्वं प्रसाधितं । ततो न परमार्थोसावीश्वरो नापि संवृतिः ॥२४०॥

**अथापि स्याद् (।) यद्यपि ज्ञानं ज्ञेयानित्यतया व नित्यं यस्तु ज्ञाता स नित्यः । न चान्यस्यानित्यत्वेन्यस्यापि तदिति युक्तमुच्यते । क्रमजन्मनो ज्ञानस्य ज्ञेयानित्यत्वेन (।)**

**नित्यादुत्पत्तिविश्लेषात् ;**

**नित्यादुत्पत्तेरयोगात् । नित्यं व्यापि चाकाशकल्पं न कस्यचित् कारणमिति प्रति-पादितं । तेनैव च स्वरूपेण यदि जनयति सर्व्वदा जनयेद् विशेषाभावात् (।) विशेषे चानित्यत्वं ।**

---

[1] T अथ स भवतु प्रमाणार्थः [2] T तदेवैदं परिचोदितं न वा कथं दृष्टमिति
[3] T [4] T पुरा [5] T विवक्षाऽस्तः

अथाविशेषेपि सहकारिभावाभ्यां कार्यस्य क्रम इति चेत्। (न।)[1] अपेक्षाया उपयोगात्। यदि सहकारिणामेवान्वयव्यतिरेकित्वं तेषामेव कारणत्वन्न तु तस्य। तस्यापि तदपेक्षया कारणत्वमिति न युक्तं। अपेक्षमाणस्य तदितरावस्थयोर्व्विशेषाभावात्। अपेक्षकत्वं न प्रतीयते स्वयमपरेण वेति वचनमात्राद् यदि परमेतत् प्रत्येयं। अत एवाह।

**अपेक्षाया अयोगतः।**

नित्यं हि सदैकरूपमपेक्ष्यमाणेनोपकर्त्तुं न शक्यं। न हि तत्रानुपकारिणस्तेनापेक्ष्यता। एवन्तर्हि अनित्यं भविष्यति प्रमाणं न तु दानादिसाधनापेक्षं (।) वैराग्यैश्व(र्य)[1] योगस्य पूर्व्वपूर्व्वसजातिकारणादुत्पत्तेर्न तत् कदाचिदन्यथाभूतं सदन्यथोत्पत्तिमत्।

अत्रोच्यते।

**कथञ्चिन्नोपकार्यत्वादनित्येप्यप्रमाणता ॥ (९)**

अनित्येपीश्वरे नास्ति प्रमाणता (।) न तत् प्रमाणं। कुत एतत्। 'कथञ्चिन्नोपकार्यत्वात्'। यो हि कथञ्चित् केनचिदुपक्रियते उपहन्यते वा (।) तस्य रागाद्यनुभवे रागादिप्रतिपक्षावबोधादिसम्भवे तद्देशना (।) सत्त्वस्नेहेन करुणया च देशनासम्भवात् प्रमाणत्वं भवति लोकस्य। न स्वरूपसत्तामात्रात्। न च तस्येयं व्युत्पत्तिः.। न ह्यखण्डितः[2] पण्डितो भवति।

अथ स्वभावासिद्धिन्तस्य सकलपरिज्ञानं। अयुक्तमेतत्। रागादीनाम(न)नुभवे कथं संसारप्रपंच[3]स्वलक्षणावबोधः। अनुभवे संसार्येवासाविति कथं प्रमाणता। न रागाद्यवबोधादेव रागादिप्रपंचप्रतिपक्षदेशना रागादियोग एव सर्व्वज्ञता अविनाशिताऽतुलशक्तियोगश्चेति स एव प्रमाणं।

तदप्ययुक्तं।

रागादिप्रतिपक्षस्य देशनाव्यर्थता भवेत्। रागादियोगेपि यदि भवेदैश्वर्यमच्युतं ॥२४१॥

अथ वस्तुवृत्तमेतन्न रागादियोगितामैश्वर्यसम्भवस्ततस्तत्प्रतिपक्षदेशनेति।

यद्येवं भावनाभावाद् वैराग्यादेरसम्भवः। आकस्मिकन्तस्य कुतस्तदैश्वर्यादि सिध्यतु ॥२४२॥

न हि यद्वैराग्यादिप्रतिपक्षभावनातो भवतीति ज्ञायते तदन्यथापि भवतीति ज्ञायते।

किंच।

वरप्रदानशक्तिः सा विद्यते तस्य नेदृशी। येनानुष्ठानरहितो ददात्यैश्वर्यमर्थिनि ॥२४३॥
अथ नास्त्येव सा शक्तिस्तस्यान्यापि कथम्भवेत्। अनुग्रहीतुं शक्तेति प्राप्ता तत्राप्रमाणता ॥२४४॥

अयमप्यर्थः (।) अनित्येप्यप्रमाणता न विद्यते प्रमाणमस्मिन्नित्यप्रमाणन्तस्य भावोऽप्रमाणता। न तत्र प्रमाणमस्तीति यावत्।

अथाराधनक्रमेण रागाद्युपशमप्रकारेणानुग्रहकार्यसौ धर्म्मोपदेशेनानुग्रहस्यान्यथा कर्त्तुमशक्यत्वात् (।)

तदसत् यतः।

तदुक्तानुष्ठितो लोकानुग्रहः केन गम्यते। तदुक्तागममात्रा (च्चे)देवमन्योन्यसंश्रयः ॥२४५॥

---

[1] T   [2] T नह्यदुःखितः   [3] T संसारमूलप्रपञ्च०

आगमोसौ तदुक्तत्वादागमाच्च तदुक्तता । अन्योन्याश्रयतस्तत्र कथमेकतरस्थितिः ॥२४६॥

किंच ।

ईदृशी (तस्य)[1] सा शक्तिः कारणात् कुत आगता ।
स्वभाव एप तस्येति कुत एतत् प्रतीयतां ॥२४७॥

नन्वीदृशी तस्य (शक्ति)[1] सर्वदर्शनानुग्राहकरूपा कुतः कारणादागता । अत्र वस्तुस्वभावैरुत्तरं वाच्यं यत एवं भवन्तीति चेत् । तथा हि ।

इदमेवं न चेत्येतत् कस्य पर्यनुयोज्यतां । अग्निर्दहति नाकाश कोत्र पर्यनुयोज्यतां ॥२४८॥

तवतवसवत्यन्त ।

स्वभावेध्यक्षतः सिद्धे परैः पर्यनुयुज्यते । तत्रोत्तरमिदं वाच्य न दृष्टेनुपपन्नता ॥२४९॥

न त्वदृश्ये (।) तथा हि । अत्र वस्तु स्वभावैरुत्तरं वाच्यमिति कोऽर्थः प्रत्यक्षादिप्रमाणसिद्धमेतत् । कथमेतदिति न पर्यनुयोगस्य विषयः । यथा प्रत्यक्षेणोपलब्धो वह्निर्दाह्यं दहन् न पर्यनुयोज्यते कथन्दहतीति । यदि भूतत्वेन व्योमापि दहेत् । अथ स्वभावात् प्रतिनियतात् तदेश्वरोपि सकलगुणहेतुविकलो गुणवानिति समानं । न समानं (।) दृष्टत्वादग्नेरपरस्य च विपर्ययादिति नेदमुत्तरं । अन्यथा यत्किंकिंचदात्माभिमतविधाव(न्य)[1] निरुत्तरस्तत्र कृतं (? तः तदुत्तरं वस्तुस्वभा)[1]वैरिह वाच्यम् (।) इत्थं तथोत्तरं स्याद् विजयी समस्तः । तस्मादनित्येपि(।) अपिशब्दान्नित्येप्यप्रमाणतेति सूक्तं ।

## (२) ईश्वरदूषणम्

नन्वस्ति[2] प्रमाणं ।

स्थित्वा प्रवृत्ति संस्थानविशेषार्थक्रियादयः। कार्यात्मानः कथं कार्यात् कारणस्याप्रसिद्धता ॥२५०॥

अन्यथान्यस्यापि करणस्यानुमानं न स्यात् । तथा हि । यद् वस्तु स्थित्वा स्थित्वा प्रवर्त्ततेऽभिमतसाधनाय तद् बुद्धिमत्कारणाधिष्ठानाद् (।) यथा वास्यादि द्वैधीकरणादौ (।) न खलु वास्यादयः स्वयमेव प्रवर्त्तन्ते । प्रवर्त्तने वा सदा प्रवर्त्तनं भवेत् । स्थित्वा च प्रवर्त्तनम(भिमतं) प्रेक्षावता केनचित् प्रवर्त्तकेन भवितव्यं । यथायत्नं (सं)स्थानविशेषपारिमाण्डल्याद्वियोगि तच्चेतनावदुत्पादितं तद् यथा घटादिकं । तथा यदर्थक्रियाकारि तच्चेतनावत्पदार्थप्रेरितं, तद् यथा घटादयः । अत्राह ।

**स्थित्वा प्रवृत्तिसंस्थानविशेषार्थक्रियादिषु ।**
**इष्टसिद्धिरसिद्धिर्वा दृष्टान्ते संशयोथवा ॥ (१०)**

य एते कार्यहेतुत्वेनाभिमताः स्थित्वा प्रवृत्त्यादयो नैते सम्यग्घेतवः । यत एषु सत्स्वपीष्टस्यैव सिद्धिः सिद्धसाधनं । न च सिद्धः पक्षो भवतीति ।[3] असिद्धस्य पक्षत्वात् यत्र हि विवादस्तत्साधनाय साधनोपन्यासो युक्तः । कर्म्मलक्षणचेतनाधिष्ठितं च सकलमिष्यते । यतः (।)

---

[1] T.  [2] T. ननु नास्ति  [3] T. त्यक्तं—न च० भवतीति

**'कर्म्मजं लोकवैचित्र्यं चेतना मानसं च तत् ।'[1]**

**ननु कर्म्मजमेवेति न साध्यते (।) कर्म्मव्यतिरिक्तेश्वरचेतनाधिष्ठितत्वस्य[2] साधनात् । तथा चाह । 'तच्चेश्वरचोदनाभिव्यक्ताद् धर्म्मादेव' ।[3] न चेश्वरचोदनाधिष्ठित[4]कर्म्मपूर्व-कत्वसाधने सिद्धसाधनं ।**

**नैतदस्ति । कर्म्म चेच्चेतनारूपमस्ति[5] तदा परचेतनासाधनं व्यर्थं । तत् किलाचेतनं तत् प्रवर्त्तितुमशक्तं । इदन्तदिति निरूप्य प्रवृत्तिदर्शनात् । ततः स्वयं वा निरूप्य प्रवर्त्ति-तव्यं निरूपकप्रेरणया गत्यन्तराभावात् । तत्राचेतनानां स्वयं निरूपणाभावात् । परनि-रूपणमपि यदि न स्यादप्रवर्त्तनमेव प्रसक्तं । तस्मात्[1] प्रेरकेन चेतनावतान्येन भवितव्य-मित्यभिप्रायः । तत्र (।)**

चेतना कर्म्मरूपैव प्रवृत्तेर्यदि कारणं । निरूपणेपि न परं तन्निरूपणमिष्यते ॥२५१॥

**तथा चासिद्धो दृष्टान्तः ।**

चेतनावत्कृतत्वेपि नेश्वरेण घटादयः । कृताः प्रयोजनाभावादन्यथेशोपि सेश्वरः ॥२५२॥

**स्वस्यामर्थक्रियायामित्यनवस्था (प्रवर्त्तते)[6]**

अथ प्रवर्त्तते सोपि कुलालादिः प्रवर्त्तितः (।) अज्ञानादीश्वरस्तज्ज्ञो न सोन्येन प्रवर्त्तितः ॥२५३॥
अज्ञो जन्तुरनीशोयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥२५४॥

**अज्ञो हि चेतनावानपि निरूपणासमर्थः । स घटादिवदपरेण निरूपणासमर्थत्वादपरेण प्रेर्यते नेश्वरस्तस्य निरूपणासमर्थत्वादिति नानवस्था ।**

**तदप्यसत् ।**

कर्त्तृत्वसिद्धौ सर्व्वज्ञत्वसिद्धिः पुनस्ततः[7](।) कर्त्तृत्वमित्यवस्थायामत्रान्योन्याश्रयो महान् ॥२५५॥

**यदि हि सर्व्वस्य कर्त्तासाविति प्रसिध्यति परमेश्वरस्तदास्य स्यात् सर्व्वज्ञता नान्यथा । सर्व्वज्ञतायाञ्च प्रेरकत्वमन्यथा तस्याप्यपरः प्रेरक इति सैवानवस्था ।**

**किञ्च । यद्यसौ सर्व्वज्ञः किमज्ञं जनमसद्व्यवहारे[8] प्रवर्त्तयति । विवेकवन्तो हि सदुपदेशदायिनो दृष्टाः । स तु विपर्ययप्रवृत्तमपि जनं जनयति । तत् कथं प्रमाणं ।**

**अथोपदेशमसौ सन्तमेव करोति तेन प्रमाणम् (।) अधर्म्मकारिणन्तु फलमसदनु-भावयति । तत उचितफलदायी[9] विवेकवानेव ।**

**तदप्यसत् । यस्मात् ।**

अधर्म्मकरणेप्येष वर्त्तयत्येव जन्मिनः । अयुक्तं कारयित्वासौ कथं युक्ते प्रवर्त्तयेत् ॥२५६॥

**प्रथमन्तावत् पाप एव प्रवर्त्तयति (।) ततस्तद्व्यावर्त्तनाय धर्म्म इति केयं प्रेक्षापूर्व कारितेश्वरस्य । तदिदमायातं प्रक्षाल्यपरित्यक्ष्यामीति ।**

---

[1] T. अभिधर्मकोशे ४।१। [2] T. कर्मव्यतिरिक्तचेतनेश्वर० [3] T. ०भिव्यक्ताद् कर्मादेव
[4] T. चेश्वरचेतना० [5] T. चेच्चेतनारूपं स्वतोऽस्ति [6] T. [7] ०सिद्धिरनवस्थितिः
[8] T. जनं सद्व्यवहारे–इति प्रमादपाठः [9] T. ततः प्रमाणफलदायी–इति प्रमादपाठः

**अथ पापे प्रवर्त्तयति तत्कर्म्माधिष्ठित एवासौ तथा सति प्रेक्षाक्रियाहानिः। तदपि कर्म्म कस्मात् कारयतीति समानः प्रसंगः।**

**अथाधर्म्ममसौ न कारयति। अधर्म्मकारिणन्तु तत्फलमनुभावयति। तदन्येश्वरवत्।**

**तदप्यसारं।**

अशक्त्यान्येश्वराः पापप्रतिषेधं न कुर्व्वते। स त्वत्यन्तमशक्तेभ्यो व्यावृत्तमतिरिष्यते ॥२५७॥

**अथाशक्त एवासौ तथा सति (।)**

नेश्वरेण कृतं सर्व्वमिति वक्तव्यमुच्चकैः। पापवत् स्वार्थकारित्वाद्धर्म्मादिरपि किन्ततः ॥२५८॥

**किञ्च।**

अधर्म्मस्य फलं भुंक्ते लोकः किं नेश्वराद् विना।

विनापि यदि कस्तस्य कारणत्वं प्रकल्पयेत् ॥२५९॥

अथ तस्माद् विनाऽधर्म्मफलं भुंक्ते न कश्चन। प्रेक्षावान् कथमेतस्मिन् प्रवर्त्तेत निरर्थके ॥२६०॥

क्रीडार्था तस्य वृत्तिश्चेत् प्रेक्षापूर्वक्रिया कुतः। एकस्य क्षणिका तृप्तिरन्यः प्राणैर्वियुज्यते ॥२६१॥

**किञ्च।**

शास्त्रान्तराणि सर्व्वाणि यदीश्वरविकल्पतः। सत्यासत्योपदेशस्य प्रमाणं दानतः कथं ॥२६२॥

**सकलशास्त्रलक्षणपरस्परविरोधबाधितसत्यासत्योपदाना(? देशा)[1]दसौ प्रमाणमिति महदद्भुतं प्रामाणिकत्वञ्च।**

**अथ न सकलशास्त्रार्थक्रिया तदा शास्त्रान्तरवदेव नेश्वरेण सर्व्वं व्यधायि।**

**अथ धर्माधर्म्मप्रेरितोसौ सकलमेव करोति नान्यथा पदार्थसम्भवः। तथा सति सर्व्व एवात्मा प्राकृतजनानां धर्म्माधर्म्मादि[2]प्रेरणादेव करिष्यतीति व्यर्थमीश्वरकल्पनं।**

सर्व्वस्य[3]कर्त्ता नात्मा चेत् सर्व्वस्येति यदीष्यते।

तस्य सर्व्वस्य कर्त्तृत्वं क्वोपयोगं प्रयास्यति ॥२६३॥

सर्व्वैरेवात्मभिः सर्व्वकरणे किं प्रहीयते। तथा बहुभिरेकस्य बहूनां चैकतः क्रिया ॥२६४॥

अथैक एव सर्व्वस्य कारकः कश्चिदिष्यते। सर्व्वज्ञतान्यथा न स्यादिति नान्यस्य कर्त्तृता ॥२६५॥

प्रधानभूतः कर्त्तासौ वरप्राप्ति. ततोर्थिनां। न हि सर्व्वज्ञतामात्रादस(? श)[4]क्तः सेव्यते परैः ॥२६६

**तदप्यसत्।**

अर्थानर्थक्रियाशक्तो गुडगोरसकारकः[5]। सर्व्वज्ञोपि न सेव्यत्वं प्रयात्यनुपकारतः ॥२६७॥

सर्व्वज्ञत्वे प्रसिद्धे च शक्तत्वे सर्वकारकः। सर्व्वकारकतायाश्च तस्य सर्व्वज्ञता पुनः ॥२६८॥

असर्व्वज्ञस्य कर्त्तृत्वे दर्शने सर्व्ववित् कथं। तस्माद् दृष्टान्ततः सिध्येत् तथा चेत् प्रेक्षताक्षतिः ॥२६९॥

न चाज्ञता[6] कुलालादेः स्वकार्य्येस्ति वृथेश्वरः। कर्म्मसामर्थ्यसिद्धौ च नोपयोगः कथं क्रिया ॥२७०॥

जानानोपि कुलालादिः प्रेर्यमाणो यदि क्षमः[7]। ईश्वरोपि तथान्येन प्रेर्यः स्यादविशेषतः ॥२७१॥

---

[1] T.  [2] T. धर्म्मादि  [3] T. सर्वः

[4] T.  [5] T. लोहित(?)गुडकारकः; गुडगोमयकारक—इत्यपेक्ष्यते।

[6] T. विज्ञता च  [7] T. यदीष्यते।

अथ सर्व्वज्ञतासिद्धिमात्मनोभिलषन्नसौ[1] । सर्व्वस्य प्रेरको जातस्तदेतत् केन गम्यतां ॥२७२॥

**किञ्च ।**

स्वयं निरूप्य यः कर्त्ता तत्राकारक ईश्वरः । ईश्वरादेव सर्व्वस्य बुद्धिरित्यप्रमाणकं ॥२७३॥
हेतुत्वमुपदेशादेरुपदेष्टुस्तदन्यतः । उपदेश इत्यनादित्वात् समाप्तं सर्व्वमीहितं ॥२७४॥
तस्मात् स्थित्वा[2]प्रवृत्तानामीश्वरप्रेरणं कुतः । प्रधानपुरुषादीनान्नात कर्त्तृत्वनिश्चयः ॥२७५॥

**संस्थानसङ्गतत्वादिति[3] चायमप्यहेतुः । न हि संस्थानं सकलमेव पुरुषपूर्व्वकं दृष्टं (।) बीजादिकारणविशेषमात्रेणापि तस्य दृष्टेः । वृक्षादिसंस्थानवत् । तत्र यथा (।)**

वृक्षादीनां हि संस्थानमचिद्धेतुसमन्वयि । तथा घटादि तद्वत् स्यात् प्रधानाद्यप्रवर्त्तितं ॥२७६॥
यथा हि बीजमुत्पन्नं वृक्षतो वृक्षकारणं । तथा घटोपि मृत्पिण्डाद् घटादेरप्रवर्त्तितात् ॥२७७॥
कुलालादिः पुनस्तस्य साक्षी सततमिष्यते । शरीरवर्णसंस्थानमन्यतस्तादृगुद्भवात् ॥२७८॥

**न कुलालादिस्तस्य संस्थानादेर्जनकः । न खलु बीजविजातीयं संस्थानमुत्पादयितुं वृक्षस्य सुशिक्षितोपि चेतनावान् समर्थः ।**

**ननु(न)[4]मृत्पिण्डस्य संस्थानं कुलाल उत्पादयन्नुपलभ्यते । न (।) मृत्पिण्डस्यापि तादृशत्वात् । तादृग्वर्ण्णसंस्थान(रूप)[4] एव मृत्पिण्डः । यथा वटबीजं वटवृक्षवर्ण्ण-संस्थानवत् । तदपि कथमिति चेत् । अत्रोच्यते ।**

वर्ण्णसंस्थानरूपत्वं बीजे यदि न शक्तितः । कार्ये कुतस्तदायातं बीजहेतोरभावतः ॥२७९॥
ईश्वरस्तस्य कर्त्ता चेद् बीजात् किन्न तदन्यतः । इति पूर्व्वं प्रतिक्षिप्तं हेतुस्तस्येश्वरः कथं ॥२८०॥

**बीजकारणं हि वृक्षस्तदानीं बीजकालकार्ये[5] नास्ति । ततो न तस्य संस्थाकारणत्वं । नापीश्वरस्य । विजातीयवृक्षकारणबीजादसंभावादीश्वरस्य तत्कारणत्वे किमिति न विजातीय-बीजादपि तद् वृक्षसंस्थानं । तस्माच्छक्तिरूपेण विद्यमानमेव वृक्षबीजे वृक्षसंस्थानमाविर्भवति । यथान्धकारव्यवस्थितो बालदारकः[6] प्रदीपात् । तथा मृत्पिण्डादपि संस्थानमाविर्भवति कुलालात् । कुलालस्यापि घटादिविधाने संस्थानं शक्तिरूपेण संस्थितं संस्थानादेव । ततः कुलालादिः पुरुषः साक्षिभूत एवोपभोक्ता । न तस्य व्यापारः कश्चित् । तदपुभोगेच्छया तथा तथा शक्तिरूपस्य प्रधानस्य प्रवृत्तेः । तथा चाह ।**

पुरुषोपभोगसिध्यर्थं प्रधानस्य प्रवर्त्तनं । सामाजिकार्थसिद्धचर्थं नटरङ्गक्रिया यथा ॥२८१॥

**ततश्च बुद्धिमत्कारणविपर्ययस्य प्रसिद्धिः । अथ प्रतिपुरुषमात्मनां भेदावपरेण रागादिरहितेनात्मना सर्व्वेषामीश्वरेण भवितव्यं । अन्यथा प्रतिनियतवर्ण्णसंस्थानादयः संसारि-पुरुषाणां केनोपदर्शिताः । यत्रोपभोगेच्छया प्रधानस्य प्रवृत्तिः । उक्तमत्र ।**

**यथा सामाजिकानामनाद्युपदेशदर्शनाद् दिदृक्षा विनिवृत्यर्थं नटस्य नाटकप्रयोगः तथा संसारिपुरुषाणमपि ।**

क्षीरस्य कथमज्ञात्वा वत्सवृद्धचै[7] प्रवर्त्तनं । तथेदमपि किं नेष्टं प्रधानस्य प्रवर्त्तनं ॥२८२॥

---

[1] T. त्मनोभिवदन्नसौ [2] T. त्यक्तः—स्थित्वा [3] T. संस्थानविशिष्टत्वाद् ।
[4] T. [5] T. बीजकार्यकाले [6] T. बालकन्ये [7] T. वत्सोत्पत्त्यै

**तस्मात् पर्यवसाने सुखाद्यर्थितरूपतावर्शनात् सुखादिरूपेण सकलस्य कारणेन भवितव्यं। तावता परिसमाप्तमिति नेश्वरसिद्धिः। (अ)[१]युक्तञ्चैतत्।**

अप्रेक्षापूर्वकत्वस्य पदार्थेषूपलब्धितः[२]। अचेतनत्वन्तद्धेतोरिति युक्तिविदां नयः ॥२८३॥
अप्रेक्षावत्पदार्थानां कारणं न न युक्तिमत्। छागादीनां पुरीषादेर्वर्त्तुलीकरणेन किं ॥२८४॥

## २—प्रधानकारणतानिरासः—

**प्रधानमेव तर्हि कारणं भविष्यतीति सांख्याः :**

**अत्रेदमुच्यते।**

अन्वयश्चेत् सुखादीनां वस्तुत्वाच्चेतनत्वतः। पुरुषाणां ततस्तत्त्वं कारणं न किमिष्यते ॥२८५॥
ननु वर्णादि संस्थानं प्रधानस्यास्ति भाविकं। वर्णादि[४]कार्यकरणं प्रधानस्य मतं कथं ॥२८६॥
अथापि शक्तिरूपेण सर्व्वमत्रोपगम्यते। सर्व्वशक्तचात्मकं वस्तु प्रधानमिति कथ्यते ॥२८७॥
[५]तस्यादृष्टस्य तादृक् च कारणत्वानुमानवत्[६]। कार्यं हि कार्यान्तरतः कार्यत्वादन्यकार्यवत् ॥२८८॥

**न खलु कारणमकारणमुपलभ्यते। तत उपलब्धरूपानुसरणेनैव कारणकल्पना।**

**अथ भेदानामन्वयादन्वयिना केनचित् तद्रूपेण कारणेन भवितव्यं। कारणस्य तु न केनचिदन्वय इति कथमन्वयस्यापरं कारणं। घटशरावादीनां हि भेवे मृद्रूपान्वयादेक-मृत्पिण्डपूर्व्वकता। न तु मृत्पिण्डस्यापरमृत्पिण्डपूर्व्वकतैकत्वान्मृत्पिण्डस्य। मृत्पिण्डदण्डा-दीनामप्यपरमेकं यावदेकमेवान्ते(न्वयि)[७]।**

**तदप्यसत्। उक्तं[८] सत्त्वादीनां पुरुषाणाञ्चापरं कारणं प्राप्तं (।) भवतु तर्ह्येकमेव किमपि कारणं (।)**

**तदप्यसत्।**

त्रिगुणादिरूपता तस्य प्रधानस्य न सिध्यति। वस्तुत्वेनान्वयाद् वस्तु कारणं किमपीक्ष्यतां ॥२८९॥

**वस्तु वस्त्वित्यन्वयात् कार्याणां वस्तुरूपता कारणस्य। न च मृदादिरूपादपरा वस्तुरूपता। ततोमृदादिरूपतैव कारणस्य प्राप्ता। तथा सति सर्व्वात्मकं प्रधानमिति प्राप्तं।**

**नैतदस्ति।**

कारणानुगतं कार्यं स्वरूपेण न सर्व्वथा। अन्यथाभूतवह्न्यादेर्धूमादिर्दृश्यतेन्यथा ॥२९०॥

**कारणं हि तत् तस्य यद्यदन्वयव्यतिरेकावनुवर्त्तते न तु तद्रूपं। तथा च वह्नेर्धूमो मेघादिभ्यो जलमिति[९]। तत्र नास्ति सरूपतेति न कार्यकारणभावः स्यात्।**

**अथ तत्राप्यस्ति सरूपं किमपि कारणं तथाभूतकार्यत्वादेवानुमीयतां। अनुमीयतां यदि सारूप्येण कार्यकारणभावस्य प्रतिबन्धोस्ति। न चास्ति व्याप्तेरभावात्। येन व्यभिचारस्तस्यापि पक्षीकरणमिति चेत् (।) एवन्तर्हि न किञ्चिदनैकान्तिकं नाम स्यात्। येन येन व्यभिचारस्तमेव पक्षीकुर्यादिति। तस्मादनवस्थाप्रसङ्गादसदेतत्।**

---

[१] T. [२] T. पदार्थेनुपलब्धितः [३] T. इह बम्-पो बृशि.-पा प्रारभ्यते।
[४] T. वर्णाद्य० [५] T. अधिक :—अन्यथा [६] T. कारणत्वानुमानवत्
[७] T. [८] T. त्यक्त :—उक्त [९] T. जलादि

## ३. न कर्मकारणता

**अथाप्युच्यते[1] (।)**

कर्म्मणां परिणामोयमिति सिद्धमिदं कुतः । अन्वयव्यतिरेकित्वं कर्म्मणोपि न विद्यते[2] ॥२९१॥

**न खलु कर्म्मापि शुभाशुभादिकमस्य जगतो वैचित्र्यस्य कारणमिति ज्ञायते । आस्तान्तावदेतदित्यन्यदुच्यते । यदुक्तं रागादिमानपि सकलशक्तियुक्तो भविष्यति । ततः क्रीडाद्यर्थं जगद्वैचित्र्यकरणं ।**

**तत्रोच्यते ।**

अज्ञानां रागिणां क्रीडारसः शुद्धात्मनां नहि ।
किंचिन्मात्रविशुद्धयापि नार्यः क्रीडासु वर्त्तते ॥२९२॥
नरकादिभयादन्यो नार्यः क्रीडासु वर्त्तते । तस्य त्वेतद् भयं नास्ति कस्मात् ताभ्यो निवर्त्तते ॥२९३॥
रागादिभ्यो यदा दुःखं नरकादिषु वर्त्तते । तस्य तन्नास्ति केनेदं भवतः सुहृदोच्यते ॥२९४॥
भावनातः समुद्भूता वासीचन्दनकल्पना । नरकादिभयं दुःखन्न[3] बाधत इति स्थितिः ॥२९५॥
एवमेव तदुद्भूतमिति युक्तमिदन्न च । स्वाभाविकत्वे तत्तस्य जगत् स्वाभाविकं भवेत् ॥२९६॥
तस्यैवैकस्य तदिदं व्यक्तमीश्वर[4]चेष्टितं ।

**किंच ।**

ईश्वरादीश्वरत्वस्य प्राप्तिस्तस्यापि सान्यतः ।
तदन्यस्यापि सान्यस्मान्न स्वाभाविक ईश्वरः ॥२९७॥
उत्कर्षोस्ति गुणानां चेत् शक्रब्रह्मत्वसम्भवे । ईश्वरत्वमपि प्राप्तं नास्ति नित्येश्वरस्थितिः ॥२९८॥
अथैतदपि नास्त्येव संसारी नेश्वरस्ततः । अत्र यस्य प्रतिक्षेपस्तस्यान्यत्रापि का क्षमा ॥२९९॥

**यो हि ग्राममेव मुष्णाति साधुजनसमवाये तस्यारण्ये त्राणासम्भविनि का क्षमा । तथा यस्तारतम्यसम्भविन्यामवस्थायां तदनुगमने प्रकर्षसम्भवं प्रत्याचक्षीत । तस्य निरनुगमे वस्तुनि न प्रतिक्षेप इति क एवं प्रत्येति । तस्मात् ।**

संस्थानसङ्क्रमाद् भावाः कृता कर्त्रेति सिध्यति । अहेतुगुणयुक्तस्य कुत एव तु सिद्धता ॥३००॥

## ४. न परमाण्वादिकारणता

**गुणतारतम्यदर्शनाद(भि)[5]योगविशेषात् सामर्थ्यसम्भवः प्रागसमर्थानामपि पक्षादिति[6] युक्तमेतत् । अत्यन्तविलक्षणस्य तु स्वभावसिद्धसामर्थ्यात्मनोनुगमरहितस्य साधनासम्भव एव ।**

**किंच ।**

संस्थानं हि नामेदं वस्तुवृत्तेन सिद्धिमत् । भ्रान्तिमात्रस्य सद्भावात् परमाणव एव ते ॥३०१॥

**न खलु परमाणुभ्यो व्यतिरिच्यमानशरीरं[7] द्रव्याश्रितमस्ति । परमाणव एव केवलास्ततो वैधर्म्येण परमाणव इति कथमुच्यते ।**

---

[1] T. अथापि　[2] T. दृश्यते　[3] T. नरकादिदुःखन्न　[4] T. र्ग्यल-पो=राजा
[5] T.　[6] T. त्यक्तं—पक्षादिति　[7] T. त्यक्तं—शरीर

**अथ लोकप्रतीतिमात्रव्यवस्थापितं तदुपादीयते। तदप्ययुक्तं। कल्पनारचितमात्रस्यासाधनत्वात्। अथ परमाणव एव तेन रूपेणोच्यन्ते(।)तथा सति परमाणवोपि कार्या एव(।) ततः कार्यत्वादेवेत्ययमेव हेतुरुपन्यासार्हः। अथ तत्राभूत[१]भ्रान्तिजनकाः परमाणव एव तथोच्यन्ते। एवन्तर्हि (।)**

परमाणवः स्वरूपेणाव(?)भासन्ते यदि भावतः। ईश्वरस्य कथं बुद्धिः संस्थानकरणं मम ॥३०२॥
निरूप्य करणन्तस्य यदि नास्तीति भण्यते। सर्व्वज्ञता कथन्तस्य निरूप्य करणे सति ॥३०३॥
परोपगमनेनाथ संस्थानस्य निरूपणं। स्वयमप्रतिपन्नस्य परोपगमनं कुतः ॥३०४॥
अथावयविसद्भावादिदमुत्तरमुच्यते। निरूपयिष्यते पश्चादेतदत्यन्तदुर्घटं ॥३०५॥

**अथवा दृष्टान्ते संशयः। तेनैवेश्वरेण संशयोऽनैकान्तिकता संस्थानस्य(ा)[२]सिद्धत्वात्। स्वरूपमेवार्थक्रियाकारिहेतुत्वेनोपादीयते। तच्च तथा स्वरूपमीश्वरस्यापीति तेनैव(ा)[२]नैकान्तः। न हि स ईश्वरः स्थित्वा स्थित्वा प्रवर्त्तते अर्थक्रियाकारी वान्येन प्रेर्यमाणः। अथासौ स्वयमेव शक्तस्ततः परेण न प्रेर्यते। कुलालादयोपि यत्र शक्ताः परेण प्रेर्यन्त इत्ययुक्तमेव। तेऽसमर्था एवेति चेत्। दृष्टस्य समर्थत्वेन कथमसामर्थ्यं (।) तस्यापि तर्हि दृष्टस्यानुमानेन समर्थतास्ति। अनुमानेनापरानुमाने न कुलालस्य सामर्थ्यं केवलस्येति चेदीश्वरस्य अपरेश्वरानुमानमित्यनवस्था।**

**किंच।**

संस्थानं परमाणूनां नास्तीत्येतत् कुतो मतं। तत्त्वादेवेति चेदेतत् कुतस्तत्त्वं प्रतीयतां ॥३०६॥

**नहि परमाणूनां परमाणुत्वमेवंविधमवगतं येन संस्थानाभावः।**

**अथैवमुच्यते। यत् स्थूलं तदवयवोपचयपूर्व्वकं यथानेकविन्दुसमाहाररूपो जलसंघातः[3]। द्व्यणुकपर्यन्तं च स्थूलन्ततोनेकसंघातरूपमिति परमाणुसिद्धिः।**

**तदप्यसत्।**

अष्टाणुकात् परं रूपमस्तीति कुतो गतिः।[४] एतदष्टाणुकं रूपमन्यथा त्वनि का प्रमा ॥३०७॥
दृष्टत्वे परमाणूनां तत्सख्या स्याद् विनिश्चिता। अथ स्थूलं तदत्यन्तं तेन तद् द्व्यणुकं न हि ॥३०८॥
द्व्यणुकादि यदा(ऽ)[५] दृष्टं किमपेक्ष्यास्य पीनता अनुमीयमानापेक्षा चेदनवस्था प्रसज्यते ॥३०९॥
अनुमीयमानसापेक्षा सर्व्वस्य स्थूलता भवेत्। अथापि दृश्यं यद् रूपं पर्यन्तेणुरसौ मत. ॥३१०॥
वर्त्तुलत्वादिसंस्थानं तस्य किं नोपलभ्यते। परमाणुर्न सिद्धश्चेत् कुतोऽवयविसम्भवः ॥३११॥
सिद्धिश्चेद् परमाणूना कुतोवयविसम्भवः। एकदेशेन संसर्गः परमाणुरसौ कथं ॥३१२॥
एकदेशेन संसर्गे सर्व्वस्यैवोपलभ्यते। ततः संसर्गसद्भावात् नाणुः स्थूलपदार्थवत् ॥३१३॥

**अथापि स्यात्(।) द्वयोः परमाण्वोः संयोग उपजायते पदार्थान्तरं न तु संस्पर्शः सर्व्वात्मनैकदेशेन वा।**

**तदप्यसत्।**

असंसर्गेपि संयोगो यदि कुतः[६] स एव सः। कथमेकघनाकाराः परमाणुषु संविदः ॥३१४॥

---

[१] T. ०तथाभूत [२] T. [3] T. सागरः [४] T. अधिकं—यद्यनुमानतोस्तीति तदन्यस्य कुतो गतिः [५] T. [६] T. स कुत एव स—इति युक्तः पाठोन्यथा छन्दाभङ्गः

अथान्योवयवी[१] तत्र तत्रैकाकारता धियां। नित्यत्वात् परमाणूनां सान्तराणां दृशिर्भवेत् ॥३१५॥
यदि नामास्मदादीनामदृश्याः परमाणवः। ईश्वरस्याक्षदृश्यत्वन्तेषां नैव(हि) सम्भवि ॥३१६॥
अथद्वयमसौ पश्येत् समवायः कथम्भवेत्। भ्रान्ततैव जनस्य स्यात् तथा सत्यन्यथेक्षणात् ॥३१७॥

**अवयवसंयोगपूर्व्वकञ्च स्थूलमिति कुत एतत्। यदि नाम मृत्पिण्डादावुपलब्धमङ्कुरादौ तु नोपलभ्यत एव। तथा हि[२]।**

वटस्य बीजमत्यल्पं तत्कार्यमतिपीवर। तत्रावयवसंयोगः प्रागभावे कथं भवेत् ॥३१८॥

**विद्यमानानामेवावयवानां संयोग इति समयः। न च स्थूलरूपकाण्डादेः प्राक् तदवयवानामुपलम्भस्ततः कथं संयोगः। कुतश्चावयवीति सकलमन्धकारनर्त्तनं।**

**अथाकाशदेशव्यापितः परमाणवो दृष्टसहाया सञ्चीयन्ते।**

**तदयुक्तं।**

सञ्चीयन्ते स्थिताः सन्तः किमपूर्व्वोदयस्ततः। कारणादिति सर्व्वेषामत्र संदेह एव नः ॥३१९॥
अथादृष्टोपि दृष्टान्तादस्तीत्येव प्रतीयते। प्रदीपदृष्टान्तबलात् सांख्यदर्शनमागतं ॥३२०॥
तत एवेश्वरः कर्त्तेत्येतद् दूरतरं गतं। व्यञ्जकश्च प्रदीपादिरचेतनतया गतः ॥३२१॥
अचेतनाद् व्यक्तिरिति कथमीश्वरसाधनं। चेतनाधिष्ठितः सोपीत्यत्र प्राक्कृतमुत्तरं ॥३२२॥
तस्माद् यतो यतो यद् यत् तत्तदस्तु ततस्ततः। किञ्चिच्चेतनतः किञ्चिदन्यतश्चेति निश्चयः ॥३२३॥
पीतमप्यन्यथा शुक्लं वस्तुत्वादन्यशुक्लवत्। प्रत्यक्षबाधतो नेति सोत्र नेति कुतो मतिः ॥३२४॥
मम नास्तीति नैवासौ तवादृष्टिर्नहि प्रमा। तवादृष्टिः प्रमाणञ्चेदीश्वरो नेति गम्यतां ॥३२५॥
तवाप्रमा सा दृष्टिश्चेदीश्वरो नेति गम्यतां।

**अपि च(।) न कार्यमित्येव संस्थानमित्येव वस्त्वित्येवाभिमतकारणमनुमापयति। न खलु पुरुषेच्छया हेतवः साध्यसाधनाय प्रवर्त्तन्ते। अन्यथेश्वरविपर्ययोपि स्यात् तस्यापि सिद्धिप्रसङ्गात्। ततः[३] न किञ्चित् कस्यचिन्न सिध्येत। अपि तु यादृशाद् यथा यदुपलभ्यते तादृशमेवानुमापयतीत्याह।**

**सिद्धं यादृगधिष्ठातृभावाभावानुवृत्तिमत्।**
**सन्निवेशादि तद् युक्तं तस्माद् यदनुमीयते ॥११॥**

**यादृगधिष्ठातुर्भावाभावावनुवृत्तिकारि दृष्टं। यादृशो वाधिष्ठातुर्भावाभावानुवर्त्तमानं यदुपलब्धं तादृशात्तु तदेवानुमीयत इति युक्तं। सन्निवेशादि[४](।) सन्निवेशो वस्तुत्वं स्थित्वा प्रवृत्तिर्व्वा (।) यादृशी यादृशादुपलब्धा तादृश्यास्तादृगधिष्ठात्रनुमानमुपपन्नं नान्यथेत्याह।**

**वस्तुभेदे प्रसिद्धस्य शब्दसाम्यादभेदिनः।**
**न युक्तानुमितिः पाण्डुद्रव्यादिवद् धुताशने ॥१२॥**

**यदि हि संस्थानभेदं परित्यज्य संस्थानशब्दमात्रवाच्यं कर्त्तृविशेषानुगमं निरस्य हेतुरुपादीयते वस्तुत्वमात्रं वा तदा युक्तानुमितिः। स्यात्पाण्डुद्रव्यादिव वह्नौ। तत्र हि**

---

[१] T. अथैकोवयवी
[२] T. त्यक्त :—हि
[३] T.
[४] T. त्यक्त :—सन्निवेशादि

पाण्डुविशेषोवधारणीयो यो धूमगतः । धूमादेव तदनुमानं तर्हि किं पाण्डुतया ।

अत्रोच्यते ।

विशिष्टमेव पाण्डुत्वं धूम इत्यभिधीयते । व्यतिरिक्तश्च धूमत्वे पाण्डुत्वस्य विशेषणं ॥३२६॥

धूमगतपाण्डुत्वादिति कोर्थः । अन्यन्वयव्यतिरेकानु[1] विधानमेव कथमवगन्तव्यम् (।)अत्रापि धूमत्वमग्न्यविनाभावीति कार्यकारणभावस्य ग्रहणेनानुमा भवेत्(।) तथा च सुतरामीशो न सिद्धिमधिगच्छतीति लाभमिच्छतो मूलस्यापि नाशः । तस्माद् वस्तुभेदे दृष्टान्ते यो दृष्टो वस्तुभेदः संस्थानविशेषे घटादौ पुरुषाधिष्ठानविशेषस्तस्य शब्दसाम्यादभेदवतो[2] न युक्तानुमितिः । तथेश्वरस्यापीत्येकान्त एषः ।

अथापि स्याद्(।) यदि पाण्डुत्वाद् विशेषरहितादनुमानं प्रवर्त्तयेमहि ततः प्रत्यक्षबाधा स्यात् न सर्व्वस्य तु पाण्डुतायामग्निसंसर्गः प्रत्यक्षतो विपर्ययस्य दर्शनात् । ईश्वरानुमाने तु बाधेत तदनुमानं ।

नैतदस्ति ।

न न बाध्यत इत्येवमनुमानं प्रवर्त्तते । सम्बन्धदर्शनात् तस्य प्रवर्त्तनमितीरितं ॥३२७॥

अन्यथा कुम्भकारेण मृद्विकारस्य कस्यचित् ।
घटादेः करणात् सिध्येद् वल्मीकस्यापि तत्कृतिः ॥१३॥

न खलु वल्मीकस्य कुम्भकारकरणेनुमाने बाधकमस्ति । न न दर्शनमेव बाधकं (।) यदि कुम्भकारः कर्त्ता भवेदुपलभ्येत । ईश्वरेपि किमनुपलम्भः(।) नन्वेवमदृष्टं कर्म्मापि न कल्पनीयं । तत्किमिदानीं शुषिरमित्येव जानुप्रवेशः । अथ कर्म्मापि परिकल्प्यापर ईशः परिकल्प्यते । ततस्ततोऽन्योपीत्येवमनवस्था । किञ्च

कुम्भकारोपि तत्कार्ये किमदृष्टो न कल्प्यते । कष्टकल्पनमेतत् किमीश्वरेपि न सम्भवि ॥३२८॥

अथ दण्डमृत्पिण्डचक्रकरप्रक्रमानुगमो न वल्मीक उपलभ्यते । यदि तर्हि महतीयं भवतः सूक्ष्मेक्षिका । तदा पर्व्वतादिष्वप्यनियतसंस्थानेषु (न)[3] प्रेक्षावद्वृत्तिरुपलभ्यते इत्येषामपि क्रिया न किमर्द्धजरतीयमालम्बते ।

अथ पृथिवीधारणमात्रकरणे पर्व्वतादेरुपयोगः । किमत्र पर्व्वतादिषु घटितसंस्थानेनेति । एवं तद्धि ।

उपयोगं विना भूभृत् सस्थानं क्रियतेऽन्यथा । किं वा न पुरुषस्तत्र हेतुस्तेन विरूपता ॥३२९॥

किमुपयोगाभावात् पुरुषकर्त्तृत्वेपि संस्थानमतिशोभनं न जायते पुरुषो वा न कर्त्तेति संदेह एव ।

नन्वेष दोषः कार्यसमः । तथा हि । 'प्रयत्नकार्यानेकत्वात् कार्यसमः ।'[4] प्रयत्नानान्तरीयकत्वात् कार्यः शब्द इति(।) प्रयत्नान्तरं व्यक्तिरपि दृष्टा इति न कार्यः शब्द इति । तथात्रापि संस्थानमत्यकार्यमपि दृष्टमिति ।

---

[1] T. अन्यन्वयव्यतिरेकानुविधानस्य पाण्डुत्वादिति यदि तदन्वयव्यतिरेकानु०
[2] T. भेदतो [3] T. [4] T. न्यायसूत्रे ५।२

तदप्यसत् ।[१]

**साध्येनानुगमात् कार्ये सामान्येनापि साधने ।**
**सम्बन्धिभेदाद् भेदोक्तिदोषः कार्यसमो मतः ॥१४॥**

**साध्येन हि कार्यत्वादिना सामान्येनापि साधने साधनविषये (उक्तो)[२]यो दोषः स कार्यसमो मतः । कार्यसमजातिरूपः । कीदृशो दोषः (।) भेदोक्तिदोषः । भेदस्योक्तिरुपक्षेपः । कार्यत्वन्नाम किमभिव्यक्तिगतमुपादीयते किं वोत्पत्तिगतमिति । सम्बन्धिभेदाद् यो भेदोक्तिदोषः स कार्यसमः (।) तत्रापि यद्यनैकान्तिकमुद्भावयति । प्रयत्नादावरणविगमादित्येवमपि न विरोधीति । न जात्युत्तरं । किन्तु सामान्येनापि[३] साधनं भवति । यतोभिव्यक्तिरपि नित्यस्य विरुद्धैव । ततो जात्युत्तरमन्यथा नैकान्तिकोद्भावनं सत्यमेव भवेत् ।**

**अथात्रोत्तरं । कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ।[४] प्रयत्नकार्यान्यत्वोपपत्तेः स्यादेत (त्) सत्त्वं[४]शब्दे स्यात् । अनुपलब्धिकारणस्य व्यवधानादेरुपपत्ते (ः) न च शब्दस्य व्यवधानादिकारणोपपत्तिः (।) तेन नास्य प्रयत्नानन्तरमभिव्यक्तिः । यत्र प्रयत्नानन्तरमभिव्यक्तिस्तत्रानुपलब्धिकारणमुपयुज्यते व्यवधानं (।) व्यवधानापोहाच्चार्थस्योपलब्धिरूपतद्विलक्षणाभि[५]व्यक्तिर्भवति ।**

**अत्रोच्यते ।**

शब्दस्यापि न सेत्ये(त)त् कथं कस्मात् प्रतीयते ।
यद्यभिव्यक्तिसम्बन्धो नित्यस्याप्युपपत्तिभाक् ॥३३०॥

**अथापि स्यात् ।**

शब्दस्यानुपलब्धत्वे व्यवधानादिकारणं । घटादीनामिव व्यक्तं नेक्ष्यतेऽतः प्रयन्नजाः ॥३३१॥

**तदप्यसत् ।**

व्यवधानादयः सन्ति शब्दस्येत्यपि कल्प्यतां । प्रत्यभिज्ञायमानत्वाच्छब्दस्य न विनाशिता ॥३३२॥

**घटादयोपि प्रागुपलब्धा व्यवधानावस्थायां न विनष्टा इति व्यवधानापगमे प्रत्यभिज्ञानादेव प्रतीयंते । शब्दोपि प्रत्यभिज्ञानात् तथैव युक्तः । अथान्येनोपलम्भादेवं प्रतीतिर्न प्रत्यभिज्ञानात् स्वयं सौक्षादिति महती तत्त्वदृष्टिः ।**

**किंच ।**

परेणापि प्रतीतं तत् प्रत्यभिज्ञानतोन्यतः । न गम्यते कथन्तस्य परस्मादपि नित्यता ॥३३३॥

**तस्मादत्र प्रागुक्त एव परिहारः । 'सामान्येनापि साधने सम्बन्धी'त्यादि ।[६]**

**अथवा ।**

'कार्यत्वान्यत्वलेशेन यत्साध्यासिद्धिदर्शनं ।
तत् कार्यसममेतत् तु त्रिधा वक्त्रभिसन्धितः (।)'[७] ॥३३४॥

---

[१] T. त्यक्तः [२] T. [३] T. केनापि—इति प्रमादपाठः [४] T कार्यान्यत्वं हि प्रयत्नाहेतुत्वं
[५] T. ०लब्धिः प्रयत्नानन्तरं भवति । तेनोपलब्धिलक्षणाभिव्यक्तिर्भवति ।
[६] T. ०साधने इत्यादि [७] T. प्रमाणसमुच्चये

इति आचार्यप्रणीतं कार्यसमलक्षणमाश्रित्येदमुक्तं । अक्षपादलक्षणन्त्वयुक्तमेवेति प्रतिपादितं[१] विकल्पसमं तु 'साधर्म्येपि विशेषोक्तिर्विकल्पसमं'[२] । तद्यथा पूर्व्ववद् घटसाधर्म्येणानित्यत्वे कृते सत्याह । सत्येतस्मिन् साधर्म्ये कार्यत्वचाक्षुषत्वादिना घट एवानित्यो नान्यः ।

ननु (अत्रापि)[३] कार्यत्वसंस्थानत्वादिसामान्येन साधनं भवति । विशेष[१]-सम्बन्धिद्वारपरिकल्पने कार्यसमप्रथ(?वचन)[४] तैव घटपर्व्वतादिसंस्थानपरिकल्पनात् ।

तदसत्यं ।

संस्थानादेर्न सामान्यं बुद्धिपूर्व्वक्रियोद्भवः । अन्यत्राप्यस्य दृष्टत्वाद् वृक्षादाविति वर्णितं ॥३३५॥
प्रतिबद्धविशेषस्य त्यागाद् यत् साधनं क्वचित् । तदत्यन्तमसम्बद्धमनित्ये काककार्ष्ण्यवत्॥३३६॥

अत्राह परः । यदि नाम बुद्धिपूर्व्वक्रियान्वयो न दृष्टः (।)स एव साधनं संस्थानादिर्माभूत् । शब्दवाच्यतान्वयस्तु संस्थानं संस्थानमित्यादिर्भविष्यति । ततस्तदभिन्नलक्षणत्वादेककार्यत्वसिद्धिः ।

असदेतद् (।) यतः ।

कल्पनामात्ररचितादर्थासत्तिविवर्जितात् । धर्म्मात् तत्सम्भविन्यर्थे यत्र तत्र समीहितात् ॥३३७॥

**जात्यन्तरे प्रसिद्धस्य शब्दसामान्यदर्शनात् ।**
**न युक्तं साधनं गोत्वाच्छशादीनां विषाणवत् ॥ (१५)**

शशादिविलक्षणो हि जात्यन्तरे प्रसिद्धो विषाणसम्बन्धः (।) स किं गौरिति वचनाभेदमात्रादनुमीयते ।

अर्थाभेदेपि पाण्डुत्वान्नानुमानमितीरितं । किं पुनर्यत्र नार्थोपि शब्दमात्रं परं समं ॥३३८॥

अर्थस्य तावत् सम्भवति समीहितसाध्यप्रतिबद्धता । तस्यापि सूक्ष्मेक्षिकाविद्भुरसाधकतोच्यते । किं पुनः शब्दसमानताया यस्याः साध्यसम्बन्धगन्धोपि विदूरीकृतः (।)यतः ।

**विवक्षापरतन्त्रत्वान्न शब्दाः सन्ति कुत्र वा ।**
**तद्भावादर्थसिद्धौ तु सर्व्वं सर्व्वस्य सिध्यति ॥ (१६)**

कुत्र चैते शब्दा न सन्ति विवक्षायाः सर्व्वत्राप्रतिघातात् । ततश्चेदर्थः साध्यः सिध्यति । न कश्चिदर्थसिद्धिवैधुर्यमासादयेत् । तस्मादसत्परोगतं[५] ।

[१] T. अस्यार्थो ह्येतत् स्याद् । यदि कार्यत्वात् शब्दोऽनित्यो घटवदिति कृत्वा कार्यान्तरेण घटोऽनित्य इत्यत्र शब्दे किं स्यादिति हि कार्यसमः । अयं हि वक्त्रभिप्रायत. त्रिधा । यदि हि वक्तुः घटकार्यत्वं शब्दे नास्तीति वादेऽसिद्धसमः । अथ शब्दस्यकार्यत्वं घटाद्यनित्येषु नास्तीति चेत् । ततो विरोधाभासः । अथ तन्नित्य(त्वे)पि नेतीति चेत् । असाधारणत्वाद् अनिश्चतसम.

[२] T. न्यायभाष्ये (?) ५।१।४

[३] T. ननु संस्थानत्वादिकार्यसामान्येन न साधनं भवति ।

[४] T.

[५] T. तस्मादसदपरमतं

**एतेन कापिलादीनामचैतन्यादि चिन्तितं।**
**अनित्यादेश्च चैतन्यं मरणात् त्वगपोहतः॥ (१७)**

**कापिलादीनामप्यचैतन्यमितरद् वा यतः सिद्धिसौधशेखरीभवति। तदर्थत्वाभावाच्छब्दमात्रसाम्यरचितमेव। तथा हि।**

अनित्यत्वं न सांख्यस्य प्रसिद्धं वस्तुवृत्तितः। तस्याव्यक्तिः पदार्थाना न निरन्वयनाशिता ॥३३९॥

**न खलु सत[1] एवानभिव्यक्तिरनित्यता बौद्धस्य प्रसिद्धा। का र्ताहि(।) निरन्वयनाशिता।**

**ननु (न)[2] तिरोभावो विनष्टानभिव्यक्तयोस्तुल्य एव। कोयं तिरोभावः (।) अदृश्यात्मता।[3] ननु शशविषाणादीनाञ्च प्रधानानामनित्यताप्राप्तिः। विद्यमानस्याप्यनित्यतेति चेत्। दृश्यात्मनायां प्रधानादीनामपि स्यात्। दृश्यस्यादृश्यात्मताप्राप्तावनित्यतेति चेत्। केयं दृश्यता नाम। यद्यर्थस्वरूपं कथं दृश्यस्यादृश्यता(।) तत्परित्यागे वस्तुरूपमेव नास्ति। अथ वस्तुनोन्यद् दृश्यात्मत्वं तथा र्ताहि तस्याभावः कथं न निरन्वयविनाशः। न चान्यस्याभावेऽन्यस्य तिरोधानं। तस्य वा सर्व्वदा प्रधानतुल्यत्वान्नानित्यत्वं। तस्माच्छब्दपरिकल्पनामात्रमेव साधनात्केनोपादीयते। तथा मरणत्वात् त्वगपोहतः(।) सर्व्वत्वगपहरणे मरणादिति मरणशब्दप्रवृत्तिमात्रकमेव।**

विज्ञानादिनिरोधो हि मरणं बौद्धबोधतः। असिद्धं यस्य तरुषु विज्ञानं तन्मतिस्तथा ॥३४०॥

**यस्य बौद्धस्य तरुषु विजानसन्देहस्तदादिनिरोधरूपमरणमसंदिग्धमिति कः प्रत्येति। विज्ञानस्य निरोधो विज्ञानाभावे नास्ति तथायुषः।**

**'आयुर्जीवितमाधार ऊष्मविज्ञानयोर्हि यः'[4] इति वचनात्। कथं हि मरणमभ्युपपन्नचैतन्यमभ्युपेयात्। तस्माच्छोषमयं[5] मरणमाह। तच्च नैकान्तसाधनं विज्ञानस्य कर्द्दमादिष्वपि दर्शनात्। मरणशब्दवृत्तेस्तदपि सिद्धमेवेति चेत्। उक्तमत्र(।) 'विवक्षापरतन्त्रत्वादि'ति। अथार्थदर्शनायातात्र विवक्षा ततोयमदोषः।**

मरणसिद्धौ तच्छब्दः प्रतिबद्धः प्रसिध्यति। प्रतिबन्धे च शब्दस्य ततो मरणसिद्धता ॥३४१॥

**शब्दाद् विज्ञानादिनिरोधलक्षणमरणसिद्धिः तथाभूतमरणदर्शनायातत्वे। तथा भूतमरणदर्शनायातत्वञ्च मरणसिद्धावितीतरेतराश्रयदोषः**

**अथ नित्यः शब्दार्थसम्बन्धः। तथा सति वागादीनामपि विषाणिता। अथान्य एव वागादिषु गोशब्दः स न प्रतिबद्ध एव विषाणविषाणित्वे[6] मरणशब्दो हि र्ताहि नापर इति किमत्र भवतः प्रमाणं। तन्नानित्यत्वादिसाधनस्य साधनं(।) तथा स्थित्वा प्रवृत्तावेरिति न साध्यसिद्धिः।[7]**

**यदि र्ताहि विशेषपरिकल्पनेन साधनस्यासाधनता(।) संस्थानादेर(नित्यादेश्च। अ)[6]न्यस्यापि कृतकत्वादेरसाधनमेव परवाद्यपेक्षया सर्व्वमेवाप्रसिद्धं विकल्पनेन च।[8] तथाहि।**

---

[1] T. त्यक्तः—सतः [2] T. अधिकः—न [3] T. मि-मृगोन-प-ञ्निद्: अनभिव्यरेव
[4] T. अभिधर्मकोशे२।४५ [5] T. तरूणां—अधिकः [6] T. एव विषाणिनि
[7] T. तथा सत्तासंस्थानादिभावेनापि न साध्यसिद्धिः [8] T. विकल्पनं

आकाशगुणः शब्दधर्म्मोऽसिद्धः परंप्रति । साध्यदृष्टान्तधर्म्मस्य परस्परमसिद्धता ॥३४२॥

**तदप्यसत् ।**

आगमाद् व्योमधर्म्मत्वं वाचकं नैव कस्यचित् । विशेषकल्पनायान्तु हेतुरेव विहीयते ॥३४३॥

**तस्माद्(।)**

**वस्तुस्वरूपेऽसिद्धेयं न्यायः सिद्धे विशेषणं ।**
**अबाधकमसिद्धावप्याकाशाश्रयवद् ध्वनेः ॥१८॥**

आगमप्रसिद्धो हि शब्दस्याकाशगुणत्वेऽसिद्धोपि शब्दः स्वरूपेण धर्म्मितया प्रसिद्ध एव (इति)[1] धर्म्मासिद्धेः । तथा विशेषपरिकल्पनायामपि न हेतुरसिद्धधर्म्मिसम्बन्धो नैकान्तिकोवाऽसाधारणतया । धर्म्मी हि प्रमाणसिद्ध इति न विशेषणाप्रसिद्धावसिद्धः । नापि विशेषपरिकल्पना क्वाप्युपयोगिनीति । न हि तत्रावश्यं विशेषपरिग्रहः । तथा हि ।

अनित्यताकार्यतयोः सामान्यमुपयोगवत । विशेषस्य प्रसिद्धिस्तु न केनचिदपीष्यते ॥३४४॥
हेत्वनन्तरभावित्वं तदन्तरनाशिता । न शब्दघटयोरस्ति विशेषणसमन्विता ॥३४५॥

न खलु पूर्व्वापरस्वरूपविविक्तायाः क्वाप्यस्ति विशेषः । न चैव देशस्तं[2] विशेषी करोति । तदेकपरामर्शविषयत्वात् । तदसत् विकल्पनं । संस्थानादि तु तत्प्रतिबद्धमसिद्धमेव । शेष प्रागेवोक्तः । संस्थानशब्दमात्रकन्त्वसाधकमेव । यतः ।

**असिद्धावपि शब्दस्य सिद्धे वस्तुनि सिध्यति ।**
**औलूक्यस्य यथा बौद्धेनोक्तं मौर्त्यादि साधनं ॥१६॥**

मूर्त्तत्वादनित्याः परमाणव इति वैशेषिकं प्रति बौद्धेन साधनमुक्तं । न चात्र शब्दः परस्पराभिमते विषये प्रसिद्धः । असर्व्वगतद्रव्यपरिमाणस्य मूर्त्तिशब्दवाच्यत्वात् । स्पर्शयोगश्च मूर्त्तिरिति सौगताः । तदयमेव शब्दः परस्पराभिमते विषये यदि नाम न सिद्धस्तथापि तदभिमतस्यार्थस्योभयोरपि सिद्धत्वादसिद्धावपि शब्दस्य सिद्धे वस्तुनि बौद्धस्याभिमते द्वयोरपि सिध्यत्यभिमतः साध्योर्थः ।

ननु यथा वस्तुनो(ऽ)व्यभिचारित्वे सिद्धत्वे वा सिध्यति साध्यं(।) तथा शब्देप्येवमेव कोनयोर्व्विशेषः । न(।)

**तस्यैव व्यभिचारादौ शब्देप्यव्यभिचारिणी ।**
**दोषवत् साधनं ज्ञेयं वस्तुनो वस्तुसिद्धितः ॥२०॥**

न हि यथा शब्दासिद्धावपि वस्तुबलात् साध्यसिद्धिः(।) तथा वस्त्वसिद्धावपि शब्दबलात् साध्यसिद्धिः(।) अपि तु तस्यैव वस्तुनो व्यभिचारोऽसिद्धौ विरोधे च दोषवत् साधनं ज्ञेयमव्यभिचारिण्यपि शब्दे । न तावद् वस्तुनो व्यभिचारादौ शब्दस्याव्यभिचारिता सम्भवति ।

अभ्युपगम्यापि तूच्यते । भवत्वव्याभिचारी शब्दस्तथापि दोषवत् साधनं । कुतो वस्तुनो वस्तु सिध्यति न शब्दात् ।

ननु यदि(न)[3] साध्याव्यभिचारी शब्दस्तथा सति शब्दात् साध्यसिद्धिः । अथ ततः

---

[1] T. [2] T. पक्षस्तं [3] T-

**साध्यसिद्धिः कथमव्यभिचारी शब्दः। एतदनेन दर्शयति। वस्तुप्रतिपादनद्वारेण शब्दः साध्यसिद्धावुपयोगी[1] न तु साक्षात्(।) ततः शब्दस्याव्यभिचारवाञ्छायामपि नार्थपरित्यागात् साध्यसाधने सामर्थ्यं(।) तस्मादर्थगतैव चिन्तोपयोगवती। वस्तुव्यभिचारेतरनिरूपणन्तु पश्चाद् भविष्यति।[2] तस्मान्नार्थरूपो हेतुरस्ति यत ईश्वरसिद्धिरतोऽनित्यत्वेप्यप्रमाणतेतिसिद्धं।**

**तथा नित्येपि।**

**न चाकाशादीनामीश्वरस्य च नित्यतया (कारणत्वा)कारणत्वविभागः। तथा हि।**

**यथा तत् कारणं वस्तु तथैव तदकारणं।**
**यदा तत् कारणं केन मतं नेष्टमकारणं॥२२॥**

**व्यापि त्वैकत्वादयो[3] धर्म्मा यथेश्वरस्य तथाकाशादीनामपि (।)ततः समानत्वेपीश्वरः कारणमकारणमाकाशादिकमिति कुतो विभागः। अथ तस्य ज्ञानेन चिकीर्षालक्षणेन सम्बन्धादेवमुच्यते। तदप्यसत्। तत्रापि समानत्वात्। किंच।**

चिकीर्षामात्रकेणैव न कारणमितीक्ष्यते। काकतालीयमेतत् किमथवा कारणन्तथा॥३४६॥
यदि कर्म्मादिनि ''करणं[4]कारणम्भवेत्। अन्यथा कारणं सर्व्वं सर्व्वस्य न किमिष्यते॥३४७॥

**अथवा यदा सर्गात् प्राक् तदकारणं। तथा सर्गावस्थायामविशेषाभावादकारणमेव (।) सकलरागादि (निर्)[4]मुक्तस्यौदासीन्यमेव युक्तं। लोककर्म्माधिपत्यादौदासीन्यं न लभत एवेति चेत्। (न।)**

अन्यकर्म्मपरतन्त्रतयाऽसावीश्वरः कथमीश्वर एव।
तत्क्रपाक्रमतोऽथ विशेषो नारकादिरचनादकृपः किं॥३४८॥
कर्म्मैव लोकस्य तथेति तत्कृद् अशक्तिरस्मिन्निति नार्यतास्य।
आर्यस्य कर्त्तु यदि साधु (?ध्व)[1]शक्तिरसाधुकृत्यं किमसौ विधाता॥३४९॥
उपेक्षैव साधूनां युक्ताऽसाधौ क्रियाक्रमे। न क्षतक्षारनिक्षेपः साधूनां साधु चेष्टितं॥३५०॥

**अथैवम्भूत एवायं क्रमस्तमेवासौ प्रकाशयति चेष्टते च तत्करणाय। एवम्भूत एव मम स्वभावः। न निवारयितुं मया शक्यः। तत्र लोकैर्यथायोगं विहर्त्तव्यं।**

आत्मन्यपि वशी नासाविति स स्फुटमीश्वरः।
स्वकर्म्मोचितचेष्टस्य न लोकस्य किमीशता॥३५१॥
ईश्वरत्वेरितः सोपि यद्यन्योन्यसंश्रयः। एकस्यापि न सद्भावस्तथा सत्युपपत्तिमान्॥३५२॥
ईश्वरस्य यदि नास्ति न शक्तिः साधु कर्म्मविधिरेव जनः स्यात्।
स स्वतन्त्रचरितो[5]यदि लोकः कर्म्मवाद इह शस्त उदग्रः॥३५३।

**अथापि स्याद्(।)ईश्वरस्यापि कदाचिद् कारणत्वम्भविष्यति यद्यपि नामास्मदादिभिरस्वर्दाशिभिर्न ज्ञायते। एवन्तर्हि।**

तत्त्वदर्श्येव तद्वित्यै[6] ज्ञावव्यस्तस्यचापरः। ज्ञाता स्यादनवस्थानादनेकेश्वरसम्भवः॥३५४॥

**अस्मदादिभिस्तु (।)**

---

[1] T. शब्दः सिद्ध उपयोगी [2] T. वक्ष्यते [3] T. व्यापित्वनित्यत्वादयो
[4] T. यदि कर्म्माद्य (भि)व्यक्तिकरणं [5] T. ०स्वतन्त्रजनितो [6] T. तत्सिद्ध्यै

**शस्त्रौषधाभिसम्बन्धाच्चैत्रस्य व्रणरोहणे।**
**असम्बद्धस्य किं स्थाणोः कारणत्वं न कल्प्यते ॥ (२३)**

अथ स्थाणोर्नास्ति व्यापार इत्यकारणत्वमसम्बन्धात्। स्थाणोरपि कदाचिदस्ति व्यापारः। स त्वस्माभिर्नोपलक्ष्यतेऽतत्त्वदर्शनैः।

अनुपलक्षणादेव तर्हि नास्ति स्थाणोर्व्यापारः। एवन्तर्हि (।)

**स्वभावभेदेन विना व्यापारोपि न युज्यते।**
**नित्यस्याव्यतिरेकित्वात् सामर्थ्यञ्च दुरन्वयं ॥ (२४)**

नित्यस्य प्रबन्धनित्यतयान्यथा वा स्वभावभेदेन विना कार्यस्येश्वरस्य व्यापारोप्युपलक्षितः कथं युक्तः। ईश्वरस्यापीत्यपि शब्दो भिन्नक्रमः। यथा कुलालादिकृतो विशेषः(।) तथेश्वरकृतोपि स्यात् सामर्थ्यपरिकल्पना। नित्यस्य चाव्यतिरेकित्वात् सामर्थ्यं दुरन्वयं ॥३५५॥

सदा स्थानव्यापकत्वेन व्यतिरेकाभावतः।

**येषु सत्सु भवत्येव यत् तेभ्योऽन्यस्य कल्पने।**
**तद्धेतुत्वेन हेतूनां सर्व्वेषामनवस्थिति ॥ (२५)**

दृष्टकुलालादिषु कर्म्मणि च सति भवत्येव समीहितं। तथाप्यन्यस्य तत्र कल्पन सर्व्वेषामेककार्याणां हेतूनामनवस्थितिः पर्यवसानं न स्यात्।

न खलु निरनुगमकल्पनावतारानुगतो तदपरो व्याघातः। अथवा अनवस्थितस्य चिरन्तनस्य[2] तस्यैव स्थितिर्हेतूनामेवमपि स एव हेतुरिति व्यर्थकमपरं कर्मेति स्यात्।

यथा तर्हि पृथिवी कारणमङ्कुरादेः सदा स्थायिनी तथेश्वरोपीति। न च पृथिव्यादीनामादिरुपलभ्यते।

अत्र परिहारः।

**स्वभावपरिणामेन हेतुरंकुरजन्मनि।**
**भूम्यादिस्तस्य संस्कारे तद्विशेषस्य दर्शनात् ॥ (२६)**

सीरव्यापारादिविशेषविकृतिसमन्वयानुगमो हि दृश्यते यवादिप्रसवानामिति पृथिव्यादिकारणत्वपरिकल्पना।

पुनरपि चोद्यपरिहारौ।

**यथा विशेषेण विना विषयेन्द्रियसंहतिः।**
**बुद्धेर्हेतुस्तथेदं चेन्न तत्रापि विशेषतः ॥२७॥**

**पृथक्पृथगशक्तानां सन्तानातिशयेऽसति।**
**संहतावप्यसामर्थ्यं स्यात् सिद्धोतिशयस्ततः ॥२८॥**

चक्षुरादौ हि कारणत्वं कार्यरूपविशेषादवसीयते। कार्यं हि विज्ञानं रूपग्रहणप्रतिनियतं रूपाकारं बोधरूपन्तदेषां परस्परपरिहारेणोपयोगाद् भेदस्य सम्भवात् कार्यस्य विज्ञानस्य कारणं

---

[1] T. अधिकः—न [2] T. (?) ग्सर्-प म-यिन-प ग्नऽ-म=अनभिनवबधू

चक्षुरादयः। यत एते पृथक् पृथगशक्ता विज्ञानाकारसमुदाये न चक्षुषो बोधरूपता। न रूपाद् रूपग्रहणप्रतिनियमो न मनस्कारदितरत्। एकैकस्मादेवमदर्शनात्।[1]

अथ स्याद्(।) यथा चक्षुषि उन्मिषिते परापररूप(ोप)ढौकने परापररूपदर्शनं न च तदा चक्षुषो विशेषः। तथा रूपे स्थित एवापरापरचक्षुर्विज्ञानभाव(:) तथेश्वरेपि सदा समानतया व्यवस्थिते परापरभावोत्पत्तिरिति नाकारणभावः। उक्तमत्र(।)आकाशादीनामपि कारणभाव इत्यतिप्रसङ्गः।[2]

विशेषाच्चक्षुषो रूपविशेषादपि विद्यते। विज्ञानस्य विशिष्टत्वं रूपादेर्हेतुता ततः ॥३५६॥
रूपविशेषाद् विपरिस्फुरताकारादिलक्षणात्। सौमनस्यादियोगि विज्ञानमुपजायते ॥३५७॥

### ५. हेतुसंहतौ कारणता

तस्मात् पृथगशक्तेषु येषु सम्भाव्यते गुणः।
संहतौ हेतुता तेषां नेश्वरादेरभेदतः[2] ॥२९॥

तथा चक्षुषोर्ध्वनिमीलनादिविशेषादस्पष्टतादिविशेषः। स तत्प्रतिबद्धस्तस्य कार्यतां कारणस्योपकल्पयति। नैवमीश्वरकारणत्वकल्पने हेतुरिति(।) ततः(।) 'पृथक्पृथगशक्तानां सन्तानातिशयेऽसति' सन्तानातिशयाभावे (।) 'संहतावप्यसामर्थ्यं' स एव स्वभावः कारण विपरीतः कारणं भवेत् कथमिति किमत्रोत्तरं। रूपादीनान्तु कारणत्वोपकल्पने निमित्त-मुक्तमिति न दोषः।[2]

## § ४. भगवत्प्रामाण्यवार्त्तिकं चतुर्थम्

### १. ज्ञानवत्त्वात् भगवान् प्रमाणम्

यदि तर्हीश्वरस्य परिज्ञानादिहेतुर्नास्ति ज्ञापक(:) कारको वा नापरत्रापि स स्यात्। यतः।

प्रामाण्यं च परोक्षार्थज्ञानं तत्साधनस्य च।
अभावान्, नास्त्यनुष्ठानमिति केचित् प्रचक्षते ॥३०॥

यस्तावदसर्व्वज्ञ एव सर्व्वज्ञो भवति (।)तस्य परोक्षार्थपरिज्ञाने को हेतुः। न खल्वीदृशं किमपि कारणमुपलक्षितं[3] यतोनुष्ठानात् सर्व्ववेदनं भवति। मन्त्रतन्त्रादयस्तु प्रायशः सकलसमयसम्भविनः। नापि तन्निश्चये हेतुरस्ति। एकदेशसंवादः सकलवचनानामेव। न च परोक्षाणां साक्षात्करणसम्भवः सकलार्थानामिन्द्रियज्ञानस्य सन्निहिताविषयस्य दर्शनात्।

इन्द्रियार्थाविशेषेपि यदि सर्व्वविदुद्भवः। सर्व्वज्ञ एव सर्व्वः स्यादिन्द्रियार्थाविशषतः ॥३५८॥
अशुच्यादिरसंवादसङ्गमश्चानिवारितः[3]। प्राप्यकारीन्द्रियत्वे च सर्व्ववित् कथमुच्यते ॥३५९॥

---

[1] T, कस्माददर्शनात्

[2] T. ईश्वरनिषेधवार्त्तिकं (समाप्तं), बम्-पो. ल्ङ-प (पंचमाह्निकं) प्रारभ्यते

[3] T. अशुच्यादिरसास्वादसङ्गमो दुर्निवारितः

मनोविज्ञानमप्यस्य नेन्द्रियाननुसारतः । स्वतन्त्रन्तु मनोज्ञानं नैव केनचिदीक्ष्यते ॥३६०॥
अभ्यासात् स्पष्टता तस्य न सर्व्वविषया भवेत् ।
अ(ा)[1]गामया[1]श्रितत्वेप्यभ्रान्ततापि प्रसज्यते ॥३६१॥
अनुमानप्रसिद्धे तु वस्तु सर्व्वं न लभ्यते । ततो न सर्व्वविषया भावना सर्व्ववित् कथं ॥३६२॥
शास्त्राद्यभ्यासतः शास्त्रप्रभृत्येवावगच्छतु । साकल्यवेद(न)[1]न्तस्य कुत एवागमिष्यति ॥३६३॥
सर्व्वं वेत्तीति विज्ञानं तज्ज्ञेयावेदने कुतः । तज्ज्ञेयवेदनेपि स्यात् स एव खलु सर्व्ववित् ॥३६४॥
रागादिरहितो यश्च विकल्परहितस्तथा । देशना तत्कृतेत्येतत् तु याचितकमण्डनं ॥३६५॥
भूतं भवद्भविष्यच्चानाद्यन्तं कः पृथक् क्रमात् । प्रत्येकं शक्नुयाद् बोद्धुं वस्तु कल्पान्तरैरपि ॥३६६॥
एकदेशपरिज्ञानं कस्य नाम न विद्यते । न ह्येकं नास्ति सत्यार्थं पुरुषे बहुकल्पके ॥३६७॥
यश्चातिशयवान् दृष्टः स तावन्मात्रसंस्थितेः ।
किंचिन्मात्रान्तरज्ञः स्यान्नातीवातीन्द्रियार्थवित् ॥३६८॥
न चैकदेशतत्त्वज्ञः सर्व्वज्ञ उपपत्तिमान् । काकतालीयमेतत् स्यादपरभ्रमकारकं ॥३६९॥
युगपत् सर्व्वविज्ञाने(ऽ)नादिसंसारता कथं । यस्मिन् परिसमाप्तिज्ञः स एवात्रादिरुच्यते ॥३७०॥

अत्रोच्यते । न परःप्रमाणं सर्व्वं वेत्तीतीष्यते । अपि तु विप्रलम्भनकारी न भवति अस्तु समीहितसम्पादनसमर्थः(।) किङ्कारणं ।

**ज्ञानवान् मृग्यते कश्चित् तदुक्तप्रतिपत्तये ।**
**अज्ञोपदेशकरणे विप्रलम्भनशंकिभिः ॥ (३१)**

न खल्वन्यदनुष्ठातुमीहितमन्यत्र ज्ञानमुपदेष्टुरन्विष्यते । तद्विनिश्चयेपि समीहितविप्रलम्भनसम्भवात् । अथ तत्रापि तस्य ज्ञानमस्त्येवेति निश्चयः । न सर्व्वत्र ज्ञानं ज्ञानासम्भवात् । तस्मात् तदेव तेन ज्ञातव्यन्तच्चेज्ज्ञातमिति ज्ञायते । अतोऽज्ञैरज्ञोपदेशकरणे विप्रलम्भनशङ्किभिस्तद्विषयज्ञानज्ञाने प्रमाणमेवासौ । अन्यत्रापि तस्य ज्ञानं सम्भावनीयं(।) यो हि प्रधानपुरुषार्थज्ञः प्रमाणपरिशुद्धसकलतत्त्वज्ञश्च स एव प्रमाणं । तावतैवासावुपास्य (:) । परिशिष्टन्तु सकलमेव समानं सर्व्वोपास्यानां (।) तच्च कस्य सम्भाव्यते । येनोपदिष्टं । ये तु प्रमाणवृष्टं प्रधानपुरुषार्थञ्च न ववविदन्ति[2]। अयमेव विदन्ति[2]न ते प्रमाणं । तत्राप्यपरिज्ञानसम्भवात् । कथमुपदेश इति चेत् । अनादिपरम्परातो नास्तिक्योपपदेशवत् ।

## २. हेयोपादेयवेदकत्वात् भगवान् प्रमाणम्

अथ सर्व्वापरिज्ञाने सर्व्वत्र शङ्कोत्पत्तेरपरिज्ञानमपरस्यापीति सम्भाव्यते । ततश्च सर्व्वज्ञानमसम्भावयन् कथमत्रापि सम्भावयेत् परिज्ञानं । उपदेशस्तु पारंपर्योपदेशादिति ।

तदसत् ।

अप्रमाणे स्फुटा वस्तुन्युपदेशपरम्परा । प्रामाणिके त्वसम्भाव्या सोपदेशपरम्परा ॥३७१॥

नित्यत्वादौ हि प्रमाणासम्भविनि नोपदेशपरम्परातोन्या गतिः । प्रमाणेन चेद् वस्तु परिच्छिन्नं कथ तत्राज्ञानाशङ्का (।) भवतु वा तथापि तत्र प्रवर्त्तनमवश्यम्भावि प्रमाणेन निश्चयात् । अथ प्रमाणदृष्टेप्यनिश्चयः साक्षात्करणे ।

---

[1] T. [2] वदन्ति

तदेतदायातं ।

सूक्ष्मेक्षिकेदृशी जाता प्रमाणाद् दृष्टदर्श्यपि । शंक्यते येन तीर्थ्येषु कथा कैव भविष्यति ।।३७२।।

प्रमाणदृष्टस्य कथनमस्ति तथागतस्य भगवतः । तत्रापि यस्य शङ्का तस्य तीर्थेषु का गणना येषु परिज्ञानाननुगम एव । तस्मात् प्रामाणिकार्थकथनात्[1] प्रमाणमेव भगवान् ।

स्वर्गापवर्गमार्गस्य प्रमाणं वेदको नरः । अन्यस्याप्यपरिज्ञाने संभवेदपि तस्य तत् ।।३७३।।

**तस्मादनुष्ठेयगतं ज्ञानमस्य विचार्यतां ।**
**कीटसंख्यापरिज्ञानं तस्य नः क्वोपयुज्यते ॥ (३२)**

यतः ।

धर्म्मज्ञत्वनिषेधस्तु केवलोऽत्र निषिध्यते । सर्व्वमन्यन्निषेधंस्तु परः केन(नि)वार्यते ।।३७४।।

ननु यद्येकदेशपरिज्ञानसंवादात्[2] तथागतः सर्व्ववेदीति सम्भाव्यते । 'अग्निर्हिमस्ये' त्यादि संवादादपरोपीत्यनवस्थैव स्यात् । न चैवम् (।)अनुष्ठानस्य परस्परविरोधेनासम्भवात् ।

तदप्यसत्यं ।

**हेयोपादेयतत्त्वस्य हान्युपायस्य वेदकः ।**
**यः प्रमाणमसाविष्टो न तु सर्व्वस्य वेदकः ॥३३॥**

यस्मान्न सर्व्वस्यैव देशस्यापुरुषार्थलक्षणस्य वेदक इति तावता (सर्वः) [3]सर्व्ववेद्यसौ भवति पुरुषार्थलववेदनं हि न कस्यचिदसम्भवि । तत्र हेयोपादेयतत्त्व दुःखनिरोधसत्ये । अभ्युपायतत्त्वं तयोरेव दुःखनिरोधसत्ययोः कारणं समुदयमार्गसत्ये । ततश्चतुरार्यसत्यलक्षणस्य हेयोपादेय[4]तत्त्वस्य वेदको यः प्रमाणसिद्धस्य वेदयिता स प्रमाणमिति यावत् । स्वर्गमार्गस्य च प्रमाणपरिच्छेदसम्भविनः । अन्यत् तु स्त्रीशूद्रविस्मापनं सुगतवचसि नासम्भवि । तस्मात् प्रधानपुरुषार्थवेदक एव प्रमाणमन्यस्यायोगात् ।

तस्माद् ।

**दूरं पश्यतु वा मा वा तत्त्वमिष्टं तु पश्यतु ।**
**प्रमाणं दूरदर्शी चेदेत गृध्रानुपास्महे ॥३४॥**

न हि दूरदर्शनमस्तीत्येव सर्व्ववेदनं सम्भाव्यते । यदि त्वेवं भवेद् गृध्रादीनामपि तदित्येत गृध्रान् दूरश्रुतींश्च वराहादीनुपासनया स्वीकुर्म्म इति सकलन्यायमार्गपरित्याग एव जातः ।

## ३. कारुणिकत्वाद् भगवान् प्रमाणम्

### (१) जन्मान्तरसिद्धिः—

अथ किं सकलार्थज्ञानमसम्भवि निरर्थकंश्चैकान्तेन येन प्रधानपुरुषार्थज्ञानेमवास्य मृग्यते '

नैतदस्ति(।)

सर्व्वं जानातु सर्व्वस्य वेदको न निषिध्यते । नास्माभिः शक्यते ज्ञातुमिति सन्तोष इष्यते ।।३७५।।

---

[1] T. प्रमाणदृष्टार्थकथनात्
[2] T. ०परिज्ञानात्
[3] T.
[4] T. त्यक्त :—हेयोपादेय

**न खलु सर्व्वज्ञः सर्व्वज्ञं जानात्युपायाभावात् । तथा हि ।**

जानाति सर्व्वमित्येषा तज्ज्ञेयज्ञानतो मतिः । तदेकदेशविज्ञानं तज्ज्ञस्यैवोपजायते ।।३७६।।

**वृक्षादयोपि स्त्रीशूद्रज्ञानसाधारणाः परेण ज्ञायन्ते न वेति तज्ज्ञानादेव मतिः । स्वयमविज्ञाते तु ज्ञातमनेनेति नोपायः समस्ति । ये तु महान्तो दूरदर्शनगतयस्तेषामेकदेश-परिज्ञानपूर्व्विका सकलज्ञतासम्भावना तेषामपि तदपरेण तत्त्वसम्भावनः ।।**

**ननूभयलक्षणस्यापि प्रमाणस्य कुतः साधनं को वा हेतुरित्याह ।**

**साधनं करुणाभ्यासात् सा बुद्धेर्देहसंश्रयात्**

**तस्य प्रामाण्यस्य साधनं कुतो भवति । 'करुणाभ्यासात्' । 'सा' च करुणा 'बुद्धे-र्देहसंश्रयात् । बुद्धेर्यो देहस्तदाश्रयात् सा करुणा(ऽ)भ्यासपरिकरा परां प्रकर्षगतिमासादयति ।**

**यदि नाम करुणा तथापि ततः प्रामाण्यमिति कुतोस्य सम्भवः । अस्ति सम्भवो यतः ।**

दुःखहेतोस्तथा दुःखाद् वियोगेच्छा परस्य या । सा कृपा तद्वतस्तेन तदुपायार्जने मतिः ।।३७७।।

**अवश्यं हि परदुःखवियोगेच्छावतस्तदुपायपर्येषणमिति पश्चात् प्रतिपादयिष्यते ।**

**अथवा साधनं करुणा (।) करुणावान् हि परोपकारविरहितो न भवति । ततः परार्थ-देशनया प्रमाणं (।)करुणावानुपाये प्रवर्त्तते । तदुपायश्च स्वप्रामाण्यसाधनं(।)**

**सैव करुणा सर्व्वत्राणेच्छालक्षणा कुतो भवतीत्याह । 'करुणाऽभ्यासात्' । करुणा हि दुःखाभ्यासादुदासीनशत्रुपक्षयोरपि प्रवर्त्तते । ततः सकलत्राणमसर्व्वज्ञत्वे न सम्भवतीति तदुपायाभ्यासः समासाद्यते ।**

**ननु स्वबुद्धिर्देहाश्रिता बुद्धिमतां करुणापि बुद्धिरेव । ततः सापि शरीराश्रितैव(।) ततः शरीरस्य भस्मीभावादावसिद्धोभ्यासः । यदि हि जन्मान्तरसम्भवस्तदानेकजन्माभ्या-सोपचयात् समीहितसमापत्तिः । तथा हि ।**

देहात्मिका देहकार्या देहस्य च गुणो मतिः । मतत्रयमिहाश्रित्य नास्त्यभ्यासस्य सम्भवः ।।३७८।।

**तदाह । 'बुद्धेर्देहसंश्रयाद् (।)**

**असिद्धोभ्यास इति चेन्नाश्रयप्रतिषेधतः ॥(३५)**

**पूर्व्वान्वयबुद्धिरहितस्य केवलस्य देहस्याश्रयणस्य प्रतिषेधात् । न खलु कार्यत्वे गुणत्वेऽ-न्यथा वा भवत्याश्रयभावो देहस्य केवलस्य ।**

## ( न देहाद्याश्रिता बुद्धिः )

**ननु देहाश्रिता बुद्धिरुपलभ्यते देहकार्या मातापितृदेहाश्रयणदर्शनात् । तथा हि । तद्रूपाचारचेतःपाटवादयो मातापित्रन्वयिनो जन्यशरीरमहाभूताश्रया तच्चित्रादय इव(।) चित्रकररूपविज्ञानाद्यन्वयिनः[1] कुड्याश्रिताश्चित्रकरकार्यरूपाः(।) ततो न चित्रं कुड्यविरहित-मवतिष्ठते कुड्यान्तरं वा संक्रामत्यागतं वा कुड्यान्तरात् । आम्रफलादिपाकजरूपवद् वा । कार्यं वा धूमो न धूमध्वजान्तरादागच्छति(।)नापि धूमध्वजान्तरं[2] प्रयाति । मदशक्तिस्तु**

[1] T. शेस्-स्थाने शेस् इति प्रमादपाठः [2] T. धूमो न वह्न्यन्तराद्० नापि वह्न्यन्तरं

मद्याश्रिता कषायादिरससंपर्कादपूर्व्वा प्रादुर्भवति । विलीयमाना न मद्यान्तरमवलम्बते । तथेन्द्रियचेतनाविशेषाः । तथा चाह । 'पृथिव्यापस्तेजोवायुरिति तत्त्वानि । पृथिव्यादीन्येव तत्त्वानि तत्त्वान्येव पृथिव्यादीनि । नाकाशादीनि न क्षणिकत्वादीनि । तथा तत्त्वान्येव न विज्ञानमात्रं नापि सकलमेव शून्यं । सर्व्वत्र प्रमाणाभावात् । तत्समुदाये विषयेन्द्रिय-(शरीर) संज्ञा । महाभूतानामेवापरिमितः परिणतिविशेष(संभूत) समुदायः शरादिव्यपदेशविषयः[1] (।) तेभ्यः शरीरेन्द्रियविषयेभ्यश्चैतन्यं[2] । यथा किण्वादिभ्यो मदशक्तिः (।) तस्मान्मदशक्तिवद् विज्ञानं । न परलोकादागच्छत् प्रतिसन्धिमत् । मदशक्तिवदिति चोपलक्षणं चित्रवद् धूमवदिति च । न खल्वेते सञ्चारिणो दृष्टाः ।

तदसत् ।

रूपादिव्यतिरेकेण कुतो भूतोपलम्भनं । तानि पञ्च ततः संख्यावधारणमयुक्तिमत् ।।३७९।।

रूपशब्दगन्धरसस्पर्शाः पञ्चमहाभूतानि । तत्समुदाये पृथिव्यादिसंज्ञा । पृथिव्यादीनामन्यथोपलम्भनाभावात् ।

अथ रसस्य स्पृश्यतैवेति चतुःपरिमाणता[3] । तथापि पृथिव्यादीनीति न युक्तं रूपादीन्यभिधेयं स्यात् । क्षणिकत्वादयः पश्चाद् भविष्यन्ति साध्या इति न तत्प्रतिक्षेपः ।

किञ्च ।

दृश्यं दृश्यमिति ह्येवं सर्व्वमेकं प्रसज्यते । प्रकारभेदे तु पुनरनन्तत्वं प्रसज्यते ।।३८०।।
तस्मात् पंचाश्रयग्राह्य पञ्जधा व्यपदिश्यतां । तस्यावान्तरभेदस्तु पञ्चत्वानुपरोधकृत् ।।३८१।।
यच्चोक्तं सर्व्वशून्यत्वे प्रमाणं चेन्न शून्यता(।)शून्यता चेत् प्रमा नास्ति तदिद व्याहृतं द्वयं ।।३८२।।
प्रतिपादयिष्यते पश्चाद् यादृशी सर्वशून्यता । तत्र यादृक् प्रमाण च त्वरात्र क्वोपयोगिनी ।।३८३।।

## (क) भूतचैतन्यमतनिरासः

ननु[4] मातापितृशरीराद्यन्वय[5] व्यतिरेकानुविधायीनीन्द्रियादीनि शरीरमहाभूतस्वभावत्वात् तदाश्रितान्येव नान्यथोपलभ्यन्ते परलोकादागतत्वेन(।) तत् कथं परलोकास्तित्ववादः साधीयान् ।

तदप्यसत्यं । यतः[6] (।)

**प्राणापानेन्द्रियधियां देहादेव न केवलात् ।**
**स्वजातिनिरपेक्षाणां जन्म जन्मपरिग्रहे ॥ (३६)**
**अतिप्रसङ्गात् ;**

प्राणादयो हि स्वभावविशेषाच्चपलताविकृतात् स्वजातिनिरपेक्षा न युक्ताः । चपलतादयश्चात्माभ्यासान्वयिनो न मातापित्रभ्यासान्वयिनः । अन्यथा मातापितृस्वभावो न स्यादसत्संपर्क्काद्विना । तस्मात् स्वजातिनिरपेक्षान्मातापितृदेहमात्रादेव न भावः । यदि तु मातापितृस्वभावेऽभिलाषादयः प्रागासन् । तदा मातापित्रादिशरीरमपि कारणमिति युक्तं ।[7]

---

[1] T. व्यवहारविषयः [2] T. तेभ्यः शरीरेन्द्रियबुद्धिभ्यश्चैतन्यं [3] T. ०परिणामता
[4] T. ननु न [5] T. ०शरीरान्वय [6] T. त्यक्तः—यतः [7] T. न युक्तं

**अथाभ्युपगम्यते जन्मपरिग्रहः परलोकनिरपेक्ष एव (।) तदा जन्मपरिग्रहेऽभ्युपगम्यमानेऽतिप्रसङ्गः। सर्व्व एव कार्यकारणभावो विशीर्येत। स चानुमानपरिच्छेदादवधार्यः।**

अभ्यासपूर्व्वकाः सर्व्वे प्राणापानादयो यदि। स्वाभ्यासरहिताश्च स्युः कथन्नाम निराश्रयाः ॥३८४॥

**एष हि कार्यस्य धर्म्मो यत् कारणमपहायान्यथा न भवनं। अन्यथा स तस्य न जन्यः। अन्वयव्यतिरेकाभ्यां जन्यजनकभावः। तस्मात् समानजातीयाभ्यासम्भविचक्षुरादिपूर्व्वका एव चक्षुरादयः।**

**ननु (।)**

धूमो धूमान्तरोत्पन्नो न धूमादेव सर्व्वथा। शालूकादपि शालूकः कथम्भवति गोमयात् ॥३८५॥

**तथा (।)**

चित्रं चित्रकराज्जातं पतत्रिष्वपि किन्तथा।

भ्यासाद् (हि) विशेषो यः सोन्यथापि भविष्यति ॥३८६॥

**तदप्यसत्।**

धूमो धूमाद् यथाभूतः सोन्यतोपि न जायते।

अभ्यासात्तु विशेषो यः स जन्मादौ तथा स्थितिः ॥३८७॥

**य एव विशेषः श्रुताभ्यासादिजन्मकः स एव तथाभूत इह जन्माभ्यासव्यतिरेकेपि दृश्यते (।) न च तस्याभ्याससङ्गमो बाध्यते। अतीताभ्यसस्यान्यत्रापि तदानीमुपलब्धुमशक्यत्वात्। ग्रामान्तरादागताभ्यासवत्। तत एव नापारलौकिकाभ्यासपूर्व्वकत्वमपि साधयतीति कारणेन सह कार्यस्य प्रतिबन्धात्। अदृष्टकारणस्यापि तत्कार्यत्वात्। देशान्तराभ्यासपूर्व्वकत्वमपि साधयतीति। कारणेन सह कार्यस्य प्रतिबन्धात्। अदृष्टकारणस्यापि तत्कार्यत्वात्। देशान्तराभ्यासपूर्व्वकपरिज्ञानवत्। तदत्र तौतोपाख्यानमायातं।**

कश्चित् तौतः किलान्येन पृष्टः कथय सम्भवं।

मातुर्दीर्घविषाणस्य वृषभस्य कथं स्थितिः ॥३८८॥

स प्राह कुक्षेर्जायन्ते[1] न मातुर्महिषा अमी। हट्टागतानामेषान्तु मूल्येन क्रयमात्रकं ॥३८९॥

**तथाभूतमेवेदं लोकायतमतं।**

**अथवा (।) अतिप्रसङ्गादिति यदि जन्मान्तरादागतिमन्तरेण तेभ्य एव महाभूतेभ्यश्चैतन्यं कार्यमुद्भवति (किन्न सकलप्राणिमयम्भवति। परिणतिविशेषसद्भावादिति) चेत्। स एव परिणतिविशेषः कस्मान्नेति समानः पर्यनुयोगः।**

**अथानादिः परिणतिः परम्पराविशेषो वानुपलक्ष्यमाणः[2] कश्चिदस्ति यतः केचित् प्राणिनो नान्ये। तदप्ययुक्तं।**

यदि परिणतेर्विशेषस्स दृश्यते नेति कल्पना कैषा।

दर्शनयोग्यमदृश्यं सद्व्यवहारस्य नो विषयः ॥३९०॥

**यदि स परिणतिविशेषो भवेदुपलभ्येत। अथ कार्यदर्शनादेव कल्प्यते तथा सति**

---

[1] T. अधिकः—कुक्षेर्

[2] T. परस्परविशेष उपलक्ष्यमाणः

दृष्ट एवाभ्यासः कल्पनीयः अदृष्टकल्पनागौरवात् । ततः साधूक्तं(।)समानजातीयभावपूर्व्वकाः[1] प्राणादयः ।

भवतु कार्यात् कारणानां सिद्धिः पूर्व्वंजन्मभाविनां परजन्मिनान्तु कथमनुमानं(।)तदाह ।

**यद् दृष्टं प्रतिसन्धानशक्तिमत् (।)**
**किमासीत् तस्य यन्नास्ति पश्चाद् येन न सन्धिमत् ॥ (३७)**

पूर्व्वपूर्व्वस्य हि प्रतिसन्धानं निश्चितं अनुऽमानानुमितानुमादिभिः ।

ननु चापलादिकमचापलत्वात् तदभ्यासतो भवति अस्पन्दमन्दतादिलक्षणात् । सा तु महाभूममात्रकादेव । ततस्ततोपि भावे धूममद्धूमान्तरभावेपि न सर्व्वदा प्रबन्ध एव[2] । तत उच्छेदोपि धूमवदेवेति नानन्ततापि प्राणिनां अपूर्व्वसत्त्वप्रादुर्भावश्च दोषाः । (तदपि नास्ति ।)[3]

मन्दप्रवृत्त्यभ्यासेन मन्दताप्यस्ति जन्मिनां । ततस्तत्पूर्विका सापात्यनादिभवचक्रकं ॥३९१॥

न खलु प्राणिनां स्वभावत एव मन्दतादयः प्रकाराः (:।) अपि तु समानजातीयाभ्यासात् । यथैव चपलादयस्तदभ्यासतस्तथा मन्दता(द्य)पि[3] कौसीद्याभ्यासादिति सिद्धमनादित्वं संसारस्य । स्वापाद्यभ्यासतो हि मन्थरता चक्षुरादीनां ततश्चपलचक्षुरादिकः सुप्तप्रबुद्धश्चपलचक्षुरादिना युज्यतेऽन्योन्येनेति । ततो जन्मादावपि[4] सुप्तप्रबोधवदेवाभिमुखीभूतवासनाप्रबोधस्य चक्षुरादियोगः । कथमन्यशरीरगतं चक्षुरन्यशरीरे प्रतिसन्धीयते । कथं द्रव्यान्तरगता शक्तिरन्यत्र सञ्चारिणी ।

मन्त्रतन्त्रादिसामर्थ्याद् गुडादौ विषशक्तयः । तथैत्र कर्म्मसामर्थ्यादन्यदेहेक्षशक्तयः ॥३९२॥
यथा स्वप्नान्तिकः कायस्त्रासलंघनधावनैः । जाग्रद्देहविकाराय (तथा)[5]जन्मान्तरेष्वपि ॥३९३॥
अथासौ सत्यताहीनः सुतरामेव शोभनं । असत्योपि विकराय यत्र सत्ये तु का कथा ॥३९४॥
व्यवहारमात्रकमिदं सत्यतासत्यतेति च । स्वरूपसाक्षात्करणे सत्यतादीति दुर्घटं ॥३९५॥

तस्माद् यत् प्रतिसन्धानशक्तिमत् पूर्व्वपूर्व्वमुपलब्धं तस्य किमासीदधिकं यत् पश्चान्नास्ति तदभावात् पश्चादसन्धिमत् । कारणवैकल्ये हि कार्यस्याभावः सकले तु कलावति कारणे कार्यमनुत्पत्तिमदिति व्याहतं ।

ननु क इवात्र व्याघातः । नन्वयमेव[6]यः कार्यकारणभावाभावः ।

सर्व्वावस्थासमानेपि कारणे यद्यकार्यता । स्वतत्रं कार्यमेवं स्यान्न कार्यन्तत्तथा सति ॥३९६॥

कारणपरतन्त्रं हि कार्यं तत्समर्थं कारणं हठादेव जनयति । तथाऽप्रभावे न कार्यम्भवेत् ।

अथ तदभावे न भवतीति कार्यं तदभावे न भवतीति कुतः । ननु तद्भावेऽवश्यं भवतीत्येतदपि कुतः । त(था)[7]त्वेन परिच्छेदात् तदभावे न भवतीत्येतदपि परिच्छिद्यत एव । सर्व्वदेति कुत इति समानमुभयत्र । तस्माद् यथा दृश्यते तथाभ्युपगन्तव्यं । उभयञ्च दृश्यते

---

[1] T. समानजातीयपूर्व्वकाः

[2] T. ततस्ततोऽपि न पूर्वजन्मसिद्धिः । तस्माद् अनादिजन्मप्रबन्धो न सिद्धः । अनादित्वाभावे हि धूमादिव धूमान्तरसम्भवेऽपि न सर्व्वदा प्रतिबन्ध (अनुध्रुवसंबंध) एव ।

[3] T. [4] T. आदिजन्मन्यपि [5] T. [6] T. ननु नायमेव [7] T.

तद्भावेवश्यं भवत्यसाकल्येन भवत्येवेति तदुभयमङ्गीकर्त्तव्यं। एवमदृष्टो[1] न कार्यकारणभाव इति चेत्।

व्याप्त्या न व्यतिरेकस्य नान्वयस्यास्ति दर्शनं। कार्यकारणभावस्य कथमस्यास्ति दर्शनं ॥३९७॥

यदि व्याप्त्या न दर्शनमिति न कार्यकारणभावसिद्धिः। एवन्तर्हि न कस्यचिदन्वय-व्यतिरिक्तस्य [2]दर्शनमित्युक्तमेतत् (।) 'स्वरूपस्य स्वतो गतिरि'ति।

'न परलोको नेहलोको न परलोकबाधनं न[3] संदेहो न महाभूतपरिणतिरित्यादि' विज्ञाप्तिमात्रकमेव। अथापि व्यवहारादेतत्। एवं परलोकोपीति।

यद्यद्वैतेन तोषोस्ति मुक्त एवासि सर्व्वथा। वर्तते व्यवहारश्चेत् परलोकोपि चिन्त्यतां ॥३९८॥

सत्युपप्लवे वरमेवमुपप्लवः प्रशमस्य स्वर्गाद्यनुकूलत्वात्। रागाद्युपप्लवो हि सकल-समीहित[4]सज्जनत्वादिभावहानिमेव विधत्ते। तथा हि। चक्षुरादिरागादिभेदाः सकला एवानादिवासनाबलावलम्बिनो विज्ञप्तिमात्रतो न भिद्यन्ते। ततश्चक्षुरादिविकलस्यापि जन्मान्तरे पुनरविकलचक्षुरादिता। ततो जन्मपरम्परास्वयमेव प्रकारो नादिता च संसारस्य। यावच्च नोपप्लवप्रशमस्तावती तस्यानन्ततापि (।) सत्यतायामपि चक्षुरादीनां बाह्यर्थत्वेवा नादिरसौ स्वभाव इति संसारानाद्यनन्त(त)ा।

## ( न महाभूतोद्भवा बुद्धिः )

ननु महाभूतविशेषः कठिनत्वादय उपलभ्यन्त एव। ततस्तद्विशेषान्महाभूतोद्भवत्वेपि नातिप्रसङ्ग इति। ततः कठिनत्वादिविशेष एव बीजात्मकस्तत एव प्राणिसम्भव इति। उक्तमत्र 'कार्यकारणभाव एव न स्यादि' ति।

अपि च।

**न स कश्चित् पृथिव्यादेरंशो यत्र न जन्तवः।**
**संस्वेदजाद्या जायन्ते सर्व्वबीजात्मकं ततः ॥ (३८)**

न खलु कठिनत्वादिविशेषविभागेन प्राणिविभागोत्पत्तिः सर्व्व(त्र)[5] प्राणिदर्शनात्। संस्वेदजादयोपि हि प्राणिनो न खलु विभागेन न दृश्यन्ते। ततः कठिनत्वादिकृतो न विभागः। कर्मैव चेतनालक्षणं यदि परमवशिष्यते। अथकाष्ठा[6]द्यन्वयिनी प्राणिजाति-रुपलभ्यत इति वदेत्। तदा समानजातीयं सर्व्वं तद्रूपप्राणिमयं भवेद् (।) यत्परिम्ना[7] व्यवस्थापितामम्भो भवति। तत् सकलं तद्रूपप्राणिमयं भवेत् (।) कुतो वर्ण्णसंस्थान-वैलक्षण्यं प्राणिनां।

तथा हि रक्तशिरसः पीतकायादयः परे।
जलादिप्राणिनो दृष्टाः स आकारः कुतो भवेत् ॥३९९॥

तद्रूप बीजात् कमलादिभेदः किंदृष्ट दृष्टो (ऽ)[8]नियतः कदाचित्।
न प्राणिभेदो नियतोस्ति बीजात् सन्त्यत्र कर्माणि नियामकानि ॥४००॥

[1] T. एवमदर्शनात् [2] T. कस्यचिदुभयव्यतिरिक्तस्य [3] T. परलोकसाधनं
[4] T. ०हि हित० [5] T. [6] T. काठिन्या० [7] T. ब्चग्स्-नस्
[8]

**तत्स्वजात्यनपेक्षाणामक्षादीनां समुद्भवे ।**
**परिणामो यथैकस्य स्यात् सर्व्वस्याविशेषतः ॥३९॥**

[1]अपि च (।) मनोविज्ञानाश्रितानीन्द्रियाणि स्वकार्यकारीणि न तु मनोविज्ञानमेव तदाश्रितं। ततो मनोविज्ञानादेवेन्द्रियाणां सम्भवो न भूजलादिभ्य इति दर्शयति। 'प्रत्येकमि'त्यादि[2] ।

अथवा मनोविज्ञानं न तावन्न तत्समुदायरूपशरीरादुत्पत्तिमत् । प्राणापानादयस्तु महाभूतपरिणतिस्वभावा एव मातापितृबीजमात्रकात् । मनोविज्ञानञ्च संसारि नेन्द्रियादयः । यतः (।)

छेदसन्धानवैराग्यहानिच्युत्युपपत्तयः । मनोविज्ञान एवेष्टा उपेक्षायां च्युतोद्भवौ ॥४०१॥

(इत्युक्तम् ।)[3] ततो मनसः संसारित्वं न भूताश्रितत्वं । यतः ।

**प्रत्येकमुपघातेपि नेन्द्रियाणां मनो मतेः ।**
**उपघातोस्ति भङ्गेस्याः तेषां भङ्गश्च दृश्यते ॥ (४०)**

मनोमतेर्हि भङ्गे भयशोकहर्षक्रोधादिना चक्षुरादिविकारदर्शनाच्चक्षुरादीनि मनोविज्ञानाश्रितानि (।) ततो जन्मादावपि तदाश्रितान्येवेति भवान्तरप्रसिद्धिः । न चैवं मनोविज्ञानं शरीराश्रितं । मनोविज्ञानविकार्यपंचेन्द्रियसमुदायकार्याश्रितत्वात् ।

ननु यदि नाम चक्षुरादीनि मनोविज्ञानविकार्याणि । तत एव तूत्पत्तिरिति कुतः(।) न ह्यग्नेर्विकारमासादयद् घटादि वस्तु वह्नेरेवोत्पद्यते ।

अत्रोच्यते ।

घटादिरन्यथा दृष्टस्ततो न तत एव सः । नान्यथा तु पुनर्दृष्टमिन्द्रियन्तद्विकारतः ॥४०२॥

प्रासादादिलक्षणलक्षितं हि सकलमेवेन्द्रियमुपलभ्यते । न तु घटादिकमग्निकृतविकारमेव । ततो न घटादिर्दृष्टान्तः ।

अथ यद्यपि नामेदानीं मनोविज्ञानमाश्रयो दृष्टोन्यदापि तथैवेति कुतः । तदेतदसत् ।

वह्नेर्यद्यपि धूमो दृश्यते तत एव सः । अन्यदापीति नाध्यक्षं प्रमाणमिह कस्य चित् ॥४०३॥

तस्माद् (।)

यथा धूमेग्निपूर्व्वत्वगतिस्तत्प्रत्यभिज्ञया (।) तथा मनोविकार्यत्वगतिर्जन्मादिभाविनो ॥४०४॥

जन्मादौ चक्षुरादीनि चापलादियोगिमनोनुरूपविकार्यतया प्रत्यभिज्ञायमानानि तथैव तानीत्यवगमो युक्तः । यथा सकृदग्निपूर्व्वकः क्वापि तत्प्रसवो दृष्टः प्रदेशान्तरे तत्पूर्व्वकतयैव प्रत्यभिज्ञायमानोस्ति[4] ।

पुत्रादीन्द्रियवैकल्येप्यस्ति मानसविक्रिया । तदाश्रितं मनः प्राप्तं नियमो नोभयोरपि ॥४०५॥

यदि सर्व्वत्र पुत्रादिचक्षुरादिविकारे न विक्रियेति नियमाभावात् पुत्रादिचक्षुरादीनीति नाश्रयः । स एव नियमाभावो दृष्ट उभयोरपि । नात्मचक्षुरादिविकारेपि विकारो मनसः

---

[1] T. संग्रहः (बसद्-बऽो)—अधिकः [2] T. प्रत्येकमुपघातेऽपि इन्द्रियाणामित्यादि
[3] T.
[4] T. अधिकः—नान्यत्रास्तीत्यवगमवत्, तस्माद् ।

**कस्यचिदिति न तान्यपि नाश्रय इतीन्द्रियाणां नाश्रयत्वं। एवन्तर्हि मनोविज्ञानमिन्द्रियाणामाश्रय इन्द्रियाणि तु न मनस इत्यनाश्रितं मनः प्रसक्तं। षण्णामपि चक्षुरादिविज्ञानानामाश्रयेण केनचिद् भवितव्यं।**

इन्द्रियं मनसोऽज्ञानात् तस्माच्चास्ति मनोमतिः।
ततस्तत्राऽपि स्याच्चेत्यनाद्यनन्तभवस्थितिः ॥४०६॥

यदि मनोमतिरपीन्द्रियविकारतो न विकार्या एवम्।
नेत्रादिनाशेऽनेकत्र मनो दैन्यादि दृश्यते। तत्राश्रितं कुतस्तेन नेहाशोभनमूह्यते ॥४०७॥

**नैतदस्ति। नावश्यमाश्रयः सर्व्वस्य कश्चिदिति नियमोस्ति।**

**अथ निर्बन्धस्तदप्युच्यते।**

**तस्मात् स्थित्याश्रयो बुद्धेर्बुद्धिमेव समाश्रितः।**
**कश्चिन्निमित्तमक्षाणान्तस्माद‍क्षाणि बुद्धितः॥ (४१)**

**तस्माद् बुद्धेः स्थित्याश्रयो यः स निमित्तमक्षाणां चेतनालक्षणकर्म्मसञ्ज्ञितः। स एव तर्हि चक्षुरादीन्द्रियं समाश्रित इति तदाह। स च बुद्धिमेव समाश्रितो नेन्द्रियाणि। न हीन्द्रियाणि तस्याश्रयः। चेतना कर्म चेतयित्वा वाक्कर्म्मेति वचनात्। चेतना चेदं चेदं चेत्येवमात्मिका। सा च पूर्व्वानुसन्धानरूपा[1] बुद्धिमेवाश्रित्य भवति न कायाश्रिता। सा च काचिदेवेन्द्रियाणां स्वाश्रयो[2] न सर्व्वा आरूप्यधाताविन्द्रियाणामभावात्। शरीरसतृष्णेन हि कर्म्मणा शरीरेन्द्रियाणां जननं। तत्राभिरतियोगात्। तृष्णाविषये हि लब्धेभिरतिरुत्पद्यत इति (।) तस्मादक्षाणि बुद्धितो न त्वक्षेभ्यो बुद्धिरित्युपसंहारः। तस्मान्मनस एव कारणत्वमिति मनसा पूर्व्वपूर्व्वजन्माक्षेपः।**

**यदि तर्हि मनोमतेरहमित्येवमात्मकल्पनारूपाया इदानीन्तनं जन्म परत्र तर्हि जन्मनि कः संप्रत्ययहेतुः कथं वा कायाश्रितं मन उक्तमित्याह।**

**यादृश्याक्षेपिका सासीत् पश्चादप्यस्तु तादृशी।**
**तज्ज्ञानैरुपकार्यत्वादुक्तं कायाश्रितं मनः॥ (४२)**

यादृश्यात्मग्रहस्तासां मनोबुद्धिरनादिजन्मप्रबन्धस्याक्षेपिका संसारिणा[3]मासीत् (।) तादृशी पश्चादप्याक्षेपिका भवतु। नान्यथा तया भाव्यमिति। स एव पश्चादपि जन्मपरिग्रहः। यो हि यत्करणस्वभावाविशिष्टस्वभावः स करोत्येव तत्(।) तद् यथा धूमजननस्वभावा विशिष्ट एवापरः सार्द्रेन्धनादिसङ्गतः कृशानुः। अन्यथा न कार्यकारणभावो न व्यवहार इत्यनीहं जगत् स्यात्।

## (ख) विज्ञानसिद्धिः

अथ मनसोपि कायाश्रितत्वं[4] प्रतिपादितं **भगवता** अन्योन्यानुविधायित्वं कायचित्त-

---

[1] T. अनुसन्धानरूपा पूर्वा　　[2] T. आश्रयो
[3] T. संसारौघपतितानां　　[4] T. अधिकः—न

योरपि ववता। अत्र परिहारः। कायविज्ञानैरुपक्रियमाणत्वादुक्तं कायाश्रितत्वं मनसो भगवता। न तु साक्षात् कायस्तस्याश्रयः चक्षुरादिविज्ञानानामिव चक्षुरादीनि। तस्मादहङ्कारलक्षणं[1] मनो न चक्षुरादीन्द्रियाश्रितं न देहाश्रितं(।)समानजातीयमनःसमाश्रितत्वमेवास्य युक्तं। आरूप्यधातावपि तस्य भावात् तस्य च सम्भवप्रतिपादनात्।

मा भूद् वाक्षैर्विना बुद्धिस्तथापि न परलोकाभावः अन्योन्याश्रयस्य भावात्(।)तदाह।

यद्यप्यक्षैर्विना बुद्धिर्न तान्यपि तथा विना।
तथाप्यन्योन्यहेतुत्वं ततोप्यन्योन्यहेतुके ॥ (४३)

यथैव हि भवतोभ्युपगमः शरीरमन्तरेण न बुद्धिरिन्द्रियात्मकं तथा दर्शनादिति। तथा तान्यपीन्द्रियाणि न मनोबुद्धिं विना इत्यभ्युपगम्यताम्(।) अभ्युपगमनिबन्धनस्य तथा दर्शनस्य समानत्वात्। तथा सत्यन्योन्यहेतुकत्वं प्रसक्तमुभयसन्तानस्य परस्परमुपकारात्। अन्योन्यहेतुकयोश्च सामग्री सामग्र्यन्तरादुत्पत्तिमती। ततोपि सामग्रीतः पूर्व्वके परे च कायमनसी अन्योन्यहेतुके मध्यावस्थावदिति ज्ञातव्यं।

यदि च काय एवाश्रयो मनोबुद्धिर्न[2] सा कायस्य। ततः कायाद् बुद्धिर्भवन्ती क्रमवतोऽक्रमाद् वा भवेत् प्रकारान्तराभावात्।

तत्र न तावदक्रमाद् यतः।

नाक्रमात् क्रमिणो भावो नाप्यपेक्षा (ऽ)विशेषिणः।
क्रमाद्भवन्ती धीः कायात् क्रमन्तस्यापि शंसति ॥ (४४)

इयं हि मनोबुद्धिः क्रमवती। अन्यथाहमिति स्वाकारस्य ग्रहणेतीतवर्त्तमानानागतसकलस्वस्वभावग्रहणमिति सकलजन्मग्रहणप्रसङ्गः।

अथावस्थानामग्रहणे न पूर्वापरव्याप्तिप्रतीतिः।

अवस्था(ऽ)[3]ग्रहणेऽवस्थातृप्रतीतिः कथं भवेत्।
व्याप्याप्रतीतावन्यस्य व्यापकत्वाप्रतीतितः ॥४०८॥

यदि हि व्यापिन्यवस्था[6] न प्रतीयते। व्याप्याप्रतीतेः कथमसौ व्यापकस्तथा प्रतिपन्नो भवति। न हि तेन रूपेणाप्रतीयमानोपि तथा भवति। प्रतीतिरेव हि तत्त्वमन्यत्त्वं वा व्यवस्थापयति। व्यापकत्वञ्चेदस्य न प्रतीयते। तदा तदन्येन रूपेण प्रतीयत इत्यापन्नं(।) ततः कालान्तरस्थायितास्य नास्तीति (न)[4]कालान्तरता प्रतीत्यन्तरस्य (।)ततः क्रमवती प्रतीतिः। ततो नाक्रमात् क्रमिणो भावः।

ननु यदि नामाक्रमं कारणं तथा भूतेनैव कार्येणापि भवितव्यमिति कुतः। न हि कारणादभिन्नमेव कार्यं। विलक्षणस्यापि दर्शनात्।

अत्रोच्यते।

अक्रमाद् यदि कार्यं स्यात् तदैव सकलं भवेत्।
अन्यदा तु स नास्त्येव तदा परिसमाप्तितः ॥४०९॥

---

[1] T. तस्मात् स्वभावलक्षणं [2] T. मनोबुद्धेर्न [3] T.
[4] T. यदि भूतभविष्यतोः (व्युङ-व दङ् व्युङ्-वर्-ऽग्युर्-व ऽफ्यिर्)

एवं हि तत्कार्यंकारि यदि[१] कार्यकाले गृह्येत । न ह्यप्रतीयमानं तदा तस्य कारणं । प्रतीतिश्चेत् तदा एकत्वाद् विनाशावधि प्रतीतिरिति तदैव विनष्टः स्यात् । एवं हि तस्याक्रमता । ततो विनष्टादपरं कार्यन्न भवेदेव । भवद् वा न तत् कार्यं । अथ क्रमेण प्रतीयमानं क्रमवतः कारणं । तथा सति नाक्रमं । न हि नीलतया प्रतीयमानमनीलं । अथवा(।)

नोच्यते कारणात् कार्यन्तद्रूप[२]मुपजायते । अन्वयव्यतिरेकाभ्यां कार्यकारणतेति तु ॥४१०॥

कारणविलक्षणमपि कार्यं कार्यमेव । अन्वयव्यतिरेकानुविधानलक्षणत्वात् कार्यकारणलक्षणतायाः[3] । यत्र त्वन्वयव्यतिरेकौ न भवतः तन्न कार्यं कारणञ्च । यच्च तथाभूत एव कारणे न भवति न[४]तस्य कारणानुविधायिता ।

ननु नतु तद्भावेनोत्पद्यते इत्येव तद्भावे तु भवत्यवश्यमिति[५] क्वोपयोगोस्य ।

तद्भावेपि न भावश्चेदभावे (ऽ)[६]भाविता कुतः ।
तदभावप्रयुक्तोस्य सोऽभाव इति तत्कुतः ॥४११॥

यद्यसौ समर्थोपि कारणे न भवति (।) कारणमेव तस्य तन्न स्यात् । कुतो वैतदवगम्यते तदभावप्रयुक्तोऽस्याभाव इति । यथैव तदवस्थ एव कारणे (सति)[६] स्वयमेव न भवति । तथा तदभावेपि स्वयमेव न भविष्यति स्वातन्त्र्यात् (।) तस्यापरतन्त्रत्वे कारणस्य (सति)[६] सामर्थ्येऽवश्यमेव भवेदिति ।

अभावो हि पदार्थाना स्वयमेव भवेदपि । भावस्तु परतन्त्रत्वात् कथ हेतोर्भवेन्न सः ॥४१२॥

अभावो हि निर्हेतुकत्वात् स्वयमेव भवतीति युक्तं । भावस्तु हेतुपरतन्त्रत्वात् समर्थे हेतौ न भवतीति न युक्तमेतत् ।

ननु कार्याभावः स्वतन्त्रत्वात् कारणे सत्यपि च (? न)[७] भवतीति युक्तमेवैतत् । एवं तर्हि तदभावेऽभाव इति न कारणाभावप्रयुक्तोऽभाव इति कथं भवेत् कार्यस्य । ततः स्वयमेव न भवेत् । यश्च स्वयमेव[८] न भवति नासौ नियम्यते तेन (।) ततो यथा स्वयं न भवति तथा भवेदपि (।) ततो न कार्यं । यदा तु कारणे सति भवेदेव तदा स्वरसनिरोधेऽपि अपरापरक्षणोत्पत्तेस्तदभाव एव सन्तानोच्छेद इति कारणप्रतिबद्धत्वं । तस्मान्नाक्रमात् क्रमिणो भावः ।

अथाक्रमादपि सहकारिणं क्रमिणमपेक्षमाणात् क्रमवत् कार्यमिति । तदपि नास्ति । नास्त्यपेक्षा(ऽ)विशेषणोऽनाधेयविशेषस्य क्वचिद् विशेषलाभाय नापेक्षा । न तस्य विशेषोऽस्तीति । विशेषे वा(ऽ) नित्यताव्यतिरिक्तविशेषाभ्युपगमे च तादृशोऽपेक्ष्य कार्यन्ततः एव भवन्न ततो नित्यात् । तस्यासौ विशेष इति चेत् । न (।) विशेष इति विशेषकरत्वे

[१] T. एवं न स्यात् कार्यं यदि
[२] T. स्वपर (=रङ्-गृशन् इति रङ्-बृशिन् स्थाने) प्रमादपाठः
[3] T. कार्यकारणतायाः  [४] T. त्यक्तः—न  [५] T. ननु तदभावे नोत्पद्यत इत्येव कार्यं न भवति । तद् अपि (=यङ्? योद्=भावे) भवत्यवश्यमिति  [६] T.
[७] T.  [८] T. यो यस्य (=गङ. गि ? रङ. गि=स्वयं) निरोध्यः

**विशेषप्रत्ययकरत्वं वा। न विशेषकरत्वं तस्याविशेषात्। विशेषाद् विशेष इति तदेवा-नित्यत्वं व्यतिरेके पूर्व्वकः प्रसङ्ग इति**

**अथ विशेषप्रत्ययहेतुत्वं। तदप्ययुक्तं।**

नैवाभावे (विशेषस्य) विशेषप्रत्ययोदयः। तथा चेद् भ्रान्तिरेवेयमिति व्यर्थः परिश्रमः ॥४१३॥

अविशेषप्रतीतौ हि स नित्य इति गम्यते।

विशेषे(ऽ)[१]भ्रान्ततायाञ्च नित्यतायां प्रमा कुतः ॥४१४॥

अविशेषप्रतीतिश्चेदपेक्ष्यत्वे[२] कथ भवेत्। औदासीन्यं यतस्तस्य विशेषोपि न विद्यते ॥४१५॥

विशेषसम्भवे तस्य तत्रापेक्षेति युक्तिमत्। एतदर्थमपेक्षेति व्यवहारोस्ति लौकिकः ॥४१६॥

**तस्मान्नास्त्यपेक्षा(ऽ)[१]विशेषिण इति युक्तं।**

कायात् क्रमाद् भवन्ती धीः क्रम कायस्य बोधयेत्।

अन्यथा यत्कृतस्तस्याः क्रमो हेतुरसौ स्फुटः ॥४१७॥

पूर्व्वपूर्व्वानुभवतः सा मनोधीः प्रवर्त्तते।

सोपि पूर्व्वत एवेति सो पीत्य[३]स्यानवस्थितिः ॥४१८॥

**अथ पूर्व्वपूर्व्वबुद्धिसापेक्षः कायः क्रमेण बुद्धिं जनयति। तथा सति कायस्य विशेषेण भवितव्यं। ततः कायस्य बुद्धिसहितस्य पूर्व्वः पूर्व्वस्तथाभूत एव कायो हेतुरिति प्राप्तः।**

**तथा सति (।)**

**प्रतिक्षणमपूर्वस्य पूर्व्वः पूर्व्वः क्षणो भवेत्।**
**तस्य हेतुरता हेतुर्दृष्ट एवास्तु सर्व्वदा ॥ (४५)**

**य एव खलु बुद्धिसहकारी देहः परस्य पूर्व्वः पूर्व्व उपलब्धो हेतुः स एव सर्व्वदा मध्यावस्थावज्जन्ममरणयोरपि हेतुरिति सिद्धं। अन्यथा व्याप्तेरप्रतिपत्तेर्हेतुरेव कश्चित् कस्यचिन्न भवेदुपायान्तराभावात्।**

तस्मात् सकृत् ततो दृष्टस्तत एवान्यदापि सः। कार्यकारणभावोयमेवमेव प्रसिध्यति ॥४१९॥

**न च कार्यकारणभावो[४] नाभ्युपगम्यते व्यवहारिभिरिति प्रतिपादितमेतत् पुरस्तादिति विरम्यते।**

**ननु यथा मध्यावस्थायां सविज्ञानककायपूर्व्वकत्वेन कायस्योपलब्धेः पूर्व्वकोपि जन्मा-दिकायो विज्ञानसहितकायपूर्व्वक इति जन्मान्तरविज्ञानादेव[५] विज्ञानमैहिकादपि[६] भावि-जन्मविज्ञानमिति परलोकप्रसिद्धिः। तथा हेत्वन्तराद् विपर्ययोपीति परपक्षप्रसिद्धिः। तथा हि।**

---

[१] T.

[२] T. चेत्तथापेक्षा

[३] T. तस्मादन्येन सोऽपीत्य

[४] T. कार्यकारणे

[५] T. जन्मिविज्ञानादेव (गृशन् = अन्तरः, अन्यः इतिस्थाने चन् = वत्, इति प्रमादपाठः प्रतिभाति)

[६] T. जन्मिना विज्ञानादेव सत्येतद्विज्ञान ऐहिकादपि।

यद् यन्मरणविज्ञानं न तज्जन्मान्तरानुगं। तच्चित्तत्वाद् यथा वीतदोषस्य मृतिवेदनं[1] ॥४२०॥

यन्मरणविज्ञानं तच्चित्तान्तरं न प्रतिसन्धत्ते यथा वीतरागमरणचित्तं। मरणचित्तं च जमान्तरप्रतिसन्धानकारितयेष्टं पृथग्जनचित्तमिति न प्रतिसन्धिरस्ति।

अथायं हेतुरेव न भवति विपर्ययेण प्रतिबन्धात्। विपर्ययोपि तर्हि न हेतुरनेन प्रतिबन्धादिति समानं। न समानं। यतो यो येन विरुद्धः स तदभावं साधयेत्। यो येन सम्बद्धः स तद्भावं(।)न च मरणचित्तस्य प्रतिसन्धानविरोधः।

यतः।

चित्तान्तरस्य सन्धाने को विरोधोन्त्यचेतसः।
तद्वदप्यर्हतश्चित्तमसन्धानं कुतो मतं॥ (४६)

अन्त्यचेतसो हि चित्तान्तरप्रतिसन्धानेऽसत्त्वेन साध्ये को विरोधः तेन सह तद्विषये (न)[2] वा येन तस्याभावः साध्यते[3]। को विरोधः(।) न कश्चित्(।)[4]न सहानवस्थान-लक्षणः परस्परपरिहारलक्षणो वा। मरणचित्तत्वागमे प्रतिसन्धानविपर्ययस्यादृष्टेः। अत एव तत्परिहारेणावस्थानस्यादृष्टिः। अदृश्यत्वाज्जन्मान्तरप्रतिसन्धानस्य। ततो मरणचित्तत्वं न प्रतिसन्धानविरुद्धमुभयरूपस्यापि विरोधस्यादृष्टेः। ततः प्रतिसन्धानाभावं न साधयति।[5] कार्यत्वन्तु प्रतिसन्धानाभावविरुद्धं(।) ततस्तदभावसाधनाय समर्थमिति विपर्ययात् प्रतिसन्धान-प्रसिद्धिः (।) न च परस्परविरुद्धार्थाव्यभिचारिणावेकत्र स्त इति प्रतिपादयिष्यते।

नन्वत्र परस्परपरिहारस्थितिलक्षणो विरोधोस्त्येव कथं विरोधाभावः। यतः।

अर्हन्मरणचित्तस्य प्रतिसान्धिर्न विद्यते। प्रदीपस्येव निर्वाणं विमोक्षस्तस्य चेतसः॥४२१॥

प्रदीपस्येव हि निर्व्वाणमर्हत्सम्मतपुरुषमरणचित्तस्य(।)ततस्तत्परिहारेण व्यवस्थितं मरणचित्तमिति प्रतीतेर्विरोधप्रसिद्धिरिति विरोधाभावो न प्रसिद्धः।[6]

तदप्यसम्बद्धं। तदपि नामार्हतश्चित्तं कुतः प्रमाणादसन्धानं मतं भवतां(।)नात्र भवतां प्रमाणमस्ति तद्वाधनायैव भवतामुद्यमात्। यद्यर्हन्न्नह्यभ्युपगम्यते। ततस्तस्य क्लेशवि-संयोगकृतमसन्धानं नान्यथा। स च क्लेशविसंयोगः पृथग्जनानां नास्तीति कुतो(ऽ)[7] प्रतिसन्धानमरणचित्तत्वेपि[8]। न हि मरणचित्तत्वं प्रतिसन्धानविरोधि क्लेशविसंयोगस्य प्रतिसन्धानेन विरोधाभ्युपगमात्।[9] स च नाभ्युपगतः।

ननु च सिद्धान्तादेव गम्यते विरोधः। न(।)सिद्धान्तस्यार्हन्मरणचित्त एव विरोध-प्रतिपादनाय वृत्तेः।

सिद्धान्तो हि न सर्व्वस्य विरोधस्य विधायकः।
मृते चित्तस्य सन्धानं क्व चित्तेनोपपादितं॥४२२॥

[1] T. मृत्युवेदनं [2] T. [3] T. त्यक्तः—साध्यते, येन तस्याभावे को विरोधः
[4] T. बम्-पो द्गु-प (षष्ठाह्निकं) इतः प्रारभ्यते
[5] T. अधिकं—कार्यत्वन्तु प्रतिसन्धानाभावासिद्धं
[6] T. विरोध-प्रसिद्धेर्विरोधभावो न न प्रसिद्ध इति चेत् [7] T.
[8] T. चित्तत्वमपि। [9] T. क्लेशाविसंयोगे प्रतिसन्धानाभावेऽभ्युपगमात् तदाह।

अथ प्रमाणतः सिद्धिः प्रतिसन्धेर्न विद्यते । तेन तत्राप्रमाणत्वाद् विरोधस्यास्ति सम्भवः ।।४२३।।

तदप्यसत् । यदि सिद्धान्तः प्रमाणबाधितस्तदाऽप्रमाणमेव । कुतस्ततः समीहितसिद्धिः ।

**असिद्धार्थः प्रमाणेन किं सिद्धान्तोनुगम्यते ।**
**हेतोर्वैकल्यतस्तच्चेत् किन्तदेवात्र नोदितम् ॥ (४७)**

यदि न प्रमाणमेव सिद्धान्तस्तदा ततो न विरोधसिद्धिः प्रतिसन्धानेन मरणचित्तस्य(।) किमसावनुगम्यतेनुवर्त्यते (वा)[1] । न खलु (अ)[1]प्रमाणमनुवर्त्यमानमपि प्रमाणं भवति । प्रमाणं चेत् सर्व्वत्र[2] प्रमाणमिति विपर्य्ययासिद्धिः । क्वचित् प्रमाणं क्वचिदप्रमाणमिति चेत् । न (।)इच्छाया उभयोरपि वादिप्रतिवादिनोः समानत्वात् । अथाहेतुर्वैकल्यादिति[3] हेतुर्व्विरोधस्य साधको न सिद्धान्तः । हेतोर्वैकल्यतस्तदसन्धानं यदि । तदेव (हेतु)[4]वैकल्यं कस्मान्नोदितं नोक्तं हेतुत्वेन (।) किं मरणचित्तत्वादनैकान्तिको हेतुरुयन्यस्तः । अथवा हेतोर्वैकल्यतस्तच्चेत् ।' हेतोः शरीरादिलक्षणस्य मरणावस्थायां वैकल्यं यदि हेतुत्वे तु किमत्राधिकमुक्तं । अयमपि हेत्वाभास एव(।) पूर्व्वकोऽनैकान्तिकः । अयं पुनरसिद्धः । यतस्तदेवात्र हेतुवैकल्यं न विद्यते । अथवा किं तदेवात्र नोदितं । नो इति प्रतिबोधे । 'अमानोनाः प्रतिषेधवाचका' इति । किं नोदितं न दितं(।)दितं खण्डितं खण्डितमेवेत्यर्थः । वैकल्यमेवासिद्धमविकलस्य पूर्व्वकस्य मनसो हेतुत्वात् । यथा चैतत् तथा प्रतिपादितं ।

अथापि स्यात् (।) नायमसिद्धो हेतुर्हेतुल्यवैकल्यलक्षणः । तथा हि (।) सेन्द्रियः कायोऽनिन्द्रियो वा केशनखाग्रादिलक्षणो मनोविज्ञानस्याश्रयः । तथा हि कायादेवोत्पद्यते[4] हृदयलक्षणात् अन्यतो वा ।

तदयुक्तं । कायस्य द्वयी गतिः सेन्द्रियोऽनिन्द्रियो वा प्रत्येकं हेतुरन्यथा वा । न तावत्सेन्द्रियः ।

**तद्धीवद् ग्रहणप्राप्ते मनोज्ञानं[5]न सेन्द्रियात् ।**
**ज्ञानोत्पादनसामर्थ्यभेदाच्च[6] सकलादपि ॥ (४८)**
**अचेतनत्वान्नान्यस्माद्धेत्वभेदात् सहस्थितिः ।**
**अक्षवद् रूपरसवदर्थद्वारेण विक्रिया ॥ (४९)**

न तावत् प्रत्येकं सेन्द्रियः काय आश्रयः[7] । सहेन्द्रियशक्तिभिर्व्वर्त्तत इति सेन्द्रियः । इन्द्रियरूप एव शक्तिशक्तिमतोरभेदात् (।) ततश्च प्रत्येकमिन्द्रियेभ्य एव, मनोविज्ञानमुत्पद्यत इति पक्षः (।) तदाह । 'मनोज्ञानं न सेन्द्रियान्नेन्द्रियेभ्यः प्रत्येकं भवति (।) तद्धीवदिन्द्रियबुद्धिवत् प्रतिविषयं ग्रहणस्य प्राप्तेः । चक्षुरिन्द्रियानुसारि हि मनो नियमेनापरेन्द्रियानुसारि मनः स्वभावमन्यथा तद्धेतोरतत्स्वभावत्वे स कुतः स्वभावस्तस्येत्यहेतुकः स्यात् ।

---

[1] T.   [2] T. सर्व

[3] T. अथ हेतुः फलं च इति । दङ्ऽब्रस्-बुऽि(=फलं च) इति तु दङ्-ब्रल्-बऽि स्थाने प्रमादपाठः   [4] T कायहेतोरेवोत्पद्यते

[5] T. ०प्राप्तेर्मनोज्ञानं   [6] T. ०सामर्थ्यभेदान्न   [7] T. हेतुः

नन्वेकमपि कारणं तदतत्स्वभावकार्यजननस्वभावमुपलभ्यते। यथा वन्हिर्धूमजनन-स्वभावः। सामग्रीभेदश्च विद्यते रूपसामग्रीसमवधाने चक्षुश्च चक्षुर्विज्ञानं जनयति। रूपविरहे मनोविज्ञानमिति। एवं श्रोत्रादिषु वाच्यं।

तदसत्।

अक्षव्यापारमाश्रित्य भवदक्षजमिष्यते। तद्व्यापारी न तत्रेति कथमक्षभवं भवेत् ॥४२४॥

तद्धीवद् ग्रहणप्राप्तेरिति। अस्यायमर्थः। अक्षबुद्धिर्हि तद्व्यापारमनुसरन्ती ग्राहिकाऽर्थस्येति तथा व्यपदिश्यते। यदि मनोबुद्धेरपि तत्त्वं। सापि तद्धीवद् ग्राहिणी स्यात् तद्व्यापारानुसरणेन। अन्यथा कथं तथा व्यपदिश्यते। तद्व्यापारानुसारणञ्च नोपलभ्यते तज्जत्वेन च प्रतिपत्तिरिति व्याहतं। इन्द्रियाच्चासन्निहितेप्यर्थे पुरो व्यवस्थि-तार्थनिरूपणाकारचक्षुर्विज्ञानविज्ञानं तिमिरोपहतकेशकलापालोचनाकारवत्। मनोविज्ञा-नन्तु निमीलितलोचनस्याप्युपजायते कथं तत्रेन्द्रियव्यापारः। यद्विकारे च न विकारः कथन्त-दिन्द्रियजं। तत्र तद्धीवद्ग्रहणप्राप्तेरिति तद्विकारेण विकारिविज्ञानप्राप्तेरित्यर्थः। ग्रहणं विज्ञानमेव। अथ तद्विकारेण न विकारः तदा न तज्जता। समुदायादपि नोत्पद्यत इत्ययमेव परिहारः।

परिहारान्तरमाह। ज्ञानोत्पादनसामर्थ्यभेदात्। ज्ञानोत्पादनं प्रति भिन्नमेव सामर्थ्यं पृथग्भूतमन्यानपेक्ष्यमेव दृश्यते। न (।) परस्परापेक्ष्यम् (।) अन्यथा समुदायस्यका-भावेप्यभावादङ्कुर इव क्षित्यादिवैकल्ये न स्यात्। भवति च चक्षुरादिविकलानामपि मनो-विज्ञानन्तन्न समुदायप्रतिबद्धं मनः। अपिशब्देन पूर्व्वको हेतुः समुच्चितः।

'अचेतनत्वादन्यस्मादपि' नोत्पद्यतेऽनिन्द्रियात्। नन्वचेतनत्वादिति कोऽर्थः। यदी-न्द्रियविज्ञानविरहादिति (।) तदिष्यत एव (।) कथमयं हेतुर्यदि नामेन्द्रियज्ञानं ततो न भवति। मनोविज्ञानन्तु कस्मान्न भवति। अथ मनोविज्ञानाभावादचेतनत्वं तदेव विचार्य-माणमिति प्रतिज्ञार्थैकदेशो हेतुः।

अत्रोच्यते।

चेतयन्तो न दृश्यन्ते यदा केशनखादयः। तदा तेभ्यो मनोज्ञानं भवतीति कथं स्थितिः ॥४२५॥

यथा हि चेतनतः स्पर्शादय उपलभ्यन्ते तद्विज्ञानैर्न तथा मनोविज्ञानेन केशनखादयः। तत्परिबद्धत्वे तदभावे मनोविज्ञानं न यस्यात् तदुपघाते चोपहतं भवेत्। यदि न काय आश्रयस्तदा सहस्थितिः कथं। तदाह। 'हेतोः कर्म्मसंज्ञितस्य सहस्थितिनियमका-रिणोऽभेदात् सामर्थ्यस्य तथा व्यवस्थितत्वात्। 'अक्षवद्रूपरसवत्'। यथाक्षाणां रूपरस-योश्च परस्परमनाश्रितत्वेपि कञ्चित् कालं सहस्थितिनियमः। न हि सहस्थितावाश्रया-श्रयिभाव एव कारणं।

ननु 'तद्विकारविकारित्वादाश्रयाश्चक्षुरादय' श्चक्षुर्विज्ञानादीनां। तथा शरीरविका-रात् विश्लेषादि नाम न स्तिमिताविलक्षणो विकार इत्याश्रयाश्रयिभावः।

तदप्यसद् (।) अर्थस्य ग्राह्यस्य द्वारेण विक्रिया। पीडामसहमानस्य तद्भावनया तन्मानसिकारेण विक्रिया। आलम्बमाना हि शस्त्रप्रहारादयो मनसा मनसः पीडाकारिणो

**नाश्रयभूताः। आलम्बनञ्च बाह्यमपि विकारकारि। न च तस्याश्रयभावः। तदभावेप्यारोपमात्रात् पीडोत्पत्तेः।**

तस्मादारोपिताकारमन्तर्व्वाह्यञ्च वेद्यते। मनसा तद्विकारेण विक्रिया मानसस्य सा ॥४२६॥

**न चाश्रयालम्बनयोरेकता। ततस्तदाश्रयो न काय इति। न क्लिष्टं मनः कायाश्रितं ततः। यश्च तस्याश्रयः स पश्चादावेदयिष्यते। पूर्व्वापरसमारोपमात्रमालम्बनं परं मनसो नान्यदस्तीति निरालम्बनाश्रयः।**

**अपि च।**

नोपकारक इत्येव हेतुस्तस्य निवर्त्तकः। विशिष्टमेव हेतुत्वं कार्यस्य विनिवर्त्तकं ॥४२७॥

**कोऽसौ विशिष्टो हेतुर्यस्य निवर्त्तकत्वं। तदाह।**

**सत्तोपकारिणी यस्य नित्यन्तदनुबन्धतः।**
**स हेतुः सप्तमी तस्मादुत्पादादिति चोच्यते ॥ (५०)**

**स हि हेतुर्निवर्त्तको यस्य सत्तोपकारिणी(।) 'नित्यं तदनुबन्धतः।' तदनुबन्धेनेति। अनुबन्धोनुवर्त्तनं। सदानुवर्त्तनादुपकारिणी यस्य सत्ता। यस्य तु कदाचिदुपकारसामर्थ्यन्तदभावेपि कदाचिदुपकारोऽन्यतोपि भवति विशेषलक्षणः(।)स नित्यमनुवर्त्तको न भवतीति न तन्निवृत्यापि तन्निवृत्तिः। देहस्य च सत्ता न सर्व्वदोपकारिणी पूर्व्वचित्तमात्रविकारेपि कदाचिद् विकारदृष्टेः। ततो देहाभावेपि कदाचिच्चित्तविकारविहितविकारत्वात् तदुपस्तम्भादास्त एव चित्तसन्ततिरिति संभाव्यते। न च देहः सदोपकारितया कारणमिति प्रसिद्धः। तथा हि।**

स्वयं परेण वा देहो हेतुर्गम्येत केनचित्। उत्पन्नेनान्यथा वापि वेदनेनेति कल्पनाः ॥४२८॥

**न तावदनुत्पन्नं वेदनं जानात्यहमतो भविष्यामि भवामि (अ) भूवं वेति। उत्पन्नस्य तु वेदनस्याहमिति। स्वरूपमालम्बमानस्यान्यद् वा तदधिगतिरेव। कुतः पुनरन्यस्यावगतिरिदममुत उत्पन्नमिति। न खल्वन्यदालम्बमानमन्यदवगच्छति। चक्षुरादिविज्ञानानामपि तर्हि सैव कल्पनेति कुतश्चक्षुरादिकारणत्वमतिः। न। तेषामन्वयव्यतिरेकगतिसम्भवात्। तथा हि।**

चक्षुरुन्मीलयन्नेव नरः प्रत्यवगच्छति। रूपदर्शनमुत्पन्नं गम्यते तदनन्तरं ॥४२९॥
जन्मादि देहोभिमुखो हेतुत्वेन न गम्यते। ज्ञानस्य प्रागभावे हि ज्ञातत्वस्य विबोधकः ॥४३०॥
परेणास्य प्रतीतिश्चेत् प्रागभावगतिः कुतः। अदृश्यानुपलम्भो हि नाभावस्य प्रसाधकः ॥४३१॥
सुप्तस्यापि प्रबोधोस्ति प्राग्ज्ञानानुपलम्भने। न तत्र स्वप्नविज्ञानप्रागभावगतिः सती ॥४३२॥

अथास्य स्यात् स्वसंविर्त्तिर्यदि प्राग् विद्यते मतिः (।)

**प्रसुप्तावस्थायां नास्त्येव स्मृतेरभावात्।**

प्रबुद्धस्य यतो दृष्टा स्वप्नसंवेदने स्मृतिः।

**तदसत्।**

अभावः प्रतिपत्तेः किं किंवा सदपि विस्मृतं। जाग्रता हि कृतं स्वप्ने स्मर्यते नैव केनचित् ॥४३३॥

**न खलु स्वप्नसंवेदनं जाग्रद्विज्ञानान्तरमिति केनचित् प्रतीयते। तथापि तत् तत एव।**

अथ प्रबोधे सति तस्य प्रतीतिः। तस्यापि प्रबोधे न प्रतीयते इति कुत एतत्। तस्मादप्रतीतिरेव देहस्य सदोपकारित्वेन ततोस्य निवर्त्तने विज्ञानं निवर्त्तत इति न गतिः।

## (i) भूतात्मवादनिरासः

अथ गोमयादुत्पद्यते शालूकः। न च तस्य सत्तोपकारिणी नित्यं तदनुबन्धेन। तथापि गोमयाभावे प्रथमभाव एव शालूकस्य।

तदपि यत्किञ्चित्। यतः (।)

गोमयात् प्रथमोत्पत्तिर्यादृशी तादृशी पुनः। तदभावे न दृष्टैव ज्ञानस्य तु विपर्ययः॥४३४॥

यादृशो हि गोमयादुत्पद्यमानो दृष्टः शालूकः स किं तादृश एवान्यदाप्युपलभ्यते। मनोविज्ञानन्तु तथा भूतमेवादौ पश्चाच्चेति न तेनैकान्तिकता।

## (ii) अस्मिन् सतीदमित्यस्य व्याख्या—

ननु "अस्मिन् सतीदं भवत्यस्योत्पादादिदमुत्पद्यते" इत्येतदेव हेतुलक्षणं भगवतोक्तं। न तु सदानुवर्त्तकमपरं विचारितं। भगवानेव च परमार्थतः कार्यकारणभावे पारमार्थिकं प्रमाणं व्याप्यन्वयव्यतिरेकग्रहणादिति प्रतिपादितं। न च सम्भव्युपकारवानर्थो नोच्यते भगवता। तत् कथमेतत्।

नैष दोषः। तस्मादेवास्माभिरुक्तात् सदोपकारित्वेन सप्तमी(।) तस्मादेव पञ्चमी उत्पादादिति चोच्यते। अस्मिन् सतीदं भवति इति सदानुवर्त्तनमाह। सतीति निमित्त-सप्तमी(।) अन्यथा तदभावेपि भवने न तन्निमित्तकोस्य भावः। पञ्चम्यपादानेऽपादानता च जनिकर्त्तुः प्रभव[1] इति। प्रभवश्च निमित्तमेव।

अथवान्यथा व्याख्यायतेऽस्माभिः। यदि विज्ञानपूर्व्वकं विज्ञानन्तथापि जन्मादिविज्ञानात् पूर्व्वकजन्मविज्ञानमिति प्रतीयतां। तस्य तत्कार्यत्वात्। भाविजन्मविज्ञानन्तु कुतोनुमीयते। अथ समर्थकारणदर्शनात् कार्यानुमानं। तत् तर्हि हेत्वन्तरं प्रसक्तं कारणलक्षणं। अथ कार्ये सन्देहात् योग्यतानुमानं न भाविपरलोकानिश्चये व्यर्थता योग्यतानुमानस्य। भाविपर-लोकानुमाने हि धर्म्मादिषु प्रवर्त्तनप्रयासः सफलः।

अत्रोच्यते। कारणमेव भाविजन्मविज्ञानं कार्यमपि तत्। यतः (।)

"सत्तोपकारिणी यस्य नित्यन्तदनुबन्धतः" (।)

स हेतुः। यस्य हि सत्तोपकारिणी नित्यं तदनुबन्धतः। व्यापित्वेन व्यापकं व्यतिरेके सति कारणं। अर्थान्तरे गम्ये कार्यमेव हेतुर्यदर्थान्तरस्य गमकं तद् व्यापकस्यैव। अन्यथा व्यभिचारित्वा(द)गमकता स्यात्। यच्च यमन्तरेण न भवति तत् तस्य कारणं। कारणं कथं कार्यमिति चेत्। न (।) तस्य कार्यत्वात्। तथा हि।

विकाराश्चेतनादीनामुदयादेः प्रसाधकाः। तद्विकारतयेक्ष्यन्ते तच्च कार्यत्वमुच्यते॥४३५॥

---

[1] T. पाणिनिः १।४।३०

अयं विकार एव न स्यात् । यद्यभ्युदयेन न भवितव्यं तत्कृतोयं विकार इति सकललोकव्यवहारः । एतावतैवान्यत्रापि कार्यत्वं भावि कथं कारणं । तदव्यभिचारादेव ।

ननु य उपकारी स कारणं कथं च भाव्यविद्यमानमुपकारि । अतीतं तर्हि कारणन्न प्राप्नोति ।

तदप्यसत् (।) नोपकारीति न । तदुत्पत्तिकाले विद्यमानत्वात् । कोयमुत्पत्तिकालः । यदि कार्यात् प्राक् कथमविद्यमानस्योपकारकः । अत एव कारणमविद्यमानकरणात् । अविद्यमानस्य करणमिति कोर्थः । तदनन्तरभाविनी तस्य सत्ता । तदेतदानन्तर्यमुभयापेक्षयापि समानं । यथैव भूतापेक्षया तथा भाव्यपेक्षयापि । न चानन्तर्यमेव तत्त्वे निबंधनं । व्यवहितस्यापि कारणत्वात् ।

तथाहि ।

गाढ़सुप्तस्य विज्ञानं प्रबोधे पूर्व्ववेदनात् । जायते व्यवधानेन कालेनेति विनिश्चितं ॥४३६॥

न खलु तत्र शरीरं कारणं पूर्व्वसंस्कारानुवर्त्तने न तस्य दृष्टेः । तादृश एव हि शरीरेन्यथा चान्यथा पूर्व्वविज्ञानानुरूप्येणोत्पत्तेः ।

तस्मादन्वयव्यतिरेकानुविधायित्वं निबन्धनं । कार्यकारणभावस्य तद्भाविन्यपि विद्यते ॥४३७॥

यदेव यदन्वयव्यतिरेकानुविधायि तदेव तस्य कारणमपरस्तु विशेषो व्यर्थः ।

अथापि स्यात । "अस्मिन् सतीदं भवति अस्योत्पादादिदमुत्पद्यत" इति कार्यकारणभावलक्षणं । न चात्रान्वयव्यतिरेकमात्रमनेन कथ्यते । यतः ।

सप्तम्या पूर्व्वभावस्य पंचम्या च निदर्शनं । परभावः प्रथमया ततोपि च निदर्श्यते ॥४३८॥

नहि तदन्वयव्यतिरेकानुविधानमात्रमत्रोपदर्शितं । पूर्व्वापरभावोपदर्शनस्य परिस्फुटत्वात् ।

तदप्यसत्यं । सप्तमी तस्मादादुत्पादादिति चोच्यते । न खलु सप्तम्या पूर्व्वभावस्योपदर्शनं पञ्चम्या वा । निमित्तत्वमात्रत्वस्योपदर्शनात् । एतन्निमित्तकोयमित्यर्थः । यदभावे च न भवति यः स एव भवंस्तन्निमित्तकोयमित्यर्थः ।

ननु सतीति कथं भावी व्यपदिश्यते । तस्याविद्यमानत्वादेवं व्यपदेशानुपपत्तेः । तथा नोत्पादोनुत्पन्नस्य ।

नन्वतीतस्यापि कथं सत्ता येनासौ सतीति व्यपदिश्यते । विनष्टस्य च कथमुत्पादः । आसीदिति चेत् । अन्यस्यापि भविष्यति । कः प्रागभावप्रध्वंसाभावयोर्विशेषः । अथवा अस्मिन् सतीदं भवतीति यस्य च भावेन भावलक्षणमित्यनेन सप्तमी । ततः सतीत्यनेन निमित्तभावमात्रं लक्ष्यते । न तु तदा सत्त्वं तदभावेन च भावलक्षणं(।)भावेन च भावो भाविनापि लक्ष्यत एव मृत्युप्रयुक्तमरिष्टमिति । लोके व्यवहारः । यदि मृत्युर्न भविष्यन्न भवेदेवं भूतमरिष्टमिति । न चोत्पादादिति कालविभागः । न खलु विभक्तयः कालविशेषविधायिन्यः कारकत्वमात्रप्रतिपादने सामर्थ्यात् । कारकत्वमेवासतः कथमिति चेत् । कथमंकुरो जायते । घटं करोतीति कर्तृकर्म्मभावः । बुद्धिस्थतया कारकत्वे नात्र तस्य काकैर्भक्षणं ।

## (iii) कारणव्याख्या—

अथ यस्योपलम्भपूर्व्विका यस्योपलब्धिस्तत् कारणं ।

तदप्यसत् ।

यस्योपलब्धिः प्रथमं तत् तस्य यदि कारणं । न खलान्तर्गतं बीजं हेतुः स्यादंकुरोदये ॥४३९॥

अथ तज्जातीयस्य प्रथममुपलब्धिरिति तथोच्यते । कथमनुपलब्धस्य कारणत्वं (।) न ह्यन्यस्योपलब्धावन्यस्योपलभ्यमानता । उपचरमात्रन्तु स्यात् । तस्मादुपलब्ध्या सत्तोपलक्ष्यते । तथा च स एवार्थः । अस्मिन् सतीति निमित्तभावः सत्तायाः । स चाव्यभिचारविषयत्वमेव । यस्य तु प्रागुपलब्धिरिति तु सर्व्वस्य तु पूर्व्वभाविनः कारणत्वप्रसङ्गः । अव्यभिचारविषयत्वे तदेव कारणत्वं ।

अथाव्यभिचारविषयत्वे सति पूर्व्वाभावस्तदपि यत् किञ्चित् ।

तद्भावभावितामात्राद् यदि कारणकार्यता । को विरोधस्तदा पूर्व्वपरभावः किमर्थकः ॥४४०॥

पूर्वपरभावस्य हि क्वोपयोगो न चानुपयोगवदपेक्ष्यते ।

अथापि स्यात् ।

पूर्व्वत्वे कारणस्येष्टे उपादानं तदर्थिनां । परत्वे(चा)नुमानं यत् सामर्थ्यात् तद् भविष्यति ॥४४१॥

पूर्व्वं हि कारणं कार्यार्थिनोप्यादातुं शक्यं । ततः कारणस्य पूर्व्वभाव इष्यते । तद्यथा भाविपरलोकसाधनाय तत्प्राग्भाविवर्त्तमानेह लोकोपादानं (।)

तदपि न युक्तं कारणत्वमपि तस्यास्त्येव न हि प्राग्भाविनः कारणत्वं न विद्यते । कार्यत्वमपि तु तस्य भाव्यव्यभिचारापेक्षया भवतीति भण्यते । यच्च कारणत्वे सत्युपादानं तत् कार्यत्वे भविष्यति । को हि विशेष उपादानेऽव्यभिचारमात्रेणोपादानमियता किन्न पर्याप्तं ।

यच्चोक्तं(।)समर्थकारणादेवानुमानं किन्तत्र कार्यत्वेन ।

तदसत् ।

को हि हस्तगतं द्रव्यं पादगामि करिष्यति । परशुच्छेद्यतां को वा नखच्छेद्यं सहिष्यते ॥४४२॥

को हि हस्तगतं पादगतं कुर्य्यात् । नखच्छेद्यं वा कुठारच्छेद्यतां प्रतीक्षेत ।

कार्यत्वेनैव मुख्येन गमकत्वे क्रमाद् ऋजोः । यत्नसाध्यकारणत्वे गमकत्वमनर्थकं ॥४४३॥

तस्मादनागतस्यापि कारणत्वमव्यभिचारादिति युक्तमेतत् ।

उक्तन्तावदर्थद्वारेण विक्रिया देहान्न चक्षुरादिवदाश्रयत्वद्वारिका । अभ्युपगम्येदानीमुच्यते(।)

**अस्तूपकारको वापि कदाचिच्चित्तसन्ततेः ।**
**वह्न्यादिवद् घटादीनां विनिवृत्तिर्न तावता ॥ (५१)**

कदाचिदाश्रयत्वेनोपकारकत्वेपि देहस्य तावता न देहनिवृत्तौ विनिवृत्तिश्चित्तसन्ततेः । नोपकारक इत्येव निवर्त्तको भवत्युपकार्यस्य न वह्न्यादेरासादितोपकारकविशेषस्य घटादेर्व-

क्षुधादिनिवृत्तौ नियमेन निवृत्तिः सुवर्णादेर्वा द्रवता लक्षणविशेषासावनेपि चित्रभानोर्न तन्निवृत्तौ निवृत्तिः ।

यदि नाम स एव विशेषो द्रवतादिलक्षणो निवर्त्तते सुवर्णं तु तदवस्थमेव । यस्य चित्तं कारणं चेतसस्तस्य देहस्य तदवस्थस्य भावेपि तद्वैगुण्यान्निवृत्तिः

केवलदेहकारणत्वे बाधकमुक्तं । अपरमप्युच्यते ।

**अनिवृत्तिप्रसङ्गश्च देहे तिष्ठति चेतसः ।**
**तद्भावभावाद् वश्यत्वात् प्राणापानौ ततो न तत् ॥ (५२)**

देहाभावे भस्मावस्थायां भवतु निवृत्तिः कारणाभावात् । देहेतु तथा भूत एव तिष्ठति न निवृत्तियोगः । अन्यथापि च (।) सर्व्वावस्थानुयायित्वाच्च ।

अथ प्राणापानकार्यतापि तस्य ततस्तद्वैकल्यात् निवृत्तिरिति (।)

तदप्ययुक्तं । प्राणापानौ चित्तादेव न ततश्चित्तमिति न परिहारः । कुत एतदिति चेत् (।) तदत्र भावभावात् । चित्ते सति तयोर्भाव इति न विपर्ययः । वश्यत्वाच्च प्राणापानाभ्यां न तत् । यदि चित्तकारणं प्राणपानौ तदा तद्वशौ न स्यातामुपलभ्यते च चित्तवश्यता तयोः । यदि चान्यत उत्पन्नो तदा तत एव तदुत्पत्तिरिति चित्तमकिञ्चित्करमेव स्यात् । न खल्वन्याधीनमन्येन वशयितुं शक्यं । तयोः स्वकारणाधीनयोश्चित्तं परिच्छेदकमेव केवलं भवेत् । अथ चित्तसहकारि तयोः कारणं तौ जनयेत् । चित्तमपि तर्हि तयोः कारणमिति न ताभ्यामुत्पद्यते । अथान्यतोपि मूलत उत्पन्नौ प्राणापानौ चित्तेन नियम्येते यथा स्वामिना भृत्यः । तदसत् ।

भृत्यस्यान्यत उत्पत्तिर्दृश्यते न पुनस्तयोः । न चित्तमन्तरेणास्ति तयोरुत्पत्तिरन्यतः ॥४४४॥

न हि प्राणापानौ चित्तमन्तरेण दृश्येते भृत्यवद् (।) अतो नान्यतः कारणादिति चित्तमेव कारणमिति न ताभ्यान्तत् ।

अथापि स्यात् । स्वापावस्थायां प्राणापानयोर्भावात् न चित्तकारणत्वमनयोः (।) न हि तत्र तथाभाव एव हि । अनन्यहेतुतामेव दर्शयति ।

**प्रेरणाकर्षणे वायोः प्रयत्नेन विना कुतः ।**
**निर्ह्रासातिशयापत्तिर्निर्ह्रासातिशयात् तयोः ॥ (५३)**

यदि प्राणापानकार्यं चैतन्यं तदा प्रेरणाकर्षणे वायो. प्रयत्नेन विना स्यातां । न चैवं प्रेरणाकर्षणरूपत्वात् तयोः । अथ प्रेरणाकर्षणमेव तयोश्चित्ताधीनं न स्वरूपं न स्वरूपमन्यतः कारणादिति ततश्चित्तं ततः प्रेरणाकर्षणे ।

तदप्यसत् ।

मृतस्यापि स वायुश्चेच्चेतना किं निवर्त्तते । स चेदकारणन्तस्याः कायः कारणमागतः ॥४४५॥

यदि स्थिरो वायुर्न कारणं चेतनायाः । अनिवृत्तिरेव प्रसक्ता चेतसः । अथापि कारणं तथापि मृतस्यापि स्थिरता वायोरस्तीति । प्राणापानौ च कार्यरूपाविति न तदभावान्निवृ(त्ति) श्चेतस इति अनिवृत्तिप्रसङ्गः । प्राणापाननिर्ह्रासातिशयाभ्याञ्च चेतसो निर्ह्रा-

सातिशयौ प्राप्नुतः। तत्कार्यत्वादवश्यं कारणे परिहीयमाणेऽतिबर्द्धमाने वा कार्यस्य हानिरुपचयश्च भवत्यन्यथा कारणन्तदिति न स्यात्।

**तुल्यः प्रसङ्गोपि तयोर्न तुल्यं चित्तकारणे।**
**स्थित्यावेधकमन्यच्च यतः कारणमिष्यते ॥ (५४)**

भवेतां वा प्राणापानौ चेतसः कारणन्तथापि देहे तिष्ठति चेतसोऽनिवृत्तिप्रसङ्गः। तयोरपि प्राणपानयोरनिवृत्तेः। तयोरपि देहकार्यत्वादनिवृत्तिरेव। तदनिवृत्तेश्चेतसोप्य-निवृत्तिरिति।

स्यादेतत् (।) चेतः कारणेपि चेतस्ययमेव प्रसङ्गः।

अनिवृत्तिप्रसङ्गश्च चित्ते तिष्ठति चेतसः। चेतसो न च पूर्व्वस्य तत्पूर्व्वेष्टौ निवर्त्तनं ॥ ४४६॥

अत्रोच्यते(।) 'न तुल्यं चित्तकारणे। स्थित्यावेधकमन्यच्च यतः कारणमिष्यते।' अन्यदपि तद्देहसतृष्णकर्म्मसंज्ञितं कारणमिष्यते।

नहि पूर्व्वचित्तसत्तामात्रकादेव चित्तमुत्पद्यते। तदपरस्यापि संस्कारबीजसंज्ञितस्या-विद्यादिरूपस्य कारणत्वात् तस्य पूर्व्वचित्तप्रबोधने तत्र चित्तोत्पत्तिरन्यत्र वा चित्रत्वाद् वासनाभेदानां प्रबोधकानाञ्च। तद्यथा। न सिद्धसम्बन्धमात्रादेव नानाप्रकारस्वप्नदर्शनं। समानेपि हि सिद्धसमागमे कदाचिदेव किंचित् स्वप्नदर्शनं भवति वासनाप्रबोधचित्रत्वात। वासनाप्रबोधचित्रत्वाद्धि निवृत्तिर्न तु देहमात्रकारणत्वेप्येवमेव दृष्टत्वादिति कुत एतत्।

चित्तस्य वासनादृष्टेरन्यथोनुपपत्तितः। स्वप्नविज्ञानवत् सर्व्वं वासनाबोधकारणं ॥४४७॥

यदि देहसिद्धमात्रमेव कारणं सर्व्वेषां सर्व्वदा समानं स्वप्नदर्शनं प्रसक्तं। कस्यचित्तु किंचिदुपलभ्यत इति वासनासङ्गमकृतमेव तदिति युक्तं। वासनानामनेकाकारत्वात्। ततः सकलमेव चित्तं तत्र देहेऽन्यत्र च वासनाप्रबोधविहितव्यतिकरं नान्यथा संभावनीयं।

## (iv) वासनाबलादुत्पत्तिः

अथ वासनाबलादुत्पत्तिमासादयदसत्यमेव स्वप्नवत्। तदप्यसत्यं।

वासनाबलभावेपि प्रपञ्चः सुरतादिकः। नासत्यः स्वार्थनिष्पत्तेः सत्यार्थक्रियाकृतां ॥४४८॥

वासनाबलमवलम्ब्यमाना हि सुरतादिव्यवहाराः समीहितार्थक्रियाकरणप्रवणप्रवर्त्तनाः किमसत्यताव्यतिकरव्यस्तात्मानः।

अथ वासनान्वयिनोपि सुरतादिव्यवहाराः सत्यस्त्र्यादिसमन्वयिन इति नासत्याः जन्मादिव्यवहारा अपि तथेति समानं। तेषामपि तत्र सत्यशरीरान्तरोत्सङ्गोपादानतेति नासत्यता(।) तथा हि(।)शुक्रशोणितोपजनितं शरीरान्तरमुपादाय जन्म प्रवर्त्तते वासनाबलभावेपि। कथं शरीरान्तरसंचरणमुपलभ्यतामन्तरेण। वृद्धादिशरीरावस्थासंचरणवत्।

एकोपादानभावेन तदेकत्वव्यवस्थितेः(।) शरीरान्तरसञ्चारो न भवत्येव तादृशः ॥४४९॥

एकशुक्रशोणितोपादानमेव शरीरं तदिति न शरीरान्तरसंचारः। पश्वादिशरीरन्तु शुक्रशोणितान्तरादुत्पन्नं शरीरान्तरं। तथाभूते च न संचारो दृष्टस्तत् कथं सम्भाव्यते।

न शरीरान्तरत्वस्य तथापि व्यतिरेकिता। विलक्षणत्वं तत्त्वस्य निवर्त्तकमितिष्यते ॥४५०॥

बालादिभावेन हि कुमारादिशरीरं न तदेकमिति शक्यं वक्तुं। तत्र संचारो दृष्ट एव। तत्सहचारितयोत्पत्तिरेव तत्र संचारः। वासनाबलाच्च तथोत्पत्तिरित्यविरोधः।

अथ विलक्षणशरीरान्तरसंचारो न दृष्टः। तदपि स्वप्नान्तिकशरीरसंचारदर्शनादनैकान्तिकं। तस्यालीकत्वादसंचार एवासाविति चेत्(।)न(।) दृश्यमानस्यालीकत्वायोगात्। यथैव हि तस्यासत्यत्वं तथा तत्र सञ्चारोपि। किमिदमसत्यत्वं नाम(।)बाध्यमानत्वं जाग्रत्प्रत्ययेनेति चेत्। यदा स प्रत्ययस्तदा स न बाध्यते। अन्यदा तु बाध्यत इत्ययुक्तं। तदैव जाग्रतानोपलभ्यत इति चेत्। तेनापि जाग्रत्प्रत्ययोपलब्धो नोपलभ्य इति समानो बाध्यबाधकभावः। अथ प्रबोधे नोपलभ्यते। प्रबोधाप्रबोधयोः कथं विवेकः। प्रबुद्धोहमिति प्रत्ययोत्पत्तेः प्रबुद्धोहमिति प्रत्ययः स्वप्नेपि भवतीति कथन्ततो विवेकः। तस्मात् समाने उपलम्भे नाभावोऽसत्यता वा युक्ता।

अथ वासनादौर्बल्यादचिरस्थायिताऽसाधारणोपलम्भो दौर्बल्यलक्षणोऽसत्यत्वं।

यत्र तर्हि वासानादार्ढ्यं तत्र विपर्यय इति सत्यता संचारस्य। साधारणोपलम्भे च।

तथा हि वासनादाढर्चान्न परोऽसत्यतोदयः। वासनादाढर्यमात्रेण सत्यता जाग्रतो विदा ॥४५१॥

यत्र वासनादार्ढ्यं स जाग्रत्प्रत्ययः। सत्यश्च साधारणोपलम्भश्च। स्वरूपेण तु तदस्त्येव ततः सिद्धः सञ्चारः। दाढर्याभावात्तु झटिति विघटनं। यत्र च देवतादेशो द्वयोरपि स्वप्नदर्शिनोः प्रतिभासते तत्र कथमसत्यता।

अथ तदा सत्यतैव तथा सति न स्वप्नार्थस्य सकलस्यासत्यता। तथा सति(।)

सञ्चारस्य प्रसिद्धत्वाद् विशेषपरिकल्पनात्। विकल्पसममेवं हि जात्युत्तरमिदं स्फुटं ॥४५२॥

अथवा जन्मादौ चित्तसंस्कारफलस्य पाटवस्योपलम्भान्मरणान्तरं संचार इति प्रतीत।

शरीराग्रहरूपस्य चेतसः सम्भवो यदा। जन्मादौ देहिनां दृष्टः किन्न देहान्तरागतिः ॥४५३॥

अयन्तावज्जन्मादावन्यदा च शरीराग्रहाविरूपश्चेतसः स्वभावस्तारतम्ययोगी सकलजन्मिनां पूर्व्वाभ्यासतारतम्यफलतयोपलभ्यमानो न पूर्व्वकशरीराग्रहाभ्याससंस्कृतचित्तमन्तरेण भवतीति(।) तत्सामर्थ्यादेव शरीरान्तरादिह शरीरे संचरणमिति प्रतीयतां। नान्यथानुमावृत्तिः।

अथ प्रत्यक्षं संचारे नास्ति तत्कथमनुमात् प्रतीतिः। अयमप्यदोषो यतः(।)

अनुमेयेस्ति नाध्यक्षमिति कैवात्र दुष्टता। अध्यक्षस्यानुमानस्य विषयो विषयो न हि ॥४५४॥

परस्परविषयपरिहारेण हि प्रवर्त्तनमध्यक्षानुमानयोरिष्यत एव। कथं स एव दोषः।

अथ तज्जातीये वृत्तिमन्तरेणाध्यक्षस्य कथमनुमानं। स चापि न दोषः।

आग्रहस्तावदभ्यासात् प्रवृत्त उपलभ्यते। शरीरेन्यत्र वाध्यक्षात् तत एवानुमा न किं ॥४५५॥

तदेतदुच्यते(।) कथन्तज्जातीये प्रत्यक्षमन्तरेणानुमानमध्यक्षपूर्व्वकत्वादनुमानस्य। तत्रायं परिहारः। यदि नाम न दृष्टोध्यक्षतः संचारः संचारानुरूपन्तु फलमुपलभ्यत एव। ग्रामान्तसंचारवत्। तद्यथा ग्रामन्तराद् देशान्तराद् वागतः पूर्व्वाभिरतिविषयसजातीय एवोपकरणादौ रममाण उपलब्धः। यदि नामापरस्तथाभूतो ग्रामान्तरादागच्छन्नोपलब्धस्तथापि तथाभूतदेशादागतिरस्योपलभ्यत एवानुमानात्। एवमुपकरणादिविशेषाभिरसादेव

**लोकादागतिरप्यनुमीयतां ग्रामान्तरादागतौ प्रत्यक्षवृत्तिमात्रेणानुमानवृत्तेः । न हि धूमादनुमीयमानेऽग्नौ विशेषयोगिनि प्रत्यक्षवृत्तिः । अग्निमात्रप्रवृत्तिरिति चेत् । इहापि देशादिसंचारे वृत्तिरिति समानमेतत् ।**

**अथापि स्याद्(।) देशान्तरादिसंचारस्तेनैव शरीरेण दृष्टः शरीरमत्यजतः । यथा च स्वप्नशरीरसंचारोऽसत्यस्तथेहापि जन्मादौ शरीरापरित्यागासत्यते स्यातामित्यसमंजसं । तथा हि ।**

शरीरान्तरसञ्चारत्यागौ सत्यसमागमौ । स्याता यदि ततः सत्यं परलोकप्रसाधनं ॥४५६॥
यथा चात्यन्तविच्छेदः स्वप्ने स्वप्नोपलम्भने ।
तथैव मरणात् पूर्व्वं पश्चान् तु यदि किं कृता ॥४५७॥

**यथैव खलु देशान्तरसंचारः शरीरमन्तरेण तथा जन्मान्तरसंचारोपि यदि भवेद् विपरीतसाधनमायातं । तथा स्वप्नसंचारो सत्यशरीरान्वयी दृष्ट इति परलोकसंचारोपि तथा भवेदसत्य एव परः पूर्व्वश्च लोक इतीष्टमेव नास्तिकानां ।**

**किंच(।) यथा स्वापावस्थायामस्वप्नदर्शिनो विच्छेद एव विज्ञानस्याव्यक्तविज्ञानता वा (।) तथा यदि परलोकोपि किं तादृशेनेति न विनष्टा दृष्टिर्नास्तिकानां किं कृतं परलोकवादिनां स्यात् । अत्रैतदुच्यते ।**

तेनैव हि शरीरेण सञ्चारोऽध्यक्षबाधितः । परित्यागः शरीरस्य पूर्व्वकस्यान्यदर्शनं ॥४५८॥
स्वप्नसंवेदनं सर्व्वं सत्यविज्ञानजन्मनः । स्वप्नाच्च सत्यविज्ञानमिति कैव विरोधिता ॥४५९॥
प्रबोधसङ्गत. सर्वो विच्छेद उपलभ्यते । मरणादपि विच्छेदः सत्यताबोधसङ्गतः ॥४५०॥

**उक्तमेतद्(।)विज्ञानं ़शरीरेस्मिन् पूर्व्वशरीरसङ्गतविज्ञानाभ्यासफलत्वेनोपलभ्यमानं नियमेन शरीरपरित्यागमन्तरेण न भवतीति कथं शरीरपरित्यागः । दृष्ट एव पूर्व्वशरीरपरित्यागः । एतच्छरीरोपलम्भ एव पूर्व्वशरीरपरित्यागोपलम्भ इति पूर्व्वशरीरस्याप्रसिद्धौ कथं पूर्व्वशरीरपरित्यागप्रसिद्धिरिति चेत् ।**

न शरीराद्यभिरतिः शरीररतिपूर्व्विका । यदा प्रसिद्धा तत्पूर्व्वशरीरं सिद्धमेव नः ॥४६१॥

**विशिष्टपूर्व्वाभिरतिसाधनादेव पूर्व्वशरीरप्रसिद्धिः । न च तदेवेदानीं शरीरमुपलभ्यते । न चातीतमनुपलभ्यमानं तदापि न भवति । ततः पूर्व्वशरीरापरित्याग इत्यध्यक्षबाधितमेतत् ।**

**यदपि चोक्तं । यथा स्वप्नादिहागमनमसत्यात् तथा परलोकादप्यसत्यादेव । तथा चातो गमनं स्वप्नशरीरेऽसत्ये तथा परलोकेपीत्यसत्यता परलोकस्य ।**

**एतदप्यसत्यं । स्वप्नासत्यता हि सत्यतान्वयिनी । सत्यप्रत्ययस्य च निमित्तमिति स तथाभूतोऽन्तराभव इति वक्ष्यामः । अथवा (।)**

सकलः प्रत्ययः स्वप्नान्न विशेषतया स्थितः ।
यदि पश्चाद् वदिष्यामः प्रस्तावोस्य स एव हि ॥४६२॥

**नहि स्वप्नप्रत्ययस्यापरस्य च कश्चिद् विशेष इति वक्ष्यते । ततः स्वप्नशरीरवदेव परलोकशरीरेपि सञ्चार इति सिद्धमतोन्यत आगतस्य यदि नाम वासनाबलविशेषतः सप्रति-**

घेतरत्वादिविशेषः। सन्तानहानिस्तु न दृष्टैव ततोनुपरतसन्तानतैव प्राणिनामिति सिद्धः परलोकः (।) मरणावयस्तु स्थित्यावेधकस्य वासनालक्षणस्य चित्रत्वान्नानिवृत्तिप्रसङ्गश्चिरं तिष्ठति चेतसस्तादृशस्य चित्तस्यैवाभावात्

चार्व्वाकस्यापि तर्हि परिहारोस्त्येव तादृशस्य देहस्याभावात्। अत आह।

**न दोषैर्विगुणो देहो हेतुर्व्वर्त्यादिवद् यदि।**
**मृते समीकृते दोषे पुनरुज्जीवनं भवेत्॥ (५५)**

दोषैर्हि वातपित्तादिभिर्व्विगुणो देहस्तादृशो न भवत्येव यादृशादुत्पत्तिमच्चित्तं। ततस्तादृशस्य देहस्याभावादनिवृत्तिप्रसङ्गः।

नैतदस्ति। यद्येवं स्यात्। मृतस्य सतः समीभवन्ति दोषास्तत आरोग्यलाभाद् देहस्य पुनरुज्जीवनं भवेत्। 'तेषां समत्वमारोग्यं क्षयवृद्धी विपर्यय' इति वचनात्।

अथ समीकरणं दोषाणां कुतो ज्ञायते। ज्वरादिविकारदर्शनात् (।) अविकारकारिणो हि दोषा न मरणमादधति। सर्व्वदा मरणप्रसङ्गात्। अन्यथा न देहः कारणं भवेत् तस्य चेतसस्तद्विकारभावाभावाननुविधानात्। एवं हि देहकारणता विज्ञायते यदि पुनरुज्जीवनं भवेत्।

चित्तकारणतायां हि चेतसो न निवर्त्तनं। चेतसो विगुणत्वे हि गृहेप्यपुनरागतिः ॥४६३॥
देहकारणतायान्तु वैगुण्ये विनिवर्त्तते। देहस्तादृश एवासावहेतुश्चेतसः कथं ॥४६४॥

देहस्य हि कारणत्वे देह एव तथाभूतो भवति कारणमन्यदा नेति न युक्तं तादृश एव वैगुण्ये म्रियते कश्चिदपरो नेति कथमयं विभागः (।) चित्तकारणत्वे पुनश्चित्तवैगुण्यावैगुण्ये मरणेतरत्वकारणमिति विभागो नानुपपन्नः।

दोषस्योपशमेप्यस्ति मरणं कस्यचित् पुनः। जीवनं दोषदुष्टत्वेप्येतन्न स्याद् व्यवस्थितं ॥४६५॥

न खल्वसमञ्जसवृत्ति कार्य्यम्भवति। तेन न देहकार्यं विज्ञानं देहकार्यत्वे पुनरुज्जीवनप्रसङ्गात्।

ननु वैगुण्यकारिणि निवृत्तेपि न तत्कृतस्य वैगुण्यस्यावश्यं निवृत्तिः। न खल्वग्निनिवृत्तावपि काष्ठेग्निकृतो विकारः क्वचिन्निवृत्तो दृष्टः। अतः (।)

**निवृत्तेप्यनले काष्ठविकाराविनिवृत्तिवत्।**
**तस्यानिवृत्तिरिति चेत् न चिकित्साप्रयोगतः॥ (५६)**

यथा वहननिवृत्तावपि न काष्ठविकारनिवृत्तिस्तथा दोषकृतोपि मरणविकारो न निवर्त्तिष्यते। ततो न पुनरुज्जीवनप्रसङ्गः। तदाह। चिकित्साप्रवर्तनात्। निवर्त्यविकारत्वे हि दोषाणां तन्निवर्तनाय चिकित्सा साकल्यमासादयेत्।

ननु दोषकृतो विकारः। स्वल्पोपि निवर्त्यते एव मरणविकारात् प्राक् मरणविकारस्तु न निवर्त्तिष्यते। ततो दोषानिवर्त्यानिवर्त्यविकारा इति नायं दोषः।

नेदमुत्तरं यतः।

**अपुनर्भावतः किञ्चिद्विकारजननं क्वचित्।**
**किञ्चिद्विपर्ययादग्निर्यथा काष्ठसुवर्णयोः ॥५७॥**

**आद्यस्यान्योप्यसंहार्यः प्रत्यानेयस्तु यत्कृतः।
विकारः स्यात्पुनर्भावस्तस्य हेम्नि खरत्ववत् ॥५८॥**

अस्यायमर्थः। क्वचित्किञ्चिदपुनर्भावविकारारम्भकमेव यथा वह्निः काष्ठे। किञ्चित्तद्विपर्ययादेव यथा स एव सुवर्णो न पुनरेकमेकत्रैव तथा चाविकारकारि। अत्रान्यस्य विकारकारिणो विकार्यस्य वायोर्विकारः। सोन्योप्यसंहार्यः। श्यामतामात्रमपि काष्ठेऽग्निकृतमसंहार्यमभिद्रवतापि तु सुवर्णेग्निनिवृत्तौ पुनरन्यथा भवति। ततोल्पविकारस्य दोषकृतस्य निवर्त्यत्वान्महतोपि मरणलक्षणस्य निवृत्तिरिति प्राप्तं। ततः पुनरुज्जीवनप्रसङ्गः। तथा हि निद्राकृतोपि चेतनाविरतिलक्षणो विकारो निद्राभावे निवर्तते। अथ तत्र नास्त्येव निवृत्तिरित्युच्यते। तत्प्रत्युच्यते।

असम्वेदनरूपं हि न सम्वेदनमिष्यते। तथापि यदि तद्भावो मृतस्याप्यस्तु वेदनं ॥४६६॥
नहि सम्वेदनाभावे विशेषो मृतसुप्तयो.। आश्वासादि पुनः सर्व्वं यथा तदपि चिन्तितं ॥४६७॥

सम्वेदनाभाव एव सुप्तमृतयोर्नापरो विशेषः। ततः सुप्तस्य प्रबोध इव मृतस्यापि प्रहारौषधप्रयोगाविनोज्जीवनं प्रसक्तं।

अथ प्रसुप्तस्य सम्वेदनाभाव एव नास्ति मृतस्य तु स इति विशेषः। न (।) असम्वेदनस्योभयत्र समानत्वाद् (।) अथासम्वेदनेपि शक्तिरूपेण तदास्त इत्युच्यते। केयं शक्तिरिति निर्दिश्यतां। यदि सम्वेदनमेव शक्तिस्तथा सम्वेदनमेवास्ति कथमसम्वेदनं। तच्चास्ति तच्च नास्तीति विरुद्धं। अथ सम्वेदनादन्या शक्तिः सा तर्हि शरीरमेव ततः शरीरे तिष्ठति चैतन्यजनके शक्तिसद्भावादनिवृत्तिरेव तस्य। अथ जनकस्य शरीरस्य विनाशः परस्य चाजनकस्योत्पत्तिरिति न चैतन्यं। किमिदमजनकत्वं (।) सम्वेदनरहितत्वमिति चेत्। सुप्तस्यापि तदस्तीति। सुप्तस्यापि सम्वेदनं न भवेत् प्रबोधावस्थायां। अथ तत्राश्वासादयः सन्ति ततो नाजनकत्वं देहस्य (।) तदैव तर्हि सुप्तावस्थायामुत्पत्तिरित्यसुप्त एव भवेत्।

अथ निद्रापरिणतिसहायावाश्वासादेश्चैतन्यमुत्पद्यते। केयं निद्रा नाम (।) सम्वेदनाभाव इति चेत्। मृतस्यापि सोस्तीति पुनः सम्वेदनं स्यात्तत्परिणामे। अथाश्वासाभावात्सहकारिवैकल्यात्केवलाद्देहादनुत्पत्तिरिति वदेत्। मूर्च्छादिविकारेपि नाश्वासादय इति न संवेदनं भवेत्। तस्मादाश्वासादेर्न सम्वेदनकारणत्वं न चाश्वासादीनां कारणत्वमिति निवेदितं प्राक्। किञ्च।

निद्राव्यपगमे पूर्व्वज्ञानसंस्कारतो धियः। तथा त्रिधाः संभवन्ति नतो देहो न कारणं ॥४६८॥

समाने हि शरीरसम्भवे पूर्व्वसंस्कारानुरूपा एव बुद्धयो दृश्यन्ते। ततो न देहः कारणमाश्वासादयो वा।

अथ संस्कारसहायाद्देहादुत्पत्तिरित्युच्यते तदसत्

संस्कारः सहकारी स्यात्तदाऽसन्निति दुर्घटं ॥४६९॥

न ह्यविद्यमानो विद्यमानस्य सहकारी। न च प्रबोधावस्थायां देहस्येव चेतसोपि पूर्व्वकस्य विद्यमानता। न चाविद्यमानः सहकारी सहकरणाभावात्। नहि

विद्यमानेतरयोः सहभावः। तस्मात्पूर्व्वकमेव चेतस्तत्र कारणं न देहः। कथन्तर्हि प्रहारादयः प्रबोधकाः (।) नेदमुत्तरं[1] (।)

नावश्यं जातबोधत्वं प्रहारादेव जायते। प्रहारमन्तरेणापि प्रबोध उपलभ्यते ॥४७०॥

नहि प्रहारादेरेव बोधः स्वयमपि प्रबोधात्। ननु प्रबोधानन्तरं दृष्टपदार्थसम्बन्धेन विकल्प उत्पद्यते। ततो दर्शनपूर्व्वविज्ञानयोः कथं सहकारित्वं। नैतदपि साधु। यतः(।

नात्रापि नियमो दृष्टः प्रत्यासत्तिप्रबोधने। तात्पर्येण यदाक्षिप्य प्रसुप्तस्तत्र बोधतः ॥४७१॥

यदेव तात्पर्येणाक्षिप्य प्रसुप्तस्तदनुरूप एव वासनाप्रबोधोस्य भवति। न तु प्रबोधे सति यदुपलभ्यते तत्सम्बन्धेन प्रत्यासन्न एव प्रबोधो दृश्यते। यश्च यथाभ्यासवाँस्तस्य तथाभूत एव प्रबोधो नान्यत्र। प्रबोधश्चान्तरस्पर्शविज्ञानादिकमेव। यथा च यस्याभ्यासस्तदनुरूपमेव कार्यं[2] सुखसंवेदनं। तथाहि।

भयधैर्यादिसंस्कारा द्रवशस्त्रग्रहादयः। प्रबोधरूपा जायन्ते प्राणिनां सुखसम्विदः ॥४७२॥

भयभावनाभवननिवेशिनां पलायनसुखादिसम्वेदनरूप एव प्रबोधोन्यथा तु दुःखासिका। रौद्रात्मनान्तु परोपद्रवाभिरतीनां परापकरणकारिणां (श)स्त्रादि[3]ग्रहणरूपसुखादि सम्वेदनरूपः। ततो न देह आश्वा(सा)दयो वा विज्ञानकारणं। पूर्व्वकमेव विज्ञानं कारणन्तच्च यदि देहादुत्पन्नं तदा अनिवृत्तिप्रसङ्गात्तु स एव दोषः। तथा पूर्व्वविज्ञानान्वयिता न स्यादेव। अथ दोषविगुणत्वादकारणं। वैगुण्याभावे पुनः कारणम्भवेत्। अपुनर्भाविविकारारम्भकत्वे स्वल्पोपि तत्कृतो विकारो न निवृत्यः स्याद्दौर्ब्बल्यादिकः। मन्दविज्ञान[4]प्रवर्त्तनलक्षणश्च मूर्च्छादिविच्छेदलक्षणो वा। अपुनर्भाविविकारारम्भकस्य स्वल्पोप्यनिवर्त्यः। "प्रत्यानेयस्तु यत्कृतेः (।) विकारः स पुनर्भावस्तस्य हेम्नि खरत्ववत्"। हेम्नो हि खरत्वं गतमपि विकारहेत्वपगमे पुनः प्रत्यागच्छति। तथा महानपि विज्ञानविच्छेदविकारो मरणलक्षणो निवर्त्यत इति पुनरुज्जीवेत।

ननु चिकित्साप्रयोगात् प्रत्यानेयत्वविकारमसाध्यव्याधिभावाच्चाप्रत्यानेयविकारत्वं चेत्युभयथाभावाददोषः (।) परिहारमाह।

**दुर्लभत्वात्समाधातुरसाध्यं किञ्चिदीरितं।**
**आयुःक्षयाद्वा दोषे तु केवले नास्त्यसाध्यता ॥५९॥**

सुसाध्यता हि दोषकृतविकारनिवर्तनं समर्थस्यौषधस्य वैद्यस्य चाऽभावादसाध्यं कथितं किञ्चिन्न तु महाभूतोद्भवचैतन्यवादिमतेस्तीति दुर्लभत्वादेव समाधातुरपुनरुज्जीवनं।

दुर्लभत्वं समाधातुर्विकारस्यानिवर्त्तने। पुनरुज्जीवनाहेतुर्निवृत्तौ व्यर्थता पुनः ॥४७३॥

तस्माद्विकारविनिवृत्तौ भवेदेव पुनरुज्जीवनप्रसङ्गः।

ननु परस्याप्यसाध्यत्वमस्त्येव। अत्रोत्तरं। मम त्वसाध्यं युक्तं तदाह। आयुः क्षयादसाध्यता व्याधेस्तथाहि। तथाभूतेनैव व्याधिना कश्चिन्म्रियतेऽपरो नेति दृश्यते।

---

[1] T लम्=मार्गः ? – लन् (उत्तरम्)
[2] T. काय-
[3] T. णः शस्त्रा०
[4] T. अन्यविज्ञान-

उपलक्षणमायुः। कर्म्मक्षयाद्वा। कर्म्मजो हि व्याधिः श्वित्रादिरसाध्यो भवति। कर्म्मणस्तादृशस्य भावात्। तस्मात् कर्म्माधिपत्यमेव परिहारहेतुरित्याह। केवले तु दोषविकारकारिणि नास्ति व्याधेरसाध्यता। तस्मात् (।)

**मृते विषादिसंहारात् तद्दंशच्छेदतोपि वा।**
**विकारहेतोर्विगमे स नोच्छ्वसिति किं पुनः ॥६०॥**

मृतस्य हि यदा विषादिसंहारो मन्त्रादिना। स्वयमेव च दंशदेशोपसंहारात्तदङ्गच्छेदतः। विकारहेतोश्च विगमो ज्वरादेर्यदा भवति तदोज्जीवनप्रसङ्ग इति स्थितमेतत्।

अपि च। नानुपादानकारणनिवृत्तौ निवृत्तिः। न च देह उपादानकारणं (।) यदि च स्यात् तदविकारेण न विक्रियेत। यतः (।)

**उपादानाविकारेण नोपादेयस्य विक्रिया।**
**कर्त्तुं शक्या विकारेण मृदः कुण्डादिनो यथा ॥६१॥**

उपादानस्य हि देहस्याविकारेणोपादेयस्य विज्ञानस्य विक्रिया न शक्या स्यात्। मृदो विकारमन्तरेण न कुण्डादेर्विकार उपलब्धः। एष एवोपादानस्य धर्मो यस्तद्विकारेणैव विकारः। बहुष्वपि कारणेषु किञ्चिदेव कस्यचिदुपादानं न कारणमात्रकं। देहस्य च कारणत्वेपि न तद्विकारेणेव विकारस्तदविकारेपि भयशोकादिना चित्तस्य पूर्व्वकस्य विकारमात्रेण विकारस्तद्विकारे चावश्यं विकारात्।

ननूदकविकारेपि भवति विकारोऽङ्कुरस्य न च तदुपादानं। न सन्तानकारणस्योपादानकारणत्वात्। वीजञ्च सन्तानकारणं नोदकमुदकस्यावस्थाविशेषकारणत्वात्। नोदकात्सन्तानसम्भवः। उदकस्य यवादिसाधारणत्वात्। न चोदकनिवृत्तौ शालि[१]-सन्तानविवृत्तिः। उदकाभावेपि शालिसन्तानस्याव्यावृत्तेः। अङ्कुराद्यवस्था तु तस्योदकात्तस्याश्च तन्निवृत्तौ निवृत्तिरतोऽस्या उपादानकारणमेव उदकं उदकादेश्च शालिबीजविकारद्वारेणैवोत्तरोत्तराङ्कुरादिविकारः। तस्माद् देहाविकारेपि विक्रियमाणत्वाद्विज्ञानस्य नोपादानकारणमस्य देहः। तदेवाह।

**अविकृत्य हि यद्वस्तु यः पदार्थो विकार्यते।**
**उपादानं न तत्तस्य युक्तं गोगवयादिवत् ॥६२॥**

अविकृत्य च देहम्विक्रियते विज्ञानमिति न देह उपादानमस्य ततो न देहनिवृत्तावस्य निवृत्तिः। गोगवयादिवदेव तद्विकारेण विकारात्। भवतु गोर्गवयः कथञ्चिदवस्थाविशेषस्य कारणन्तन्निवृत्तौ च स एवावस्थाविशेषो मा भूत्पुनः सन्तानस्य निवृत्तिः। भवतु गोगवयोरनुपादानोपादेयभावेनानिवर्त्यनिवर्तकत्वं कायचेतसोः किमायातं। न ह्यन्यस्य गुणदोषेणान्यगुणदोषोऽनुपादानत्वे सहावस्थानं च न स्यान्नियमेन शाल्यादिसन्तानोदकवत्। अत्रोच्यते।

---

[१] T. साल

**चेतः शरीरयोरेवं तद्धेतोः कार्यजन्मनः ।**
**सहकारात्सहस्थानमग्नितास्रद्रवत्ववत् ॥६३॥**

न ह्यन्यतात्र प्रसिद्धा यतश्चेतःशरीरयोरप्येवमनुपादानोपादेय्यभावो गोगवययोरिव कथञ्चिदुपकारित्वमात्रं । नावश्यं शरीरविकारेणैव विकारश्चेतसः । ततोनुपादानकारणत्वात्कार्यस्य[1] न निवृत्तावपि चेतसो निवृत्तिः ।

अवस्थाकारणं वस्तु नैवोपादानकारणं । अवस्थाकृन्निवृत्तौ हि सैवावस्था निवर्तता ॥४७४॥
सन्तानकारणं यत्तु तदुपादानकारणं । तन्निवृत्तौ भवेदस्य सन्तानस्य निवर्तनं ॥४७५॥
अग्नेर्निवृत्तौ ताम्रस्य द्रवतैव निवर्तते । चेतसः सह कायेन तावत्कालमवस्थितिः ॥४७६॥
अन्योन्यसहकारित्वादग्निनाम्रद्रवत्ववत् । तयोर्हेत्वोर्न कार्यन्तु चित्तन्तिष्ठति हेमवत् ॥४७७॥

यथैवाग्निसहकारिणः सुवर्णस्य[2] द्रवतोपादानत्वन्ततोग्निताम्रद्रत्वयोः सहावस्थानं तथा चित्तमपि शरीरनियतं शरीरसहकारिचित्तादुपजायते । शरीरहेतोरपि कललादेः शरीरं चित्तसहकारिण एव भवति । ततः सहस्थानं कार्यजन्मनः । एतदुक्तं भवति ।

अन्योन्यसहकारित्वादेकसामग्र्यसम्भवे[3] । सहकार्यद्वयस्यापि स्थानं नानुपपत्तिमत् ॥४७८॥

शरीरहेतोः कललादिसंज्ञितस्य चित्तसहकारित्वाच्चित्तस्यापि देहसहकारित्वेन सहस्थानं कार्यजन्मनः कायचेतोलक्षणस्य वह्निताम्रद्रवत्ववत् । निवृत्ते तु शरीरे शरीरान्तरविशिष्टमशरीरम्वा चित्तमिति न तस्य निवृत्तिः । सुवर्णसन्तानवत् ।

अथापि स्यात् । यथोदकादेर्व्रीहिसन्तानस्य विशेषः स नोव[4]कनिवृत्तौ निवर्त्तते । अग्न्यादेरुपहतोपादानस्य सन्तानस्यैव निवृत्तिः । तथा चेतस उपादानस्य केनचिदुपहतस्य न सन्तानकारणत्वमिति न सन्तानस्य निवृत्तिः स्यादिति । यथा च शालूकस्य विजातीयाद् गोमयादुत्पत्तिस्तथा शरीरादेव प्रथममुत्पत्तिः । अत्रोच्यते ॥

व्रीह्यादीनामुपादानमग्न्यादेरुपघातवन् । उपादानन्तु विज्ञानं केनचिन्नोपहन्यते ॥४७९॥
शरीरात्प्रथमोत्पत्तिर्न विज्ञानस्य दृश्यते । उपादानोपघातेन विना न च निवर्तनं ॥४८०॥

नाग्न्यादेरिव व्रीहिसन्तानोपादानस्योपघातो विज्ञानोपादानस्य । विज्ञानमेव विज्ञानस्योपादानं । न च तस्य दाहादयः सम्भवन्ति ॥ मिद्धादेरुपघात इति चेत् । न(।) मिद्धादेस्तावत्कालिकोपघातहेतुत्वात् ॥

पूर्वसंस्कारसापेक्षं ज्ञानं व्यवहितादपि । विज्ञानाज्जायते तस्य न विच्छेदोस्ति मिद्धतः ॥४८१॥

न खलु मिद्धमुपादानं विज्ञानस्योपहन्तुं समर्थं (।)

विच्छिन्नादपि विज्ञानादुत्पादस्योपलब्धितः । विच्छेदे मरणे मिद्धे न विशेषव्यवस्थितिः ॥४८२॥

अथ कदाचिद्विच्छेद एव भवेत्तदसत् ॥

उपलब्धो न विच्छेदः प्रबोधेन विना कुतः । स्वयं परेण वा तस्य कुतः कल्पनमीदृशं ॥४८३॥

---

[1] T. कायस्य
[2] ताम्रस्य
[3] एकसामाग्रिसम्भ०
[4] स चोदक०

न तावत्स्वयमुपलभ्यते विच्छेदो ज्ञानस्यानस्य हि विच्छेदो ज्ञानेनोपलभ्यते । ज्ञानस्य तु विच्छेदो न केनचित् । ज्ञानाभावेनेति चेत् । ज्ञनाभावोऽसिद्धः कथमभावं साधयेत् । सिद्धश्चेत्सैव सिद्धिर्ज्ञानमिति कथं ज्ञानस्य विच्छेदः ।।

सर्वदापि हि विच्छेदोऽज्ञायमानः सदा भवेत् । अभावः परलोकस्य स एवेति दुरुत्तरं ।।४८४।।

तदप्यसत् ।

पूर्व्वसंस्कारसापेक्षप्रबोधस्योपलब्धितः । सविज्ञानस्य विच्छेदः केवलो नोपलभ्यते ।।४८५।।

जन्मादौ प्रबोधे च विज्ञानं पूर्व्वसंस्कारानुगतमेवोपलब्धमिति न पूर्व्वापरयोः कोट्योर्विच्छेदोपलब्धिः । परेण तु परस्य विज्ञानविच्छेदो नोपलभ्यत एव । उपलब्धिलक्षण-प्राप्त्यभावात् । न च वीतरागतया शैथिल्यसम्भवे विच्छेदः ।

स्वार्थे निस्पृहता नाम विरागस्येति ममत । परार्थनिःस्पृहस्त्वस्ति निर्दोषोपि न सङ्गत. ।।४८६।।

न खलु परार्थनिस्पृहतया निर्दोषता लभ्यते । स एव हि तस्य दोषो यदकृपत्वं नाम । अथवा वीतरागतायाँ[1] विच्छेद इष्यते एव कैश्चिदिति न दोषः । तस्मान्न दानोपघा-तेन विज्ञानस्य निवृत्तिः । शरीरस्यानुपादानात् । चित्तस्योपहन्तुमशक्यत्वात् ।

स्यादेतद् ( । ) यदि नामोपादाननिवृत्त्या न निवृत्तिर्विज्ञानस्याश्रयनिवृत्त्या निवृत्तिरनिवारितैव । देहस्य चाश्रयत्वं प्रतीयते ततः कुड्यादिनिवृत्ताविव चित्तस्य निवृत्ति-रिति न परलोकसिद्धिः ।

तदप्यसन्न सञ्चारश्चित्रादेरुपलभ्यते । तन आधारनाशे स्यान्नाशश्चित्रादिवस्तुनः ।।४८७।।

चित्रादयोहि पटादिषु[2] नाधारान्तरादागता इति प्रतीयन्ते । विज्ञानन्तु जन्मादौ प्रबो-धावस्थायां च जन्मान्तरशरीरसहचारिसंस्कारानुगतं स्वप्नान्तिकशरीरसञ्चारा[3]नुगतञ्चेति न चित्रवत् प्रतिनियताधारं। प्रतिनियताधारत्वे हि तदाधारविनाशे विनाशः। अपि चाश्रयत्वमपि नास्त्येव देहस्यान्यस्य वा क्वचिदिति कथं तद्विनाशे विनाशः (।)

चित्रादयस्तु कुड्याद्यव्यतिरिक्ता एव । ततः स्वविनाशेनैव विनश्यन्ति नाधार-विनाशात् ।

मा भूदव्यतिरेके आश्रयाश्रयिभावो व्यतिरेके कायचेतसोर्भविष्यतीति चेत् । नैतदस्ति ।

**अनाश्रयात्सदसतोर्नाश्रय(ः) स्थितिकारणं ।**
**सतश्चेदाश्रयो नास्याः स्थातुरव्यतिरेकतः ।।६४।।**
**व्यतिरेकेपि तद्धेतुस्तेन भावस्य किं कृतं ।।**

असतस्तावदाश्रयो नास्ति (।) नहि खरविषाणस्य कश्चिदाश्रयः केवलमसत्कारणादुत्पत्ति-मीहते । ततोऽसतः कारणमेव सम्भवति नाश्रयः । सतोपि नाश्रयः सतः सर्व्वनिराशं-सत्वात् । सतोपि स्थितिकारणमाश्रय इत्यपि न सङ्गतं । स्थितेः स्थातुरव्यतिरेकात् । स्थितिकरणे स एव कृतः स्यात् । न च सत उत्पादनं । उत्पन्नस्य पुनरुत्पादायोगात् ।

---

[1] T. वीतरागतया [2] T. घटादिषु [3] T. संस्कारा-

अथोत्पन्नस्यापि किञ्चिदनुत्पन्नमस्ति तत्करणादाश्रयः । सर्व्वात्मनोत्पादे कारणमुच्यते । कस्यचिद्धर्म्मस्योत्पादे आधारादिः । न च स्थितिरव्यतिरिक्ता स्वरूपात्पततोपि स्थित्यभावे स्वरूपसद्भावात् । यदि तु पुनरव्यतिरिक्ता स्थितिः स्यात् । स्थितेरव्यतिरिक्तः स स्यात् । सर्व्वदा स्थितिर्भवेत् । स्वरूपे सति निवर्तमानविरुद्धधर्म्माध्यासाद् व्यतिरिक्ता भवेदिति युक्तं ।

तदसत् । व्यतिरेके सति तद्धेतुरेवासौ स्थितिहेतुरेवासौ नाधारः । भावस्याधार इति चेन् न भावेऽकिञ्चित्करत्वात् । भावस्य स्थितिकरणादाधार इति चेत् । किमसौ स्थितिरुत्पन्ना सती स्थाप्यस्य भवत्यथान्यथा । उत्पत्तेः प्राग्न भावस्याभावादेव । तत उत्पन्नान्यस्माद् व्यतिरिक्ता कथं भावस्य तादात्म्यतदुत्पत्तिसम्बन्धाभावात् तत्समवेतोत्पद्यत इति चेत् । तत्समवेतेति कोर्थः । तत्र स्थितेरिति स्थितेरप्यपरास्थितिरित्यनवस्था । व्यतिरिक्ता सती व्यतिरिक्तत्वेन कस्मान्न प्रतीयते । समवायसम्बन्धादिति चेत् । भवतु समवायस्तथापि यस्य यद्रूपन्तेनैव तत्प्रतीयतां । कथमन्यथा प्रतीतिः । संसर्गाच्चेत् । कोयं संसर्गो नाम । यदि सर्व्वात्मना संसर्गो न व्यतिरेकः । अथैकदेशेन संसर्गः संयोगसमवाययोः को विशेषः । युतायुतसिद्धित्वमिति चेत् । वृक्षाद्यवयवानामपि समवायप्रसङ्गः । इह बुद्धिनिबन्धनत्वे सतीति चेत् । न (।) संयोग एव प्रसङ्गात् । मस्तके शृङ्गमिति प्रतीतेः । अथ स्वसमवाय्यवयवसमवेतत्वमयुतसिद्धिर्विपर्ययाद्युतसिद्धिः । तथापि भेदप्रतीत्या न समवायः । न च निरवयवस्य वस्तुनोऽवयवेन संसर्गः । अवयवेन संसर्गे भेदप्रतीतिप्रसङ्गः । अन्वितानन्वितत्वेन भेद इति न साम्प्रतं । प्रत्यक्षेणान्वयस्याप्रतीतेः । प्रत्क्षाभावे च नानुमानमिति नान्वयप्रतीतिः । तस्मात्सहकारिकारणविशेषाद्विशिष्ट एव पदार्थ उत्पद्यते । न स्थितिर्नामेति स्थितं । तथा च कार्यकारणभावविशेष एवाश्रयाश्रयिभावः । न चोपादानकारणं देह इति तन्निवृत्तौ न निवृत्तिः । यदि चाश्रयो देहः स्थितिकरणात्तदाश्रयस्य स्थितिरस्ति न तस्य विनाश इति (।)

**अविनाशप्रसङ्गः स नाशहेतोर्म्मतो यदि ।**
**तुल्यः प्रसङ्गस्तत्रापि किं पुनः स्थितिहेतुना ॥६५॥**

नहि स्थापके सति विनाशसम्भवः ।

(अहेतुकोविनाशः) --अथापि स्यान्न स्थापके सति नाशो यदि नाशहेतुर्न स्यान्नाशहेतुभावाद्विनाश इति न विनाशप्रसङ्ग इत्याह । नाशहेतोः स नाश इति चेत् । न (।) तुल्यस्तत्रापि प्रसङ्गः । तत्रापि नाशे तुल्य एव प्रसङ्गो न नाशो नामान्य एव कश्चिद्भावात् ।

व्यतिरेके च तद्धेतुस्तेन भावस्य किं कृतं ॥४८८॥

नहि व्यतिरिक्तनाशकरणे स नष्टो नाम । ततश्च न नाशहेतुः किञ्चित्करोति । ततोऽनाशात् स्वयमेवास्त इति किं स्थितिहेतुना । नाकिञ्चित्करः स्थितिहेतुः । अथवा यदि नाशहेतोर्नाशः । यावन्नास्ति नाशहेतुस्तावत्स्वयमेवास्त इति किं स्थितिहेतुना ।

**अनाशकागमात्स्थानं ततश्चेद्वस्तुधर्मता ।**
**नाशस्य ; सत्यबाधो सावित्ति किं स्थितिहेतुना ॥६६॥**

स्थापकमन्तरेण नाशो नाशकमन्तरेणापि स्यात् । स्थापके तु नाशके सति नश्यति । न नाशहेतुम्विना । ततः स्थितिकरणान् नाशकात्प्राक् स्थापक इति न व्यर्थता । नन्वेव-

महेतुको विनाशः प्रसक्त इति स्वहेतोरेव तथाभूतो भाव इति वस्तुधर्म्मता नाशस्य । सति विद्यमाने पदार्थेऽबाधोऽसौ । न केनचिद्वस्तुस्वभावोन्यथा कर्त्तव्य इति किं स्थितिहेतुना ।

अथ स्थितिहेतुमन्तरेण विनश्यति । स्थितिहेतौ च सति विनाशप्रतिबन्धः । ननु सोपि विनाशप्रतिबन्धोन्य एव विनाशात् । ततश्च न विनाशस्य किञ्चिदिति विनश्येदेव कथं स्थितिः । अथ प्रतिक्षणं विनश्वरः स्थापकादन्यथा भवति । तस्यापि विनाशोऽहेतुक इति स एव प्रतिक्षणविनाशः । स चान्यथा स्थापकादुत्पन्न इति कारणमेवासाविति न स्थापकः । अथवा यदि स्थापकात्स्थानमानाशकागमादनाशः । एवं सत्यनाश उत्पन्न इति । अबाधोसाविति किं पुन(ः)स्थितिहेतुना । अथ स्थापकसत्ताकाल एवानाशस्तथा सति प्रतिक्षणमपरापरो नाशः स्थापकात् । स्थापकस्य च किंकृतं स्थानं । स्वहेतुकृतं चेत् स्थाप्यस्यापि तथा भविष्यतीति किं स्थापकेन । अथ कस्यचित्स्थापकात्स्थानं कस्यचित्स्वयमेवेति विभागः । एवन्तर्हि विज्ञानस्यापि स्वयमेव स्थितिरिति किन्नेष्यते ।

अथापि स्याद् (।) दृश्यते जलाधारो[1] भूप्रदेशः । न च दृष्टं विकल्पनं तेनापि[2] बाध्यते । तेनानाश्रयात्सदसतोरिति व्यर्था वाचोयुक्तिर्दृष्टबाधनात् । अत्राप्याह ।

यथा जलादेराधार इति चेत्तुल्यमत्र च ॥६७॥

प्रतिक्षणविनाशे हि भावानां भावसन्ततेः ।
तथोत्पत्तेः सहेतुत्वादाश्रयोऽयुक्तमन्यथा ॥६८॥

स्यादाधारो जलादीनाङ्गमनप्रतिबन्धतः ।
अगतीनां किमाधारैर्गुणसामान्यकर्म्मणां ॥६९॥

जलादेरप्याधाराभावो भूतलादीनां सदसत्त्वपक्षयोर्युक्त एवेत्यदृष्टो दृष्टान्तः । ननु दृष्टत्वादाधारभावस्य कथमदृष्टः । अदृष्ट एव दृष्टाभिमानो भवतः(।) क्रियां प्रति य आधारो धारणात्कर्त्तृकर्म्मणोरिति न्यायः । धारणादाधारः । धारणञ्च पततः । यश्च पतति न तस्य धारणं । यस्य च धारणं न तस्य पतनोपलम्भः । पतनापतनयोः परस्परविरोधात् । पूर्व्वं पतनं पश्चादपतनमिति चेत् । न तर्हि यस्य पतनं तस्य धारणं प्रत्यक्षेणैकत्वाप्रतिपत्तेः । नैकोवस्थाता पतनेतरव्याप्त्युपलब्धेः । अव्यापी च कथमवस्थाताऽव्याप्यवतिष्ठत इति हि ग्रहणेऽवस्थाता तथा गृहीतो भवति । क्रमेण व्यापी गृह्यत इति चेत् । कः क्रमार्थ इति चिन्त्यं । भावाभावयोरेव क्रमव्यपदेशः । स च भिन्नकालयोर्भावाभावौ च ग्राह्यस्य ग्राहकस्य वा ग्राह्यस्य भावाभावसङ्गमेनैकत्वं । ग्राहकस्य क्रमवत्त्वे ग्राह्यस्यापि तदिति न ग्राह्यावस्थातुरेकता । ततः किञ्चिद् गृहीतातीतं किञ्चिद् गृह्यते किञ्चिदनागतग्रहणमिति विकल्पगोचर एव क्रमः। कुतः प्रत्यक्षता क्रमस्य । येनोपलम्भादुच्यत आधाराधेयभाव इति । ततश्च नाश्रयात्सदसतोरित्ययमेवार्थः । न दृश्यत एवाधाराधेयभाव इति ततः कल्पनैवेयमाधाराधेयभावस्येति कथन्तर्हि तद्दर्शनमन्तरेणाधाराधेयकल्पनापि । न भवितव्यमेव । तर्हि विपरीतकल्पनयेत्यायातं । किञ्च(।)प्रतिक्षणविनाशिनां भावानामपरापरदेशोत्पादवतामुपादानदेशोत्पत्तिराधारसमागमकृता । अतस्तथोत्पत्तेः स भूतलादिराश्रयो हेतुत्वात् । हेतोरेव विशिष्टावस्थाया आधार उच्यते पूर्व्वापरयोरेकत्वमारोप्य ।

---

[1] T. जलाद्याधारो  [2] T. विकल्पकारणेन

एकत्वारोपे हि सति नोत्पादं प्रतिपद्यते। पूर्व्वस्य कारणञ्चारोपयतीत्यनादिवासनासामर्थ्ये मिथ्याविकल्पोऽतएव पूर्वपूर्व्ववासनाप्रवृत्तत्वादनादिसन्तानतया परलोकस्य प्रतिष्ठितिरितीष्टमापतितं। तथा हि।

मानसी कल्पना सर्व्वा पूर्व्वहेतुसमुद्भवा। निरालम्बनभावेन मरीच्यान्तोयकल्पवत् ॥४८९॥

पूर्व्वापरयोरेकत्वकल्पना नालम्बनभावान्वयिनी। एकत्वस्याभावात्। अनेकस्मादेव वस्तुनो भविष्यति। तत्कार्यत्वस्यादृष्टेः। तदसत्। नहि मरीच्यान्तोयकल्पना तावन्मात्रनिबन्धना पूर्व्वजलदर्शनसंस्कारादुत्पत्तेः। न च पूर्व्वमप्येकत्वमुपलब्धमतो जन्मान्तरेपि सैकत्वकल्पना जन्मान्तरैकत्वग्रहणपूर्व्विका सापि तथेत्यनादिकल्पना परस्परेत्यनादिप्राणिसंतानसिद्धिः। एवमात्मादिग्रहयोगिनी बुद्धिरनादिसन्ताना तथा भवन्ती परतोपि न विच्छिद्यत इत्यनाद्यनन्तः संसारः। अपि च।

"स्यादाधारो जलादीनां गमनप्रतिबन्धतः। अगतीनां किमाधारैर्गुणसामान्यकर्म्मणां" ॥

जलादीनां हि गमनविबन्धहेतुराधातुराधार इति युक्तमगतीनान्तु निष्क्रियाणां गुणसामान्यकर्म्मणां किमाधारैः। चैतन्यञ्च सामान्यं गुणः कर्म्म वान्यथा। सर्व्वथा निष्क्रियमिति नाधारेणास्य प्रयोजनमतो नाधेयस्य चेतसो नाधारविनाशेन विनाशः। सहस्थानमात्रकमेव तस्य। यथा च सहस्थानं तथा प्राक् प्रतिपादितं।

ननु यथा गुणः समवेतो गतिमत्त्वाभावेपि तथा चेतसोपि समवेतत्वं। न च गुणस्य समवेतस्य समवायिकारणमन्तरेण स्थानं(।)तद्विनाशे विनाश एवेति चेत्। न (।)गमनादिप्रतिबन्धमन्तरेणाधाराधेयभावो नाधाराधेयभावमन्तरेण समवायो यतो युतसिद्धानामाधार्याधारभूतानामिह बुद्धिनिबन्धनः समवाय इति वचनात्। एतदेवाह।

**एतेन समवायश्च समवायि च कारणं।**
**व्यवस्थितत्वं जात्यादेर्न्निरस्तमनपाश्रयात् ॥७०॥**

समवेतत्वेपि जातेर्नाधारभूतव्यक्तिमन्तरेणाभावः। नित्यत्वाज्जातेर्नाधाराभावेऽभाव इति चेत्। चेतसोपि कारणान्तरप्रतिबद्धत्वादिति समानं। न चाधाराधेयभाव इति। एतेनैवाधाराधेयभावप्रतिक्षेपेण प्रतिक्षेपात् समवायः प्रतिक्षिप्तः समवायि कारणञ्च प्रतिक्षिप्तं। यदि कारणन्तत् नाधाराधेयभावः। अथ न कारणन्तदा समवायिकारणता नास्ति। व्यवस्थितत्वञ्च जात्यादेः कारणत्वमन्तरेणापि यदुच्यते। तदपि प्रतिक्षिप्तं।

अथवा समवेतत्वेपि व्यवस्थित्वं तत्रैव व्यवस्थितत्वं प्रतिक्षिप्तं। नहि जातिर्व्यक्तिसमाश्रितत्वेपि तत्रैव व्यवस्थिता व्यक्त्यन्तरेप्यनुगतत्वात्। एवमाश्रितत्वेपि चैतन्यं शरीराभावेपि शरीरान्तरानुगतं भविष्यतीति न परलोकासिद्धिः। एकशरीराभावेपि तथाभूतबुद्ध्युपादानो न विरुध्यते। व्यक्त्यन्तरेप्यन्वयि बुद्धिवत्। तस्मान्न कार्यकारणभावमन्तरेण कश्चिदाश्रयाश्रयिभावः।

**परतो भावनाशश्चेत् तस्य किं स्थितिहेतुना।**
**स विनश्येद्विनाप्यन्यैर्न्न शक्ताः स्थितिहेतवः ॥७१॥**
**स्थितिमान्साश्रयः सर्व्वः सर्व्वोत्पत्तौ च साश्रयः।**
**तस्मात्सर्व्वस्य भावस्य न विनाशः कदाचन ॥७२॥**

**स्वयं विनश्वरात्मा चेत्तस्य कः स्थापकः परः ।**
**स्वयं न नश्वरात्मा चेत्तस्य कः स्थापकः परः ॥७३॥**

**—इति सङ्ग्रहश्लोकाः ।**

ननु दीपप्रभयोराधाराधेयतामन्तरेणापि दृष्ट आश्रयाश्रयिभावः । नहि प्रभायाः पतनधर्म्मता । अस्ति च दीपस्याश्रयभावस्तन्निवृत्तौ च प्रभाया निवृत्तिः । न चासौ प्रभा-प्रदीपान्तरं संक्रामति तदन्यद्वा । तद्यथा । प्रदीपप्रभा प्रदीपविनाशे विनश्यति देशान्त-रगतापि एवं शरीराश्रितं विज्ञानं शरीरनिवृत्तौ निवर्तिष्यते विषयगतमपि । न च विषयगतिरपि परमार्थतस्तदाकारतामात्रमेव तत्र मनोविज्ञाने दृश्यते ।

अत्रोच्यते ।

तद्विकारविकारित्वादाश्रयांश्रयिभावो दीपप्रभयोर्नैवं शरीरचेतसोरपि तु बुद्धिप्रज्ञादीनां । तथाहि ।

**बुद्धिव्यापारभेदेन निर्ह्रासातिशयावपि ।**
**प्रज्ञादेर्भवतो देहनिर्ह्रासातिशयौ विना ॥७४॥**
**इदं दीपप्रभादीनामाश्रितानां न विद्यते ।**
**स्यात्ततोपि विशेषोस्य न चित्तेनुपकारिणि ॥७५॥**

बुद्धेर्विशिष्टसंस्कारवशाद्विशिष्यमाणाः प्रज्ञादयो बोधविशेषा विवर्त्तन्ते । देहसंस्कार-विशेषमन्तरेणापि ततो बुद्धिरेव पूर्विका बुद्धेराश्रयो न देहः । ततो न दीपप्रभादृष्टान्तः ।

ननु च दीपप्रभापि सर्प्पादिभिर्विकृता क्रियत एव । न प्रदीपस्यैव स विकारो मन्दच्छायालक्षणः । तेन दूरदेशवर्त्तिनी दीपप्रभान्यथा भवति । न तु शरीरविकारो बुद्धिव्यापारभेदसमये । ननु देहविशेषादपि विशेषो दृश्यत एव । ततो देहस्योपादानभाव आश्रयभावो वा (।)

तत्राह । चित्तोपकारद्वारेणैव तत्रापि देहस्य विकारविकारित्वं । यत्र च देहपुष्टौ रसायनादेः प्रज्ञादेर्विशेषः । तत्र देहस्य सुखस्पर्शरूपस्योत्पत्तेरव्याकुले मनसि यथाभूत-संस्कारप्रबोधात्कस्यचित् क्वचित्प्रज्ञाविशेषः । अन्यथा सर्व्वस्य सर्वत्र प्रज्ञासमानताप्रसङ्गः ।

यथा क्षुदुपघाते न व्याध्या व्याकुलतोदयः । तन्निवृत्तौ यथाभ्यस्तव्याख्यैवास्य प्रवर्तते ॥४८०॥
रसायनस्य साम्यात्त तृप्तेश्च न भवेदपि । यथाभ्यस्तानुसन्धानं सर्व्वव्याख्यादयोस्त्वतः ॥४९१॥
तेन जन्मान्तराभ्यस्तं येन शास्त्रं यदेव हि । प्रज्ञाप्रबोधस्तत्रैव शास्त्रे तस्यैति निर्णयः ॥४९२॥
सर्व्वाभ्यासस्तु यस्यास्ति तस्य प्रज्ञाविशेषतः । अन्यथा सर्व्ववेदी स्याद्रसायनविधानतः ॥४९३॥
अध्यक्षस्मरणे मुक्त्वा न बुद्धिरपरा क्वचित् । प्रज्ञामेधादिभेदोपि स्मृतेरेव प्रबोधतः ॥४९४॥
यथाभूतस्मृतिः प्रज्ञा दौ(:)प्रज्ञन्तद्विपर्ययः । मेधापि स्मृतिरेवैष तत्र भेदः प्रदर्श्यते ॥४९५॥
अत्यन्तविस्मृतो योर्थः पूर्व्वसंस्कारमात्रतः । तथैवाभ्युद्यते येन स प्राज्ञ इति कीर्त्यते ॥४९६॥
स्मरणानुगमेनैव येन संप्रतिपद्यते । स मेधावीति कथितः प्रज्ञानाभ्यासवर्ज्जनात् ॥४९७॥

तथा(।)

पृथक् पृथग् गृहीतानां मेधा प्रोक्ता तथा स्मृतिः ।
अन्योन्ययोजने तु स्यात् प्रज्ञा सैव विशेषतः ।४९८॥

न चानभ्यासतः काचिद्योजना नाम दृश्यते। तज्जातीयार्थतस्तेन प्रागभ्यासोनुमीयते ॥४९९॥

ननु रागोपि बुद्धिविशेष एव। न बुद्धेरन्योन्यत्वे प्रज्ञादेरप्यन्यत्वप्रसङ्गः। रागादयश्च देहस्य पुष्ट्यादेजर्यन्ते। ततो बुद्धिरपि देहादिति प्राप्तमन्यथा तदनुविधानाभावः। नैतदस्ति।

**रागादिवृद्धिः पुष्ट्यादेः कदाचित्सुखदुःखजा।**
**तयोस्तु धातुसाम्यादेरन्तरर्थस्य सन्निधेः ॥७६॥**

रागादिबुद्धिर्या पुष्ट्यादेः सा न सर्व्वदापि तु कदाचिदेव यदाभ्यासजोऽयोनिशोमनस्कार-सम्मुखीभावः। यस्य तु पुनरशुभावासनासमागमस्तस्य स एव प्रत्युत रागस्तनूभवति। यापि रागादिवृद्धिः[1] सुखदुःखजा सुखितायां वेदनायां रागोनुशेते दुःखितायां द्वेष इति। सुखितस्य स एव पूर्व्वकोऽयोनिशोमनस्कारप्रबोध इति। दुःखितायान्तु द्वेषः कथमिति चेत्। दुःखितस्य सकलमेवासह्यमतस्तत्परित्यागात्मको द्वेष एव। न चात्र नियमः। दुःखितेपि मनसि प्रतिसंख्यानवतः स्वदुःखानुमानात् कृपैव। रागोपि भवत्येव तत्प्रतीकारहेतौ। तयोरेव तर्हि सुखदुःखयोर्बुद्धिस्वभावयोर्यथा देहादुत्पत्ति[2]र्बुद्धेरपि तथैवेति प्रकृतविरोधः। नैतदस्ति। अन्तरर्थस्य धातुसाम्यलक्षणस्य[3] सन्निधेर्विषयद्वारेणैव सुखमुत्पद्यते नाश्रयद्वारेण। नाश्रयभूतो देहः सुखदुःखे जनयति। अपितु विषयभूतः। विषयस्य च सुखादिहेतुत्वेन देह आश्रयस्तयोः। विषयस्य बाह्यस्यान्तरस्य च समानत्वात्। ततो बाह्यस्याप्याश्रयत्वप्रसङ्गो न चेष्यते। यथाहि[3] आन्तरोपि धातुसाम्यादिरर्थविशेषो नालम्ब्यते प्रियदर्शनादिना तदा तदाश्रयत्वमेव सुखदुःखयोः। न च विषय आश्रयो न च तन्निवृत्त्या निवृत्तिः। यथान्तरविषये सुखम्भवति। तत्परित्यज्य बहिर्विषयसञ्चारवत् तथा शरीरान्तरेपि परलोकादौ।

**एतेन सन्निपातादेः स्मृतिभ्रंशादयो गताः।**
**विकारयति धीरेवाभ्यन्तरर्थविशेषजा ॥७७॥**

तत्रापि रसायनादेरन्तरर्थसन्निधौ सुखादिबुद्धिरुत्पत्तिमिती। ततः स्मृतिभ्रंशादयः। न तु देहविकारो यः सन्निपातकृतः। तत आश्रयभूतात् यथाऽनालम्ब्यमानादपि चक्षुरादेस्तद्विज्ञानमुपजायते। तद्विकारेण च विकारः। न तथा रसायनादिविकृतदेहादविज्ञायमानस्य कारणत्वे सर्व्वकारणत्वप्रसङ्गः। चक्षुरादीनां त्वन्वयव्यतिरेकाभ्यां तद्विकारविकाराच्चाश्रयभावः। नैवं देहस्य। तदभावेपि बाह्यसन्निधानेपि सुखादिभावात्। स्मृतिभ्रङ्शो हि बाह्यराक्षसादिरूपदर्शनेपि भावी।

एतदेव दर्शयति।

**शार्दूलशोणितादीनां सन्तानातिशये क्वचित्।**
**मोहादयः सम्भवन्ति श्रवणेक्षणतो यथा ॥७८॥**

शार्दूल इति श्रवणादपि कस्यचिन्मोहोन्यो वा भवति भावः। तथा शोणितदर्शनात्। न चासावाश्रयस्तन्निवृत्तौ वा निवृत्तिर्बुद्धेः। एवमान्तरस्यार्थस्यालम्बनस्य सन्निधेरुत्पादात्सन्निपाताद्यवस्थायां स्मृतिभ्रंशादिभाव इति न देहाश्रया बुद्धिः। आलम्बनमेव देहः सुखादीनां। ततस्तेपि तन्निवृत्त्या न निवर्त्तन्ते। आलम्बनान्तरे भावात्।

---

[1] T. बुद्धिः [2] बुद्धेरुत्प [3] T. यदा

**तस्मात् स्वस्यैव संस्कारं नियमेनानुवर्तते ।**
**तन्नान्तरीयकं चित्तमतश्चित्तसमाश्रितं ॥७६॥**

चित्तस्यैव संस्कारं नियमेनानुवर्तते चित्तं न शरीरस्य । शरीरस्याश्रयत्वादृष्टेः । अन्यचेतस्कस्य तु नान्यत्र चित्तमुदेतीति चित्तमेवाश्रितं चित्तं । तथा हि ।

संस्कारस्य बलीयस्त्वाद् व्याक्षेपस्य निवर्तनं । व्याक्षेपस्य बलीयस्त्वे संस्कारः स्यात्पराङ्मुखः ॥५००॥

यदा बलीयानत्यन्तं भवति संस्कारस्तदा व्याक्षेपेपि न व्याकुलता चेतसो यदा तु बलीयान् भवति व्याकुलभावस्तदा विद्यमानोपि संस्कारो न स्वकार्यमनुरूपं सम्वेदनं जनयति । तस्मात्पूर्व्वविज्ञाननान्तरीयकमेव चित्तमतश्चित्तनिवृत्तावेव चित्तस्य निवृत्तिरिति युक्तं ।

नन्विन्द्रियादुत्पत्तिमद्विज्ञानं । ततोपि मनोविज्ञानं । अतः पारंपर्येण मनोविज्ञानं देहादेव भवतीति कथमनाश्रयो देहः । नहि पारंपर्येणापि कारणं धूमान्तरजनितस्य धूमस्याग्निरनिवर्तकः । न चापरापराग्नेरसौ न भवत्यपूर्व्वः । एवं विज्ञानमपि देहादुत्पद्यमानं धूमवदुच्छेदधर्म्मकं स्यात् । न । इन्द्रियज्ञानमन्तरेणापि मनोविज्ञानमनादिवासनात इति प्रतिपादनात् ।

धूमश्चाग्नेर्यथाभूतो न धूमादपि तद्विधः । अभ्यासात्तु मनोर्यादृक् तादृगेवादिसम्भव ॥५०१॥

धूमस्य हि वह्निजन्यस्य धूमजन्यस्य च नैकलक्षणत्वं । प्रज्ञादीनान्तु बुद्धि(वि)शेषाणामभ्यासानन्तरं प्राक् समानमेव रूपमात्मग्रहादीनां च सर्व्वव्यापिनान्ततो न धूमादिर्दृष्ट न्तः । धूमस्य चाग्निविशेषादेव प्रबन्धः किञ्चित्कालस्थायी । प्रज्ञादयस्तु प्रज्ञादिविशेषादेव पूर्व्वकाल देहकृता स्थितिस्तेषां । अपि च ।

विज्ञानमिन्द्रियादेव यदि जायेत कस्यचित् । पूर्व्वविज्ञानरहिताद् धूमदृष्टान्तसम्भवः ॥५०२॥

इन्द्रियादपि विज्ञानं जायमानं न पूर्व्वसंस्कार[1]निरपेक्षात् । पूर्व्वविज्ञानव्याकुलत्वे सत्यपि विषयेन्द्रियसन्निधानेऽनुत्पत्तेः । ततः पूर्व्वविज्ञानसहकारिण एव इन्द्रियादुत्पत्तिर्न केवलात् । उत्पन्नमेव तदिन्द्रियविज्ञानं । तत्तु निश्चयाभावादनुत्पन्नमिति व्यवह्रियते । तदसत् ।

उत्पन्नमपि विज्ञानं यदि नास्तीति मीयते । निश्चयाभावतः सर्वोऽभावस्तस्येति गम्यतां ॥५०३॥

यदि निश्चयाभावादभावप्रत्ययो न संवेदनाभावान्न तर्हि सम्वेदनाभावो नाम क्वचिदस्ति । तर्व्वत्र निश्चयाभावस्य हेतुत्वात् । अथ तत्र[2] सम्वेदनकारणमस्ति । ततः सम्वेदनं समर्थकारणसद्भावादनुमीयते । निश्चयस्यापि तर्हि सम्वेदनं कारणमस्तीति तस्यापि भावोऽनुमीयतां । अथ व्याकुलतया तदुपहतं । सम्वेदनस्यापि कारणं किमेवं नेष्यते ।

अथानुपहतस्येन्द्रियस्य विषयस्य चाव्यवहितस्य कथं न विज्ञानजनकत्वं । पूर्व्वविज्ञानस्य जनकत्वस्या[3]भावात् । पूर्व्वविज्ञानसहितस्यैवेन्द्रियस्य जनकत्वात् (।) कुत एतदिति चेत् । सुखादीन्द्रियविज्ञानतो यतः । प्रतिपादयिष्यते पश्चादेतच्चावसरागतं । अथ सुखदुःखतदनुभयविज्ञानमैन्द्रियकमेव पूर्व्वाभ्यासबलादुत्पत्तिमदिति पश्चात् प्रतिपादयिष्यते । तेनेन्द्रियं

---

[1] T. विज्ञान [2] T. ततः [3] T. जनकस्या

पूर्व्वसंस्कारसापेक्षमेवोत्पादयतीन्द्रियविज्ञानं। ततो नाद्यमपि[1] सम्वेदनमिन्द्रियादुत्पत्तिमत्। तस्मात्सकलं चित्तं चित्तनान्तरीयकमेवेति स्थितं। किञ्च।

भावनाबलतः सर्व्वमिन्द्रियज्ञानमागतं। इन्द्रियज्ञानरूपत्वात्स्वप्नविज्ञानरूपवत् ॥५०४॥

यदीन्द्रियं कारणमिन्द्रियाभावे पुरोवर्त्तिस्पष्टाकारतावद्विज्ञानं न भवेत्। भवति च तस्मात्तदभावेपि भावान्न तत्कारणमिति। अथ भ्रान्तं तदभ्रान्तं त्विन्द्रियादेवोत्पद्यते नैतदस्ति।

विनैव सकलं ज्ञानमिन्द्रियादुपजायते। अर्थस्य भावाभावाभ्यां भ्रान्ताभ्रान्तव्यवस्थितिः ॥५०५॥

तदाकारं हि सकलमिन्द्रियं विज्ञानमन्तरेणैव स्वप्नविज्ञानवत्। अथ यदिन्द्रियमन्तरेण तद् भ्रान्तमन्यदन्यथेति विशेषः। तदसत्। तदाकारता हि तावत्स्वरूपं विज्ञानस्य साचेन्द्रिय-मन्तरणैवोपलभ्यते। तदा तस्यास्तत्कारणन्न भवति। सम्वादस्तु पुनरर्थस्य भावाद्भवती-त्यर्थकृत एव स नेन्द्रियकृतः। न चान्यकार्येन्यस्य सामर्थ्यं।

अथ स्वप्नेप्यस्त्येवेन्द्रियं तेन पुरोवर्त्तिस्पष्टाकारता तत्रापीन्द्रियकृतैव तेन न व्यभिचारः। तदपि न युक्तिमत्। यस्माद्(।)

अभ्यासादिन्द्रियं जाग्रदिन्द्रियत्वात्तदन्यवत्। कार्यस्वभावाभेदेहि कारणानामभिन्नता ॥५०६॥

कार्याविशेषेण कारणाविशेषोनुमीयते।

न च स्वप्नावथायामन्यत्र चेन्द्रियस्य विशेषः। तेनेन्द्रियमेव सजातीयाभ्यासमन्तरेण न भवतीति नाद्यं[2] विज्ञानमिन्द्रियादेवोत्पत्तिमदिति पूर्व्वकमेव विज्ञानं विज्ञान[3]स्याश्रयः।

अथापि स्याद्भवतु चित्तं चित्तस्याश्रयस्तथापि नेष्टसिद्धिः। अपारलौकिकचित्ताश्रयत्वे सिद्धसाधनं मातापितृचित्ताऽऽश्रयत्वस्येष्टेः। पारलौकिकचित्ताश्रयणेऽनैकान्तिकता। मातापितृ-स्वभावस्याप्यनुवर्तनात्।

अत्रोच्यते। "तस्माद्यस्यैव संस्कार[4]" मित्यादि। न मातापितृस्वभावानुवर्तनं नियमेन। तदविकारेपि विकारदर्शनात्। विकारेपि चाविकारदृष्टेः। यदि च तस्य संस्कारो भवेत् पाण्डित्यादयोपि स्युः। यथा वटवृक्षादिस्वभावाद्वट[5]वृक्षस्वभावता तत्प्रसवस्य। अथ यथा पितुर्मातुर्व्वा संस्काराधःयिपाठकादि[6]सहकारिणी तत्स्वभावता तथापत्यस्यापि स्यात्। तन्न संस्कारेपि कदाचिदभावात्। इतरथापि भावात्। स्वसन्तानवर्त्तिपूर्व्वकविज्ञानसंस्कारा-नुवर्तनस्य (दृष्टत्वात्सन्ता नान्तरानुवर्तनस्य) चादृष्टेरुपाध्यायसंस्कारानुवर्तनमुपलभ्यत इति चेत्। न(।) स्वसन्तानपूर्व्वविज्ञानंस्यैवाभिरुचिविशेषात्तदभावेन्यत्रादृष्टेरसावपि स्वसन्ता-नादेव पारंपर्यादुत्पन्नः। अभिरुचिसहायादुत्पत्तिरिति चेत्। अस्तु तथापि स्वसम्वेदनं विना न परसंस्कारानुवर्तनं तेन। (।)

परलोकं विना न स्यात् संस्का।रा[7]नुवर्तनं। पितृस्वभावानुगमोऽविरोधी परलोकिनः ॥५०७॥

[1] T. नाद्य [2] T. नाद्य(?) [3] T. विज्ञानाकारस्य
[4] T. द्यस्यैव नियमः [5] T. वट वीजाद्
[6] T. Sदोन्-व-पो [7] T. संस्कारस्या

स्यादेतद्(।)

यदि[1] स्वसन्तानवर्त्तिचित्तसंस्कानुवर्तनमेव नियमतः। कथं पितृस्वभावानुवर्तनं। तत्र परिहारः(।)सर्व्वस्य पितृस्वभावानुवर्तनप्रसङ्गात्। परलोकवादिमतेपि तर्हि सर्व्वस्याननुवर्तनप्रसङ्गः। न। तत्स्वभावस्य तेन परलोकेभ्यस्तत्वादुपाध्यायस्वभानुवर्तनवत्। अथ यथैकस्माद् वृक्षादनेकवृक्षसम्भवस्तथैकविज्ञानादनेकविज्ञानसम्भवः। एवमेकस्मादेव पारंपर्येण सकलं जगदुत्पन्नमिति प्राप्तं। उक्तमत्र मात्रादिस्वभावानुवर्तनप्रसङ्गात्। परलोकवादिनोपि तर्हि सकलपूर्व्वस्वभावानुवर्तनं स्यात्। न। व्याकुलत्वेन कस्यचिद् भ्रष्टत्वाद्[2] गर्भावस्थानदुःखेन वा। कस्याचित्तु संस्कारानुवर्तनमस्त्येव। जातिस्मरणस्य च दृष्टेः। अपूर्व्वोत्पन्नस्य तु न दुःखं सैव तस्यावस्था नान्येति। स एव चेदुपादानकारणत्वेन[3] जनकः। तच्छरीर इव शरीरान्तरेपि पुत्रसम्बन्धिनि स्मरणप्रसङ्गः। दुःखाच्चेदस्मरणन्तदसत्। तदैव तत्रोत्पन्नस्य न दुःखं विषकीटवत्। परलोकिनस्तु तद् दुःखमनाद्यभ्याससेवनात् ॥५०८॥

किञ्च। पित्रोर्दुःखसम्वेदनप्रसङ्गः। यथा सुप्तस्य शरीरान्तरगतस्य[4] स्वप्नशरीरे दुःखवेदनं। जन्यवृक्षदाहे जनयितृवृक्षाम्लानिवदसम्वेदनमिति चेत्। न। उत्तरवृक्षसंस्कारस्य पूर्व्ववृक्षेभावात्। इह तु स्वप्नशरीरस्य पूर्व्वशरीरे दृष्टेः। ततः स्मरणमेव पूर्व्वकृतस्य स्यात्। संस्वेदजे च न बुद्धिः स्यात्। मात्रादेरभावात्। तस्मादात्मग्रहादिबुद्धिर्मात्रादिबुद्ध्यभावेपि दृष्टा सम्वेदजेषु[5] प्राणिषु ततस्तदभावेपि भावान्न मात्रादिबुद्धिर्हेतुः। ततः स्वसन्तानभाविपूर्व्वबोध[6]जनितमेव मनोविज्ञानमपरञ्च कायादीनां चापलं।

ननु स्वसन्तानो[7] मात्रादिशरीरमेव शरीरान्वयस्य दृष्टत्वात्[8]। तदव्यतिरेकि च विज्ञानं चापलादयश्च। ततस्तदन्वयसाधने सिद्धसाधनमेव।

अथ शरीरस्य पित्रादिसम्बन्धिनो भिन्नता परलोकिकायस्यापि[9] तथेति तदन्वयितापि न स्यात्। बालाद्यवस्थायाञ्च पित्रादेः स एव चपलतादिस्वभाव इति तत्सन्तानता।

तदप्ययुक्तं। चेतसा शरीरेण च मात्रादिस्वभावस्यानुवर्तनस्यादृष्टेः। स तस्य पिता[10] न भवतीति चेत्। न। दृष्टत्वात्। न चाभ्यासमात्मीयमन्तरेण तद्विशेषो दृष्टः। तस्मात्स्वाभ्यास एवानुमीयते। अभेदेपि चेतसो महाभूतविकारत्वेपि पूर्व्वपरलोकमहाभूतानुमानमेव। न चाभेदो युक्तः। यस्माद्(।)

**यथा श्रुतादि-संस्कारः कृतश्चेतसि चेतसि।**
**कालेन व्यज्यतेऽभेदात्स्याद् देहेपि ततो गुणः ॥८०॥**

शुभादि[11] संस्कारो हि स्वसम्विदिताभ्यासपूर्व्वको नाभिव्यक्तः स्वापावस्थायां काले प्रबोधावस्थयाभिव्यज्यते। तथा देहेप्यभिव्यक्तश्चेतसीव प्रतीयते अभेदतः। यथा देहे गुणाः कार्श्यादय[12] उपलभ्यन्ते परेण च। तथा चेतोगुणस्य शिल्पादेरप्युपलम्भः किन्न भवति।

[1] T. यद्येवं [2] T. उक्तत्वाद् [3] T. उपादानत्वेन
[4] T. शरीरान्तर्गत [4] T. [5] T. संस्वेदजेषु
[6] T. बुद्धि [7] T. स्वकारणं [8] T. उपलम्भात्
[9] T. पारलौकिक० [10] T. मातापितरौ [11] T. श्रुतादिके [12] T. कार्ष्ण्यादयः

नहि यदुपलभ्यते रूपान्तर्गतन्तदन्यथा भवति । अन्तःस्प्रष्टव्यविशेषरूपत्वात्परोपलब्धिर्न भवतीति चेत् । न । बहिःस्प्रष्टव्यस्यापि व्रणादेरनुपलम्भात् । नहि व्रणेन खरस्पर्शो वायुरुपलभ्योन्येनोपलभ्यते । व्रणस्यैव सा शक्तिरिति चेत् । किमुपलम्भकविशेषादुपलभ्योन्यथोपलभ्यते(।) तथा सति भ्रान्तत्वप्रसङ्गः । व्रणस्यैव संस्पर्शविशेष इति चेद्वायोरुपलम्भकत्वप्रसङ्गः । तथा च व्रणिनो वेदना न स्यात् । अथ वायुना परिघट्टमानस्य व्रणस्य तेनैवोपलभ्यते सस्पर्शः । अन्यस्यापि व्रणस्पर्शतः स्यात् । न स्पृश्यमानस्य परेण उपलम्भ इति न युक्तं यतः ।

स्पृश्यमानस्य यद्रूपं तच्चेत्स्पृष्ट न वेद्यते । तदन्यरूपवित्तौ स्यात्तदेव विदितं कथं ॥५०९॥

न खलु तस्य रूपमनुपहतेन्द्रियेणाविदितं युक्तं । तथा च स्वसम्वेदनमेव । असम्वेदनस्य तद्विलक्षणत्वात्[1] । स्वसम्वेदनमेव दुःखं सुखम्वा रागादयश्च स्युरिति महाभूतादन्यद्विज्ञानं । ततः स्वम्वेदनस्य[2] देहेन सहाधाराधेयभावो न युक्तः । कथन्तर्हि पादे मे वेदना हस्ते मे वेदनेति । हस्तविकारकाले तस्याभावादेवं[3] भवति नान्यथा । हस्तादिविकारसहचरितत्वात्तथा व्यपदेशः । तथाहि

स्वसम्विद्रूपता मात्रान्नाधाराधेयतास्थितिः । स्वरूपे हि निमग्नस्य नाधारादिविकल्पनं ॥५१०॥

स्वरूपमात्रवेदने हि कथमाधाराधेयकल्पनासम्भवः । द्वयप्रतिपत्तौ हि तथा भवेत् । न च तत्रापि तथाद्वयप्रतिपत्तौ हि द्वयमेव तदिति भवेत्[4] ।

अथ वासनानियमात्तथाविकल्पः । स तर्हि विकल्पो न महाभूताव्यतिरिक्तः स्वरूपमात्रपर्यवसानात् । वासनाबलोत्पन्नमहाभूतत्वेपि न दोषः[5] ।

### ग. पुनर्जन्मपरिग्रहः

तस्माद् देहातिरिक्ता बुद्धिस्ततो न मातापितृजा । स्वसन्तानपूर्व्वभाविन्येव यदि तर्हि न महाभूतमात्रादुत्पत्तिः प्राणिनो जन्मान्तरादागमनं गर्भादिस्थाने । ततोऽशुचिदेशगमनमयुक्तं । नहि प्रेक्षावानेवं भवितुं युक्तः । न चेश्वरप्रेरणमिष्यते । तत्रोच्यते ।

**अनन्यसत्त्वनेयस्य हीनस्थानपरिग्रहः ।**
**आत्मस्नेहवतो दुःखसुखत्यागाभिवाञ्छया ॥८१॥**

**दुःखे विपर्यासमतिस्तृष्णा चाबन्धकारणं ।**
**जन्मिनो यस्य ते न स्तो न स जन्माधिगच्छति ॥८२॥**

उक्तमेतद्यदि प्रेक्षावान्भवति । स्वरूपस्य स्वतोगतिर्न प्राप्यस्य ततः केनचिन्न क्वचिद् ग्रामादौ प्रवर्त्तितव्यं अत आविशान्तत्वात्संसार एव न भवेत् । अथ ग्रामादिगमनं यथा कथञ्चिद् भवत्यप्रेक्षावत्तया तथा सति गर्भादिदेशगमनमपि । आत्मस्नेहप्रेर्यमाणस्य हि हीनमपि विपर्यासादुपादेयं भवति । कर्म्मशक्तिरेव सा तादृशी येनान्यसत्त्वनेयस्य परतन्त्रस्येव तथा गतिः । हीनस्थानपरिग्रहोपि सुखदुःखाप्तित्यागवाञ्छया श्रोत्रियस्य दासीवेश्मप्रवेशवत् ।

---

[1] T. स्वसंवेदनस्य तल्लक्षणत्वात् [2] T. विज्ञानस्य

[3] T. तस्य भावादे० [4] T. तत्रापि तथा भवति ।

[5] T. वासनामात्रकृतं हि विकल्पमात्रस्य भवति न महाभूतत्वेऽपि

अथेश्वरप्रेरितत्वं कस्मादस्य नास्ति, भ्रान्तस्य स्वयमेव सम्भवान्नेश्वरकल्पना साध्वी। न चेश्वरप्रेरणमुपलभ्यते। यथा च नेश्वरकल्पना तथा प्रतिपादितं। आत्मस्नेह एवेश्वरस्तस्य प्रेरकत्वप्रतीतेः। अथ यथान्येन भृत्यादिः प्रेर्यते तथा परलोकेपीति चेत्। न (।) नियमाभावात्। आत्मतृष्णावानेव प्रेर्यते न सर्व्वः (।) सोपि सतृष्णो नैवापरेण नवीतरागादिना। तदाराधनेन गतिप्राप्तेः स प्रेरक इति चेत्। सर्व्वतीर्थकराणामीश्वरत्वप्रसङ्गः। तस्माद्वि-पर्यस्तमतिरेव प्रवर्त्तते गर्ब्भस्थानेऽन्यत्र वा दुःखेपि सुखसंज्ञया। ततो विपर्यस्तमतितृष्णाभ्यां जन्म यस्य तु ते न स्तो न स जन्माधिगच्छति। न तस्येश्वरो जन्मदानसमर्थः। न हीश्वर-वादिनामप्ययमभ्युपगमः।

ननु यस्यारोग्यसाधकं कर्म्म नास्ति, तस्य भिषगकिञ्चित्करः। यस्य तु कर्म्मा-नुपहतमारोग्यसाधकं तत्रापि व्यर्थता भिषजामशक्यसमर्थाभ्यामिति[1] प्राप्तं। नायं दोषः।

व्यर्थता भिषजः क्वापि न च शक्तिस्तथैव किं। ईश्वरस्यापि सैवेष्टा तथा चेन्न स ईश्वरः ॥५११॥

न खलु कश्चित्संसारी प्रेर्यते ईश्वरेण कश्चिन्नेत्यभ्युपगम ईश्वरवादिनामथ तदा-राधनमपि गतिप्राप्तावुपयुज्यते। तथा सति दायकाराधनमपि। एतच्च सर्व्वतीर्थ-कराणामपि क ईश्वरानीश्वरयोर्व्विशेषः। तस्मादविद्यातृष्णयोरेव जन्मनि सामर्थ्यं नेश्वरस्य।

(अन्तराभवदेहः—) यदि तर्हि गमनमागमनञ्च जन्मान्तरापेक्षया तत उपलब्धिस्तयोः प्राप्ता तथा च नोपलब्धिरित्यभाव एव तयोरित्याह।

गत्यागती न दृष्टे चेदिन्द्रियाणामपाटवात्।
अदृष्टिर्मन्दनेत्रस्य तनुधूमागतिर्यथा ॥८३॥

यद्यपि गत्यागती न दृष्टे तथापि तयोर्नाभावः। इन्द्रियाणामपाटवाददृष्टिर्न स्वभा-वादेव। न ह्यविद्यमानस्यैवादर्शनं मन्दनेत्रस्य न तनुधूमो गतिविषयस्तथाप्यस्त्येव।

अन्तराभवदेहो हि स्वच्छत्वान्नोपलभ्यते। निष्क्रामन् प्रविशन् वापि नाभावोनीक्षणादपि ॥५१२॥

अन्तराभवदेहो हि स्वच्छतया कर्म्मसामर्थ्यादुत्पन्नो योगिमात्रगम्यः। स्वप्नशरीर-वन्नोपलभ्यते (।) न तावता तस्याभावः। मिथ्यास्वप्नशरीरमिति चेन्नार्थक्रियाकारित्वादिति प्रतिपादनात्। अत एव।

तनुत्वान्मूर्तमपि तु किञ्चित्क्वचिदशक्तिमत्।
जलवत्सूतवद्धेम्नि नादृष्टेरसदेव वा ॥८४॥

स्वप्नशरीरवदेवाशक्तिमद् मूर्तत्वान्मूर्तमपि तु किञ्चित्क्वचिदशक्तिमज्जलवद् घटादौ प्रभावत् स्फटिकादौ हेम्नि सूतवत्। अथवा जलवत् सूत[2]वद् हेम्नि न विद्यमानमेव नोपलभ्यते। अपि त्वदृष्टेरसदेव वान्तराभवशरीरं। तथाहि

"व्रीहिसन्तानसाधर्म्यादविच्छिन्नभवोद्भवः" परिकल्पितः[3]।

"मृत्यूपपत्तिभवयोरन्तरा भवतीह यः"[4]।

---

[1] T. अनिष्टासमर्थाभ्यामिति
[2] T. वत् सूत०
[3] T. अभिधर्मकोशे ३।११
[4] तत्रैव ३।१०

न चात्र तथा। व्यवहितस्य कालदेशाभ्यामुत्पत्तेः। तथा हि कश्चिदविच्छिन्नं का म्य कु ब्जा विगमनं ग्रामगमनादिनोपलभते। कश्चिविहस्थ एकदैव देशान्तरस्थमात्मानमुपलभते स्वप्ने। तद्वद् गतिदेशेपीति न विशेषः। न च स्वप्नस्यासत्यतेति अस्यापि साध्यस्यासत्यतया भवितव्यं। न दृष्टान्तस्य सर्व्वसाम्यं दृष्टं। वासनावाढ्र्यात्सत्यता भविष्यति जन्मान्तरस्य न तु स्वप्नस्य, तदभावात्।

प्रतिभासान्तरप्राप्तेः स्वप्नस्यासत्यता यदि। जन्मान्तरस्यापि ततोऽसत्यतेति मतं ननु ॥५१३॥

यदि प्रतिभासान्तरं जाग्रत्प्रत्ययलक्षणं भवतीति स्वप्नस्यासत्यता जाग्रत्प्रत्ययस्यापि सत्यताविपर्ययः। स्वप्नप्रत्ययस्य प्रतिभासान्तरलक्षणस्य भावात्। नहि विपर्ययत्वे विशेषः। अथ स्वप्ने घटादिकमकस्मादेवोपलभ्यते। तत्कारणमन्तरेणैव। ततो विशेष इति चेत्।

अकस्मादुपलभ्यन्ते जाग्रतापि घटादयः। सामग्रीसम्भवे दृष्टाः स्वप्नेपि शकटादयः ॥५१४॥

जाग्रदवस्थायामपि योगिनिर्म्मिता पर्व्वतादयोऽकस्मादेवोपलब्धिगोचराः। विद्यमाना एव ते प्रागुपलभ्यन्त इति चेद् भ्रमणविशेष एव च सामग्री तत्रेति (।) तदसत्यं।

स्वप्नेपि विद्यमानत्वं प्राक्केन विनिवार्यते। अन्यस्यानुपलब्ध्या चेत् पर्व्वतादिषु सा समा ॥५१५॥

यदि विद्यमाना एव प्राक्पर्व्वतादयः क्वचिदुपलभ्यन्ते जाग्रता। स्वप्नव्यवस्थितेनापि[1] तथेति किन्नाभ्युपगम्यते। अन्येन जाग्रता तेषामनुपलब्धेरविद्यमानतेति चेत्। जाग्रदुपलब्धानामपि स्वप्नगतेनाप्यनुपलम्भः। यथा च भ्रमणसामग्रीतस्तेषामुपलम्भस्तथावस्थान्तरस्य स्वप्नस्य सम्भवादकस्माद्घटादीनां। कथञ्च जाग्रदवस्थेति मतिः जाग्रत्प्रत्ययस्योत्पत्तिरिति चेत्।

ननु स्वप्नेपि किन्नास्ति प्रबुद्धत्वमतिः क्वचित्। उन्मेषादिक्रियाः सर्व्वास्तत्रापीति समानता ।५१६॥

तथाहि जागर्मि प्रबुद्धोहमिति स्वप्नेपि विद्यते प्रत्ययः। गमनादयश्च। ततः कथं सोपि स्वप्नः। असत्यत्वादिति चेत्। जाग्रदभिमतावस्थायामपि तथात्वप्रसङ्गः। परस्परानुपलम्भो द्वयोरपि समान इति।

अथासत्यमेतदिति प्रतीतेः स्वप्नस्यासत्यता। जाग्रत्प्रत्ययस्यापि तत्समानत्वादसत्यतास्तु। नहि तत्प्रत्ययादेव तत्त्वं। तल्लक्षणेनापि तत्त्वस्य भावात्। अपि च। असत्यमित्यपि प्रत्ययः किमालम्बते।

सत्यादन्योऽथवा सत्योनायमेतन्निषेधनं। तद्रूपस्योपलब्धत्वात् द्वयमप्यतिदुर्घटं ॥५१७॥

न खलु तद्रूपतयोपलभ्यमान एव ततोन्य इति युक्तः। नापि स न भवतीति। तदन्यता हि तदन्यरूपतयैवान्यथा सोपि तदन्यो भवेत्। न चोपलभ्यमान एव नास्ति सर्व्वस्य तथात्वप्रसङ्गात्। अथायमुत्पद्यते प्रत्ययः। उत्पद्यतामस्यालम्बनं नास्तीति व्यर्थतयैव[2] नास्मात् पदार्थव्यवस्थितिः।

ननु नास्त्येव स्वप्नोपलब्धो घटादिरिति बुद्धोऽविसम्वादी चायं प्रत्ययस्तत्कथं व्यर्थतास्य। तथाहि।

स्नानमात्रप्रबुद्धस्य झटित्यस्नानभासनं। ततस्तथैव सम्वादादविसम्वादिता मतेः ॥५१८॥

---

[1] T. स्वप्नस्थिते.　　[2] T. व्यर्थतैव०

तदसत् । यतः ।

रागावस्था झटित्येव स्वप्नदृष्टौ निवर्तते । न च तत्र विसम्वादः पुनः स्वप्नेस्य वेदनात् ॥५१९॥
स्वप्नेतरव्यवस्थेयं न चाद्यापि प्रसिध्यति । साध्यादेव विसम्वादासिद्धावन्योन्यसंश्रयः ॥५२०॥

किञ्च ।

नास्त्येतदिति नान्येन प्रत्ययेन प्रतीयते । प्रतीतिमात्रमेवैतदसाधारणलक्षणं ॥५२१॥

एवम्भूतानादिवासनासम्भवादेते प्रत्यया व्यवहारिणामुपजायन्ते केन विशेषेण तदव्यवहितेन जाग्रदात्माभिमानिनोपलम्भाभावेन । जाग्रदभिमानोपि वासनाबलादेव पतितशरीरस्यागतः इदमपि व्यवहारमात्रकं न परमार्थतः । जाग्रता नाम स्वप्नेपि तथा प्रत्ययात् । अथ स्वप्नगतानां जाग्रदुपलम्भेषु नास्तीति न प्रत्ययस्तदेतद् बन्धत्वं ।

अनुष्ठानेन नास्तित्वं तैरेषां प्रतिपादितं । गमनादेरविघ्नस्य तेषां तेष्वस्ति सम्भवः ॥५२२॥

गमनादेरविघ्नस्य सम्भवादेव क्रिययैव नास्तित्वं प्रतिपन्नमेव मुख्यं किमपरेण विकल्प प्रतिपाद्येन । विकल्पो हि सत्स्येप्यसत्यतां प्रतिपादयति । अन्यथा परस्परविरोधीति विकल्पो न भवेत् । तस्माज्झटिति विघटनादसत्यताभिमानः स्वप्नदृष्टेषु जाग्रदवस्थानुबन्धाभावाच्च । न च तावता तदप्यसत्यता । तस्मात्स्वप्नविषये गत्यागती न दृष्टे अन्येन तथापि ते एव इत्यनैकान्तिकता तददर्शनस्य । तस्मान्न गत्यागत्योरभावोऽथवा भाव एवेति प्रतिपादितं ।

## (a) अवयविनिरासः—

अपि च । यदि शरीरादभिन्नं सम्वेदनं शरीरञ्च परमाणुसंघातमात्रं तदा प्रत्येकं सकलपरमाणुसंवेदनप्रसङ्गः । अथावयवी स्थूल एक एव तथोपलभ्यते । तथापि परमाणुषु तस्य स्थानात् परमाणुसंस्पर्शात् परमाणूपलम्भः । अथ तेभ्य उत्पद्यते सम्वेदनं न तु तेषु व्यवस्थितं । तथा सति तेभ्य इति कुतो गतिः । न स्वसम्वेदनं परसम्वेदनं । अथ परसम्वेदनमेव न स्वसम्वेदनं कथन्तर्हि सुखं सम्वेद्यते । परभूतस्यैव तस्य वेदनात् तदसत् ।

परभूतस्य वित्तिश्चेत्किमन्यद्वेदनं भवेत् । तदेव वेदनं यत्र वेदनेति व्यवस्थितिः ॥५२३॥

सुखादिनीलादिनोः (?) परभूतयोरेव वेदेने किमन्यदस्ति यद् वेदकं । शरीरमेवेति न चेत् ।

सुखादि नीलादि विना शरीरमपि किं मतं । उपलभ्यतया तस्य नोपलम्भकता यतः ॥५२४॥
चक्षुरादेस्तथात्वं चेत् खरशृङ्गं तथा न किं । शक्तिरूपन्तदिति चेदगतौ सा कथं तथा ॥५२५॥

न खलु चक्षुरादयोनुपलभ्यमानाः खरशृङ्गवदुपलम्भकाः । शक्तिरूपाश्चक्षुरादयस्ततो नाभावरूपाः । शक्तिरप्यनुपलभ्यमानास्तीति कुतः । कार्यद्वारेण तस्या उपलब्धिरिति चेत् । किङ्कार्यन्तेषां । सुखादिरूपा ह्युपलब्धिः ।

ननु सापि शक्तित्वान्नोपलभ्यत एव । पारिशेष्याद् रूपादय एव ते । ते च न विज्ञानशक्तेः कार्याश्चक्षुरादिकार्यत्वे पूर्वमभावप्रसङ्गः । उपलभ्यावस्था कार्यमिति चेत् । प्रतिपरमाणूपलम्भप्रसङ्गः । न च विशेषाभावेवस्थाभेदः । विशेषे स्वसम्वेदनप्रसङ्गः । शक्तिसहितोत्पत्तिरेव विशेष इति चेत् नैतद् युक्तं । यतः ।

साहित्येऽनुमितिः शक्तेरनुमानाच्च तन्मतं । अन्योन्याश्रयदोषोयं विनिवार्यः कथम्भवेत् ॥५२६॥

रूपादीनां हि विशेष उपलभ्यमानता । सा चेदुपलब्धिशक्तिसहितत्वं कथं शक्तिसिद्धिमन्तरेण सहितत्वसिद्धिः । तदसिद्धौ कथं शक्तेरनुमानं । तस्माद्रूपादिसुखादिमात्रकस्वसम्वेदनमेव विज्ञानं विज्ञानं सुखादिकमिति सामानाधिकरण्येन प्रत्ययस्योत्पत्तेः ।

सामानाधिकरण्यञ्च मुख्यामुख्यप्रभेदतः । नापरं पुरुषो दण्डश्चेतनः पुरुषस्तथा ॥५२७॥

यदमुख्यं मञ्चाः क्रोशान्ति, पुरुषो दण्ड इति यथा । तदत्राप्रसिद्धमेव । रूपादिव्य-[1]रूपव्यतिरिक्तस्य विज्ञानस्योपलम्भासम्भवात् । अनेनैव दृष्टान्तेनानुमीयत इति चेत् । न अनुमानासम्भवात् । सां ख्या नां चेतनः पुरुष इति मुख्यस्य सामानाधिकरण्यस्योपगमात् । तस्माद्यथा यस्य सम्वेदनं तथैवासावभ्युपगन्तव्यः ।

अभ्यासाच्च तथाभूता रूपादौ वेदनस्थितिः । अपरापररूपादिसंक्रान्तत्वेन विद्यते ॥५२८॥

न खलु विज्ञानमालम्बनव्यतिरेकेणापेरण मिश्रीभवति । ततः सुखादिमिश्रीकृतं रूपादिना मिश्रीभवति । रूपादिना मिश्रीभूतं परसुखादिना मिश्रीभवति । अभ्यासात्सर्व्वाकारलिङ्गपरिग्रहेण सकलतदाकारप्रतिपत्तौ कथन्तर्हि परसुखादिरूपादयस्तदवस्थतयावलम्ब्यन्ते । तदसत् ।

स्वरूपेण हि सम्वित्तौ न तटस्थातटस्थते । व्यवहारमात्रमेवैतदाश्रयापेक्षया परं ॥५२९॥

रूपादिसुखादीनां हि न स्वरूपाकारसम्वेदनमपहायापरः प्रकारः सम्वेदनस्य । तत इदं तटस्थमन्यथा वेति कुतो विभागः । केवलं शरीराश्रयापेक्षया तटस्थमिदमन्यथा वेति व्यावहारिको विभागः ।

नन्वपेक्षा विना नास्ति तद्रूपस्य प्रवेदनं । तद्रूपस्य च सम्वित्तेः परापेक्षा न विद्यते ॥५३०॥

सत्यमेतदत एव विभागः पारमार्थिकतया न समस्ति ।

सांवृतेस्तु परमेष विभागः संवृतेर्नहि विचारसहत्वं ॥५३१॥

इयमेव खलु संवृतिरुच्यते येयं विचार्यमाणा विशीर्यतेन्यथा परमार्थ एव भवेत् । तस्माद्यथारूपादि परशरीरादौ संक्रान्तिमद्विज्ञानं तादात्म्येन तथा परशुक्रशोणितशरीरेपि । ततो न शक्तिर्नामान्या विज्ञानरूपा यतः सक्रियता विज्ञानाश्रयस्य केवलन्तदेवन्तदेव तथाभूतं स्वसम्वेदनं विज्ञानं कथन्तर्हि तादात्म्येन संक्रान्ते विज्ञानात्मनि स्तम्भादेरचलनं स्वशरीरस्येव तस्यापि चलनप्रसङ्गः । तदप्यसत् ।

तादात्म्योत्पत्तिमात्रेण चलनस्य न सम्भवः । विशिष्टस्पर्शज्ञानस्वरूपोत्पत्तितस्तु तत् ॥५३२॥

यदा खलु स्पर्शविज्ञानं प्रयत्नविज्ञानस्वभावमुपजायते तदा चलनं कायादेरुपजायते नान्यथा । तस्माद्विज्ञानं रूपादिस्वभावमेव । ततः प्रतिपरमाणु वेदनप्रसङ्गः ।

भवतोपि कस्मादेवं न भवति । तदाकारस्यापरस्य विज्ञानस्य जातेः । ममाप्यवयवी विज्ञानरूपो न परमाणवः । तदप्यसत् । परमाणूनामपि तद्रूपताप्राप्तेः परमाणवः पृथग्भूता एवेति चेत् । न(।)सन्त्येव तर्हीति प्राप्तं । तथाहि ।

शरीरस्य स्वभावेन परमाणुव्यवस्थितिः । परमाणुस्वभावेन शरीरस्य व्यवस्थितिः ।५३३॥

---

[1] T. स्वरूपव्यति० ।

अथ न विज्ञानस्वभावाः शरीरपरमाणवः तथा सति न शरीरस्वभावाः परमाणवः। असंवेद्यत्वे च न विषयस्वभावा इति न सत्त्वं परमाणूनां। ततः केवलो वयवी। तस्य च[1]

पाण्यादिकम्पे सर्व्वस्य कम्पप्राप्तेर्विरोधिनः।
एकत्र कर्म्मणोऽयोगात्स्यात्पृथक्सिद्धिरन्यथा ॥८५॥
एकस्य चावृतौ सर्व्वस्यावृत्तिः स्यादनावृतौ।
दृश्येत रक्ते चैकस्मिन् रागोऽरक्तस्य वा गतिः ॥८६॥

द्रव्यं हि नामावयविरूपं क्रियावद्गुणवत्संयोगादिकारणं समवायिकारणं। तस्य यदि क्रिया नास्ति[2] तदा तत्समवायिकारणत्वात् सर्व्वमेव चलतीति प्राप्तं। चलिताचलितश्चित्रोऽवयवी चेत्। देवदत्तयज्ञदत्तादिरूप एक एव चलितादिरूपोवयवीति प्राप्तं। अथ दृश्यत एकत्वं चलिताचलितत्वं चेति को विरोधः। किमिदेमेकत्वं नाम। यदि प्रतिभासाभेदः स नास्ति। अर्थैककार्यता सा यदि नामैकं कार्यं कारणमप्येकमिति कुत आवरणेऽवयविनः सर्व्वस्यावरणं संयोगाविशेषात्। अवयवस्यावरणेवयविनो न प्राप्नोतीति सर्व्वं दृश्येत। अवयवद्वारेणावरणे न किञ्चिद् दृश्येत सकलम्वा। एकत्वेपि सर्व्वस्यापि द्रष्टुमशक्यत्वादिति चेत्। दृष्टादृष्टयोः कथमेकत्वं। रागयोगेप्ययमेव प्रसङ्गः।

नास्त्येकसमुदायोऽस्मादनेकत्वेपि पूर्व्ववत्।
अविशेषादणुत्वाच्च[3] न गतिश्चेन्न सिध्यति ॥८७॥
अविशेषः; विशिष्टानामिन्द्रियत्वमतोनणुः।

यद्यनेकः कायः। अनेकत्वेपि पूर्व्ववद् दोषः। प्रतिपरमाणु स्वसम्वेदनप्रसङ्गः। अविशेषान्न गतिश्चेत्। नैतदस्ति। अविशेष एव न सिध्यति। सम्वेदनावस्थायामुपलभ्यत्वात्ततो नानुपलभ्यमानाविशेषः। अत एव स्वसम्वेदनावस्थायामणुत्वमपि न विबन्धकारीति सतोपि असदविशेषादनणुः। तदापि कथं विशेषोपलम्भ इति चेत्। न (।) स्वसम्वेदनरूपतया विषयोपलम्भोपि तु तदाकारविज्ञानोपलम्भ एव (।) विषयोपलम्भः कथं न परमाण्वाकारतेति चेदेतदुत्तरत्राभिधास्यते।

### (b) परमाणूनां आवरणाद्यभावो न—

ननु परमाणुमात्रकस्य कथमावरणप्रतिघातादयः।

एतेनावरणादीनामभावश्च निराकृतः ॥८८॥
कथं वा सूतहेमादिमिश्रं[4] तप्तोपलादि वा।
दृश्यं; पृथगशक्तानामक्षादीनां गतिः कथं ॥८९॥
संयोगाच्चेत्समानोत्र प्रसङ्गो हेमसूतयोः।
दृश्यः संयोग इति चेत् कुतोऽदृष्टाश्रये[5] गतिः ॥९०॥
रसरूपादियोगश्च विरुद्ध[6] उपचारतः।
दृष्टश्चेद् बुद्धिभेदास्तु पंक्तिर्दीर्घेति वा कथं ॥९१॥

---

[1] T. सोऽपि न [2] T. क्रियाऽस्ति [3] नित्यत्वात्
[4] तत्रैव—"विजातीयानामव(य)विनोऽभावात्" [5] ऽदृश्या० [6] संयोग

संख्यासंयोगकर्म्मादेरपि तद्वत्स्वरूपतः ।
अभिलापाश्च भेदेन रूपं बुद्धौ न भासते ॥९२॥

आवरणं हि परमाणूनामसंसर्गात् कथमिति न युक्तं । नह्यवयविप्रतिबद्धमावरणं क्वाप्युपलब्धं । येन तस्याभावे परमाणुषु न स्यात्तथा प्रतिघातादिः[1] । अथैवमुच्यते ।

छिद्रत्वात्परमाणूनां संहतेः स्यात्पटादिकं । कथमावरणं वा स्यादातपस्य जलस्य च ॥५३४॥

अवयविसंयोगमन्तरेण परमाणव एव केवला अव्याहतपरस्परान्तरनुप्रवेशाः कथमावरणभाजः । अत्रोच्यते । अशक्तैः संयोगोपि पदार्थः कथं जन्यते । संसृष्टाः कथ[2]मवयविनं जनयन्ति । संसर्गश्च नैकदेशेन तदभावात् । न सर्व्वात्मनाणुमात्रपिण्डप्रसङ्गात् । संयोगस्य पदार्थान्तरस्य जनने न चेत् । तमेव संयोगं सान्तराः कथं जनयन्तीति समानः प्रसङ्गः । संसर्गश्चेत् किं संयोगेनापरेण । तथावयविना । अथ सान्तरा एव संयोगमवयविनं च जनयन्ति । तथा सत्यावरणादिकार्यमपि किं न जनयन्ति ।

विनापि परमाणूनां संसर्गात् संहृतिः परा । आघातेपि पृथग्भावो यस्या नव समस्ति सः ॥५३५॥

यथा विरलदेशस्थिता अपि केशमशकमक्षिकादयः एकघनाकारं प्रत्ययमुपजनयन्ति । तथा कार्यान्तरमपि किन्न जनयन्ति । तत्र बाधकस्योपलब्धेस्तथेति चेत् । अत्राप्यतीन्द्रियदर्शियोगिप्रत्ययो भवति बाधको यदि योगी भवेत् । यथा चाच्छिद्रचषके[3] न जलश्च्युतिरुपरि पिधाने । तथा परमाणुसंहतावपि । अथवा सूतहेमसंयोगः कथमवयविनं विनावरणप्रतिघातादिसमर्थः । तप्तोपलादिकम्वा विसरणादिकञ्च नामापरं कार्यं । तत्कारणविशेषादुपजायते विशिष्टसंहतिलक्षणात् । कार्यकारणभावश्चाचिन्त्यः । तथाहि पृथगशक्ता रूपादयो विज्ञानं जनयितुं तथापि संहताऽवस्था जनयन्ति । संयोगादिति चेत् । ननु संयोगोपि कार्यमेव तमेव कथं जनयन्ति । न च संयोगस्य दृश्यता अदृष्टाश्रयस्य गत्यभावात् । यद्यदृष्टाश्रयस्यापि गतिः । इन्द्रियार्थसन्निकर्षात् प्रत्यक्षं जायत इति समयः । संनिकर्षश्च संयोग एव तदस्य संयोगकारणत्वात्संयोगविभागेष्वकारणं गुण इति गुणलक्षणं हीयते । अथ संयुक्तसमवेतत्वाद् गम्यते । एवं तर्हि परमाणुसंयोगसद्भावे परमाणुगतिः स्यादिति व्यर्थमवयविकल्पनं । सर्व्वसंयोगानाम्वा गतिः स्यात् । ततो न दूरादग्रहणं भवेत् । इन्द्रियसंयोग एव तत्र नास्तीति चेत् । न । स्थूलानामपि न गतिः स्यात् । अथ संयोगजोपि संयोग इष्यते । संयोगविभागेष्वकारणमिति तु समवायिकारणत्वप्रतिषेधः । न । तत्रेहनिबन्धनत्वात्समवायस्य । संयोगस्य च प्रतीयमानत्वे नियमेनेह बुद्धिरुपजायते । ततः समवायिकारणमपि प्राप्तं । किञ्च ।

संयुक्तसमवायश्चेद्यदि ग्रहणकारणं । परमाणुषु संयोगे द्रव्यस्य ग्रहणं भवेत् ॥५३६॥

यदि संयुक्तसमवायोपि ग्रहणहेतुस्तदा कार्यद्रव्यसंयोगो व्यर्थः स्यात्परमाणुसंयोगेनैव कार्यद्रव्यदृष्टेः । अथ कार्यद्रव्यसद्भावे परमाणुसंयोगो न कल्प्यते । परमाणुसंयोगादेव दर्शनं घटादेरिति व्यर्थमवयविकल्पनमिति स एव दोषः । अथावयविनोऽभावे परमाणुसंयोगकल्पना नान्यथा । विपर्ययेपि तुल्यं । न चावयविसंयोगे परमाणुसंयोगः । समानदेशकालत्वेन विभागाभावात् । अथवा प्रतीयमानस्यावयविनोपि संयोग इति दृश्यस्यासंयोगस्यापि संयोगः

[1] T. प्रतिघादयोपि [2] T. अत्रोच्यते, असंसृष्टाः कथं [3] T. यथा सच्छिद्रचषके

**स्यात् । किञ्च । दृश्यता संयुक्तसमवायादिति रसरूपादियोगः पानकादौ दृश्यमाने न स्यात् । न गुणस्य गुण इति । नहि तत्रावयवानां तद्रूपं रसो वा । उपचारतस्तथा व्यपदेश इति चेत् ; बुद्धिभेदः प्रसक्तः । यदेव हि रूपं रसो वावयवानां दध्यादीनां तदेवैकार्थसमवायादुपचर्यते । न तु रूपरसान्तरोपलम्भः ।**

संयोगिनां हि यद्रूपं संयोगस्यापि[1] तद् भवेत् । उपचारात्कुतस्तु स्यात्तत्र रूपरसान्तरं ॥५३७॥

**अथ तावेव संसर्गाद्रूपरसौ तथा प्रतिभासेते । अत्यन्तसंसर्गो हि तदेकत्वप्रतिपत्तिहेतुरिति रसान्तरत्वरूपान्तरत्वगतिः । एवं तर्हि नावयविनापरेण किञ्चित्परमाणुप्रतिभासनमेव तथा स्थूलादिव्यवहारयोगि । किञ्च । यदि न परमाणूनामेव स्थूलता[2]प्रतिपत्तिस्तदा दीर्घा पंक्तिरिति न स्यात् (।)नहि पंक्तिर्नाम किञ्चित् । तथाहि ।**

असंयोगान्न संयोगो न द्रव्यं तत एव तत् । जात्यादेर्न च दीर्घत्वं न जात्यादि सम्मता ॥५३८॥
सन्निवेशविशेषेण यथा दीर्घादिबुद्धयः । ततस्ताः परमाणूनामित्युक्तविषयस्तथा ॥५३९॥

**सन्निवेशमात्रस्यैव दीर्घादिता यथा मालादौ । तथा च विवादास्पदोवयविविषयाभिमत इति नावयवी । यच्चोक्तं । संयोगादिन्द्रियादयो जनयन्ति धियमवयविनमन्यम्वेत्यादि । तत्रोच्यते । न संयोगादीनां रूपमुपलभ्यते । संयोगिन एव रूपादयः केवला न तत्र परः संयोग उपलब्धिगोचरः । संयुक्त इति बुद्ध्या गृह्यमाणः कथं न तथेति चेत् । संयुक्त इति संयोगिन एव प्रतीतिः संयुक्तशब्दस्य च नापरमत्रालम्बनं ।**

प्रत्यासन्नतयोत्पन्नास्तत्र संयोगिनः परं । संयुक्तप्रत्ययालम्ब्या न संयोगस्ततः परः ॥५४०॥
पुरः स्थिता यथा तेर्थाः किं संयोगस्तथा स्थितः ।
अन्वयव्यतिरेकाभ्यां संयोगादिति[3] कल्पना ॥५४१॥

**न खलु संयोगो परः प्रतिभासते संयोगिव्यतिरिक्तः केवलमसंयुक्तयोः सावस्था नोपलभ्यते । तौ पुनरुपलभ्येते । ततोऽन्वयव्यतिरेकाभ्यां कल्पनामात्रमेव एतदिति निर्णयः । प्रत्यक्षेण तु तथाभूतं सदेवं भूतं जातमिति प्रतीतिः । ततः सैवास्था पृथग्भावेन ज्ञाप्यते संयोग इति । अत एव (।)**

**शब्दज्ञाने विकल्पेन वस्तुभेदानुसारिणा ।**
**गुणादिष्विव कल्प्यार्थे नष्टाजातेषु वा यथा ॥६३॥**

**न शब्दज्ञानवैलक्षण्यमात्रादेव पदार्थभेदोपि तु प्रत्यक्षलक्षणज्ञानभेदात् । विकल्पिका हि बुद्धिरनादिरनादिवासना[4]सामर्थ्यादुपजायमाना तथा तथा प्लवते । ततो नार्थतत्त्वं प्रतिष्ठां लभते । तत्रान्वयव्यतिरेकेण परिकल्पितं भेदमाश्रित्य संयोगादिबुद्धयः ततः परिकल्पितस्यैव भेदो नार्थतत्त्वस्य (।) विकल्पितार्थभेदस्तु तीर्थान्तरदर्शनादप्युपजायते । ततोप्यर्थतत्त्वव्यवस्थापनायामनवस्था । तथाभ्युपगमेन परस्परापवादः स्यात् । ततो भिन्नः शब्दो ज्ञानञ्च विकल्पिते वस्तुनि वासनाया अन्वयव्यतिरेकाभ्यां प्रवर्तते । किम्भूतोसौ विकल्पः । वस्तुभेदानुसारी वस्तुनाभेदो व्यावृत्तिरतथाभूतात् । न च व्यावृत्ता-**

---

[1] T. दृष्टैरपि ( )—भोटभाषायामस्यापद्ये भाषान्तरम्  [2] T. स्थूलतादि०
[3] T. संयोगादिकल्प०  [4] T. बुद्धिरनादिवास०

वन्या व्यावृत्तिस्ततः स एव सन्तानापेक्षया अवान्तरभेदो भेदेनैव प्रतिभाति(।) किम्वस्तुभेदमन्तरेण कल्पनाः प्रवर्तन्ते भिन्नाः। प्रवर्तन्त एव दृष्टमेतत्। यथा गुणादिषु एको गुण एकः समवायश्चतुर्विंशतिर्गुणाः। न च तत्र संख्या द्रव्याश्रितत्वात् संख्याया न चाश्रयसंख्योपचार आश्रयभेदेप्येकमेव सामान्यादिकं। नष्टाजातेषु च कथमेकत्वादिकं।

मतो यद्युपचारोत्र स दृष्टो यन्निबन्धनः
स एव सर्व्वभावेषु हेतुः किन्नेष्यते तयोः ॥९४॥

यदि नष्टाजातेषूपचारादेकत्वादेस्तथा व्यपदेशो बुद्धिश्च स एवोपचारोऽनयोः कस्मात्सर्व्वत्र निबन्धनं नेष्यते। अनादिकल्पनाध्यारोप एव निबन्धनमस्तु। न वस्तुपरिकल्पनावसरः।

उपचारो न सर्व्वत्र यदि भिन्नविशेषणं।
मुख्यमित्येव च कुतोऽभिन्ने भिन्नार्थतेति चेत् ॥९५॥
अनर्थान्तरहेतुत्वेप्यपर्यायः सितादिषु।
संख्यादियोगिनः शब्दास्तत्राप्यथान्तरं यदि ॥९६॥
गुणद्रव्याविशेषः स्याद् भिन्नो व्यावृत्तिभेदतः।
स्यादनर्थान्तरार्थत्वेप्यकर्म्माद्रव्यशब्दवत् ॥९७॥

ननूपचारो हि नाम मुख्यनिबन्धनः स कथमसति मुख्ये भवेत्। मुख्यञ्च भिन्नविशेषणं दण्ड्यादिवत्। अभिन्नविशेषणत्वे गौणी व्यवस्थितिः। भवतस्तु पुनः पूर्व्वपूर्व्वकल्पनाकृतविशेषणयोगादभिन्नविशेषणत्वेन मुख्यत्वं क्वचिदिति नोपचारसम्भवः। तदसत्। भिन्नविशेषणं मुख्यमित्येव च कुतः। अभिन्नविशेषणमपि कल्पनाकृतभिन्नविशेषणमत्यन्ताभ्यासाद् रूढिमुपगतं मुख्यमेव। अस्खलद्गतिप्रत्ययविषयो हि मुख्यस्तदपरस्तु गौण इति किं न पर्याप्तं। किञ्च। यदि भिन्नविशेषणं मुख्यमन्यथोपचरितं। अमुख्यमेव सर्व्वमेवंविधं भवतु भिन्नस्य विशेषणस्याभावात्। नष्टाजातेषु तु विशेष्यमप्युपचरितमिति विशेषः। यदि विशेषणमप्यपरं नास्ति विशेष्यमेव तर्हि सर्व्वत्र वाच्यमित्यभिन्नार्थता पर्यायतारूपा भवेन्न सामान्याधिकरण्यं भिन्नप्रवृत्तिनिमित्तत्वे हि तद् भवति। तदप्यवचनीयं। यतः।

भेदवृत्तिनिमित्तस्य तद्रूपप्रतिभासने। सामानाधिकरण्यस्य कथं शब्दार्थभाविता ॥५४२॥

इदं सामानाधिकरण्यं शब्दयोरर्थयोर्व्वा भवेत्। न तावच्छब्दयोः प्रतिनियतार्थाभिधानात्। लक्षितलक्षणेन सामानाधिकरण्यमिति चेत्।

एकेनैव(हि)सम्बन्धे सर्व्वं लक्षितमेव तत्। द्वितीयस्य ध्वनेर्न्नास्ति प्रयोग इति नास्ति तत् ॥५४३॥
समानाधारतार्थानामनेनैव निराकृता। विद्यमानोपि सम्बन्धः कथं कस्माच्च मीयतां ॥५४४॥
समवायबलादर्थो यद्यभेदेन मीयते। एकस्मादेव तद्बोधाच्छब्दोन्यो व्यर्थको भवेत् ॥५४५॥
अपरेण स एवार्थो यदि ज्ञाप्य इतीष्यते। सैव पर्यायता प्राप्ता भवतोपि मतेन किं ॥५४६॥
अथ नीलार्थ[1]सम्बन्धिमात्रमेकध्वनेर्गतं। समवायिप्रतीतौ न परस्यास्त्यप्रतीतता ॥५४७॥
यथाध्यक्षेण नीलस्य गतावुत्पलगम्यता। तथा शब्दादपि गतिस्तस्यैवान्य[2]ध्वनिर्वृथा ॥५४८॥
ध्वनेर्नियत एवार्थ इति नापरगम्यता। विशेषरहितो नार्थः कश्चिदस्ति वचो वृथा ॥५४९॥

---

[1] T. नीलादि०  [2] T. तथैवा०

इन्द्रनीलोत्पलादीनां नीलत्वं न तु केवलं । प्रत्यक्षेण तथादृष्टेर्ध्वनेर्वृत्तिः किमन्यथा ॥५५०॥
उत्पले यदि नीलत्वमुत्पलत्ववचो वृथा । अन्यत्र यदि नीलत्वं वृथोत्पलवचस्तथा ॥५५१॥

तस्माद् बुद्धय एव स्ववासनानुरोधादुपजायमाना भेदाभेदसामानाधिकरण्यादिव्यवहारमुपरचयन्ति । न पर्यायताप्रसङ्गः । तथाहि ।

"अनर्थान्तरहेतुत्वेपि सितादिषु(।)दृश्यन्तेऽपर्याया" इत्युक्तं । तत्राप्यर्थान्तरत्वमिति चेत् । एवं सति गुणद्रव्ययोर्न विशेषः । तथाहि । "क्रियावद्गुणवत्समवायिकारणञ्च द्रव्यं[1]।" समवायिकारणत्वं गुणयोगे भवेत् । गुरुत्वस्य भावादधोगतिः पानकादीनामिति क्रियावत्वं । ततो गुणोपि संयोगो द्रव्यलक्षणयोगे द्रव्यमिति गुणद्रव्याविशेषः । तस्माद् भिन्नो व्यावृत्तिभेदपरिकल्पिताऽभिधेयभेदाद् भिन्नः शब्दः प्रत्ययश्च । तद्यथाऽकर्म्मद्रव्यमद्रव्यं कर्मेति न चार्थान्तरमत्रार्थः । तथाप्यपर्यायत्वमकर्म्मद्रव्यशब्दादीनां । तत्र व्यावृत्तिभेद एव निबन्धनं नापरः प्रवृत्तिनिमित्तभेदः । कथन्तर्हि सामानाधिकरण्यवैयधिकरण्यप्रभेदः । गौः शुक्लो गोः शुक्लत्वमिति ।

व्यतिरेकीव यच्चापि सूच्यते भाववाचिभिः ।
संख्यादितद्वतः शब्दैस्तद्धर्म्मान्तरभेदकं ॥ ९८ ॥
श्रुतिस्तन्मात्रजिज्ञासोर्न वा क्षिप्ताखिला[2] परा ।
भिन्नं धर्म्ममिवाचष्टे योगोङ्गुल्या इति क्वचित् ॥ ९९ ॥
युक्ताङ्गुलीति सर्वेषामाक्षेपाद्धर्म्मिवाचिनी ।
ख्यातैकार्थाभिधानेपि तथा विहितसंस्थिति ॥१००॥

यथा पर्य्यायता कल्पितवाच्यभेदान्नेति प्रतिपादितं । तथाऽभेदेपि वाच्यस्य व्यतिरेकविभक्तिः कल्पितव्यतिरेकभावाद्यथा शिलापुत्रकस्य शरीरं राहोः शिरः तथा गोः शुक्लत्वमिति । गौरिति तदेकाकारपरामर्शयोगी सकल एव पदार्थ उच्यते । शुक्ल इति तु तदेकदेशः परामर्शान्तरयोगिनि च विद्यमानः । व्यतिरेकश्चान्वयव्यतिरेकाभ्यामपोद्धृतः । ततस्तस्य गोः शुक्लो गुण इति व्यतिरेकविभक्तिः । यदा च गवाकारावग्रहो नास्ति शुक्लत्वमेव केवलमुपलभ्यते सम्बन्धिविशेषरहितं । तदा प्रश्नयति कस्येदं शुक्लत्वमिति तदा पूर्व्वदर्शनादवधृतगोस्वभावो निर्दिशति गौरिति । तादात्म्यसम्बन्ध एवास्य विवक्षितः । व्यतिरेकस्तु केवलस्य प्रथमनिश्चयात् । यदा तु न केवलेनानेन भवितव्यं यदि नाम विशेषोपलक्षणमन्वता मन्दलोचनानां तथापि शुक्लेन गवान्येन वा भवितव्यमिति प्रश्नयत्ति कोयं शुक्लो गौरन्यो वेति । तदा प्रतिवचनं गौरिति समानाधिकरणतया । तदन्तर्भावनेनैव प्रश्नभावात् । तदनुरूपमेव च प्रतिवचनं युक्तमयञ्च तत्त्वार्थ ति इति ।

अन्वयव्यतिरेकाभ्यां व्यतिरेकविनिश्चये । विशेषलक्षणाभावे कुतश्चित्कारणादपि ॥५५२॥
अयं शुक्लो गुणोश्वस्य प्रतिवाच्यं विपश्चितां । प्रश्नस्य व्यतिरेकित्वात्तथैवेत्यत्र निर्णयः ॥५५३॥
यदात्वव्यतिरेकेण विशेषान्तर्गमे सति । प्रमाणवृत्तमालोच्य प्रश्नः प्रश्नयितुर्भवेत् ॥५५४॥
तदा विदिततद्भाव उत्तरं तादृगेव सः । दातान्यप्रक्रम[3]स्यात्र नैवावसरसम्भवः । ॥५५५॥

[1] T. वैशेषिकसूत्रे [2] ०सोरनाक्षिप्ता० [3] T. ग्शुङ-लुग्स् ग्शन्.ग्यि गो.स्कब्स्.नि

प्रत्यक्षवृत्तमालोच्य न भेदस्य विनिश्चयः । तन्मूलमनुमानम्वा भेदस्यासम्भवो मतः ॥५५६॥
अन्वयव्यतिरेकौ तु यदानादी व्यवस्थितौ । तदाभेदस्य सद्भावाद् व्यवहारस्तथैव सः ॥५५७॥
अनादिव्यवहारोयमेवमेव जगद्गतः । वस्तुचिन्तातु लोकस्य नेति भेदो न बाध्यते ॥५५८॥

तस्यादवयवा एव नावयवी विद्यते । यदि तर्हि नावयवी रसादय एव तदा न घटस्य रूपादय इति भवेत् । नहि भवति रूपादीनां रूपं । नापि घटस्य वा घट इति पर्यालोचनं परस्याशङ्कयाह ।

रूपादिशक्तिभेदानामनाक्षेपेण वर्तते ।
तत्समानफलाऽहेतुव्यवच्छेदे घटश्रुतिः ॥ १०१ ॥
अतो न रूपं घट इत्येकाधिकरणा श्रुतिः ।
भेदश्चायमतो'जातिसमुदायाभिधायिनोः ॥ १०२ ॥
रूपादयो घटस्येति तत्सामान्योपसर्ज्जनाः ।
तच्छक्तिभेदाः ख्याप्यन्ते वाच्योन्योप्यनया दिशा ॥ १०३ ॥

रूपादीनां प्रतिनियतशक्तिभेदमनाक्षिप्य तेषु समानोदकधारणशक्त्याक्षेपेण घटश्रुतिः प्रवर्तते । ततो न रूपादयो घट इति समानाधिकरणता । अत एव समुदायशक्तिविवक्षायामयं[2] समुदायशब्दः । जातिशब्दस्तु प्रत्येकं एकफलत्वे यथा वनं यथा वृक्ष इति । कथन्तर्हि रूपादयो घटस्येति व्यपदेशः । उदकाहरणसाधारणकार्या रूपादिप्रत्ययजननसमर्थाः प्रत्येकमित्यर्थः । अथ यथा वृक्षाणां वनं वृक्षा वनं । रूपादयो घटा रूपादीनां घट इति कस्मान्न भवति । भवत्येव यदि शास्त्रान्तरसंस्कारो न भवति । लोकस्तु प्रायशस्तत्संस्कारानुसारी ततो न भवति । यस्तु[3] सम्यगवबोधयुक्तस्तस्य भवत्येव संप्रत्ययो रूपादय एव केचिद् घटाः कार्यविशेषसमर्थाः । उदकाद्याहरणञ्च कार्यविशेषः । सन्निवेशविशेषेण वा व्यवस्थिताः । यतः संनिवेशविशेषादुदकधारणविशेषः । रूपं घट इति तु न भवति सामानाधिकरण्यं अवयवावयविभेदेन परस्परव्याप्त्यभावात् ।

ननु वृक्षशिङ्शपात्वयोरपि न परस्परव्याप्यव्यापकभाव इति कथं समानाधिकरण्यं । नैतदस्ति यतः ।

वृक्षबुद्धिः पृथग् व्यक्तावेकत्रापि प्रवर्तते । घटबुद्धिस्तु रूपादौ प्रत्येकं नानुवर्तते ॥५५९॥

न खलु घटबुद्धिः प्रत्येकं रूपादौ प्रवर्तते वृक्षबुद्धिवच्छिङ्शपादौ । न च स शक्तिभेदो घटशब्देनाक्षिप्यते ।[4] वृद्धव्यवहारनिरूढेः शक्तिप्रतिनियमात् । वृक्षशब्दस्तु विशिष्टशक्तियोगमप्याक्षिपतीति न दोषः । अत्रापि व्यवहारनिरूढिः शक्तिभेदो वा निबन्धनमिति सर्व्वं सुस्थं ।

ननु विङ्शतिर्गावः, गवां विंशतिरिति,[5] न भेदोत्र कश्चित् ।

न हि विंशतिशब्देनापरा शक्तिरिहोच्यते । केवला बाहृदोहादिशक्तिरेवात्र गम्यते ॥५६०॥

---

[1] T. भेदोयमीदृशो [2] T. समुदायविवक्षायां [3] T. वस्तु०
[4] T. पूर्व० [5] T. विंशतीनां गावः (?) इति न शक्तिभेदो०

संहतेः ख्यातिरत्रास्ति बहुत्वेन परिस्फुटा ।

तदाहानया दिशा अन्येपि व्यपदेशा वक्तव्याः । संहतिविशेषोऽत्र विवक्षितो दशद्वयरूपः । न च तेन वाहदोहशक्तिराक्षिप्ता । नापि तया संहतिविशेष इति सर्व्वं सुस्थं । अथवा ।

अनादिव्यवहारेण वासनासंस्कृतात्मनां । अनादिर्व्यवहारोयं कल्पनाशब्दसम्भवी[1] ॥५६१॥
ततो न कस्यचिच्चोद्यं केनचित् क्रियते न च ।
एवंभूतेपि शब्दार्थे न किञ्चित् क्षीयते यदि ॥५६२॥
किमयुक्तिमदत्रेक्ष्यं[2] येन तत्परिचोद्यते । प्राकृते शब्दसंस्कारे दृश्यते न समञ्जसं ॥५६३॥
लिङ्गस्य वचनस्यार्थे भे[3]दस्तत्रेक्ष्यते स्फुटः । न च तत्रास्त्ययुक्तत्वं संस्कृते चेदिदं भवेत् ॥५६४॥
लक्षणेन हि संस्कारः प्राकृते संस्कृते मते । संस्कृतासंस्कृतत्वं हि न प्रमाणेन गम्यते ॥५६५॥
व्यवस्थामात्रमेवैतद्बालक्रीडाप्रवृत्तये । यथा कथञ्चिदेवायं बालिशैर्व्यवहारिभिः ॥५६६॥
शास्त्रीकृतो निरर्थोपि तथान्यैरनुवर्त्तितः । बालिशैरेव तेनैषां न विद्मः किमिहोच्यतां ॥५६७॥
अदृष्टार्थप्रवादस्तु भण्डशास्त्रेपि दृश्यते । न च संप्रत्ययस्तत्र तेनैषान्धपरम्परा ॥५६८॥

### (घ) विज्ञानं कारणम्

यदि शरीरस्य महाभूतादुत्पत्तिस्तदा वयवानां समस्तानामेव हेतुत्वं विज्ञानजन्मनि । यथाङ्कुरे भूम्यादीनां प्रत्येकम्वा यथा ज्वालादिषु दाह्यानां तृणानान्तत्र ।

**हेतुत्वे च समस्तानामेकाङ्गविकलेपि न ।**
**प्रत्येकमपि सामर्थ्ये युगपद् बहुसम्भवः ॥१०४॥**
**नानेकत्वस्य तुल्यत्वात् प्राणापानौ नियामकौ ।**

यत्र खलु कार्ये परस्परसहकारितया बहूनां व्यापारस्तत्रैकाभावेपि न कार्यसम्भवः । तदभावेपि कार्यभावे हेतुरेवासौ न भवेत् ।

अथ परस्परनिरपेक्षा एव जनयन्त्यवयवास्ततः कर्णनासादिच्छेदेपि भवत्येव तेभ्यो मनोविज्ञानं । एवन्तर्हि प्रत्येकं सामर्थ्यमिति प्राप्तं । ततो बहुविज्ञानसम्भवः । नहि प्रत्येकं समर्थं बहुबीजभावेनानेकाङ्कुरानुदयः ।

अथ प्राणापानयोर्जनकत्वं यः कश्चिदेकोवयवस्तस्य सहकारी । न च सहकारिभेदाद् भिद्यते कार्यं । अपरापरकुविन्दाभावेपि न पटादिभेदः ।

अत्रोच्यते । प्राणापानयोरप्यनेकत्वात्स एव प्रसङ्गः । एकावयववैकल्येपि न स्याद् बहुसम्भवो वा । नहि प्राणापानयोरप्येकत्वं शरीरवदेव सिद्धं । अथैकत्वमेवेष्यते ।

तथापि ब्रूमः

**एकत्वेपि बहुव्यक्तिस्तद्धेतोर्नित्यसन्निधेः ।**
**नानेकहेतुरिति चेत् नाविशेषात्क्रमादपि ॥१०५॥**

एकत्वेपि प्राणापानादीनामनेकव्यक्तिरेव ततोनेकरागादिमनःप्रसङ्गः । तद्धेतोर्नित्यमेव सन्निधानात् । सन्निहिते च हेतावनुत्पन्नस्तद्धेतुक इत्ययुक्तं । अथानेकस्य हेतुर्न भवत्येव प्रतिनियमत्वात् कार्यकारणतायाः । न खलु कार्यकारणभावनियमः पर्यनुयोग-

---

[1] T. कल्पना शब्द० [2] T. अत्रैवं [3] T. स्यार्थ०

योग्यः । अग्नेर्हि धूम एक एवोदयमासादयति । न । विशेषाभावात् । अग्नेर्हि न तत एव स्वभावादपरापरधूमोपलब्धिः । अत्र तु पुनस्तत एव प्राणादिस्वरूपादपरप्रबोधकप्रत्ययान्वयादपरापररागादिचित्तभावः । न च प्रबोधकप्रत्ययस्यापि नियमः पूर्व्वसंस्कारबलाबलस्य हेतुत्वात् । ततो यद्यसौ प्रणादिस्तस्य चेतसो न हेतुः । परतोपि तदविशेषान्न स्यादिति क्रमेणाप्यनेकहेतुता न स्यात्पूर्व्वसंस्कारस्यैव हेतुत्वप्रसङ्गः।

अभ्युपगम्य च प्राणादेरेकत्वमुक्तं न तु युक्तं । तथा हि ।

नैकप्राणेप्यनेकार्थग्रहणान्नियमस्ततः ॥१०६॥
एकयानेकविज्ञाने बुद्ध्यास्तु सकृदेव तत् ।
अविरोधात्; क्रमेणापि मा भूत्तदविशेषतः ॥१०७॥

एक प्राणकालेपि दीर्घनिश्वसितादौ अनेकबुद्धिसद्भावान्न[1] प्राणादेर्नियमः । कुतस्तर्हि नियमस्तत एव ग्रहणात् । ग्रहणमेव पूर्व्वपूर्व्वमुत्तरोत्तरस्य चेतसो नियमहेतुः । अथैकमेव मनोविज्ञानं क्रमेणानेकार्थग्रहणरूपं । ततो नानेका बुद्धिरित्युच्यते । तदपि नास्ति । न रूपाद्याकारव्यतिरेकेणापरमस्ति मनः । स्वच्छदर्प्पणसंस्थानीयमेकमेव व्यापकं मनस्तस्य पुनरर्थप्रतिबिम्बसङ्क्रमः । अत्रोच्यते । यद्युदासीनमेव विज्ञानं प्राप्यार्थबिम्बोत्पत्तिः प्रत्यासत्तितारतम्याभावादर्थानां युगपदर्थग्रहणप्रसङ्गः । अथ भावनाविशेषतारतम्यान्नैवं सैव तर्हि कारणमर्थाकारताया न प्राणापानादयः । अवस्थितस्य तु विज्ञानस्य दर्प्पणवत्को विरोधो येन न युगपदर्थग्रहः । अथ सामर्थ्यं नास्ति तदानीं क्रमेणापि तदर्थग्रहणं मा भूदविशेषात् ।

अथापि स्यात्क्षणभेदस्तत्राप्यस्त्येव ततः क्षणभेदात्क्रमादनेकार्थग्रहणं । नैतदप्युत्तरं यतः।

बहवः क्षणिकाः प्राणा अस्वजातीयकाः किल ।
तादृशामेव चित्तानां कल्प्यन्ते यदि कारणं ॥१०८॥
क्रमवन्तः कथं ते स्युः क्रमवद्धेतुना विना ।
पूर्व्वस्वजातिहेतुत्वे न स्यादाद्यस्य सम्भवः ॥१०९॥

यतः (।)

तद्धेतुस्तादृशो नास्ति सति वाऽनेकता ध्रुवं ।
प्राणानां भिन्नदेशत्वात्सकृज्जन्म धियामतः ॥११०॥

बहवः क्षणिकाः प्राणाः इति सिद्धमेव नः । भवतस्तु न सिद्धमेतत् । अथ प्रमाणदृष्टेः सिद्धमेतत् । क्रमभावी हि नैकः पदार्थो युक्तस्ततः कारणक्रमात्कार्यस्यापि क्रम इति क्रमवद् विज्ञानं । त एव खलु क्रमवत्कारणविरहात् प्राणाः कथं क्रमवन्तः । पूर्व्वपूर्व्वप्राणादिहेतुक्रमादिति चेत् । न(।)पूर्व्वस्वजातीयहेतुत्वे हि नाद्यस्य सम्भवः प्राणादेस्तादृशस्य पूर्व्वमभावात् । परलोकाङ्गीकरणेहि जन्मादि प्राणस्य हेतुः स्यात् । मातापितृप्राण एव हेतुरिति चेत् । न । तथाभूतस्य सर्व्वदा भावप्रसङ्गात् । एवं च सति बुद्धिरपि मातापितृजैव इति पूर्व्वप्रसङ्गः ।

अभ्युपगम्योच्यते । अनेकता प्राणानां भिन्नदेशसंसर्गात् । अनेकदेशसंसर्गो हि विरुद्धधर्म्माध्यासोनेकस्य साधकः । अनेकत्वात्प्राणस्यानेकमनोविज्ञानोत्पत्तिप्रसङ्गः ।

---

[1] T. संभवान्न

समानजातीयस्य च मनसः क्रमेणोत्पत्तिः। न हि क्षणभेदादेव कार्यभेदः। यथा समानजातीयमनेकं कारणं तथा कार्यमपि।

नन्वनेकस्मादेकमेवोत्पद्यते सामग्री जनिका। नैतदुत्तरं।

यद्येककालिकोनेकोप्येकचैतन्यकारणं।
एकस्यापि न वैकल्ये स्यान्मन्दश्वसितादिषु ॥ १११ ॥
अथ हेतुर्यथाभावं ज्ञातेपि स्याद्विशिष्टता।
न हि तत्तस्य कार्यं यद्यस्य भेदान्न भिद्यते ॥ ११२ ॥

अनेकस्यैककार्यजनने द्वैतं[1] सामग्रीरूपेणान्यथा वा (।) सामग्रीरूपेण जनने मन्दश्वसितादिषु अश्वसिते च न स्यात् सामग्र्यभावात्। एष हि सामग्रीजन्मनः कार्यस्य धर्म्मो यत्समग्रव्यग्रवैकल्येऽभवनं। नहि तदभावेपि भवतस्तत्कार्यता।

अथापि स्याद्यथा संनिहितमेव कारणं न समग्रमेव। एवं तर्हि सन्निहितमेव न कारणमसन्निहितमपीति वक्तव्यं। न चैवमन्वयव्यतिरेकभावित्वात् कार्यकारणतायाः। तस्मात्समग्रात्समग्रमेव कार्यं व्यग्राद् व्यग्रं। अविद्यमानादविद्यमानं। अन्यथाभूतादन्यथाभूतमेवेति नियमः। नैव हि तस्य कार्यं यद्यस्य विशेषादविशेषवत्। तद्भावभावित्वमेव निबन्धनमिति चेत्। न(।) तद्विकारविकारित्वेनैव तद्भावभाविता गम्यते।

तद्भावभावितामात्रात्कार्यकारणता यदि। अकारणो विकारः स्यात्तथा सर्व्वमहेतुकं ॥५६९॥

यदि तद्भावभावित्वमेव केवलमुपगम्यते कार्यकारणनिबन्धनविकारोऽहेतुक एव प्रसक्तः। अथ सोपि विकारस्तन्मात्रकादेव प्रथममेव कस्मान्नोत्पन्नः। अविकृत एव हि तस्मिन्नुत्पद्यमानः प्रथममेव स्यात्। नहि तस्य तत्कार्यं यदविशेषेपि विशिष्यत इत्युक्तं। ततो यथाऽहेतुको विशेषस्तथा स भावोपि ततस्तद्भावभावितापि कथं गम्यते।

एतेन परिणामः प्रत्युक्तः। यदुच्यते(।) क्रमभाविपरिणतिविशेषसापेक्षाद् देहादेव क्रमवद् विज्ञानमुपजायते। तदसत्।

परिणामक्रमोप्येष देहमात्रादसम्भवी। देहाविशेषात्तस्यापि विशेषः कुत आगतः ॥५७०॥

यथैव परिणतिविशेषाभावादविशेषो विज्ञानस्य तथा देहविशेषाभावतः परिणतेरपि।

ननु क्षीरादिपरिणतिविशेषस्तदविशेषेपि दृश्यते। कालपरिवासमात्रादेव (।) तथा शरीरस्यापि। नैतत्सारं। यतः।

क्षीरादिपरिणामो हि समानक्षीरसम्भवी। समान एव शारीरः परिणामो विशिष्यते ॥५७१॥

समानक्षीरादिसमवधाने समानोष्मादिसम्भवे च समान एव दध्यादिपरिणामः। शरीरस्य तु समानतासमानते। अनुरूपाभ्यासवासनाविकल्पकादिविज्ञानभेदाभेदयोर्निबन्धनं। ततो न परिणतिक्रमात्क्रमो विज्ञानानामिति गम्यते। तस्मात्समुदायकार्यत्वे विशेषसम्भवोन्यथा नेकत्वमिति स्थितमेतत्। न चैवं दृश्यते।

ननु यस्यापि विज्ञानादेव विज्ञानं तस्यापि कस्मादनेकं नोत्पत्तिमद् विज्ञानं। अत्रोत्तरं।

---

[1] T. द्वैतं

**विज्ञानं शक्तिनियमादेकमेकस्य कारणं ।**
**अन्यार्थासक्तिविगुणे ज्ञानेऽनर्थान्तरग्रहात् ॥११३॥**

विज्ञानं समनन्तरप्रत्ययरूपं एकमेकस्य कारणं शक्तिनियमः वासनानुरूपः संस्कारः। आसक्तिविशेषो[1] वा। दृढवासनं हि व्यवहितमपि विज्ञानं समनन्तरप्रत्ययस्य सामर्थ्यविशेषाधानेन किञ्चिदेव विज्ञानं जनयति केवलम्वा समनन्तरप्रत्ययानुरूपप्रबोधतो वा। तथा हि।

वासनादार्ढ्यमासाद्य विनापि समनन्तरात्। पूर्व्वकादेव विज्ञानात्(स्याद्)विकल्पस्य सम्भवः ॥५७२॥
समनन्तरविज्ञानात्प्रत्यासत्या तु कस्यचित्। विकल्पस्योदयो दृष्टः परस्य व्यवधेर्न्न तु ॥५७३॥

न खलु व्यवहितविज्ञानवासनाविकल्पानामन्येनावान्तरोपनिपातिना शक्तिविषयविषयेणोदयो[1] दृश्यते। ततो विज्ञानादेककं वा[2] विज्ञानमिति युक्ता व्यवस्था।

## (ङ) कर्मसिद्धिः—

ननु शरीरादनेकविज्ञानोदयेपि नियमस्तत एव विज्ञानात्। यथानेकेन्द्रियविज्ञानसम्भवेपि कदाचिदेकमेव विज्ञानमासक्तिविषये तत एवासक्तिविशेषात्। तत्रोच्यते।

**शरीरात्सकृदुत्पन्ना धीः स्वजात्या नियम्यते।**
**परतश्चेत्समर्थस्य देहस्य विरतिः कुतः ॥११४॥**

यदि शरीरादुदीय विज्ञानं ततः पुनः पुनरपि तावदेव। तथैव देहस्य सामर्थ्यसम्भवात्। यदि नाम विज्ञानं स्वशक्तिनियमादेकं विज्ञानं जनयति। देहस्तु तथैवास्तीत्यपरापरविज्ञानजननं। अथ तेन विज्ञानेन शरीरस्यापरविज्ञानजनने व्याघातकरणान्न शरीरादपरविज्ञानोदयः। तदप्यसत्।

नायमर्थः प्रमाणेन केनचिद् गोचरीकृतः। विज्ञानादेव विज्ञानं जायते माननिश्चयात् ॥५७४॥

नहि विज्ञानरहिताद्देहादेवानेकविज्ञानोत्पत्तिः। पुनर्विज्ञानादेवानेकविज्ञानजननशक्तिव्याघातः। नहि धूमादेव वह्नेर्धूमजननशक्तेरुपघातः। ततो यदि देहादुत्पत्तिर्विज्ञानादेकैकविज्ञानजननेपि न देहस्य सामर्थ्यव्याघात इत्यपरापरानेकविज्ञानजननं। नहि कारणानां काचित्प्रेक्षावत्ता येनेदानीम्विज्ञानादेव विज्ञानमुपजायते किमस्मदपरविज्ञानोत्पत्त्येति न देह उत्पादयेत्।

अथैवमपि कदाचिद् भवेत्। यदुत कार्यदेव कारणस्य स्वकार्यजनने व्याघात इति।

देहादनेकविज्ञानसम्भवे तदनन्तरं। विघाते ज्ञानतो दृष्टेः स्यादाशङ्का क्वचित्पुनः ॥५७५॥
पक्षपातकृतासक्तिरभ्यासादस्य सम्भवः। नियामकत्वमस्यासद्विज्ञानस्योपजायते ॥५७६॥

ततस्तज्जातीयं विज्ञानं तज्जातीयादेव कार्यकारणभावसिद्धौ विज्ञानादेव विज्ञानमिति न देहादस्योदयः।

ननूक्तमनेकेन्द्रियविज्ञानसम्भवस्तत एकविज्ञानादेकैकविज्ञानमिति। सत्यमुक्तं (।) नोक्तमात्रादेव परिहारोपि तु युक्तोक्तितः। न च तद् युक्तं। नहि विज्ञानमनासक्तस्वभावन्तदपर-

---

[1] T. विषयिणो०   [2] T. विज्ञानादेकं वा

विज्ञानानुत्पत्तये व्याप्रियते । न चासक्तिः पूर्व्वाभ्यासमन्तरेण । ततो यज्जातीये विज्ञाने पूर्व्वाभ्यासस्तत्सदृश एव पुनरासक्तिरतः पूर्व्वाभ्यासादेव विज्ञानान्तरानुदयः । यस्य तु ।

न लोकोस्ति परस्तस्य न पूर्व्वाभ्याससम्भवः ।

पूर्व्वाभ्यासं विना नास्ति विज्ञानान्तरवारणं ॥५७७॥

तेन देहादुदयिनां विज्ञानानां पुनः पुनः । तद्देहसम्भवे प्राप्तं वृन्दन्तच्च न दृश्यते ॥५७८॥

अथ प्रथम एवास्य क्षणो देहस्य संविदः । जनकः परभूतस्य वैलक्षण्याददेहेतुता ॥५७९॥

परभूतस्य हि कलशात्तद्विलक्षणस्या[1]जनकता विज्ञानेषु । नहि जनकविलक्षणोपि जनकः । तदप्यसत् ।

यदि प्रथमतो देहक्षणादेवोदयो विदां । अनाश्रयस्ततो देहः केवला स्याद्विदेव तु ॥५८०।

नानुपकार्योपकारकभावे आश्रयाश्रयिभावः तथा सति केवलस्य विज्ञानस्य सम्भवः ।

अथ देहसहकारिविज्ञानं विज्ञानं जनयति । ततो न केवलावस्थानं । तथा सति विज्ञानादेव विज्ञानं देहस्तु सहकारीत्यस्मत्पक्ष एव समर्थितः स्यात् । अथ देह उपादान-कारणं प्रथमं । यथा शालूकस्य[2] गोमयपदार्थः । पश्चाच्छालूकादेव शालूकोदयः । एवं तर्हि गोमयमन्तरेणापि पश्चाच्छालूकादेव शालूकसम्भवस्तथा विज्ञानादेव विज्ञानमिति केवला-वस्थानप्रसङ्गः ।

अथ देहस्यापि कारणत्वमुपलभ्यते । सत्यं (।) नोपादानकारणत्वेन किन्तु सहकारि-त्वेनेत्युक्तं ।

अथ पूर्व्वमुपादानं पश्चात्सहकारी चेत् । नोपादानं पश्चात्सहकारि भवति ।

यदि देह उपादानं सहकारी कथम्पुनः । दृष्टत्वादेवमेतच्चेन्न दर्शनमिहेष्यते ॥५८१॥

न च शालूकस्य तथाभूतस्य गोमयाच्छालूकाद्वा समुद्भवस्तयोर्महतो भेदस्य भावादिति प्रतिपादितं ।

पाटवादिन्द्रियज्ञानादुदितादीक्ष्यते क्वचित् । तदेव प्रथमं दृष्टं विज्ञानान्तरसाधनं ॥५८२॥

तस्मान्न देहाद्विज्ञानं ।

अथापि स्याद्(।) भवतोपि यदि न देह आश्रयो विज्ञानस्य तदा निवृत्तेपि देहे केवलस्य विज्ञानस्यावस्थानप्रसङ्गः । नहि निर्निबन्धनः सहावस्थाननियमः । अत्र परमा-शङ्क्य परिहारः ।

**अनाश्रयान्निवृत्ते स्याच्छरीरे चेतसः स्थितिः ।**
**केवलस्येति चेच्चित्तसन्तानस्थितिकारणं ॥११५॥**
**तद्धेतुवृत्तिलाभाय नाङ्गतां यदि गच्छति ।**

तदा केवलस्यावस्थानं भवेत्येवेति वाक्यशेषः । यदा तु ।

**हेतुर्देहान्तरोत्पत्तौ पञ्चायतनमैहिकं ॥११६॥**

तदा कुतः केवलस्यावस्थानमिति । तथा हि चित्तसन्तानस्य स्थितिकारणं तद्धेतु-वृत्तिरह(हे)तोः[3] कललादिसंज्ञितस्य वृत्तिर्देहोत्पादनं प्रत्याभिमुख्यं तस्य लाभः केवलस्य

---

[1] T. नुर्-नूर्-वो  [2] T. उत्पलस्य  [3] T. देहहेतोः

देहहेतोर्नास्ति । किन्तु चित्तसन्तानस्थितिकारणं । पूर्व्वकं चित्तं कर्म्मसंज्ञितन्तस्य यदाङ्गता सहकारिकारणत्वं । तस्य चाङ्गता देहसतृष्णतायां तत्राङ्गतां यदि गच्छति । तदा केवलस्यावस्थानमिष्टमेव । देहान्तरोत्पत्तौ च पञ्चायतनमैहिकं । तदेव संस्कार-कत्वेनारूप्यधातुच्युतानां देहोत्पत्तौ कारणमिति । तस्याङ्गभाव उपलभ्यते मरणादूर्ध्वं देहोत्पत्तेरदर्शनात् । आरूप्यधातोस्त्वत्यन्तादृष्टेः । अत्राह ।

**तदङ्गभावहेतुत्वनिषेधेनुपलम्भनं ।**
**अनिश्चयकरं प्रोक्तमिन्द्रियाद्यपि शेषवत् ॥११७॥**

यद्यपि नाम नोपलभ्यते पञ्चायतनस्यैहिकस्य जन्मान्तरदेहजननेऽङ्गभावस्तथापि चित्त-सन्तानहेतोः कर्म्मसंज्ञितस्य नासाविति नानुपलब्धिमात्रकादेव तदभावनिश्चय इति अनिश्चय-करणमनुपलम्भनमिति प्रागेव प्रत्यपादीदमिति कैवात्र विमतिः ।

अथाप्युच्यते । नानुपलम्भनमात्रकमत्रोच्यतेऽपि तु व्याप्तिपूर्व्वकमनुमानं । तद्यथा । यदिन्द्रियन्तदिन्द्रियान्तरं न प्रतिसन्धत्ते(।) तद्यथा देवदत्तचक्षुरादिकं न यज्ञदत्तचक्षुरादिकं । इन्द्रियं चेह जन्मशरीरसम्बद्धमिति विरुद्धव्याप्तोपलब्धिः ।

नैतदस्ति । शेषवत्त्वादस्य उच्यते एतद्यथार्थास्ति नहि शेषवतो गतिः । जन्मान्तरे-न्द्रियाप्रतिसन्धानं हि केवलमदर्शनमात्रगम्यं न चादर्शनमात्रकाद्विपक्षव्यावृत्तिनिश्चयः । अथैहिकशरीरभावीन्द्रियप्रतिसन्धानोपलब्धेरपरत्रापि तत्प्रतिसन्धानमेवानुमीयते । तत्रापि सिद्धसाध्यता तस्यापि तदैहिकत्वात् । पारावारवत् ।

अथ शुक्रशोणितान्तरभवेन्द्रियमिति विशेष्यते ।

तदप्यसत् । अत्रापि न विपक्षाभावोऽनुपलम्भमात्रकमन्तरेण गम्यते । न च शुक्रशोणि-तान्तरत्वेन विशेषणं देशविशेषणवत्परित्राणं । घटशब्दविशेषणवच्च । तथाहि ।

**दृष्टा च शक्तिः पूर्व्वेषामिन्द्रियाणां स्वजातिषु ।**
**विकारदर्शनात्सिद्धमपरापरजन्म च ॥११८॥**

नहि व्यक्तिविशेषणात्पक्ष एव प्रतिबन्धः प्रतीयतेऽन्यथा न केनचित् क्वचिद् व्यव-हर्तव्यं । शक्तिनिश्चयपूर्व्वकत्वाद् व्यवहारस्य । सामान्यविषयश्च व्यवहारतो न व्यक्तिपरता सम्बन्धस्य । तथा च । चापल्यादिसमन्वयिनश्चक्षुरादेरभ्यासभावनातस्तथाभूतोत्पत्तौ तथाभूतदर्शनादपरत्र तथाभूतमेवानुमीयते । न च जन्मादौ तथाभूतमिन्द्रियं कारणमुप-लभ्यते । ततो जन्मान्तरेन्द्रियजमिति नैहिकत्वमन्यद्वा विशेषणं युक्तं । अथैकमेव तदिन्द्रियं ततो नोत्तरेन्द्रियस्य पूर्व्वेण जननसिद्धिः । यद्यप्येवन्तथापि ।

अभ्यासपूर्व्वकत्वस्य चापलादिषु दर्शनात् । तथाभूतानुमानस्य सिद्धत्वादपरं वृथा ॥५८३॥

एकन्तत्रेति नेदमुपयोगि सर्व्वथा तज्जातीयकार्यदर्शनात्कारणं तथाभूतमित्यनुमानं । दृश्यन्ते चाभ्यासिका गुणाः स्वप्नशरीरान्तर इति प्रतिपादितं ।

किञ्च (।) विकारस्यापरापरस्य दर्शनादपरापरजन्मसिद्धमेवात इति । इन्द्रियान्तर-मिन्द्रियान्तरं जनयति मध्यावस्थायामिति कथं न जन्मान्तरेन्द्रियजननं स्वभावभूतविकारे हि भेद एव नैकता पृथिव्यादिवत् ।

अथापि स्यादेकसन्तानप्रज्ञप्तिरेवात्रेति नात्यन्तं भेदः । जन्मान्तरेपि समानमेतत् । जन्मान्तरमपि सुप्तप्रबुद्धवदेकसन्तानान्तर्गतमेव स्मृतिव्यवधानेन तु दूरमिव तत्प्रतीयते ।

अथापि स्यान्नेन्द्रियादेवोत्पत्तिरिन्द्रियाणामपि तु प्रथमं शरीरादुत्पत्तिः परत इन्द्रियादेव शक्तिनियमात् । अत्रोच्यते ।

**शरीराद्यदि तज्जन्म प्रसङ्गः पूर्व्ववद्भवेत् ।**
**चित्ताच्चेत्तत एवास्तु जन्म देहान्तरस्य च ॥११९॥**

यदि देहात्प्रथमोत्पत्तिस्तदा सेन्द्रियादनिन्द्रियाद्वा(।) सेन्द्रियादुत्पत्ताविन्द्रियादेवोत्पत्तिरिति प्रथमस्यापीन्द्रियादुत्पत्तौ परलोकप्रसिद्धिः । अनिन्द्रियादुत्पत्तौ केशनखाप्रादेर्मृतदेहाच्चोत्पत्तिः । अनेकत्वे चानेकेन्द्रियोत्पत्तिप्रसङ्गः । तथा चापरिमाणताप्रसङ्गः । तथा समर्थस्य देहस्य विरतिः कुतः । अथ देहपरिणतिविशेष एवेन्द्रियाणि तदापि स एवाविनाशप्रसङ्गः स्यादक्षाणां देहसम्भव इत्यादिकः प्रसङ्गः । अथ चित्ताभावान्मृतशरीरे नेन्द्रियसम्भवः । यदि तर्हि चित्तादुत्पत्तिः । तत एव चित्ताज्जन्म देहान्तरस्य चित्तस्य च जन्मान्तरभाविनः । किं पूर्व्वेन्द्रियकारणत्वपरिकल्पनानिर्बन्धेन । ततो न शरीरं विज्ञानस्य हेतुरतो न हेतोः शरीरस्य वैकल्याज्जन्मान्तरासम्भवादप्रतिसन्धिरित्याह ।

**तस्मान्न हेतुवैकल्यात्सर्व्वेषामन्त्यचेतसाम् ।**
**असन्धिरीदृशन्तेन शेषवत् साधनं मतम् ॥१२०॥**

इत्युपसंहारः । हेतुर्हि जन्मान्तरासङ्गस्य सतृष्णकर्म्माभिसंस्कृतं चित्तं । तस्य च न वैकल्यं । यदि तु शरीरं हेतुः स्यात्ततस्तद्वैकल्यतो हेतुवैकल्यादसन्धिः । न चैवं । ततो न हेतुवैकल्यमिति नासिद्धो हेतुः । मरणचित्तत्वादित्येव परिशिष्यते । तच्च शेषवत् । अदर्शनमात्रकेण व्यतिरेकोपदर्शनात् ।

यदप्युक्तं । इहलोकचित्तं चित्तान्तरं न प्रतिसन्धत्ते । भिन्नदेहवृत्तित्वाद्देवदत्तचित्तवत् । तदप्ययुक्तं ।

वृत्तेः पूर्व्वनिषेधोक्तेराश्रयस्य निषेधतः । आलम्बनत्वे विज्ञानं क्षणादालम्बते परं ॥५८४॥

यदि तत्र वर्तमानमन्यवृत्तिनो विज्ञानस्य न जनकमिति प्रमाणार्थस्तदाश्रयाश्रयिभावो निषिद्धोऽदेशस्थञ्च विज्ञानं । न चालम्ब्यमानो देह आश्रयो विज्ञानस्यान्तरस्पर्शविशेषत्वेन सुखादिविज्ञानालम्ब्यत्वात् । आलम्बनञ्च स्वशरीरं । परशरीरालम्बनविज्ञानं जनयतीति तेनानेकान्तः । न च देहान्तरत्वमेकसन्तानप्रज्ञप्तितः । भेदस्तु परमार्थत एकजन्मशरीरस्यापि बालाद्यवस्थाविशेषतः । तस्मात्सन्तानस्योपकारो मनसो देहादुत्पत्तिस्तु चित्तादेव व्रीहिसन्तानवदिति । ततो नादिनिधने चितसन्ताने संति जन्ममरणप्रबन्धसिद्धेरभ्यासप्रसिद्धिरित्याभ्यासिका गुणाः सर्व्व एवावकाशमासादयन्तीति सर्व्वज्ञताम्यो वा गुणः संभवति[1] ।

## (च) करुणाभ्यासः

ननु भवत्वभ्यासः स तु कथमत्यन्तप्रकर्षनिष्ठः । किञ्चिन्मात्रस्य विशेषस्य दर्शनात् । लंघनवदुदकतापवच्च । अत्रोत्तरं ।

---

[1] T. अधिकः पाठः—प्रमाणवर्त्तिकालंकारे परलोकसिद्धिवार्त्तिकम्

अभ्यासेन विशेषेपि लंघनोदकतापवत् ।
स्वभावातिक्रमो मा भूदिति चेद्, आहितः स चेत् ॥१२१॥
पुनर्यत्नमपेक्षेत यदि स्यादस्थिराश्रयः ।
विशेषो नैव वर्धेत स्वभावश्च न तादृशः ॥१२२॥

कुत एतदिति चेदाह ।

तत्रोपयुक्तशक्तीनां विशेषानुत्तरान् प्रति ।
साधनानामसामर्थ्यान्नित्यज्ञानाश्रयस्थितेः ॥१२३॥

न खलु विशेष इत्येव व्यवस्थितोत्कर्षभागी नहि लंघनोदकतापविशेषः स्वसत्तामात्रभावेनैव तथापि तु पुनर्यत्नापेक्षणादाहितस्यापि लंघनस्य नहि लंघनं। पूर्व्वप्रयत्नलभ्यं पुनः प्रयत्नान्तरनिरपेक्षमपितु प्रायश एव पुनर्यत्नमपेक्षते । उदकतापस्त्वस्थिराश्रयः । पुनर्यत्नापेक्षी च । न ह्यसौ सङ्गताग्निसंपर्क्कोप्यास्ते । यतोऽव्यवस्थितोत्कर्षता । ततो व्यवस्थितोत्कर्षता पुनर्यत्नापेक्षणेनास्थिराश्रयत्वेन च व्याप्ता तदभावाद्विपर्ययसद्भावाच्च कृपादीनां मनोगुणानां न व्यवस्थितोत्कर्षता । यश्च पुनर्यत्नापेक्षी स स्वभाव एव न भवति । अयन्तु सविशेषणो हेतुर्यः स्थिराश्रयः स्वभावश्च । न स व्यवस्थितोत्कर्षस्तद्यथा **श्रोत्रिय-कापालिकघृणा** ।

यस्तु पुनर्यत्नापेक्षी तस्य ।

विशेषस्यास्वभावत्वाद् वृद्धावप्याहितो यदा ।
नापेक्षेत पुनर्यत्नं यत्नोन्यः स्याद्विशेषकृद् ॥१२४॥

यः खलु पुनर्यत्नसापेक्षः स यद्यप्यतिवृद्धिमाप्नोति । तथापि तस्य न स्वभावता । नहि हेतुसन्निधानतापेक्षी स्वभावो युक्तः । स्वरसवाहिनस्तथा व्यपदेशात् ततो वृद्धावपि तस्य नात्यन्तं वृद्धिः । लंघनोदकतापवत् ।

न चैवं मनोगुणाः कृपादयोऽन्ये च बाह्यगुणाः केचनेत्याह ।

काष्ठपारदहेमादेरग्न्यादेरिव चेतसि ।
अभ्यासजाः प्रवर्तन्ते स्वरसेन कृपादयः ॥१२५॥

काष्ठस्य हि वह्न्याहितो[1] विशेषोदरदाहादिलक्षणः स पुनर्यत्नापेक्षणात्स्वरसवाही पारदेपि चारणजारणादिलक्षणः (।) हेम्नि च पुटपाकादिकृतः । तद्वदेव चेतसि कृपादयः पुनः पुनस्तदनुवर्तनाहितविशेषादव्यावृत्तिभाजस्तदा कृपादिविशेष आहितो यदा नापेक्षेत यत्नं पुनस्ततोन्यः पूर्व्वत्रानुपयुक्तशक्तिरुत्तरोत्तरविशेषकृदेवेति परप्रकर्षनिष्ठा (।)

ननु लंघनमपि यत्नसापेक्षं कृपादयोपि तत एकः स्वरसवाही अपरो नेति कुतः । उक्तमत्र । न स्वरसवाही पुनर्यत्ननिरपेक्ष उदकतापादिः कृपादयस्तु काष्ठ इवाग्निकृता विशेषाः स्वरसवाहिनः ।

तस्मात्सतेषामुत्पन्नः स्वभावो जायते गुणः ।
तदुत्तरोत्तरो यत्नो विशेषस्य विधायकः ॥१२६॥

---

[1] T. वह्नुनाहितो

**यस्माच्च तुल्यजातीयपूर्व्वबीजप्रवृद्धयः ।**
**कृपादिबुद्धयस्तासां सत्याभ्यासे कुतः स्थितिः ॥१२७॥**

व्यवस्थितोत्कर्षता[1] पूर्व्वसजातीयकृपादिबुद्धिप्रभवा एव कृपादयो न विषयादिसन्निधानादिसापेक्षाः । तथाहि ।

स्मरणश्रवणेनापि कृपादीनां प्रवर्तनं । न च प्रत्युपकारादिसव्यपेक्षाः कृपादयः ॥५८५॥

तत्क्षेत्रीकृतसन्तानानां हि प्रत्यग्रसततापकारप्रवर्तमानेष्वपि न कृपादयः शिथिलतां भजन्ते । ततस्तेषामभ्याससमागममहोत्सवसमये कुतो विकाशेतरता मन्दता ।

अथापि स्याल्लङ्घनस्यापि सोभ्यासः समस्त्येवाभिवृद्धेरनवधिकाया हेतुः । अतस्तस्यापि स धर्म्मप्राप्तो न चैवमतो विपर्यय इत्याह ।

**न चैवं लंघनादेव लंघनं बलयत्नयोः ।**
**तद्धेत्वोः स्थितशक्तित्वाल्लंघनस्य स्थितात्मता ॥१२८॥**

न हि कृपादेरेव समानजातीयात्कृपादिवल्लंघनादेव लंघनमपि तु बलयत्नाभ्यां स्वाभ्यस्तलंघनोपि बलव्यपगमे यत्नस्य च न लङ्घयितुं समर्थः । बलस्य च व्यवस्थितात्मता स्वहेतुसामर्थ्यात्प्रयत्नस्य च । ततो लंघनमपि स्थितात्मैव नान्यथा ।

अथापि स्याद् (।) अभ्यासादेव लंघनविषयाल्लंघनं । अन्यथा बलस्य प्रागपि भावाल्लंघनप्रसङ्गः । अथ बलमेव प्राग् नासीदभ्यासेनैव तस्य निर्वृत्तेः(।)तथा सति समानजातीयलंघनजत्वेपि लंघनमनवधिकं नेति कृपादीनामपि स एव प्रसङ्ग । अत्रोच्यते ।

**तस्यादौ देहवैगुण्याद् पश्चाद्बद्धविलंघनं ।**
**शनैर्यत्नेन वैगुण्ये निरस्ते स्वबले स्थितिः ॥१२९॥**

नाभ्यासाद्बलमपि तु सदेव बलमुपहतं श्लेष्मादिभिरसमर्थं लंघने । ततो लंघनाभ्यासादनयोर्वैगुण्यस्य । तत आहारादेस्तदेव पूर्व्वकं बलं स्वयमस्थास्ते । तेन पश्चाल्लंघनं न प्राक् । अथ रसायनोपयोगाद्बलं । तदपि रसायनशक्तिनियमाद् व्यवस्थितं । समानेपि लंघनाभ्यासे पुरुषगरुडशावकयोर्न लंघनसमानता । तथाहि ।

गरुत्मच्छाखामृगयोर्लंघनाभ्याससङ्गमे । समानेपि समानत्वं लंघनस्य न विद्यते ॥५८६॥

तस्मादभ्यासेपि योनिजातिबलापेक्षमेव लंघनं न लंघनमात्रापेक्षं । कृपादीनां तु पुनरन्यानपेक्षत्वमेव ।

नन्वभ्यासाद्बलं बलाल्लङ्घनमिति तदेवाभ्यासपूर्व्वकत्वं कृपादिवत् । न । अत्यन्ताभ्यासाद् बलस्य हानिरपीत्यदोषः ।

यदि तर्हि सजातीयबीजमात्रापेक्षाः कृपादयस्तदानादित्वादत्यन्तं तत्स्वभावतैव स्यात् । न चास्ति तत्स्वबीज प्रभवा नेति गम्यते । अत्रोच्यते ।

**कृपा स्वबीजप्रभवा स्वबीजप्रभवैर्न चेत् ।**
**विपक्षैर्बाध्यते चित्ते प्रयात्यत्यन्तसात्मतां ॥१३०॥**

---

[1] T. व्यव०र्षिता—नायं पाठः

यद्यपि कृपा स्वबीजप्रभवानादिश्च कालस्तथापि न सात्मीभावः। स्वबीजप्रभवैरेव द्वेषादिभिर्बाधनात्। यदि नैरन्तर्यमाप्यते तदा सात्मीभावः स्थिराश्रयत्वेपि तत्र महता प्रयत्नेन विपक्षविद्वेषादिनिवारणे कृपात्मकत्वं।

अवश्यञ्चेदमभ्युपगन्तव्यं।

**तथा हि मूलमभ्यासः पूर्व्वः पूर्व्वः परस्य तु।**
**कृपावैराग्यबोधादेश्चित्तधर्म्मस्य पाटवे ॥१३१॥**

अभ्यासो हि कृपादीनां पूर्व्वः पूर्व्व उत्तरोत्तरस्य चित्तधर्मस्य पाटवेन पुनरुत्पत्तौ। उत्पन्नस्य हि स्वबीजात्पाटवमेव केवलं विधातव्यमभ्यासेन विद्यमानत्वादुत्पत्तेः। ततः।

स्वार्थे निरुच्छकत्वेन[1] परार्थे सस्पृहात्मनः।

**कृपात्मकत्वमभ्यासाद् घृणावैराग्यरागवत्।**

अभ्यासो ह्यनन्यकर्म्मणा क्रियमाणः कृपात्मकत्वं विदधाति। यथा घृणा वैराग्यं रागञ्च। यथा हि विपक्षैरबाध्यमाना घृणा सात्मीभवति। यत्सद्भावादुपादेयमेव किञ्चिन्नावभासते। तथा वैराग्यं रागितापि द्रष्टव्या।

## § ४. शास्तृत्वाद् भगवान् प्रमाणम्

### (१) शास्तृत्वव्याख्यानम्।

एवं कारुणिकः परदुःखनिराचिकीर्षया पर[2]दुःखहानार्थमुपायाभियोगी भवतीत्याह।

**निष्पन्नकरुणोत्कर्षः परदुःखाक्षमेरितः ॥१३२॥**
**दयावान् दुःखहानार्थमुपायेष्वभियुज्यते।**

दयावतो हि स्वदुःखहानाय यत्नः सम्भवी। स्वदुःखक्षयमन्तरेण परदुःखनिराकरणेऽसामर्थ्यं। ततः स्वदुःखक्षयसाक्षात्करणे सर्व्वभावसाक्षात्करणे चाभियुज्यते। यतः।

**परोक्षोपेयतद्धेतोस्तदाख्यानं हि दुष्करं ॥१३३॥**

यस्य खलु स्वर्ग्गापवर्गहेतुफलसाक्षात्क्रिया नास्ति तस्य परेभ्यस्तदाख्यानं दुष्करं। नहि तस्य तत्र सामर्थ्यं। यद्यपि नाम चतुरार्यसत्यदेशनासम्भवत्यनुमानपरिनिश्चितत्वे सत्यानां। तथापि न सर्व्वदा। स्वार्थसमीहावेलायामसंभवात्। नरकादिसम्भवे च प्रतिनियतकर्म्मफलमावीच्यादिलोकधातुवृत्तान्तकथनं न सम्भवत्येव। ततः सर्वमेव साक्षात्कर्त्तव्यं।

तत्र साक्षात्कारणे हेतुः परीक्षणं। तदेवाह।

**युक्त्यागमाभ्यां विमृशन् दुःखहेतुं परीक्षते।**
**तस्यानित्यादिरूपञ्च दुःखस्यैव विशेषणैः ॥१३४॥**

---

[1] T. निरुत्साहेन

[2] T. स्वपरदु०

युक्तिरनुमानं। अनुमानागोचरे चागमः, अतीन्द्रिययार्थप्रत्यायनहेतुः। अथवा। आगमः प्रथमं प्रबोधको भवति। ततो युक्तिरर्थप्रत्यायनफला प्रवर्तते। न त्वागमादेवार्थनिश्चयः। विवक्षामात्रात्प्रवृत्तेः। अर्थे[1] प्रतिबन्धाभावात्। एतच्च सर्व्वं विमर्शाभिमुखस्य नान्यथा। ततः प्रथमं विमर्शः पुनरागमे तस्यार्थस्य दर्शनं। परार्थानुमानरूपे नाज्ञामात्रके। नहि प्रामाणिकेर्थे आज्ञामात्रदायी प्रेक्षावान् वक्ताऽमूढो वा। ततो युक्त्या तस्यार्थस्य स्थिरीकृत्य भावयतः साक्षात्करणमित्यनुक्रमः। तत्र तावत्प्रथमं दुःखहेतुमेव परीक्षते, हेतुनिवर्तनद्वारेण दुःखनिवर्तनार्थं। दुःखहेतौ च निरूपिते तस्य पुनरनित्यतादिरूपन्तत्परीक्षणेन निवर्तनयोग्यतानिरूपणार्थं। अनिरूपिते हि निवर्तनयोग्यत्वे निवर्तनायोत्साह एव न स्यात्। न ह्यहेतुकत्वे नित्यहेतुकत्वे वा निवर्तनाय व्यापारः सफलः। यतः।

अहेतोर्नित्यतैवास्ति नित्यहेतोः क्षयः कुतः। हेतुवैकल्यमप्राप्य कथं भावो निवर्तते ॥५८७॥
यस्य हेतुकृतो भावस्तदभावान्न तद्भवेत्। तदभावेपि भावश्चेदभावोस्य कुतो भवेत् ॥५८८॥
अनित्यहेतुको भावो हेत्वभावे निवर्तते। नित्यहेतोरभावोस्ति न हेतोर्न निवर्तते ॥५८९॥

तस्माद्विशेषणैरनित्यतादिभिर्दुःखस्य। तस्य हेतोरनित्यतां परीक्षते।

**यतस्तथास्थिते हेतौ निवृत्तिर्नेति पश्यति।**
**फलस्य हेतोर्हानार्थं तद्विपक्षं परीक्षते ॥१३५॥**
**साध्यते तद्विपक्षोपि हेतो रूपावबोधतः।**

यदीश्वरादिको नित्य एव कश्चिद् दुःखस्य हेतुः स्यात्। ततस्तस्यावैकल्यान्निवृत्तिर्न भवति दुःखस्येति मतिमान् भवेत्। ततो निवर्तनाय न प्रवर्तते फलस्य। न ह्यशक्ये कश्चित् प्रवर्तते। प्रवर्तमानो वा न विघातभाक्। फलस्य च यो हेतुस्तद्विपक्षं परीक्षते। हेतोर्हानार्थं। नहि भवतोपि विपक्षसङ्गमन्तरेण निवृत्ति। न चाहेतोरभावो विपक्षाभावे। हेत्वभावादेव निवृत्तिरिति चेत्। कर्म्मक्षयादेव निवृत्तिरिति परमतं। न(।) विद्यातः कर्म्मापरापरमिति न कर्म्मक्षयः। अविद्या च हेतुः कर्म्मण इति प्रतिपादयिष्यते दुःखस्य चेति न दोष.।

ननु दुःखस्य न हेतुर्नियतरूप. प्रियविप्रयोगाद्यनेकरूपत्वात्। ततो निवर्तनमशक्यं। अत्रोच्यते।

**आत्मात्मीयग्रहकृतः स्नेहः संस्कारगोचरः ॥१३६॥**
**हेतुर्विरोधि नैरात्म्यदर्शनं तस्य बाधकं।**

आत्मात्मीययोरभिनिवेशकृतः स्नेहो दुःखस्य हेतुः। स्नेहनिवृत्तौ च नात्मीये विहन्यमाने दुःखं।

ननु यद्यपि नात्मीये विहन्यमानेपि न मानसं दुःखं स्नेहनिवृत्तौ कायिकन्त्वात्मनि कथं न दुःखं। अत्रोच्यते।

परदुःखेन दुःखी यस्तस्य नात्मसुखोदयः। आत्मीयाभिनिवेशे हि स्वस्नेहस्य निवर्तनं ॥५९०॥

न खलु सुतस्नेहतिरस्क्रियमाणात्मस्नेहाः कायिकमपि शस्त्रादिसंपर्कजनितमवलम्बन्ते दुःखं। आत्मीयस्नेहश्च[2] सत्कायदृष्टेरतः सत्कायदृष्टिदुःखस्य हेतुस्ततो नैरात्म्य-

[1] T. अथ [2] T. आत्मात्मीय०

दर्शनम्बाधकं विरोधित्वात् । तदाकारविरोधी हि धर्म्मस्तस्य बाधकः । पवनस्येव स्निग्धतौष्ण्यादयः[1] । ततो नैरात्म्यसात्मीभावे तद्विपर्ययाकरस्य सत्कायदर्शनस्यानित्यस्य सतो निवृत्तिः । तत आत्मात्मीयग्रहनिवृत्तौ सकलकायिकमानसदुःखनिवृत्तिः ।

ननु देहच्छेददाहादौ च कथं मरणादिदुःखाभावः । नैतदस्ति ।

मरणन्तेन देहेन वियोगादपरं नहि । देहान्तरस्योत्पत्तिश्च जननं दुःखिताऽत्र का ॥५९१॥

यदा देहेनैकेन वियुज्यते परेण च तस्य युक्तिः स्मरणञ्च पूर्व्वापरावस्थयोरभ्यासजनितस्मृतिपाटवस्य तदा बालवृद्धावस्थापरित्यागोपादानवत् परिधानोपादानत्यागवच्च तस्य का पीडा । न च पीडानुसन्धानाऽग्रहमन्तरेण यत्रैवाभ्यासस्तदेवाभिरतिकारणं । औदासीन्याभ्यासे च न सुखदुःखे स्तः ।

अत्यन्तमौदासीन्यस्य सम्भवे देहभोग्ययोः । न पीडास्त्यपकारेपि सत्त्वदृष्टिनिवर्त्तने ॥५९२॥

तदाह ।

बहुशो बहुधोपायं कालेन बहुनास्य च ॥१३७॥
गच्छन्त्यभ्यस्यतस्तत्र गुणदोषाः प्रकाशतां ।

नैरात्म्यदर्शनेन सकलपर्याकुलताहेतुरागादिव्यपगमे प्रबोधविकासे चानेकप्रकारापरापरोपायाभ्यासगुणदोषाणां प्रकाशनं । शास्त्राभ्यासे सत्यनेकप्रकारशास्त्रगुणदोषप्रकाशनवत् ।

गुणदोषप्रकाशनं हि बुद्धेः पाटवं ।

बुद्धेश्च पाटवाद्धेतोर्वासनातः प्रहीयते ॥१३८॥
परार्थवृत्तेः खड्गादेर्विशेषोयं महामुनेः ।

यदा च पटुबोधोपनीतगुणदोषविवेकस्तदा सकलमनुभूतगुणमध्यवर्त्ति[2] क्षणिकमपि दोषजातं जानाति । ततो वाग्वैगुण्यादिकमपि निवर्तयितुं प्रयततेऽतोवासना प्रहीयते । अयमेव प्रत्येकबुद्धार्यश्रावकतीर्थेभ्यो विशेषो भगवतः सुगतस्य । अथवा यदि नाम दुःखप्रहाणं तथापि न सर्व्वज्ञत्वं भवत्यन्यथा वीतरागः सकल एव सर्व्ववेदी भवेत् । अत्रोच्यते । बहुशो बहुधोपायमित्यादि । बहुप्रकारो हि खलूपायप्रपञ्चः । तदभ्यासे च सकलसांसारिकगुणदोषप्रकाशनं महता कालेन ।

स्मृतिपाटवसद्भावे पूर्व्वजातिस्मृतिर्यथा[3] । तदा तदनुसारेण तत्सर्बाधिगतिः पुनः ॥५९३॥
यथा ग्रामान्तरायातस्तत्संस्कारानुवृत्तिमान् । ज्ञायते तद्विदा तद्वदागतो जन्मनोन्यतः ॥५९४॥

यथा खलु ग्रामान्तरागतस्तत्संपर्कोपजनितविशेषदर्शने तद्विदा तत आगतत्वेन ज्ञायते । ततो ग्रामान्तरस्यापि तद्विशेषणत्वेन गतिस्तद्वदेव जन्मान्तरस्यापि तज्जनितसंस्कारकारणत्वेनानुमानं ॥ परोक्षोर्थो जन्मान्तरसम्भवी ।

किमनेन प्रकारेण दानादिर्नानुमीयते । ततश्च कर्म्मफलयोर्नियमप्रतिवेदनं ॥५९५॥

---

[1] T. ल्दुङ-ल-द्रो-व दङ स्नुम्-प-ल-सोग्स-प

[2] T. अणस्थलमध्यवर्त्ति

[3] T. यदा

अनेन कर्म्मणानेन देशेनास्य समागमः । प्रागासीदेवमाकारस्वभावस्य समागमात् ॥५९६॥

**प्रतिनियतं देशादिसंसर्गतत्कार्यस्वभावयोरवान्तरस्वभावनिरूपणे सकलकारणस्वभाव-तत्कार्यस्वभावभेदसम्बन्धवेदनमिति प्रतिनियतस्वभावसाकल्यवेदनमिति सर्व्वकर्म्मफलादि-सम्बन्धपरिज्ञानं ।**

स्वर्गापवर्गमार्गस्य यथावद्वेदने सति । पुरुषार्थज्ञतामात्रात्सम्पूर्णं शासनं मतं ॥५९७॥

**न च कार्यकारणमतिवृत्य परस्परं सकलं जगज्जायते । ततोनेकप्रकारकार्यकारण-भावभावनानुबन्धेन सकलस्य जगतो भवति वेदनमनवद्यं ततः सर्वज्ञता ।**

**अथानुमानेन वेदने कथमस्य साक्षाद्दर्शित्वं साक्षाद्द्रष्टा च भगवानिष्यते । तदपि यत्किञ्चिदेव ।**

सर्व्वाकारानुमानं यदध्यक्षात्तन्न भिद्यते । नेन्द्रियेणापि संयोगस्ततोधिकविशेषकृत् ॥५९८॥

**यत्खलु सर्व्वाकारपदार्थस्वरूपवेदनं तदेवाध्यक्षं । साक्षात्करणार्थो हि प्रत्यक्षार्थः । नन्वक्षं प्रति वर्तते इति प्रत्यक्षं(।) नाध्यक्षलक्षणमेतत् । अपि तु साक्षात्सद्भूतपदार्थवेदनं । अक्षन्तूपलक्षणमात्रं । किञ्च । यद्यक्षयोगेपि साक्षाद्दर्शनाभावः किन्तदध्यक्षं । अक्षमेव तन्न भवत्युपहतत्वादिति चेत् । उच्यते ।**

असाक्षात्कृतिहेतुत्वादनक्षं यदि तन्मतं । साक्षात्करणहेतुत्वादक्षमित्यवधार्यतां ॥५९९॥

**नहि संस्थानादिमात्रकादेवाक्षता युक्ता । उपहतस्यापि तत्त्वप्रसङ्गात् । साक्षात्करण-हेतुत्वे त्वक्षतायां मनसोपि तथात्वाविरोधः । अन्यच्च ।**

मनसः पाटवादेव स्पष्टमाकारदर्शनं । मनसि व्याकुले ह्यक्षप्रतीतेः स्पष्टता कुतः ॥६००॥

**मनस एव समाधानसङ्गतादक्षविज्ञानमपि साक्षात्कारि । अतोऽध्यक्षजन्यत्वमकारण-मेव । तस्मादनुमानमपि सर्व्वाकारसाक्षात्करणप्रवृत्तं प्रत्यक्षमेव ।**

**नन्वतीतादौ परोक्षेर्थे प्रवर्तमानं कथं प्रत्यक्षं । नैतदपि युक्तं ।**

साक्षात्करणसद्भावे कथमस्य परोक्षता । साक्षात्कृतः परोक्षश्चेदपरोक्षो न विद्यते ॥६०१॥

**अथाक्षव्यापारदपरोक्षता । स एवाक्षव्यापारः साक्षात्करणमन्तरेण कथमवगम्यते । साक्षात्करणेनावगतौ सर्व्वाकारानुमानेप्यक्षव्यापारः स्यात् । अनुमानावतारस्य सर्व्वत्र भावात् । चक्षुरादिव्यापारोप्यनुमानादवगम्यते । अपि च ।**

सर्व्वाकारानुमानं हि प्राग् दृष्टस्य भवेद्यदा । तदात्मचक्षुरादीनां व्यापारोपि प्रतीयते ॥६०२॥
क्वचिद्भावी क्वचिद् भूतः सोऽनुमानेन गम्यते । अक्षव्यापार इत्येषा तत्राक्षव्यावृतिर्न किं ॥६०३॥

**यदा तदैवोत्पन्नो भावी वा पदार्थोनुमीयते । तदा भावी तत्राक्षव्यापारः प्रतीयतेऽ-नुमानेन । यदा भूतस्तदा भूत एव । स चा[1]सर्व्वाकारेणानुमानतः प्रतीयमानः समस्त्येव कथमभावोऽक्षव्यापारस्य ।**

**ननु भावी भूतो वा कथमस्ति । नैतदस्ति ।**

---

[1] T. स च

साक्षात्करणमेवास्य भावस्यास्तित्वमुच्यते। सर्व्वत्र साक्षात्करणात्सत्त्वं भावस्य गम्यते ॥६०४॥

वर्तमानाभिमतस्यापि पदार्थात्मनि स्तम्भादौ साक्षात्करणादेव गम्यते तदस्तित्वं नान्यतः।

नन्वसाक्षात्कृतेपि वह्न्यादावनुमानगम्यमस्तित्वं। न (।)तत्रापि तथाभूतस्यैवानुमानं साक्षात्कृतं क्रियमाणं करिष्यमाणञ्चानुमीयतेऽन्यथानुमानाप्रवृत्तेः। दर्शनानुसार्यनुमानं दृश्यतामेवानुमापयति। अन्यथाऽयोगात्। यदि तु न केनचिद् दृष्टं दृश्यते द्रक्ष्यते वा तदा च शविषाणायमानमसदेव। सर्व्वसामर्थ्योपाख्याविरह एवानुपाख्या।

ननु वर्तमानकालसम्बन्धोस्तित्वं न साक्षात्करणं। तथा च योगिनामतीतानागतपदार्थ-साक्षात्करणं भवद्भिरिष्यते। वर्तमानतामात्रदर्शने तु नासावतीतादिदर्शी। ततः सर्वजन-समानता कथमस्य शास्तृत्वं योगित्वम्वेति परे उक्तवन्तः। तत्रेदमुच्यते।

न प्रमाणन केनापि गतिः कालस्य विद्यते। रूपादिमात्रस्य गतिः प्रत्यक्षादनुमानतः ॥६०५॥
प्रत्यक्षमतिवृत्त्यापि वृत्तिमभ्युपलभ्यते ॥

प्रत्यक्षेण रूपादीनां स्वभाव एव केवलमुपलभ्यते न कालादियोगः। तदाकारमात्रसम-गामादध्यक्षस्य(।)न हि पुरोवर्त्याकारपरिग्रहमन्तरेण प्रत्यक्षमीक्षते। अन्यथा सर्व्वः सर्व्वदर्शी भवेत्। न च पुरोवर्त्याकारतया कालः स्तम्भादिवदुपलभ्यते। नापि प्रत्यक्षमन्तरेणानुमानं। अथ क्षिप्रचिरादिप्रत्ययग्राह्योऽनुमेयो वा। तदपि न सम्यक्।

चिरमित्यादि बुद्धीनां न पुरोवर्निकालता। नैवमाकारविरहे बुद्धेः प्रत्यक्षतेष्यते ॥६०६॥

चिरंकृतमित्यादौ घटादिकमेवावभासते। न तु तत्रापरः कालः।

अथापि स्याद्(।) यदि घटादय एव कार्यताभाजोऽवभासन्ते। कस्तर्हि चिराद्यर्थः। अत्रोच्यते।

घटाद्यवयवादीनां समाप्तिर्मन्दताक्रमात्। चिरार्थः कालविरहे कारणानामसन्निधेः ॥६०७॥

मन्दक्रमेण या घटाद्यवयवानां परिनिष्पत्तिः समाप्तिश्चिरार्थः स।

ननु कालमन्तरेण सैव मन्दताक्रमश्च न युक्तः। न(।) साधनासन्निधानमात्रेण तदुपपत्तेः। साधनासन्निधानञ्च सन्निधानकारणाभावात्। सन्निधानकारणाभावोपि तत्कार-णाभावत इत्यनादिरेष हेतुप्रक्रमः। ततो न कालो नाम कश्चित्।

अथ कालबलान्मान्द्यं क्षिप्रता वा प्रवर्तते। कार्याणां हेतुना तत्र किं कृत्यमिति चिन्त्यतां ॥६०८॥

कालः कार्याणां प्रवर्तकः किमत्र कारणानां व्यापारस्य फलं। कारणमन्तरेण न कालः समर्थ इति चेत्। कारणभावाभवाभ्यामेव तर्हि कार्याणामुत्पादः कालस्तु न समर्थः(।)यदि तु कालाभावे कारणानामसामर्थ्यं। युक्तः कालस्य कारणभावः। न चाभावः कालस्य व्यापि-नित्यत्वात्। अथापरापरकालसमवधानापेक्षकारणादुत्पत्तिस्तदेवापरापरकालसमवधानं कुतः। कारणान्तरादिति चेत्। तत एव तर्हि कार्यक्रमः किं कालेन। क्रम एव काल इति चेत्। न(।)सहितासहितभावस्य क्रमत्वात्। स च पदार्थरूप एवेति नापरः कालः। अथादित्यादि-गतिरेव कालः। न (।) आदित्यादिस्वरूपव्यतिरेकेण गत्यभावात्। तच्च स्वरूपं प्रत्यक्षगम्यमेव।

दृष्टतातीतकालत्वं दृश्यता वर्तमानता। भाविता द्रक्ष्यमानत्वमिति कालव्यवस्थितिः ॥६०९॥

**कथन्तर्हि व्यतिरेकप्रत्यययोयं कालोस्य भावस्येति ।**

कायः शिलासुतस्यायं व्यतिरेकगतिर्यथा । कालस्य व्यतिरेकित्वं तथा प्रमितिसङ्गतं ॥६१०॥

**तथा चाह लोकः ।**

कः कालो भवतो जातः सुस्थितत्वादि किन्तव । तत्स्वरूपविशेषस्य प्रश्ने युक्तमिदं वचः ॥६११॥

**तत इदानीमदृश्यमानमतीतमनागतमित्यर्थतत्त्वं । एवमतीतादिदर्शनं योगिनामिति अदृश्यमानदर्शनमिति प्राप्तं । तत्र यदि स्वयमदृश्यमानं पश्यतीत्युच्यते । तदा माता च बन्ध्या चेति प्राप्तं । तस्मादतीतादि पश्यतीति कोर्थः । अन्येनादृश्यमानं पश्यति तद् दृश्यमानतया वर्तमानमेव तावता तदिति न दोषः । अन्यापेक्षया तस्यातीतादित्वं । तस्माद्यत्साक्षात्कृतं तदेवास्तीति नातीतादक्षव्यापारस्तस्य साक्षात्कृतत्वेनास्थितत्वात् ।**

किञ्च तत्कालयोगेन तस्य साक्षात्क्रिया यदा । तदेदानीमसत्त्वेपि तस्यास्तित्वमदुर्घटं ॥६१२॥

**यद्यपीदानीन्तनकालसम्बन्धो नास्ति । तदातनकालवर्तमानतासम्बन्धस्तु साक्षात्कृतोस्त्येव । ततो वर्तमानार्थग्रहणादतीतादिज्ञानस्यास्त्येव सर्व्वाकारपरिच्छेदवतोध्यक्षता । कथन्तर्हि तस्यातीतता । द्रष्टुर्वर्तमानकालसम्बन्धितया ग्रहणात् । अन्यैस्तत्कालसम्बन्धितया वा ग्रहणात् । योगिना च समाधानादुत्थितेनातीतया व्यवहारात् । अद्यैव योगिना दृष्टं कथमतीतमिति चेत् । नैतदस्ति यतः ।**

इदानीन्तनकालत्वं द्रष्टुरेवेति गम्यते । अन्यकालः कथं युक्तो नामान्यस्य विशेषकः ॥६१३॥

**यो हि कर्त्तुः कालः स कथमन्यस्य प्रमेयस्य भवेत् । न खलु कर्कताश्वस्य गोर्युक्ता ।**

**अथ तदा प्रतीयमानः कथमन्यकालः । अन्यकालत्वेन प्रतीतेः । तथाहि ।**

यस्य यद्रूपसम्वित्तिस्तदा तस्यान्यदापि वा । तद्रूपमेव तद्वस्तु कर्त्तृकालो न तस्य तु ॥६१४॥

**कालो हि कर्त्तुर्नार्थस्य कालान्तरविशेषणत्वेन प्रतीयमानं कथं कर्त्तुरन्यकालत्वमनुरुध्यते । कर्त्ता हि पश्चादन्यकालतां प्रतिपद्यते आत्मनः प्रतीयमानन्तु कालान्तरसम्बन्धितया प्रत्येति कथं तस्यान्यथा व्यवस्थापनं । किञ्च । कर्त्तुरपि तदा तत्कालतैव प्रतीयते । पश्चादन्यकालतान्यैव तस्य कर्त्तुस्तत्कालतेत्युक्तं । तस्मात्तत्कालतया प्रतीयते तदिति तथास्तित्वं । मया तु पुनरद्य प्रतिपन्नं तदिति स्मरणव्यवहारमात्रकमेव न परमार्थः । प्रत्यक्षस्यावृत्तेः । तस्मात्सर्व्वाकारेण प्रतीयमानं प्रत्यक्षमेव ।**

**अथापि स्याद् (।) यदि तत्प्रत्यक्षं कथमन्येनागतिः । यस्य हि भावी सुतस्तदनुभूयमानतया दृष्टस्तेनाप्रतीयमानतायां कथमभ्रान्तता । इदानीं योगिनः प्रतिपत्तिर्न सुतवतः ।**

**तदप्यसत् ।**

यथा स दृष्टः शरीरादिकालयुक्तस्तथा तस्य न बाधितत्वं ।
तत्कालयोगस्तु न तेन दृष्टस्तथा प्रती (ता) वपि नास्ति दोषः ॥६१५॥

भाविशरीरादि[1]कालसम्बन्धी हि तेनासौ तस्य पुत्रो दृष्टः। स तथा प्रतीतावपि[2] न बाध्यते। तदापि यद्यप्रतीतिस्ततो बाधनं।

अथ यथा तेनाद्य तद् दृश्यते तथान्येनापि योगीतरेण, कस्माददृष्टिस्तस्येति तदप्रतीत्या बाधनं। तदप्यसारं।

अन्येन दृश्यते दूरे यथान्येनापि किं तथा। अश्वादिकस्य सत्तायामपि सर्व्वैर्न दर्शनं ॥६१६॥
शक्तिरेकस्य यत्रास्ति न परस्यापि तत्र सा। अयोगिनामदृश्यत्वादनागतमिति स्थितिः ॥६१७॥

अथापि स्याद्। यद्यनेन दृश्यते। तथापि तत्स्वरूपेण प्रतीयमानं तदा कथमनागतं।

उपलब्धिर्यतः सत्तानुपलब्धेरभावता। उपलब्धेप्यसत्तायां सत्ता नास्त्येव कस्यचित् ॥६१८॥

नोपलभ्यमानमेवासदित्यतिप्रसङ्गात्। अथ यत्कालं यदुपलभ्यते तदैव तत्सदिति। तदप्ययुक्तं।

पदार्थव्यतिरेकेण न कालः कश्चिदीक्षितः। ग्रीष्मादयः पदार्थास्तु विषया एव केचन ॥६१९॥

न खलु कालः कश्चित् विषयविशेषव्यतिरेकेण उपलभ्यते। शीतादीनामादित्यगतिविशेषाणाञ्च ग्रीष्मादिकालत्वात्। तेषाञ्च उपलभ्यत्वे वर्तमानतैव कथमतीतभाविता।

ग्रीष्मादीनामतीतादिविवेको गम्यते कथं। अन्यैरनुपलब्धश्चेद् द्वयो[3]र्नास्ति विवेकिता॥६२०॥

यद्यपि तदानीमनुपलब्धिस्तथाप्यवर्तमानता तदद्यावर्तमानं[4] किमतीतमथानागतमिति कुतो विवेकः। अत्रोच्यते।

अनुमानं यथावृत्तं तथा तदिति गृह्यतां। प्रत्यक्षमपि तद्वस्तु तथैवेत्यवगच्छति ॥६२१॥

यथा तदनुमानमतीतानागतादित्वेन प्रत्येति तथा प्रत्यक्षमपि तेनानुमानेन समुत्थापितं। नहि तदनुमानोत्थापितं प्रत्यक्षमन्यथा प्रत्येति। तस्माद्यथा यत्प्रतीयते तथा तदस्तीत्यवगम्यतां।

नन्वनुमानोत्थापितत्वं प्रत्यक्षस्य क्रमेण प्रतिपत्त्या भाव्यं तथा चानाद्य(न)न्तवस्तुप्रबन्धप्रतिपत्तेरपरिसमाप्तिरिति कथं सर्वज्ञता। नैतदस्ति।

अत्यन्ताभ्यासतस्तस्य झटित्येव तदर्थवित्। अकस्माद्धूमतोर्वह्निप्रतीतिरिव देहिनां ॥६२२॥

न ह्यभ्याससङ्गतसन्तानानां धूमादग्निप्रतीतिः क्रमव्यपेक्षायोगिनी। ततो न क्रमः[5] प्रतीतिरिति न दोषः।

नन्वनादिवस्तुनः कथं प्रतीतिपरिसमाप्तिः परिसमाप्तौ वा कथमनादिता। नैतदस्ति।

वेदोपि यद्यनादिः स्यात् कथमस्मात्प्रतीतयः। अनादौ प्रतिपत्तीनां समाप्तिर्विद्यते नहि ॥६२३॥

यदि वेदोऽनाद्यनन्तः कथमतः प्रतीतिः। अनाद्यनन्ततया चेन्न समाप्तिरिति न किञ्चित् कर्त्तव्यं। यदि हि वेदादन्यदा[6] न प्रतीतिरासीद्भविष्यति वा न वेदः प्रमाणं।

---

[1] T. ग्रीष्मादिः [2] T. अप्रतीता० [3] T. श्चेद्वयो
[4] T. तदद्यावर्त्तमान [5] T. अक्रमा [6] T. वेदादन्येन

नन्वद्य तावत् प्रतीतिरस्ति । नियोक्ता ममायं वेद इति प्रतीतेः । अन्यदा भवतु मा वा भूत् । तथाप्यसौ प्रवर्तकत्वात्प्रमाणमेव प्रवर्तकाभिधानात् । नैतदस्ति । यद्ययमर्थोऽन्यदास्य न स्यात् इदानीं कुतः । यदि वेदोऽन्यदा नैतदर्थं इत्याशङ्का । इदानीमपि प्रमाणमिति न स्यात् पूर्व्ववत् । अथ पूर्व्वमप्येवमेव । ततः परमपि । ततोपि परमिति न परिसमाप्तिः । तत एकदा सन्देहे परत्राप्यनाश्वास इति न प्रमाणता । अथ पूर्व्वं सामान्यमेकदैव प्रतीयते । तथा सत्यनुमानमेतत् । ततः सर्व्वाकारानुमाने प्रत्यक्षताप्यव्यवहृतैवेति । ततो नाद्यनन्तस्य प्रत्यक्षेणापि वेदनं । तस्मात् च(।)

स्वसन्तानपरिच्छेदे तत्संसर्गि प्रतीयते । तत्संसर्गिप्रतीतौ च परस्यापि प्रतीतितः ।
अनन्तवस्तुविज्ञानमेवं सति न दुर्घटं ॥६२४॥

तस्मादपरिमितिकार्यकारणभावभेदाभ्यासे सकलकार्यभेदभासनं तत्-प्रभावाच्च कारणभेदस्यापीति । अयमुपायाभ्यास उपायः सर्व्वपरिच्छेदस्य(।)अतो दयावान् अवश्यमुपायाभियोगी । वेदस्तु परिज्ञानतोपि स्वर्गापवर्गमात्रवेदने नोपाय इति प्रागेव प्रतिपादितं ।

ननु यदि नामोपायाभ्यासात् समीहितं सर्व्ववेदनं । रागप्रहाणञ्च सम्भवति । तथापि वासनावैगुण्यादन्यथापि अपदिशेदसमाहितावस्थायां । क्षुदादियोगस्तु व्याघातकारी परार्थस्येति न वेदादस्य विशेषः । नैतदस्ति ।

वेदस्य मूलाभावान्न प्रामाण्यं परमार्थतः । नार्थेन सङ्गतिस्तस्य व्यवहारोप्यमूलकः ॥६२५॥

न खल्वनादित्वे वेदस्य प्रथममर्थसम्बन्धपरिग्रहः । व्यवहारस्तु याज्ञिकानाममूलक एव ततोऽन्धपरम्परैव परं । विकल्पार्थप्रतिभासनमपि संकेतबलात् न च तावतार्थप्राप्तिरन्यत्रापि दर्शनादिति प्रतिपादितं । अत्र त्वनुमानमूलता । ततो वासनायामपि न दोषः । किञ्च ।

बुद्धेश्च पाटवाद्धेतोर्वासनातः प्रहीयते । परार्थवृत्तेः खड्गादेर्विशेषोयं महामुनेः ॥६२६॥

पटुप्रबोधस्य सकलमेव सूक्ष्ममपि गुणदोषजातमाभाति । सत्त्वार्थरक्तस्य यदपि इष्टत्वं पीडाकरं[1] ततस्तदभ्यासेन तिरस्करोति । क्षुदादयोपि विपरीतभावनावतामेव भवन्ति नान्यथा । तथाहि ।

यदा जातिस्मरत्वेन पूर्व्वाविष्टम्भसङ्गतिः । तदा देवादिभावेन क्षुद्दैन्यादेरसम्भवः ॥६२७॥

किञ्च ।

त्रिर्भोक्ताभ्यासतः सार्थं[2] द्विर्भुक्तेप्यधिगच्छति । द्विर्भोक्तासकृदेवेति ततः क्षुत्सर्व्वथाऽसती ॥६२८॥

यदि तु वस्तुवृत्तमेवैतत् । अभ्याससाधितं न भवेत् । तस्माद् ।

अभ्यासमूलकाः सर्व्वे गुणदोषाश्च देहिनां । आत्मायत्तः स चाभ्यासो गुणेष्वेव वरं कृतः ॥६२९॥

अत एव चाभ्यासपाटवसङ्गमादेव प्रत्येकबुद्धश्रावकेभ्यो भगवान् विशिष्यते सुगतः । नन्वाचार्येण शासनमुपायत्वेन दुःखप्रशमस्य निर्दिष्टं । तथा चोक्तं । प्रयोगो जगच्छासनाच्छास्तृत्वं । ततः कथमुपायाभ्यासः स्यात् । सत्यमेतत् । किन्तूपायास[3] एव शासनं नापरमित्याह ।

---

[1] T. सत्त्वार्थहितैषिणः किंचिन्मात्रोपि दोषः बाधकः

[2] T.. देयि ब्दग्-तु ग्युर्

[3] T. उपायाभ्यास

**उपायाभ्यास एवायं तादर्थ्याच्छासनं मतं ॥१३९॥**
**निष्पत्तेः प्रथमं भावात् हेतुरुक्तमिदं द्वयं ।**

न खलु मुख्यं शासनमभिमतं किन्तूपायाभ्यास एव । कथं तादर्थ्यात् । भवति हि तदर्थे तच्छब्दः । तद्यथेन्द्रार्था स्थूणेन्द्रशब्दवाच्या । तदर्थत्वं कुतस्ततोभावात् । उपायाभ्यास-बुद्धिपाटवाभ्यां शासनं निवर्तते । कुत एतज्ज्ञायते(।) तदाह । "हेतुरुक्तमिदं द्वयं" । तत्र हेतुरा-शयप्रयोगसम्पत् । आशयो जगद्धितैषिताप्रयोगो जगच्छाशनाच्छास्तृत्वं । हेतुरुक्तमेतदित्यपि कुतः । प्रथममुक्तेरेव नहि मुख्यस्य सुगतत्वे हेतुत्वं । तस्मादुपायाभ्यास एव शासनं नान्यदित्य-वगन्तव्यं । एवमुपायाभ्यासात्सुगतो भवति भगवान् ।

## (५) सुगतत्वात् भगवान् प्रमाणम्

किन्तत्सुगतत्वमित्याह ।

**हेतोः प्रहाणं त्रिगुणं सुगतत्वं अनिश्रयाद् ॥१४०॥**
**दुःखस्य शस्तं नैरात्म्यदृष्टेस्तद्युक्तितोपि वा ।**

"आत्मात्मीयग्रहकृतः स्नेहः संस्कारगोचरो" हेतुः । तस्य हेतोः प्रहाणं त्रिगुणं प्रशस्त-त्वात् अपुनरावृत्तेः निःशेषप्रहाणञ्चेति । प्रहाणमभाव आत्मात्मीयग्रहादेः । तस्याभावस्य दुःखनिःश्रयाभावात् प्रशस्तत्वं । आत्मात्मीयग्रहे तु तीर्थ्यानां दुःखस्य प्रहाणं । हेतोर्दुःख-सङ्गतं । आत्मात्मीयग्रहे हि निःसन्दिग्धं दुःखमास्ते । तदेव प्रहाणं । कुतो नैरात्म्यदर्शनादेव । दर्शनहेयक्लेशप्रहाणं दर्शनादेव । युक्तितो वा । युक्तिरभ्यासो भावना भावनाहेयस्य क्लेशराशेः । अथवा युक्तिर्योगः । परस्परसङ्गताद्वैतं । अद्वैतदृष्टितोपि वा । एकदा पुद्गलनैरात्म्यादथवा धर्म्मनैरात्म्यात् । सर्व्वथानैरात्म्यदर्शनान्न दुःखाश्रयणमिति । एवं तावत्प्रशस्तता गुण एकः । अपुनरावृत्तिगुणस्तु द्वितीयः । कासावपुनरावृत्तिरित्याह ।

**पुनरावृत्तिरित्युक्तौ जन्मदोषसमुद्भवौ ॥१४१॥**
**आत्मदर्शनबीजस्य हानादपुनरागमः ।**

जन्मनः सम्भवो दोषाणां च पुनरावृत्तिः । निर्दोषावस्था रागाद्यभावात् । पुनरनुत्पत्तिश्च जन्माभावः । मोक्षनगरगमनं । दोषभावे जन्मनश्च पुनरावृत्त इत्युच्यते । ते च दोषा आत्म-दर्शनाभावान्न पुनरुत्पद्यन्ते । आत्मदर्शनबीजोद्धरणात् । जन्म च क्लेशाभावात् न सम्भवति । ततो पुनरागमः । "क्लेशकर्म्मोद्भवं जन्मेति" पश्चात्प्रतिपादयिष्यते । आत्मदर्शनाभावाच्च कुतः क्लेश इत्याह ।

आत्मोपकारस्मरणादुपकारिणि रागिता । अपकारस्मृतौ द्वेषो मोह आत्मादिदर्शनं[1] ॥६३०॥

आत्मनि उपकारिण्यपकारिणि च रागद्वेषौ तावात्माभावान्न स्तः । आत्मदर्शनन्तु मोहः । स नैरात्म्यभावात्साक्षादेव निवर्तते । अद्वैतदर्शने तु सुतरामेव रागनिवृत्तिर्विषयाभावात् ।

ननु नैरात्म्यदर्शनं फलं निवर्तकमात्मदर्शनस्य विपरीतत्वादिति चेत् । परस्परं समानं विपरीतत्वं । ततो निर्वात्ततं नैरात्म्यदर्शनेनात्मदर्शनं निवर्तकमपीति नापुनरावृत्ति-स्ततोऽशेषनिवृत्तिरपि नास्त्येव । न चान्यः शेषः पुनरावृत्तेः ।

---

[1] T. आत्मादि०

अत्रैवमुच्यते ।

**तद्भूतभिन्नात्मतयाऽशेषमक्लेशनिर्जरं ॥१४२॥**
**कायवाग्बुद्धिवैगुण्यं मार्गोक्त्यपटुतापि वा ।**

तस्य नैरात्म्यदर्शनस्य सद्भूतत्वात् । विपरीतत्वाच्च । तद्विपरीतत्वादात्मदर्शनस्य । भूतमभूतस्य निवर्तकं वैपरीत्येन वैपरीत्यमात्रं । भिन्नात्मकञ्च । न चात्मदर्शनं भिन्नात्मकं । आत्माभावात् परमार्थतः अभूतत्वादात्मनः । शेषः तर्हि कः पुनः । पुनरावृत्त्यभावात् अपरः । अत्रोच्यते । कायवाग्बुद्धिवैगुण्यं ।

ननु क्लेशकृतस्य क्लेशाभावे कुतः सम्भवः । नाक्लेशनिर्जरमपि वासनामात्रसङ्क्रमात् वृषलीवादवत् । मार्गस्यानेकप्रकारनिरुक्त्यपाटवं । तस्य तर्हि शेषस्य हानं कुतः । नैरात्म्यादपरिहीणस्य नापरः परिहाणिहेतुः । न च यावद्बुद्धिस्तावद्दोषहानं । उक्तेर्वितर्कविचारपुरःसरत्वात् भ्रान्त एव सर्ववित् प्राप्तः । अत्राह ।

**अशेषहानमभ्यासाद् ; उक्त्यादेर्दोषसंक्षयः ॥१४३॥**
**नेत्येके व्यतिरेकोऽस्य सन्दिग्धाव्यभिचार्य्यतः ।**

अभ्यासो हि बुद्धिपाटवकृत(स्त)तो वासना परिहीयत इत्युक्तं । न चोक्तिमात्रेणेष्टः रागादिसाधनोक्तेर्व्यतिरेकस्य विपक्षाभावलक्षणस्य । सन्देहादतोस्य सन्दिग्धव्यतिरेकित्वादगमकत्वं । विकल्पे वा साध्ये वचनं । व्यभिचार्य्यत्यन्ताभ्यासाद्वितर्कमन्तरेणापि वचनवृत्तेः । आवेधसामर्थ्यात् वचनं प्रवर्तत एव । उक्तं च ।

सर्वासवविकल्पस्य नास्त्यध्यक्षाद् विवेकिता । न चास्पष्टावभासित्वादेव शब्दः प्रवर्तते ॥६३१॥
प्रत्यक्षदृष्टेस्तम्भादावपि शब्दप्रवर्तनात् । अयं स्तम्भ इति प्राप्तमन्यथास्याप्रवर्तनं ॥६३२॥
न चास्पष्टावभासित्वमत्र ज्ञानस्य लक्ष्यते । तथान्यत्रापि शब्दानां प्रवृत्तिर्न निवार्यते ॥६३३॥

तस्माद्वचनेपि न दोषवानिति सिद्धं ।

नन्वन्यतः क्षयाभावो दोषाणामिति कथं दोषाभावः । नहि दोषक्षयाभावहेतुर्न दृष्ट इति । नहि दोषक्षयाभावहेतुर्नास्ति[1] वा । अत्रोच्यते । अदृष्टं[2] कथमिव परिकल्प्यते ।

**अक्षयित्वञ्च दोषाणां नित्यत्वादनुपायतः ॥१४४॥**
**उपायस्यापरिज्ञानादिति वा परिकल्पयेत् ।**

न नाम परिकल्पना यथा कथञ्चिदवतरन्ति । अपितु निबन्धनालोचनसोपानपद्धतिसम्भवात् । यद्येते दोषा नित्याः स्युः स्यादक्षयः प्रयत्नेपि । नहि प्रयत्नशतेनापि नित्यं क्षयमुपनेतुं पार्य्यते । अथोपायः क्षये नास्ति नोपलभ्यते । तथाप्यक्षयः । न चैतत् त्रयमपि ।

**हेतुमत्त्वाद्विरुद्धस्य[3] हेतोरभ्यासतः क्षयात् ॥१४५॥**
**हेतुस्वभावज्ञानेन तज्ज्ञानमपि साध्यते ।**

---

[1] T. एव नास्ति वा [2] T. दृष्टं [3] विपक्षस्य

हेतुमतो हि प्रागभावात् न नित्यत्वं। हेतोर्विपक्षस्य यदाभ्यासस्तदा क्षय इति नानुपायता। हेतुविपक्षस्य दोषक्षयोपायत्वात्। नापि तस्यापरिज्ञानं। हेतुस्वभावस्य आत्मात्मीयाकारत्वस्य ज्ञानात्तद्विपरीतविपक्षज्ञानमिति। योहि यद्विपरीतः स तद्विपक्षस्तद्यथा वायोस्तैलं। स्निग्धोष्णत्वात् शीतरुक्षस्य। प्रभावादिविशेषाद्वाह्यं। बाह्यस्याविपक्षेपि। नैरात्म्यदर्शनन्तु आत्मदर्शनविरुद्धमित्यविप्रत्तिपत्तिरेव।

## (६) तायित्वाद् भगवान् प्रमाणम्

यद्यपि सुगतत्वं भगवतस्तथापि स्वार्थसम्पत्तिमात्रकादसौ कथं परेषां प्रमाणं। अविपरीतार्थप्रकाशनेन हि प्रमाणं। न विपरीतस्य। नाप्यप्रकाशनेन। नैतदस्ति। करुणावशादुपायाभ्या(सा)च्च तायिता भगवतः। कस्ताय इत्याह।

**तायः स्वदृष्टमार्गोक्तिर्वैफल्याद्वक्ति नानृतं ॥१४६॥**
**दयालुत्वात् परार्थं च सर्वारम्भाभियोगतः।**

वेदे हि न केनचिद् दृष्टं येन तायसम्भवः। प्रतिभासमात्रकमूलकं। यस्य च सुगतत्वं तस्य नाभिलषणीयमस्ति किञ्चित्। ततो वैफल्यान्नानृतं वक्ति। दयावत्त्वादुपायाभ्यासः परार्थमेव कृतः। ततो न वितथाभिधाने हेतुरस्ति। ततः कारणाभावात् प्रयोजनाभावाच्च न वितथाभिधानं[1]। करुणायोगादाक्षेपाद् अभ्यासेनोत्कर्षस्य नानभिधानमिति[2]। ततस्तायी सुगत इति प्रमाणं। स्वदृष्टस्य मोक्षमार्गस्याप्रकाशनासम्भवात्। ननु स्वदृष्टमार्गोक्तिरिति न तावता तायः। अन्यथा सर्व्वे तीर्थकराः प्रमाणं। स्वदृष्टमार्गोक्तेरथ तेषां मार्ग्गकथनमेव, तन्न भवति। तस्यामार्ग्गत्वात्। अत्रापि तर्हि कथं समाश्वासः। उक्तमत्र नैरात्म्यदृष्टेस्तद्युक्तितोपि वा। युक्तिपरिदृष्टोयं मार्ग्ग इति। तेषान्तु न नैरात्म्यदृष्टिर्नापि युक्तिरिति। न ते प्रमाणं। न च तेषां स्वदृष्टता परस्परविरोधादुपदेशस्य।

### (I) तायः चतुःसत्यप्रकाशनम्

भगवांस्तु(।)

**ततः प्रमाणं[3] तायो वा चतुःसत्यप्रकाशनं ॥१४७॥**

अथवा चतुःसत्यप्रकाशनं तायो नापरं। यद्यपि वे वा न्ते शून्यताप्रकाशनमस्ति। ततोप्यात्मनः[4] सद्भावात् अमार्ग एवासाविति चतुरार्यसत्यदर्शनमेव ताय इत्यसाधारणार्थवचनता भगवत एव। ततः सत्यताभावादयमेव तायी। युक्तिरहितोपि एष मार्गो मातृसंस्कारवदुपशम[5]हेतुरिति नापरानिर्दिष्टो मार्गः। कतमानि तान्यार्यसत्यानि। दुःखं समुदयो निरोधो मार्ग्ग इति। एतन्नाम्नापि भवत्युद्वेगः। यथा मूत्रमार्ग इति न तु वराङ्गमिति। तन्न।

---

[1] T. वितथमभिदध्यात् [2] T. ऽफेन्-पऽि शुग्स्-लस्अ = ाक्षेपबलात्०

[3] तस्मात्० [4] T. तथापि [5] T. उपशम०

# (चत्वारि आर्यसत्यानि)

## (क) दुःखसत्यम्

### (a) संस्कारिणः स्कन्धा दुःखम्

**दुःखं संसारिणः स्कन्धा रागादेः पाटवेक्षणाद् ।**
**अभ्यासाच्च यदृच्छातोऽहेतोर्जन्मविरोधतः ॥१४८॥**

ननु रागोऽभिमतवराङ्गनालिङ्गनाङ्गतया सुखहेतुत्वात्सुखमेव । द्वेषोपि वैरिनिराकरणकारणं सुखस्य (।) मोहस्तु सत्कायदृष्टिलक्षणोऽहंकारमानसमदवर्पहेतुः[1] सुखस्य कारणमिति सुखमेव । रागद्वेषाद्याधारभूताः शरीरादयोपि तथैवेति न दुःखं नामास्ति । यदपि क्षुधादि दुःखं तदपि तृप्तिसुखस्य महतो हेतुः । ततो न दुःखसत्यं नामास्ति इति व्यर्थिकैव भगवतो देशनेति न तायिता । न सम्यगेतत् । यतस्ते ।

संसारवर्त्मसंसर्गपरिश्रान्त्या सुखक्षताः[2] । स्कन्धा एव महादुःखमविद्यात्वन्यथेक्षते ॥६३४॥

यदुक्तं रागादयः सुखहेतव इति । तत्रोच्यते ।

अभ्यासहेतुको रागः सुखञ्च तदनन्तरं । नतु स्वभावतोऽभ्यासभावाभावानुवृत्तितः ॥६३५॥

यदि खलु रागादयो यदृच्छयोत्पद्येरन् । नित्या वा भवेयुः । सुखम्वा तदायुक्तं । यदात्वभ्यासादेव ते तत एव पाटवादिदर्शनात् ततोऽभूतपरिकल्पनमात्रं[3] । ततोऽभ्यासपरित्याग एव ज्यायान् । बालक्रीडाभ्यासवत् । ततो न परमार्थतः सुखं । चित्ताभिरतिलक्षणञ्च सुखं । अभ्यासात्संसारधर्म्मनिवृत्त्या वा वरं[4] तत्त्वाभ्यास एव कुतः । सुखमप्यभ्यासादेवेष्टं । वरमौदासीन्यमेव । एवञ्च सति सकलमेवेदं दुःखपीडितस्य सुखमाभाति । तद्वरं रागादिपीडानुदयो न पुना रागादिसद्भावोऽङ्गनालिङ्गनं ।

विधाय न व्रणं कश्चित् तत्पीडोपशमात् सुखं । पुनर्वाञ्छति सद्बुद्धिरबुद्धिस्तु तथा सति ॥६३६॥
तत्त्वेऽभिरमते बुद्धिर्यदि सा न विकारिणी । ततः सुखमसंक्लिष्टं नित्यमेव प्रवर्तते ॥६३७॥
अतत्त्वेऽभिरतौ चेत् स्यात् निवृत्तौ तत्सुखं कुतः । तत्त्वस्याव्यतिवृत्तौ तु सुखमप्यनिवर्तकं ॥६३८॥

तस्माद्यत्किञ्चित्संसारसुखं तत्सर्वं परमार्थतो दुःखमेव । तथाहि ।

यथा रागादिदुःखस्य सुखहेतुत्वमीक्ष्यते । सुखस्यापि तथा दुःखहेतुत्वमिति गम्यतां ॥६३९॥

यथा खलु क्षुदादिदुःखं तृप्तिसुखस्य हेतुस्तथा सुखमपि व्यपगमेऽत्यन्तदुःखस्य हेतुः । तेन सुखं दुःखहेतुत्वात्सुखमेव तन्न भवति । एवञ्च सति सिद्धमेतत् । "दुःखं संसारिणः स्कन्धा" रागादिपाटवं त्वभ्यासादिति यतश्चाभ्यासादतः । पूर्व्वपूर्व्वसजातीयतथाभूतकारणहेतुकमिति संसारित्वमपि सिद्धं ।

ननु नाभ्यासाद्रागोदयोऽपि तु यथाकथंचिदेवान्यतो वा हेतोस्ततः पारमार्थिका एवामी सुखादयः । ततो न दुःखं संसारिणः स्कन्धाः (।) यथा वा सुखादयोऽभ्यासात् तथा दुःखादयोपि न

---

[1] T. द्रेगस्-पऽि-ग्र्यु [2] T. परिश्रान्त्या सुखक्षताः
[3] T. परिकल्पनामात्रं [4] T. वा वरं

परमार्थत इति सुखमेव संसारिणः स्कन्धा इति। नैतदपि साधीयो नयवृष्ट्याऽतोऽहेतोर्न जन्म युक्तमाकाशादेरिव। न चान्यहेतुकाः सुखादयोऽभ्यासात्पाटवयोगात्। न चापि दुःखं कश्चिदभ्यस्यति येन दुःखमाभ्यासिकं भवेत्। अपि तु।

सुखादयो यदाभ्यासात् प्रवृत्तोपचयात्मकाः। तदभावे भवेद् दुःखं दुःखाभ्यासस्तु न क्वचित् ॥६४०॥

न खलु दुःखं ममास्त्विति कश्चिदभ्यस्यति। सुखार्थितया सकलस्य सकल एव प्रवृत्तेः। ततः सुखं प्रयत्नसाध्यं। दुःखं तु तदभावात् प्रकृत्यैव नतु विपर्ययः। ततो दुःखमपि सुखाभ्यासेनैव कृतं ततः सुखमेव निवर्तयितव्यं। परमार्थतस्तु। दुःखमपि नास्त्येव। तदपि तत्रोत्त्रासभावनात एव। ततस्तत्रोत्त्रासभावनातो दुःखं(।)ततस्तदभावात् तत्रैव दुःखेऽदुःखा सुखे वा सुखबुद्धिः, न तु परमार्थतः। तस्मात्सुखं भावनानीतं दुःखहेतुरेव। यदि तन्न स्यात् दुःखमपि न भवेदेव। सुताभिष्वङ्गिणः पुत्रमरणे दुःखसम्भवः। सुतजन्मनि तस्यैव सुखं। न परमार्थतः।

प्रार्थनीययोः वियोगस्तु कस्यचित् नास्ति शाश्वतः।
सुखं संसारिभिः सर्वं दुःखायैव त्रिवर्द्धयते ॥६४१॥
दुःखं सम्बद्धर्य सम्बद्धर्य सुखप्राप्तिर्न युक्तिभाक्। प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरं॥६४२॥
अथैवमेव सकलं सुखमन्यत्र विद्यते। नरकादिदशा दुःखपरिहारः कथं मतः ॥६४३॥
नारकादपि किं दुःखाद्विद्यते न सुखोदयः। महतोपि यतो दुःखादन्यदुःखेपि सत्सुखं ॥६४४॥

अथवा दुःखमिह संस्कारदुःखतालक्षणं सुखमपि तद्विपर्ययावात्मादिलक्षणं। तन्न(।) परामर्थतोपि त्वभ्यासात् तथा तथात्मादिव्यवस्थापनात्। तन्मूलकाश्च रागादयः(।)तत एवाभ्यासान्नान्यथा। परमार्थस्य हेतोरभावादभ्यासोपि यदि न हेतुरहेतुता न चाहेतोर्जन्येति युक्तम्।

## (b) रागादीनां वातादिदोषजत्वनिरासः

अथापि स्यात्(।)नाभ्यासजा रागादयः किन्तु वातादिजाः। तथा हि वातप्रकृतेर्मोहः(।)पित्तप्रकृतेर्द्वेषः। कफप्रकृते राग इति। मूलदोषवदारोपि दोषो वातादिज एवेर्ष्यादिकः(।)वातादयश्च परमार्थत एव सन्ति ततः करणादुत्पत्तेः पारमार्थिका रागादयः। तदप्यसत्।

**व्यभिचारान्न वातादिधर्म्मः प्रकृतिसङ्कराद् (।)**
**अदोषश्चेत् तदन्योपि धर्म्मः किन्तस्य नेक्ष्यते ॥१४८॥**

योहि यस्य हेतुः स तन्न व्यभिचरति। धूम इवाग्निं। यदि महामोहादयो वातादिधर्म्माः ततस्तद्व्यभिचारिणो न स्युः। न चैवम्(।)अतो विपर्ययः। अथ वातप्रकृतेरन्यापि रागजनिका प्रकृतिरस्ति। द्वेषजनिका च। ततो रागद्वेषौ(।)तेन प्रकृतिसंकरान्न व्यभिचारः। तदप्यसत्।

धर्मस्तस्य तदन्योपि नास्ति किं हेतुसम्भवे। कार्य्यं तस्य न चेदस्ति हेतोर्भावगतिः कुतः ॥६४५॥
तदेव यदि तत्कार्यमन्यत् कार्यं कुतो भवेत्। तत एवेति चेदन्यत् कस्मात् तद्भावतो न तत्।
अन्यतो यदि तत्कार्यं सैवेयं व्यभिचारिता ॥६४६॥

तस्माद् यदि वातादिधर्म्माव्यभिचारो न स्यात् । अन्यप्रकृतेरपि तत्प्रकृतिकल्पनायां कार्यमपि कल्पनीयं । कार्यमदृष्टं न कल्प्यत इति प्रकृत्यन्तरमपि न कल्पनीयं । यथा कार्य्यतः कारणपरिकल्पना तथाऽप्रतिबद्धसामर्थ्यात् कारणतः कार्यस्यापि । अथाऽप्रतिबद्धसामान्यकारणं नास्ति । दृष्टमपि कारणाभावेन कार्यं स्यात् । तस्य तत् कारणमेव वा मा भूत् । किञ्च ।

कारणं दृष्टमुत्सृज्य यद्यदृष्टस्य कल्पना । कफस्य रागहेतुत्व न स्यादन्यः प्रकल्प्यतां ॥६४७॥

अथापि स्यात् । यो य एव दृश्यते स स एव रागादेर्हेतुः । ननु सर्वतो दृश्यते रागादिस्तत् किं सर्वो हेतुः । एवमेतदेवमेव दृष्टत्वादिति चेत् । असदेतद् यतः ।

न सर्वधर्म्मः सर्वेषां समरागप्रसङ्गतः ।
रूपादिवददोषश्चेत् तुल्यं तत्रापि चोदनं ॥१४९॥
आधिपत्यं विशिष्टानां यदि तत्र न कर्म्मणां ।

सर्वधर्म्मत्वेहि रागादीनां सर्वस्य प्राणिनः केनचिद् भवितव्यं । ततो य एव कश्चित् कफादिषु सम्भवी स एव रागाद्याश्रय इति समरागादिप्रसङ्ग । इत्याह ।

सर्वप्रकृतिधर्म्मत्वे रागादीनां समीहिते । अशक्ताप्रकृतिर्नास्ति कुतः कार्यासमानता ॥६४८॥

यदा हि रागादयः सकलप्रकृतिभाविन इष्यंते । तदा कफादिप्रकृतिस्तदुत्कर्षापकर्षेपि रागादिहेतुरिति समरागादिता निवारयितुमशक्या ।

अथ सर्वप्रकृतित्वेपि विशेषान्तरस्य भावात् न समरागता(।)तदा तर्हि सविशेषः सर्वहेतुर्न भवतीति न सर्वधर्म्मः । अथापि सकलकफादिप्रकृतिहेतुत्वात् सर्व्वधर्म्मा रागादयः । तेषामेवावान्तरपरिणतिविशेषात् न समरागादिता । तदपि यत्किञ्चित् । यतः ।

यथा यः परिणामस्य विशेष उपलभ्यते । तस्यापि व्यभिचारित्वमिति सम्यग्विदर्शितं ॥६४९॥

योहि परिणतिविशेषो यतो हेतो रागादिहेतुरुपलब्धः । स एव यदा द्वेषादिहेतुरपीति व्यभिचारस्तदा सर्व्वधर्मप्रतिपादने सकलविशेषहेतुतापि प्रतिपादिता । सकलरागादिविशेषाणामिति समरागादिता परिस्फुटैव । ततः परिणतिविशेषादित्ययुक्तो हेतुः।[१] तस्यापि सकलरा(गा)दिविशेषहेतुत्वात् ।

अथ कार्यविशेष उन्नीयमानः परिणतिविशेषो दृष्ट एव रागाद्यसङ्करहेतुः (।) तदप्ययुक्तं । यतः ।

अदृष्टवह्निदर्धूमो यः स न स्यादग्निहेतुकः । प्रदेशस्यैव कश्चित् स विशेषो धूमकारणं ॥६५०॥
बह्निप्रदेशे धूमश्चेत् न विशेषोऽपरस्य च । ततो विशेषरहितान्न धूमोऽन्यत्र सम्भवी ॥६५१॥

यद्यदृष्टेरपि सर्वदा विशेषः कार्यदर्शनमात्रकात् परिकल्प्यते । सर्वत्र तर्हि प्रतिनियतकार्यकारणभावो विशीर्यते । अथ तत्र विशेषपरिकल्पना न क्रियते । दृष्टस्य वह्नेः परिकल्पनेन बाधनात् । अत्रापि तर्हि दृष्टोऽभ्यासः परिकल्प्यतां । न परिणतिविशेष परिकल्पना युक्ता ।

---

[१] विषयस्य तुल्यत्वात् स व्यापिस्पर्शस्तेनार्थः—बहिः

ननु भूतहेतुका रूपादयः इष्यन्ते। अथ भूतविशेषे विशिष्यन्ते एतदपि भवत एव चोद्यं नास्माकं। कर्म्माधिपत्यस्य विशेषहेतुत्वात्। अन्यथा तेषामपि पक्षीकरणात्। न तैरनेकान्तः।

विशेषेपि च दोषाणामविशेषाद् असिद्धता।
न विकाराद्विकारेण सर्वेषां न च सर्वजाः ॥१५१॥
कारणे वर्त्तमाने च कार्यहानिर्न युज्यते।
तापादिष्विव रागादेर्विकारोपि सुखादिजः ॥१५२॥

यदुक्तं अन्यहेतुसद्भावेपि यदन्यकार्यदर्शनं तस्य विशेषसद्भावात् अदृष्टविशेष-कल्पनापि (।) अत्रोच्यते। भवतु नाम कार्यान्तरं विशेषोन्यस्तत्रेति। यदा तु पुनः फलोत्कर्षस्तदा हेतूत्कर्षात् कार्यस्योत्कर्षः कथं निवार्यः। तत्रापि तदन्यस्य विशेषस्यभावादिति चेत्। एवं तर्हि स विशेषः कारणं न भवतीति कार्यकारणग्रहणं कुतः। न च दृश्यस्यादृष्टविशेषता युक्ता। तस्मात्।

तद्विशेषात् विशेषस्य ग्रहणे कार्यताग्रहः। ततश्चेन्न विशेषोस्ति कुतः कार्यादिताग्रहः ॥६५२॥

ननु विशेषादित्यसिद्धो हेतुः। पित्तोत्कर्षे तद्दुःखपीडितस्य द्वेषोत्कर्षात् नास्त्यसिद्धता। सर्वेषामेव कफादीनामुत्कर्षपीडया द्वेषसम्भवात्। न भवत्यपि प्रकृत्यामन्दद्वेषस्येति चेत्। पित्तोद्रेकेपि समानमेतदित्यवाच्यं। अथ सर्वजत्वं[1] तदपि न युक्तं। न च सर्वजा इत्युक्तत्वात्।

किञ्च यदि नामापरो विशेषो नास्ति। तथापि तद्विशेषकृतविशेषो माभूत्कार्यस्य तु हानिः कुतः। यतः। कारणवृद्धौ कार्यस्य वृद्धिरेव युक्ता न हानिः। अन्यथा तस्य न कारणत्वमित्युक्तं यथा तापादयः पित्तादिवृद्धौ वृद्धिमन्तः।

ननु रागस्य वृद्धिर्बृद्धच[2]द्रव्योपयोगे कफसद्भावादुपलभ्यत एव। नैतदस्ति। द्वेषस्यैव व्याधिपीडया भावात्। सुखादिजो हि रागादिर्न कफादिभावी। सुखञ्च कस्यचित् कथञ्चिदुपलब्धमान्तरवासनाप्रबोधात्। ततो न रागादय दोषेभ्य इति युक्तं।

ननु यद्यपि श्लेष्मोत्कर्षे न रागः। तथापि न तावता हेतुरसौ वैषम्यजदुःखप्रतिबद्धशक्तिकत्वात्। न च योऽन्यप्रतिबन्धेन न जनयति। स न हेतुः। सर्वस्यैवाहेतुत्व प्रसङ्गात्। अत्राप्युच्यते॥

वैषम्यजेन दुःखेन रागस्यानुद्भवो यदि।
वाच्यं केनोद्भवः साम्यान् मदवृद्धिः स्मरस्ततः ॥१५३॥

रागी विषमदोषोपि दृष्टः साम्येपि नापरः।
क्षयादसृक्स्रुतोप्यन्ये नैकस्त्रीनियतो मदः ॥१५४॥

ते नैकस्यां न तीव्रः स्यात् अङ्गरूपाद्यपीति चेत्।
न सर्वेषामनेकान्तान्न चाप्यनियतो भवेत् ॥१५५॥

---

[1] T. — सर्वजत्व [2] — सस्. बृशुन्. पो. सो

**अगुणग्राहिणोपि स्यादङ्गं सोपि गुणग्रहः ।**
**यदि सर्वो गुणग्राही स्याद्धेतोरविशेषतः ॥१५६॥**
**यदवस्थो मतो रागी न द्वेषी स्याच्च तादृशः ।**
**तयोरसमरूपत्वात् नियमश्चात्र नेक्ष्यते ॥१५७॥**

**यदि कफादिसाम्याद्विरुद्धव्याध्यसम्भवे मदस्य शुक्रापरनाम्नोऽभिवृद्धिस्ततः स्मरो-रागापरव्यपदेशभागी[1] । एवं सति विषमदोषः सुरतक्षतजोऽत्यन्तस्त्रीसेवापरो रागी न स्यात् शुक्रक्षयतः । शुक्रस्य सर्वस्त्रीषु साधारणत्वात् नैकस्त्रीनियता रागिता भवेत् । तेन समानमदभावात् एकस्यां तीव्रता रागस्य न स्यात् ॥**

**अथ विषयस्यापि कारणत्वं स्त्रियः । तद्रूपादिविशेषाविशेषो यतो रूपाद्यपि कारण-मेव । तथाहि**

रूपातिशयपाशेन विवशीकृतमानसाः । स्वां योषितं तिरस्कृत्य कामिनो योषिदन्तरे ॥६५३॥
कदाचिदुपचारस्य हेतुना रागितां प्रति । न मदः केवलो रागकारणं नियमस्ततः ॥६५४॥

**तस्मादेकस्यां तीव्रतासहकारिसद्भावादपरत्र न तथेति न दोषः । नैतदपि साधीयो यतः ।**

सर्वत्र व्यभिचारस्य दर्शनान्नैव हेतुता । रूपादिकस्य रूपेण हीनायामपि रागतः ॥६५५॥
उपचारस्य भावाच्चेत् रूपं तर्हि न कारणं । उपचारविहीनायामपि रूपस्य सम्भवात् ॥६५६॥
रागस्तदुपचारोपि रागहेतुर्न युज्यते । द्वयेनापि वियुक्तायां क्वचिद्रागस्य दर्शनात् ॥६५७॥
न सर्वहेतुः सर्वेषां समरागप्रसङ्गतः ।

**अथानियतहेतुत्वमेवेष्यते । तदप्ययुक्तं । न चाप्यनियतस्ततो भवतीति युक्तं । एकस्यां नियतो रागो रूपग्रहणलालसस्य अतर्कितोपनतायां विरूपायां रागपीडितस्य न प्रवर्तकः स्यात् । किञ्च । मदस्य रागहेतुत्वेऽगुणग्राहिणोपि रागो भवेत् । अथ गुणग्रहणमपि अङ्गं । तथा सति सर्वो गुणग्राही प्रसङ्गः । सर्वस्य गुणहेतोर्भावात् । अथ गुणभावमात्रान्न गुणग्रहणं । कुतस्तर्हि गुणग्रहणं । यदि निर्विषयं गुणग्रहणं अनादिवासनात इत्यभ्यासादेव रागादय इति प्राप्तं । अपि च यस्यामवस्थायामवस्थितस्य रागस्तदवस्थस्य द्वेषो न स्यात् । रागद्वेषयोर-समत्वेन विरुद्धप्रकृतित्वात् । न च तद्विरुद्धप्रकृतौ व्यवस्थितस्य तद् भवति । अथ न भवत्येव तदप्ययुक्तं । नियमश्चात्र नेक्ष्यते ।**

**अथवा । यदि द्वयोरपि सा प्रकृतिस्तदा द्वयोरपि समानताप्रसङ्गः । एवमेवेति चेत् । न(।)एतन्नियमस्यादृष्टेः । न ह्यत्र समानकालतानियमेक्षणं । अथ यथा पित्तप्रकृत्यवस्थितस्य स्वेदादयः कदाचित् न सर्व्वदा । तथा रागादयोपीति । तदसत् ।**

तेजः संसर्गजः स्वेदः तदभावे भवेन्न सः ॥६५८॥
रागादीनान्तु रूपादिकारणादपरं न तत् । तद्भावे हेतुसाकल्याद्रागाद्यैर्नास्ति नास्तिता ॥६५९॥

**अथान्तरोपकारकृतवासनासमागमतो नियमविपर्ययस्तथा सति वासनैव रागादिकारणं । रागस्याप्युपकारभावनाभावात् । अथापि स्यात् । यस्यापि वासनाभेदादुत्पद्यन्ते रागादयः । तस्यापि कथमयं न दोष इत्याह ।**

---

[1] T. ततो राग उत्पद्यते

**स्वजातिवासनाभेदप्रतिबद्धप्रवृत्तयः ॥ १५८ ॥**
**यस्य रागादयस्तस्य नैते दोषाः प्रसङ्गिनः ।**

रागादयो हि यदा वासनाबलाद् भवंति तदा यस्य यत्र जन्मान्तरसङ्गता वासना तत्रैव तस्य प्रबोधः कथञ्चित् कदाचित् केनचित् हेतुनेति । वासनानियमे रूपादीनां रूपाद्यपेक्षिता नास्तीति न प्राक्तनदोषावकाशः ।

## (c) रागादीनां भूतधर्मत्वनिरासः

मा भूवन् वातादिधर्म्मा रागादयो भूतधर्मा भविष्यन्तीत्याह ।

**एतेन भूतधर्मत्वं निषिद्धं निश्रयस्य च ॥१५९॥**
**निषेधान्न पृथिव्यादिनिश्रिता धवलादयः ।**

य आह भूतानां पृथिव्यादीनां एते धर्म्मास्तथाहि । पृथिव्यम्बुभूयस्त्वे रागोऽनलवाय्वोर्द्वेषः । अब्वाय्वोर्मोह इति । तदपि निषिद्धं । सर्वत्रानैकान्तात् । तथा चोक्तं । यदवस्थो मतो रागीत्यादि(।)आश्रयाश्रयिभावश्च निषिद्धः । अनाश्रयात्सदसतोरित्यादिना ।

ननु यथा धवलादयो महाभूतनिश्रिताः तथा रागादयोपि । तदाह् । न पृथिव्यादिनिश्रिताः धवलादयः । यदि पृथिव्यादिनिश्रिताः स्युः । तदा भूतेभ्यो रूपादिव्यतिरेकाभ्युपगमो भूतमात्राभ्युपगमं बाधते । नहि भूतमात्राभ्युपगमे आश्रयाश्रयिभावः । यदि भूताश्रितं ज्ञानं तदा तत्त्वबहुत्वप्रसङ्गः । अव्यतिरेके भूतानामेकतैव विज्ञानाव्यतिरेकात् ।

ननु भूतान्युपादाय रूपादय इत्युपगमे आश्रयप्रतिषेधविरोधः । नाश्रयार्थं उपादायार्थोपि तु हेत्वर्थः । तदाह ।

**तदुपादाय शब्दश्च हेत्वर्थः स्वाश्रयेण च ॥१६०॥**
**अविनिर्भागवर्त्तित्वाद् आश्रयाऽयुक्तमन्यथा ।**

नाश्रयार्थं उपादायार्थः । अपि तु हेत्वर्थस्तथाहि ।

हेतोः समानकालत्वं न कार्येणावगम्यते । समानकालयोर्नास्ति कार्यतादिविनिश्चयः ॥६६०॥

ततो वाधाराधेयभावः ।

भवतु वा समानकालयोरेवाश्रयाश्रयिभावः कार्यकारणभावो वा । तथापि स्वाश्रयेणाविनिर्भागवर्तनात् । तथाहि ।

आश्रयाश्रयिभावेन रूपादेर्नियमो यदि । अविनिर्भागवर्त्तित्वमेतेषामिति गृह्यतां ॥६६१॥

यदि तयोराधाराधेयभावस्तदाधेयाभावे तदाधारस्य विनाशोऽविनाशे वा पश्चादिव पूर्वमपि नाधारता । ततोऽविनिर्भागवर्त्ती रागादिरपि प्राप्तः । न च रूपादिव्यतिरेकेण महाभूतरूपं नामास्तीति पराभ्युपगमेनैव इदमुच्यते । न च रागादीनामविनिर्भागवृत्तिः कस्यचित्कदाचिद् भावात् ।

**मदादिशक्तेरिव चेत् विनिर्भागो न वस्तुनः ॥१६१॥**
**शक्तिरर्थान्तरं वस्तु नश्येन्नाश्रितमाश्रये ।**

**तिष्ठत्यविकले याति, तत्तुल्यं चेत् न भेदतः ॥१६२॥**
**भूचेतनयोर्भिन्नप्रतिभासावबोधतः ।**

**सुरासवादेर्द्रव्यस्याश्रिता मदशक्तिर्विनिर्भागेन[1] वर्तते । स्थिते द्रव्ये निवृत्तेः पश्चाच्च भावात् । तथाहि । कषायमधुरद्रव्यसम्भवे प्रागभाविनी शक्तिराविर्भवत्येव । पुनरप्यपगच्छति ।**

न चानाश्रितरूपासौ तथात्त्वेन प्रतीतितः । रागादयोपि तद्वत्स्युर्देहमेव समाश्रिताः ॥६६२॥

**तदप्ययुक्तं । शक्तेरर्थान्तरत्वाभावान्नहि शक्तिरर्थान्तरभूता भूताद् द्रव्यस्य शक्तिरिति व्यतिरेकव्यपदेशो व्यपदेशिवद्भावाच्छिलापुत्रकशरीरमित्यादिवत् । यथा चैवं तथा प्रतिपादयिष्यते ।**

**ननु पावकादीनां यदि नास्ति शक्तिरन्या तदा मन्त्रतन्त्रादीनां कस्य प्रतिबन्धो न तावत्पुरुषस्यान्यत्र दाहात् । शक्तिप्रतिषेधे तु तस्याप्रतिषेध इत्यन्यस्य दाहः । तदसत् ।**

शक्तेरपि निषेधेऽयं विभागः कथमाप्यते । नहि मापि क्वचिन्नाग्नि क्वचिदस्तीति शक्यते ॥६६३॥
बहुत्वे ननु शक्तीनां विभागः किमसम्भवी । शक्तिस्तद्दाहिका नास्ति तदन्या तु न वार्यते ॥६६४॥
दाह्यस्यैवाथवान्यत्वं क्रियते तो न दह्यते । अन्येन दह्यतेऽन्यत्र शक्तरेप्रतिबेधतः ॥६६५॥

**न सदेतत् ।**

तावत्यः शक्तयस्तस्य भावस्य कुत आगताः[2] ।
ताभिः किम्वास्य कर्त्तव्यं येन तासामपेक्षणं ॥६६६॥
नासावपेक्षते भावः कारणादेव तास्तथा । कार्य्याणि च विभागेन न स्युस्त श्चेन्न शक्तयः ॥६६७॥
नहि शक्त्य(।) वहुत्वेन कार्य्यं नानात्वसम्भवः । दहनादिविभागेन दहनादेर्यदीक्षते ॥६६८॥
तन्न स्यादेकरूपस्य वह्न्यादेः सम्भवो न वा । सम्भवे सर्वदाह्यत्वं तदभावे न कस्यचित् ॥६६९॥
एकस्य भावाभावौ च संस्तो न युगपत् क्वचित् ।

**तदपि न परिहर्त्तव्यं ।[3] यतः ।**

यथैककारणादेव नानाशक्तिर्भवत्यसौ । नानाकार्योपि किं नेष्टः किमदृष्टं प्रकल्प्यते ॥६७०॥
कार्य्यनानात्वदृष्टेश्च नानाशक्तिप्रकल्पना । यदि तान्येव सन्त्वत्र स्वभावनियमोऽस्य सः ॥६७१॥
जातः स्वकरणादीदृग् येन मन्त्रादिसंयुतः । विभागात कार्य्यकरणे समर्थः शक्तयो वृथा ॥६७२॥
वंचकः सर्वदहनो विनामन्त्रेण कारणात् । स एव कस्यचिद्दाहसमर्थो मन्त्रसयुतः ॥६७३॥
दाह्यद्रव्यस्य तद्रूपं येन तेन न दह्यते । अन्येन दह्यते तस्य स्वहेतोरेव सम्भवात् ॥६७४॥
इति शक्तिनिषेधेन नाश्रयाश्रयिसम्भवः(।) ततः स दृष्टो दृष्टान्तः प्रकृतस्य न साधकः ॥६७५॥

**अतो वस्त्वेव तन् नश्यति । न त्वाश्रितं तिष्ठत्यविकल एवाश्रयेऽपगच्छति ।**

**अथापि स्याद् (।) अत्रापि भूतचेतनयोरेवमेव भवेत् । अत्र परिहारः । भूतचेतेनयोर्भेदात् । न खलु चेतनानां शक्तिवद्भूताव्यतिरेकः । एतदेव कुत इति चेत् । भिन्नप्रतिभासावबोधात् ।**

[1] T. ०क्तिरविनिर्भागेन [2] T. आगताः [3] T. तदपि परिहर्त्तव्यम्

[1]प्रतिभासभेदः सर्व्वत्र वस्तुभेदस्य साधकः। भेदसिद्धेरुपायो हि न कश्चित्[2] पर ईक्ष्यते ॥७७६॥

**भिन्नेन्द्रियभिन्नप्रतिपत्तृग्राह्यत्वेपि यद्यभेदावभासिता।**

**तदा तत् कथमेवं प्रतिपत्तिर्हि भेदिका प्रतिभासरूपा न प्रतिपत्तिकारणभेदः। अथ कारणभेदात् प्रतिपत्तेरपि भेदः। स एव तर्हि प्रतिपत्तिभेदो भेदको व्यर्थकमपरं। तत्र च भिन्नः प्रतिभासोऽन्तःसातादिरूपेण संवेदनं विज्ञानस्य नोष्णादिरूपेण[3] ग्राह्यतयाऽर्थस्य। अथान्तः स्प्रष्टव्यविशेषरूपा एव सुखादयः तेनान्तःसंवेदनरूपा।**

योहि यत्र स्थितो भावः स तथैवानुभूयते। दूरादूरादिभेदेन यथा वृक्षादिवेदनं ॥६७७॥

**अन्तःस्प्रष्टव्यविशेषो हि न दूरं भाति[4]। तेनासावात्मैकदेशतया[5]न्तःशरीरस्य स्थितेर्न बाह्यवृक्षवदनुभूयते। न न्याय एष।**

यदि स्प्रष्टव्य एवासौ तस्य केन प्रवेदनं। अन्येन वेदने भिन्नवेद[6]नत्वं प्रसक्तिमत् ॥७७८॥
अथ स्ववेदनं तस्य न महाभूतरूपता। स्वविद्रूपं किमन्येन[7] तथैव न[8] विभाव्यते ॥७७९॥
उदरान्तर्गततत्त्वाच्चेत् अन्तःस्पर्शोस्तु वेदनं।

**यो ह्यन्तरवयवस्पर्शी तस्य वेदनप्रसङ्गः। बहिरा[9]लिङ्गनस्पर्शोपि सुखरूप एव।**

द्वयोरन्योन्यसंस्पर्शे द्वयोरप्यस्तु वेदनं। पर[10]रूपं परो वेत्ति नात्म[11]रूपं कथं परः ॥७८०॥

**अथ परैः स्पृश्यमानं तदेवात्मरूपं सुखीभवति। तथा सति परेण तथा प्रतिपत्तिप्रसङ्गः। परस्य सर्व्वाकारप्रतिपत्तेरिति चेत्। यद्येकोसावर्थः कथं न सर्वाकारप्रतिपत्तिः। अथानेकः प्रतिपरमाणु भिद्यते। तथा सति सुखपरमाणुभेदे सुखवद् दुःखे[12] कस्यचित्प्रतिपत्तिः सुखादेः स्यात्। न परसुखस्य लेशोपि विद्यते। स्वयं च प्रतिसंविदितानामेकस्यैव प्रतिपत्तिरिति समानानुभवौ स्त्रीपुंसौ स्यातां। सर्वप्रवेदनेऽनेकपरमाणुप्रवेदनप्रसङ्गः[13]।**

**अथ परस्परसंसर्गो विभागाभावात्। न (।)तद्व्यतिरेकेण संसर्गाभावात्। भावे वा विवेकप्रतिपत्तिरनिवारिता स्यात्। संसर्गाद्वि[14]वेकाप्रतिपत्तिरिति चेत्। नहि तर्हि तेषां स्वरूपप्रतिपत्तिरिति भिन्नाभूतेभ्यश्चेतनाभेदेन भासनात्। अथैक एवावयवी तथा सति परस्यापि तथा प्रतिपत्तिः। अथ परः सर्वात्मना प्रतिपत्तुमशक्तः। न तर्हि तस्य रूपं प्रतीयते। भ्रान्तिरेवैषा भ्रान्तिरप्यन्तःस्प्रष्टव्यविशेषरूपैव। ततः परेण तथा प्रतीयेत। एकं स्प्रष्टव्यमपरं यदि तत्र सुखादिकं। परेणैकप्रतीतिश्चेत् सुखाद्यन्यत(ः)तथा सति। तस्माद्।**

---

[1] T. प्रतिभासभेदः [2] T. कश्चितर [3] T. स्र.व.दङ. ग्रो.व.ल.सोगस. पऽ
[4] T. भवति [5] T. ०वात्मैकदेश० [6] भिन्नज्ञानं—बहिः पाठः
[7] पुरुषान्तरेण पुरुषान्तरस्य—बहिःपाठः [8] T. तथैव न
[9] बहिरपि प्रसज्यते पुरुषान्तरेण पुरुषान्तरस्य स्पर्शविज्ञानं—बहिः
[10] विषयान्यत्त्वात् परत्वं—बहिः [11] T. सन्तानान्तरस्य—बहिः पंक्तेः।
[12] T. सुखबहुत्वे कस्य० [13] T. नेन परमाणु प्र०
[14] संसर्गसंसर्गात्—बहिः

भूतचेतनयोर्भिन्नप्रतिभासावबोधतः । विरुद्धधर्म्माभ्यासेन[१] स्वभावस्यास्ति भिन्नता ॥६८१॥
परेण स्पृश्यमानस्य सुखभावो यदीष्यते । वस्तुत्वेनैव किन्तस्य स्पृश्यमानस्य सा स्थितिः ॥६८२॥
कान्तत्वे न स हेतुश्चेत् कान्तत्वं किमिद मतं । स्वभागधेयतः कश्चित् कस्यचित् कान्ततः परः[३]॥६८३॥
कर्म्मैव भाग्यशब्देन व्यवहारपथ[२]स्थितं । उपकाराविशेषस्तु नेह जन्मनि दृश्यते ॥६८४॥
एवमव्यतिरेकेपि चेतनाया व्यवस्थितः । परलोकः परेणात्र बहुना जल्पितेन किं ॥६८५॥
यदि वा कान्तता[३] तस्य करणादुपजायते । परेणापि प्रतीयेत न चेत् विज्ञानमेव तत् ॥६८६॥
प्रतिपत्तृशरीरान्तर्गता साथ प्रकल्प्यते । बहिःप्रतीयमानासौ शरीरान्तर्गता कथं ॥६८७॥
रूपावभासनस्यापि परेणाप्रतिपत्तितः । स्वसंवेदनरूपस्य भूतेभ्यः स्याद् विभिन्नता ॥६८८॥

सविकल्पकेऽन्यत्र[४] वा[५] परेण न प्रतीयते । ततः स्वसम्वेदनं ज्ञानमेव तत् ।

अथ परशरीरान्तर्गतमिति न वेद्यते । परशरीरस्याप्यवेदनप्रसङ्गः ।

शरीरान्तर्गतत्वे च केवलस्य कथं गतिः । अन्धकारस्थितस्यान्यविषयस्य विकल्पने ॥६८९॥
विकल्पेन विना वेत्ति शरीरं चेतनं विना । सहोपलम्भनियमो नात एकत्वसाधकः ॥६९०॥

अथापि स्यात् (।)भवतु भिन्नं तत् । अथापि देह एव तस्य कारणमतः सुखादयो न वासनाप्रतिबद्धजन्मानः ततः पारमार्थिकाः । देहोपि शुक्रादेरतो न परलोकः । इहलोक परम्परयैव परिसमाप्तेरतो न संसारित्वमित्याह ।

**आविकारश्च कायस्य तुल्यरूपं भवेन्मनः ॥१६३॥**
**रूपादिवद् विकल्पस्य कैवार्थपरतंत्रता ।**

यदा हि कायः कारणं स्वभावो रागादीनां तदा देहविकारात्[६] प्राक् तुल्यरूपमेव मनो भवेत् । कारणस्य स्वभावस्य चाश्रयस्य तुल्यत्वात् । अन्यथाश्रयाश्रयिभावस्य कार्यकारण-भावस्य चायोगात्[७] । अन्वयव्यतिरेकाननुविधानात् । नहि शरीरगता रूपादयो देहसमानतायाम-समानाः । अथापरापरविषयसमवधानाभिधीयमानविशेषतायामदोषः । तदपि न युक्तं । मनोविज्ञानस्य सुखादेश्च कैवार्थपरतन्त्रता । वासनाप्रबोधमात्रत उत्पत्तेरित्युक्तं ।

**अनपेक्ष्य यदा कायं वासनाबोधकारणं ॥१६४॥**
**ज्ञानं स्यात्[८]कस्यचित् किञ्चित् कदाचित्[९] तेन किञ्चन ।**

कायकारणत्वे हि पूर्वको दोषः[१०]। यदा तु पुनः कायकारणमनपेक्ष्य[११] वासना-बोधकारणं किञ्चिदपेक्ष्य ज्ञानं कस्यचित् मनोविज्ञानमभ्युपगम्यते जन्मवत् । तदा तेन कारणेन किञ्चन ज्ञानं स्यादविकृतेपि देहे नतु देहकारणत्वे । तस्माद्विज्ञानादेव विज्ञानं न देहादिति संसारित्वं[१२](।)

हेत्वन्तरमप्याह ।

**अविज्ञानस्य विज्ञानानुपादानाच्च सिध्यति ॥१६५॥**

---

[१] T. धर्मावस्थेन [२] T. विभेदपथ० [३] T. कान्तत्वेन
[४] T. भूतेभ्यः स्याद् विभिन्नता [५] T. रूपावभास्यपि [६] T. देहाविकारात्
[७] T. अन्वयव्यतिरेकाननुविधानात् [८] T. इति न भाटेभाषान्तरे [९] कुतश्चित्—पाठान्तरम्
[१०] T. दोषः प्रसज्यते [११] T. कायमनपेक्ष्य [१२] T. संसारित्वं स्कन्धस्य

**विज्ञानशक्तिसम्बन्धादिष्टश्चेत् सर्ववस्तुनः ।**
**एतत्सांख्य पशोः कोऽन्यः सलज्जो वक्तुमाहृते ॥१६६॥**
**अदृष्टपूर्वमस्तीति तृणाग्रे करिणां शतं ।**
**यद्रूपं दृश्यतां जातं तद्रूपं प्राङ् न दृश्यते ॥१६७॥**
**शतधा विप्रकीर्णेऽपि हेतौ तद्विद्यते कथं ।**

विज्ञानवैगुण्यावैगुण्याभ्यामुत्तरविज्ञानवैगुण्येतरदर्शनान्नियमेन तद्विकारानुवर्तनात् । विज्ञानोपादानरहिताद्देहान्न विज्ञानमिति[1] सिद्धयति परलोकः । रागादीनाञ्च युगपदुत्पादप्रसङ्गाच्च ।

अथापि स्यात् । यद्यपि विज्ञानादेव विज्ञानं तथापि न परलोकः सिध्यति । सर्वस्य वस्तुनो विज्ञानशक्तियोगात् । न च तथाभूताऽनारब्धकार्या शक्तिः परलोकः । नन्वेतत्सांख्यमतं[2] कुतो भवतः सकलतार्किकचूडारत्नाभिमानिनः[3] सांख्यपशुरेव एवं वक्तुं समीहते, य आगमैकशरणोऽनपत्रपः । सलज्जस्तु, नैवं अदृष्टपूर्वं हि तृणाग्रे करिणां शतं । न सांख्या दन्यस्य वचनगोचरः सत्त्वेन । तथाहि ।

दध्यादीनां हि यद्रूपं प्राक् तददृष्टं न पार्यते । शतधाविप्रकीर्य्यापि हेतुं तत्रास्ति तत्कथं ॥६९१॥
रूपान्तरेण यदि तत्तदेवास्तीति मा रटीः[4] । विज्ञानादन्यरूपस्य भावे तद्विद्यते कथं ॥६९२॥
यदि मात्रादिविज्ञानादुपादानात्तदिष्यते । तस्य संस्कारसादृगुण्यमनुवर्त्त्येत सर्वथा ॥६९३॥
अथापि पुत्रे पित्रादेः[5] संस्कारो यदीष्यते । नानन्तरस्य सर्वत्र संस्कारस्यानुवर्तनं ॥६९४॥

तस्माद्विज्ञानात् स्वसन्तानवर्त्तिनो विज्ञानमिति सिद्धः परलोकः ।

किञ्च ।

**रागाद्यनियमोपूर्वप्रादुर्भावे प्रसज्यते ॥१६८॥**

यदि परलोको न स्यात् तदापूर्वसत्त्वप्रादुर्भावः तथा सति रागादीनां न नियमः स्यात् वीतरागोपि कश्चित् स्यात् । यदा तु जन्मान्तरादागतिस्तदा तृष्णैव कारणं मतः[6] प्राणिनो जन्मनः(।)ततो न जन्मी वीतरागः । रागादिकमन्तरेण जन्माभावात् ।

**भूतात्मतानतिक्रान्तेः सर्वो रा(गा)दिमान् यदि ।**

अथापि स्यात् (।) भूतात्मता[7] रागादिहेतुः सा च नापैति ततः कारणवैकल्याभावात् न रागादिवैकल्यं । यद्येवमत एव हेतोः ।

**सर्वः समानरागः स्यात् भूतातिशयतो न चेत् ॥१६९॥**

तथा हि भवेत्सर्वः समानरागो यदि परस्परं भूतानामतिशयो न स्यात् । अस्ति च[8] ततो न सकलः समानरागः । यद्येवं ।

**भूतानां प्राणिताभेदेप्ययं भेदो यदाश्रयः ।**
**तद्व्रासातिशयव[9]त् तद्भावात् तानि[10] ह्रापयेत् ॥१७०॥**

---

[1] T. न जायते [2] T. न त्वेतत् सांख्यमत [3] T. ०चूडारत्नात्माभिमा०
[4] T. ०ति मारटीः [5] T. मेस्-पोल-सोग्स्प-ऽि
[6] प्रबंधेन—बहिः [7] T. भूतात्मता [8] T. न च नास्ति
[9] रागादिभावात्—बहिः । [10] T. भूतानि रागजनकानि—बहिः

यदुक्तं रागाद्यनियम इत्यत्र परेण भवत्येव वीतरागः पृथिव्यादिसंघातः । अथ प्राणिनो वीतरागता भवेत् कस्यचित् न । प्राणिनो यथाऽप्राणिता न भवेत्[१] तथा वीतरागतापीति चोद्यं यद्येवं । यथा प्राणिता न विशिष्यते, तथा रागितापीति सर्वः समानरागो भवेत् । प्राणितावत् । यदि वा कश्चित्प्राणी कश्चिदन्यथा । तथा रागीतरो वा स्यात् । अथ प्राणिताऽभिन्ना रागादयो भिन्नास्तदा यतः कारणाद् भूतातिशयत्वाद्भेदः तथा निर्ह्रासातिशयमन्तरेऽत्यन्तापचयोपीति वीतरागः स्यात् ।

अथापि स्यात्(।) यद्यपि तदतिशयनिर्ह्रासवत् कारणं । तथापि रागादिहेतोः तुल्यात्मता न क्षीयते । अत्रोच्यते ।

न चेद्भेदेपि रागादिहेतुतुल्यात्मताक्षयः ।
सर्वत्र रागः सदृशः स्याद् हेतोः सदृशात्मनः ।।१७१॥

यदि हि रागादिहेतोर्या समानता सा न हीयते । ततो रागस्य सामान्यमेव हेतुः । सामान्यहेत्वर्थे च रागकार्यस्य समानता सदृशात्मनो हेतोः । कार्यमपि सदृशार्थकमिति युक्तं । यदि तु हेतुसमानत्वे कार्यमसमानं तारतम्ययोगात् । तदा तस्य तत्कार्यमेव न भवेत् । तदन्वयव्यतिरेकानुविधानाभावात् । तस्माद्यत्र तारतम्यं तत्रात्यन्तमभावोपि अपकर्षतारतम्यभावात् धवलादिगुणवत् समानत्वाद्वा न प्रच्यवेत । किं कारणं ।

नहि गोप्रत्ययस्यास्ति समानार्थभुवः क्वचित् ।
तारतम्यं पृथिव्यादौ प्राणितादेरिहापि वा ॥१७२॥

गोप्रत्ययो हि समानात्मनः सम्भवति । अथ प्राणितां प्रति न विशेषः । भूतानां रागादीनपि । विशेषे कश्चिद्…………। तद्रूपव्यावृत्तेरन्यतोपि वा न चासौ तारतम्ययोगी भवति, गौर्गोतरो गोतम इति लोकायत दर्शनापेक्षया पृथिव्यादौ प्राणी प्राणीतरः प्राणितम इति[२] । तस्मात्समानहेतोः समानत्वमपकर्षे त्वत्यन्तमुच्छेदोपि ।

औष्ण्यस्य तारतम्येपि नानुष्णोऽग्निः कदाचन ।
तथेहापीति चेत् नाग्नेरौष्ण्याद्भेदनिषेधतः ॥१७३॥

अस्त्येवेहाग्नेरौष्ण्यस्य तारतम्यं न च सर्वात्मनौष्ण्यमसम्भवि तथापि न रागादीनां तद्वदेव सर्वथा सम्भवाभावो न रागादीनां कायाद् व्यतिरेकात् । नात्रौष्ण्यादग्नेर्भेदः । औष्ण्यस्यैवाग्निव्यपदेशात्[३] यद्यौष्ण्यं न स्यादग्निरेवासौ न भवेत् । न तु रागाद्यभावे भूतमेव[४] तन्न भवति । यदि तु भूतसंघातोऽन्यो धर्मी तस्य धर्म्म औष्ण्यं परिकल्प्यते । तदा तस्य उष्मावस्थायामुच्छेद एवौष्ण्यस्य[५] । अथ ज्वालायाधर्मित्वं परिकल्प्यते । औष्ण्यं धर्मः स च तत्र न विच्छिद्यते तारतम्येपीति, परस्य परिहारः । सोप्ययुक्तः ।।

---

[१] अपकर्षवत् प्रकर्षवच्च–बहिः ।

[२] T. तद्रूपव्यावृत्तेरन्यतःऽपि वा समानात्मनः सम्भवति न चासौ तारतम्ययोगी भवति ग्रोप्रत्ययः गौः गोतरः गोतम इति लोकायतदर्शनापेक्षया पृथिव्यादौ प्राणी प्राणितरः प्राणितम इति वा ।

[३] T. अग्निव्यपदेशात्

[४] T. पृथिव्यादिरेव

[५] T. तदा प्रसंगावस्थायां तत औष्ण्यात् कारणोच्छेद एव

मन्त्रतन्त्रादिसामर्थ्यात् ज्वालौष्ण्येन विना भवेत् ।
मणेर्ज्वाला विनैवौ[1]ष्ण्यं दृश्यते तत् न युक्तिमत् ॥६९५॥
ज्वालाया न च धर्मित्वमौष्ण्यं प्रत्यविमुक्तितः ।
ज्वालादिवर्ण्णसंस्थानं तद्धि नौष्ण्यस्य सम्भवात् ॥६९६॥
न तस्या धर्मिता युक्ता तेन नैतन्निदर्शनं ।

ज्वाला नौष्ण्यं विना नौष्ण्यं ज्वाला विना भवति । तेन न सा धर्मितया युक्ता । न चात्यन्तमवियोगे ज्वालातदौष्ण्ययोर्द्धर्मधर्मिभावः । तेन सविशेषणो हेतुः ।

**तारतम्यानुभविनो यस्यान्यस्य सतो गुणाः ।**
**ते क्वचित् प्रतिहन्यन्ते तद्भेदे धवलादिवत् ॥१७४॥**

यस्यान्यस्य गुणाः सन्तस्तारतम्यमनुभवन्तः (न) ते[2] क्वचित् प्रतिघातवन्तः । यथा घटादिषु[3] धवलादयः । ननु धवलादिरूपव्यतिरेकेण क इवापरः पटादिः । येन तस्यान्यस्य सतो धवलादीनामुच्छेदः । सत्यमेतत् । तथापि स्पृश्यरूपा घटादयो[4] न वर्णविशेषरूपाः[5] । तदभावे पटस्य[6]भावात् । तेनान्यस्येत्ययमर्थः । यस्य सन्तानेनानुवर्तमानस्य य उच्छेदधर्म्माण उदयधर्म्माणश्च ते अत्यन्तमुच्छेदधर्म्माणोपि यथा धवलादय इति वाक्यार्थः ।

अथवानग्नित्वेनुवर्तमाने औष्ण्यस्योदयव्यययोः तारतम्येपि[7] । न चैवं रागादीनामुच्छेदसद्भावात् शक्तेरनुच्छेद इति चेत् । न(।) शक्तेरर्थान्तरत्वात् । न(।) रागादय एव शक्तिः । शक्तेरपि क्वचिदुच्छेददृष्टेः । अत एवाह ।

**रूपादिवत् न नियमस्तेषां भूताविभागतः ।**
**तत्तुल्यश्चेत् न रागादेः सहोत्पत्तिप्रसङ्गतः ॥१७५॥**

न खलु रूपरसादिवदविभागिनो भूतेभ्यो रागादयः तदभावेपि भूतानां भावात्, न तु रूपाद्यभावे । अथ तत्राप्येवमेव । तदप्यसत् । रागादीनां शरीरेण सहोत्पत्तिप्रसङ्गात् । भूतेभ्यो[8] न विशिष्टता[9] । रूपावभासनमपि [10]न च रागादीनां देहसहभाविता सर्वदा । न च महाभूतत्वमात्रवादिनो रूपादीनां भूतेभ्योऽन्यत्वं । तत्त्वबहुत्वप्रसङ्गात्[11] । ततोऽविनिर्भागभागी सहोत्पादः[12] । विषयहेतुकत्वात् ।

---

[1] T. ज्वालाविनैव
[2] T. न ते
[3] T. पटादि०
[4] T. पटादयो
[5] T. वर्णविशेषः
[6] T. पटस्य
[7] T. औष्ण्योदयव्ययता० ।
[8] T. भ्यो न
[9] विभिन्नता—बहिः ।
[10] T. शक्तेरथन्तिरत्वात् त्वन्मते शक्तेर्भेदात् (।) किञ्च शक्तिरपि न भवति । तैलाद्यबीजे
[11] तत्त्वस्य नानात्वप्रसङ्गात—वहिः
[12] चर्वाकि आह—ऐहलौकिकविकल्पो यस्य व्यामोहस्य स परलोके विकल्पान्तरमिच्छति—बहिः···

विषयासन्निधाने कदाचिदभावोपीति चेत् । तन्न ।

**विकल्प्यविषयत्वाच्च विषया न नियामकाः ।**
**सभागहेतुविरहाद्रागादेर्नियमो न वा ॥१७६॥**
**सर्व्वदा सर्वबुद्धीनां जन्म वा हेतुसन्निधेः ।**

न खलु विषयान्वयव्यतिरेकानुविधानप्रसङ्गतत्सन्ताना[1] रागादयः । तदभावेपि भवनानुभवात् । सभागहेतुश्च नेष्यते । ततो न रागादीनां तदभावात्[2] कदाचिदनुत्पत्तिः । ततोऽनियमेनैकैकरागादिसहभावी देहः स्यात् । अथवा सर्व एव रागादयो देहसहभाविनो भवेयुः । सर्वेषां हेतोर्देहस्य सन्निधेः । अथ देहस्य परिणतिविशेष एव तादृशो येन न रागादि-सहभावः । यद्येवं ।

कुतः परिणतिस्तस्य तादृशी येन तु तथा । यतः कुतश्चिदिति चेन्न भवेदपि सर्वदा ॥६९७॥
अदर्शनेन नैवं चेत् न स्यात् कश्चित् सहेतुकः । अनग्नेरपि धूमः स्यात् सर्वतः किन्न सम्भवः ॥६९८॥
तस्य काचित्परिणतिरिति वक्तुं हि शक्यते । अहेतोरपि भावस्य देशादिनियमो भवेत् ॥६९९॥
दृश्यते नियमो नेति वक्तुं तत्रापि शक्यते । दृष्टमात्रपरिष्वङ्गः क्रियते यदि सर्वथा ॥७००॥
दृष्टमद्वैतमेवात्र व्यवहारो विशीर्यते । व्यवहारः परित्यक्तुमशक्यः कल्प्यते यदि ॥७०१॥
परलोकादिकेप्येष व्यवहारोऽन्यथा कथं । व्यवहारोऽनुमानेन सकलः क्रियते यथा ॥७०२॥
परलोकादिकेप्येवमेव तत्त्य[3]ज्यते कथं । न ज्ञानार्थतया भेदो नापि नीलादिताकृतिः ॥७०३॥
न पूर्वापरभावेन प्रत्यक्षेण प्रसिध्यति । ततोऽनुमानतो भेदः सकलो व्यवहारवत् ॥७०४॥
तेनानुमानमुत्सृज्य न कश्चिज्जीवितुं क्षमः ।

तत इदं प्रत्युक्तं[4] ।

दृष्टमर्थं विधूयान्यददृष्टं कल्पयन्ति ये ॥७०५॥
मूढाः पिण्डं परित्यज्य ते निहन्ति करं वृथा । हेयोपादेयविषयो न विवेकोऽक्षवृत्तितः[5] ॥७०६॥
हेयमेतन्न भवति कुतः प्रत्यक्षमात्रतः । उपादेयत्वभावाद्वा हेयत्वस्य निषेधतः ॥७०७॥
उपादेयव्यवस्थानं हेयत्वस्य विपर्ययात् । अर्थक्रियार्थिनामर्थक्रियोपादेयता सदा ॥७०८॥
प्रत्येक्षण न दृष्टा सा ततो वृत्तिं विधित्सतां । प्रत्यक्षत उपादेयभावस्यातो न वेदनं ॥७०९॥
न भाव्यर्थक्रियां वेत्ति प्रत्यक्षं नाप्यप्रतीतिकां । हेयत्वस्य निषेधोपि हेया(क्षादत्ययः)[6] कुतः ॥७१०॥
तदत्र वस्तु नास्तीति प्रतीतिर्नेयमक्षतः । द्वयोरध्यक्षयोर्नास्ति हेयोपादेयतागतिः ॥७११॥
अत्रापि पूर्वको न्यायः प्रत्यावृत्य प्रवर्तते । अत्यन्ताभ्यासतोध्यक्षाद्यदि सर्वं प्रतीयते ॥७१२॥
अप्रतीतेऽस्ति नाभ्यासः ततोऽन्योन्यममाश्रयः ।

अभ्यासाद् यावदध्यक्षं नास्ति नास्तिप्रतीतता ॥७१३॥
यावत् प्रतीतता नास्ति नाभ्यासेऽध्यक्षतोदयः ।

अध्यक्षमात्रं यदि मानमस्मिन्नहेयतत्त्वेतरयोर्विवेकः ।
स्वरूपमात्रप्रतिवेदनं तदद्वैततत्त्वेस्य ततः प्रसक्तिः ॥७१४॥

---

[1] T. ०नुविधानसंबद्धाः
[2] T. नियमाभावात
[3] परः शङ्कते पूर्वं परित्यज्य दर्शनं—वह्निः
[4] T. ततः
[5] T. हेयादेयविशेषस्य न विवेकः प्रत्यक्षतः
[6] T. हेयाक्षादत्ययः

अनुमानं समाश्रित्य हेयादिप्रविभागिता । व्यवहारं प्रतीतं तत्र परं परिमृग्यते ॥७१५॥
अथाद्वैतं समाश्रित्य परलोकनिराक्रिया । अस्यापि क्रियतान्नेदमियत्येवावतिष्ठते ॥७१६॥
इह लोकोपि नैवास्ति नास्ति नास्तिकता ततः । चेतःसर्वोपसंहारात् युक्तमेव तथा सति ॥७१७॥
अथ व्यामोह एवायमिह लोके य आदरः । अस्यापि क्षयमिच्छन् को व्यामोहान्तरमिच्छति ॥७१८॥
व्यामोहः कुत एवायं यद्यनादिरनन्तकः । प्रसिद्धः स परो लोकः किमन्यद् भाषितं वृथा ॥७१९॥
अथाहेतुक एवायं सर्वमेवास्त्वहेतुकं । तथा सति वृथा प्राप्तं नास्तिकेनोदितं त्वया ॥७२०॥
उदितं नोपयोगीदं यदि क्वापि किमर्थिता ।
अथार्थः कश्चिदस्यास्ति तत्रैवास्यास्तु हेतुता ॥७२१॥
परपर्य्यनुयोगोऽथ यद्येवं क्रियते परैः । कोर्थस्तेन कृतेनापि यदि हेतुर्न कस्यचित् ॥७२२॥
अविद्याकृत एवायमिति कस्यापराधिता । यदि नोच्छिद्यतेऽविद्या वृथैव परभाषितं ॥७२३॥
अथाप्युच्छिद्यतेऽविद्या परोदितमनर्थकं । अविद्याहेतुकत्वे वाऽनाद्यविद्यागतिर्भवेत् ॥७२४॥
तथा च सति संसारः सिद्ध एवाविवादतः । विकल्पान्नापराऽविद्या सोपि पूर्वविकल्पतः ॥७२५॥
भात्यनादिप्रबन्धोयं विकल्पस्य प्रसिध्यति ।

**तस्मादनादिवासनापरिपाकोपनीता एवं सुखादयो न परमार्थतः (।) ततो दुःखमेव परमार्थतः सकलमिति ।**

## (d) चतुराकारं दुःख-सत्यम्

**तत्र दुःखं ।**

**कदाचिदुपलम्भात् तदध्रुवं दोषनिश्रयात् ।**
**दुःखं हेतुवशत्वाच्च न चात्मा नाप्यधिष्ठितं ॥१७७॥**
**नाकारणमधिष्ठाता नित्यं वा जनकं[1] कथं ।**
**तस्मादनेकमेकस्मात् भिन्नकालं न जायते ॥१७८॥**

**अनित्यतो दुःखतः शून्यतोऽनात्मतश्चेति चतुराकारं दुःखसत्यं । तत्कदाचिदुपलभ्यमानतयाऽनित्यं । नहि नित्यस्य नित्यमेवोपलभ्यमानतयाऽनित्यं । नहि नित्यस्य नित्यमुपलभ्यमानस्य कदाचिदुपलम्भो युक्तः । उपलभ्येतरस्वभावयोः परस्परपरिहारस्थितत्वेन विरोधात् । उपलभ्यतयैव स इति प्रतिपादनात् । न च सर्वदा सर्वमुपलब्धुं शक्यं, क्रमोपलभ्यस्य नित्यत्वात् न च क्रम एकत्वे सम्भवति । क्रमवत एकत्वेनाप्रतिभासनात् । प्रत्यक्षस्याप्रवृत्तेः । अनुमानस्य तदभावेऽभावात् । प्रत्यक्षपूर्वकत्वात् । अनुमानपूर्वकत्वेऽन्धपरम्पराप्रसङ्गात् । तस्मादध्रुवता संसारिस्कन्धानां[2]। दुःखता च रागादीनां दोषाणां निःश्रयात् । हेतुवशत्वाच्च । हेतुप्रतिबन्धाच्च दुखं। "सर्वं परवशं दुःखमिति" न्यायात् । चकारादभ्यासमात्रनिश्रयात्[3] इत्यवगन्तव्यम्। नात्मरूपं नाप्यनात्माधिष्ठितं[4]। अकारणस्याधिष्ठातृत्वाभावात् । अवश्यमधिष्ठात्रा सोपयोगेन भवितव्यं । उपयोगहेतोर्हेतुत्वात् । यदि चात्मरूपत्वं स्कन्धानां नित्यता भवेत् । न च नित्यं जनकमजनकस्य भावस्तत्वमुपलब्धुमशक्यत्वात् । अनेकञ्च भिन्नकालं ज्ञानमेकस्मान्नित्यतया नोत्पत्तिमत् । न चाप्यात्माधिष्ठायकतया प्रतीयते[5] यच्च प्रतीयते स्कन्धानां रूपं**

---

[1] T. कारणं—पाठान्तरम् [2] T. संस्कारस्कन्धानां [3] T. मात्रनि०
[4] T. नाप्यात्मना [5] T. लभ्यते

तदध्रुवं। अथानधिष्ठितानि कारणानि कथं स्वकार्ये प्रवर्तन्ते। तेनाधिष्ठातानुमीयते। न। अनित्यचेतनाधिष्ठानमात्रात्समाप्तत्वात् (।) चेतन( चानादिरिति ततः (।)

**कार्या[नु]त्पादतोऽन्येषु सङ्गतेष्वपि हेतुषु।**
**हेत्वन्तरानुमानं स्यान्नैतन्नित्येषु विद्यते ॥१७६॥**

यद्यन्ये हेतवः समुदिता अपि कार्यस्याजनकाः तदा हेत्वन्तरमपि विद्यते यदभावात्कार्यमजातं। न चैवं। समनन्तरप्रत्यययोग्यताविशेषमात्रेण सिद्धेः। न च नित्यव्यापिनां कदाचित् क्वचिद्वाऽभावः, येन तदभावात् अभावः प्रतीयते[१]। अन्वयमात्रेण जनने सर्व एव आकाशादयोऽधिष्ठातारो भवेयुः। तेष्वपि सत्सु कारणानां निजकार्येषु प्रवृत्तेः तेषामपि, व्यापिनित्यतया समानत्वात् तेषामानधिष्टातृत्वादिति चेत्। तदेव व्यापिनित्यतया न सिध्यति।

अव्यापिनोपि नित्यस्य भवेत्सर्वत्र हेतुता। सामीप्यादेव नो हेतुर्हेतुर्दूरेपि दृश्यते ॥७२६॥
दूरदेशोपि शब्दादिः स्वकार्यस्य विधायकः। तस्मादन्वयमात्रेण कारणं सकलं भवेत् ॥७२७॥

## (ख) समुदय-सत्यम्

### (a) चतुराकारः समुदयः

**कादाचित्कतया सिद्धा दुःखस्यास्य सहेतुता ॥१८०॥**
**नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात्[२]।**

समुदयसत्यमपि चतुर्विधमेव हेतुतः समुदयतः प्रभवतः प्रत्ययतश्चेति। तत्र हेतुरहेतुपरिहारेण समुदय एककारणपरिहारेण। अप्रभवः असामर्थ्यपरिहारेण प्रभवत्यस्मादिति प्रभवः। प्रत्ययः प्राधान्यपरिहारेण। तत्र दुःखस्य हेतुरस्तीति प्रतिपाद्यते। न।
कादाचित्कतयान्यस्य हेतुयोगो हि दृश्यते। अहेतोर्हि पदार्थस्य सत्त्वमेवान्यथाऽथवा ॥७२८॥
यथा यथाहि हेतूनामभावो नित्यता तथा। तिमिरज्ञानकेशादेर्विषयेण विनोदयात् ॥७२९॥
स्वसंवेदनगम्यस्य धर्म्मधातोरहेतुकः। दृश्यते नित्यसद्भावोऽकादाचित्कत्वलक्षणः ॥७३०॥
बन्ध्या सुताद्यसन्नित्यमभावात् कारणात्मनः।

अत्र चोद्यं।

**तैक्ष्ण्यादीनां यथा नास्ति कारणं कण्टकादिषु ॥१८१॥**
**तथाऽकारणमेतत् स्यादिति केचित् प्रचक्षते।**

अहेतुकवादिनः स्वभावेन महाभूतरूपं न क्रियते। विशेषा एव देशकालावस्थाविशेषयोगितया क्रियन्ते। तत्र विशेषाणामहेतुक(त्व)मुपलभ्यते। तोमरसूचीशूलतूलिकादीनां हि न लोहादिरूपता क्रियते लोहकारादिभिः तीक्ष्णतैव क्रियते। लोहादीनामप्यपरैर्न पृथिवीत्वादिकं क्रियते। लोहतादिरूपतायाः करणात्। लोहकाराद्यभावेपि तु कण्टकादीनां तैक्ष्ण्यस्य तदभावेपि भावात्। नायमेव चानियतहेतुकताऽहेतुकता[3]। तथान्येपि जगतो वैचित्र्यकारिणो विशेषाऽहेतुकता(?) एव भवेयुः। क एवात्र विरोधः। तदप्यसत्।

---
[१] T. तदभावाद् विकल्प्यते [२] र् बाह्यानपेक्षणात् [३] T. इयमेव चानि०

**सत्येव यस्मिन यज्जन्म विकारे वापि विक्रिया ॥१८२॥**
**तत्तस्य कारणं प्राहुस्तत्तेषामपि विद्यते।**

अत्राभिप्रायः। यदि विशेषा एव जन्यास्तेषां नाकारणत्वं। न खलु बदरीकण्टकानां वक्रत्वतीक्ष्णत्वे बदरीकण्टकमन्तरेण स्तः। तदन्वयव्यतिरेकानुविधानात् तत्कार्यतेति नाहेतुकता। अथ लोहकारेणापि क्रियते ततो व्यभिचारादेवमुच्यते। तदपि न यथावत्।

बुद्धिपूर्वक्रियादृष्टेर्बुद्धिमत्कारणं भवेत्। स्यात्तथेश्वरकर्तृत्वं नास्त्यहेतुकता ततः ॥७३१॥
बदरीकण्टकादीनां तत एव निदर्शनात्। विशेषकल्पनान्नो चेद्विशेषोऽस्तु सहेतुकः ॥७३२॥
बदरीबीजतः किञ्चित् लोहकारादितः परं। विशेषो लक्ष्यते नो चेद्विशेषो नैव विद्यते ॥७३३॥
नहि दर्शनमात्रेण विशेषः परिगृह्यते। तदेवाद्वैतमायातं तदेवाहेतुकं भवेत् ॥७३४॥
तस्माद्यतो विशेषास्ते तत एव सहेतुकाः। नहि हेतुविहीनस्य विशेषत्वं प्रसिध्यति ॥७३५॥

तस्माद्यदि भेदा यदि बाह्यार्थता सर्वथा सहेतुकत्वमन्यथा विपर्ययः। ननु सत्येव यस्मिन् यज्जन्म तस्य हेतुत्वे स्पर्शस्य दर्शनहेतुता प्रसक्ता स्पर्शाभावेऽस्वभावात्। तदसत्।

एकसामग्र्यधीनत्वादवियोगः परस्परं। रूपस्पर्शतयोस्तेन तदभावे न दर्शनं ॥७३६॥

तत्र हि स्पर्शमन्तरेण रूपमेव न भवति। यदि तु रूपं भवेत् भवेदेव दर्शनं। न चैवंविधात् व्यतिरेकात् कारणत्वमपि तु रूपमुपदर्श्य। यदि स्पर्शाभावेऽभावमुपदर्शयेत् दर्शनस्य। अथवा।

**स्पर्शस्य रूपहेतुत्वात् दर्शनेऽस्ति निमित्तता ॥१८३॥**

परस्पराबियोगेन समानकालयोरपि हेतुत्वात् "उपादाय रूपस्य रूपस्य स्पर्शरूपाणि भूतानि" हेतुस्ततः पारंपर्येण दर्शने स्पर्शस्यास्त्येव हेतुतेति न विपक्षवृत्तिताहेतोरित्यव्यभिचार एव। एवं तावदहेतुकत्वं प्रतिषिद्धमिति हेतुत इत्येकाकारो व्यवस्थितः।

समुदय इति द्वितीयमाकारमाह।

**नित्यानां प्रतिषेधेन नेश्वरादेश्च सम्भवः।**

सहेतुकत्वेपि दुःखस्य ततो नित्यैककारणनिषेधेन समुदयाकारतानिर्णयः। यदि कारणमेकं नित्यमेव भवेत्। अनपेक्षणान्नित्यस्यानाधेयविशेषत्वात्। तेषाञ्च नित्यानां प्रधानादीनां प्रागेव निषेधः। कुत एतदिति चेत्। असामर्थ्यात् क्रमयौगपद्याभ्यामर्थक्रियाशक्तिवैकल्यात् न प्रभवत्वं। तृतीय आकारस्तृष्णाया एव स आकारः। एतदेवाह।

**असामर्थ्यादतो हेतुर्भववाञ्छापरिग्रहः ॥१८४॥**
**यस्माद्देशविशेषस्य तत्प्राप्त्याशाकृतो नृणां।**

अन्यस्य कारणस्य कर्म्मणोऽन्यस्य वा न प्रभवत्वं। न खलु कर्म्मशरीरमविद्या वा प्रभवः। समर्थकारणापरनामा। तृष्णाऽभावेऽभावात् जन्मनः। दृश्यते च तृष्णायाः प्रभवनं। यतः परिग्रह आग्रहापरव्यपदेशः तत्प्राप्तितृष्णाकृतः परिग्रहश्चायं जन्मसमागमः। तस्मादस्य तृष्णाप्रभवः। भववाञ्छानागतजन्मप्रार्थनाकारा।

ननु न देशविशेषादिप्रार्थना समुदयसत्त्यं। उक्तं हि भगवता। "तत्र कतमत्समुदय

आर्यसत्त्यं । येयं तृष्णा पौनर्भविकी नन्दी रागसहगता तत्र तत्राभिनन्दिनी । यदुत कामतृष्णा । भवतृष्णा । विभवतृष्णा चे"ति[1] । नायं विरोधः । यस्मात् (।)

**सा भवेच्छाप्त्यनाप्तीच्छोः प्रवृत्तिः सुखदुःखयोः ।**
**यतोपि प्राणिनः कामविभवेच्छे च ते मते ॥१८५॥**

येयं स्थानोपकरणादितृष्णा सा भवेच्छा संसारतृष्णा नन्दी रागसहगता तत्र तत्राभिनन्दिनी सा सर्वैव कामतृष्णा भवतृष्णा विभवतृष्णा (।) या स्थानादितृष्णा सा भवतृष्णा सा भवेच्छा। या स्वर्गप्रार्थनाकारा सा कामतृष्णा । या दुःखवियोगेच्छा सा विभवतृष्णा । तस्मादविरोध एव समुदयसत्यनिर्देशः । नागमविरोधः कश्चिदिति ।

**सर्वत्र चात्मस्नेहस्य हेतुत्वात् संप्रवर्त्तते ।**
**असुखे सुखसंज्ञस्य तस्मात् तृष्णा भवाश्रयः ॥१८६॥**

अहङ्कारसन्निश्रयात् एकत्वेनारोपितं (? ता) चित्तमाला तत्र यः स्नेहः सर्वत्र संप्रवर्तने स्थानोपकरणादौ असुखे सुखादिरूपरहितत्वेन परमार्थतः । चित्तविपर्ययोपहतस्य प्रवर्तनात् हेतुत्वमतः तृष्णाप्रभवाश्रयः । न ह्यदृष्टः क्वचिदपि प्रवर्तनसम्बन्धितः करुणायोगतोऽन्यत्र न संसारकारणं । अत एव प्रवर्तनं प्रति तृष्णायाः सहकारित्वात् । प्रत्ययमात्रता नोपादानत्वं । तत्र चित्तमेवोपादानं । तस्य प्रत्ययस्तृष्णा कदाचित् करुणा । अनेन प्रत्ययत इति आकारः कथितः ।

ननु प्रत्ययत्वेपि न तृष्णा प्रत्ययोऽपि तु देहस्ततो देहसङ्गतो न वीतरागः। । एतदेव दर्शयति ।

**विरक्तजन्मादृष्टेरित्याचार्याः संप्रचक्षते ।**
**अदेहरागादृष्टेश्च देहाद्रागसमुद्भवः[2] ॥१८७॥**

यथैव हि वीतरागस्य जन्म न दृष्टमिति रागो जन्मनो हेतुरत एव युक्तो देहो रागादेर्हेतुरदेहस्य रागादृष्टिः । अत्रोच्यते । रागमन्तेरणापि जन्म भवति । करुणावशादभिरतिविषयत्वं तु तस्य तृष्णया ह्रियत इति विशेषमात्रहेतुत्वात् तृष्णाप्रत्ययमात्रं । एवं यदि देहोपि प्रत्ययमात्रं रागादीनामयोनिशोमनसिकार एव तूपादानकारणं तदेष्टमेव संगृहीतमिति दर्शयति ।

**निमित्तोपगमादिष्टमुपादानं तु वार्यते ।**
**इमान्तु युक्तिमन्विच्छन् बाधते स्वमतं स्वयं ॥१८८॥**

देहोपि रागस्यायोनिशोमनस्कारमनुवर्तमानो हेतुरिष्यत इव । स कदाचिद्वासनाप्रबोधस्य हेतुर्विषयवत् । एषा तु युक्ती रागहेतुत्वमपि देहस्य सम्पादयति । ततोऽन्योन्यहेतुत्वात् तथाभूतानादिसामग्रीप्रभवं जन्मेति जन्मान्तरप्रसिद्धिरिति चर्च्चितं चार्व्वाक चर्च्चितमर्च्चिष्मता ।

ननु सगुणं द्रव्यमेवोद्यते । ततोऽनयोरन्योन्यमहेतुता ।

---

[1] T. दीर्घागमे  [2] T. जन्म—बह्निः  [3] T. वोद्यते

**जन्मना सहभावश्चेत् जातानां रागदर्शनात् ॥१८९॥**
**सभागजातेः प्राक्सिद्धिः कारणत्वेपि नोदितं ।**
**अज्ञानमुक्ता तृष्णैव सन्तानप्रेरणाद् भवे ॥१९०॥**

### (b) तृष्णाकर्मणी जन्मसमुदयः—

यदि हि जन्मना सहभावो रागादीनामिति न रागादयो देहस्य हेतुः तदा देहोपि न रागादीनां। न चाहेतुकता ततः। समानजातीयकारणजनिता रागादय इति सिद्धमभिमतं।

ननु न तृष्णा कारणमेकैव। अविद्या तृष्णा कर्म्म चेति त्रयस्य कारणत्वात्। तृष्णैव तत्र तत्राभिनन्दिनीति समुदयसत्यनिर्देशः कथं।

नैतदस्ति। कारणत्वेपि नानन्तरकारणत्वं। तृष्णैवानन्तर्येण कारणं संसारे सन्तानस्य प्रेरणात्। नहि मोहकर्म्मणोः सतोरपि तृष्णामन्तरेण कश्चित् प्रेरयिता। नहि विपर्यस्तोपि सङ्गतृष्णामन्तरेण प्रवर्त्तते। अत एवाह।

**आनन्तर्यात् न[1] कर्मापि सति तस्मिन्नसम्भवात्।**

कर्म्मोपात्तमपि राज्यादि परित्यजत्यतृष्णः।

ननु बुद्धिः कर्मानुसारिणीति परित्यागः कर्म्मैव तत्तादृशं येन उपनतमवधीरयति। अथ मुक्तात्मनां जन्मनोऽसम्भवः इत्युच्यते। तेषामपि कर्मक्षय एव मुक्तिरन्यथाऽभावात्। अत्रोच्यते।

तृष्णाविरहितस्यास्य यदि कर्म्म परिक्षयः। प्रधानं कारणं तृष्णेत्येतदेवात्र युक्तिमत् ॥७३७॥
अथ तृष्णास्ति नैवास्ति कर्म्मणोऽस्य परिक्षयः।
सतृष्णस्यास्य हि भवेत् पुनः कर्मापरापरं ॥७३८॥

एवं तावत् चतुराकारमार्यसत्यं व्याख्यातं समुदयलक्षणम्। इदानी तद्दुःखं निरोधसम्भवीति निरोधसत्यं चतुराकारमाह।

## (ग) निरोधसत्यम्

### (a) संसार्यभावे मुक्तिव्यवस्था

**तदनात्यन्तिकं हेतोः प्रतिबन्धादिसम्भवात्।**

**संसारित्वादनिर्मोक्षो नेष्टत्वादप्रसिद्धितः ॥१९१॥**

निरोधतः शान्ततः प्रणीततः निःशरणतश्चेति चत्वार आकाराः निरोध एव नास्तीति वादिनं प्रति निरोधता ह्युच्यते। मुक्तानामपि रागादिसम्भव इति परैरभ्युपगम्यते। तत्प्रतिषेधेन शान्ततः। अतः परोपि सम्भवति मोक्षतातिप्रतिक्षेपेण प्रणीतत इत्याकारः। मुक्तोपि पुनरमुक्तो भवतीति निरस्य एतत् निःसरणत इति चतुर्थ आकारः। तत् प्रथम आकार-

[1] यच्च०

तात्यनात्यन्तिकं[1] नात्यन्तं भवति निरुध्यतेपि । न च संसारित्वावसम्भवो मोक्षस्य दोषः । इष्टत्वात्(।) नहि कस्यचित् मोक्षोस्ति । योहि बद्धो नहि तस्य मोक्षोस्ति । तत्स्वभावत्वात्(न) मुक्त[2]स्यापि बन्धः । सदा तस्य मुक्तस्वभावत्वात् । केवलचित्तसन्तानस्यापरिशुद्धस्य सतः सामग्रीविशेषतः परो भागो विशुद्ध उत्पद्यते । तदपास्य[3] परिशुद्धस्य संसारितैवासिद्धा । न च संसारी परमार्थतः कश्चिदस्ति क्षणानामसंसरणात् । सन्तानस्य च परमार्थतोऽभावात् ततः संसारित्वादित्यसिद्धो हेतुः । न चापि मोक्ताविद्यते यस्य मोक्षः ।

ननु यदि बद्धो न मोक्ताऽन्यस्य बन्धोऽन्यस्य मौक्षः । अन्यस्य क्षुदन्यस्य तृप्तिः । अन्यः चिकित्सादुःखम(नु)भवति, अन्यो व्याधिरहितः (।) अन्यस्तु यः परिक्लेशवानपरः स्वर्गसुखमनुभवति । परः शास्त्राभ्यासायस्तोऽन्योऽधिगतशास्त्रः तदा किमिति हेतोरभियोगः प्रेक्षावतः । अत्र समाधिः । यस्मात्

यावदात्मनि न प्रेम्णो हानिः स परितस्यति ॥१९२॥
तावद् दुःखितमारोप्य न च स्वस्थोऽवतिष्ठते ।
मिथ्याध्यारोपहानार्थं यत्नोऽसत्यपि मोक्तरि ॥१९३॥

( b ) मुक्तानां संसारे स्थितिः—

अवस्थावीतरागाणां दयया कर्म्मणापि वा ।

अत्रायमभिप्रायः । यदि तावत् तत्त्वदर्शिनःप्रति एतदुच्यते । तदा सिद्धसाध्यतैव । नहि ते क्वचित्प्रवर्तन्ते यत्नं वा कुर्वन्ति । धर्म्मा एव प्रहातव्या इति वचनात् । अथास्मदादीनं तदा तस्यैकत्वाभिमानात् स एव बध्यते स एव मुक्तिमानित्येकाधिकरणतैव तयोः । नहि परमार्थतो वस्त्वस्तीत्ये[4]तावतैव तथा व्यवहारः । प्रतीत्यपेक्षत्वाद् व्यवहारस्य । तथाहि । न परमार्थतः सर्पः परिहारविषयः । अपि तु । सर्पतया विमोक्षविषयः ।

अथ यदि नाम संवृत्या एकत्वं । तथापि संवृत्या व्यवहारोस्तु । परमार्थैकत्वाभावात् कथं पारमार्थिको व्यवहारः । तदसत ।

संवृत्यास्य यथकत्वं व्यवहारोपि स संवृतिः । न तत्त्वेन यथैकत्वं व्यवहारोप्यतात्विकः ॥७३९॥
यत्नोपि खलु नेवास्तिस्वरूपादपरः क्वचित् । कार्यकारणभावस्तु न चोद्यस्थावकशक्रत् ॥७४०॥
कस्मादस्मादिदं कार्यमिति केयं विदग्धता । नैवं प्रेक्षावतः क्वापि प्रवर्तननिवर्तने ॥७४१॥
पौर्वापर्योपलम्भस्य प्रमाणेनाप्रवेदनात् । क्षणमात्रस्य च क्वापि न प्रवर्तनसम्भवः ॥७४२॥
ततो यत्नोपि नास्त्येव कस्यचिद् विभ्रमस्ततः ।

अभ्युपगम्याप्युच्यते । अवस्थेत्येवमादि ।

पारमार्थिकबोधे हि यदि नैव प्रवर्तते । विरागाणां न चेष्टा स्यात् पूर्वोत्तरविभागभाक् ॥७४३॥
चेष्टाज्ञानावबोधेपि करुणातः प्रवर्तनं । यथा प्रजाहितो राजा स्वसन्तान[5] यत्नवान् ॥७४४॥
प्रणिधानप्रधानस्य कार्यं तत्प्रणिधानतः । कर्म्मसामर्थ्यतो जातं कोऽत्र पर्यनुयुज्यतां ॥७४५॥

---

[1] T. आकारः स आत्यन्तिकः [2] T. न [3] T. तत्र परस्य
[4] T. वस्त्वस्तो० [5] T. स्वसन्तान०

तस्मान्मिथ्याध्यारोपस्य एवंविधस्य प्रहाणाय यत्नः। अन्यथा मूढस्य न दुःखसंवेदनहानिः।

यदि तर्हि कर्म्मणावस्थानं जन्मान्तरकर्म्माप्यस्तीति जन्मान्तरसङ्गतिः स्यात्। अथासमर्थं कर्म्मं वीतरागस्यावस्थानं न भवेत्। अत्रोच्यते।

आक्षिप्तेऽविनिवृत्तीष्टेः सहकारिक्षयादलं ॥१९४॥
नाक्षेप्तुमपरं कर्म्म भवतृष्णाविलंघिनां।

नाक्षिप्तो यत्नमन्तरेण निवर्तयितुं शक्यः। यत्नश्च वीतरागस्य प्रतिहन्यते। उपेक्षया न तस्य क्वचिदास्थेति। अत एवास्थाऽभावात् नापरजन्मोपार्जनं। ततः सहकारिणः तृष्णालक्षणस्याभावात्। तदेव पूर्वतृष्णाजनितमिदं जन्म नापरमिति। ननु दया नामेयं सत्वे दुःखात् त्रातव्ये भवति नान्यत्र। नच सत्त्वः कश्चिदस्ति। नपि सत्त्वदर्शनं प्रहीणात्मदर्शनानां ततो दयातो न प्रहीणात्मदर्शनाः। अत्र परिहारः।

दुःखज्ञानेऽविरुद्धस्य पूर्वसंस्कारवाहिनी।
वस्तुधर्मोदयोत्पत्तिर्न सा सत्त्वानुरोधिनी ॥१९५॥

यदाहि सकलमेव दुःखमिति साक्षात्कृतं त्रिदुःखतायोगि। तदास्य समुदयलक्षणा तृष्णाऽपैति प्रहीणसमुदयस्य न रागादय इति। समताऽविरोधिता। सकलेनैव सत्त्वसंघातेन। ततो दुःखितदर्शनात् वस्त्वाश्रयादयोत्पत्तिर्महतां। न तस्यामवस्थायां सत्त्वग्रहानुरोधतः तथा भूतसत्त्वग्रहपरित्याजनाय य आशयः सा दया। सा च प्रहीणात्मदर्शनस्यैव। अप्रहीणात्मदर्शनो हि कथं तत्त्यागाय परेषां यतेत।

ननु रागस्य दयायाश्च को विशेषः। अयं विशेषः।

आत्मान्तरसमारोपात् रागो धर्म्मेतदात्मके।
दुःखसन्तानसंस्पर्शमात्रेणैव दयोदयः ॥१९६॥

दयाया रागस्य च महान् भेदः। हेतुभेदविषयभेदात्[1]। तथा हि। राग आत्मनोऽनागतसुखासङ्गसन्धानपरवशीकरणमनागतसन्तमारोप्य तस्मात् प्रवर्त्तते। विषयेप्यतदात्मके तदात्मना दृश्यमाने। चतुर्विधविपर्यासवासितमानसस्य रागिता नान्यस्य। दया तु दुःखसन्ततिमात्रसाक्षात्करणादेव मिथ्याभिमानव्यपगमाय।

नन्वहमस्य दुःखनिवर्तनं विधास्य इति आशयमन्तरेण कथं भवेत्। अत्र परिहारः।

आत्मार्थे यदि वृत्तिः स्यादेवमेव प्रसज्यते। परार्थमात्रवृत्तीनां नहि कारकदर्शनं ॥७४६॥
दर्शितो राजदृष्टान्तस्तदेतन्नासमंजसं। पूर्वपूर्वाहितोत्कृष्टसंस्काराद्वा प्रवर्तनं ॥६४७॥
न च पश्यति संतानं नापि कश्चित् प्रवर्तते। न तिष्ठति प्रभाऽभावात् केवलं भवतो भ्रमः ॥७४८॥

तदयं दयारागयोर्विशेषः इत्यलमतिविस्तरेण।

ननु दया माभूत रागरूपातस्त्वदर्शिनामुदयात्। द्वेषरूपा तु भवेदशुभ्यादिदर्शनात्, वैमुख्याभावात्। नाशुभाभावनातो मुक्तिरपि तु अनित्यादिदर्शनात्। आत्मनि हि सति स

[1] T. हेतुभेदाद् विषयभेदाच्च

स्वतन्त्रः परदुःखविधायीति कोपः स्याद्(?) यदा तु पुनरसौ हेतुपराधीनः प्रवर्तते स्वरूपमात्रेण। न चापकारस्तस्य शक्यः कर्त्तुमपकारकाले तस्यैवाभावात् वृथा कोपपरिग्रहः।

मोहश्च मूलं दोषाणां स च सत्त्वग्रहोविना ॥१९७॥
तेनाऽप्यहेतौ न द्वेषो न द्वेषोऽतः कृपा मता।

यद्यात्मानमपक्रियमाणं पश्येत् कोपो भवेत्। न चात्मा कश्चित्। अपि तु सत्त्वमन्तरेणापि सत्त्वग्रह एव केवलः कोपस्य कारणं, विना च सत्त्वग्रहं न द्वेषः। मोहस्तु नास्ति स्वयमेव सत्त्वदर्शनस्य मोहस्याभावात्। अतः सर्वदोषविरहिता कृपा न दोषः।

ननु यदि वीतरागः सशरीर एवास्ते। तदाऽमुक्त एव भवेत्। न दोषरहितस्य चेतसो भावात्। किञ्च॥

नामुक्तिः पूर्वसंस्कारक्षयेऽन्याप्रतिसन्धितः ॥१९८॥
अक्षीणशक्तिः संस्कारो येषां तिष्ठन्ति तेऽनघाः।

जन्मान्तरप्रतिसन्धानविरुद्धे हि मनसि वर्तमानः कथममुक्तः। पूर्व्वसंस्कारस्य च तज्जन्मसम्भविनः क्षयादप्रतिसन्धानं। येषान्तु पुनरप्रतिसन्धिकरणाय संस्कारक्षयेच्छा नास्ति तेऽक्षीणसंस्कारा अनघा एवावतिष्ठन्ते। यावत्संस्कारमनुवृत्तेः॥

मन्दत्वात् करुणायाश्च न यत्नः स्थापने महान् ॥१९९॥
तिष्ठन्त्येव पराधीना: येषान्तु महती कृपा।

संस्कारहानेः करुणायाश्च मन्दत्वात् न स्थापने यत्नः। इति न सदा तिष्ठन्ति। महाकरुणायोगात्तु स्थानमेव। तत्रास्थासम्भवात्।

### ( c ) सत्कायदृष्टेर्विगमः

यदि मार्ग्गस्य सामर्थ्यं तदाद्य[१] एव स्रोतआपन्नमार्ग्ग एवाभवो भवेत्। सत्कायदृष्टेर्विगयात्। तथाहि सत्कायदृष्टेर्विचिकित्सायाः शील[२]व्रतपरामर्शस्य च प्रहाणात् स्रोतआपन्नो भवति।

"मोहश्च मूलं दोषाणां स च सत्वपरिग्रहः"। इति चोक्तं। ततोमार्ग्गान्तरं व्यर्थकं भवेत्। अत्रोच्यते।

सत्कायदृष्टेर्विगमादाद्य एवाभवो भवेत् ॥२००॥
मार्गे चेत् सहजाहानेर्न हानौ वा भवः कुतः।

न खलु सत्कायदर्शनप्रहाणमाभिसंस्कारिकस्यैव प्रहाणात्। सहजस्य प्रहाणाभावः। सत्यदर्शनमात्रं हि स मार्ग्गः। दर्शनेन चाभिसंस्कारिकस्यामूलक्लेशत्वादात्मग्रहस्य प्रहाणं। तद्धयात्मदर्शनमौपदेशिकं दर्शनमात्रेणैव विपर्ययस्य प्रहीयते। सहजस्यतु सत्कायदर्शनस्य विरूढत्वादनाद्यभ्यासतः प्रतिपक्षेण भावनामार्ग्गेणैव प्रहाणमतः सहजाहानेः।

यस्य तु मते न सहजस्यापि हानिः। तत्र मतेन हानौ वापि भवः कुतो भवति। पटुप्रज्ञस्य हि प्रथममार्ग्ग एव सकलसामर्थ्ययोगीति तस्य स एव सकलमार्ग्गस्वभावः॥

---

[१] T. तदाद्य [२] T. शील०

ननु सहजं सत्त्वदर्शनं। यद्यात्माकारं तदाऽऽत्माभावे तत्राभिसंस्कारादेव बुद्धिर्नान्यथा। वस्तुनो जनकस्याभावे यदि परमुपदेशः कारणं। अत्राह।

**सुखी भवेयं दुःखी वा मा भूवमिति तृष्यतः ॥२०१॥**
**यैवाहमिति धीः सैव सहजं सत्त्वदर्शनं।**
**नह्यपश्यन्नहमिति स्निह्यत्यात्मनि कश्चन ॥२०२॥**
**न चात्मनि विना प्रेम्णा सुखकामोऽभिधावति।**

अनादिवासनाबलात् उदयमासादयन्ती अहमिति बुद्धिः सहजमेतत् सत्त्वदर्शनं सुखी भवेयमहमित्येवमाकारा मा भूवमन्यथेति वा। तदप्रहाणा[1]न्नाभवः। अहमिति चापश्यन्नात्मनि स्निह्यति न तु पश्यन्। न च सुखकामस्याभिधावनं विनात्मस्नेहेन। यस्य तु सहजं सत्त्वदर्शनं, प्रवर्त्तितात्मस्नेहसंगति तस्य कथं पुनर्जन्माभावः। ततः सहजसत्त्वदर्शनाबाह्य एव मार्ग्गो न संसाराभावः। सत्त्वदर्शनप्रहाणादवश्यमेवेति निश्चयः। अनेन शान्तइत्याकारः कथितः।

ननु आत्मनि सति बन्धः तस्यैव मोक्षः। ततः परितोषविशेषादात्मनः। स प्रणीतो मोक्षः। आत्माभावे तु कस्य परितोषः।

### (d) बन्धमोक्षव्यवस्था—

यदि भवेत् भ्रान्तिरेव सेति सदोषता नासौ मोक्षः। अत्र समाधानं।

**दुःखोत्पादस्य हेतुत्वं बन्धः; नित्यस्य तत्कुतः ॥२०३॥**
**अदुःखोत्पादहेतुत्वं मोक्ष; नित्यस्य तत्कुतः।**

यद्यात्मा नित्यस्तथा व्यापी तदान्वयव्यतिरेकाभावात् नासौ स्वयमात्मनो दुःखमुत्पादयितुं शक्तः। आकाशवत्। यदि च स्वतन्त्रः शक्तश्च कथमात्मनो दुःखमुत्पादयेत्। न खलु स्वबधाय कृत्योत्थापनं प्रेक्षावतः युक्तं। अथासौ मूढस्तदात्मानमजानानः कथमात्माऽनुपलम्भादसत्त्वमेवास्य स्यात्। अथ तत्स्वभाव एवासौ तदा न कदाचिदन्यथेति। न सा मुक्तिर्भाविनी। अथ जानानस्यापि तस्यार्था न स धर्म्मेणोत्पाद्यते[2] दुःखं तथापि। नित्यस्य व्यापिनश्च न कस्यचित् दुःखो[3]त्पादहेतुत्वं। यद्यसौ तदा दुःखस्वभावः। तदा न दुःखस्य दुखं युक्तं। तत्स्वभावत्वे च नाऽन्यथाभावः। ततो न मोक्षः। अन्यस्वभावभावे च न नित्यः इति नात्मा भवेत्। अथ व्यतिरिक्तं दुःखं सुखं वा, तदात्मा न सुखी दुःखी वा। नह्यन्येन सुखेनान्यः सुखी भवति। अथ तत्र समवायात्। ननु समवायोप्यन्य एव। अनन्यत्वे स एव दोषः। सुखासुखादिस्वभावत्वे च, अरापरस्वभावादनित्यत्वं। अथ निर्विकारोऽसौ परमार्थतः भ्रान्तिरेव तु सुखित्वादिप्रतिपत्तिः। तदप्यसत्।

आत्मनोव्यतिरेकश्चेद् भ्रान्तेर्नात्मा अवित्तितः।[4]
तत्स्वरूपस्य वित्तिश्चेत् कथं भ्रान्तिः स्ववेदने ॥७४९॥

---

[1] T. तत्प्रहाणात्० [2] अथ जानानस्याऽपि तस्यात्मानो धर्माधर्मत उत्पद्यते। [3] आत्मनो दुःखरूपा स्याद्यस्य वा दुःखमत्पाद्यमानव्यतिरिक्तमव्यतिरिक्तं वा। अव्यतिरिक्तो यद्यसावित्याह—बहिः। [4] ०त्मा ह्यवि०।

सुखित्वं यदि मोक्षेपि मुक्तेर्न स्यात्प्रणीतता ।
मोहस्तत्रास्ति तस्येति तस्मादात्मा न मुक्तिभाक् ॥७५०॥
परितुष्टः क्षणो यस्य सम्भवत्यपरापरः । तस्य मोक्षः प्रणीतोसौ भ्रान्त्ययुक्ति विनार्थतः ॥७५१॥
नैकाधिकरणत्वं चेत् प्रसक्तं बन्धमोक्षयो । सवृत्यैकाधिकरणभावो नैव निवार्य्यते ॥७५२॥
यो मुक्तस्य बन्धेन तदा किम्वा प्रयोजनं । पूर्व ममासीदिति चेत् तदपि क्वोपयुज्यते ॥७५३॥
अपेक्षापूर्वकारी स्यात् प्रागेकत्वस्य निश्चयात् । अयुक्तञ्चैतदिति चेदे तदिष्यत एव हि ॥७५४॥
परार्थो वा प्रयोगोयमिति चावेदितं पुनः । प्रणीततास्य मोक्षस्य परस्य तु विपर्ययः ॥७५५॥

**अथापि स्यात् न नित्य आत्मा पूर्वोक्तदोषान्नापि अनित्योऽप्रेक्षापूर्वक्रियाप्रसङ्गात् । अतो नित्यत्वानित्यत्वाभ्यामवाच्यः । तदपि न युक्तं ।**

**अनित्यत्वेन योऽवाच्यः स हेतुर्नहि कस्यचित् ॥२०४॥**
**बन्धमोक्षाववाच्येपि न विद्येते कथं च न ।**

**अनित्यत्वेनावाच्य इति अनित्यत्वमस्य नास्ति तस्य न हेतुता। अनित्यतया हेतुत्वं व्याप्तमिति चान्यत्र निर्णयः(।) ततो व्यापकस्याभावात् हेतुताप्यस्यासम्भविनी। यस्य तु पुर्नानित्यताऽपि नास्ति। तस्यात्यन्तमभाव एव। (अथ)[1] बन्धमोक्षयोरेकाधिकरणत्वादनित्यता । न। हेतुत्वात् नित्यता नेति समाधिः। स चायुक्तः॥**

नित्यानित्यविनिर्मुक्तः स्वभावो नोपलभ्यते । व्यावृत्तानुगतत्वेन सर्वस्यैवोपलम्भनात् ॥७५६॥

**अथापि स्याद्(।) उभयरूपतास्तु यदि नान्यथा। तथापि न दोषः। यस्मात् ।**

**नित्यं तमाहुर्विद्वांसो यः स्वभावो न नश्यति ॥२०५॥**
**त्यक्त्वेमां ह्रेपणीं दृष्टिमतो नित्यः स कथ्यतां ।**

**नाशी च नित्यश्चेति व्याहतं। यस्मान्न नश्यति यः स नित्यः। नाशोऽभावोऽनुपलब्धिरित्येकार्थता प्रसाधयिष्यते । अनाशो नित्यतोपलब्धिरिति च। ततो नित्यानित्ययोरेकत्वमिति उपलभ्यानुपलभ्ययोरित्यर्थः। उपलभ्यानुपलभ्ययोश्च कथमेकत्वं।**

एकत्वेन प्रतीतेर्यः स एवैक इति स्थितिः । अप्रतीत प्रतीतञ्चेत् तदेतदतिसाहसं ॥७५७॥

**यदि नित्यमनित्यञ्चैकमेव। तदा प्रतिपन्नमप्रतिपन्नञ्चैकमिति प्रसक्तं। तथा चासम्बद्धं। प्रतीयमानमेकत्वेनान्यथा न शक्यं प्रतिपत्तुं । नाप्रतीतमेव प्रतीतं शशविषाणमप्रतीतं केनचित् प्रतीतेन सहैकं शक्यं निश्चेतुं। तत्रैकस्याप्रतीतेरिति चेत्। इहाप्यप्रतीतेऽवश्यमप्रतीतिः। यस्यैकत्वेन प्रतीतिर्न तस्य प्रतीतिरेव नश्यति। नोत्पद्यते वा । अथान्यप्रतीतिरप्रतीतिः, तेनान्यप्रतीतिरूपा नास्ति प्रतीतिर्नास्ति तदन्यरूपप्रतीतिरेव तस्याप्रतीतिः[2]। एवं तर्हि यदन्यरूपं[3] तत एव तस्याभावः इति प्राप्तं। तच्चायुक्तं। यतः।**
अन्यतां प्रतिजानानः कथं ब्रूयादनन्यतां । अन्यता तस्य नेत्येवमनित्यत्वं न सिध्यति ॥७५८॥
अनित्यत्वेऽनुपलब्धिः स्यान्नोपलब्धावनित्यता। अनन्यत्वे चोपलब्धिरुपलब्धौ च नित्यता ॥७५९॥

---

[1] T अथ [2] तेन अप्रतीतिरेव न प्रतीतिः

[3] एकत्वाध्यस्तं यद्रूपं तत एव रूपात् तस्यात्मीयस्य क्षणिकत्वस्याभाव एतञ्च विरुद्धं, आत्मापेक्षयान्यत्वं प्राप्तं । —बहिः

केनचित्तस्य रूपेण नोपलब्धिः परान्यथा । अविर्त्तिर्येन रूपेण तदस्येति कथं मतं ॥७६०॥
पूर्वत्वेनास्य वित्तिश्चेत् पूर्वमेव तथा भवेत् । इदानीन्तनतद्रूपमस्येति कथमेकता ॥७६१॥
एकः पूर्वापराभ्याञ्चेत् रूपाभ्यामवियोगतः । वियोगे दृश्यमानेपि वियोगो न कथं मतः ॥७६२॥
क्रमेणास्या वियोगश्चेत् वियोगोपि तथाभवेत् । अत एवोभयात्मत्वमवियोगवियोगतः ॥७६३॥
यथैवास्याक्रमं सत्त्वं दष्टिरस्य तथा भवेत् । अक्रमस्य च सत्त्वस्य न योगः क्रमभाविकः ॥७६४॥
नपूर्वापररूपस्याप्रतीतौ व्यापितागतिः । क्रमेण व्यापितायाञ्च तस्यैव व्यापिता नहि ॥७६५॥
नहि दृष्टमदृष्टञ्च तस्यैकस्योपपत्तिमत् । तदैव तस्य दृष्टत्वमदृष्टत्वं च दुर्घटं ॥७६६॥
कालाभेदेन सकलं नासमञ्जसमीक्ष्यते । एकत्वादेकदैवास्य कालभेदः कथं भवेत् ॥७६७॥
पुनः पुनः प्रतीतौ च गृहीतं ग्रहणं भवेत् । गृहीतमिति यद् ग्राह्यं स्मर्यमाणं हि तद् भवेत ॥७६८॥
स्मरणस्याप्रमाणत्वान्न क्रमग्रहसम्भवः । न चाप्रतीतं तद्रूपं येन प्रत्यक्षता भवेत ॥७६९॥
इदानीन्तनमस्तित्वं चेन्न न पूर्वधियागतं[1] । भेदाभावात्कुतस्तस्य विभागोऽयं प्रमान्वितः ॥७७०॥
दृष्टत्वं तस्य नास्तीति सर्वदा वर्तमानता । यदि पूर्वापरीभावः केन तस्य प्रतीयतां ॥७७१॥
प्राक्परप्रत्ययाभ्याञ्चेत् तयोर्भेदगतिः कुतः । स्वसवेदनभावाच्चेत् न स्याद् द्वित्वगतिस्ततः ॥७७२॥
न चाप्यविद्यमानस्य परपूर्वस्य तद्गतिः (।) एकं संवेदनं तच्चेत्[2] परपूर्वतयेष्यते ॥७७३॥
एकत्वे परपूर्वत्वं साक्षात्कृततया[2]कथ । न साक्षात्क्रियमाणस्य पूर्वता भावितापि वा ॥७७४॥
न पूर्वत्वं यदि भवेत् कथ पूर्वतया गतिः । नास्त्येवास्य गतिः साक्षात्स्मरणञ्च न तद्गतिः ॥७७५॥
तस्य स्मरणमेतच्चेत् तस्येति कथमुच्यते । यदा तेन विनाप्येतत् स्मरण भवदीक्ष्यते ॥७७६॥
कार्यकारणभावाच्चेत् न ग्रहस्तावता भवेत् । साक्षात्कारणतार्थस्य ग्राह्यता न विपर्ययात् ॥७७७॥
न चार्थात्स्मरणं साक्षात्संविदा व्यवधानतः (।) संवेदनं न पूर्णन्तत् पूर्वत्वग्रहणक्षमं ॥७७८॥
न परं तेन पूर्वत्वं स्मरणान्नैव साध्यते । अनीतसाक्षात्करणं पूर्वमित्यभिधीयते ॥७७९॥
भावी साक्षात्कृतौ भावे भावित्वस्य व्यवस्थितिः(।)अथोत्पादव्ययध्रौव्यं युक्तं यत्तत् सदिष्यते॥७८०।
एषामेव न सत्त्वं स्यात् एतद्भावावियोगतः (।) यदा व्ययस्तदा सत्त्वं कथं तस्य प्रतीयते ॥७८१॥
पूर्वप्रतीते सत्त्वं तत्तदा तस्य व्ययः कथं । ध्रौव्येपि यदि नास्मिन् धीः कथ सत्त्व प्रतीयते ॥७८१॥
प्रतीतेरेव सर्वस्य तस्मात्सत्त्वं कुतोऽन्यथा । तस्मान्न नित्यानित्यस्य वस्तुनः सम्भवः क्वचित् ॥७८२॥
अनित्यं नित्यमथवा वस्त्वेकान्तेन युक्तिमत ॥

**इदानीं मार्गप्रसङ्गे निरोधस्यैव चतुर्थमाकारं दर्शयन्नाह ॥**

## (घ) मार्गसत्यम् चतुराकारम्

**उक्तो मार्गस्तदभ्यसादाश्रयः परिवर्तते ॥२०६॥**
**सात्म्येपि दोषभावश्चेत् मार्गवन्नाविभुत्वतः ।**

**प्रागेव मार्गं उक्तः तस्याभ्यासादाश्रयस्य चित्तसन्तानस्यालयस्य वा परिशुद्धत्वं भवति । आत्मात्मीयग्रहविपर्ययभूतस्य नैरात्म्यस्य सात्म्ये सकलदोषविश्लेषः ।**

### (सत्कायदृष्टिः)—

**ननु यथा दोषयोगे गुणयोगः तथा गुणयोगेपि दोषयोग इति न निःसरणं संसारतः । न(।)**

[1] तदानीन्तनमस्तित्वं चेत् न पूर्वधियागतं । [2] साक्षात्कृततया ।

दोषाणां गुणसम्भवेन बाधनात्। विपर्ययः कस्मान्न भवति। गुणानां वस्तुस्वभावत्वात्। कथमेतदिति चेदुच्यते ॥

विषयग्रहणं धर्मो विज्ञानस्य यथास्ति सः ॥२०७॥
गृह्यते सोऽस्य जनको विद्यमानात्मनेति च।

विज्ञानं मार्ग्गः प्रेरको जन्मिनां तस्य धर्म्मः स्वरूपं विषयग्रहणं। येन तद्विज्ञानं भवति। न विज्ञानमसंवेदनं भवति। असंवेदनानां तथाऽभावात्। यथा चास्ति तथा स गृह्यमाणो जनकः। आकारार्पणक्षमं हि कारणं विज्ञानस्य विषयः। तत् स्वरूपप्रतिपादनं विज्ञानस्य धर्मः। तथैव प्रतीयमानत्वं विषयस्य।[1] ततोऽनित्यानात्मादिरूपो विषयो विज्ञानं तथाभूतग्राह्येव नान्यस्तत्स्वभाव इत्याह।

एषा प्रकृतिरस्यास्तु निमित्तान्तरतः स्खलद् ॥२०८॥
व्यावृत्तौ प्रत्ययापेक्षमदृढं सर्पबुद्धिवत् ।

यस्य यो धर्मोऽनात्मकत्वादिग्रहणस्वभावः। असौ प्रकृतिः। तस्याः स्खलन्त्या आगन्तुकप्रत्ययवशात् अमूलकात् स्खलितञ्च(।) ततः स्खलनाद् व्यावृत्तौ प्रत्ययापेक्षमतोऽमूलकत्वात् अदृढं[2] फणिबुद्धिवत्। ननु फणिबुद्धेः सादृश्यदूरदेशत्वादयो रज्वां कारणानि। नित्यबुद्धेस्तु किं कारणं। न प्रत्यक्षं नित्यतायां प्रवर्तते। नाप्यनुमानं। नाशंका निःप्रमाणिकेति। प्रत्यक्षतश्च क्षणिकत्वं प्रतीयते इति साधयिष्यते। ततः कुतो नित्यत्वग्रहः। अत्राह। तां पुनरनित्यतां पश्यन्नपि मन्दबुद्धिर्नाध्यवस्यति सत्तोपलम्भेन सर्वदा तद्भावशङ्काविप्रलब्धः सदृशापरोत्पत्तिविप्रलब्धो वा अन्त्यक्षणदर्शिनां[3] निश्चयात्।

एतदुक्तं भवति। यदा तावदुपलब्धे पदार्थात्मनि पुनरनुपलम्भस्तदा पश्यत्येवानित्यतां। अतादवस्थ्यमनित्यतां ब्रूमः। किन्त्वनुपलब्धेपि मन्दबुद्धेराशङ्का न व्यपैति। ततः तद्भावं शङ्कत इति तद्भावशङ्कः। पूर्वं किमयमद्याप्यास्ते न वेति। ततः पुनर्दर्शनादर्थक्रियावाप्तेः। अविप्रलब्धः सन् किमयं न व्यवस्यति। विप्रलब्धो हि तदनवाप्तेर्व्यवस्येत् तन्न इव घटे।[4] अर्थक्रियालक्षणसत्तोपलम्भे तु को विपर्ययविवेचनस्यावसरो व्यवहारिणः(।) प्रतिभासभेदेन तु तत्त्वचिन्तकोध्यवस्यत्येव। व्यवहारी तु पुनरर्थक्रियार्थी। तदवाप्तेः परितुष्टः परं न विवेचयति। कृतार्थत्वात्। सदृशापरोत्पत्तिविप्रलब्धो वा सदृशे हि तदेवेदमिति बुद्धिर्यमजे।[5] पूर्वत्र मायागोलकतदर्थक्रियायामर्थादमात्रमेव[6] विवक्षितं। यतः परापरतृणादिकारणजातस्य वह्नेरेकताध्यवसायविषयता इन्धनमेव तत्रोपादानं न वह्निः न खलु वह्नेरेवोत्पद्यते वह्निः (।) आदावनुत्पत्ति[7]प्रसङ्गात्। उपलास्फालनेन प्राग् वह्नेरभावात। अथवा तत एव वह्नेरुत्पत्तिः। एवं सर्वे पदार्थाः पूर्वसमानजातीयादुत्पद्यन्ते। न वा समानजातीयं कारणं। कर्म्माधिपत्यादेवोत्पत्तेः। अत एतदपेक्षया विकल्पः। तच्च कर्म्मवादिमतेन पूर्वमुक्तं। अन्यमतेन परमिति निर्णयः।

---

[1] धर्म्मो व्यावृत्य बोधनीयः—बहिःपंक्ति पाठः
[2] T अदृढं
[3] T अन्त्यक्षण०
[4] T छग्स्-ऽपि-बुम्।
[5] T म्छे-म दङ.-स्प्रो-व-बृशिन्
[6] T तदर्थक्रियायां अविप्रलम्भमात्रमेव
[7] T न खलु वह्नेरेवोत्पद्यते वह्निः

अथवा अतद्भावशङ्काविप्रलब्ध इति व्याख्यातव्यं। न हि तद्भावे शङ्का काचिद्विद्यते। सर्वदा सत्तोपलब्धेः। अनुपलम्भे हि तद्भावे शङ्का भवेत्। यदा तु मध्ये अनुपलम्भस्तदा को वृत्तान्तः। अत्रापि सदृशापरोत्पत्तिविप्रलब्धो लूनपुनर्जातकेशनखादिवत्। मृतप्रत्यभिज्ञात एकत्वमिति चेत्। न(।) प्रत्यभिज्ञाया अप्रमाणत्वात्। प्रत्यक्षत्वानुमानत्वायोगात्। तथा च प्रतिपादयिष्यते। तस्मादान्तरा[1]दविद्योपप्लवादागन्तवो मलाः।

अत एवाह।

**प्रभस्वरमिदं चित्तं प्रकृत्या; (ऽऽगन्तवो मलाः)।**

नित्यत्वविरहितस्यैव तेन ग्रहणादागन्तवो **मलाः**।

असद्भूतसमारोपस्यामूलकत्वेन तौतमुद्रामात्रकत्वात्। न परमार्थतो नित्यत्वं क्वचित् प्रतिभाति। ततो विचारशून्यत्वादागन्तवो मलाः।

**तत्प्रागप्यसमर्थानां पश्चात् शक्तिः क तन्मये।**

प्रागप्यसमर्था एव श्रुतचिन्ताकाले यतः(।)।

**नालं प्ररोढुमत्यन्तं स्यन्दिन्यामग्निवद् भुवि ॥२१०॥**

**बाधकोत्पत्तिसामर्थ्य[2]गर्भे शक्तोपि वस्तुनि।**

नन्वहेतोरपि मृदुश्रद्धादिकस्यार्हत्वात् प्रहाणिर्भवत्येव। तत्कथमनुत्पत्तिर्दोषाणां। यद्यपि चोत्पत्तिर्दोषस्य तथाप्यन्तर्गतबाधकोत्पत्तिसामर्थ्ये शक्तोप्युत्पत्तुं। नात्यन्तं प्ररोढुं समर्थो मलः। यथा स्यन्दिन्यां भुवि अग्निरुत्पन्नो न प्ररोहति। सात्म्ये तु[3] स्थितस्य न दोषोत्पत्तिः। तथाहि।

**निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः ॥२११॥**
**न बाधा यत्नवत्त्वेपि बुद्धेस्तत्पक्षपाततः।**

नहि स्वभावो यत्नरहितेन निवर्त्तयितुं शक्यः। यत्नश्च दोषदर्शिनो गुणेषु वर्तते, दोषेषु च गुणदर्शिनः। न च सात्मीभूतनैरात्म्यदर्शनस्य। दोषेषु गुणदर्शनं। न गुणेषु दोषदर्शनं। अदर्शनं वा गुणेषु। नैरात्म्यदर्शन[4]स्य निरुपद्रवत्वात्।

ततः स्वभावो भूतात्मा निरुपद्रव एव च। कथमस्य परित्यागः कर्त्तुं शक्यः सचेतसा ॥७८४॥
पक्षपातश्च चित्तस्य न दोषेषु प्रवर्तते। ततः तस्य न दोषाय यत्नः कश्चित्प्रवर्तते ॥७८५॥

निखिलपदार्थस्वभावपर्यालोचनसमर्थस्य यदि नाम दोषोत्पत्तिस्तथाप्यसौ सत्योऽर्थः। प्रहीण इव पथिकः सम्वेगसमागमात्[4] मध्यस्थभावे वर्तमानो मार्ग एव यत्नमारभते गुणपक्षपातात्, न तु दोषेऽभिरमते।

ननु च रागद्वेषयोर्विपरीताकारत्वेपि नैकस्यैव बाधा। बाधितस्य रागस्य द्वेषेण पुनर्बाधकत्वदृष्टेः। तथा द्वेषस्य। तथा नैरात्म्यात्मदर्शनयोरपि[5] स्यात्। नैतदस्ति यस्मात्।

**आत्मग्रहैकयोनित्वात् कार्यकारणभावतः ॥२१२॥**

---

[1] ०दान्तरा० [2] बाधकोत्पत्तिसामर्थ्य वासनासंस्कारः—बहिः [3] तादात्म्ये तु०
[4] ऽदि ऽग्रोन्-पो-लस् ग्रोग्स्-बृसङ-पो दङ-ब्रल्-बृशिन्-दु [5] नैरात्म्यात्मदर्श०

**रागप्रतिघयोर्बाधा भेदेपि न परस्परं ।**

द्वयोरप्यात्मग्रहकारणत्वात् सत्यात्मग्रहेनात्यन्तमेकस्याप्युच्छेदः । सत्यपि परस्पर-वैपरीत्ये अयुगपद्भावश्च स्यात् । किञ्च(।) ।

कार्यकारणभावादपि यो हि यत्र विवक्षितो(।) । दुःखहेतौ स पीडितो नियमेन सुखहेत्वर्थमिच्छति तत्रान्यत्र वा । तेनानयोः कार्यकारणभावः सुखहेतौ अनुगृहीतो नियमेन तदुपघात इति प्रतिघवान् । अतः कार्यकारणभावात् न बाधा भेदेपि रागप्रतिघयोः । अत एव ।

**मोहाविरोधान्मैत्र्यादेः नात्यन्तं दोषनिग्रहः ॥२१३॥**

**तन्मूलाश्च मलाः सर्वे ; स च सत्कायदर्शनं ।**

यद्यपि द्वेषस्य प्रतपक्षो मैत्री(।) रागस्याशुभा(।) विहिंसाप्रतिपक्षः करुणा(।) ईर्ष्या-प्रतिपक्षो मुदिता । सर्वस्य प्रतिपक्षउपेक्षा । तथापि नात्यन्तं दोषनिग्रहः मोहाविरोधात् ।

ननु सत्यपि मोहेऽहङ्काराभावात् सकलदोषप्रहाणमेव ।

नैतत्साधीयः । स एव मोहः सत्कायदर्शनं । क्लिष्टो हि मोहः सत्कायदर्शनमेव ।

अर्हतान्तु यदज्ञानं न तत् क्लिष्टमतो न ते । मोहेप्ययुक्तसन्ताना हीनसत्कायदर्शनाः ॥७८६॥

**विद्याया प्रतिपक्षत्वात् चैत्तत्वेनोपलब्धितः ॥२१४॥**

**मिथ्योपलब्धिरज्ञानयुक्तेश्चान्यदयुक्तिमत् ।**

नन्वसंप्रख्यानरूपाऽविद्या सत्कायदर्शनन्तु प्रतिपत्तिरूपं तत्कथं सत्कायदर्शनमेवा-विद्येति(।) न दोषो यतः ।

असंप्रख्यानरूपादेरविद्यानिर्वृतेरपि । तत्त्वं स्यादुपधीनां हि क्षये किमवशिष्यते ॥७८७॥

असंप्रख्यानं हि निरुपधिशेषे निर्वाणे । निरोधसमापत्तौ च मुख्ये । अथ तस्य क्लेशनिदानत्वं नास्ति । न तर्हि तदविद्यालक्षणं । सत्कायदृष्टिरेव तन्निदानत्वादविद्या नापरा(।)यतः ।

विद्याविरुद्धो धर्मोऽन्योऽविद्याऽधर्म्मा नृतादिवत् । विद्या नैरात्म्यदृष्टिषु तद्विरोध्यात्मदर्शनं ॥७८८॥

न तावद्विद्याभावोऽविद्या तद्भावस्य निर्वाणेपि भावात् । न चाभावो हेतुः । नापि-तदन्यो, रूपादीनामविद्यात्वप्रसङ्गात् । तस्माद्विद्याविरुद्धो धर्मोऽविद्याऽधर्म्मानृतवत् । तच्च सत्कायदर्शनमेव । तथाहि (।) परानुग्रहलक्षणो धर्मस्तदभावमात्रं नाधर्मोपि तु तदन्यमात्रं । अपितु अनुग्रहविरुद्ध उपघातोऽधर्म्मः । तथा न भूतार्थप्रतिपादनाभावोनृतमपि त्वभूत-प्रतिपादनमसत्यवचनं । एवं सति सत्यार्थे यदा भ्रान्त्या नास्तितां मन्यमानोऽस्तीति प्रति-पादयति । तदाऽसत्यता न स्यात् । असति च सत्यतां मन्यमानः तदा मृषा स्यात् । नैतदस्ति ।

विकल्प्यविषयाः शब्दाः यद्यथा वस्तुनिश्चितं । तथैव वचनं सत्यमन्यथा वचनं मृषा ॥७८९॥

अध्यवसीयमानवस्तुविषया हि शब्दाः । अध्यवसायानुरूपप्रतिपादनमेव सत्यताऽन्यथा[1]

---

[1] T. असंप्रख्यान रूपादेरविद्यानिर्वृतेरपि । शरीरमुपधी०

असत्यतेति न्यायः । बोधिसत्त्वानान्तु भ्रान्त्यापि सत्त्वविसम्बादनं परमवद्यं । अत एव ते सर्वाकारज्ञतायामभियोगिनो भवन्ति । ततः सत्कायदृष्टेरेवाविद्यान्यस्य विद्याप्रतिपक्षत्वाभावात् । चैत्तत्वेन च कारणेनोपलब्धितः । मिथ्योपलब्धिरेवाविद्या । आश्र[2] याल-म्बनाकारकालद्रव्यसमताभिः समं प्रयुक्ताः । इति सम्प्रयुक्ताः उक्तञ्च "प्रज्ञाकारविपरीत-प्रतिपत्तिरुपैवाविद्येति" । तत्र तत्र सूत्र उक्ताः । "तत्र कतमोऽज्ञानविगमो यो यथाभूतानां धर्माणामध्यारोपाधिगमः । तथा याः काश्चन लोकोपचारोपपत्तयः सर्वास्ता आत्मा-भिनिवेशतो भवन्ति । आत्माभिनिवेशनिगमतो न भवन्ति" । नन्वात्माभिनिवेशो दृष्टिः । सा चाविद्यासंप्रयुक्ता । ततो दृष्टिद्वारेणाविद्यैवोक्तेति मन्तव्यं । नान्तरीयकत्वात् न तु सत्कायदृष्टिरेवाविद्येति । नैतदपि साधीयः ।

अविद्याङ्गेहि निर्देश्ये तत्स्वरूपप्रकाशनं । युक्ता तदन्यनिर्देशः कौशलं न निवेदयेत् ॥७९०॥
प्रमाणमत्र न किञ्चित् अविद्यैवं निवेदिता । विपर्यये प्रमाणन्तु यथावदुपदर्शितं ॥७९१॥

दृष्टिद्वारेणाविद्यैव निर्दृष्टेति न किञ्चिदत्र प्रमाणं । सत्कायदृष्टिरेव त्वविद्या सर्व-दोषनिदानं इत्युपदर्शितमत्र प्रमाणं ।

ननु सत्कायदृष्टिर्मोहजदेशभूता[1] । मोहस्तु सकलक्लेशानुगतोऽसंप्रख्यानलक्षणो-ऽन्यथा वा स कथं सत्कायदृष्टिरुच्यते । विशेषशब्दस्य सामान्यार्थत्वाभावात् । तथा यद्यविद्यादृष्टिरेव तदा दृष्टिसंप्रयुक्ताऽविद्येति संप्रयुक्तार्थो न स्यात् न स तेनैव संप्रयुक्तः । अत्र चोद्ये परिहारः ।

व्याख्येयोऽत्र विरोधो यः तद्विरोधाच्च तन्मयैः ॥२१५॥
विरोधः शून्यतादृष्टेः सर्वदोषैः प्रसिध्यति ।

सामान्यविशेषभावेन हि भेदप्रकल्पनया संप्रयुक्तार्थः । तद्यथा पलाशयुक्तं वनमिति । परमार्थतः पलाशस्वभावतैव कथिता एवं विशेषाभिधानेन तत्स्वभावोऽविद्यानिदानभूता प्राधान्येन निर्दिष्टा । यत आत्मदर्शनमविद्या, ततः तन्मूलकाः सर्व एव क्लेशाः । नैरात्म्य-दर्शनात् मूलच्छेदकारिणो मूलच्छेदादुच्छिद्यन्ते । यतः सकलक्लेशविरोधि नैरात्म्यदर्शनं तच्च योगिनो न व्यपैतीति न पुनः क्लेशोदयः । ततो निःसरणाकारता निरोधस्य कथिता ।

नाक्षयः प्राणिधर्मत्वाद्रूपादिवदसिद्धितः ॥२१६॥
सम्बन्धे प्रतिपक्षस्य त्यागसंसर्जनादपि[2] ।
न काठिन्यवदुत्पत्तिः पुनर्दोषविरोधिनः ॥२१७॥
सात्मत्वेनानपायत्वात् अनेकान्ताच्च भस्मवत् ।

—इत्यन्तरश्लोकौ ।

नन्वात्मभावनादपि भवत्येव मोक्षः । तत् किं नैरात्म्यदर्शनेन । अत्राहागमः । "आत्मा···मन्तव्य"[3] इत्यादिः । तदप्यसत् । यतः ।

यः पश्यत्यात्मानं तत्राहमिति शाश्वतः स्नेहः ॥२१८॥
स्नेहात् सुखेषु तृष्यति तृष्णा दोषाँस्थिरीकुरुते ।

---

[1] T. मोहैकदेशसंभूता. [2] T. त्यागसंदर्शनादपि.

[3] "आत्मा वा अरे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"—बृहदारण्यक ४।५।६

आत्मदर्शी हि नियमेन आत्मनि शाश्वतेन स्नेहेन सम्बध्यते। स्नेहाच्च तत्सुखेषु तृष्णावान्। यस्य यत्र स्नेहः स तत्सुखे परितर्षवान्। यथा पुत्रादिसुखे।

नन्वात्मदर्शनादात्मनि स्नेहः इत्युक्तं। किं काष्टदर्शनादेः काष्टे स्नेहः स्त्रीदर्शनादेव स्त्रियां। तस्मात् यः पश्यत्यात्मानं तत्र तस्य स्नेह इत्ययुक्तं। नैतदस्ति।

यस्यान्यत्र स्नेहः तस्यात्मनि न भवतीति कुतः।

स्नेहो दृश्यत एवात्मन्यत्र नास्ति विवादिता। आत्मस्नेहं विनान्यत्र स्नेह इत्यतिदुर्घटं ॥७९२॥

यद्यात्मदर्शनमात्रकेण न स्नेहः स्नेह एव कस्यचिन्न स्यात् अन्यस्य कारणस्याभावात्। काष्टञ्च आत्मोपयोगि न पश्यति। तेन न स्नेहः। यस्य चात्मोपयोगिनि स्नेहः स कथमात्मनि न स्नेहवान्। अथ सत्त्वविशेषादात्मनि स्नेह एव नास्ति। परत्र तु महानुभावतया करुणातः स्नेहवान्। तदसत्।

महानुभावता नाम परोपकरणं यदि। अप्रेक्षापूर्वकारित्वे तथा सत्यसमंजसं ॥७९३॥

आत्मानं परित्यज्य परोपकारणीकुर्वता स्वार्थं महदप्रेक्षापूर्वकारित्वं आत्मनि प्रकटितं स्यात्।

अथ परार्थक्रियैव सुखं। तथा च सति।

सुखत्वासङ्गसम्मूढः कथं मुक्तः तथा च स। गणिकास्वाङ्गसम्मर्दमपि कुर्यात् स तादृशः ॥७९४॥
असत्त्यव्यवहारोयमिति चेत नास्त्यसत्त्यता ॥

स्वात्मव्यवस्थितो यथा ध्यानसुखमाकांक्षति तथा गणिकाङ्गसङ्गमसुखमपि। न खलु सुखस्य तस्यापरस्य वा विशेषः। असत्त्यता तथा स्यादिति चेत् नासत्त्यता विशेषाभावात्। नरकादिगमनाञ्च युक्तमिति चेत्। न (।) महानुभावताविशेषात् परार्थं नरकगमनाङ्गीकरणं। महती महानुभावतेति तथाभ्यासादसत्त्यव्यवहारोऽन्यश्च सुखहेतुः। ततो वरं सत्त्यव्यवहारोऽङ्गीकृतः। न विशेषाभावात्। तथा चात्मनि सतृष्णस्तद्वशाद्दोषादोषौ समीकुर्य्यात्। ततो दोषतिरस्करणं।

**गुणदर्शी परितृष्यन्ममेति तत्साधनान्युपादत्ते ॥२१९॥**
**तेनात्माभिनिवेशो यावत् तावत् स संसारे।**

आत्मनि परमार्थतया विद्यमाने यस्तत्रोपकारः सोपि परमार्थः। ततः परमार्थोपकारी यः स एव गुणवानिति प्रतीयात्। ततो गुणदर्शी ममेति साधनान्युपादत्ते। तेनात्माभिनिवेशात् संसार इति। सुखसाधनं गर्तसूकरीसंस्पर्शमपि प्रार्थयते।

तस्माद्(।)

**आत्मनि सति परसंज्ञा स्वपरविभागात् परिग्रहद्वेषौ ॥२२०॥**
**अनयोः संप्रतिबद्धाः सर्वे दोषाः प्रजायन्ते।**

आत्मपरविभागो हि परिग्रहद्वेषौ जनयेत्। ततः परिग्रहद्वेषसंप्रतिबद्धा ईर्ष्यामात्सर्यादयो दोषा भवन्ति।

अथापि स्यात्। आत्मन्येव स्नेहो नात्मीये तेनात्मीयस्नेहाभावात् असत्त्यव्यवहाराभावः। अत्रोच्यते।

**नियमेनात्मनि स्निह्यँस्तदीये न विरज्यते ॥२२१॥**
**न चास्त्यात्मनि निर्दोषे स्नेहापगमकारणं ।**

आत्मनि हि स्नेहः प्रवर्तमानो न दोषमन्तरेणापैति। न च स्नेहवान् आत्मनि आत्मीये निःस्नेहः। तस्मादात्मनि आत्मीये च स्नेहवान् सकलदोषतिरस्करणेन सर्वत्रावृत्तिमानिति संसारसङ्गम एवास्याविरतः। अथात्मनि आत्मीये च स्नेहस्य संसारहेतुत्वात्, स्नेहसङ्गतस्य च दुष्टत्वात्। आत्मीयस्य न तत्र स्नेहः।

(मार्गभावना)—

अन्यदोषदुष्टत्वेपि स्नेहो न क्रियते किं पुनर्यत्र स्नेह एव दुष्टो भवति। तत्राह।

**स्नेहः सदोष इति चेत् ततः किं तस्य वर्जनं ॥२२२॥**
**अदूषितेऽस्य विषये न शक्यं तस्य वर्जनं ।**

अन्यदोषेण हि स्नेहो नेति विषयदोषाद्युक्तमेतत्। अदुष्टे तु विषये स्नेहाभावो न युक्तः। सुखहेतौ नास्ति दोषो गुणस्य भावात्। अथ स्नेह एव दोषः। भवतु किं भविष्यति। दुष्टत्वात् स्नेहस्य वर्जनमिति चेत्। नैतदस्ति। विषयदोषमन्तरेण स्नेहपरित्यागाभावात्। तस्मात्।

**प्रहाणिरिच्छाद्वेषादेर्गुणदोषानुबन्धिनः ॥२२३॥**
**तयोरदृष्टिर्विषये[1]; न तु बाह्येषु यः क्रमः ।**

इच्छाद्वेषौ हि गुणदोषदर्शनाद् भवतः, तदभावान्न भवत इति न्यायः। आत्मसुखसाधनञ्च गुणः। तद्दुःखसाधनं दोषः। तच्चेद्विद्यते। नास्तीच्छाद्वेषप्रहाणं।

अथापि स्यात्। बाह्यं वस्तु गुणवदपि परित्यज्यते।

तदप्यसत्। बाह्यं वस्तुहि बाह्यकारणाधीनं परित्यज्यते स्नेहात्मदर्शनबलादुपजायमानोऽपरापरः कथं परित्यक्तुं शक्यः। विषयस्य हि स्नेहविषयत्वमुपादानञ्च गुणत्वेन तदभावात्। तत्र स्नेहपरित्यागोऽनुपादानञ्च। स्नेहस्य तु न गुणवत्त्वात् उपादानमपि तु विषयगुणात्। ततो विषयगुणकारणसद्भावात् कुतः स्नेहस्यानुदयः।

**नहि स्नेहगुणात् स्नेहः किन्त्वर्थगुणदर्शनात् ॥२२४॥**
**कारणे (ऽ) विकले तस्मिन् कार्यं केन निवार्यते ।**

—इति संग्रहः।

अपि च।

**का वा सदोषता दृष्टा स्नेहे दुःखसमाश्रयः ॥२२५॥**
**तथापि न विरागोत्र स्वत्वदृष्टे[2]र्यथात्मनि ।**

आत्मा हि प्रथमं दुःखसमाश्रयः। आत्मनि सति पश्चात् स्नेहो दुःखस्य कारणं। अत्माभावे तु कस्य दुःखं। तत उभयस्यापि दुःखहेतुत्वात् द्वयोरपि न विरागो न चैकत्रापि।

अथापि स्याद् (।) आत्मनि दुःखहेतुत्वं परोपाधिकं न तस्यापि स्वगतो दोषः। आत्मस्नेहधर्माधर्म्मसंस्कारसहायः आत्मा दुःखहेतुरत्राह।

---

[1] T. तयोरदृष्टि० [2] T. स्नेहार्थदर्शनबलादु०

**न तैर्विना दुःखहेतुरात्मा चेत् तेपि तादृशाः ॥२२६॥**
**निर्दोषं दुःखमप्येवं वैराग्यं न द्वयोस्ततः ।**

नखल्वनिर्दोषे वैराग्यं कस्यचित् न चात्मस्नेहोदय आत्मानमाश्रयमन्तरेण[1] दुःखहेतवोऽतो न तेप्यात्मवत् सदोषाः । अतो न वैराग्यसम्भवः ।

**दुःखभावनयास्याश्चेदहिदष्टाङ्गहानिवत् ॥२२७॥**
**आत्मीयबुद्धिहान्यात्र त्यागो न तु विपर्यये ।**
**उपभोगाश्रयत्वेन गृहीतेष्विन्द्रियादिषु ॥२२८॥**
**सत्त्वधीः केन वार्येत वैराग्यं तत्र तत् कुतः ।**

ननु सुखहेतुत्वं स्नेहस्य ।[1] हेतुतस्तद्विपर्ययसम्भवाद् वैराग्यं । न खल्वपकारिणि स्नेहः ।

अत्रोच्यते । नात्मीयबुद्धिविषये दुःखहेतावपि स्नेहविगमो दृष्टः । तस्मादात्मीयबुद्धिपरित्यागे वैराग्यं । आत्मीयबुद्धेरेव परित्याग इति चेत् । नोपभोगाश्रयत्वेन प्रतिपन्नेषु शरीरादिषु कस्यचित्[2] आत्मीयबुद्धिविगमः । तथा हि देवः स्यां नागः स्यामिति विशिष्टं शरीरादि मम स्यादिति तेष्वात्मीयबुद्धिं विधत्ते । तत एवंभूतबुद्धिमानेव कथं विरक्तः । तथाहि ।

**प्रत्यक्षमेव सर्वस्य केशादिषु कलेवरात् ॥२२९॥**
**च्युतेषु सा घृणा बुद्धिर्जायतेऽन्यत्र सस्पृहा ।**

यदाहि[1] केशादिषूपभोगविषयता तदा सस्पृहतात्मीयबुद्धिजन्मिका । यदा तु विपर्ययः तदा वैराग्यं सस्पृहताविगमस्वभावं नान्यथेति विभागः ।

किञ्च । वै शे षि का दीनां ।

**समवायादिसम्बन्धजनिता तत्र हि स्वधीः ॥२३०॥**
**सम्बन्धः स तथैवेति[3] दृष्टावपि न हीयते ।**

सुखादिना समवायसम्बन्धः । शरीरेण संयोगः । शरीराश्रितैः रूपादिभिः संयुक्तसमवायः (।) रूपत्वादिभिः समवेतसमवायः । श्रोत्रेन्द्रियेण संयोगः (।) चक्षुरादिना सांयोगिसंयोगः । इत्यात्मसम्बन्धो न व्यपैति । ततो दोषदर्शनेपि न हीयते तेषु स्नेहः । अथ समवायादिसम्बन्धं नाङ्गीकुर्य्यात् । तत्रापि परिहारः ।

**समवायाद्यभावेपि सर्वत्रास्त्युपकारिता ॥२३१॥**

उपकारप्रभावितो हि सर्वत्र स्नेहः । तेन कुतो वैराग्यादयः ।

अथ परः प्रत्यवतिष्ठेत ।

**दुःखोपकारानुभवेदङ्गुल्यामिव चेत् स्वधीः ।**
**न ह्येकान्तेन तद् दुःखं भूयसा सविषान्नवत् ॥२३२॥**

यथा तद् दुःखं तथा सुखमपि । सविषान्नवत् । नहि सविषमन्नं दुःखमेव । सुखत्वस्यापि सम्भवात् । तथा गर्तसूकरादिशरीरं दुःखमपि सुखमेव । कथञ्चिदतो न परि-

---

[1] T. स्वयंदृष्टेर. [2] T. धर्माधर्मसंस्कार. [3] मनोरथ०—सा तथैवेति सा दोष

**त्यागविषयः इन्द्रियादिः। ननु तादृशं दुःखसम्मिश्रं दुःखमेव। एवं तर्हि सुखसङ्गतं सुखमेव इति प्राप्तं। किञ्च (।)।**

**विशिष्टसुखसङ्गात् स्यात् तद्विरुद्धे विरागिता।**
**किञ्चित् परित्यजेत् सौख्यं विशिष्टसुखतृष्णया ॥२३३॥**
**नैरात्म्ये तु यथालाभमात्मस्नेहात् प्रवर्तते।**
**अलाभे मत्तकाशिन्या दृष्टा तिर्यक्षु कामिता ॥२३४॥**

**यदि विशिष्टं सुखं लभ्येत स्यादन्यथा वैराग्यं। न चाविवेकिनो विशिष्टसुखतृष्णा विवेकाभावादेव। विवेको भविष्यतीति चेत्। विवेक एव तर्हि दुःखहेतुरिति विवेक एव वैराग्यं स्यात्। अथ विवेकोऽवश्यमेव हेतुबलादेवं तर्हि नैरात्म्यावबोधतोपि विवेकवतोऽनिवार्य्य एवेति नात्मदर्शनान्मोक्षः। आत्मभावना त्वसम्भविनी।**

यादृशः खल्वसावात्मा सुखादीनां समाश्रयः। तादृशे भावनाभावात् तादृशोसौ कुतोऽन्यथा ॥७९५॥

**बुद्धिसुखदुःखेत्यादिसमाश्रयो ह्यसावात्मा। भाव्यमानोप्यसौ तादृश एव भवेत्। अथ पुरुषकाराश्रयाद् दोषरहितोऽसौ क्रियेत। तदसत्।**

घृष्यमाणोहि नाङ्गारः शुक्लतामेति जातुचित। निजः स्वभावसम्पर्क्क. केनचिन्न निवार्यते ॥७९६॥
न च दुष्टः स्वयंस्वस्य दोषव्यावर्तनक्षमः। दुष्टोऽदुष्टः कथं भावी न सोऽन्यो भवति क्वचित् ॥७९७॥

**अत एवाह।**

## (आत्मवादे दोषाः)--

**यस्यात्मा वल्लभः तस्य स नाशं कथमिच्छति।**

दुष्टो रागादिना नात्मा तेन योगे पृथक् स्वयं। न दण्डयोगे दण्डत्वं दण्डिनो भाविकं भवेत् ॥७९८॥
असंविदितरागादेर्न रागित्वादिसम्भवः। सम्वेदनाद्रागिता चेत् स्त्रीमान् स्यात् तन्निरुपणात् ॥७९९॥
सम्बन्धाद्रागिता तस्य न तु रागादिवेदनात्। रागादिवेदने योगी रागी स्यात् पररागतः ॥८००॥
व्यतिरेके विशेषः कः संयोगसमवाययोः। भेदस्याप्रतिपत्तिश्चेत् भेदस्तर्हि कुतो मतः ॥८०१॥
भिन्नमात्मस्वरूपञ्चेत् न वेत्यात्मा स्ववित् कथं।
नहि स्वरूपसम्वित्तौ भ्रान्तिरस्तीति साधितं ॥८०२॥
अथासम्वेदनस्यास्य वेदनं घटरूपवत्।
ग्राह्यत्वात् ग्राहकं तत् स्यात् नेति नास्यास्ति भोक्तृता ॥८०३॥
रसादीनां हि भोग्यत्वे भोक्तृता नोपलभ्यते।
भोक्ता ततोऽन्य एव स्यात् एवञ्चेत्यनवस्थितिः ॥८०४॥
भोगस्तत्समवेतश्चेत् तेन भोक्ता स कथ्यते। न भोगोनुभवादन्यः स च भोग्येप्यवस्थितः ॥८०५॥
मयि बुद्धिर्ममात्रेति प्रबोधो लोक ईदृशः (।) तेनाधार्याधारभाव उभयत्रापि विद्यते ॥८०६॥
अथानुमीयमानोऽसौ भोक्तेति व्यपदिश्यते। प्रत्यक्षासम्भवे तत्र नानुमानमिति स्थितिः ॥८०७॥
अथासौ योगिनामेव गम्य इत्युपदिश्यते। अतिसूक्ष्मतया तस्य वेदनं नास्मदादिभिः ॥८०८॥
इदानीं तावदस्माभिर्वेदनं नास्य संभवि। तामवस्थागतानान्तु न विद्मः किं भविष्यति ॥८०९॥
योगिभावमुपक्षिप्य वस्तूनां यदि निर्णयः। अस्माकं ते योगिभिस्तस्य नाभावस्य न वेदनं ॥८१०॥

**तस्मात् स्वसम्वेदनरूप एवात्मा उपशान्तो[1]ऽन्यथा तस्याभावप्रसङ्गात्। स च सुखादि-सम्वेदनस्वभावो यद्यन्यथा भवेत् नाश एवास्य स्यात् (।) यस्य चात्मा वल्लभः स तस्य नाशं कथमिच्छेत्।**

दुःखे च तेनात्मैष्टव्यो यदि दुःखी सुखी ननु। दुःख्यवस्थाविनाशे हि नष्ट एव स्वयं भवेत् ॥८११॥
अवस्थास्तस्य नाशिन्यो नावस्थातेति[2] चेन्मतं। तद्रूपव्यतिरेकेण नावस्थातोपलभ्यते ॥८१२॥

**अथापि स्यात् (।) सम्विद्रूपता न विनश्यत्येव। सुखादीनामेव विनाशः। नैतदस्ति।**
सुखादिभेदात्सम्वित्तेरपि भेदः प्रसज्यते। सुखादिव्यतिरेकेण सम्वित्त्यनुपलम्भनात् ॥८१३॥
आत्मभूतेन भिन्नेन नाभिन्न उपलक्ष्यते। यथा तस्यैव भेदस्य नाभेद उपलक्ष्यते ॥८१४॥
सम्वित्सम्विदितिज्ञानाद्भेदो यदि विभेद्यते। अतएव परात्मापि परस्यात्मा स्वयं भवेत् ॥८१५॥
नैव सम्वेदनं तस्येत्येतदप्यतिदुर्घटं। असवेदनभावो हि सर्वोन्यः स्यादनात्मकः ॥८१६॥
पृथक् संवेदनं तच्चेत् एकता न क्वचिद् भवेत्। ततो न पूर्वापरयोरकतेति विनाशिता ॥८१७॥

**तथा च।**

यस्यात्मावल्लभस्तस्य विनाशं कथमिच्छति। कूटस्थनित्यतायां हि तत्रैवास्थितिरिष्यतां ॥८१८॥
प्रत्यभिज्ञाप्रभावाच्चेत् नात्रातीव प्रसज्यते। तद्रूपसम्भवे सैव प्रत्यभिज्ञा न किम्मता ॥८१९॥
विषयासम्भवेनादिवासनामात्रभाविनी। प्रत्यभिज्ञा पदार्थानां भवेन्नस्थितिकारणं ॥८२०॥
ननु कूटस्थनित्यत्वे नोत्तरोत्तरवेदनं। तथापि तस्य नित्यत्वं प्रसिध्यतु मते तव ॥८२१॥
समानतोपलम्भे वा स्यादेकत्वमिद मतं। असमानोपलम्भेतु स्पष्टे भेदे विनाशिता ॥८२२॥

**यद्यपि नाम कूटस्थनित्यतया नोत्तरोत्तरोपलम्भस्तथापि तस्य नित्यताऽविकारितैव।**

**तथा क्रमाभावेन चोपलम्भस्य।[3] तस्माद्यदि क्रमभाव्युपलम्भस्तस्य त्रुट्यत्तयो[4]-पलम्भनाश एव प्रसक्तः। एवं च क्रमोपलम्भेच्छायां नाशेच्छैव प्रसक्ता। ततश्च।**

**यस्यात्मा वल्लभस्तस्य स नाशं कथमिच्छति।**

**अनुपलम्भं कथमिच्छतीति चेत्। मृताद्वरं दुर्बलता। वल्लभत्वेस्य जीवितं वरमस्तु न मृद्वृष्टिः[5] जीवितस्योपरोधिनी। नन्वदृष्टेन तेन किं कर्तव्यमिति। पुनर्दर्शनमेषितव्यं। तथा च सति क्रमभावित्वे स एव विनाशः। अयमपरोऽस्त्येवात्मवादिनो दोषः। अथवा समानरूपोपलम्भाद् एकता पूर्वापरयोर्युक्ता। भिन्नरूपोपलम्भे तु भिन्नतैव स्पष्टा(।)तथा च सति पूर्वकस्य विनाशः। एवं च यस्यात्मा वल्लभस्तस्य विनाशं कथमिच्छति।**

**अथवा बोधरूपतया आत्मा सर्व एक एव। सतु पुनरुपाधिभेदाद् भेदमाश्रयते। यथाकाशस्य एकत्वे घटाकाशं पटाकाशमिति भेदावभासः। तस्मादात्मनामविद्याकृत एव भेदः। यद्येवं।**

मुक्तस्य भ्रान्त्यभावेन यद्यन्यात्मतया स्थितिः। न स्यादात्मा स एवैकः तदवस्था भवस्थितिः ॥८२३॥

**यदि घटाकाशं घटाभावे न भवति यथा तथाऽविद्याभावे न भवेत् प्राणी (।) तथा सति घटाकाशाभावे सत्यन्येन सहैकमाकाशं जातमिति। आकाशविभागाभाववदात्म-**

---

[1] T. अभ्युपगन्तव्यो [2] T. न अवस्थाता इति
[3] T. नित्यता क्रम० [4] दे-खोल्-बु-ञिद्-दु [5] न मृत्युदृष्टिः

**विभागोपि न स्यादिति न स्वपरविभाग इति विनष्ट एवात्मा स्यादहमिति। परव्यवच्छेदेनात्मत्वात्। आकाशतामुपगतस्य न क्रियाभोगादय इति नाकाशाद्विशेषः। ततो यद्यात्मा वल्लभस्तस्य स नाशं कथमिच्छति। वस्तुबलादिदमायातमिति चेत्। नैरात्म्यमेव र्तिह प्रसक्तं।**

स्वरूप(सं)विन्मात्रस्य व्यापिता केयमुच्यते। अनेकदेशावष्टम्भे व्याप्तिरुच्येत मुख्यतः ॥८२४॥
अनेककालव्यपित्वे नित्यता व्यपदिश्यते। न व्यापित्वं न नित्यत्वं कथमात्मा व्यवस्थितः ॥८२५॥

**अथापरघटादिरूपेणासौ व्यवस्थितः तथा सति सुतरामेव संसारी देवदत्तादिरूपेणापि व्यवस्थानात् तस्मान्मुक्तत्वे सत्यभाव एव तस्याकाशवदिति। न च तादृशां मोक्षेण किञ्चित् प्रयोजनमित्यहो महत्प्रेक्षापूर्वकारित्वं योगिनां।**

**अथ परमार्थतो नात्मा क्रियाभोगाद्याश्रयस्तत्वं। तस्याविद्यावशादेव तथा स्नेहादयः। अत्र परिहार उच्यते।**

**निवृत्तसर्वानुभवव्यवहारगुणाश्रयं ॥२३५॥**
**इच्छेत् प्रेम कथं? प्रेम्णः प्रकृतिर्नाह तादृशी।**

**सर्वव्यवहारातीताद्यात्मोपलम्भतूलावलम्बि[1] गगनात्मैवाऽतो यस्य यत्र प्रेमासौ न तं तादृशमिच्छति। प्रेम्णः प्रकृतिरेवैतादृशी न भवति। भवन्ती वाऽप्रेक्षापूर्वकारितां परिदीपयेत्। तद्वरं संसार एव प्रार्थितः। संसारसुखस्यापरितोषजनकत्वादिति चेत्। उच्यते।**
निर्वाणेपि सुखं नैव परितोषक्रियाक्षमं। प्रार्थनीयतयाऽत्यन्तं सुखत्वात्सकलं सुखं ॥८२६॥

**नहि सुखमप्रार्थनीयं नाम किञ्चिदस्ति। ततः सकलसुखसम्पदासीनस्यापि ततः परं सुखातिशयवाञ्छा विद्यत एव। तदेव सुखं पुनः पुनः प्रार्थयत इति नाप्रार्थनं[2] चित्तमस्यास्ति। प्रार्थना च नाम तृष्णा[3]ऽपरव्यपदेशा। महदेतन्महतां दुःखं, ततः सर्वं सुखमपरितोषजनकमेव। ततः सुखी न कश्चिदपि परिनिर्वृतः। यतः पर्यायेण सकलसुखाकांक्षैवास्य भवति। ततः दृष्ट्वा वानुपादानं ततः सुखस्य कर्मोपचिनोतीति संसार एवानेन स्थातव्यं(।)।**

**ननु वैराग्यमपि दृश्यत एव न नाम न दृश्यते। तत्तु सुखाशयैव यतः परिखिन्नः। तदुपायान्वेषणप्रयासेन दुःखमेव मन्यमानः सुखाभिमुखः प्रकारान्तराभिलाषी वैराग्यमभिमुखी करोति नत्वात्मनि निस्नेहः। अत एवाह।**

**सर्वथात्मग्रहः स्नेहमात्मनि द्रढयत्यलं ॥२३६॥**
**आत्मीयस्नेहबीजं तत्तदवस्थं व्यवस्थितं।**

**अयमत्र परमार्थः।**

यावदात्मग्रहस्तावदात्मस्नेहान्न मुच्यते। आत्मीयेपि ततः स्नेह उपकारसमाश्रयात् ॥८२७॥

**नन्वात्मग्रहमेवायं परित्यज्य दोषपरिहाराय वर्त्तिष्यते। ततः कथमात्मीयस्नेहादयः। उच्यते। यद्यात्मग्रह एवास्य नास्ति दोषनिराक्रिया किमर्थं। नह्यनर्थित्वे किञ्चित् कर्तुं प्रवर्तते।**

दुःखभागन्यथा स्याच्चेत् न तं दुःखिनमिच्छति। न च तत्र ग्रहस्तस्येत्येतदन्योन्यबाधितं ॥८२८॥

---

[1] T. तोह्यात्मा उपलकाष्टतुलाव० [2] T.इति न प्रार्थि०

परार्थकरणेच्छायां सुखिनं तं यदीच्छति । परेण क्रियतामेव[1] रुचावात्मग्रहः पुनः ॥८२९॥
आत्मनः क्षणिकत्वेपि विशिष्टक्षणसम्भवात् (।) परार्थः[2] सम्भवत्येव तस्मादात्मग्रहो वृथा ॥८३०॥
महानुभावता योगात्तेनैव यदि तत् क्रिया । महानुभावता कैव तस्य मिथ्याभिमानिनः ॥८३१॥
तस्मात् दुःखिनमात्मानं यो न वाञ्छति भावतः । स एवात्मग्रहस्तस्य तथात्मीयग्रहोदयः ॥८३२॥
अथ दीर्घकालसुखाकांक्षो नात्मीयग्रहवान् यदि । दीर्घकालसुखादृष्टेरिच्छा तत्र कथं भवेत् ॥८३३॥
कदाचित् स्यादिति यदि प्रवृत्तिर्न भवेदपि । न स्यादपि कदाचित्तन् नष्टा मर्कटचान्द्रिका ॥८३४॥
योग्यवस्थागतस्यास्य न विप्रः किं भविष्यति । अन्योन्यसंश्रयादेवं वृत्तिस्तत्र भवेत् कथं ॥८३५॥

**तस्माद् (।)**

**यत्नेप्यात्मीयवैराग्यं गुणलेशसमाश्रयात् ॥२३७॥**
**वृत्तिमान् प्रतिबध्नाति तद्दोषान् संवृणोति च ।**

**यस्य नामात्मग्रहः स यत्किञ्चित् आत्मोपकारिणं गुणलेशमाश्रित्य तत्राभिमुखीभूत आत्मीये वैराग्यं प्रतिबध्नात्येव दोषदर्शी (।) नैवमिति चेत् न दोषदर्शनस्यैव तेनगुण दर्शनेन प्रतिबन्धात् । तस्मादात्मन्यविरक्तो विरक्त एवात्मीये ॥**

**आत्मन्यपि विरागश्चेत् नेदानीं यो विरज्यते ॥२३८॥**
**त्यजत्यसौ यथात्मानं व्यर्थातो दुःखभावना ।**

**स्यादेतद् (।) आत्मानं परित्यक्तुमसमर्थः । नहि स एव तेन लक्ष्यते । तथाहि**

**यथास्ति न तथा त्यागो यथा नास्ति तेन नात्मपरित्यागः रागस्य केवलः । ततो रागिता परित्यागात् सदैव सुखी । अत्रोच्यते ।**

सुखेष्वस्थापना सैव राग आग्रहलक्षणः । सा चास्ति राग एवास्तीत्येतत् पूर्वं विवेचितं ॥८३६॥

**यदि चात्मनि विरागः कस्य स विरागः । नेदानीमस्ति यो विरज्यते । अन्योह्यन्यस्तत्र विरक्तः भवति । स एव चेदविरक्तस्वभावः स न विरक्तो भवति । अत्रोच्यते ।**

नात्मा आत्मनि(? किं यथास्ति स विरज्यते । न तथा न यथा सोस्ति तथापि न विरज्यते ॥८३७॥
नहि तस्यान्यथाभावो नाप्यन्यस्य तथा स्थितिः । सर्वात्मनैकदेशेन सर्वथा दुर्घटं ततः ॥८३८॥
एकस्य नैकदेशोस्ति नैकदेशोस्त्यभिन्नता । यस्यैकदेशः सोन्यः स्यात्तथासत्यनवस्थितिः ॥८३९॥
स्यादनन्यः कथं चिच्चेत्तथाप्यस्त्वनवस्थितिः । अपरापरकल्पानां तत्रापरिसमाप्तितः ॥८४०॥

**तस्मादात्मैव तेन परित्यक्तव्यो यथा त्यजत्यसावात्मानं तथा व्यर्था दुःखभावना । येनाप्याकारेण न परित्यजति तथापि व्यर्था दुःखभावना वैराग्यं कर्तुमशक्यत्वात् । अथवा ।**

आत्मन्यपि विरागश्चेन्नेदानीं यो विरज्यते ॥८४१॥

**यत्र त्यजत्यसौ तं यथात्मानमतोऽभावत् त्यागस्य व्यर्थदुःखभावना । न दुःखभावनार्थात्यागात् समर्था । न खलु विरागस्यास्य कारणं । यथात्मनस्तथात्मीयस्यापि । ततो न तादृशा विरागेण मुक्तो भवति । इतोपि व्यर्था दुःखभावना । यतः ।**

**दुःखभावनयाप्येष दुःखमेव विभावयेत् ॥२३९॥**
**प्रत्यक्षं पूर्वमपि तत्तथापि न विरागवान् ।**

---

[1] ०क्रियतामेव कथमात्म०   [2] परार्थः सम्भ०

यदि दुःखभावना विरागाय स्यात् युक्तं । यदा साविष्येत, न चासौ विरागाय । दुःखभावना हि दुःखसाक्षात्करणहेतुरेव । नान्यथासौ विरागाय । भावनाविभावितदुःखसन्तानो विरागी यथा स्यात् न चैवं । यतः पूर्वमिति तद् दुःखं प्रत्यक्षमेव । प्रत्यक्षपूर्वकनिश्चयसम्भवात् । अन्यथा न संसारपरित्यागार्थी भवेत् । नह्य साक्षात्कृतं दुःख पीडयति । न च तथापि विरागः । ततो व्यर्थिका दुःखभावना । प्रियविप्रयोगादिदुःखं हि सकललोकस्य प्रत्यक्षं तदा चेदविरक्तो दुःखभावनया कथं विरागो भवेत् ।

ननु दुःखभावना सकलस्य दुःखस्य स्मरणसंकलने भवन्ती महतीं दुःखसंहतिं विभावयति । ततो विरागितेति चेत् । तत उद्वेगात् विरागः स्यात् । नैतदस्ति । यस्मात् ।

यथैव दुःखप्रचयः स्मर्य्यमाणो विभावयेत् । तथा सुखस्य प्रचयस्ततो रागी भवेदयं ॥८४२॥

यथा दुःखसन्तानं विभाव्य विरागस्तथा विपर्ययात् सरागोपीति कथं मुक्तिः ।

ननु प्रशमसुखस्याम्नो (?) द्वेजनात् न संसारसुखसतृष्णः (।) तदप्यसत् । यतः ।

नात्मदृष्टिनिविष्टस्य शमउद्वेगकारणं । श्मशानवासः काकस्य किमुद्वेगस्य कारणं ॥८४३॥
काकः पद्मवने प्रीतिं प्राप्नोनि नहि तादृशी । यादृशीमशुचिस्थानविनिवेशितसङ्गमः ॥८४४॥

ननु दृश्यत एव । प्रीतिहेतौ दोषदर्शनाद्वैराग्यं । तत् कथं दोषदर्शनेपि दुःखभावनया न विरक्तः । नैतद्यतः ।

**यद्यप्येकत्र दोषेण तत्क्षणं चलिता मतिः ॥२४०॥**
**विरक्तौ नैव तत्रापि कामीव वनितान्तरे ।**

यद्यपि क्वचिदपराधकारिणि जनें विरक्तिः क्षणं तथाप्यसौ न सर्वथा विरक्तिः । न खलु कामी क्वचित् कामिन्यां विरक्तस्तथापि वनितान्तरेऽविरक्त एव तत्र च पर्यायेण । तथाहि । रागविरोध्यवस्थानादेवासौ विरक्तस्तदविरोध्यवस्थात (:) जनो पुनरविरक्त एव । तस्माद्रागशक्तिसंङ्गतः एवासौ विरक्तः, नतु सर्वथा । पुनस्तत्रैव रागदर्शनात् । अत एवोक्तं । "तद्धि भिक्षवः प्रहीणं यदार्यया प्रज्ञया" । तस्मादस्य ।

**त्याज्योपादेयभेदेन सक्तियैवैकभाविनी ॥२४१॥**
**सा बीजं सर्वसक्तीनां पर्यायेण समुद्भवे ।**

यस्य हि हेयोपादेयविभागस्तस्येच्छाद्वेषौ । न सर्वः सर्वदा हेयो नाप्युपादेयः । पर्यायेणेच्छाद्वेषौ परस्परबीजकौ पर्यायेणास्य भवत एवेति कथमात्मधी (?)युक्तः[1]। नैरात्म्यदर्शिनः पुनः सर्वत्रोपेक्षा हेयोपादेयविभागस्ततः सकलसक्तिनिर्मूलने व्यवस्थितस्य कुतो रागादिसम्भवः । अपि च । विरागभाविरूपे वस्तुनि भवेन्नान्यथा न चात्मदर्शिनिः क्वचिद्विरूपता । न तावदस्य आत्मा सदोषः । तत्र स्नेहोपि निर्दोषविषयत्वाददोषः । उपलब्धि साधनान्यपि निर्दोषाणि । एतावदेव सकलं जगत् क्वेदानीं स विरज्यते ।

**निर्दोषविषयः स्नेहो निर्दोषः साधनानि च ॥२४२॥**
**एतावदेव (च) जगत् क्वेदानीं स विरज्यते ।**

—इति संग्रहः

[1] T. कथमात्मवादी मुक्तः

अथापि स्यात् ।

**सदोषतापि चेत् तत्र तस्यात्मन्यपि सा समा ॥२४३॥**
**तत्राविरक्तस्तद्दोषे क्वेदानीं स विरज्यते ।**

ननु विषयस्य सदोषतापि दृश्यते शरीरादेश्च । ननु का तेषां सुखहेतूनां सदोषता दुखहेतुता । ननु पर्यायेण सर्वस्य सुखहेतुता कदाचित् दुःखहेतुता चेत् । नन्वात्मन्यपि सा समानैव । तत्र चेदात्मनि तद्दोष एवाविरक्तः । क्व विरागवान् भवेत् । आत्मा परित्यक्तुमशक्य इति चेत् । आत्मीयेपि न विरागः । दोषाँस्त्यक्तुं शक्यत्वाच्चात्मीयस्यैव त्याग इत्यपि मिथ्या । यदा यदा यस्य दोषस्तदा तस्य त्यागो न सर्वदा । यथा दोषाणां त्यागः तथा दोषानित्यतया त्यागानित्यतापि । सुखहेतावपरित्यक्ते पश्चादभावे महद् दुःखमिति चेत् तस्मात् मूलत एव परित्यागो युक्तः । एवं तर्हि दुःखेपि सति तदनन्तरं महत् सुखं भवतीति दुखमप्युपादातव्यं । तस्मान्न क्वचिद्विरागोस्त्यात्मदर्शिनः । अपि च ।

**गुणदर्शनसम्भूतं स्नेहं बाधेत दोषदृक् ॥२४४॥**
**स चेन्द्रियादौ न त्वेवं बालादेरपि दर्शनात् ।**

तथा ।

**दोषवत्यपि सद्भावात् स्वभावाद् गुणवत्यपि ॥२४५॥**
**अन्यत्रात्मीयतायां वा व्यतीतादौ विहानितः ।**

न गुणदर्शनादिन्द्रियादौ स्नेहः, अपि त्वात्मीयदृष्टेः ; तथाहि दोषवत्यपि आत्मीयतया परिगृहीते स्नेहस्य भावात् इन्द्रियादौ गुणवत्यपि परत्राभावात् बालपश्वादीनां चापरिकलित-गुणदोषाणां भावात् । आत्मीयेपि च व्यतीते अभावादनागते च । तस्मान्न दोषदर्शनान्निवर्तते स्नेहः । एवं तर्हि दोषदर्शनादात्मीयबुद्धिरेव न भविष्यति । तदभावाच्च स्नेहः । गुण-दर्शनसम्भूतस्य आत्मीयदर्शनस्य दोषदर्शनेनापाकरणात् । न किञ्चदेतत् । यतः ।

**तत एव च नात्मीयबुद्धेरपि गुणेक्षणं ।**
**कारणं हीयते सापि तस्मान्नागुणदर्शनात् ॥२४६॥**

दोषवत्यपि क्वचिदात्मीयबुद्धेर्भावात् । गुणवत्यपि चाभावात् व्यतीतादौ चेति ।

**अपिचा सद्गुणारोपः स्नेहात्तत्र हि दृश्यते ।**
**तस्मात्तत्कारणाबाधी विधिस्तं बाधते कथमिति ॥२४७॥**

स्नेहो हि नामापि दोषदर्शनेन हीयेत यदि तावता । यावता स्नेहेन तदेव दोषदर्शन-मपाक्रियते सद्गुणारोपविधायिना । मध्यस्थतया चेतसो दोषदर्शनमनारोपश्च गुणाना-मिति चेत् । न(।) स्नेहेन स एव मध्यस्थभावो न लभ्यते । विषयान्तरे स्नेहान्तरेण यदि परमसौ बाध्यते नान्यथा । तथा च ।

उपघातः स एवास्य तथा सति विवर्तते । यादृशो भक्षितो मात्रा स डाकिन्यापि[१] तादृशः ॥८४५॥

तस्मान्न दुःखभावनया स्नेहपरित्यागतो मुक्तिरात्मदर्शिनः ।

---

[१] T. स डाकिन्यापि

अत्र सांख्याः प्राहुः। नात्मदर्शिनां दुःखभावनासम्भवत्यपि तु प्रकृतिपुरुषान्तरपरिज्ञानतो मुक्तिः। तथाहि ।

शुद्धबोधस्वभावोयं पुरुषः परमार्थतः। प्रकृत्यन्तरमज्ञात्वा मोहात् संसारमाश्रितः ।।८४६।।

प्रकृतिः सुखादिस्वभावाया: विवेकेनाग्रहणादमुक्तिरात्मनः। ततः केवलज्ञानोदय एवमुक्तिरात्मनः। तदप्यसत्। यतः।

परापरप्रार्थनातो विनाशोत्पत्तिबुद्धितः ॥२४८॥
इन्द्रियादेः पृथग् भूतमात्मानं वेत्त्ययं जनः।
तस्मान्नैकत्वदृष्ट्यापि स्नेहः स्निह्यन् स आत्मनि ॥२४९॥
उपलम्भान्तरङ्गेषु प्रकृत्यैवानुरज्यते ।

हाम्युदयदर्शनमेव भेद(द)र्शनम् (।) अन्वयव्यतिरेकभावतो हि भेदः। आत्मान्वयी सुखादयो नान्वयिनः। ततो विरुद्धधर्म्माध्यासाद्भेद इति। अथैतदेव न पर्यालोचयति संसारी। तथा सत्यमुक्तिरेव। विवेकाध्यवसायस्यासम्भवात्। न खलु सुखार्थी तस्य हानायाद्रियते। सुखादिरहितेनात्मना न कश्चिदर्थी प्रेक्षावान्। केवलस्यार्थिनः संसर्गात् प्राक् न संसारः प्रधानेन सह एकतामात्मनि पश्यतः स इति चेत्। तदसत्।

चेतनस्य(च) स्वपितस्य कथमेकत्वविभ्रमः। विषयाभिलाषः कुतो यतः संसारसङ्गतिः ।।८४७।।
प्रधानानुप्रवेशो हि न तत्रास्त्येकता कुतः। आत्मन्येवहि न भ्रान्तिः प्रागेतत्प्रतिपादितं ।।८४८।।
विषयत्वेन दृष्टिश्चेत् नाभेदग्रहणं भवेत्। बुद्धेरभावाद् दृटिश्च न युक्ता सांख्यदर्शने ।।८४९।।
अभिलाषश्च दृष्टेर्थे पुरुषाणां प्रवर्तते। स्मरणस्य च सद्भावः सर्गवृत्तेः पुरः कुतः[1] ।।८५०।।
अभिलाषस्मरणयोः प्रकृतेरेव वृत्तितः। अभिलाषाच्च तद्वृत्तिरित्यन्योन्यसमाश्रयः ।।८५१।।
अनादिवासनातश्चेत् तथास्य सुखितादयः। वासनापि प्रधानस्य विक्रियातः पुरः कुतः ।।८५२।।
तस्मात्स्वन्नोधरूपस्य प्रकृतिः सा यदीष्यते। न सा शक्याऽन्यथा कर्तुमिति संसार्यसौ सदा ।।८५३।।

ननु दुःखसंवेदनाद् दृश्यत एव निर्वेदः स कथमन्यथा क्रियेत। अत्राह।

प्रत्युत्पन्ना तु यो दुःखान्निर्वेदो द्वेष ईदृशः ॥२५०॥
न वैराग्यं ; तदाप्यस्य स्नेहोऽवस्थान्तरेषणात्।

यतः।

द्वेषस्य दुःखयोनित्वात् स तावन्मात्रसंस्थितिः।
तस्मिन्निवृत्ते प्रकृतिं स्वामेव भजते पुनः ॥२५१॥

दुःखसंवेदनोद्विग्नोपि न वैराग्ययोगी स्नेहेनैव ह्यसावात्मन्यात्मीये च प्रतिकूलदर्शनात् विद्वेषवानेव हि तदा। अशुभादिवस्तुप्रत्ययमात्रमेतत्। वैराग्यस्य पारमार्थिकस्यात्मदर्शिनस्तु स्नेहादमुक्तिरेवावस्थान्तरप्रार्थनातो द्वेष एव सर्वदा भावी तत्र तु वैराग्यं(।) नैतदस्ति।

यावत् कालं(च) तद् दुःखं तावद्द्वेषः प्रवर्तते। कारणस्य तु दुखस्य निवृत्तौ द्वेषिता कुतः ।।८५४।।
दुःखस्याप्यनुवृत्तिश्चेत् शिवं मुक्तिः करोत्वसौ(।) दुःख द्वेषाभिभूतस्य सदा स्थानमधोगतिः ।।८५५।।

---

[1] T. पुरः कुतः

ननूद्वेगमन्तरेण कथं मुक्तिः

अनुद्विग्नो हि संसारात् मुक्त्यर्थी नास्ति चेतनः । न च दुःखापराभूत उद्वेगी जायते जनः ॥८५६॥

तदसत् ।

तत एव च ।

औदासीन्यं तु सर्वत्र त्यागोपादानहानतः ।
वासीचंदनकल्पा[1]नां वैराग्यं नाम कथ्यते ॥२५२॥

धर्मतामात्रदर्शनेन हि ममतामवाप्यते चेतसो (।) ननु नय[2] प्रतिघप्रहाणेन वैराग्ययोगितायोगिनामस्मत्पक्षे नान्यथा (।) कथं तर्हि दुःखभावनोक्ता भगवता । अत्र प्रतिवचनं ।

संस्कारदुःखतां मत्वा कथिता दुःखभावना ॥२५३॥
सा च नः प्रत्यययोत्पत्तिः सा नैरात्म्यदृगाश्रयः ।
युक्तिस्तु शून्यतादृष्टेस्तदर्थाः शेषभावनाः ॥२५४॥
अनित्यात् प्राह तेनैव इत्थं दुःखान्निरात्मतां[3] ।

न खलु दुःखदुःखतामात्रमभिसन्धाय दुःखभावनोक्ता । रागिनां हि तावन्मात्रेण वैराग्यसुखभङ्गे सति पक्षपातपरित्यागात् संसारदुःखभावना योग्यता यथास्यादिति तूक्ता ॥ सा च संस्कारदुःखता शून्यतैव परमार्थतः । ततः शून्यता दृष्टेरेव मुक्तिः ।

शेषास्तु भावनास्तदर्था एव । अत एव नैरात्म्यदर्शनावसाना भगवतो देशना । यदाह । "रूपं भिक्षवो नित्यमनित्यम्वा । अनित्यं भदन्त । यदनित्यं तद् दुःखं सुखम्वा । दुःखं भदन्त । यदनित्यं तद् दुःखं विपरिणामधर्म्मकं कल्प्यन्तु तदेवं द्रष्टुं एतन्मम, एषोऽहमस्मि एष ममात्मेति । नो हीदं भदन्त" इत्ये[4]वं हेतुफलभावेनानात्मदर्शनमेव मुक्तेरुपाय इति कथितं भवति । यः पुनरात्मदर्शी सोऽविरक्त एव ।

अविरक्तश्च तृष्णावान् सर्वारम्भसमाश्रितः ॥२५५॥
सोऽमुक्तः क्लेशकर्म्मभ्यां संसारी नाम तादृशः ।

आत्मदर्शनबीजे हि व्यवस्थिते आत्मीयदर्शनमनुपहतं संसारहेतुः । तत आत्मनि आत्मीये चाविरक्तो नियमेन तृष्णावांस्ततः सर्वकर्म्मारम्भसमाश्रितः । क्लेशकर्म्मभ्याममुक्तः संसार्य्येवासाविति कुतः तस्य मुक्तिगन्धोपि ।

अथापि स्यात् (।) अत्मीयमेव परमार्थतो नास्ति । तेन कुतः स्नेहसम्भवः (।) स्नेहो हि नाम विषये भवति । न निर्विषयः । तदप्यसत् ।

आत्मीयमेव यो नेच्छेत् भोक्ताप्यस्य न विद्यते ॥२५६॥
आत्मापि न तदा तस्य क्रियाभोगौ हि लक्षणं ।

---

[1] T. वासी चंदन०

[2] T. सेमस्-म्ञम्-प. ञिद् थोब्स्-ते र्जेस्-सु-छग्स्-प-दङ. खोङ-खो. दङ-ब्रल्-वस्-न

[3] T. निरात्मताम्

[4] T. दीर्घागमे मध्यमागमे वा

दृश्यमानमात्मीयं कथमिव शक्यं नास्तीति प्रतिपादयितुं । अविद्यानिबन्धनत्वात् सर्वस्येति चेत् । ना अविद्याया आत्मव्यतिरेकेणाभावात् । नाविद्या पुरुषादन्या "पुरुष एवेदं सर्वमिति"[1] वचनात् (।) ततोऽविद्यास्वभावत्वात् अस्य भ्रान्तता न कदाचिदपेयात् (।) नहि तदात्मभूता भ्रान्तिस्ततोऽपैति । तस्यैवापायप्रसङ्गात् ।

प्रतिक्षिप्तश्चास्या द्वा दः । किञ्च आत्मीये असति क्रियाभोगौ न स्तः क्रियाभोगात्मकत्वादात्मनः । अथ परमार्थत एतदपि नेष्यत एवेति चेत् । आत्मनोपि परार्थत्वे कोऽवष्टम्भः । सम्वेदनेन तस्य परिच्छेदादिति चेत् सर्वसम्वेदनप्रसङ्गः । अभ्यासात्स्वप्नादिवदसत्त्वमिति । न युक्तमात्मनोपि न पारमार्थिकत्वं अथाद्वैतं । तदा चित्राद्वैतमिति । नात्मा नामास्ति, नित्यत्वस्य प्रत्युत्पन्नस्वभावमात्रग्राहिणा प्रत्यक्षेणाग्रहणात् (।) पूर्वापरप्रत्यक्षयोर्युगपदभावात् । एकैकेन नित्यतात्मनः । अथपरमार्थं एतदपि नेष्यत एवेति चेत् प्रतीतिः[2]। न च संघटनं स्मृतेरप्रमाणत्वात् । प्रत्यक्षाभावेऽनुमानाभा (वा) च्चेति । ततो नात्मदर्शनात्समीहितार्थसिद्धिः ।

**तस्मादनादिसन्तानतुल्यजातीयबीजिकां ॥२५७॥**
**उत्खातमूलाङ्कुरुत सत्त्वदृष्टिं मुमुक्षवः[3] ।**

नैरात्म्यदर्शनादेव मोक्षो नान्या गतिः प्रामाणिकीत्युपसंहारः ।

### (आगममात्रेण न मुक्तिः)—

नन्वागमादात्मास्तित्वं तस्य च मोक्षः । स च मोक्ष एकान्तसुखरूपो न कदाचित्तस्याभावः । संसारसुखं तु विच्छेदवदिति न ततः परितोषः । स च दीक्षादिविधेरित्यचोद्यमेव पूर्वकं सकलं । तथा चोक्तं ।

अतीन्द्रियानसम्वेधान् पश्यन्त्यार्षेण चक्षुषा । ये भावान् वचनं तेषां नानुमानेन बाध्यते ॥८५७॥

अपौरुषेयं वा वचनमिति । तदप्ययुक्तं ।

**आगमस्य तथा भावनिबन्धनमपश्यतां ॥२५८॥**
**मुक्तिमागममात्रेण ब्रुवन्न परितोषकृत् ।**

सत्यमेतदनीन्द्रियदर्शिनां वचनमनुमानेन बाध्यते । तदेव तु तत्प्रयुक्तत्वं वचनस्य न गम्यते । सर्वागमसाधारणत्वादस्य । न च सर्वागमप्रमाणत्वं । न तदर्थानुष्ठानसम्भवः । अपौरुषेयत्वन्तु न युक्तमित्युक्तं ।

### (दीक्षाऽकिञ्चित्करी)—

ननु बीजादीनामप्ररोहणधर्म्मता दीक्षाविधिसंसर्गादुपलब्धा । तदप्ययुक्तं ।

**नालं बीजादिसंसिद्धो विधिः पुंसामजन्मने ॥२५९॥**

---

[1] T. उपनिषदि

[2] T. एकैकेन न नित्यात्मनः प्रतीतिः,

[3] T. ब्युङ-बीऽ-सेम्स्-चन्-ल्त-व-न्दग् । चें-व-ञिद्-लस् द्ब्युङ-वर्-ग्यिस् = उत्खातमूलां कुरुत सत्त्वदृष्टिं मुमुक्षवः ।

**तैलाभ्यङ्गाग्निदाहादेरपि मुक्तिप्रसङ्गतः ।**

अथ तैलाभ्यङ्गस्य तावन्मात्रमेव सामर्थ्यं एवं सति दीक्षायामपि समानं । तथा(।)

**(a) आत्मनोऽमूर्त्तत्वे न पापगौरवलाघवम्—**

**प्राग्गुरोर्लाघवात् पश्चात् न पापहरणं कृतं(।) ॥२६०॥**
**मा भूद्गौरवमेवास्य न पापं गुर्वमूर्तितः ।**

यदि नाम दीक्षितस्य सतः प्राग् गुरोर्ल्लाघवं भवतु । न तावता पापापहारः । लाघवं हि गौरवविरोध्युपलभ्यमानं गुरुत्वाभावमेव गमयति न पापाभावं । पापस्य गौरवाभावात् । पापेनैवासौ गुरुरिति चेत् । कुत एतद्(।)आगमादिति चेत्(।)उक्तमत्र । अपि च ।

तावन्मात्रस्य पापस्य मुक्तिर्नास्ति विनाशतः । सामर्थ्यादपरत्रापि शक्तिरित्यनिरूपणं ॥८५८॥
दर्शनं देवतादीनां क्व च नाम न विद्यते । सर्वतो मुक्तिरस्तीति को विशेषस्तथा सति ॥८५९॥

ननु भवत्पक्षेपि तृष्णाच्छेदो यदि नाम नैरात्म्यभावनातः, मुक्तिस्तु कथमिति चिन्त्यमेव । तदपि न यथावत् । तथाहि ।

**मिथ्याज्ञानतदुद्भूततर्षसंचेतनावशात् ॥२६१॥**
**हीनस्थानगतिर्जन्म तेन तच्छिन्न जायते ।**
**तयोरेव हि सामर्थ्यं जातौ तन्मात्रभावतः ॥२६२॥**

यतः ।

**ते चेतने स्वयं कर्म्मात्यखण्डं जन्मकारणं ।**

तृष्णावशादेव देशादिसंप्राप्तिरुपलभ्यते ।

ननु जन्मनः कर्म्मापि कारणं ततः कथं तन्मात्रभावः । तदप्यसत् । ते एव चेतने स्वयं कर्म्म । यत्पूर्वकं चेतनालक्षणं । दानादिकर्म्मतत्संस्कारादन्त्ये जन्मान्तरभाविनी चेतने । मिथ्याज्ञानतद्भूततर्षसंचेतने । त एव साक्षात्कर्म्म तदनन्तरभावित्वात् जन्मनः । पूर्वकन्तु तत्कारणत्वात् उपचारात्कर्म्म न साक्षात् स्वतः संपूर्णजन्मकारणं(।) दीक्षितस्यापि तदस्तीति न मुक्तिः ।

अथापि स्यात् ।

**गतिप्रतीत्योः कारणान्याश्रयस्तान्यदृष्टतः ॥२६३॥**
**अदृष्टनाशान्न गतिस्तत्संस्कारो न चेतना ।**

दशविधं कुशलमकुशलमपि दशविधमेव न चेतनालक्षणं । तस्य च दीक्षादिना विधानेन नाश इति । तदप्यसद्(।) अर्थस्यासिद्धत्वात् । अपि च ।

**सामर्थ्यंकरणोत्पत्तेर्भावाभावानुवृत्तितः ॥२६४॥**
**दृष्टं बुद्धे[१]र्न चान्यस्य तानि सन्ति न सन्ति किम् ।**

बुद्धेरन्वयव्यतिरेकावनुविधीयमा( ना )नि करणानि चक्षुरादीनि तानि बुद्ध्या विधी-

[१] T. इदानीमेव

यमानानि सन्ति परम्परयोत्पद्यन्ते । ततः कस्मान्न जन्म । अथ दीक्षयोपघातान्न जन्मनि सामर्थ्यमेवं सति ।

धारणप्रेरणक्षोभनिरोधाश्चेतनावशाः ॥२६५॥
न स्युस्तेषामसामर्थ्ये तस्य दीक्षाद्यनन्तरं ।

बुद्ध्यादयो ह्यात्मगुणा यदि दीक्षयोपहताऽनलं जन्मनि सामर्थ्यभाजः । तदा दीक्षानन्तरमेव बुद्धिरुपहता सती धारणं स्वेच्छावृत्तिविषयेषु निवर्त्तनं प्रेरणमभिमते क्षोभो विसंस्थुलत्वं । निरोधो विनाशः । एते न स्युः । अथ मरणानन्तरमसामर्थ्यं परिणतिविशेषापेक्षत्वात्कारणानां । तदप्ययुक्तं ।

इदानीं नास्ति सामर्थ्य दीक्षादीनामजन्मने । यदि स्यान्मरणादूर्ध्वमिति नास्ति प्रमेदृशी ॥८६०॥

इदानीमेव यदि सामर्थ्यं लेशतः प्रतीयते तत उत्कर्षलाभादपरमपि स्यादिति स्याद्(।) यदा त्वनुगम एव तारतम्यभागी नोपलब्धः । तदा निर्निबन्धनमेव मुक्तिपरिकल्पनं । अथेदानीं बुद्धिसद्भवात् रागादयोस्य समानस्वभावा भवन्ति । मरणानन्तरन्तु बुद्धेरभावादेव संसारधर्माभावः ।

तदप्यसत् । बुद्धिरेव जन्मान्तरे नास्तीति कुतः । मरणादिति चेत् । व्यर्थता दीक्षाविधेः सर्वस्य मरणे बुद्ध्यभावे सति मुक्तेः ।

अथ बुद्धेस्तदाभावात् न स्युः सन्धीयते मलैः ॥२६६॥
बुद्धेस्तेषामसामर्थ्ये जीवतोपि स्युरक्षमाः ।

रागादयो हि मला बुद्धेः सन्तो न हेतवः सन्तीति न बुद्धेरभावः । अथोपहतारागादयो दीक्षया न समर्थास्तदा जीवतो बुद्धेः प्रतिसन्धिहेतवो न स्युः । ततो दीक्षानन्तरमेव मुक्तिः स्यात् । अस्त्येवेति चेत् । तन्न ।

निर्ह्रासातिशयात् पुष्टौ प्रतिपक्षस्वपक्षयोः ॥२६७॥
दोषा(ः) स्वबीजसन्ताना दीक्षितेप्यनिवारिताः ।

दोषा हि स्वबीजभाविनः कुत एतत् । निर्ह्रासादतिशयाच्च प्रतिपक्षस्य नैरात्म्यस्य पुष्टौ निर्ह्रासात् । स्वपक्षस्यायोनिशोमनस्कारस्यातिशयात् । एवंभूताश्च दोषा दीक्षितेपि अनिवारिताः । इह जन्मनि अन्यत्र च तत् कथमसौ मुक्तः ।

## (b) आत्मनो नित्यत्वे न पुनर्जन्म—

ननु नैरात्मदर्शनञ्चेत् कस्यासौ मुक्तिः । आत्माहि रागादिमलोपहतः शुद्धो यदा कुतश्चिद् भवेत् तदा मुक्तः । बन्धविगमोहि मुक्तिः । नैरात्म्यदर्शने च यो बन्धः स बन्ध एव । न स एव मुक्तो नित्यतयात्मदर्शनभावात् । तदप्यसत् ।

शुद्धिर्यस्य न तस्यान्यानिर्वाणोग्निर्नपावकः(।)तथापि व्यपदेशोयं निर्वाणोऽग्निरिति स्थितः ॥८६१॥

तत्रास्मत्पक्षे वाचोयुक्तिमात्रमेव न घटते । तच्च दृष्टान्तेन समाहितं । आत्मवादे तु अर्थ एव न घटते । वाचोयुक्तिमात्रेण तु घटते । नापि न किञ्चित् प्रधानस्य वस्तुनो विघटनात् न चात्र दृष्टान्तोस्ति । यतः ।

**नित्यस्य निरपेक्षत्वात् क्रमोत्पत्तिर्विरुद्ध्यते ॥२६८॥**
**क्रियायामक्रियायाञ्च क्रिया च सदृशात्मनः ।**

अवस्थाभेदे ह्यात्मनः मुक्तता । अशुद्धावस्थस्य सतः शुद्धिसम्भवे । न क्रमेणावस्थानां कार्यतात्मनो निरपेक्षस्य युगपदेवावस्थाभावित्वप्रसङ्गादिति प्रदेशान्तरे निर्णयात् । अपि च । क्रिया विरूध्यते कियाक्रियावस्थयोः सदृशत्वात्

**ऐक्यञ्च हेतुफलयोः व्यतिरेके नतस्तयोः ॥२६९॥**
**कर्तृभोक्तृत्वहानिः स्यात् सामर्थ्यञ्च न सिध्यति ।**

तादात्म्ये सति हेतुफलयोरैक्यं प्रसक्तं । एकात्मान्तर्गतत्वात् तदात्मवत् । भेदे तयोर्हेतुफलयोर्नासौ कर्त्ता न भोक्ता । करणभोगसम्बन्धाभावात् । अपरात्मवत् अनुभवतोपि न सम्बन्धः । आत्मान्तरवदेव योगी परात्मकरणभोगसाक्षात्करणात् कर्त्ता भोक्ता च स्यात् । अथ समवायसम्बन्धा एवं न समवायस्याभावादेव न च योगिनामपि समवायाद् एकत्वबुद्धिहेतुः । अथ कार्यकारणभावात् कारणफलाभ्यां कर्त्ता भोक्ता चासौ भवेत् । तदप्ययुक्तं । सामर्थ्यञ्च न सिध्यति । न नित्यस्य सामर्थ्यमस्तीति प्रतिपादितं ।

### (८) नैरात्म्ये स्मृतिसंगतिः—

नैरात्म्येपि तर्हि स्मरणभोगादयो न सिध्यन्ति । तन्न ।

**अन्यस्मरणभोगादिप्रसंगाश्च न बाधकाः ॥२७०॥**
**अस्मृतेः कस्यचित् तेन ह्यनुभूतेः स्मृतोद्भवः ।**

न कस्यचित् स्मरणं स्मर्त्तुः तदभावादेव । नापि भोगो भोक्त्रभावादपि तु स्मरणमेव । तदेव स्मर्तृस्मरणविषय एवं भोगेपि वाच्यं सुखमेव भोग्यं भोगो भोक्ता च तच्च स्मरणं हेतोरनुभवादुत्पद्यते । नन्वन्यतोप्यनुभवात् परकीयाभिमतात् कस्मान्नोत्पत्तिमत् । परकर्म्मणोपि च भोगः । कार्यकारणभावनियमात् आत्मवादेपि वा कस्मान्न भवत्येष दोषः । आत्मनो भेदात् स एव भेदः कुतः ।

यथैवात्माऽविशेषेपि नान्यतः स्मृतिसम्भवः । तथा मनोविशेषेपि नान्यतः स्मरणोदयः ॥८६२॥
मनसां हेतुभेदेन भेद एष भवेदपि । आत्मनान्तु कुतो भेदविभागोयमहेतुकः ॥८६३॥

नन्वसत्येकस्मिन्नात्मनि ।

पश्याम्यहं स्मरामीति कुत एकत्वसङ्गतिः । आत्मन्यपि समानोयं दोषो नात्र प्रमोदयः ॥८६४॥

आत्मापि केन प्रमाणेन स्मरणं दर्शनञ्चैकाधिष्ठानतया वेत्ति । प्रत्यक्षेणेति चेत् ।

पूर्वापरत्वेनाध्यक्षगतिरस्तीति साधितं । प्रत्यक्षासम्भवात्तत्र नानुमानं प्रवर्तते ॥८६५॥
पूर्वरूपतयात्मानं यद्यात्मा वेत्ति तत्त्वतः । सम्वेदनस्य पूर्वस्य सत्त्वं स्यादधुनातनं ॥८६६॥
ततः पूर्वतया तस्य सम्वित्तेः सम्भवः कुतः । नहि सम्वेद्यमानस्य पूर्वभावः प्रतीयते ॥८६७॥
स्मरणादेव पूर्वत्वं न प्रमाणं स्मृतिर्नहि । स्मरणादेव तत्त्वञ्चेदन्यत्रापि न किं मतं ॥८६८॥
तस्मादात्मप्रवादेपि नैकत्वं तत्त्वतः स्थितं । तयोश्च युगपद्भावादेकत्वमभिमन्यते ॥८६९॥

एकत्वमात्राभिमते व्यवहारो विभागतः । एककार्यतया चैकव्यवहारोयमीक्ष्यते ॥८७०॥
अनाद्यविद्याभ्यासस्य सामर्थ्यमिदमाञ्जसं । नात्मास्ति वेदनैवैका तथात्मग्रहकारिणी ॥८७१॥

कथन्तर्हि आत्मानमन्तरेण संसारप्रवर्तनं । आत्मानमन्तरेण सत्कायदर्शनस्याभावात् । स्मरणमपि पूर्वापररूपविरहादेकता नित्यानित्यतयोर्न ग्रहण समर्थमतः संसाराभाव एव ।

उक्तमत्र । न परमार्थतः संसारो नामास्ति स्वरूपस्य स्वतो गतिरिति वचनात् । तथापि व्यवहारत एतदेवं भवति । तथाहि ।

**स्थिरं सुखं ममाहं चेत्यादि सत्यचतुष्टये ॥२७१॥**
**अभूतान् षोडशाकारान् आरोप्य परितृष्यति ।**

( iii ) **सम्यग्दृष्टिर्नैरात्म्यदृष्टिः**

**तत्रैव तद्विरुद्धात्मतत्त्वाकारावरोधिनी ॥२७२॥**

( a ) **तृष्णाक्षयान्मोक्षः—**

**हन्ति सानुचरां तृष्णां सम्यग्दृष्टिः सुभाविता ।**

अभूतारोप एव खलु संसारो न परमार्थतः संसारः । अभूताश्च षोडशाकारास्तदारोपात्परितर्षवतः कर्म्मसंसरणाभिमानोऽन्यथा न संसारस्य सम्भवः । अभिमानोपि न कश्चित्परापरसंवेदन[१]व्यतिरिक्तोऽतोऽवेदनेप्येकत्वस्यात्मनश्च वेदनाभिमानः । तेनैवम्भूतत्वे न योनिशोमनसिकारसम्भवेनात्र किञ्चिदिति । परामर्शवतः स्थिरत्वेभ्यासतो नैरात्म्यस्य विशुद्धत्वमिति सकलाविद्याविनिवृत्तिलक्षणं निर्वाणापरनामकं साक्षात्करणविषयः । तस्मात्तत्त्वदर्शिनां तृष्णाविनिवृत्तितो मोक्षः ।

ननु कर्म्मणि देहे च स्थिते कथं मोक्षः । नैतदस्ति यतः ।

**त्रिहेतोर्नोद्भवः कर्म्मदेहयोः स्थितयोरपि ॥२७३॥**
**एकाभावाद् विना बीजं नांकुरस्येव सम्भवः ।**

एवन्तर्हि कर्म्मदेहयोरप्यन्यतरस्य क्षये भवत्येव मोक्षो यथाहुः । "कर्म्मक्षयान्मोक्ष" इति । न सदेतत् । यतः ।

**असम्भवाद्विपक्षस्य न हानिः कर्म्मदेहयोः ॥२७४॥**
**अशक्यत्वाच्च तृष्णायां स्थितायां पुनरुद्भवात् ।**
**द्वयक्षयार्थं यत्ने च व्यर्थः कर्म्मक्षये श्रमः ॥२७५॥**

(b) **अक्षीणकर्मणो न मोक्षः—**

न हि तृष्णानिवर्तनमन्तरेणापरो विपक्षः कर्म्मदेहयोः । दीक्षादिविषया व्याख्याताः । आगमो न प्रमाणमिति । न च तृष्णासंगतः कर्म्म न करोति । रागद्वेषादयो हि ततोऽनायासत एव भवन्ति[२] । द्वयक्षये च वरं तृष्णैव विनिर्वर्त्तिता । कर्म्मापि क्षपयितव्यमेवेति चेत् नासम्भवात् प्रतिपक्षस्येत्युक्तं । यतः ।

---

[१] T. परापरसंवेदन० [२] T. द्वयक्षयार्थमिति कारिकाभागोऽत्र स्थापितः

फलवैचित्र्यदृष्टेश्च शक्तिभेदोऽनुमीयते।
कर्म्मणां तापसंक्लेशात् नैकरूपात्ततः (क्षयः) ॥२७६॥

अनेकफलदान[1]सामर्थ्यमभिमुखमादधाने कर्म्मण्यात्मनि कथमेकाकारफलोपभोगमात्रतः परिणहनः (।) परिक्षयः[2]। एकाकारञ्च तापसंक्लेशलक्षणफलं ततो न परिक्षयो युक्तः। यतः।

फलं कथञ्चित्तज्जन्याल्पं स्यात् न विजातिमत्।

येन हि कर्म्मणा तज्जातीयमेवफलमुपजनयितव्यं। तस्य फललेशानुभवात् तत्कर्म्मजमेव। फलमवहीयते फलानुभवेन। न तद्विलक्षणफलापचयः।

अथापि तपसः शक्त्या शक्तिसंकरसंक्षयैः ॥२७७॥
क्लेशात् कुतश्चिद्धीयेताशेषमक्लेशलेशतः।

यदि तपसः शक्तिरस्ति तदाऽशेषमे[3]वाक्लेशात् लेशनः चैकलोमोत्पाटात्[4] परिहीयते फलं। तत्राप्युच्यते।

यदीष्टमपरं क्लेशात् तत्तपः क्लेश एव चेत्।
तत् कर्म्मफलमित्यस्मात् न शक्तेः संकरादिकं ॥

यदि क्लेशादपरं तत्तपस्तदा[5] तत एव कर्म्मक्षयः किं पञ्चतप आदि[6] क्लेशेन। तत एव परिहीयतामशेषं कर्म्म। न खल्वन्येन कृते नान्यस्य सामर्थ्यावगतिः। न च क्लेश एव तपस्तस्य कर्म्मफलत्वात्। न च कर्म्मफलमेव तपः। शीतातपसेविनां पश्वादीनामपि तापसत्वप्रसङ्गात्। अथ नैतत् कर्म्मफलमिच्छया प्रवर्तनात्। कर्म्मफलन्तु तदिच्छाविरहितस्यापि। तदप्ययुक्तं।

इच्छया राज्यलाभादि भवेत् कर्म्मफलं न किम्।
कर्म्म तादृशमप्यस्ति बुद्धि. कर्म्मानुसारिणी ॥८७२॥

यदि च तत्कर्मफलं न स्यात् कथं तर्हि फलोपभोगतः कर्म्मक्षय इति भवतोच्यते। तस्मात् कर्म्म फलमेवैतत्। ततश्च पापस्यैव क्षयः स्यान्न राज्यादिकर्म्मणः। ततो राज्यादिकमप्यनुभवनीयमेव। अथ राज्यादिकं निःस्पृहत्वादेव परित्यज्यते। नरकादिदुःखन्तु बलादापतदनुभवितव्यमेव। तेन सन्ताप एवेष्यते। एवं तर्हि नारकदुःखमप्यनुभवितव्यं। अथ दुःखत्वात्तयोर्दुःखत एवापाक्रियते।[7] नारकादिकेशोल्लुञ्चनतः।[8] तदप्यसत्। इदमपि यतः प्रमाणमस्ति।

दुःखत्वात् न क्षये हेतुः कर्म्मणां पशुदुःखवत्। अनैकान्तिकमेतच्चेत् त्वदुक्तावपि किन्नतत् ॥८७३॥

अपि च।

---

[1] T. अनेकफलसाधन०
[2] T. मात्रत. परिक्षयः
[3] T. तदाऽशेषमेव
[4] T. चैकललोमोत्पाटमात्रात्
[5] T. तत्तपस्तदा
[6] T. गुदुङ-व-लङ-ल-सोगुस्
[7] T. अथ दुःखत्वात्तयोर्दुःखमात्रत एवापाक्रियते
[8] T. नारकादिकेशोल्लञ्चनतः

निःस्पृहस्य यथा राज्यसुखाभावो न बाधकः ।

तथाभ्यासात् न तद् दुःखं नारकं तस्य बाधकं ॥८७४॥

भावनाबलतः सर्वं लोके दुःखसुखादिकं । ततो मोक्षस्थितस्यास्य नास्ति दुःखसुखादिकं ॥८७५॥

**अथापि स्याद(।)अस्ति कर्म्म कर्मक्षयाय सम्वर्त्तते । स एव भवतोभ्युपगम इत्यभ्युपगमबाधा । तदसत् । यतः**

**उत्पित्सुदोषनिर्घातार्थेपि दोषाविरोधिनः ॥२७८॥**
**तज्जे[1] कर्म्मणि शक्ताः स्युः कृतहानिः कथं भवेत् ।**

**न ख(लु) कृतस्य कर्मणो हानिः, नहि कृतनाशोस्ति । कथं तर्हि कर्मक्षयः उक्तः । अत्रोच्यते ।**

कर्म तत्तादृशं येन सामग्र्यन्तरसभवे[2] । फलं ददाति सद्भावे नतु कर्म्म विरोधिनः ॥८७६॥

**यत्तु पुनर्नियोगतः फलदानसमर्थं तदवश्यमेवफलं ददाति । तदर्थमपि न तपस्विनामभियोगः । बलादेव तस्यागमात् । रागादिपरिक्षये त्वनागतरागकार्यफलपरिक्षय एव न कृतस्यावश्यंभाविवेदनीयस्य कर्म्मणः । ननु यथा तृष्णायां स्थितायां पुनरुद्भूतिः कर्म्मणां तथा कर्म्मणि स्थिते पुनः तृष्णोदय इति चेत् । तदसद्यतः ।**

**दोषा न कर्म्मणो दुष्टः करोति न विपर्ययात् ॥२७८॥**
**मिथ्याविकल्पेन विना नाभिलाषः सुखादपि ।**

**तृष्णायां सत्यां फलार्थी कर्म्म करोत्यन्यथा वा तृष्णासम्भवे हि नकिञ्चित्कुर्य्यात् ।**

**अथ शुभं कर्म्म सुखदानसमर्थमिति सुखाभिलाषी नियोगतो भवेत् । तन्न(।) सुखमेव परमार्थतः किञ्चित् संसारेऽपि तु मिथ्याविकल्प एव केवलः । तेन मिथ्याविकल्पेन विना कुतोऽभिलाषः कस्य वा तत्सुखमिति । तस्मात् सत्कायदृष्टिलक्षणाविद्यापरिक्षयादेव मोक्षो नान्यथेतिचतुरार्यसत्यप्रकाशनमेव तायः ।**

## (च) तायात् सुगतत्वसिद्धिः—

**तस्माच्चतुःसत्योपदेशलक्षणात् कार्यभूतात् ।**

**तायात् तत्त्वस्थिराशेषविशेषज्ञानसाधनं ॥२८१॥**
**बोधार्थत्वाद् गमेर्याह्यशैक्षाशैक्षाधिकस्ततः ।**

**तायाद्धि भगवान् सुगत ताभिज्ञायते[3] । तच्च सुगतत्वं । तत्त्वस्थिराशेषविशेषज्ञानं । तत्त्वज्ञानं । प्रशस्तज्ञानं । स्थिरज्ञानं । अपुनरावृत्तिज्ञानं । स्थिरं हि न पुनरावर्तते । अशेषविशेषज्ञानं । सर्वाकारज्ञानं । निःशेषज्ञानं । बोधार्थो हि गमिरत्र । तदस्ति भगवत इति तायादेव ज्ञायते । न खल्वनुमानादेव तायित्वं । न ह्यन्येषामेवम्भूतं तायित्वं सम्भवति । अनुमाने प्रवर्त्तनेऽन्येषामपि स्यात् । अथानुमाने परम्परयागतमे[4] तदिति प्रतिवचनं । तथा सत्यन्येषामपि**

[1] T. तज्जे
[2] T. सामग्र्यन्तरसंभवे
[3] T. सुगत इति ज्ञायते
[4] T. अथा० परम्परयाऽगतमे०

स्यात्। नानुमानं क्वचिद्भवति क्वचिन्नेति विभागोस्ति। न चैकस्यापि भगवदुपदेशात्ये वेप्यस्ति[1]! तेन सर्वपदार्थानां सर्वाकारदर्शनं भगवत इति ज्ञायते। नहि सर्वपदार्थानां सर्वाकारदर्शनमन्तरेणेदं सम्भवति। सर्वपदार्थाः क्षणक्षयिण इत्यादि यदेव न दृष्टं तेनैवानेकान्तसम्भवात्। अथ यथास्माकं तथा भविष्यति तस्यापि। नास्माकं तदुपदेशंविना। तस्माद्यः साक्षाद्दर्शी यस्य च परोपदेशस्तस्यायं निश्चयो नान्यस्य। न च निश्चयं विनोपदेशः।

अथ भ्रान्त्यापि सम्भवति। तदसत्। यतः।

नित्यत्वे भवति भ्रान्तिः सदृशापरसम्भवात्।
क्षणिकत्वे तु किं भ्रान्तेः कारणं येन सा भवेत् ॥८७७॥

सदेहोपि नैव भवति। उभयदर्शनाभावादुभयांशावलम्बितत्वात्। तस्मादयं निश्चयादेवोपदेशः। स च निश्चयो न साक्षात्करणं विनानुमानस्यास्माकमुपदेशमन्तरेणाभावात्। न च सन्देहेन भगवतेदमुक्तं। उभयस्यापि निर्देशप्रसङ्गात्। तस्मात्तत्वस्थिराशेषज्ञानयोगाद्भगवान् सुगतः तत एव बाह्यशैक्षाशैक्षाधिकत्वं भगवतः। ततः सुगतत्वात्।

**परार्थज्ञानघटनं तस्मात्तच्छासनं दया ॥२८२॥**
**ततः परार्थतन्त्रत्वं सिद्धार्थस्याविरामतः।**

सत्यमस्ति सुगतत्वं भगवतः तत्तु कुतो[2] हेतोरिति। परिहारः।

परार्थज्ञानघटनं शास्तृत्वसंज्ञकं कारणमनुमीयते। अन्यथा सुगतत्वस्यासम्भवः। ततोपि दया नान्यथा परार्थज्ञानघटनं।

नन्वनेनैव किं साधितेन सुगतत्वमात्रेणैवासौ प्रमाणं। नैतदस्ति यतः।

न ज्ञानमात्रतस्तस्य प्रामाण्यमुपदेशतः। सदा प्रामाण्यमस्यास्ति नान्यथास्मासु सा प्रमा[3]॥८७८॥

तदाह।

ततः परार्थतन्त्रत्वं सिद्धार्थस्याविरामतः।

दयया हि परार्थज्ञानघटने सर्वदा परार्थमेव करोति। दयातो न परिनिर्वाति। यथोक्तं प्राक्। किञ्च।

## (७) संवादकत्वाद् भगवान् प्रमाणम्

**दयया श्रेय आचष्टे ज्ञानाद्भूतं ससाधनं ॥२८३॥**
**तच्चाभियोगवान् वक्तुं यतस्तस्मात् प्रमाणता।**

दयावतो हि श्रेयः कथनं सम्भति ज्ञानाच्च भतमवितथं कथयति तच्च ज्ञानं ससाधनं। तच्च ससाधनमभियोगवान् वक्तुं यतः कारणचतुष्टयं तस्मात्प्रमाणता। अनेनैतत्कथयति।

आदेरन्त उपादेरुपान्त इत्येषु हेतुफलभावः।
तस्मात्प्रमाणभावो भगवत इति निश्चितं कथितं॥

[1] T. देशाभावोप्यस्ति　　[2] T. तत्तु कुतः　　[3] T. देङ.-ल

तत एव भगवतोऽनेनैव गुणेन स्तुतिः । प्रमाणभूतत्वलक्षणेन । तदाह ।

**उपदेशतथाभावस्तुतिस्तदुपदेशतः ॥२८४॥**
**प्रमाणतत्त्वसिध्यर्थमनुमानेप्यवारणात् ।**
**प्रयोगदर्शनाद्वास्य "यत्किञ्चिदुदयात्मकं ॥२८५॥**
**निरोधधर्म्मकं सर्वं" तदित्यादावनेकधा ।**

कस्मादुपदेशस्य तथाभावप्रामाण्यलक्षणास्तुतिः । तदुपदेशतः प्रमाणतत्त्वसिद्धिर्यथा स्यादिति । तत्र प्रत्यक्षं भगवतैवोपदिष्टं । "नीलज्ञानसमङ्गी पुद्गलो नीलं जानाति । नो तु नीलमेवेति"[1] । अनुमानमपि न वारितं । अतोऽनुमानमेव निवारितन्तु शाब्दादिकं । "शून्याः सर्वपरप्रवादा अहमेवैकस्तत्ववादीति । अथवा प्रयोगस्य परार्थानुमानलक्षणस्य दर्शनमस्ति । यदाह । "यत्किञ्चिदुदयात्मकं निरोधधर्म्मकं तत्सर्वमिति" ।

तदेवाह ।

**अनुमानाश्रयो लिङ्गमविनाभावलक्षणं ॥२८६॥**
**व्याप्तिप्रदर्शनाद्धेतोः साध्येनोक्तः स च स्फुटः ।**

साध्येन व्याप्तो हि हेतुर्गमकः । सा च व्याप्तिरनेकधा प्रदर्शिता भगवता हेतोः । "यत् किञ्चित्समुदयधर्म्मकं तत्सर्वं निरोधधर्म्मकमि"ति । ततोऽनुमानमपि भगवतोक्तमेवेति भगवदुपज्ञमेव प्रमाणतत्त्वं । तच्च भगवतः प्रमाणत्वादित्यतः प्रमाणमेव भगवतो गुणः परमः स पूर्वोक्तः ।

प्रमाणतत्त्वं भगवाँस्तथागतो दिदेश यस्माद्भयेन युक्तं ।
अतः परं नास्ति ततः प्रमाणं तथागतादेव समस्तसिद्धिः ॥८७९॥

(इति) प्रमाणवार्त्तिकालङ्कारे प्रमाणसिद्धिपरिच्छेदः प्रथमः ॥१॥

---

[1] T. नो तु नीलत्वमिति

# २ प्रत्यक्षपरिच्छेदः[1]

## § १. प्रमाणसंख्या

एवं सामान्यलक्षणमभिधाय विशेषलक्षणमाह। प्रत्यक्षमनुमानञ्च प्रमाणे(।) तत् प्रमाणमविसम्वादाद्(।) अविसम्वादश्चार्थाद्युत्पत्तेरर्थाव्यभिचारतः।

ननु तदेवाव्यभिचारित्वं अर्थे कथमवगन्तव्यं। प्रत्यक्षानुमानत्वाच्च प्रामाण्यं। नान्यतः। शाब्दादित्वादित्यर्थः।

ननु शब्दादीनामर्थप्रतिबन्ध एव नास्तीति कुतः। यस्माल्लक्षणद्वयं प्रमेयं। प्रमेयाव्यभिचारतः प्रामाण्यं। न च प्रमेयमन्तरेण प्रमेयाव्यभिचारः। प्रमेयञ्च प्रत्यक्षानुमानप्रतिपाद्यादपरं नस्ति। यदाह। नहि स्वसामान्यलक्षणाभ्यामपरं प्रमयेमस्ति। स्वलक्षणविषयं प्रत्यक्षं। सामान्यलक्षणविषयमनुमानमिति प्रतिपादयिष्यामः। एतदेव प्रतिपादयति।

मानं द्विविधं मेयद्वैविध्यात् शक्त्यशक्ति(त):[2] ।
अर्थक्रियायां; केशादिर्नार्थोऽनर्थाधिमोक्षतः ॥१॥

प्रत्यक्षानुमानभेदेन द्विविधमेव प्रमाणं प्रतिपत्तव्यं। अन्यथा मेयप्रतिपत्तेरयोगादिति प्रतिपादयिष्यते।

प्रत्यक्षानुमेयत्वं प्रकारात्[3] प्रतिपत्परा(।) न समस्ति[4]ततस्तस्मात्प्रमाणं नापरं परं ॥१॥

प्रत्यक्षत्वानुमेयत्वमेवावितथाप्रमेयत्वप्रतिपत्तिर्नापरा। सामान्यविशेषरूपादपरस्य प्रतिपत्तिप्रकारस्याभावात्। विषयस्य चैकस्यैव द्वैविध्यं प्रतिपत्तिप्रकारस्य द्वैविध्यात्। प्रतिपत्तिभेदश्च प्रमाणभेदः। स एव च विषयभेदः(।) ननु प्रतिपत्तिभेदो विषयभेदः कथं। न ह्यन्यस्मिन् भिन्नेऽन्यस्य भेदः। सत्यमेतत्।

तुरगस्य न भेदेस्ति गवादेरुपभिन्नता[5]। सङ्गत्यभावान्न ज्ञानज्ञेययोरेवमिष्यते ॥२॥
ज्ञानायत्ता पदार्थानां सदासंप्रत्ययस्थितिः। ज्ञानान्तरात्स एवार्थोऽर्थान्तरत्वेऽनुमीयते[6] ॥३॥

यदा साक्षाज्ज्ञानजननं प्रति शक्तत्वेन प्रतीयते। तदासौ स्वेनरूपेण लक्ष्यमाणत्वात् स्वलक्षणं यदातु पारम्पर्येण शक्तत्वात् तस्यैव प्रतीयते। तदा सामान्यरूपेण लक्षणमिति सामान्यलक्षणं।

पारम्पर्येण शक्तिरेवाशक्तिः पर्युदासवृत्त्या न शक्त्यभाव एव। केशादेस्तु तैमिरिकोपलब्धस्य शाब्दाभ्युपलब्धस्य च नार्थतत्त्वं साक्षात् पारम्पर्येण वा शक्तत्वेनाप्रतीतेः। अर्थाधिमोक्षाभावात् अधिमोक्षाभावत्वबाधकप्रमाणप्रवर्त्तितः। इतश्च प्रमेयद्वैविध्यं।

---

[1] T. ते-वेष्ठने ११५ क. पृष्ठत आरभ्यते।
[2] T. मानं द्विविधं विषयद्वैविध्यात् शक्त्यशक्तितः। [3] T. प्रकारात्
[4] T. न ह्रीष्टास्ति [5] T. रूपभिन्नता [6] T. ज्ञायते

**सदृशासदृशत्वाच्च विषयाविषयत्वतः (।)**
**शब्दस्यान्यनिमित्तानां भावे धीः सदसत्त्वतः ॥२॥**

**यत् कथञ्चि(त्) सदृशरूपेण प्रतीयते। तत्सामान्यलक्षणमन्यथा विशेषलक्षणं[1]।**

**ननु पुरोव्यवस्थितं गवादिसदृशरूपेण प्रतीयते। तत् किं सामान्यलक्षणं तथोपमानेन प्रतीयमानमयं स गवय इति। नैतदस्ति।**

सदृशेनैव रूपेण यस्य सम्वेदनोदयः(।) सामान्यलक्षणं तत्स्यात् स्वरूपस्यात्र वेदनं ॥४॥

**सदृशेनैव रूपेण यदुपलक्ष्यते तत्सामान्यं, अत्र तु विशेषप्रपिपत्तिः। सदृशरूपतातु प्रतीयत इति चेत्। न(।) तद्रूपस्य व्यतिरेकणाप्रतीतेः। कथं सदृशोऽयमित्यध्यवसाय इति चेत्।**

न खल्वध्यवसायेपि पृथक् सादृश्यवेदनं। पृथक् प्रतीत्यभावे च तदेवाद्वयवेदनं ॥५॥

**नखलु सदृशमिदमिति प्रतीत्या सादृश्यमपरं वस्तुव्यतिरेकेण वेदयितुं शक्यं। नहि व्यवस्थितार्थोल्लेखमपहायापरा प्रतीतिरर्थस्य। तस्मादत्रार्थप्रतीत्यभावादनालम्बनैव सादृश्यप्रतीतिः। अनुमानप्रतीतौ तु दृष्टान्तः दृष्टरूपाध्यारोपः सादृश्यं। यद्येवं शब्दादिविषयोपि सामान्यमत्रोक्तमुत्तरं। "नार्थोऽनर्थाधिमोक्षत" इति। एवमन्यत्रापि द्रष्टव्यं। शब्दस्य विषयः सामान्यलक्षणमविषयः स्वलक्षणं।**

**ननु यदि शब्दस्य विषयः सामान्यलक्षणं शब्दोपि तर्हि प्रमाणं सामान्यविषयत्वात्(।) नैतदस्ति।**

परार्थमनुमानं यत्सामान्यं तस्य गोचरः। सामान्यमेव शब्दस्य गोचरो नैवमुच्यते ॥६॥
अगोचरो हि शब्दस्य न सामान्यमितीर्य्यते। शब्दस्य विषयो यत्तु तत्सामान्यं परं नत् ॥७॥

**शब्दस्यैव विषयः सामान्यं। नतु शब्दस्य यो विषयस्तत् सामान्यमेव। अविषयोपि न स्वलक्षणमेवापि त्वविषय एव स्वलक्षणमित्यर्थो विवक्षितः। तेन नायं दोषः। तस्मात् शब्दविषयोपि किं तत् सामान्यं कश्चिदनर्थः। तथाऽविषयोपि किञ्चित् स्वलक्षणं कश्चिदनर्थः। अन्यनिमित्तानाञ्च विषयादन्येषां समयाभोगादीनां भावेपि यः सत्त्वं यत्र तत्सामान्यं। यत्र तु धियोऽन्यनिमित्तानां चक्षुरादीनां भावेपि न भावस्तत्तत्स्वलक्षणं। अत्रापि पूर्ववद् वक्तव्यं।**

**अथवान्यनिमित्तानां भावे यत्रधियः सत्त्वं तत्स्वलक्षणं यत्र न सत्त्वं धियोऽन्यनिमित्तभावे तत्सामान्यलक्षणमनुपलभ्यमानस्य स्वरूपेण लक्षयितुमशक्यत्वात्। परोक्षं तत्सामान्यञ्च। तत्र स्वरूपेण लक्ष्यमाणं स्वलक्षणमन्यथा सामान्यलक्षणं परोक्षं।**

**ननु प्रयक्षपरोक्षलक्षणो विषयभेदः केन प्रमाणेन प्रतीयते। किं प्रत्यक्षेणानुमानेन प्रमाणान्तरेण वा।**

प्रमाणान्तरेण द्वित्वञ्चेत् प्रमेयस्य प्रतीयने। विरुद्ध एव हेतुः स्यात् तृतीयस्यापि सम्भवात् ॥८॥
प्रमाणद्वितयेनाथ भवेदन्योन्यसंश्रयः। त्र्यादिनापि प्रमाणेन विषयान्तरसाधने[2] ॥९॥
त्र्यादिप्रमाप्रसिद्धिः स्यात् अभिप्रेतं न सिध्यति। प्रमाभेदो हि मेयस्य प्रभेदस्य प्रसाधकः ॥१०॥

---

[1] T. अन्यथा प्रतीतौ स्वलक्षणम्  [2] T. प्रमेयान्तरसाधने

अनुमानेन सिद्धिश्च परोक्षस्य कथं भवेत् । न प्रत्यक्षं परोक्षेऽस्ति वृत्तौ वा व्यधिकानुमा ॥११॥
परोक्षता कथञ्च स्यात् प्रत्यक्षस्य प्रवर्तने । प्रत्यक्षस्य निवृत्त्यैव वस्तुना स्यात् परोक्षता ॥१२॥
तत्र प्रवृत्तं नाध्यक्षं तेन तच्च प्रतीयते । वाचोयुक्तिरपूर्वेयं चक्षुषा दर्शनं[1] विना ॥१३॥
तस्मात्प्रत्यक्षविषयः प्रत्यक्षेण प्रतीयते । परोक्षे तु प्रमा नास्ति कुतो द्वैविध्य[2] निश्चयः ॥१४॥

**तस्मात् प्रमेयद्वैविध्यमसिद्धं साधनं कथं विरुद्धं वा यद्यपि नाम प्रमेयद्वैविध्यन्तथापि प्रमाणेनापि तावता भवितव्यमिति कुतः ।**

प्रतिबन्धाप्रसिद्धौ हि सर्वो हेतुरनिश्चितः । प्रतिबन्धप्रसिद्धिश्च न प्रत्यक्षप्रमाणिका ॥१५॥
प्रमाणत्वं हि सामान्यङ्कथमध्यक्षसाधनं । तस्मिन्नसिद्धे सम्बन्धः कथन्तेनाक्षनिश्चितः ॥१६॥
इति प्रमेयद्वितयाप्रसिद्धिरन्येन सिद्धौ तु विरुद्धता स्यात् ।
असिद्धसम्बन्धतया च हेतोर्भवेदनैकान्तिकभाव एव ॥१७॥

**अत्रोच्यते । विषयद्वैविध्यम्प्रत्यक्षत एव सिद्धं । सदृशासदृशप्रतीतिर्हि प्रतीतेरेव धर्मः स च स्वसम्वेदनप्रत्यक्षसिद्धः । न च प्रतीतिः स्वरूपेभ्रान्तिसङ्कुला । तत्र भ्रान्ति-शङ्कायामव्यवहारएव भवेदनवतारहेतुर्वा वादिप्रतिवादिप्राश्निकवचनस्य । तथाहि ।**

सम्वेदनं विना कस्य क्व वचः सम्प्रवर्त्ततां । असङ्गताश्रयन्नैव वर्तते वचनङ्क्वचित् ॥१८॥
प्रतीतिभेदे भावानामन्येषामपि भिन्नता । किम्पुनर्न प्रमाणस्य तद्रूपस्य भविष्यति ॥१९॥
प्रतीतिभेद एवास्तु मानभेदः कथम्भवेत् । ननु प्रसिद्धम्मानत्वम्पूर्व्वं सामान्यलक्षणात् ॥२०॥
तद्भेदव्यवहारोयमिदानीं स[3] ध्यताङ्गतः । सविकल्पकमध्यक्षमेषोग्निरिति यो वदेत् ॥२१॥
स्वरूपमक्षतः सिद्धम्पूर्वसाम्येर्थहेतुता । न चैवमग्रहेऽर्थार्थीप्रवर्तेतार्थसम्पदे ॥२२॥

**व्यवहारतःप्रवृत्तिनिवृत्तिलक्षणात्प्रामाण्यं सामान्यलक्षणेनैव[4] प्रथमपरिच्छेद एव प्रसिद्धं । भेदव्यवहारमात्रकमेवेदानीं साध्यमापन्नं तत्र सविकल्पकमेकमेवेदम्प्रत्यक्षं यदुताग्नि-रयमस्याभिप्रेतार्थक्रियाकारीति यो वदेत्तम्प्रति द्वितयमेतदिति । प्रतीत्याकारभेदात्प्रतीतिभेदे न च बाह्या अपि भावा भेदवत्वेनावगम्यन्ते । किम्पुनः प्रमाणं यत्तद्रूपमेव वस्तुतः । तत्र स्वरूपम्भास्वराकारम्प्रत्यक्षत एव सिद्धं । साक्षात्करणात्तद्धि प्रत्यक्षमपरोक्षविषयत्वात् । पूर्व्वार्थक्रियाकारणसाधर्म्यन्तु समानाकारतया प्रतीयमानम्परोक्षत्वात्प्रमाणान्तरविषयः । अथ प्रत्यक्षमेव प्रवर्तकन्नापरन्तत्तु मान्तरम्भवदपि[5] न प्रमाणं । नहि सह तेन यावद् भवति तावत्प्रमाणं । शरीरभूतलादीनामपि प्रामाण्यप्रसङ्गात् । अत्रोच्यते ।**

अन्वयव्यतिरेकाभ्यामुपयोगीतरस्थितिः । न च केवलमध्यक्षन्तदभावे प्रवर्तकम् ॥२३॥

**अथ केवलमध्यक्षन्तदभावेत्यन्ताभ्यासात्प्रवर्तकन्दृष्टन्नानुमानं सादृश्यग्रहणाकारं ।**

**तदप्यसत् । नाध्यक्षप्रतीतिः केवला प्रथमम्प्रवर्त्तिका दृष्टा । मा भूत्पूर्व्वम्पश्चाद् भविष्य-तीति चेत् । तदेतत्तौताख्यानं[6] ।**

तद्देशे हि प्रवेशो यः प्रथमं यदि रोगकृत् । प्रथमन्न प्रवेक्ष्यामि पश्चादस्तु प्रवेशिता ॥२४॥

[1] T. अक्षेण दर्शनं
[2] T. प्रमेयद्वैविध्य०
[3] T. एवं
[4] T. प्रमाणसामान्य०
[5] T. तत्तु प्रतीत्यन्तरम्भवदपि
[6] T. ग्लेन्-पऽि-ग्तम्

**यतः प्रथमम्प्रवर्तना भवेत् सैवाभ्यासिकी पश्चात्तनी प्रवृत्तिः कुतः। एतदेव पश्चात्तमस्य पश्चात्तनत्वं यः पूर्व्वकमन्तरेणाभावः। तस्मात् प्रत्यक्षेतरापि[1] प्रतीतिः प्रवर्त्तिकैवान्यथा प्रवृत्त्यसम्भवात्। किञ्च।**

धूमादेर्लिङ्गतो वृत्तिरग्न्यादावपि या क्वचित्। साध्यक्षेण विना दृष्टा ततस्तदपि निष्फलं ॥२५॥

**यथैवात्यन्ताभ्यासात्परोक्षप्रतीतिमन्तरेणापि प्रत्यक्षादेव प्रवर्तनं। तथा प्रत्यक्षप्रतीतिमन्तरेण धूमाद् वह्न्यादौ प्रवर्तनमिति तदपि प्रवर्तकमध्यक्षन्न। अथापि स्यात्।[2]**

अनुमानम्विनाध्यक्षन्न स्वार्थस्य प्रसाधकं।
प्रत्यक्षन्तु विना तस्मादभ्यासात्स्यात् प्रवर्तकम् ॥२६॥

तत्प्रत्यक्षमेवात्र प्रमाणन्नानुमा क्वचित्। तदभावेपि तत्सिद्धिरित्यध्यक्षप्रमाणता ॥२७॥

**अत्रोच्यते।**

उक्तमत्र विनाभ्यासान्न प्रत्यक्षे प्रमाणता। ततोऽनुमानमेवात्र प्रधानमि[3]ति गम्यतां ॥२८॥
नान्यदाऽनुपयोगित्वेऽन्यदाप्यनुपयोगिता। अनभ्यासेऽर्थिता कस्मादनुमानेस्ति जन्मिनां ॥२९॥
उपयोगविनिर्मुक्ते कथङ्कस्यचिदर्थिता। अर्थित्वविषयो वस्तु नोपयोगीत्ययुक्तिमत् ॥३०॥
अथानुमानमध्यक्षप्रवृत्त्यर्थितयाऽर्थ्यते। प्रत्यक्षमपि नैवैताङ्गति लिङ्गेऽतिप्रवर्तते ॥३१॥

**तस्मात् प्रत्यक्षानुमानयोर्द्वयोरपि स्वविषये (न) प्रामाण्यमिति[4] स्थितमेतत्। एवमेव लोकस्य प्रतीतेः।**

**अथ तव प्रमाणमेव। न(।) विशेषाभावात्। तथा हि।**

प्रवर्त्तने समानेपि यदि कश्चित्प्रवर्त्तकः। प्रवर्तकत्वेतरयोः क इदानीम्विवेचकः ॥३२॥

**न च प्रवर्तकत्वादपरम्प्रामाणं।**

**ततोऽध्यक्षेतरयोर्द्वयोरपि (तुल्यं)[5] प्रामाण्यन्न वा कस्यचित्।**

**अथापि स्यात्(।) प्रत्यक्षं तत्रापि प्रवर्तकङ्कार्यलिङ्गादिविषयमनध्यक्षन्तु सत्तामात्रेण सन्निहितन्न तस्य प्रवर्तने व्यापारः।**

**तदप्यसत्।**

**एवं प्रतीत्यभावात् नहि तत्र प्रत्यक्षमेव प्रवर्तकमिति कस्यचिदवसायः। न च प्रत्यक्षस्यापि सत्तामात्राद् परं प्रवर्तकत्वं। अन्वयव्यतिरेकमात्रेण सर्वस्य कार्योपयोगात्। प्रतीत्यसमुत्पादमात्रकमेवेदमिति सिद्धान्तात् परमार्थतः(न)[5] कस्यचित्क्वचित्सव्यापारता। सम्वृतिरेव सव्यापारता न परमार्थः[6]। एतच्च पश्चात्प्रतिपादयिष्यते। अपि च।**

प्रत्यक्षमेव तत्रापि परलोकप्रसाधकम्। लिङ्गस्य साधनङ्का नः क्षतिर्लैङ्गिकबाधने ॥३३॥

**यद्यग्न्यादिविषयं लैङ्गिकं ज्ञानन्न प्रमाणं। भवतु तेनैव लिङ्गज्ञानेन प्रत्यक्षभावमनतिक्रम्य वर्तमानेन लिङ्गिनो लिङ्गस्य च विषयीकरणम्परलोकादेरिति न काचिन्नः क्षतिः।**

अनुमानाप्रमाणत्वे परलोकाद्यसिद्धितः। मा भून्नास्तिकता तस्याप्रामाण्यम्प्रतिसिध्यति ॥३४॥

[1] T. प्रत्यक्षेतराऽपि [2] T. अनुमानं [3] T. साधनं
[4] T. न प्रामाण्य० [5] T. [6] T. संवृतिरेव सव्यापारतेत्य स्यार्थः

**अनुमानस्याप्रमाणतायान्तद्विषयस्य परलोकादेरसिद्धिरिति नास्तिकतामाशङ्कमानै-रस्माभिरनुमानप्रतिक्षेपः प्रतिक्षिप्यते । नान्येनाभिप्रायेण । स चेदनुमानविषयः परलोका-दिरप्रत्यक्षेपि प्रत्यक्षेण विषयीक्रियते किमस्माकमनुमानस्य प्रामाण्यसाधनेन ।**

महताहि प्रयासेन यस्य साधनमिष्यते । सोऽर्थः सिद्धो विनायासं यदि कस्यार्थिताऽपरा ॥३५॥

**अनायाससाध्येर्थं एकेन प्रकारेण कः प्रकारान्तरमायाससम्भवभाजनञ्जनः प्रेक्षावाना-श्रयेत् । अनुमानेन साध्योर्थो यदि प्रत्यक्षमात्रात्प्रसिध्यति किमस्माकमनुमानेन दीयते ।**

**किञ्च ।**

यद्यध्यक्षात्परोक्षेपि प्रसिध्यत्वर्थ ईप्सितः । सर्वस्य साधनम्प्राप्तं सर्वः सवार्थविद्भवेत् ॥३६॥
असम्बन्धान्न चेदस्ति सानुमैव तथा सति ।

**न खल्वसम्बन्धा[१]त्प्रती तिमन्तरेणा परमनुमानयनुमानवादिभिरपीष्यते । तस्मात्स-दृशरूपेण यत्प्रतीयते तत्सामान्यलक्षणमेवतत्त्वसंवेदनप्रत्यक्षप्रसिद्धं । अनेन कार्यहेतोर्विषयः प्रदर्शितः ।**

**शब्दविषयत्वमपि शाब्दप्रत्ययगम्यमेव स एव शाब्दः प्रत्ययः स्वप्रतिभासिनो विषयत्वं प्रतिपादयति । अनेन स्वभावहेतोर्विषयस्य दर्शनं(।) तथाहि ।**

उपमानेन गोवस्तुसदृशस्य विनिश्चयः । अयं सदृशशब्देन प्राक्तेन प्रतिपादितः ॥३७॥
तस्य स्वरूपमध्यक्षप्रत्ययादेव गम्यते । सादृश्यन्तु परन्तस्य शाब्दप्रत्ययगोचरः ॥३८॥

**तथाहि । अनेन सदृशोसौ तेन सदृशोयमित्येक एवार्थः । तदनुकारव्यवहारश्च द्वयावलम्बी न च प्रत्यक्षेण द्वयं प्रत्येतुं शक्यमतः शाब्दप्रत्ययगोचर एव सादृश्यस्वभाव-हेतुना प्रतीयते । अनेन सदृशोऽसावेतदाकारस्य तत्रापि दर्शनात् । सादृश्यव्यवहारमात्रस्य साधनात् । आकारद्वयस्य तु तथाभूतप्रत्ययनिबन्धनस्य पूर्वापरप्रत्यक्षाभ्यामेवोपलम्भात् । तस्माच्छब्दविषयो न स्वलक्षणं । शब्दग्रहणेन च विकल्प एवोपलभ्यते[२] । विकल्पविषय इति यावत् । अन्यनिमित्तानाम्भावे धियो यत्र न सत्त्वमिति चानुपलब्धेरुपक्षेपः । यत्र धियो न सत्वं तस्याभावः । तत्र[३] क्वचित्प्रवर्तमानं ज्ञानमन्यत्राहन्न[४] प्रवृत्तमिति नियताकारत्वा-त्प्रत्याययति । नहि तत्सर्वत्र प्रवृत्तिमात्मनं उपलभते । तस्माद् भेदवादिनः प्रत्यक्षत एव द्विधाभावावगमः प्रतीतेरन्यगत्यभावात् । इदञ्च सदृशासदृशत्वादि सकलमेव परोक्षेतर-प्रत्ययविषयस्तच्चार्थक्रियायां शक्त्यशक्तित इति ज्ञायते । एतत्पश्चात्प्रतिपादयिष्यते ।**

**तत्र यदुच्यते । परोक्षे प्रत्यक्षन्नास्ति । तदयुक्तं ।**

यत्र नास्मि[५] तदध्यक्षादपरम्वर्जितम्मया । एतावन्मात्रतोर्थानाम्परोक्षत्वविनिश्चयः ॥३९॥
प्रत्यक्षमेवात्मानम्वेत्ति सम्वेदनात्मना । नियतत्वप्रतीत्यैवान्यस्यानध्यक्षतागतिः[६] ॥४०॥
प्रत्यक्षेण प्रतीतेपि परोक्षत्वे परोक्षिता । भवत्यर्थस्य तत्रार्थेन प्रत्यक्षं हि वृत्तिमत् ॥४१॥
नन्वर्थेऽध्यक्षतोऽज्ञाते परोक्षार्थस्य वित्कथं । तद्वेदने हि तद्धर्मस्तत्स्वभावः प्रतीयते ॥४२॥

---

[१] T. न खलु सम्बन्धात् [२] T. उपलक्ष्यते [३] T. बुद्धौ
[४] T. द-नि-ग्शन्-ल-म-शुग्स्-सो शेस् [५] T. अहंप्रत्ययः तत्रैव
[६] T. ग्शन्-प-क्लोग्-ग्युर्-तोंगिस्-प-यिन् = अन्यस्य परोक्षतागतिः ।

**यदि परोक्षोऽर्थः प्रत्यक्षेण ज्ञातो भवेत्तद्धर्मः प्रतीयेत धर्म्मस्य तत्स्वभावत्वात्। अतत्स्वभावस्य तद्धर्मत्वायोगात् पदार्थान्तरवत्[1]। तत्सम्बन्धात्तु तद्धर्मतेति चेत्। आयातन्तस्य तर्हि [2]प्रत्यक्षेण परिज्ञानं। तेन परोक्षतासम्बद्धं वस्तु प्रतियताऽध्यक्षेण नियमेन परोक्षमपि वस्तु प्रत्येतव्यन्ततः परोक्षाभिमतस्य वस्तुनोऽपरोक्षतैव प्रसक्ता। ततो नानुमानावतारः। नहि प्रत्यक्षगृहीतमेवानुमानविषयः। अत्रोच्यते।**

स्वसम्वेदनमध्यक्षम्परोक्षत्वे प्रवर्तते। तद्धर्मिणीन्द्रियज्ञानमपरन्तु प्रवर्तते ॥४३॥

**द्वयप्रतिपत्तौ हि सम्बन्धप्रतिपत्तिः। न च तद् द्वयमेकेनैव प्रमाणेन प्रत्येयं। तत्र स्वसम्वेदनेन परोक्षतार्थस्य धर्मः प्रतीयते। परोक्षन्तु धर्म्मि[3]प्रत्यक्षान्तरेणेन्द्रि(य)-विज्ञानेन प्रतीयते। ततः सम्बन्धप्रतिपत्तिः। ततः प्रत्यक्षेण परोक्षताप्रतीतावपि वस्त्वनुमानेन प्रतीयत इत्यनुमानावतारः। किञ्च।**

विधिरूपस्य धर्म्मस्याव्यतिरेकेण तिष्ठतः। न वस्त्वग्रहणे वित्तिर्युक्ता न तु विपर्ययात् ॥४४॥

**विधिरूपो हि धर्म्मोऽव्यतिरिक्तो वस्तुनः सधर्म्मिणा सहैकप्रमाणग्राह्यः। परोक्षत्वन्तु प्रतीतिविरहोऽध्यक्षेण। स न धर्मिग्रहणसापेक्षः।**

**अथ परोक्षे प्रत्यक्षस्याप्रवृत्तौ कथमनुमानवृत्तिः। न किञ्चिदेतत्। यतः।**

नानुमानात्परोक्षत्वं साध्यते तस्य वस्तुनः। सत्यामध्यक्षतायान्तु दृष्टरूपस्य साधनं ॥४५॥

**नह्यनुमानेन वस्तुतः परोक्षता साध्यते येन तत्र प्रत्यक्षवृत्तिरिष्यते। अपि तु परोक्षता स्वसम्वेदनप्रत्यक्षत एवास्य प्रसिद्धेत्युक्तमेतत्। सत्यान्तु प्रत्यक्षप्रसिद्धायाम्परोक्षतायामर्थक्रियासमर्थमग्न्यादिरूपमे[4]वार्थस्य साध्यतेऽनुमानेन तत्र च प्राक्प्रत्यक्षम्प्रवृत्तमेव ततोनुमानप्रवर्तनाव्याघातः। किञ्च।**

अनुमानस्य तद्रूपप्रतिपत्तावशक्तितः। परोक्षता तदैवास्य सामर्थ्यादवतिष्ठते ॥४६॥

**अनुमानस्य हि तत्स्वरूपप्रवर्तना सामर्थ्यमेवाप्रकृता। सा च तदैवास्य भवति। ततो न प्राक्तत्र प्रत्यक्षवृत्तिरपेक्ष्यते[5]। न च परोक्षतया कश्चिदर्थी येन तत्र प्रत्यक्षवृत्तिमवेक्षेत। अनिष्टावपि सा भवति। अनेन प्रामाण्यप्रसाधनमपि निर्णीतं।**

परोक्षवस्तुसिद्धौ हि प्रामाण्यन्तस्य सिध्यति। परोक्षवस्तुसिद्ध्यैव तत्सम्बन्धप्रसिद्धितः ॥४७॥
वस्तुसम्बन्धितामात्रं ज्ञाने प्रामाण्यमुच्यते।
प्रसिद्धवस्तुसम्बन्धे[6] प्रामाण्ये लिङ्गतोस्ति वित् ॥४८॥
परिशिष्टन्तु प्रागेव प्रत्ययादीति नोच्यते।

**ननु प्रमेयद्वैविध्यम्प्रमेयमेवा द्विधा प्रमेयञ्च कारणम्प्रमाणद्वैविध्यङ्कार्यं। तत्कथङ्कारणात्कार्यस्य सिद्धिः। अत्रोच्यते।**

सामग्रीसम्भवे कार्यङ्कारणाज्जायते यतः। ततः कारणतः सिद्धिः कार्यस्यायुक्तिका कथम् ॥४९॥

---

[1] T. न दृश्यते अहंप्रत्यक्षः—बहिः
[2] T. का तद्वस्तु सम्बद्धधर्मस्य तर्हि
[3] T. धर्मिवस्तु
[4] T. अग्न्यादिलक्षणमेव
[5] T. प्रमाणप्रवृ०
[6] T. वस्तूनामेव संबंद्धे

स्वप्नदर्शिनो विपरीतख्यातिम्प्रतिपादयिष्यामीति जाग्रताम्विपरीतख्यातेः प्रतिपादनं ।

अथ विपरीतख्यातिः । ख्यातेरेव तर्हि सा विपरीतता नार्थस्येति स्वेनैव रूपेणार्थस्य दर्शनमिति का विपरीतख्यातिः । ख्यातेरेव तद्रूपं यो विपर्यय इति । न चान्यख्यातिरूपमन्यस्य येनान्यस्यापि तथा प्रतीतिः स्यात् । भिन्नत्वात् प्रतीतीनां । एवन्तर्हि प्रतीतिरेव तथा प्रतीयत इति न स्वप्नदर्शनस्य सालम्बनता । तथाहि ।

तत्कालेऽर्थः स नास्त्येव संस्कारादुदयस्तथा । न दृश्यतेऽविद्यमानं ज्ञानमेव स्ववेदनं ॥१८७॥

देशान्तरव्यवस्थितन्दृश्यतेऽन्यत्र देश इति युक्तमप्येतत् । कालान्तरसङ्गतन्तु तदाऽविद्यमानङ् कथमिव दृश्यते । तस्मात् पूर्वदर्शनाज्ज्ञानमेव तथोत्पन्नं सम्वेद्यते नार्थस्तस्यासम्भवात् । यद्यन्यकालेपि तत्कालतया दृश्यते सर्वत्र विपरीतख्यातिरस्ति जाग्रदवस्थायामपि स्तम्भादिदर्शने । न तत्र बाधकाभावात् ।

ननु बाधकाभावो विपरीतख्यातिरेव । अर्थप्राप्तेर्न विपरीतख्यातिरिति चेत् । नन्वर्थप्राप्तिरपि विपरीतख्यातिरेव । नन्वर्थस्य विद्यमानत्वे कथम्विपरीतख्यातिः । नन्वर्थस्य दृष्टत्वे कथमप्राप्तिः । तथाऽभावादिति चेत् । अभावे कथम्वेदनं । अन्यदाकाराविति चेत् । कथन्तर्हि न प्राप्तिः । अन्यदेव भावादीदानीमभावात् । कथन्तर्हि तद्दर्शनं ।

(पर आह)[1] ! तत्कालस्य रूपस्य प्राप्तिरपि तत्कालस्य किन्न भवति । अशक्यत्वादिति चेत् । कथन्द्रष्टुं शक्यं । दृश्यत इति चेत् । ननु तदेव न ज्ञायते कस्य दर्शनम् (।) प्रत्यभिज्ञानात् पूर्वस्य दर्शनमेतदिति निश्चयः । न । स्वप्ने प्रत्यभिज्ञानाभावात् जन्मान्तरदृष्टस्य । अन्येन प्रत्यभिज्ञायमानेन साधर्म्यादत्राप्यनुमानमिति चेत् । गन्धर्वनगरादिष्वभावात् । नहि च तत्र प्रत्यभिज्ञानं । सर्वमेव तर्हि प्रत्यभिज्ञेयम्पूर्वमेव दृश्यते नेदानीन्तनदर्शनमिति ।

अनेन स्मृतिसम्प्रमोषोपि व्याख्यातः ।

अलौकिकमपि व्याख्यातमनेनैव । तथाहि । किमिदमलौकिकं । अन्येन न दृश्यते असाधारणं ।

अत्रोच्यते । ज्ञानमेव तदन्येन योग्यदेशावस्थितेनाज्ञानाद् ग्राहकाकारवत् ग्राह्यतया ग्रहणादर्थ एव न ज्ञानं । न तस्य ग्राह्यतया ग्रहणमस्ति । स्वरूपेण ग्रहणात् स्वरूपेण हि सोर्थो न ग्राह्यतया । ग्राह्यतया चेदर्थः । ग्राह्यता प्रतिभासादन्या नास्ति । स एवास्तीति नार्थो नाम । ग्राह्याकारतयार्थत्वमुपलभ्यते न त्वसावर्थः । कथमन्येनान्यस्योपलम्भलक्षणमिति यत्किञ्चिदेतत् ।

अर्थोऽर्थ इति प्रत्यय उत्पद्यत इति चेत् । न । उक्तमेतत् (।) "नार्थोऽनर्थाधिमोक्षत" (वा० प्र० २।१) इति । एतेन नामादि व्याख्यातं ।

अपि च सर्वमेव पुरोवर्त्तिप्रतिभासं ज्ञानमत्र विपरीतख्यातिरत्र नेति । अत्रालौकिकाथता । अत्र नेति कुत इत्याह ।

सैवेष्टार्थवती केन चक्षुरादिमतिर्मता ।
अर्थसामर्थ्यदृष्टेश्चेदन्यत्प्राप्तमनर्थकं ॥१७॥

---

[1] T. नेह दृश्यते पाठः

अपि च (।) यैषा चक्षुरादिमतिरविपरीतख्यातिरूपा सार्थवती अर्थसन्निधिजनिता केन मता (।) किमत्र कारणं। नहि दृश्यमानतायाम्विशेषः। अर्थस्य सामर्थ्यमन्वयव्यतिरेकाभ्यान्दृश्यत इति चेत्। तथाहि (।) सोर्थोन्येन प्राग् दृश्यते स्वयञ्चानुमानेन पश्चात् प्राप्यते। तेनार्थस्य सामर्थ्यन्दृश्यते। यद्येवमन्यद् यत्रेयं सामग्री नास्ति तज्ज्ञानं प्राप्तमनर्थकं। तथाहि।

नास्त्यत्रार्थोऽत्र स्वस्तीति[1] मतिः साम्व्यवहारिकी। अविसम्वादिनी चेयम्मतिः(?) ॥१८८॥

तथाहि (।) ज्ञानमेव ममोत्पन्नमत्रार्थोस्ति पूर्वभावनासामर्थ्यमत्र मयैवम्भावितमिति न तु तन्मया दृश्यते स्मरणम्वा ममालौकिको वायमर्थः। येन बाधकेनालौकिकत्वम्प्रतीयते तेनानर्थकत्वमेव। न च लौकिकत्वेन प्रतीयमानमलौकिकन्तत्र विपरीतख्यातिप्रसङ्गात्। तदप्यलौकिकमिति चेत्। न (।) अनवस्थाप्रसङ्गात्। अथासाधारणत्वमेव प्रतीयते। नहि परेणेदम्प्रतीयत इति मतिः। अर्थविषये तु प्रत्ययेऽनुमानेन परप्रतीयमानता प्रतीयते। एवन्तर्हि परो नास्त्यभ्रान्तार्थस्तवैव प्रतीतिरेषाप्रतीतिरेवेयमिति नार्थ इति प्रत्येति तस्मात्प्रामादिप्रतिभासः नेन न सालम्बनत्वम्वक्तृश्रोतृसम्बन्धे सतीति न्यायः।

अप्रवृत्तिरसम्बन्धेप्यर्थसम्बन्धवद् यदि।
अतीतानागतम्वाच्यन्न स्यादर्थेन तत्क्षयात् ॥१८॥

यद्यर्थसम्बन्धाभ्युपगमो नामनिमित्तस्य तदाऽप्रवृत्तिरेव। यतोऽर्थेन सह तस्य क्षयः। असम्बन्धे सुतरामेवाप्रवृत्तिः(।) यत्रार्थसम्बन्धस्य केवलस्य प्रतीतेरप्रवृत्तिप्रसङ्गस्तत्रासम्बन्धे सुतरामेवाप्रवृत्तिः। अतीतानागतस्य चार्थस्याभावात्। यद्यपि नामनिमित्तमास्ते तथा[2] प्रवृत्तिरेवार्थेऽर्थोल्लेख्याभावात्। न ह्यन्यत्र प्रतीतेऽन्यत्र प्रवृत्तिः। परिशिष्टन्तु व्याख्यातं।

## ( २ ) परमते दोषाः

सामान्यग्रहणाच्छब्दादप्रसङ्गो मतो यदि।
तन्न केवलसामान्याग्रहणाद् ग्रहणेपि वा ॥१९॥

अतत्समानताऽव्यक्ती तेन नित्योपलम्भनं।
नित्यत्वाच्च यदि व्यक्तिर्व्यक्तेः प्रत्यक्षताम्प्रति ॥२०॥

आत्मनि ज्ञानजनने यच्छक्तं शक्तमेव तत्।
अथाशक्तङ्कदाचिच्चेदशक्तं सर्वदैव तत् ॥२१॥

यदि सामान्यं शब्दप्रत्ययगोचरः। तत्सामान्यं केवलमन्यथा वा गृह्येत। यदि केवलं सामान्यं गृह्यते व्यक्त्यपायेपि भवति प्रत्ययः किन्त्वतीतादिप्रतीतिर्न स्यात्। नहि सामान्यमतीतादिरूपं। अथ सामान्यमतीतादिव्यक्तियोगादतीतादीति व्यपदिश्यतेध्यवसीयते वा। तथा सति व्यक्तिरूपसहितमेव गृह्यते। न चातीतादिव्यक्तीनां रूपमस्ति। कथमतीतादेर्व्यक्तिरूपद्वारेणातीऽतादिरूपताप्रतीतिः। नह्यविषयीकृततद्रूपस्ताद्रूप्येणापरपरिग्रहणे समर्थः।

---

[1] T. अस्तीति [2] T. तदा

अथ केवलस्यापि सामान्यस्य ग्रहणे व्यवहारः ।

तदाप्यपरो दोषः । तस्य तत् सामान्यञ्च भवति तद्व्यङ्ग्यञ्च न भवति । नहि तद्व्यतिरेकेण गृह्यमाणं स्वतन्त्रन्तस्य तदिति व्यपदेशार्हं । तद्व्यङ्ग्यम्वा । स्वज्ञानेन प्रतीतिर्हि व्यञ्जकः प्रदीपादिप्रकाशः । व्यक्तिप्रतीतिमन्तरेणापि यदि सामान्यङ्केवलम्प्रतीयते न व्यक्तिव्यङ्ग्यं (।) तेन नित्योपलब्धिरस्य स्यात् । व्यक्तिशून्येपि प्रदेशे सामान्यमुपलभ्यते । यथा शब्दात् तद्व्यक्त्यभावेपि तद्देशे । अथ व्यञ्जिकाम्व्यक्तिमन्तरेणेन्द्रियेण न गृह्यते । इन्द्रियेण गृह्यमाणं सामान्यम्व्यक्तिव्यङ्ग्यं यथा घटादयः शब्दात् प्रतीयमाना न प्रदीपादिकमपेक्षन्ते । इन्द्रियेण प्रतीयमानास्त्वपेक्षन्त इत्यदोषः ।

तदप्ययुक्तं । शब्दात् घटादिसामान्यमेव प्रतीयते (।) तत्कथं स दृष्टान्तः पक्षीकृतत्वात् सामान्यस्य । नहि पक्ष एव दृष्टान्तो दृष्टान्तदोषाभावप्रसङ्गात् । ततो यदि शब्दात् स्वरूपेण सामान्यम्प्रतीयते किन्तस्य प्रत्यक्षप्रतीत्या ।

ननु प्रत्यक्षग्रहणाभावे कथं शब्दात् प्रतीतिः सम्बन्धग्रहणाभावात् । ननु यः शब्दाकारः प्रतिभाति सामान्यस्य किन्तद्रूपं सामान्यमन्यथारूपं वा । यदि तद्रूपन्तदेव तर्हि व्यक्तिव्यक्तम्प्रत्यक्षेणापि प्रतीयेत तेनैव रूपेण ज्ञानञ्जनयेत् । अथ प्रत्यक्षेण प्रतीयते तत्सामान्यस्य रूपं । तथा सति तत्र सङ्केतकरणे कथमन्यत्र प्रतीतिः प्रत्यक्षप्रतिपन्नेनैव रूपेण भासेत शब्देपि प्रत्यये । न च तत्स्वभावोन्यस्वभावतया प्रत्ययान्तरे प्रतिभासते । नित्यञ्च सामान्यन्तद्रूपमेव सर्वदा च प्रतिभासते । यतः ।

> तस्य शक्तिरशक्तिर्वा या स्वभावेन संस्थिता ।
> नित्यत्वादचिकित्स्यस्य कस्तां क्षपयितुं क्षमः ॥ २२॥
> तच्च सामान्यविज्ञानमनुरुन्धन् विभाव्यते ।
> नीलाद्याकारलेशो यः स तस्मिन् केन निर्मितः ॥ २३॥

यदि शब्दतः केवलसामान्यप्रतीतिः केवलेनैव सामान्याकारेण प्रतिभासितव्यं । नीलाद्याकारलेशस्य कुतोऽवकाशः । व्यक्तेश्चेत् व्यक्तेरप्रतिभासने कुतः । व्यक्तिजनितत्वादिति न युक्तं । सामान्याभावप्रसङ्गात् । तद्व्यतिरेकेणानवभासनात् । अनुगताकारतापि नान्या नीलाद्याकारत इत्युक्तं । तत्र च समानाकारतायामर्थानां सामान्यमिति न स्यात् । उभयोरपि प्रतीतेरिति चेत् । न इन्द्रियग्राह्यता स्यात् । इन्द्रियेण व्यक्तिप्रतीतेर्भविष्यतीन्द्रियग्राह्यतेति न न्यायः । शब्दात् प्रतीतिर्न सामान्यस्य स्यात् (।) नहि तथाभूतं सामान्यमस्तीति प्रतीतिः सम्प्रत्ययाभावाद् भिन्नप्रतिभासनाच्च । तस्माद्[1] व्यक्तिव्यतिरेकि किञ्चित् प्रतिपाद्यमिति शब्दाद् व्यक्तिरूपप्रतिपत्तौ नाक्षसंहृते साफल्यम्व्यर्थता भवेत्

> प्रत्यक्षप्रत्ययार्थत्वात् नाक्षाणाम्व्यर्थतेति चेत् ।
> सैवैकरूपाच्छब्दादेर्भिन्नाभासा मतिः कुतः ॥ २४॥

अर्थस्वरूपप्रतिपत्तेरेव प्रत्यक्षता सा चेदस्ति व्यर्थतैवाक्षाणां । पुरोवर्त्तितया प्रतिपत्तिरध्यक्षता न साक्षादिति चेत् । न । शब्दस्यान्यथा प्रतीतेः तर्हि शब्दः पुरोवर्त्येव गृह्यते । तस्याध्यक्षता न स्यात् । सर्वात्मना प्रतीतिरिति चेत् । शब्दादपि स एव प्रतीयते सङ्केतस्य

[1] T. तस्मात न

तत्रैव ग्रहणात् परितोषार्थत्वादिति चेत् । न । परितोषस्यापि भावात् । ईदृशस्तव परितोष इति शब्दश्रुतेरासीदिति प्रयोगान्नेति चेत् । न(।) भवतीत्यतीतेपि प्रयोगस्य सम्भवात् । अथापि स्यादतीतानागतयोरेव शब्दः प्रयुज्यते । व्यवहिते च वर्त्तमाने । न त्वव्यवहिते दृश्यमान एवं तत्र प्रयोगवैयर्थ्यात् । न वातीता रूपादयः परितोषकारिणो व्यवहिताश्चादृश्यमानाः । तेनेन्द्रियाणां साफल्यमिति चेत् । तदसत् ।

स्वरूपेण हि यद् दृष्टन्तदतीतादिकङ कथं । न ह्यदृश्यादतीतादि परं रूपाद् विभाव्यते ॥१८९॥

चक्षुरादिनापि दृश्यमानमव्यवहितस्वरूपदर्शनादेव परितोषकारि च । न च व्यवहितेपि गीतध्वनिः स्वरूपेण प्रतीयमानः परितोषस्य न विधायकः । जलतरङ्गन्यायेनागतेरव्यवहित एवेति चेत् । नैतदपि सारं ।

दूरदेशतया तस्य प्रतीतेरागतिः कुतः । उपादानस्य दूरत्वेऽतिप्रसङ्गः प्रवृत्तिमान् ॥१९०॥

दूरदेशोपि प्रतीयमानो यदि संयुक्तः शरीराधिष्ठानैः । रूपादयोपि तथा स्युः । ततः शब्दाऽनुमानादन्यतो वा विकल्पादर्थप्रतीतौ चाण्डालस्पर्शागम्यागमनादयो भवेयुः । तस्माद् यदि शब्दार्थस्य स्वरूपेण प्रतिपत्तिरतीतादिता न स्यात् । दृश्यमाना अपि स्वरूपेण प्रतीतित एवानातीतादयः[1] । सम्वादेपि सम्वादादिशब्दावस्त्येव । अथेन्द्रियेण प्रतीतिरेवास्तिता न प्रतीतिमात्रं । शब्दवैकल्यादयोपि हि विद्यमानताम्विनापि दृष्टवृत्तयः ।

इन्द्रियेण प्रतीतिश्चेदस्तित्वम्मशकादयः । किन्न सन्त्युपघाताच्चेदुपघातः कथम्मतः ॥१९१॥
अन्यथा प्रतिपत्तिश्चेन्न सन्ति मशकादयः । एवन्तर्हि स्वरूपस्य प्रतीतिरस्तिता मता ॥१९२॥

तस्मात् स्वरूपप्रतिपत्तिरेवास्तिताध्यक्षताऽव्यवहितता चेति न विशेषः शाब्देन्द्रियप्रत्ययोरिति प्रत्यक्षप्रत्ययप्रयोजनता न युक्तिमत्पक्षाणामतो वैफल्यमेव । इतश्च सामान्यमवस्तु ।

न जातिर्जातिमद्व्यक्तिरूपं येनापराश्रयं ।
सिद्धम्पृथक् चेत् कार्यत्वं ह्यपेक्षेत्यभिधीयते ॥ २५ ॥
निष्पत्तेरपराधीनमपि कार्यं स्वहेतुना ।
सम्बध्यते कल्पनया किमकार्यं कथञ्चन ॥ २६ ॥
अन्यत्वे तदसम्बद्धं सिद्धातो निःस्वभावता ।

जातिमद्वा वस्तु जातिरुच्येतान्यद्वा । तत्र न तावद् वस्तुव्यक्तिरूपमेव जातिर्व्यक्तयो येनापराश्रया अमिश्राः प्रत्यक्षेण प्रतीयन्ते । न ह्यन्यथाऽभ्रान्तप्रत्ययेन प्रतीयमानमन्यथा भवति । तथान्यनिरपेक्षाः शावलेयादयः प्रतीयन्ते केवलकेवलाः । अथ पश्चाद् द्वितीयादिव्यक्तयः पूर्वपूर्वसापेक्षतया प्रतीयन्ते तत्समानमेतत् तदेवेदमिति वा । तदप्ययुक्तं (।) कार्यमपि यावदङ्कुरादिकल्पनया सम्बध्यते स्वहेतुना निष्पत्तेरपराधीनत्वात् । तथाहि यावदनिष्पन्नन्तावदत्र कल्पनैव निष्पत्तिकालेपि तत्सहभावितयाऽपराधीनम्विनष्टम्वा कारणमिति कल्पनयैव सम्बन्धः कार्याणामपि कारणैः किमङ्ग विपर्यये । तस्मादन्यत्वव्यक्तयन्तराद् व्यक्तेः सामान्यस्य वा तदसम्बद्धम्(।) अतो निःस्वभावता सामान्यस्य । न ह्यसम्बद्धम्प्रतीयमान

---

[1] T. नातीतादयः

सामान्यं । अभावोपि तर्हि सत्सम्बद्धतया प्रतीयमानः सामान्यम्भवेत् । निःस्वभावतायाः समानत्वात् ।

अतिप्रसङ्गोऽभावस्य नापेक्षाऽभावतस्तयोः ॥ २७ ॥

शशविषाणं शशविषाणमिति भवत्येव सामान्यम्व्यक्त्यपेक्षया । अन्यव्यक्तेः कस्मान्नेति चेत् । वस्तुसामान्यवादिनोपि गोत्वङ्क कर्कादिकस्य कस्मान्न भवति । अपेक्षाऽभावात् । नहि कर्कादिव्यक्त्या तद् व्यज्यते । एवन्तर्हि शावलेयादिष्वपेक्षाभावादेव खरविषाणादिकस्य न तत्सामान्यरूपता । गोत्वस्य तु तदाश्रयणेन भावात् । तत्र च प्रवर्त्तनाद् भवत्यपेक्षालक्षणः सम्बन्ध इति न दोषः । न च तद्रूपन्तेषामस्ति(।) नापि तादात्म्यसम्बन्धस्तथापि तथा भवत्यनादिवासनासामर्थ्यात् ।

तस्मादरूपा रूपाणामाश्रयेणोपकल्पिता ।
तद्विशेषावतारार्थैर्जातिः शब्दैः प्रकाश्यते ॥ २८ ॥

न खलु जाते रूपमस्ति(।) केवलं रूपाणामाश्रयेण तत्र[1] पारम्पर्येणोत्पत्तिलक्षणमिति रूपवतीव प्रतीयते । तत एव च तदुत्पत्तेस्तदध्यवसायाच्च तज्जातिप्रतीतौ विशेषेषु प्रवर्त्तते(।) तेन तद्विशेषावतारार्थैरपि शब्दैः सैव प्रकाश्यते नापराव्यतिरिक्तेत्युपसंहारः ।

भवतु रूपाकारता जातेरेकत्वाध्यवसायस्तु कुतो व्यक्त्येति । रूपं हि दृष्टमदृष्टन्त्वे-कत्वाध्यवसानङ्क कथं । अत्रोच्यते ।

तस्यां रूपावभासो यस्तत्त्वेनार्थस्य वा ग्रहः ।
भ्रान्तिः सा ऽनादिकालीनवासनाभ्यासनिर्मिता ॥२९॥

न खलु तत्त्वे दर्शनादेव तद्रूपारोपः । भ्रान्तिपरम्परापि भवत्येवेश्वरादिकल्पनावत् । अस्फुटावभासेपि स्फुटदर्शनात् कथमिति भ्रान्तिपरम्परैवात्रापि शरणं । तस्मादपरभ्रान्ति-दर्शनायातैव भ्रान्तिः साप्यपरस्मादित्यनादितैव भ्रान्तेः श्रेयसीति न दर्शनेन तद्रूपस्य प्रयोजनं । अथवा ।

अर्थानां यच्च सामान्यमन्यव्यावृत्तिलक्षणं ।
यन्निष्ठात इमे शब्दा रूपन्तस्य न किञ्चन ॥३०॥

नहि जाते रूपमस्त्यन्यव्यावृत्तिलक्षणायाः । ततो हि विजातीयादनभिमताद् व्यावृत्ति-मेव शब्दाः कुर्वते । व्यावृत्तिश्च ततो वृत्यभाव एव । नहि निवृत्तिमात्रेण कश्चिदर्थी । नहि घटमानयेति पटादीनामनानयनमेव प्रार्थ्यते । नैतदस्ति । आनयेत्यनाऽनयनम्प्रतिषेध्यते । ततः स्वयमेवानयनम्भवति । तच्चाघटेपि प्रसक्तमिति तस्य निषेधः । न च निषेधस्य रूपं ।

ननु प्रथमस्य शब्दस्य विधेः शब्दार्थो भविष्यति । न तत्र प्रतिषेधस्सम्भवति प्रसक्त-भावात् । तदपि न ।

अनानयनमेवात्र प्रसक्तन्तन्निषिध्यते । औदासीन्यात् परन्नास्ति प्रसक्तिस्तस्य काऽपरा ॥१९३॥

अत्रानुयोग एवानानयनन्तदेव प्रसक्तन्निषिध्यते शब्देन ।

---

[1] T. स्वरूपाणामश्रयमात्रेण

ननु तस्य निषेधोन्यस्य[1] विधानमेव तत्कथं रूपन्नास्ति तस्येति। अत्रेदमुच्यते।

निषेधे तस्य रूपस्य स्वयमेवान्यकल्पना। न तत्र शब्दव्यापारः स्वयमर्थत्वतो गतिः ॥१९४॥

कथमन्यभाव एवान्यस्याभाव इति चेत्। अन्यप्रतिपत्तौ तत्कल्पनोत्पत्तेः। कल्पनारूपान्यापोहपक्षे वा तदुक्तिमिति न दोषः। स्वबुद्धिमेव तद्विविक्तामनुभवतो नास्तीति प्रतीतेः।

ननु सामान्यबुद्धिस्तावदस्ति। तत्र योऽर्थाकारः स सामान्यं सदेव। यदि नाम तस्यार्थरूपता नास्ति तस्यान्यथाप्रतिभासनात्। व्यतिरिक्तन्तु तत् सामान्यन्न भवतीति न युक्तं। अत्रोच्यते।

**सामान्यबुद्धौ सामान्ये नारूपायामपीक्षणात्।**
**अर्थभ्रान्तिरपीष्येत सामान्यं साप्यभिप्लवात् ॥३१॥**
**अर्थरूपतया तत्त्वेनाभावाच्च न रूपिणी।**

सामान्यबुद्धौ हि प्रतिभासमानं सामान्यमिष्येत। यद्यरूपता निराकारता सिध्येत् तदा नियमेन बुद्धेरपरेण तेन भवितव्यमिति सामान्यं स्यात्। तस्य सामान्येन रूपेण दृष्टेः किन्तु सार्थभ्रान्तिरपि यथैव हि तत्सामान्ये नेक्ष्यते। तथा भ्रान्तिरेषेत्यपि प्रतीयत एव (।) सापि न स्वरूपेण सामान्यं। स्वाकारनिष्ठतया स्वलक्षणत्वात् अपि त्वभिप्लवादर्थेषु प्लवमानत्वादर्थरूपतया तत्त्वेनाभाव इति च प्रतिपत्तेः। नहि सामान्यमिदमर्थेषु विद्यते (।) यथा तन्निष्ठतया प्रतीयते। अतस्तेन रूपेण सालम्बनत्वेन न रूपिणी न सस्वभावा[2]। तथा परीक्षाक्षमत्वात्। अन्यथा पीतादयोपि सितशङ्खादिषु भवेयुरेव। तस्मान्न सामान्यम्वस्तु।

अवाच्यत्वाच्चावस्तु सामान्यं। न खलु सामान्यन्तत्त्वान्यत्वाभ्यामवाच्यत्वेपि वस्तु। कुतः।

**निःस्वभावतयाऽवाच्यङ् कुतश्चिद् वचनान्मतं[3] ॥३२॥**
**यदि वस्तु न वस्तूनामवाच्यत्वङ् कथञ्चन।**

यदातु[4] तत्त्वान्यत्वाभ्यामवाच्यन्तदस्वभावं। अवश्यं हि भवता भावेन तत्त्वान्यत्वाभ्यामवाच्येन न भवितव्यं। अथ सामान्यान्तरादन्यत्वेन वाच्यमेवेति नियमेन भेदे सति वस्तुना सामान्येन भवितव्यम्। यदि वस्तुव्यक्तेरपि तत्त्वान्यत्वाभ्याम्वाच्यम्भवेत्। तत एवावाच्यत्वादवस्तु। तत्सम्बन्धादेवावाच्यता तत इति चेत्। व्यतिरिक्तस्य कार्यकारणभाव एव सम्बन्धः। ततः सर्वकार्याणाङ्कारणापेक्षयाऽवाच्यत्वम्भवेत्। न च धूमोऽग्नेस्तत्त्वान्यत्वाभ्यामवाच्यः। देशाभेदात् सामान्यस्य व्यक्तेरवाच्यतेति चेत्। न देशो नामास्ति वस्तुतः पदार्थादपरः। भेदाप्रतिभासे कथम्भेदाभावो न भवेत्। भेदप्रतिभासने केनाभेदः। ततस्तत्त्वान्यत्वादपरः प्रकारो नास्ति वस्तुन इति कुतश्चिदप्यवाच्यत्वादवस्तु। सामान्यान्तरादपि नैव तद्भेदेन वाच्यं। सामान्यान्तरस्यापि वस्तुत्वसिद्धेः। अथ परिकल्पितादपि भेदेन वाच्यत्वे वस्तु। शशविषाणादीनामपि परस्परम्भेदाद् वस्तुताप्रसङ्गः। उपादानभेदात्तेषाम्भेदो न

---

[1] निषेधेन विधिर्यदि पर्युदासाभावसाधने कथमन्यभाव एवान्याभावः। तत्रापि अन्याभाव एवान्यभावः स्यात् न तु विपर्ययः।—बहिः [2] T. न रूपि न सस्वभावम्

[3] बहिःपंक्ति—"सामान्यान्तरादन्यत् सामान्यान्तरमिति स्वभाववचनात्।

[4] T. यत्तु

परमार्थतः। शशादिमस्तकभेदोपादानबुद्धिरिवासौ भिद्यते न शशविषाणादय इति चेत्। इहाप्येवमुच्यमाने को विरोधः। व्यक्त्युपादानभेदादत्रापि बुद्धिभेद एव न वस्तुभेदः इति। तदाह।

**नैव वाच्यमुपादानभेदाद् भेदोपचारतः ॥३३॥**

यदि च सामान्यं व्यक्तिर्वा वाच्यं शब्दानाम्भवेत्। अतीतानागतम्वाच्यन्न स्यान्न चैवं यावता।

**अतीतानागतेप्यर्थे सामान्यविनिबन्धनाः।**
**श्रुतयो निविशन्ते सदसद्धर्मः कथम्भवेत् ॥३४॥**

यद्यतीतेपि वस्तुन्यनागतेपि वा सामान्यम्प्रतीयेत तर्त्ताहि सामान्यमतीतानागतस्यावस्तुनः सदसतो धर्मः कथम्भवेत्। नह्यसतः सन्धर्मो भवति। सत एव व्यक्त्यन्तरस्य धर्म इति चेत्। तद्धर्मतया प्रतीयमानस्य कथमतीतता। अतीतव्यक्तिबलेन हि सामान्यस्यातीतता न स्वतः। तेनातीतयोगितया सामान्यस्यातीततेति नियमेन सामान्यमसतो धर्मः (यश्चासतो धर्मः) सन्न भवति। यथा शशविषाणत्वमभावत्वम्वा। सन् वाऽसतो धर्मो न भवति कार्योत्पादनशक्ति-वदङ्कुरादीनां। को विरोध इति चेत् (।) सम्बन्धाभाव एव। नह्यसता सम्बन्धः शक्यः प्रतिपत्तुं। तथा चेत् सामान्यमप्यसदेव प्रतीयते यथा व्यक्तिर्विशेषाभावात्। व्यक्तिरपि तर्हि सत्येव प्रतीयते अतीतानागतस्य सत्त्वात्। यदि सत्कथमतीतं। प्रतिपत्तेरतीतत्वात्। सापि प्रतीतिः प्रतीयत एव। अप्रत्यक्षतया प्रतीतिरिति चेत्। न (।) अप्रत्यक्षताया एव स्वरूपप्रतिपत्तावभावादित्युक्तं। तस्मादसतोऽतीतादेर्न धर्मः सत्सामान्यं।

**उपचारात् तदिष्टश्चेद् वर्तमानघटस्य का।**
**प्रत्यासत्तिरभावेन या पटादौ न विद्यते ॥३५॥**

असदित्यसिद्धो[1] हेतुः। उपचारात् तदिष्टं असद्धर्मत्वन्न परमार्थत इति। असद्ध-र्मत्वमसिद्धो हेतुः। यच्चोपचरितन्तत्तत्र परमार्थतो नास्तीति तत्रातीतानागते सामान्यस्य परमार्थतः सत्त्वाभावात् सत्त्वमसिद्धो हेतुरित्यभिप्रायः।

अत्र परिहारः। तत्रातीतादौ सामान्यधर्मस्य चोपचारः। शब्दस्य व्यक्तेर्वेति पक्षाः। यदि सामान्यस्योपचारः। तदयुक्तं। वर्तमानघटे यत् सामान्यन्तस्योपचारोऽतीते सम्ब-न्धात् सो दृश्याद्वा। अन्यथा प्रत्यासत्तिरहिते उपचारेऽतिप्रसङ्गः। न चासता सम्बन्धः सादृश्यम्वा। सत्त्वप्रसङ्गाद् अतीतादेरपि सत्त्वमिति प्रत्युक्तं। अथ शब्दस्योपचारः। तदप्ययुक्तं। अर्थमन्तरेण शब्दस्याप्रवृत्तेः। प्रवृत्तौ वाऽभावेपि शब्दाः प्रवर्त्तन्त इति प्राप्तं। तच्च सामान्यमतो न वस्तु। अथ व्यक्तेरुपचारस्तत्रापि प्रत्यासत्या भवितव्यं। अप्रत्यासत्ति-कस्योपचारस्यायोगात्। शब्दोपचारेप्येतदेव वाच्यं (।) अथातीतानागतयोरेकत्वाद् रूपसादृश्या-दुपचारस्तदेवातीतमर्थक्रिया तु नास्तीति तत उपचारोर्थक्रियाया इति सामान्यमेव तत्र प्रतीयते नेतरथा। तथा तर्हि सर्वमस्ति कथमतीतत्वं। अर्थक्रिया नास्ति तेनेति चेत्। यदि सा नास्ति सैवातीता कथम्भावः। तद्योगाद् भावोप्यतीत एवेति चेत्। तद्योगः केन प्रतिपन्नः। प्रतीतावभावस्यापि प्रतीतिः। अपि च।

---

[1] T. असदो धर्म इत्यसिद्धो हेतुः

अर्थक्रियाऽपि तस्यास्ति सर्वमस्तीति दर्शने। तस्याभावे कथम्भावस्याभावो भाविको भवेत्॥१९५॥

**अथ सम्वृत्याऽतीतादिता परमार्थतः सर्वमसत्त्येवेति चेत्।**

केयं सम्वृत्तिरर्थस्य ज्ञानालम्बनता यदि। परमार्थ एव सकलः सत्यता सम्वृतेः कथं॥१९६॥

**असद्रूपपदार्थालम्बना हि सम्वृतिस्तत्त्वसम्वरणात्। तत्त्वप्रकाशने तु न सम्वृतिर्नाम। अतीतादिकञ्च यदि सम्वृतिर्न परमार्थः। अतीतादिरूपताव्यतिरेकेण भावस्याभावान्न किञ्चित् तत्त्वमिति स्यात्। वर्त्तमानम्परमार्थञ्चेदतीतादिकं सम्वृतिरपरमार्थ इति सामान्यमवस्त्विति सिद्धं। नहि वर्त्तमानमात्रभावि सामान्यमिति सकलं सुस्थं। तस्मान्नोपचारो नाम वस्तुनि वाच्ये। तथायमेवोपचारो यदसत्प्रतिपादनं।**

**असच्च सामान्यम्व्यक्तिर्वा। अतीतवस्त्वभिधायिनां शब्दानामर्थः। तथाहि। यद् दृष्टन्तदेवाध्यारोप्यते। तदप्यसत्।**

येन रूपेण तद् दृष्टन्तेनैवारोप्यते नहि। येन दृष्टन्न तद् वस्तु तेनारोप्यते तेन हि॥१९७॥

**अथातीतादौ प्रवर्त्तमानः प्रत्ययस्तद्देशकालसम्बन्धितया प्रतीयते। ततोऽतीतेपीदानीन्तदेव पूर्वकृतं रूपमारोप्यते। यथा वा ह्री के[1] पूर्ववृष्टगोत्वारोपः। एवन्तर्ह्यनतीतेपि तस्मिन् पूर्वरूपारोप एव प्रतीयते नान्यथाऽनुमानेनापि सामान्यम्प्रत्येतुं शक्यं। ततः सर्वत्रोपचार एव न परमार्थः सामान्यं। सर्वत्रारोपलक्षणत्वात्।**

**अथ प्रत्यक्षेण विद्यमानमेव सामान्यङ गृह्यते तत्परमार्थो भविष्यति। तर्त्ताहि नानुमानादिना प्रतीयत इति तदवस्तु सामान्यं।**

**अथ प्रत्यक्षेणापि यत् पूर्वसाधारणमस्पष्टाभं रूपम्प्रतीयते शब्दतोपि तदनुमानतोपि तथैव प्रतीयते। स्पष्टत्वन्तु तत्र व्यक्तेरेव प्रतीयते। ततो यदि नामविशेषांशे न प्रवर्त्ततेऽनुमानं शाब्दम्वा सामान्यांशे तु अस्पष्टावभासिनि प्रवर्त्तत एव। तदप्यसत्।**

प्रत्यक्षतैव नास्त्यत्र सामान्येऽनक्षभावनः। असाक्षात्करणाच्चैतत् पश्चादेवाभिधास्यते॥१९८॥

**न खलु पूर्वसाधारणतायामध्यक्षमिति प्रतिपादयिष्यते। नष्टेपि च पूर्वविशेषे तत्साधारणता प्रतीयमाना कथम्वस्तु। सदसद्धर्मः कथम्भवेदित्युक्तं।**

**अथोभयसाधारणत्वे कथमवस्तुता वस्तुतापि भवेत्। तदप्ययुक्तं। नहि वर्तमानः प्रतिभासोऽतीतप्रतिभासेन सहैकतया प्रतीयते। अनेकप्रतिभासे च कान्या साधारणता नाम। तस्मादतीतादिरूपप्रतिभासनात् असदेव शब्दविषयः न चात्रोपचारः। अस्खलत्प्रत्ययविषयत्वात्। यतः।**

**बुद्धेरस्खलिता वृत्तिर्मुख्यारोपितयोस्सदा।**
**सिंहे माणवके चेति घोषणाप्यस्ति लौकिकी॥३६॥**

**बुद्धेरेवास्खलिता वृत्तिर्मुख्यारोपितयोर्निबन्धनम्भ(व)त्यन्यथा च स्खलद्गतिर्हि प्रत्ययो माणवके तेन सिंहत्वमुपचरितं। अन्यत्र सिंह एव तथेति मुख्यन्तत्। अत्र तूभयत्रापि न स्खलत्प्रत्ययविषयता ततो नोपचारः। असदर्थतयोपचार इति चेत्। यद्यसदर्थप्रत्ययविषयता तथा सति सामान्यन्तत्त्वादेवावस्त्विति सिद्धं। किञ्च।**

---

[1] T. खर-ब-प

**यत्र रूढ्याऽसदर्थोपि जनैः शब्दो निवेशितः (।)**
**स मुख्यस्तत्र तत्साम्याद् गौणोऽन्यत्र स्खलद्गतिः ॥३७॥**

अभावशब्दो ह्यभावेऽस्खलद्गतित्वान्मुख्यः। भाव एवाप्रयोजनत्वादन्यत्र पुत्रादावभाव-शब्दो गौण इति लोकप्रसिद्धिः। तस्मादभावो भावे च समानत्वादप्रतीतावौ न सामान्य-म्वस्तु, अवस्तुग्राहिप्रत्ययसमानाकारग्रहणात्। अथैतदेवोपचरितत्वं यदसति वस्तुनि प्रवर्त्तनं। समानाकारतायां असति प्रवर्त्तनमिति कुत एतत्। प्रतीतेरेव तथा भावादिति चेत्। नन्वविज्ञाननाशे प्रतीतिभेदोपि नास्त्येव। याप्यसौ नष्ट इति प्रतीतिः साप्यनष्टे भवति। सन्देहो भविष्यतीति चेत्। सन्देहोपि न स्यादेव यदि वस्तु प्रतिभासेत। प्रतिभासमानेपि सादृश्यात् सन्देह इति चेत्।

नन्वभेदेपि नोपलक्षितयोः सादृश्यमिति शक्यम्वक्तुं। अनुपलक्षणे तु भेदस्य तत्त्वमेव न सादृश्यं। अथ कालभेदाद् भेदः (।) तदसत्।

कालभेदेन यो भेदस्तत्त्वातत्त्वन्ततः कुतः। सदर्थत्वेपि कालस्य भेदः प्रत्य(य)योर्न्न किम् ॥१९९॥

यथा भवतः सदर्थत्वेपि पूर्वापरप्रत्यययोः कालभेदस्तथैवासदर्थत्वेपीति कुतः कालभेदात् सदर्थेतरविभागः। अथानुमानात् सदर्थता ननु[1]मानमप्यतीतानागतयोरस्त्येव। लिङ्ग-विशेषादतीतादिविभाग इति चेत्। तथा हि। लिङ्गात् किञ्चिदतीतया किञ्चिद् वर्तमान-तयाऽपरन्तु भावितयेति नास्ति बुद्धेः समानत्वं। तदसत्।

लिङ्गादुत्पद्यमानापि यदि वस्तुनि सा भवेत्। नाकारान्तरसन्देहः सर्वाकारपरिग्रहात् ॥२००॥

तस्मात् तत्रापि स आकारः शब्दाकारवत् सन्देहविषयत्वादवस्त्विति युक्तं। नहि प्रतीयमान एव सन्देहः। आकारान्तरे सन्देह इति चेत्। अत्रोच्यते।

तदाकारान्तरन्तत्र प्रतीतं यदि वाऽन्यथा। प्रतीतञ्चेन्न सन्देहः सन्दिग्धन्तत्क्षणोन्यथा[2] ॥२०१॥

यदि हि तस्य प्रतीतिः प्रतीतेरेव न सन्देहः। अप्रतीयमानमप्यनाभासमेव कस्तत्र सन्देहः। यदि ह्यप्रतीयमानतैव सन्देहः सर्वत्रानाभासने सन्दिग्धता भवेत्। अप्रतीयमान एव सन्देहोऽपरस्य विकल्पस्य चलाचलस्य भावादिति चेत्। यदि प्रतीतिः कथम्विकल्पस्य चलनं। किञ्च। किं स्वरूपस्य चलनमथ विकल्पस्य प्रमेयस्य। विकल्पस्वरूपस्य चलने-न प्रमेयसन्देहः। अथ प्रमेयस्य चलनन्न प्रतिभासमानस्य चलनाभावात्। अथात्र न सन्देहः(।) किमिदन्द्रक्ष्यामि न वेति द्रक्ष्यमाणतायां सन्देह इति चेत्। सापि प्रतिभाति न वेति(।) तदेव पक्षद्वयमक्षीणमावर्त्तते। यदि द्रक्ष्यमाणता दृष्टा कथं सन्देहः। न दृष्टा चेत्कः सन्देह इति। अथ सामान्यप्रत्यक्षाद् विशेषाप्रत्यक्षाद् विशेषस्मृतेश्च सन्देहः। तदप्यसत्। यतः।

योसौ विषेशो[3]ऽप्रत्यक्षस्तस्याप्रत्यक्षतैव का। पर्युदासप्रसज्याभ्यामपरन्न निषेधनम् ॥२०२॥

यदि पर्युदासः प्रत्यक्षादन्यत्सम्वेदनमप्रत्यक्षमिति तदाऽन्यदपि सम्वेदनं सालम्बनमिति कथं सन्देहः। अथ न ज्ञायते किं सालम्बनमथान्यथेति ततः सन्देहः। तत्रापि सालम्बनत्व-

---

[1] T. सदर्थतेति चेत्। न। अनु०   [2] T. सन्दिग्धत्वं कुतोऽन्यथा
[3] T. विशेषोऽ

म्प्रतिभाति न चेति तदेवावर्त्तते। अथ तन्निरालम्बनमपि सम्भवति विपर्ययेण चेति सन्देहः। प्रतिभासमात्रमेव तर्हि नार्थः प्रतिभातीति कथम्वस्तुविपर्ययताऽनुमानस्य। सामान्यप्रत्यक्षादिति च विशेषणमनर्थकं। अनुमानप्रतीयमानेपि सन्देहात्। यत्र च विशेषेऽप्रत्यक्षता स किन्तस्यैवान्यस्य वेति विकल्पः। तस्यैव चेत् स्वरूपं कथमप्रत्यक्षता। अन्यस्य चेत्। कथन्तद्दर्शनात्तत्र सन्देहः। तदपि तत्र दृष्टमिति चेत्। यदि नाम दृष्टन्तथापि दृष्टमिति स्मरणमस्तु कथं सन्देहः। कदाचिन्न दृष्टमपीति चेत्। अन्यदा न दृष्टमित्येवमपि स्मरणमस्तु कः सन्देहः। उभयत्र युक्तमिति सन्देह एवेति चेत्। कथमुभयदृष्टङ्‌ कालभेदेनेति चेत्। स्मरणमपि तथैवास्तु कथं सन्देहः। इहेदानीन्न दृश्यत इति सन्देह एव। अदर्शनेन तर्हि सन्देह इति सामान्येत्याद्ययुक्तं। तस्मादनालम्बना प्रतीतिः सम्भवतीति सन्देहसम्भवः।

अथ सन्देहो नामार्थ एव तथाभूतप्रतिभासमानः। न(।) अर्थत्वेनाधिमुक्तेरभावात्। प्रतीतिमात्रकमेतदिति तत्राधिमोक्षः। न चालौकिकस्वसम्वेदनयोर्विशेष इत्युक्तं। तस्मात् प्रतिभासमन्तरेण सन्देहो नान्यथा। ततो यद्यनुमानविषयो वस्तुसन्देहो न स्यात्। अस्ति च ततो न वस्तु।

अथास्ति तावत्तत्र वस्तु तच्चाध्यवसितमनुमानेन(।) ततः कथमनुमानस्य न वस्तुविषयः। अत्रोच्यते।

वस्तुसंस्पर्शनन्तत्र यदि स्याच्चलनङ्कथं। चलत्येव प्रतीतिः सा लिङ्गाभासत्वकल्पने ॥२०३॥

वह्निप्रतीतावपि सत्यधूमाद् यदा मशकवर्त्तिरिति विभ्रमोदयस्तदा चलति दहनप्रतीतिरन्या चोपजायते। न तु प्रत्यक्षप्रतीतावेवञ्चलनं। तत्रापि तिमिरोपघातसम्भावनया समानमिति चेत्। न। स्वरूपाभासस्य तदभावात्। लोचननिमीलने चलतीति चेत्। न। कारणाभावादनुत्पत्तिरेव। अनुमानस्यापि कारणस्य लिङ्गस्याभावादनुत्पत्तिरेवेति चेत्। न(।) तस्य धूमसद्भावेप्यन्यथा सम्भावनया चलितत्वे दृष्टेः।

अथानन्यथा सम्भावनमेव कारणमिति कुतः कारणसम्भवः। तदयुक्तं। तस्य दर्शनेऽन्यथा सम्भावनमेव न भवेत्। तस्मात्।

अनुमानस्य चलने न वस्तुग्रहणन्ततः। पश्यन्नेवापदेशेन चलतीत्यतिसाहसं ॥२०४॥
प्रत्यक्षे चलनन्नास्ति चलनञ्चेन्न दर्शनम्।

योहि दृष्टोऽर्थो न तस्य चलनं। न ह्यन्यथा विकल्प्यमानमन्यथा वस्तु भवति। अथापि नायम्वह्निरिति दृश्यमाने चलत्येव।

नाग्निः प्रत्यक्षविषयः स्पृश्यविन्नहि चक्षुषा। भाविरूपस्य वा नास्ति क्वचिदक्षेण वेदनम् ॥२०५॥

अग्निरयन्न भवतीति किमिदमेवं रूपन्न भवति। अथोष्णस्पर्शसहचारीदन्न[1]भवति। भाविसमीहितवेदनविषयम्वेति विकल्पाः। यदीदमेव न भवति तदशक्यं।[2] दृश्यमानत्वाद् दृश्यमानमपि नेति सर्वत्र भवेत्। अथ रूपस्पर्शसमुदायोग्निस्तेन स्पर्शसहचारीदं रूपन्न भवतीति विकल्प्यते। न तर्हि तस्य चक्षुषा ग्रहणन्ततोऽदृष्ट एव। तस्माददृष्टेरेव चलनं। अनेन भाविरूपताचलनं व्याख्यातं।

[1] T. अयं न [2] T. तथाऽशक्तं

**तस्माद् वस्तुसंस्पर्शनिदर्शनमिति न विकल्पो युक्तः। तस्मादनुमानप्रत्ययो न वस्तु-संस्पर्शी।**

आकारान्तरसन्देहो दृष्टेपि क्वचिदस्ति चेत्। अनुमेये स सन्देहो न दृष्टस्यानुमेयता ॥२०६॥
प्रतिभासेऽविसम्वादः प्रत्यक्षेतरयोः समः। प्रत्यक्षता च भेदस्तु बाह्यवस्तुव्यपेक्षया ॥२०७॥
प्रत्यक्षाभासता तेन प्रतिभासेपि कस्यचित्। अनुमानस्य चेत्येष विभागो बाह्यवस्तुनि ॥२०८॥

अथवानुमानेपि यदि भावि वस्तु न प्रतिभाति किन्तस्य सत्यता भवति। भवति तस्य पुरुषान्तरेण प्रतीतेः।

ननु सोपि यदि भाविरूपतया नावगच्छेत् कथन्तस्य सत्यता। तैमिरिकप्रतिभासवद-सत्यमेव भवेत्। पुरुषान्तरप्रतीतावप्यनुमानमेव। कथन्तेनैव तस्य सत्यतावगतिः। नासिद्धमसिद्धेन साध्यं। भाविरूपतायाश्च सम्भवे तद्विषयावसाय्येवानुमानं। न च तदा तदस्तीति कथम्वस्तुविषयमनुमानं। प्रत्यक्षस्यापि तत्रैव प्रामाण्यमिति चेत्(।) यतस्तत्रापि सत्यता भाविरूपप्रत्यतीत्येवान्यथा न सत्यता। एवमेतत्तथा च प्रतिपादयिष्यते। तस्मा-दनुमानबुद्धिरसत्यपि समाना। प्रत्यक्षबुद्धिस्तु वस्त्वन्तरेण न भवतीति नानुमानम्वस्तुविषयं।

अथावस्तुविषयतैवामुख्यता। तदप्यसत्। सर्वमेवानुमानेन वस्तुविषयमिति सिद्धत्वात् न चेदममुख्यलक्षणम्विपर्ययदर्शनात्। तथाहि।

**यथाभावेप्यभावाख्यां यथाकल्पनमेव वा।**
**कुर्यादशक्ते शक्ते वा प्रधानादिश्रुतिञ्जनः ॥३८॥**

भावेप्ययोग्यतया योग्यतया वा प्रधानादिश्रुतिम्प्रवर्त्तयति लोकः। त्वन्मत्या तु वस्तु-विषयत्वात् मुख्यता भवेत्। प्रधानपुरुषादौ तु त्वन्मत्या सा ङ स्य पुरुषादिशब्दास्तेषामवस्तुत्वा-दमुख्यता व्यपदेशविकल्पयोः। न चैवं।

अथ पुत्रादावध्यारोपतोऽमुख्यता प्रधानपुरुषादिशब्दानान्न तर्हि भावेतरविषयत्वम्मुख्ये-तरयोर्लक्षणं। अन्यत्रारोप्यमाणन्तत्र तेन रूपेण नास्त्येव। तेनेदमेव लक्षणं। अनुमानेनापि तर्हि दृष्टान्तं दृष्टमेव रूपं साध्यस्यारोप्यत इति सिद्धमवस्तुविषयत्वमनुमानस्य। तस्मात्।

**शब्देभ्यो यादृशी बुद्धिर्नष्टेऽनष्टेपि दृश्यते।**
**तादृश्येव; सदर्थानान्नैतच्छ्रोत्रादिचेतसाम् ॥३९॥**

**सामान्यमात्रग्रहणात् सामान्यं चेतसोर्द्वयोः।**
**तस्यापि केवलस्य प्राग् ग्रहणम्विनिवारितं ॥४०॥**

सामान्यमात्रग्रहणे हि नातीतादिविभागः। प्रतिपादितञ्च न केवलङ गृह्यत इति। अथ ता एव व्यक्तयोऽविशेषेण गृह्यमाणाः सामान्यन्ततो वस्तुविषयमनुमानं। अत्रो-च्यते। तदविशेषग्रहणं यदि ज्ञानरूपस्यैव न वस्तुविषयोनुमानस्य। अथ वस्तुत एव सद्रूपं। तदप्यसत्। तथाहि।

**परस्परविशिष्टानामविशिष्टङ् कथम्भवेत्।**
**रूपन्द्विरूपतायाम्वा तद्वस्त्वेकङ् कथम्भवेत् ॥४१॥**

नहि विशिष्टरूपाणामविशिष्टरूपता। परस्परविरुद्धयोरेकत्वायोगात्। अनुगत-

व्यावृत्तञ्च गौरित्येकमेव प्रत्यक्षत उपलभ्यत इति चेत् ।। केयमनुगतिर्नाम । या गौर्गौरित्यनुगतत्वेन प्रतीयते । किमनुगतिरस्ति । तथाचेदनवस्था । स्वरूपमेव तत्तस्या इति चेत् । किमसौ स्वेन रूपेणोपलभ्यते । यद्युपलभ्यते द्व्याकारः प्रत्ययो भवेत् । पदार्थरूपमेव तस्या रूपमिति चेत् । रूपस्यानुगमो रूपस्यैकत्वमतो न व्यक्तिभेदस्तथा च न सामान्यं । अथ तदेकन्न भवति रूपन्तथापि न सामान्यं । अथ व्यक्तय उपलभ्यन्ते गौर्गौरिति चानुगताकारप्रत्ययोऽन्यथा कथमेतद् भवेत् । अत्रेदमुच्यते ।

प्रत्ययोऽनुगताकारः किमर्थं इति कथ्यतां । प्रत्ययश्चेन्न तेनार्थोऽनुगतः कश्चिदीक्ष्यते ।।२०९।।

यदि प्रत्ययोऽनुगताकारार्थस्य किमायातं । अथास्यानुगतत्वेन तदनुगतिरिति चेत् । स एव तथा व्यपदिश्यताङ् किमन्यव्यपदेशेन । नहि नीलादयो ज्ञानस्य व्यपदेशेन तथोच्यन्ते । नीलादयोपि तथा व्यपदिश्यन्त एव । तथाहि (।) नीलाकारसम्वेदनान्नीलन्नान्यथा । नैतदप्यस्ति । नहि लोक एव व्यपदिशति । अपि तु नीलम्पश्यामीति नीलपीतयोर्भेदमेवावगच्छति सुखदुःखयोर्वा । अत्रापि भेदवेदने इदमत्रानुगतमिदमन्यथेति व्यपदिश्येत । अव्यपदेश्यमेवैतदिति चेत् । अथ किमिदमी (?) सतो रूपन्न निर्दिश्यते । निर्देष्टुमशक्यत्वात् ।

नहि सर्वस्वरूपेण निर्देष्टु शक्यमस्ति यत् । यतोयम्प्रत्ययस्तत्तु सामान्यमिति कथ्यते ।।२१०।।

यदि निर्देष्टुमशक्यङ्कथम्परस्मै प्रतिपाद्यते । अप्रतिपादितश्च परः कथमभ्युपगमयितव्यः ।

ननु सुखादीनामपि कथन्निर्देशः । तेपि न स्वरूपेण प्रतिपादनार्हाः । स्वसम्वेदनप्रत्यक्षत्वादप्रतिपादनेपि न[1] दोषः । तव सुखमस्तीति किमनेन प्रतिपादितेन, मम तु दर्शनेन सुखमिति प्रतिपादनमुपयोगीति चेत् । न । सम्व्यवहारमात्रकमेवैतद् गणिकादिषु दर्शनात् । अथ रोमाञ्चादिदर्शनात् प्रत्येति तथापि किम्परप्रतिपादनेनेति यत्किञ्चिदेतत् । यतोयं रोमाञ्चादिप्रपञ्चस्तत् सुखादीतिप्रतिपत्तिमात्रेण पर्यवसानात् । अत्रापि यतः पटः पट इत्युल्लेखस्तत् सामान्यमिति चेत् । नैवमनुगताकारम्व्यतिरिक्तमितरद्वा साधितं सामान्यं । केवलमनादिरयम्व्यवहार इति व्यवहारपरम्परायातमेतदव्यवस्थितवस्तुकं । व्यवहारवासनैवास्य निमित्तम्प्रधानादिव्यवहारवत् । नहि भिनाभिन्नमप्यनुभूयते ।

अन्यदेव न सामान्यमन्यत्वेनाप्रवेदनात् । अन्यानन्यत्वपक्षोपि किमाकारान्तरम्विना ।।२११।।
तथाहि केनचित् तत्त्वमपरेण विपर्ययः । विपर्ययेण यत् तत्त्वं न तदन्यत् प्रवेद्यते ।।२१२।।
कटकत्वेन भेदेपि सुवर्णङ् कुण्डलन्न कि । कटकाव्यतिरेकेण सुवर्णमपरङ् कुतः ।।२१३।।
अन्वितत्वं सुवर्णञ्चेदन्वितत्वम्परङ् कुतः । अन्वितप्रत्ययादेतत् प्रागेव प्रतिपादितं ।।

तदेतदास्तान्तावत् । अथापि व्यक्तिरिक्तं सामान्यन्तथापि न तस्य सम्बंधः ।

ताभ्यान्तदन्यदेव स्याद् यदि रूपं समन्तयोः ।
तयोरिति न सम्बन्धे व्यावृत्तिस्तु न दुष्यति ।।४२।।

यदि ताभ्यान्तदसम्बद्धमन्यदेव[2] तदा न सामान्यम्पदार्थान्तरत्वात् । नहि घटः पटस्य सामान्यं । असामान्यात्मकत्वान्न सामान्यमिति चेत् । तदसत् ।

सामान्यात्मकतायां हि भवेत् सामान्यमेव तत् । तस्येति तु सम्बन्धः कुत एव भविष्यति ।।२१४।।

---

[1] T. पादनेऽपि न [2] T. ताभ्यां सम्बद्धमन्यदेव

तत्सम्बन्धरूपादिति चेत्। तदेतदायतं।

अनित्यत्वञ्च कुतः शब्देऽनित्यत्वाद (?) नित्यता।

न चैवङ्कस्यचित् सिद्धिर्न भविष्यति वस्तुनः ॥२१५॥

ननु सम्बद्धत्वस्यासिद्धेः कुतः स एव हेतुरन्यथा सर्वस्य सर्वं सिध्येत्। न च सामान्यरूपतापि नाम सामान्याभिमतस्य सिद्धा। अथ सम्बन्धः सिद्धः। एवमप्यशेषव्यक्तिग्रहणम्भवेदशेषसम्बन्धिरूपत्वात्। न च सम्बन्धिरूपताव्यतिरेकेणापरं सामान्यं। समानाकारमिति चेत्। समानाकारतेति सम्बन्ध एव तथा व्यपदिश्यते। व्यक्त्यपेक्षया हि समानाकारता न स्वरूपापेक्षया। स्वरूपस्य सर्वत्र स्वात्मनि व्यवस्थितेः। व्यक्त्यपेक्षया च समानत्वे व्यक्तिग्रहणमन्तरेणाग्रहणात्। अन्यव्यावृत्तेरपि सामान्यस्यायमेव दोषः। न। व्यावृत्तेरदुष्टत्वात् परस्परविशिष्टानामपि परतोऽभिमतात् व्यावृत्तिरविरुद्धा। समानव्यवहारोपि तदेकार्थक्रियाकरणात् अविरुद्ध एव। अलक्षितनानात्वस्य हि समानाकारता केन वार्यते। असमानेषु कथं समानबुद्धिः। न (।) तत एव समानत्वात्। नहि समानताऽन्यैव काचिदन्यत्र समानाकारप्रत्ययविषयीकरणात्। तत्रासमानेषु कथं समानाक(ा)रबुद्धिरिति पर्यनुयोगस्यायमर्थः। असमानबुद्धिविषयेषु कथं समानबुद्धिः। बुद्धयविषयत्वञ्च सिद्धं। नहि सामान्यवादिनोपि तत्र सामान्यबुद्धिविषयीकरणमसिद्धम्।

तस्मात् समानतैवास्मिन् सामान्येऽवस्तुलक्षणं।
कार्यञ्चेत् तदनेकं स्यान्नश्वरञ्च न (त)न्मतं ॥४३॥

वस्तुमात्रानुबन्धित्वाद् विनाशस्य न नित्यता।
असम्बन्धश्च जातीनामकार्यत्वादरूपता ॥४४॥

नहि समानाकारता भ्रान्तप्रत्ययाकारव्यतिरेकेणापरोपपादयितुं शक्या। अथ सामान्याकारता यथासम्भवं यत्र द्वयन्तत्र तथेति। एवन्तर्ह्यपरापरव्यक्त्युत्पत्तौ परिबर्द्धमानाकारं सामान्यम्व्यक्त्यन्वयव्यतिरेकानुविधानात् कार्यमेव व्यक्तीनां। तथासत्यनेकता व्यक्तिवदेव प्रसक्ता। प्रत्यभिज्ञायमानत्वादेकत्वमिति चेत्। सामान्येपि समानाकारतेत्यनवस्था।

अथ न प्रतीयत एव सामान्ये सामान्यम्व्यक्तावपि नेति समानः पर्यनुयोगः। प्रत्यभिज्ञायान्तु सामान्येनानेकान्तः। सामान्येष्वपि प्रत्यभिज्ञानदर्शनात्। नश्वरञ्च सामान्यत्नाभिमतम्प्राप्नोति च व्यक्तिविनाशे विनाशात्। वस्तुत्वाच्च नश्वरता। वस्तुमात्रानुबन्धी हि विनाश इति साधयिष्यते। अजन्यतायाञ्च सामान्यस्यासम्बद्धता। अरूपता च। प्रतिनियताकारपरिग्रहे हि वस्तुत्वं स च सामान्यस्य व्यापिनो न सम्भवति। नहि सामान्यं सकलकालकलाकलापावलीढम्प्रतिपत्तुं शक्यं। उपलम्भ एव च सत्त्वन्तदभावे कुतः सत्त्वं। सत्तासम्बन्धतः सत्त्वमिति चेत्। सत्ताया अपि सत्तासम्बन्ध इत्यनवस्था। न च व्यतिरिक्तसत्तासम्बन्धः सामान्यस्य (।) स्वरूपसत्त्वेनैव सत्त्वात्। न चोपलम्भव्यतिरेकेण तदुपलब्धं। तस्मादसत् सामान्यं। स्वरूपसत्त्वञ्च खरविषाणस्य कस्मान्न भवति। तदापि किन्नेति चेत्। कारणाभावात्। तथा चेत् सामान्यमप्यसत् तत्रापि कारणाभावात्। प्रतीयात् सामान्यमिति चेत्। उक्तमत्र (।) शशविषाणादयोपि स्वबुद्धया प्रतीयन्त एव तेपि सन्तः स्युः। निरूप्यमाणा नेति चेत्। सर्वं समानं।

किञ्च। सामान्यमेतत्सङ्केतबलात् प्रतिभासते शाब्दयाम्बुद्धौ। तथात्र न वस्तु। तथाहि।

यच्च वस्तुबलाज्ज्ञानं जायते तदपेक्ष्यते।
न सङ्केतन्न सामान्यबुद्धिष्वेतद् विभाव्यते ॥४५॥

सङ्केतो हि क्रियमाणः सन्निहितमात्रमवलम्ब्य न क्रियते। तदपेक्ष्यश्च प्रत्ययः समारोपित एव। तथाहि।

पूर्वेतराध्यारोपेण विना सङ्केतनं यदि। अव्यापितायान्नैवं स्याद् व्यवहारानुमायिता ॥२१६॥

शब्दसामर्थ्यादिव व्यवहारकाले प्रतीतिरिति चेत्। यदि पूर्वापराध्यारोपो न स्यान्न भवेत् प्रतीतिः। न च शब्दात् सामान्यबुद्धिः सङ्केतमन्तरेण दृष्टा। व्यक्त्यन्तरदर्शनाद् भवत्येव शब्दमन्तरेणेति चेत्। तत्रापि तदेव लिङ्गन्तद्रूपव्यवहारभावे सङ्केतग्रहणमुपलक्षणं लिङ्गमपि पूर्वाध्यारोपमेव जनयति नाधिकं(।)तथा हू णा दि[1] जातिर्द्विजादिजातिश्च सङ्केतमात्रबलावलम्बिनी न वस्त्वपेक्षते। सङ्केतसहितम्प्रत्यक्षम्प्रमाणन्द्विजादिजातिषु चेत्। न(।)वस्तुबलेन यज्जायते न तत्सङ्केतमपेक्षते सङ्केतमात्रापेक्षणेऽन्धपरम्परैव स्यात्। प्रत्यक्षमपि सहकारि विद्यत इति चेत्। अत्रोच्यते।

प्रत्यक्षेण गृहीतञ्चेदुपदेशो निरर्थकः। प्रत्यक्षेणागृहीतञ्चेदुपदेशो निरर्थकः ॥२१७॥

यदि प्रत्यक्षेण गृहीतङ्क किमुपदेशेन तेनैव ग्रहणात्। अथ प्रत्यक्षेण प्रत्येतुमशक्यं किमुपदेशसहस्रेणापि शक्यम्प्रत्याययितुं। दृष्टे हि पुरुषोपदेशो मयैतद् दृष्टमिति स्यात्। अतीन्द्रिये तु द्विजातित्वे नोपदेशस्य सामर्थ्यात्। तदेवाह।

याप्यभेदानुगा बुद्धिः काचिद् वस्तुद्वयेक्षणे।
संकेतेन विना सार्थप्रत्यासत्तिनिबंधना ॥४६॥[2]

तत्पुरुषबुद्धिप्रभवमप्रमाणमेव। अथापि स्याद् (।) अनुगताकारा बुद्धिः पदार्थद्वयदर्शने सङ्केतमन्तरेण भवत्येव। यथा गवादिबुद्धिः शावलेयादिदर्शनादेव न तत्र सङ्केतोपेक्ष्यते। एवन्तर्हि।

ब्राह्मणत्वमजातिः स्यात् तथा तस्याप्रतीतितः।
द्विजादिजातेर्न व्यक्तिर्गोत्ववद् व्यञ्चिकेक्ष्यते ॥२१८॥

गोत्वे यद्यन्यथा बाह्यङ किं सन्देग्ध्यत्र[3] कश्चन।
ब्राह्मणत्वे तु सन्देग्धि किं द्विजोयमिति ध्वनेः[4] ॥२१९॥

क्रियातो निश्चयस्तत्र नास्त्यन्येन जनिश्रुतेः। हूणादिजातेर्न व्यक्तिरुपदेशंविना कृता ॥२२०॥

नास्त्येव तत्र तत्त्वञ्चेद् गोत्वादावपि किम्मतं। यथैकशब्दवाच्यत्वमजादौ जातिरिष्यते ॥२२१॥

तथैकशब्दवाच्यत्वङ कर्कादौ किमनिष्टिमत्। अनन्तव्यक्तयो गोत्ववाच्यत्वन्तत्र तत्कथम् ॥२२२॥

व्यक्तिभेदे हि तत्रापि किमनन्तत्वमस्ति न। उदात्तादिप्रभेदे हि नानन्तत्वन्न साधयेत् ॥२२३॥

प्रत्यभिज्ञानमेकत्व उत यत्रापि सम्भवि।

---

[1] T. द्ब्यङस्-ल-सोग्स्-प
[2] लुप्तेयं कारिका दानशील-पुस्तके
[3] T. न सन्देहोऽत्र
[4] T. तु सन्देहो न द्वि०

उदात्तघर्घरादिभेदो हि इकारादिष्वपि तदनन्ततानिबन्धनमस्त्येव । प्रत्यभिज्ञाना-देकत्वञ्च घर्घरत्वादिभेदेपि विद्यत इति समानञ्च कर्कादिषु । तस्माद् गोत्वादावपि गोशब्द-वाच्यता व्यतिरेकेण नापरञ्च गोत्वमिति । अर्थप्रत्यासत्तिरेकशब्दवाच्यतैकपरामर्शजनन-ञ्चेति न जातिर्नामास्ति क्वचित् । अथापि स्यात् सैव शब्दवाच्यता (।) एकपरामर्श-जननन्न जातिमन्तरेण । तदप्यसत् ।

**प्रत्यासत्तिर्विना जात्या यथेष्टा चक्षुरादिषु ।**
**ज्ञानकार्येषु जातिर्वा ययान्वेति विभागतः ॥४७॥**

न खल्वेककार्यजननलक्षणा प्रत्यासत्तिश्चक्षुरालोकमनस्काराणाञ्जातिमन्तरेणासम्भ-विनी । सहकारिणां सम्भवत्येवेति चेत् । वस्तुद्वयेक्षणेपि सहकारित्वमेव भवत्येकबुद्धिः समानकारता नास्तीति चेत् । न । प्रमेये समानाकारताया वस्तुद्वयव्यतिरेकेणादर्शनादिति प्रतिपादनात् । बुद्धिजननमेवावशिष्यते । तच्चक्षुरादिष्वपि समानं । तेषामपि तदेकप्रत्यय-जनकत्वमस्तीति चेत् । शावलेयादीनामप्येकपरामर्शजननात् नापरमिति समानः प्रसङ्गः(।) तदेव वस्तुभूतमिति चेत् । अन्यथा त एव तत्प्रत्ययञ्जनयन्ति नान्य इति कुतोयम्विभागः । जातिरपि तर्हि शावलेयादिषु नान्यत्रेति कुतोयम्विभागः । तत्र विभागकारिणापरेण सामान्येन भवितव्यन्तस्यापि विभागवृत्तिनिबन्धनेन नापरेणेत्यनवस्था भवेत् । अथ तथा भूतङ्कारणन्तेषां येन त एव शावलेयादयो व्यञ्जका गोत्वस्य तदाधेया चेति । एवन्तर्हि जातिमन्तरेणैव तत्परामर्शजननं स्वकारणवशादिति किम्परिहीयते जातिम्विनेत्याग्रहस्त्यज्यताञ्जातौ । न च चक्षुरादिषु सामान्यं ।

**कथञ्चिदपि विज्ञाने तद्रूपानवभासतः ।**
**यदि नामेन्द्रियाणां स्याद् द्रष्टा भासेत तद्वपुः ॥४८॥**
**रूपवत्त्वात्; न जातीनाञ् केवलानामदर्शनात् ।**
**व्यक्तिग्रहे च तच्छब्दरूपादन्यन्न दृश्यते ॥४९॥**

नहि चक्षुरादिषु सामान्यञ कथञ्चिदपि प्रतिभाति । कार्यद्वारेणापि प्रतीयते । कार्यद्वारेणापि प्रतीयमानन्तदेककार्यमिति प्रतीयते । तथा च तेषामेकेने कार्येण सम्बन्ध इति स्यान्न सामान्यं । सम्बन्धोपि सर्वत्रैकः सामान्यमिति चेत् । न । सम्बन्धस्यापि कथञ्चि-दप्रतिभासनात्(।) तदनन्तरञ्च कार्यस्योपलब्धिरेव तेन नापरः सम्बन्ध उपलभ्यते । उक्तञ्च कार्यमपि सम्बध्यते कल्पनयेति । अथ शक्तिरेका सर्वेषामित्युच्यते । न शक्तेः शक्तिमतो-ऽव्यतिरेकादिति प्रतिपादितं । न च शक्तिरपि प्रतिभाति । अदृष्टापि शक्तिः कस्मान्न परिकल्प्यते इन्द्रियादिवदिति चेत् । तदसत् । तत्रातीन्द्रियत्वस्योपगमादस्माभिरनुप-लम्भः । अजाजीपुष्पवदित्यादि[1] वचनात् । न च सामान्यमागमैकसमाधिगम्यं । कार्यव्यति-रेकेण च किमपि रूपादिप्रतिभासस्य कारणमस्ति । तत्किञ्च गोलकावस्था[2] व्यतिरिक्तमथान्यथेति नात्र विवेकः । तथाहि ।

व्यतिरिक्तञ्च किमप्यस्ति विशिष्टञ्च गोलकन्तथा ।
वासनाया विशेषो वा मतभेदाः पृथग्विधाः ॥२२४॥

---

[1] . सी-रऽि-मे-तोग्-ल्त-बुऽो = (अं)जीरपुष्पवत् [2] T. मिग्–ऽब्रस्-क्यि

यस्य हि बाह्योर्थोऽव्यतिरेकात् कार्यस्य न सिध्यति स किञ्चक्षुरादीनाङ्‌ कार्यव्यतिरेकाद् व्यतिरिक्तानामनुमानं क्षमते। तस्माद् यथा कथञ्चिदनुमानमनवस्थितप्रमेयमेवतदिति न तद्द्वारेणोपलम्भः। रूपवत्वेत्वनागम एव। तथा सति।

यदि तेषाम्भवेद् द्रष्टा दृश्यैरंश्चक्षुरादयः। अतीन्द्रियत्वोपगमे गतिरन्या न विद्यते ॥२२५॥

अतीन्द्रियस्यैषैव गतीरूपवत्वेनोपगमात्। न तु सामान्यमेवं केवलस्य दर्शनानभ्युपगमात्। यदि योगिनाङ्‌ केवलं सामान्यमुपलभ्येत(।) न सामान्यं भवेत्। अथ समानाकारा बुद्धिरुत्पद्यते। तस्या इदन्निबन्धममिति योगिनः पश्यन्ति। नैवम्प्रमाणसिद्धता सामान्यस्य। अस्माभिस्तु सामान्यं न दृश्यत एव पृथक्। व्यक्तिव्यङ्ग्यत्वात् सामान्यस्य न केवलग्रहणं नह्यालोकग्रहणमन्तरेण रूपग्रहः।

तदप्यसत्। रूपं स्पर्शाद्यव्यभिचारीति गृह्यतेऽनुमाने नालोकमन्तरेणापि। यदि तु न गृह्येत न भवेदेवालोकाद् व्यतिरेकः। नाप्रसिद्धव्यतिरेकम्व्यतिरेकीत्यभ्युपगमार्हं। सामान्यन्तु न केवलङ्‌ कदाचिदुपलब्धिविषयः। व्यक्तिरूपानुप्रवेशे तु न विद्यत एव। यदि परङ्‌ गौर्गौरिति नाममात्रकं। अथ समानदेशतया न विवेकोपलब्धिः कथं रूपरसादीनान्तेषां भिन्नेन्द्रियग्राह्यत्वाद् विवेक इति चेत्। अत्र तु पुनरविभागप्रतिपत्तिरत्यन्तसंसर्गात्।

कोयमत्यन्तसंसर्गः किं स्वरूपविमिश्रता। अभेद एव हि प्राप्तो रूपन्तस्यैनदेव यत् ॥२२६॥
देशाभेदेपि रूपस्य भेदाद् भेदग्रहो न किं। नहि रूपातिरेकेण देशो नाम प्रतीयते ॥२२७॥

वस्तुव्यतिरेकेण कुतोन्यो देशः वस्तु चेद् भिन्नं देशोपि भिन्न एव कथन्देशाभेदः।

देशाभेदेन भेदश्चेत् तस्य भेदः कुतो भवेत्। तस्य देशान्तरादेव तथा स्यादनवस्थितिः ॥२२८॥

यतश्च स्वरूपेण न प्रतिभाति खरादिविषाणवत् ॥

**ज्ञानमात्रार्थकरणेप्ययोग्यमत एव तत्।**
**तदयोग्यतयाऽरूपं तद्ध्यवस्तुषु लक्षणं ॥५०॥**

यदेव न प्रतिभाति स्वरूपेण ग्राह्याभिमतं स न भवत्यालम्बनप्रत्ययः। स्वाकारार्प्पणार्थान्न सत्वाच्चक्षुरादिवत्[1] अधिपतिप्रत्ययो भविष्यतीति चेत्। न(।) तत्राप्यन्वयव्यतिरेकाभावात् ॥

**यथोक्तविपरीतं यत् तत्स्वलक्षणमिष्यते।**

यत् पुनः स्वाकारेण प्रतिभासतेऽन्वयव्यतिरेकाभ्यामवधृतसामर्थ्यन्तत् परमार्थसत् स्वलक्षणं स्वेनरूपेण लक्षमाणत्वात्[2]। स्वरूपं लक्षणमस्येति।

न तु स्वरूपेण कथं लक्ष्यलक्षणभावः। न(।) लक्ष्यलक्षणभावस्य काल्पनिकत्वात्।

"एवम्प्रकारा सर्वैव क्रियाकारकसंस्थितिः" (प्र० वा० २।२१९)

इति च वक्ष्यते। स्वरूपमेव लक्षणं युक्तन्नान्यत्। अन्येनान्यस्य परमार्थतो लक्षयितुमशक्यत्वात्। पररूपेण हि लक्षणम्पररूपताध्यारोप एव न स्वरूपलक्षणन्तत्। कथन्तर्हि सामान्यलक्षणं। अव्यक्तिव्यापनात्। सत्यमेतन्न परमार्थतः सामान्यन्नाम। स्वरूपमेव तदपि ज्ञानस्य। व्यवहारादेवमुच्यते। अनेकव्यक्तिस्वरूपाध्यारोपेण वर्त्तमान-

[1] T. स्वाकारार्पणसमर्थत्वात [2] T. लक्ष्यमाणत्वात्

त्वात् तत उत्पत्तेश्च। कथमवस्तुत्वे सति, अनुपलम्भकार्यस्वभावहेतुभेदः। प्रत्यक्षानुमानयोर्विषयभेदाद् भेदः। अनुपलम्भादीनान्तु न विषयभेदः। लिङ्गभेदाद् भेद इति चेत्। ननु तदेव चोदितन्तदेव परिहार इति कथमेतत्। तथाहि लिङ्गभेद एव न युक्तः। अथ दृश्यते षड्भेदता तर्हि प्राप्नोति। अथवा द्वौ वस्तुसाधनावेकः प्रतिषेधहेतुरिति वक्ष्यते। कथमवस्तुत्वे समाने वस्त्ववस्तुविभागः। अत्र परिहारमाह।

**सामान्यन्त्रिविधन्तच्च भावाभावोभयाश्रयात् ॥ ५१ ॥**

न परमार्थतो भेदः सर्वत्रावस्तुत्वात्। भावाभावोभयाश्रयत्वेन तु कार्यस्य ज्ञानस्य भेदात् तत्कारित्वेन स्वभावानुपलब्धिकार्यहेतुभेदः। तथाहि। भावोपादानो विकल्पः स्वभावहेतोरुदयी। अभावोपादानोऽनुपलब्धेः। उभयोपादानो विकल्पः कार्यहेतोरिति व्यतिरिक्तसाधनः कार्यहेतुः। भावाभावाभ्यां हि व्यतिरेको भवति। व्यतिरिक्तञ्च कारणं साध्यं। अथवाऽवस्तुत्वेपि भावाभावोपादानतया भेदमुपादानभेदादाश्रित्य[1] विषयभेदः। भाव एव द्विविधो व्यतिरिक्तोऽव्यतिरिक्तश्चेति विषयभेदाद् भेदप्रकारस्त्रिविधस्तत्र[2]। (सदसतोः विषययोरदृश्यानुपलब्धिः)[3]। उभयोपादानभेदोऽदृश्यानुपलब्धिर्विषयः ॥

**यदि भावाश्रयं ज्ञानम्भावे भावानुबन्धतः।**
**नोक्तोत्तरत्वाद् दृष्टत्वादतीतादिषु चान्यथा ॥ ५२ ॥**

नहि भावाश्रयं ज्ञानमित्येव भावे भवति। भावविषयत्वं हि भावस्वरूपग्रहणात्। न च स्वरूपग्राही सामान्यविषयो विकल्पो "वैफल्यादक्षसंहतेः" (२।११०) इत्युक्तं।

अथ भावे सतीत्युच्यते तदासिद्धं। भावमन्तरेणाप्यतीतादिषु दृष्टत्वात्। यदि सामान्ये तज्ज्ञानम्विशेषे वा(।) नातीतादिविषयता भावस्य स्वरूपेण गृह्यमाणस्यातीतत्वत्यागात्। नात्र लोको भावविषयत्वमवगच्छति। भावो नास्ति स्वरूपाभिनिवेशी भवति प्रत्यय इति भ्रान्तिमात्रकं। उक्तोत्तरत्वादिति च विपर्यये प्रमाणवृत्तिरुपदर्शिता। दृष्टत्वादिति पराभिमतस्य हेतोरनैकान्तिकोद्भावनं। यदि तर्ह्यभावेपि विकल्पस्य दृष्टिर्भावेपि तदा तर्हि भावधर्मता हीयते। एवेत्युभयधर्मता स्यात् तदाह।

**भावधर्मत्वहानिश्चेद् भावग्रहणपूर्वकं।**
**तज्ज्ञानमित्यदोषोयं;**

तज्ज्ञानमेव न तत्र किञ्चिदालम्बनं। परोक्षस्य सामान्यस्य मेयत्वात्[4]। परोक्षं हि सामान्यन्तच्च स्वरूपेणाप्रतीयमानङ्कथम्मेयं।

**मेयन्त्वेकं स्वलक्षणं ॥५३॥**

नहि सामान्यन्नाम प्रमेयं। यथाकल्पनमयोगात् स्वलक्षणमेव परमार्थतः प्रमेयं। तस्यैव सदसत्त्वेनावबोधस्य प्रयोजनत्वात्। कुत एतत्।

**तस्मादर्थक्रियासिद्धेः सदसत्ताविचारणात्।**

---

[1] T. ० पादानभेदेनोपादानभेदमाश्रित्य [2] T. ततः
[3] T. न भोटभाषान्तरे—० विषययो०(?) [4] T. अमेयत्वम्

अर्थक्रियाकारिणो हि पदार्थस्य सत्त्वासत्त्वाभ्यामर्थिता प्रेक्षावतां। तदवबोधाय च प्रमाणमन्विष्यते। अन्यथा प्रमाणपरीक्षणमप्रेक्षापूर्वक्रियैव भवेत्। तस्मादर्थक्रियाकारिपदार्थभावाभावविषयीकरणसमर्थमर्थवत्प्रमाणं। तस्मात् द्वाभ्यामपि प्रत्यक्षानुमानभ्यां स्वलक्षणमेव विषयीकर्तव्यं। अन्यथा प्रमाणत्वायोगात्। यदि स्वलक्षणमेव द्वाभ्यामपि विषयीक्रियते एकविषयत्वात् एकमेव मानम्प्रसक्तं। अथैकविषयत्वेपि[1] सामग्रीभेदात् प्रमाणभेद एवं सति प्रमेयद्वैविध्यादिति विरुध्यते। उक्तञ्चाचायण यस्माल्लक्षणद्वयम्प्रमेयमिति। सामग्रीभेदेन च प्रमाणभेदे चक्षुरादिविज्ञानानामपि भेदः सामग्र्या इति तावन्ति प्रमाणानि भवेयुः।

ननु प्रमेयभेदेनापि भेदेऽनेकलीलादिप्रमेयत्वादनन्तप्रमाणप्रसङ्गः। न(।) सर्वेषां स्वलक्षणत्वस्य भावात्। तद्विषयमेकमेव प्रमाणमेकविषयत्वात्। सामग्रीभेदेपि सति अक्षजत्वस्य भावात् किन्न सर्वम्प्रत्यक्षमिति चेत्(न)अक्षजत्वस्यालक्षणत्वात्। तथा च प्रतिपादयिष्यते। तस्मात् प्रमेयद्वैविध्यादेव द्वैविध्यं। अन्यथाऽनन्तप्रमाणता भवेत्। कथम्प्रमेयस्यानन्तता नेति चेत्। न(।)अनन्तत्वेपि नीलादित्वेन प्रमेयद्वित्वमेव[2]। यतः।

तस्य स्वपररूपाभ्याङ् गतेर्मेयद्वयम्मतं ॥५४॥

स्वरूपप्रतिभासनेन नीलादयोऽनन्तभेदत्वेपि स्वलक्षणमेव स्वेन रूपेण लक्षणात्।

ननु प्रतिपत्तिभेदेनाभेदे[3]न पारमार्थिकं स्वलक्षणत्वं। तत्प्रतिपत्त्यभावेऽन्यप्रतिपत्तिसम्मुखीभावेऽस्वलक्षणत्वात्। तथा तदेवैकमेकस्य स्वलक्षणमपरस्यान्यथा। न च प्रतिपत्तृप्रमेयभेदः। अपेक्षाकृतस्य भेदस्य काल्पनिकत्वादपरमार्थता। एकस्य च स्वलक्षणत्वेतरत्वेतदुभयरूपम्प्रमेयान्तरमिति तत्रापरम्प्रमाणमुद्भवेत्। तदेतदसत्।

परमार्थप्रमेयत्वे स्यादनन्तप्रमेयता। अपेक्षाकृतभेदत्वे परमार्थो न लक्षणम् ॥२२९॥

अत्रोच्यते।

उपलम्भेन यल्लक्ष्यम्पारमार्थिकमेव तत्। सत्तोपलम्भ एवेति भावानाम्पारमार्थिकी ॥२३०॥

न हि स्वरूपोपलभ्यमानतामनासाद्य भावाः सत्तामात्मसात्कुर्वन्ति।

ननूपलम्भेन ज्ञाप्यते सत्ता न तु स एव सत्ता(।) अनुपलभ्यमानस्य शशविषाणादेरसत्त्वात्। विपर्ययादुपलम्भः सत्तेति व्यवस्था।

ननु तत्राप्यसत्त्वे[4]ऽनुपलम्भो न त्वनुपलम्भ एवासत्त्वं। नानुपलम्भव्यतिरेकेणासत्त्वमपरं। अनुपलम्भेन यत्प्रतीयते तदसत्त्वमिति चेत्। कोयमनुपलम्भः(।) किमुपलम्भाभावोऽथान्योपलम्भः किम्वा नोपलभ इति विकल्पः। यद्युपलम्भाभावः कथमतः प्रतीतिः। नाभावः प्रतीतिः। सोप्यभावोन्येनोपलम्भभावेन प्रत्येय इत्यनवस्था।

ननूपलम्भस्यापर उपलम्भो नास्तीति नोपलम्भभावेन तस्य प्रतीतिर्येनानवस्था भवेत् परोक्षत्वाज्ज्ञानस्य। यदि परोक्षं ज्ञानङ्कथन्तस्य भावः प्रतीयते। यथा च पदार्थस्यानु-

---

[1] T. अथ एकविषयत्वेऽपि
[2] T. नीलादित्वेन प्रमेयद्वित्वमेव
[3] T. प्रतिपत्तिभागभेदे
[4] साधनं—बहिः

पलम्भावभावप्रतीतेस्तथा ज्ञानस्यापि स्यादिति वैशसतरं[1]। अथ तत्रार्थापत्तिरस्ति। अपरोक्षत्वादर्थस्य तेन न प्रमाणपञ्चकाभावः।

नन्वर्थापत्तिरपि बुद्धिरेव ततो बुद्ध्यन्तरेण बुद्धिः प्रतीयते। ततश्च तत्रापरार्थापत्तिर्नास्तीति प्रमाणपञ्चकाभावादर्थापत्तिबुद्धिर्नास्तीति प्राप्तं। अथ तत्र प्रमेयप्रतिपत्तिरस्तीति पुनरर्थापत्तिरनवस्थानादप्रतिपत्तिः।

ननु प्रतिपत्तिर्दृश्यते। यदि दर्शनमात्रमवलम्ब्यते किमर्थापत्त्या। यथा दृश्यते तथैवास्तु। अपरोक्षो दृश्यते स तथैवास्तु किमर्थापत्त्या बुद्धिपरिकल्पनया।

नन्वर्थापत्तिरुत्पद्यते। यद्येवमनवस्थानादप्रतिपत्त्यध्यवसायोपि भवत्येव स कथमनिष्टः यदा चोपलभ्यमानताऽपरोक्षता वा बुद्धिस्तदा तदभावप्रतिपत्तावनवस्था।

अथ पदार्थानुपलम्भ एवोपलम्भानुपलम्भः। एवं सत्यनुपलम्भमानोप्युपलम्भोऽस्त्येवेति प्राप्तं। स एवाभाव इति चेत्। यद्यनुपलम्भोऽभाव उपलम्भोपि भाव इति प्राप्तं। अथान्योपलम्भ एवानुपलम्भः।

तदप्ययुक्तं। यदि नामान्योपलम्भस्य नाम कृतङ्कथमन्यो नास्ति। तस्योपलम्भाभावादिति चेत्। दत्तमत्रोत्तरम्। स एवान्यस्योपलम्भोऽन्यत्र न प्रवृत्त इति तदन्यस्यानुपलम्भः। यदिनामान्यत्र न प्रवृत्तस्तथापि तस्याभाव इति कुतः। अथोपलब्धिलक्षणप्राप्तस्याभाव[2] एव। अन्यथा तत्रापि प्रवर्त्तेत तस्यापि तद्वदेवोपलभ्यमानत्वात्। न चोपलभ्यते। तस्यानुपलम्भः केन प्रतिपन्नोऽभावलक्षण इति सैवानवस्था। प्रतिनियताकारोपलम्भादिति चेत्। ननु किमियमर्थापत्तिः(।) तथेति चेत्। अनवस्थोक्ता। प्रतिनियताकारोपलम्भ एव उपलम्भाभावोऽपरस्येति चेत्। एवन्तर्हि नाभावो नाम कश्चिदन्यत्रापरभावादतोऽपरो योऽभावोऽन्यापेक्षया स्वापेक्षमभाव इति। तच्च रूपम्प्रतिनियतमुपलभ्यमानतायामेव। तत उपलम्भः सत्तोच्यते।

ननु प्रतिनियतत्वे उपलभ्यमानताप्रतिनियमो न तु स एव प्रतिनियमः। नन्वनुपलभ्यमानतायाङ्कथम्प्रतिनियम इति बुद्धिरुपलभ्यमानताप्रसादादेव। तस्मादुपलभ्यमानतैव सत्ता।

अथ नोपलभे इति विकल्प एवानुपलम्भः। तदपि नानोपलभे इति विकल्पोनुपलब्धिमेवानुसरति। सा चानुपलब्धिर्विचारिता। तस्मादुपलब्धिः सत्तेति। उपलभ्यमानतैव प्रमेयतत्त्वं। यदि तर्हि तदेव परमार्थसत्त्वन्न कस्यचिदन्यथा भवेत्। नैतदन्यथा भवति। पुरुषान्तरापेक्षयापि तत्तथैव भवति नीलादिवदेव। परोक्षतया कथन्तदेव तत्प्रतीयत इति चेत्। तेनैव रूपेण परोक्षतयापि प्रतीयमानन्तत्। यदि तु न केनचित् तथा प्रतीयते नापि प्रत्येष्यते वृथा तदनुमानं। तदाऽप्रतीयमानङ्कथन्तथेति चेत्। अन्यथापि तद् भवति तदेवेति कुतः। उपलब्धेरभावादन्यथेति चेत्। ननूपलब्धेरभावादभाव एव। नन्वभावेप्यनुपलब्धिः स्यात् कथमभावः। ननु भावे प्रमाणभावे सत्येवम्वाच्यं स्यात्। अनुमानम्प्रमाणमिति चेत्। तदपि दृष्टमेव रूपमनुसरति। पश्चाद्दर्शनात्कथम्पूर्वन्दृश्यमानता। यदि दृश्यमानता नास्ति कथं सत्त्वं। पश्चादुपलम्भादिति चेत्। पश्चादेव सत्त्वमस्तु कथम्पूर्वं।

[1] T. शिन्-तु-ञमस्-पर(=नष्टतरं)  [2] T. लक्षणाप्राप्तस्य

ननु पूर्वमविद्यमानञ्च कथम्पश्चादुपलभ्यते । उपलभ्यमानतया प्रतीतेरुपलभ्यमानतया प्रतीतेरुपलब्धमन्यथान्यथेति चेत् । अन्यदापि तद्रूपेणैवाध्यवसीयत इति नान्यथासत्त्वम् (।) अन्यथा प्रतिपत्तुमशक्यत्वात् । अनुमानञ्च भाविसत्तायाम्प्रमाणमिति प्रतिपादयिष्यते । कथन्तर्हि मेयान्तरं । तस्यैव पररूपेण प्रतीतेः । तथा प्रतीयमानन्दृष्टान्तसाधारणेन रूपेण मेयान्तरं । प्रतिपत्तिभेदेन तद्रूपारोपान्न परमार्थः । एवन्तर्ह्यपेक्षाकृतत्वान्न परमार्थता । सत्यमवस्तुसामान्यमिति प्रतिपादितमेव नेदमपूर्वमुच्यते । वस्तुसम्वादद्वारेण व्यवहारिभिरलक्षितनानात्वैर्वस्त्विति व्यवह्रियते । तेन तदपेक्षयेदमुच्यते प्रमेयद्वैविध्यं ।
व्यवहारिभिरलक्षितनानात्वैर्वस्त्विति व्यवह्रियते । तेन तदपेक्षयेदमुच्यते प्रमेयद्वैविध्यं ।
अथोभयरूपत्वादुभयग्राहिप्रमाणान्तरम्भवेदिति मतिः ।

तदयुक्तं । उभयरूपतयैकेन प्रतिपत्तुमशक्यत्वात् । प्रतिपत्तौ वा प्रमाणद्वयमेव तत् । प्रतित्तिभेदे एव भेदात् । अथवा प्रतिपत्तिभेदादपारमार्थिकमेव लक्षणमिति नोभयरूपताप्रसङ्गः । नीलादितैव हि पदार्थस्वभावः । सा च नापेक्षाभेदाद् भेदवती । कथन्तर्हि पारमार्थिकप्रमेयाभावात्प्रमाणत्वं ।

अत्रोच्यते ।

भेदः कल्पितरूपत्वात् स एवापारमार्थिकः । वस्तुरूपन्तु यत्प्राप्यम्परमाथतरन्न तत् ॥२३१॥

## ३. अनुमानचिन्ता

### (१) अनुमानसिद्धिः

कथन्तर्हि परमार्थस्य विषयीकरणाद् भेदः । स्वरूपसाक्षात्करणे हि प्रत्यक्षतैव भवेत् । तदसंस्पर्शे कथन्तद्विषयता । अत्रोच्यते ।

**अयथाभिनिवेशेन द्वितीया भ्रान्तिरिष्यते ।**

यथासावर्थ इदानीमिह कारणभेदतः भिन्नस्तथासावभिनिवेशो न भवतीति अयथाभिनिवेशिनी भ्रान्तिरेव । पूर्वदृष्टार्थजनितवासनाप्रबोधबलभावित्वादवस्तुसंस्पर्शोपितदध्यवसायात् । यदि तर्हि वस्तुसंस्पर्शाभावः प्रमाणमेव भवति । अविसम्वादात् प्रमाणमेवेति चेत् । स एव विसम्वादोन्यगतावन्यप्राप्तेर्न्न स्यात् । तदाह ।

**गतिश्चेत् पररूपेण न च भ्रान्तेः प्रमाणता ॥५५॥**

यदि पररूपेण गतिः कथन्तस्य गतिः पररूपस्यैवासौ गतिः । तत्रान्यस्य भ्रान्तौ भ्रान्तिरेव,[1] भ्रान्तिश्च न प्रमाणता । परिहारः ।

**अभिप्रायाविसम्वादादपि भ्रान्तेः प्रमाणता ।**
**गतिरप्यन्यथा दृष्टा ; पक्षश्चायङ् कृतोत्तरः ॥५६॥**

अन्यत्रापि यथाभिनिवेशः[2] कथमवगन्तव्यः । अभिप्रायाविसम्वादादेव । स चात्रा-

---

[1] T. तत्रान्यस्य प्राप्तौ भ्रान्तिः [2] T. यथार्थाभिनिवेशः

स्तीति नायथार्थाभिनिवेशः। इदन्तु वासनाबलाज्ज्ञानम्प्रतिभासभेदतो भेद इति नैवम्व्यवहारिणो विदन्ति। ख्याख्यातप्रतीतिरेवेयं। स एवाभिप्रायः कथमन्यदर्शनादिति चेत्। न विकल्पानाम्वस्तुप्रतिनियमाभावात्। अनादिवासनासामर्थ्यमेवैतत्। ततः कथमपरिच्छिन्नतत्त्वस्तत्र प्रवर्त्तत इति न चोद्यमेतत्। दृष्टे च नानुपपत्तिसम्भवः। प्रत्यक्षेपि कथम्प्रवर्त्तते। तत्रापि नैव प्राप्तव्यरूपपरिच्छेदः। सन्निहितमात्रस्य परिच्छेदात्। प्रत्युत (किन्त्वर्थे) प्रत्यक्षमेवा प्रवर्त्तकं सन्निहितमात्रस्य परिप्राप्तेः। तत्रापि तदेकत्वाध्यवसायादेव वृत्तिर्भाविनि वस्तुनि। ततोनुमानेप्येवमेव वृत्तिः कथमसमानतयेक्ष्यते। अथ प्रत्यक्षमेकत्वाध्यवसायरूपन्न भवति परिच्छेदकमेव सन्निहितस्य। एकत्वाध्यवसायस्तु तदुत्तरकालन्न विना विकल्पेन। तदसत्।

अनुमानेन सुतरां स्वरूपस्य परिग्रहात्। विकल्पान्तरमध्यासीद् ग्रहणे सन्निधावतः ॥२३२॥

यथैव हि प्रत्यक्षसन्निहितरूपादिमात्रग्राहि विकल्पान्तरेणैकत्वाध्यासे सति प्रवर्त्तकन्तथाऽनुमानं सुतरां स्वरूपस्य सन्निहिततरस्य ग्राहकमिति। तत्रापि विकल्पान्तरेणैव भाव्यध्यवसायात् प्रवर्त्तकत्वं।

अथ स्वरूपेणैवानुमानमध्यवसायरूपत्वात् प्रवर्त्तकमवस्तुसंस्पर्शि चेत् प्रमाणं। प्रत्यक्षस्य तु वस्तुसंस्पर्शितया प्रमाणता। तदप्यसत्।

वस्तुसंस्पर्शमात्रेण न प्रत्यक्षं प्रवर्त्तकं। भाव्येकाध्यवसायस्तु प्रत्यक्षस्य न विद्यते ॥२३३॥

येन रूपेण वस्तुसंस्पर्शो न तेन रूपेण प्रमाणं। प्रवर्त्तकत्वाभावात्। अथ तदेव रूपम्विकल्पजननं यत् प्रवर्त्तकं।[१]

अथ किम्विकल्पस्य प्रवर्त्तकत्वमस्ति येन तद्द्वारेण प्रत्यक्षस्य प्रवर्त्तकता। तद्धि स्वयमप्रवर्त्तकं। अप्रवर्त्तकविकल्पजननेन प्रवर्त्तकमिति केयम्वाचो युक्तिः।

प्रवर्त्तको विकल्पश्चेदवस्तुग्रहणे कथं। तथापि वर्त्तयत्येतदनुमानेन किम्मतम् ॥२३४॥

यदि हि विकल्पजननद्वारेण प्रत्यक्षम्प्रवर्त्तकं। आयातन्तर्हि विकल्पस्य प्रवर्त्तकत्वात् प्रमाणत्वं। तथासत्यनुमानस्य प्रामाण्यमव्याहतमेव। अनुमानस्यावस्तुग्रहणादप्रामाण्यमप्रवर्त्तकत्वादिति चेत्। कथन्तर्हि विकल्पस्य प्रत्यक्षोत्तरकालभाविनः। तत्र प्रत्यक्षस्य वस्तुग्रहणात्। न विकल्पे भाविनि तस्याप्रवृत्तेः। तत्सन्ताने प्रवृत्तत्वात्प्रवृत्तिरिति चेत्। कथम् प्रथमक्षणस्य सन्तानता। न चान्यत्र वृत्तमन्यत्र वृत्तम्भवति। तथा चेदनुमानमपि स्वरूपे वृत्तमर्थेपि वृत्तमेव भवेत्। उपचारमात्रमेतन्न परमार्थसत्येपि नोत्तरं। प्रत्यक्षमपि एकत्रवृत्तमन्यत्रापि वृत्तमिति नोपचारादेतदन्यत्। प्रत्यक्षन्तज्जातीये वृत्तमनुमानन्तु तत्रापि नेति व्याहतं। विकल्पस्य प्रत्यक्षोत्तरकालभाविनस्तज्जातीये वृत्यभावात्। तत्र प्रत्यक्षस्य वृत्तिरिति परिहारेऽनुमानेप्येतदिति समानमेतत्। अनुमानविषयतज्जातीये प्रत्यक्षवृत्तेः। महानसदहने हि प्रत्यक्षम्प्रवृत्तमेव। अनुमानविषये तत्रास्तीति चेत्। सर्व्वं समानं। तथा हि।

यथानुमानविषये न प्रत्यक्षप्रवर्त्तनं। तथा विकल्पस्य न किम्प्रत्यक्षोत्तरभाविनः ॥२३५॥
अन्यव्यक्तिप्रवृत्तञ्चेत् प्रत्यक्षमनुमानकृत्। अन्यरूपे न वृत्तङ किम्प्रत्यक्षन्तद्विकल्पकृत्।२३६॥
एकत्वाध्यवसायस्तु समान उभयोरपि। सामान्यमुभयत्रापि गृह्यते प्राप्य वस्तुनः ॥२३७॥

---

[१] T. ०कल्पजनने यत्०

वह्नेरादिक्षणस्तत्र विकल्पस्याक्षगोचरः । नन्वन्यस्य ग्रहेऽन्यस्य ग्रहो नेति निवेदितं ॥२३८॥
तत्सम्बन्धिग्रहे तस्य ग्रहणं यदि सम्मतं । अनुमानेपि सर्व्वत्र सम्बन्धिग्रहणं समम् २३९॥
विकल्प्येऽकारणन्दृश्यमनुमानेपि कार्यदृक् ।

यथा विकल्पस्य प्रत्यक्षोत्तरकालभाविनो विषयप्रत्यक्षमप्रवृत्तमपि तत्कारणे वृत्तम्विकल्पस्य प्रवृर्तकत्वप्रामाण्यम्विदधाति। तथाऽनुमानविषयेऽप्रवृत्तमपि तत्कार्यं प्रवृत्तमनुमानस्यापि प्रामाण्यम्विदधातु। सम्बन्धविशेषात्। कार्यकारणसम्बन्ध उभयत्र समानः। प्रत्युत्कारणात्[२] कार्यगतिरनैकान्तिकीति प्रत्यक्षमेवाप्रमाणम्भवेन्नानुमानं।

अथ प्रत्यक्षत्वादनैकान्तिकोद्भावनमयुक्तं।

ननु यत्र प्रत्यक्षता सन्निहितमात्रके न तत्रानैकान्तिकतोद्भाव्यते। भाविनि तु न प्रत्यक्षमेतत्। तज्जातीये प्रत्यक्षन्तत्रापि प्रत्यक्षमेवेत्यप्यचोद्यं। तज्जातीयताऽनुमानविषयेपि प्रत्यक्षविषयः। तत्र वृत्तम्प्रत्यक्षमिह तु प्रवर्त्तत इति विशेषः। तत्र व्यक्त्यन्तरे वृत्तमिह तत्रैवेत्यसामान्यविषयता प्रत्यक्षस्य। न(।) भाविभूतयोरेकत्वाभावात्। अप्रत्यक्षत्वाच्च सामान्यविषयता समानैव। कथम्वा तज्जातीयता भाविविषयेण नादृष्टस्यावगम्यते। अन्यत्र तथाग्रहणादेतदिति चेत्। व्यक्त्यन्तरसाधारणतैव तर्हि सर्वत्र सामान्यङ्गम्यते न विशेषः प्रत्यक्षानुमानयोः। अथावश्यम्भाविता भाविनस्तेन नानैकान्तिकता। यत्र कारणन्तत्रावश्यम्भाविता यत्र कार्यन्तत्र सुतरामेवावश्यम्भाविता। अवश्यम्भाविनि च कार्यकारणत्वमेवेति प्रतिपादितं। तस्मान्न भाविनि प्रवर्त्ये प्राप्ये प्रत्यक्षानुमानयोर्विशेषः।

अथ प्रत्यक्षन्तावाद् वस्तुसंस्पर्शि तेन प्रमाणन्नानुमानमिति चेत्। तदप्यसत्। प्राप्यविषयताभावे भ्रान्तस्याभ्रान्तस्य च न विशेषः। अथ भावाभावाभ्याम्विशेष इति चेत्। न। सम्वादमन्तरेण तस्यवार्थभावेतरत्वस्याधिगन्तुमशक्यत्वात्। अथ प्रत्यक्षे नरान्तरसम्वादादसम्वादेपि वस्तुविषयता। तदप्यनुमानगम्यमेवेति न विशेषः। तस्मादभिप्रेतार्थाविसम्वादात् प्रमाणान्न वस्तुग्रहणमुपयोगि[3]। अन्यथा प्रत्यक्षमप्रमाणमेव भवेत्।

तत्रैव व्याख्यायते। "अन्यथापि गतिर्दृष्टा"। भ्रान्तापि गतिर्दृष्टा अथवा गतिः पादविहरणन्तदन्यथापि पररूपेण प्रतिपत्तावपि दृष्टा। कथम्प्राप्तिः। सद्भावादर्थस्य। यस्य सद्भावः स प्राप्यते। तथाहि। समर्थकारे हस्तपरामर्शतोपि प्राप्तिदर्शनं। नियता कथमिति चेत्। सम्बन्धबलादेव। अस्तित्वमपि सम्बन्धिसद्भावादेव। कथं सम्बन्धिता गतिः। प्रत्यक्षेपि कथम्भाविसम्बन्धिता गतिः। एवमेव दृष्टत्वादिति चेत्। समानमुभयत्रापीत्यविवादः। अथ तदेव प्रत्यक्षन्तत्र प्रमाणन्तद्विकल्पजननादिति चेत्। अनुमानजननादपि तदेव पूर्व्वकम्प्रत्यक्षं किन्नेष्यते। अतीतत्वात्तस्येति चेत्। विकल्पोदयकालेपि प्रत्यक्षमतीतमेव। नहि कार्यकारणयोः समानकालतेति प्रतिपादयिष्यते। अथ विकल्पसमानकालमपि प्रबन्धेन प्रत्यक्षमास्त एवेति विशेषः। नोत्तरप्रत्यक्षक्षणानामप्रमाणत्वात्। अथोत्तरेषामपि प्रमाणताऽन्यथा प्रबन्धस्य भाविनोऽपरिनिश्चयात् पूर्वेषान्तर्ह्यप्रमाणता। प्राप्यविषयत्वाऽभावात्। पूर्वैरेव निश्चयजनने उत्तरेषामप्रमाणता भवेत्। सन्देहे हि न निश्चित्यानिश्चये वा न सन्देहः। निश्चयेतरयोरेकविषयत्वायोगात्। अथ पूर्वेषामप्रमाणतैव

---

[१] विवेचितं—पाठान्तर तत्रैव   [२] T. कारणात्   [३] T. ग्रहण उपयोगी

तथा सति न प्रवर्त्तेत इति कस्यचित् प्रामाण्यं पश्यामि तावत् किमत्र प्राप्तिरुत नेति प्रवृत्तावनुमानेपि समानमेतत्। तस्माद् गतिरपि प्रत्यक्षाभिमताऽन्यथा दृष्टा पररूपेणैव। न काचित् प्रवृत्तिविषये स्वरूपेण गतिः। अन्यत्र तु वस्तुरूपे स्वरूपे वा गतिरुभयोरपीति भाविवस्तुनि को विशेषः। कथन्तर्हि प्रत्यक्षानुमानयोर्विषयभेदः। स्पष्टेऽस्पष्टमध्यारोप्य-तेऽस्पष्टे च स्पष्टमिति। अथवाऽन्यथा।

यत्र भाविगतिस्तत्रानुमानम्मानमिष्यते। वर्त्तमानेतिमात्रेण[1] वृत्तावध्यक्षमानता ॥२४०॥

यत्रात्यन्ताभ्यासादविकल्पयतोपि प्रवर्त्तनन्तत्र प्रत्यक्षम्प्रमाणं। अन्यथा विकल्पस्य प्रमाणान्तरता प्राप्ता (।) यदि यत्र विकल्पस्तत्रैव प्रत्यक्षम्प्रवर्त्तकम्प्रमाणञ्चेति।

अथ प्रत्यक्षमेव प्रमाणन्न विकल्पो गृहीतग्रहणादिति चेत्। विचारितमेतद् यथा गृहीत-ग्राहिता नास्ति। पुनरप्युच्यते। तथा हि।

नोपयोगो विकल्पस्य प्रवृत्तौ यदि तेन किं। उपयोगो विकल्पस्य प्रवृत्तौ चेत् प्रमा न किम् ॥२४१॥

यदि विकल्पस्यानुपयोगितैव कथमसौ सहायतयेष्यते प्रत्यक्षस्य। न खलु निरुपयोगि-नापि सहायेन कस्यचिदर्थिता। अथ तेन विना न प्रवर्त्तनं। प्रत्यक्षमप्रमाणम्भवेत्। तेनापि विना न प्रवर्त्तेत इति चेत्। उभयन्तर्हि प्रमाणम्प्रसक्तं। अथाप्रमाणविकल्पः। पदार्थ-रूपासंस्पर्शात्। प्रत्यक्षमप्यप्रमाणम्प्राप्यरूपासंस्पर्शादित्युक्तमिदानीमेव। तस्मात्।

अन्वयव्यतिरेकाभ्याम्विकल्पस्य प्रवर्त्तने। यदि कारणता नास्ति तदा स्यादप्रमाणता ॥२४२॥
प्रत्यक्षात्परतो वृत्तिर्विकल्पस्य प्रवर्त्तने। शक्तिश्चेद् व्यवधानन प्रत्यक्षस्याप्रमाणता ॥२४३॥

अथ व्यवहितस्याप्यप्रमाणता तथा सति चक्षुरादीनामपि प्रवर्त्तकत्वे प्रमाणता स्यात्। अज्ञानत्वान्नेति चेत्। समनन्तरप्रत्ययस्य स्यात्। अन्यविषयत्वात्तस्य नेति चेत्। समान-विषयत्वे स्यात्। भवत्येवेति चेत्। न। तत्र प्रवर्त्त्येऽज्ञानत्वात्। नहि प्रवर्त्त्यविषयत्वम्पूर्व-क्षणग्राहिणः प्रत्यक्षस्यास्ति तस्मादनन्तरत्वात् प्रमाणम्विकल्प एव स्यात्। अथापि प्रवृत्ति-विषये प्रत्यक्षम्प्रवर्त्तेत प्रतिभासमात्रेण। तथापि प्रमाणम्विकल्पः। गृहीतग्राहित्वे कथ-म्प्रमाणमिति चेत्। प्रवर्त्तकत्वात्। यथा स्वभावानुमानं। नहि प्रतिभासमात्रेण प्रत्यक्ष-म्प्रमाणं। क्षणिकत्वेपि प्रत्यक्षग्राह्यता स्यात्। भवत्येवेति चेत्। क्षणिकग्राहकमनुमानन्न प्रमाणम्भवेत्। गृहीतग्राहित्वात्। अथ व्यवहारसाधनात् प्रमाणम्विकल्पोपि तथेति समान-म्भवेत्। तस्मात् प्रत्यक्षविषयप्रवर्त्तकत्वेपि स्पष्टास्पष्टभेदात् प्रमाणद्वितयमेव। तत्पररू-पेणापि गतिरविसम्बादात् प्रमाणमेव। यथा चाविसम्बादेपि न वस्तुस्वरूपग्रहणन्तथा प्रति-पादितमेव। अविसम्वादात् प्रमाणत्वेपि भ्रान्ततान्दर्शयति।

**मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतः (।)**
**मिथ्याज्ञानविशेषेपि विशेषोर्थक्रियाम्प्रति ॥५७॥**
**यथा तथाऽयथार्थत्वेप्यनुमानतदाभयोः (।)**
**अर्थक्रियानुरोधेन प्रमाणत्वम्व्यवस्थितं ॥५८॥**

मणिप्रभायां कुञ्चिकाविवरविहितमणिसंस्थानविशेषायाम्मणिविशेषमनाश्रितायां।

---

[1] अभ्यासेम—तत्रैव

प्रदीपप्रभायाञ्च सरसिरुहरागमणिभ्रान्तिः परस्परन्न विशिष्यते। अथ च मणिप्राप्तिकृतोऽस्त्येव कस्याश्चिद् विशेषः। तद्वद् अनुमानतदाभासयोरपि तत एव प्रमाणेतरते। अदृष्टेपि मणौ प्रदीपप्रभाप्तं मण्यध्यवसायी प्रवर्त्तमान उपलब्ध एव। न च भ्रान्तिरिति समानता सर्वत्र सामग्रीविशेषतो विशेषात्। नहि ज्ञानत्वात् सकलम्भ्रान्तमितरथा वा। तस्माद् भ्रान्तमपि प्रमाणमविसम्वादात्। सामग्रीविशेषाद् विशेषवत्। भ्रान्त्यध्यवसितता भ्रान्तिरपि सम्बद्धपदार्थजनिता प्रमाणोदयनिबन्धनं भवति समीहितप्राप्तिहेतुः। प्रत्यक्षोदय निबन्धनानुमानज्ञानवत्[1]। न ह्यनुमानम्प्रत्यक्षोदयमन्तरेण प्रमाण। न च प्रत्यक्षमनुमानोदयम्विनेति प्रतिपादितं। तथा हि।

विनाऽनुमानम्प्रत्यक्षन्न प्रवर्त्तकमादितः। तथाऽनुमानम्प्रत्यक्षम्विनेति प्रतिपादितं ॥२४४॥
विशेषस्त्वयमेवात्र क्वचित् पूर्व्वङ क्वचित्परं। अनुमानात्[2]परन्नाक्षन्नाक्षात् पूर्व्वानुमेष्यते॥२४५॥

अथापि स्यात्। प्रत्यक्षमन्तरेणानुमानं प्रवर्त्ततेऽनुमानन्तु विनापि प्रत्यक्षमिति विशेषाव नुमानम्प्रत्यक्षेणासमानं।

तदप्यसत्।

प्रत्यक्षमनुमानेन विना मानं स्ववेदने। व्यवहारस्तथा नास्ति प्रमाणत्वेपि किम्भवेत् ॥२४६॥
स्वसम्वेदनमात्रे च प्रत्यक्षेऽर्थाप्रसिद्धितः। भेदस्य च न किञ्चित् स्यादद्वैतमवशिष्यते ॥२४७॥
तस्मादर्थस्य भेदस्य नाध्यक्षसाधकम्विना। अनुमानन्ततस्तस्य प्रमात्वन्नानुमाम्विना ॥२४८॥

अथापि स्यात्(।) प्रत्यक्षमनुमानमपेक्षैव भेदेऽर्थे च प्रवर्त्तत। अनुमानन्तु प्रत्यक्षम्बिनापि(।) तथा हि(।) धमादग्न्यनुमानम्प्रत्यक्षमनपेक्षैवोत्तरकालभावि। तत एव तस्यार्थस्य प्राप्तेः। नैतदस्ति।

नहि देशविशिष्टत्वम्प्रत्यक्षेण विनेक्ष्यते। अनुमानम्पुनर्देशाविशेषेणाग्निसम्विदे[3] ॥२४९॥

कुड्यादिव्यवहितो वह्निर्न प्रतिनियतदेशतया प्रत्येतुं शक्योऽनुमानेन। कुड्यात् परदेशे क्वापि वह्निरिति सामान्येनानुमाने प्रत्यक्षात् प्रतिनियतदेशपरिग्रहः। न चाप्रतिनियतदेशस्य हुतभुजो जन्मप्राप्तिः[4]। मणिप्रभायामपि मणिज्ञानस्य प्रतिनियतदेशापरिग्रह एव दोषः। न च सन्देहविपर्यययोः। प्रतिनियतपदार्थाप्रापकत्वेन विशेषः। अथापि स्यात्। विपर्ययप्रत्ययोऽन्यत्र प्रवर्त्तकत्वादप्रमाणं। सन्देहस्तु कदाचित् तत्रापि प्रवर्त्तयतीति भवेत् प्रमाणं। तदसत्।

उभयांगावलम्बी हि संशयो न प्रवर्त्तकः। विपर्यासो विपर्यासात् प्रवर्त्तयति देहिनः ॥२५०॥

---

[1] तत्रैव बहिःपंक्ति—"प्रत्यक्षोदयाः निबन्धनं यस्यानुमायाः। प्रत्यक्षपृष्ठभाविन्यनुमा यस्या तादूप्यसाधिता प्रमा। तथा सर्वमनुमानमित्यर्थः।"

[2] तत्रैव—"अनुमानात् परं नाक्षमपेक्षणीयं। प्रत्यक्षात्तु परमनुम(ा)नमपेक्षणीयं प्रवृत्तिहेतोः। तृतीयपादव्याख्या। अक्षात् पूर्वं नानुमेष्यते परन्त्विष्यते। चतुर्थपादव्याख्या। चतुर्थपादनोयं व्याक्रियते।"

[3] T. न संविदे

[4] T. ०देशस्य न जन्मप्राप्तिः

**संशयो हि विपर्यासादधमः। उभयांशमवलम्बमानो दोलायमानचेतसः कथम्प्रवर्त्तकः। ततोसौ दोलायमानता प्रत्यक्षादपैति। विपर्यासोपि मणिप्रभायाम्मणिज्ञानलक्षणोऽनुमानात् पश्चाद्भाविन इति नानुमान्तरात् मणिप्रभायां मणिज्ञानस्य विशेषः प्रमाणत्वेन। किन्तु प्रमाणमिति चेत्।**

प्रत्यक्षमेव तन्मानङ कथम्भ्रान्तन्तथैव तत्। सम्वादेन प्रमाणत्वं क्वोपयोगि भ्रमेतरत् ॥२५१॥

**"प्रमाणमविसम्वादि ज्ञानं" (१।१)[1] इति लक्षणसामान्येन (।) तद्भ्रमे सत्यन्यथा वेति क्वेदमुपयोगवत्। ननु भ्रान्तत्वे सत्यविसम्बादोपि भवेन्नान्यथा। नैतदपि सत्यं।**

अभ्रान्तिरविसम्वादात् कालदेशनरान्तरे। न भ्रान्तेरविसम्वादोऽभ्रान्तेरेवाप्रसिद्धितः ॥२५२॥

**इदम्भ्रान्तमिदमन्यथेति नाविसम्वादनमन्तरेण। अथाबाधितत्वादभ्रान्तिरिति चेत्। न (।) अविसम्बादस्यैव तथाभिधानात्। विसम्वादेहि सति सर्व्वो विभ्रम एव (।) अबाधितत्वेपि सैव बाधेति चेत्। अविसम्वाद एव तर्हि तस्याबाधितत्वमित्यविसम्वादादेवाभ्रान्तिरिति सिद्धं। अविसम्वादेपि भ्रान्तिरेवानुमानमित्यपि न मी मां स क स्य मतं। लो का यत स्यापि न मतं। भ्रान्तेस्सर्व्वस्याप्रमाणत्वेनोपगमात्।**

**यदि तर्हि भ्रान्तमपि प्रत्यक्षम्प्राणङ को विशेषः प्रत्यक्षानुमानयोः (।) प्रतिभासभेदादिति वक्ष्यते। भ्रान्तत्वेपि प्रतिभासभेदोऽनुमानाभासतैमिरिकज्ञानयोरिव।**

अभ्रान्तमेव सकलं ज्ञानं मानं न विभ्रमः। विभ्रमाविभ्रमत्वस्य विशेषः क इवेक्ष्यते ॥२५३॥

**विभ्रमोहि स्वरूपासंस्पर्श एव (।) स च प्रमाणस्य सकलस्य समानः। यथैवानुमानस्य प्राप्यरूपासंस्पर्शस्तथा प्रत्यक्षस्यापीति विशेषः। तस्मान्मणिप्रभायामपि मणिज्ञानम्प्रत्यक्षमेव। (भाविनि विषये) भाव्यनुमानं प्रमाणमिति चेत्। इतरत्रापि प्रत्यक्षे समानमेतत्। तत्र नास्ति प्रमाणान्तरत्वाभिमानो मणिज्ञाने त्वस्त्येवेति चेत्। नात्यन्ताभ्यासतो मणिज्ञानेपि नास्ति प्रमाणान्तरत्वाभिमान इति समानं। ननु भ्रान्त्यभिमानः प्रभामणिज्ञाने न तु स्तम्भादिज्ञाने। अत्रोच्यते।**

परमार्थसमानत्वेऽभिमानादप्रमाणकात्। विशेषस्य न सत्त्यत्वम्प्रमाणद्वयमेव तत् ॥२५४॥

**सर्वत्र प्रत्यक्षानुमाने च प्रमाणान्तरमस्त्यभिमानस्तु नास्तीति नैतावता वस्तुभेदः। अप्रमाणकाभिमानस्य यथा कथञ्चिद् भाव इति न तत्सदसत्तयोर्विशेषः। तस्मात्।**

प्रत्यक्षमेव तज्ज्ञानमनुमानमथापि वा। मणिप्रभामणिज्ञानमिति तत्त्वविनिश्चयः ॥२५५॥

**अथ मणिस्वरूपस्याग्रहणात् कथम्प्रत्यक्षता। स्तम्भादौ तु यदि नाम भाविस्वरूपाग्रहणन्तत्स्वरूपग्रहणन्तु तत्कालभावि विद्यत एव। तवसत्। तथाहि।**

भावि रूपाग्रहेऽन्यस्य ज्ञानज्ञेयस्य तद्ग्रहः। समान एवोभयथा प्राप्तिस्तु प्रतिबन्धतः ॥२५६॥

**प्राप्यरूपस्य भेदग्रहः। तदपरस्य स्वरूपस्य वा भवतु परिग्रहः पररूपस्य वेति न विशेषः।**

---

[1] तत्रैव—"ननु अविसम्वादकत्वं अनुमानेपि वर्त्तते (।) न चाभ्रान्तमनुमानं।...अभ्रान्तत्वम् विसम्वादकत्वं तत्र। अत्रोच्यते (।) किमियमभिधा। अवसायः। उत विचारो वा। यद्यवसायस्तदा मणिज्ञानेप्यस्ति। घटज्ञानवत्। अथ विचारस्तदा घटज्ञानेपि भाविनि विषयेऽनुमानात् वृत्तिरित्यत्रापि प्रमाणं।"

मणिप्रतिभासस्तु मणौ मणिप्रभायाञ्च समान एव। तत्र क्वचिद् देशभ्रान्तिः क्वचित् स्वरूपभ्रान्तिः क्वचिदुभयं क्वचिदनुभयं। मणिप्रभायां मणिज्ञानस्य देशभ्रान्तिर्मणावेव प्राप्यस्वरूपभ्रान्तिः। सामान्यानुमानस्योभयभ्रान्तिः। स्वसम्वेदनस्य नोभयथापीति प्रकारः।

ततो यदुक्तं (।) "या गतिः साम्यरूपेणैव यथा प्रत्यक्षा गतिः।

यत्प्रमाणन्तदभ्रान्तं यथा प्रत्यक्षं" (।) तदयुक्तं। प्रत्यक्षापि गतिर्न स्वरूपेण। न चाभ्रान्तम्प्रत्यक्षमस्ति। स्वरूपे च यथा प्रत्यक्षभ्रान्तम् (।) तथाऽनुमानमप्यन्ये च भ्रान्ताभिमताः प्रत्यया इति न तथा भ्रान्ततप्रतिपादनङ क्वचिदुपयोगि। एवन्तर्हि कथम्प्रत्यक्षानुमानयोर्लक्षणभेदः उक्तमत्र (।) स्पष्टेतर प्रतिभासभेदादिति। स एव प्रतिभास भेदस्तथा कुतो भवति। यस्य स्वतन्त्रङ ग्रहणन्तस्य स्पष्टप्रतिभासता। यस्यान्यथा तदस्पष्टप्रतिभासमतोन्द्रियं परोक्षं।

एतदेव कथम्भवति येनैवमुच्यते।

**बुद्धिर्यत्रार्थसामार्थ्यादन्वयव्यतिरेकिणी ।**
**तस्य स्वतन्त्रङ् ग्रहणमतोऽन्यद्वस्त्वतीन्द्रियं ॥५६॥**

यस्य हि साक्षात् प्रतिभासनं स एवार्थोऽनतीन्द्रियःस्वलक्षणं। साक्षात्प्रतिभासश्च बुद्धेरन्वयव्यतिरेकानुविधानेन तदाकाराया जननात्। यत्तु पूर्व्वदर्शनजनितवासनाप्रबोधतोऽवभासविषयः पूर्वप्रतिपन्नरूपाकारतया[1] निश्चीयते तदतोन्यदतीन्द्रियं। नहि तदेन्द्रियव्यापारः। तत्सम्भवी वा साक्षात्करणाकारः साक्षात् प्रतीयते। न च तदाकारव्यतिरेकेणापरा तस्यप्रतीतिः (।) तत् साक्षादेव यस्य च न साक्षात् तस्य नैव प्रतीतिः। अथाक्रमसङ्गत्यभावात् परोक्षं। स्वरूपेण तर्हि प्रतीयमानमेव परोक्षमक्षव्यापाराभावादिति प्राप्तं। तदेतदनभिमतं।

तस्मात् परोक्षविषयः प्रत्ययो यद्यवस्तुदृक (।) प्रतीतस्या परोक्षत्वात् परोक्षो विषयः कथं ॥२५७॥

यदि प्रतीयते न परोक्षः (।) न च वस्त्वसंस्पर्शने वस्तुविषयता। सामान्यविषयतायान्तर्हि कथम्परोक्षविषयता सामान्यन्तत्र साक्षात्कृतमेव वस्तु तु पुनर्न संस्पृष्टमिति कथम्परोक्षविषयता सामान्यज्ञानस्य। लक्षितलक्षणेन प्रतिपन्नमिति चेत्। केन रूपेण विशेषस्य लक्षणं। यदि विशेषेण शब्दादेरेव तस्य प्रतीतिरस्तु किमन्तर्गडुना सामान्येन। सामान्यरूपेण लक्षणेऽनवस्थेत्युक्तं। विशेषरूपेण च लक्षणे इन्द्रियवैफल्यं।

अथ सामान्यमेव प्रतिभाति। विशेषः परोक्षो अप्रतिभासनात्। अत्रापि स्वाकार एव वासनाबलायातः प्रतिभाति साक्षात्। अर्थस्तु परोक्ष इति कथन्तद्विषयता। तत्र प्रवर्त्तनात्। अप्रतिपन्ने कथम्प्रवर्त्तनं। अप्रतिपन्न एव सर्व्वत्र प्रवर्त्तनमिति प्रतिपादितं। अप्रतिपन्नेपि हि देवदत्तरूपे यज्ञदत्तस्य समानस्य दर्शनात्। प्रवृत्तिदर्शनात्तत्र सम्वाद इति चेत्। न (।) अविसम्वादकारणस्य वक्ष्यमाणत्वात्। सम्बन्धादविसम्वाद इति। यदि भ्रान्तिरसौ वासनाबलाद् वासनायामेव तर्हि प्रतिपन्न इति कथमर्थस्याध्यवसायः प्राप्तिर्व्वा। न (।) वासनाप्रबोधस्यापि कारणत्वात्। तत्सम्बन्धेनार्थस्येति न दोषः। तदेवाह।

---

[1] T. पूर्वदृष्टरूपाकारतया

**तस्यादृष्टात्मरूपस्य गतेरन्योर्थ आश्रयः।**
**तदाश्रयेण सम्बन्धी यदि स्याद् गमकस्तदा ॥६०॥**

**अदृष्टस्वरूपो ह्यर्थोन्यतः सम्बन्धात्[1] प्रतीयते। अन्यमात्रात् प्रतीतावतिप्रसङ्गः। स्वयम्प्रतीतौ सर्व्व एव सर्व्वदर्शी स्याद् विशेषाभावात्। तेनाश्रयेण च सोन्यो यदि सम्बन्धी तदा गमकः। कथमेतत्। एवमेव दृष्टेः।**

**ननु स्मरणमेव तत्र सम्बद्धाद् भवति। तच्च सम्बन्धादेरपीति[2] स एवातिप्रसङ्गः। नाभोगादिजनितायाःस्मृतेरन्यथा भावात्।**

आदेशादिव्यवस्थस्य तस्या भोगादितः स्मृतिः। देशकालविशिष्टस्य तदाश्रयसमागमात् ॥२५८॥

**धर्म्मिसाध्यसम्बद्धपदार्थदर्शनाद्धि देशकालनियतः शक्यप्रापणोर्थः प्रतीयते नाभोगादितः। तथाहि। आभोगः किम्मया दृष्टः किमित्यन्वेषणपरो मानसो व्यापारः। तत्र सति तथाभूतदेशकाल एव वस्तुनि स्मरणम्राधिकव्यपारन्तेनाप्रमाणन्तत्। सदृशग्रहणाद् अनेन सदृशोसावित्येतावन्मात्रिका प्रतीतिः। सदृशत्वन्तु न देशकालविशिष्टस्य। सर्वदा सदृशत्वात्। अनेकस्य च सादृश्यमितरद्वेति न प्रतिनियतगतिरिति न तत्प्रमाणं। तेन तु तत्सदृशेन यत् कर्त्तव्यन्तत् क्रियत इति प्रमाणमेव तत्र प्रत्यक्षं। अन्यथा तु प्रत्यक्षाद् प्रवर्त्तनमेवेति न प्रमाणमिति प्रतिपादितमेवेति न पुनरुच्यते। एवमेव च सम्बन्धादपि प्रतीतिरनुमानात्मिका प्रमाणं। तथाहि।**

लिङ्गन्तल्लक्षणत्वेन कार्यादिगमकम्मतं। तल्लक्षणत्वादपरन्न लिङ्गस्यास्ति लक्षणम् ॥२५९॥

**तदेतद् वृक्षार्थक्रियाकारि शिंशपात्वं धूमादिकञ्चाग्न्यादि जनितङ्कार्यत्वेन कारणत्वेन वा सादृश्यावगतिस्तत्रापि। तदेतत्सत्त्वमनित्यरूपम्पूर्वापररूपरहितत्वेन नान्यदन्यस्याप्यानित्यत्वस्य रूपमिति सर्व्वानुमानप्रतीतिरेवम्भूते च सन्निहितकारणञ्च धूमस्य रूपम्विशेषेण केनचिदुपलक्षितस्यासन्निहितकारणञ्च भस्मादेरिति द्वयमपि यथायोगङ्गमकं। तथाहि।**

यो यथा दृश्यते भाव एकदा स तथान्यदा। प्रबोधकः स्मृतेरेव यथायोगम्प्रवर्त्तकः ॥२६०॥
अन्यथा पूर्वदृष्टस्य चलिता स्याद् यदा स्मृतिः।
प्रवर्त्तनम्भवेत्तत्र न तु सम्बादसङ्गतिः ॥२६१॥
प्रत्यक्षमविसम्वादि स्मरणन्तु तदाश्रयात्। तथैवाहं स्मरामीति स्मृतेस्स्याद् यदि सा प्रमा ॥२६२॥
दर्शने व्यभिचारेण तथात्वेपि न चेत् प्रमा। दर्शने व्यभिचारोपि स स्मृतेरन्यथात्वतः ॥२६३॥
तथाहि दर्शनमनालम्बे स्मरणमन्यथा। सालम्बनत्वेन यतः तथा तन्न प्रमा भवेत् ॥२६४॥

**स्मरणे नान्यथानुगम्यमानन्दर्शनप्रमाणमिति दर्शनस्य स्वतो दोषोऽपि तु स्मरणस्य। तदपि हि स्मरणं सादृश्यादन्यथोपजायते। स्मरणपाटवाद् भावादेव।**

तस्मात् कार्यस्वभावाभ्यां स्मरणं जायतेऽर्थभाक्।
उपलक्षिताभ्यान्तत्त्वेन स्यात् स्मृतेर्विभ्रमोन्यथा ॥२६५॥

**तस्मात् स्मृतिविभ्रमकृत एव सर्व्वथा विसम्वादः। तस्मात् परोक्षविषयं स्मरणमेव सम्बद्धाद् यथादृष्टस्य प्रमाणं। तच्चानुमानमेव नान्यत्। अत एवाह।**

---

[1] तत्रैव—"सम्बद्धादिति पाठान्तरं। [2] तत्रैव—"ग्रहणादेरपि पाठ (:)।

**गमकानुगसामान्यरूपेणैव तदा गतिः ।**
**तस्मात् सर्वः परोक्षोऽर्थो विशेषेण न गम्यते ॥६१॥**

गमकपरतन्त्रा हि गम्यस्य प्रतीतिस्तच्च गमकं सामान्यरूपेण न विशेषेण । तस्य लक्षयितुमशक्यत्वात् । अलक्षितेनापि रुपेण गमकत्वे सर्व्वाकारसर्व्वकारणपरम्पराप्रतीति प्रसङ्गः । तच्च धूमादिसामान्यं सर्व्वत्राग्न्यादौ दृष्टं । ततोऽनैकान्तिकत्वान्न ततो विशेषस्य प्रतीतिः । विशेषोपलक्षणे प्रतीतिरिति चेत् । न (।) अवान्तरविशेषस्य लक्षयितुमशक्यत्वात् ।

ननु विशेषोपलक्षणमपि कस्यचित् सम्भवत्येव (।) न (।) अत्यन्तम्विशेषस्याशक्यत्वात् । विशेषोपलक्षणन्तु तत्रापेक्षाकृतं । या च यावती च मात्रेति । यस्य तु सर्वाकारप्रतीतिस्तस्य साक्षात्करणात् । अव्यक्तमेव तदिति प्रतीमः । विशेषदृष्टेर्विशेषप्रतीतिरिति चेत् । न । तत्रापि सामान्यस्यैव गतिरिति प्रतिपादयिष्यते । एतदेवाह ।

**या च सम्बन्धिनो धर्म्माद् गतिर्धर्मिणि वर्त्तते ।**
**सानुमानम्परोक्षाणामेकान्तेनैव साधनं ॥६२॥**

अन्यलक्षणाभावादनुमानलक्षणसम्भवाच्च नानुमानादपरम्परोक्षविषयम्प्रमाणमस्ति । ननु प्रमाणान्तरविषयम्प्रमाणान्तरमिति न द्वे एव प्रमाणे । अत्र परिहारः ।

**न प्रत्यक्षपरोक्षाभ्याम्मेयस्यान्यस्य सम्भवः ।**
**तस्मात् प्रमेयद्वित्वेन प्रमाणद्वित्वमिष्यते ॥६३॥**

ननु प्रमाणद्वित्वेन प्रमेयद्वित्वमिति युक्तं । प्रमाणस्य सत्तासाधनत्वात् ।

नैतदस्ति । प्रमेयम्प्रमाणेन सिध्यति प्रमाणस्वरूपन्तु स्वसम्वेदनाकारसिद्धेः ज्ञानकार एव च स्वसम्वेदनः स्वसामान्यतयोपलभ्यमानः प्रत्यक्षानुमानविषय इत्युक्तं । विषयद्वैविध्यादाकार द्वैविध्यादित्यर्थः । स्वाकारद्वयसम्वेदने हि नैकमिति युक्तं । नापि त्र्यादिकं ।

**त्र्येकसङ्ख्यानिरासो वा प्रमेयद्वयदर्शनात् ।**

प्रमेयद्वयादपरस्य प्रमेयस्यासम्भवात् । अपरप्रमाणन्नास्तीति प्रतिपादितं ।

इदानीन्द्वितीयस्य प्रमेयस्य सम्भवान्नैकम्प्रमाणन्नापि त्र्यादिकमिति प्रतिपादयिष्यति । नहि द्वितीये प्रमेये सम्भवति प्रमाणमेकं । द्वितीयप्रमेय विषयस्यापि प्रमाणस्य भावात् । नैकेन प्रमाणेन द्वितीयस्यापि सिद्धिः । अथ सामान्यविशेषरूपमेकमेव[१] प्रमेयं । अपरस्तु नास्तीति प्रमेयद्वयसिद्धमित्याह ।

**एकमेवाप्रमेयत्वादसतश्चेन्मतञ्च नः ॥६४॥**

दृष्टमेवैतत् स्वलक्षणादपरम्प्रमेयमसत् । तच्च न प्रमेयं एकमेव तु स्वलक्षणं प्रमेयं । तदेव स्वपर रुपाभ्याङ्ग गतेः सामान्यविशेषलक्षणमिति प्रागुक्तं । किञ्च ।

**अनेकान्तोऽप्रमेयत्वे ह्यभावस्यापि निश्चयात् ।**
**तन्निश्चयप्रमाणं वा द्वितीयं;**

---

[१] T. ० विशेषविषयरूप०

अभावोपि हि प्रागभावाविलक्षणः प्रमेय इति कथमसदप्रमेय मिति व्याप्तिः। अव्याप्तिकश्च कथं हेतुरैकान्तिकः। तथाहि (।) प्रागभावाद्यवेदने सर्वमेव मित्यम्भवेत् न कायन्नापि कारणं। तथा च प्रतिपादयिष्यते। इतरेतरावे च सति मिश्रीभवेयुर्द्रव्याणीत्यद्वैत्व सकलम्भवेत्। तन्निश्चयः प्रमाणम्वा द्वितीयं। यतः नाक्षजामतिः (।)

नाक्षजा मतिः ॥६५॥

अभावेऽर्थबलाज्जातेऽर्थशक्त्यनपेक्षणे (।)
व्यवधानादिभावेपि जायेतेन्द्रियजा मतिः ॥६६॥

न खल्वभावो नामेन्द्रियगोचरः। शब्दादिस्वभावस्यैव तत्र प्रतिभासनात्। तदत्र नास्तीति तु तस्य रूपमसत्तया नाक्षगोचरः। व्यवहितस्यापि तस्यासत्त्वेन व्यवस्थापनात्। अथ विविक्तप्रदेशोपलम्भादेव तथा निश्चयः। केयम्विविक्तता नाम। यदि प्रदेशादि रूपं (।) तस्मिन्नुपलब्धेऽन्यन्नास्तीति कुतः। तस्य तदभावरूपत्वादिति चेत्। कथमन्योऽन्यस्याभावः। तेन सहासङ्गमाच्चेत्। असङ्गमः कुतः। सहावेदनाच्चेत्। सहावेदनात्तर्हि व्यवस्थाऽभावस्य। तदन्यवेदनमेव तस्यावेदनं। तदन्यत्वमेव तस्यावेदने कथङ्गृह्यते। तस्य प्राग्वेदनादिति चेत्। तदेतन्न वेद्यत इति कथमभावगतिः। तस्मादयम भा वनिश्चयो नेन्द्रियजः। ततो न प्रत्यक्षमेतत्।

अथापि स्यात्। प्रत्यक्षमेव निवर्त्तमानमभावनिश्चयनिमित्तं। तदप्यसत्।

अभावे विनिवृत्तिश्चेत् प्रत्यक्षस्यैव निश्चयः।
विरुद्धं सैव वा लिङ्गमन्वयव्यतिरेकिणी ॥६७॥

प्रत्यक्षस्यैव निवृत्तेरभावनिश्चय इति चेत्। व्याहतमेतत् तच्च नास्ति तेन च प्रतिपत्तिः। प्रत्यक्षं हि सम्वेदनात्मतया यत्र प्रवर्त्तते तत्र निश्चयकृत्। अनुभूते निश्चात्। अनुभवाभावे तु कथन्निश्चयः। तथा हि वक्तारो भवन्ति। न जाने किमस्त्यन्यदथ नास्तीति नात्र समसम्वेदनामिति[1]। कथन्निश्चयहेतोरसम्वेदनान्निश्चयः। अथोपलब्धियोग्यस्यानुपलम्भो न सति पदार्थे ततोऽभावनिश्चय इति चेत्। न तर्हि परलोकादेरतीन्द्रियस्याभावनिश्चयः। यदि चानुपलब्धिः सद्भावाद् व्यावृत्ता तदा तद्विपर्ययव्याप्ता सती गमिकेति लिङ्गमन्वयव्यतिरेकयोगात् सिद्धमनुमानमपरं प्रमाणं। लिङ्गादुत्पत्तेः।

अनेन स्वभावहेतुरनुपलब्धिश्च तदन्तर्गतोक्ता।

कार्यहेतुमाह।

सिद्धञ्च परचैतन्यप्रतिपत्तेः प्रमाद्वयं।
व्याहारादौ प्रवृत्तेश्च सिद्धस्तद्भावनिश्चयः ॥६८॥

नहि परचैतन्यमात्मन इव प्रत्यक्षतः सिध्यति। न खलु जाने किमस्य चैतन्यमस्ति न वेति। तदाकारपरिस्फुरणादेव तथा प्रतिपत्तेः। कार्यविशेषेण विशेषस्य द्वेषादेर्निश्चयः।

---

[1] T. देर्-ब्दग्-ल-म्योङ-व-मेद-दो-शेस्-ब्र्जोद्-प-म-यिन्-नो (= नात्र ममानुभव ति वचनं नास्ति)

भवतु यथा कथञ्चिदयन्निश्चयः स तु प्रमाणन्न भवति। नैष दोषः। तदनुरूपस्य व्यवहारस्य व्याहारादिलक्षणस्य दर्शनात्। यथाकथञ्चिद प्रमाणिकैव प्रवृत्तिरिति चेत्। न। विचार्य परित्यागप्रसङ्गात्। अन्यस्योपायस्याभावादगत्या अपरित्याग इति चेत्। अन्यस्योपायस्याभाव इत्येषोपि निश्चयः प्रमाणमेव (।) तच्चानुमानमित्युक्तं।

पराभ्युपगमेनैतदुच्यते। तेनाऽदोषः। न पराभ्युपगतस्य परार्थानुमान एवावतारात्। नह्यात्मानमेव पराभ्युपगमेन प्रतिपादयति कश्चित्। गत्यन्तरन्तावन्न प्रतिपद्ये तेनैव महम्प्रवृत्तः। परलोकेपि तर्हि प्रतिपत्तिरस्तु परलोकत्यागेपि जीवितुं शक्यं (।) तेन तत्राप्रवृत्तिरिति चेत्। एवञ्जीवितुं शक्यमिति कुत एतत्। जीवितार्थ्यपि किमतीतजीवितार्थी अथ वर्त्तमानजीवितार्थीति। तत्रातीतार्थी न अतीतत्वादेव। न वर्त्तमानार्थी तस्यापि प्राप्तत्वात्। अनागतार्थी चेत्। अनागतन्तर्हि जीवितमनेनोपायेन भवति नान्यथेति अन्वयव्यतिरेकतः प्रतीतेरनुमानमेव।

किञ्च (।) यथाकथञ्चिदयम्व्यवहार इति किम्भवत एवाथान्यस्य। यदि भवत एव उभयासिद्धत्वात् कथम्परः प्रतिपादितः। अथान्यस्याप्युपायाभाव एव तथा सति परचैतन्यप्रतिपत्तिरवश्यमिति कथं यथाकथञ्चिदियम्प्रतीतिः। अथेयमपि भवति यथाकथञ्चिदेव। एवन्तर्हि भवत एवासम्प्रत्ययः कथम्परस्य प्रतिपत्तिः। मम तावदेवम्परस्य तु कथमिति न जाने। अवचनमेव तर्हि प्राप्तं। परस्याप्येवमेव भविष्यतीति चेत्। न(।) प्रमाणाभावादिति यत्किञ्चिदेतत्। तस्मादस्ति परप्रतीतिः(।) ततोऽनुमानमभ्युपगन्तव्यम्परेणापि[1]।

प्रमाणमविसम्वादात् तत्क्वचिद् व्यभिचारतः।
नाश्वास इति चेल्लिङ्गन्दुर्दृष्टेरेतदीदृशम्[2] ॥ ६९ ॥

अविसम्वादो हि प्रमाणलक्षणन्तदस्त्यनुमानस्येति प्रमाणता। अथ विसम्वादेपि क्वचिद् दृश्यत इति विपर्ययः। तथाहि स श्यामस्तत्पुत्रत्वादित्यनुमानम्व्यभिचारासङ्ग्यपि। तदयुक्तं। अनुमानमेवैतन्न भवति लिङ्गाभासादुत्पत्तेः प्रतिबन्धाभावात्। नहि श्यामतायान्तत्पुत्रत्वम्प्रतिबद्धं। एकसामग्र्यधीनतया समानरूपता चेत्। नैकसामग्र्यधीनताऽभावात्। कर्माहारकालविशेषस्य सम्भवात्। एकसामग्र्यधीनतायां युगपदुत्पत्तिप्रसङ्गात्। तस्माल्लिङ्ग[3] रूपतत्त्वानुपलक्षणादहेतावपि हेतुत्वाध्यारोपतो व्यभिचाराभिप्रायः।

अथापि स्याद् (।) एवम्प्रायमेव सर्व्वानुमानन्नापरम्विशेषलक्षणमिति कस्याव्यभिचारः। तदप्यसत्।

यतः कदाचित् सिद्धास्यप्रतीतिर्व्वस्तुनः क्वचित्।
तदवश्यन्ततो जातन्तत्स्वभावोपि वा भवेत् ॥ ७० ॥

तादात्म्यतदुत्पत्तिलक्षणप्रतिबन्धसङ्गतं हि लिङ्गङ्गमकं। अन्यस्य तदात्मत्वात्। यतश्च प्रतीतिरव्यभिचारिणी साध्यस्य तन्नियमेन तत उत्पन्नं। तन्नियतं तत्त्वस्वभावम्वा नान्यथाऽव्यभिचारगतिसम्भवोऽतिप्रसङ्गात्। न च सर्व्वतः प्रतिपत्तिः सर्व्वस्योपजायते। कादाचित्कतयोपलब्धेः(।) तस्मादियम्प्रतिपत्तिर्नियमेन प्रतिबद्धपदार्थजनिता। प्रतिबन्धश्च

---

[1] T. ०म्परेणापि [2] दुर्दृष्टिरतदीदृशं–इति M. (मनोरथ०) [3] T. लिंगस्यैव

द्विविध एव। एकसामग्र्यधीनस्यापि तदुत्पत्तिलक्षण एव पारम्पर्येण प्रतिबन्धः। तत एवाव्यभिचारः। यतः।

स्वनिमित्तं स्वभावम्वा[1] विना नार्थस्य सम्भवः।
यच्च रूपन्तयार्दृष्टन्तदेवान्यत्र लक्षणम् ॥७१॥

यस्य च कार्यस्वभावहेतोर्लक्षणं यद् दृष्टमन्यत्रापि तदेव। न च तत्पुत्रादेस्तदस्ति न तेन सर्व्वत्रानाश्वासः। लक्षणयुक्ते हि बाधासम्भवे तल्लक्षणमेव दूषितं स्यादिति सर्वत्रानाश्वासो नान्यथेति न्यायः। न च निमित्तं अभावम्वा विना कस्यचित् सम्भवः(।) तथा शङ्कायामव्यवहार एव सर्व्वत्र स्यात्। व्यावहारिकप्रमाणप्रस्तावश्चैष नान्यः। तस्मात् सम्व्यवहारार्थिना नियमेनानुमानार्थिना भाव्यं। अनुपाये कथम्प्रवृत्तिरिति चेत्। न(।) असिद्धत्वादुपायत्वस्य विचार्यमाणे विशीर्यत इति चेत्। न(।) विचारस्याप्यनुमानात्मकत्वात्। सोयं यथा गच्छतः स एव विस्मृतः पन्था।

अनुपलब्धेस्तर्हि कः प्रतिबन्धः। स एव तादात्म्यतदुत्पत्तिलक्षणः प्रतिबन्ध[2] इति दर्शयति। तथाहि।

स्वभावे स्वनिमित्ते वा दृश्यदर्शनहेतुषु।
अन्येषु सत्स्वदृश्ये च सत्ता वा तद्वतः कथम् ॥७२॥

यत एवासौ तत्र प्रतिबद्धो अतएव तदभावान्न भवति। अन्यथान्यस्याभावे किमिति न भवेत्। अतिप्रसङ्ग एवं सति स्यात्। एवं ह्यसौ प्रतिबद्धो यदि तदभावेन भवेत्। अन्यथा प्रतिबन्धाभावात्। तस्माद् यत्रोपलब्धि(ल)क्षणप्राप्तस्य कारणस्य व्यापकस्य वाऽनुपलम्भस्तत्र तयोरभावः। यत्र च तयोरभावो न तत्र कार्यव्याप्ययोः सम्भव इत्यनुपलब्धेरप्यव्यभिचारः। एवञ्च कार्यस्वाभावानुपलम्भलक्षणं त्रिविधमप्यनुमानमस्तीति साधितं।

यस्मात्।

अप्रामाण्ये च सामान्यबुद्धेस्तल्लोप आगतः।
प्रेत्यभाववद्;अक्षैश्चेत् पर्यायेण प्रतीयते ॥७३॥
तच्च नेन्द्रियशक्त्यादावक्षबुद्धेरसम्भवात्।
अभावप्रतिपत्तौ स्याद् बुद्धिजन्मानिमित्तकं ॥७४॥

यदि हि सामान्यबुद्धेरप्रमाणता तदा परोक्षन्नाम प्रमेयन्नास्तीति प्राप्तं। परलोकवदेव। अथ न सर्वः परोक्षार्थो नास्ति पर्यायेणाक्षैः प्रतीतेः परलोके तु न पर्यायेणाक्षवृत्तिरिति तथाविध एव नास्ति। यदैव तर्हि प्रतीयते तदैवास्ति प्रागस्तीति कुतः। प्रागप्यन्येन प्रतीयते तेनास्ति। परलोकोपि प्रागन्येन न प्रतीयते स्वयम्वेति कुतः। परलोकादेरन्योपि वाऽन्येन प्रतीयत इति कुतः। तथा व्यवहारादिति चेत्। आयातमनुमानस्य प्रामाण्य। न चाक्षे योग्यतायाम्वा पर्यायेणाक्षवृत्तिः। कार्यस्वभावहेतुभावानुमानेनैव तयोरवगमात्। तदभावे च बुद्धेर्जन्म च पदार्थानामनिमित्तकमेव भवेत्। तस्मात् कार्यदर्शनेन कार्यव्यतिरेकेण च योग्यता

---

[1] स्वनिमित्तात्स्वभावाद् वा [2] T. ०इष्ट इति

चक्षुरादिकञ्चानुमीयमानमस्त्येव। न च पर्यायेण तत्राक्षव्यापारावतारः। ततः परलोकाविकमप्येवमेव। तस्मात् सामान्यमनुमानमन्तरेण न प्रतीयते। यस्मात्।

स्वलक्षणे च प्रत्यक्षमविकल्पतया विना।
विकल्पेन न सामान्यग्रहस्तस्मिंस्ततोऽनुमा ॥ ७५ ॥

सामान्यावधारणरूपा अपि प्रतिपत्तयो व्यवहारकारिण्यः। न च सामान्यमविकल्प्य गृह्यते। न च सविकल्पकम्प्रत्यक्षमविचारकत्वात्। तस्मात् सामान्यविषयमनुमानन्न प्रत्यक्षं।

यत्तर्हीदमनित्यादिभिराकारैर्वर्ण्णादिगृह्येतैतत्कथं। सामान्यरूपग्रहणमेतत्। प्रमेयनियमश्च भवतेष्यते।

प्रमेयनियमे वर्णानित्यता न प्रतीयते।
प्रमाणमन्यत्तद्बुद्धिर्विना लिङ्गेन सम्भवात् ॥ ७६ ॥

नियमो हि नाम प्रमेयस्य स्वलक्षणस्य सामान्यस्य च प्रतिनियतप्रमाणग्राह्यता। मिश्रप्रतिपत्तिश्चेयम्वर्ण्णाद्यनित्यमिति। स्वसामान्यलक्षणयोः परस्परमिश्रतया प्रतिपत्तेः। तत उभयरूपप्रतिपत्तिरन्यत् प्रमाणं प्रसक्तं। लिङ्गेन च विना सम्भवादनुमानमेतन्न भवति। सामान्यस्य च ग्रहणान्न प्रत्यक्षं। स्वलक्षणस्य च नानुमानमिति तत्प्रमाणान्तरम्विना लिङ्गे न वृत्तेः सामान्यस्य च प्रतिभासात्। विशेषदृष्टे चानुमानेन सामान्यगतिर्लिङ्गस्य सामान्येन सम्बन्धस्याप्रतीतेः। तदाह।

विशेषदृष्टे लिङ्गस्य सम्बन्धस्याप्रतीतितः।
तत्प्रमाणान्तरम्मेयबहुत्वाद् बहुतापि वा ॥ ७७ ॥
प्रमाणानामनेकस्य वृत्तेरेकत्र वा यथा।
विशेषदृष्टेरेकत्रिसङ्ख्यापोहो न वा भवेत् ॥ ७८ ॥
विषयानियमादन्यप्रमेयस्य च सम्भवात्।

अनित्यमिदम्वर्ण्णादीति न खलु किञ्चनात्र लिङ्गमस्ति। न च तत्प्रत्यक्षं सामान्यस्याप्यनित्यत्वस्य प्रतीतेः। विशेषदृष्टे च विशेषस्यैव प्रतीतिः। तस्य विशेषस्य लिङ्गस्य सामान्येन सम्बन्धाप्रतिपत्तेः। तेन तत् त्वन्मतेन प्रमाणान्तरं। न साक्षात् प्रतीतिरिति न प्रत्यक्षन्न सामान्यविषयमिति नानुमानं।

किञ्च। सामान्यविशेषोभयभेदेन प्रमेयबहुत्वात् प्रमाणबहुत्वमिति न त्रिसङ्ख्यानिरासः। अनेकस्याप्रमाणस्यैकत्र वृत्तेः नैकसङ्ख्यापोहः। यथा विशेषदृष्टेन सह प्रत्यक्षस्य वृत्तिरेकत्र स्वलक्षणे तथा सामान्येपि प्रत्यक्षस्येति। यदुक्तमेकसङ्ख्यानिरासः प्रमेयद्वयदर्शनादिति स न भवेत् प्रत्यक्षस्यैव सामान्येपि वृत्तिसम्भवात्। विषयनियमे प्रमेयान्तराभावे च द्व्येकसङ्ख्यानिरासो, न चोक्तेन न्यायेनोभयमपीति नाभिमतप्रयोजनसिद्धिः। प्रमाणसम्प्लवात् प्रमेयबहुत्वाच्च प्रमाणबहुत्वं।

ननु शक्त्यशक्तित इत्यादिना प्रमेयबहुत्वन्निवारितमेव तत्कथन्तस्योपन्यासः। सत्यम् (।) एतदपि दृश्यत इत्युपदर्श्यते। विरुद्धाव्यभिचार्युपदर्शनम्वा परेण कृतमित्यदोषः। प्रमाण-

सम्प्लवोपवर्शनन्तु युक्तमेव। तस्मात् सर्व्वः परोक्षोर्थोविशेषेण न गम्यत इत्येतस्याप्यसिद्धि-मुद्भावयति। तस्मान्न त्र्येकसङ्ख्यानिरासः। अत्रोच्यते

**योजनाद् वर्णसामान्ये नायन्दोषः प्रसज्यते ॥ ७९ ॥**

वर्णत्वं सामान्यमनित्यत्वेन योजयति अनित्यम्वर्णादीति। तेन सामान्यकरूपमेव प्रमेयं नोभयरूपमिति न दोषोयम्बिषयानि (य) मादन्यप्रमेयस्य च सम्भवादिति। सामान्यविशेषभावे हि स्यादयन्दोषो न सामान्यैकभावे। यद्यनित्यत्वम्वर्णत्वेन सामान्येनैव योजयति तद्वस्तु धर्म्मो न स्यात्। यत्र हि यो धर्म्मो युक्तः प्रतीयते तस्यैवासौ धर्मः। सामान्य-युक्तत्वे च सामान्यस्य तद्रूपं न वस्तुनः। सामान्यस्य च वस्तुत्वात् तद्धर्मोऽवस्तुधर्म एव स्यात्।

नैतदस्ति। यतः।

**नावस्तु रूपन्तस्यैव तथा सिद्धेः प्रसाधनात्[१] ।**
**अन्यत्र नान्यसिद्धिश्चेन्न तस्यैव प्रसिद्धितः ॥ ८० ॥**

यदि वस्तुधर्मो न भवति। अवस्तुतत्वेन कल्पितत्वात् सामान्यस्य। तदपि वस्तुना नित्यत्वादिकम्भवेत्। उभयमपि वस्तुरूपन्नेति चेत्। न(।) वस्तुन एव तथा प्रसिद्धेः। योहि विकल्पे प्रतिभाति वर्णत्वानित्यत्वादिकः स स्वलक्षणेपि विद्यत एव। स्वलक्षणानु-भवादेव तद्रूपविकल्पोत्पत्तेः। यदि विकल्पः स्वलक्षणेन न प्रतिबद्धस्तत्र स्वलक्षणस्याप्रति-भासनात्। तत्कथन्तस्यैव तथा प्रसिद्धिः। न पारम्पर्येण सम्बन्धात्। साक्षादप्रतिबन्धेपि पारम्पर्येण प्रतिबन्ध इति तस्याविकल्पस्याविसम्वादिता।

ननु वासनाप्रतिबन्धत्वे कथम्वस्तुप्रतिबद्धता। तद्वासनाया वस्तुप्रतिबन्धात्। कथ-मित्याह।

**यो हि भावो यथाभूतस्स तादृग्लिङ्गचेतसोः ।**
**हेतुस्तज्जा तथाभूते तस्माद् वस्तुनिलिङ्गधीः[२] ॥८१॥**

यो हि साध्यधर्मः ससाधनस्य हेतुर्व्यापको वा भवेदिति प्रतिपादितङ्कार्यव्याप्यचेतसः। कारणम्व्यापकश्च हेतुः। ततोपि चेत्। सा योत्पन्ना लिङ्गधीः सा पारम्पर्येण वस्तुप्रति-बद्धता। ततः।

**लिङ्गलिङ्गिधियोरेवम्पारम्पर्येण वस्तुनि ।**
**प्रतिबन्धात् तदाभासशून्ययोरप्यवञ्चनम् ॥ ८२ ॥**

न वस्तुप्राप्तिः प्रतिभासादेवाध्यवसायादपि वस्तुप्राप्तेः सम्भवात्। प्रवर्त्तमानो हि प्राप्नोति। प्रतिभासमात्रात्। प्रवर्त्तनञ्चाध्यवसायादपि दृष्टमन्यथा प्रतिभासादपि न प्रवर्त्तत अध्यवसायेन प्रवर्त्तितः प्रथमं अभ्यासात् पश्चात् प्रतिभासात् प्रवर्त्ततुं(?)क्षमः। तस्मात् प्रवृत्ता-वस्तित्वे प्राप्तिः। यथा च प्रतिभासमानस्यास्तिता तथा प्रतिभासमानकारणव्यापकस्यापीति (।) उभयत्रापि प्राप्तिरस्तु। न च क्वचित् प्रतिभासिनः प्राप्तिरिति प्रागेवेदम्प्रत्यपादि। यथा च प्रतिभासनादस्तीति ज्ञायते। तथा प्रतिबद्धप्रतिभासनादपि।

---

[१]. M. ( मनोरथनन्दिनो वृत्तौ )—सिद्धे प्रसाधनात् [२] लिंगिधी

यदि च प्राप्तिविषयो नास्तीति मतिः प्रतिभासमात्रमेव जगत् स्यात्। भ्रान्ताभ्रान्तविवेकानवधारणात्। नहि प्रतिभासमात्रे भ्रान्तेरविवेकः। तस्मात् परोक्षगतो भ्रान्ताभ्रान्तव्यवस्था नान्यथेति निश्चयः।

लिङ्गिलिङ्गिधियोरेवं पारम्पर्येण वस्तुनि।
प्रतिबन्धात् तदाभासशून्ययोरप्यवञ्चनम् ॥८२॥
तद्रूपाध्यवसायाच्च तयोस्तद्रूपशून्ययोः।
तद्रूपावञ्चकत्वेपि कृता भ्रान्तिव्यवस्थितिः ॥८३॥

अत्र केचि[1] दाहुः। "लिङ्गबुद्धिर्लिङ्गे प्रतिबद्धतया धूमादेर्बुद्धिर्नहि लिङ्गमिन्द्रियवत् सत्तामात्रेण गमकं। नापि स्वालम्बनविज्ञानप्रतिभासनमात्रेण। अदृष्टन्तद्रूपन्तत्सम्बन्धस्यापि प्रतिपत्तिप्रसङ्गात्। तस्मात् प्रतिबद्धतया ग्रहणं लिङ्गग्रहणं। स च प्रतिबन्धो नोभयरूपसंस्पर्शमन्तरेण ग्रहीतुं शक्यः। अन्यथा ग्रहणस्यादर्शनात्। तत्र यथा लिङ्गिग्रहणं लिङ्गविषयन्तथा लिङ्गग्रहणमपि। केवलम्प्राधान्येतरता। लिङ्गग्रहणे हि लिङ्गम्प्रधानतया लिङ्गिग्रहणे लिङ्गी प्रधानतया प्रतीयते।" तेन यदुक्तं[2] "लिङ्गि(न)स्तु न मात्रानुमानन्तस्य चाविसम्वादेन भ्रान्तते प्रस्तुते[3] तत्कोलिङ्गगतेरवसरो येन तस्या अपि विचारः कृतः। अथ साप्यनुमानात्मिका। तथा सति लिङ्गिप्रतिपत्तिरेवेति न पृथग्निर्देशः। प्रत्यक्षरूपापि लिङ्गप्रतिपत्तिर्न्न सा लिङ्गाभासशून्या (।) लिङ्ग्याभासशून्यत्वे च सत्यपि न भ्रान्तता तदविषयत्वात्। नहि स्तम्भविज्ञानं कुम्भकारशून्यतया भ्रान्तमिति तन्निरा[4]कृतं। एकविषयत्वाल्लिङ्गलिङ्गिधियोरेप्रत्यक्षत्वाच्च। अत्रोच्यते[5]।

प्रतिबद्धतया लिङ्गग्रहणं यदि लिङ्गधीः। प्रतिबन्धग्रहः साम्य[6]धर्मयोरनुमानतः ॥२६६॥
तथा सत्यनवस्था स्यात् तत्रापि प्रतिबन्धवित्। अनुमानान्तरादेव तत्रापि च तदन्तरात् ॥२६७॥
अथ प्रत्यक्षतो लिङ्गं लिङ्गत्वेन प्रतीयते। एवं सति तदाभासशून्यतास्य कथम्भवेत् ॥२६८॥

गृहीतोपि प्रत्यक्षेण तदा स्मर्यते लिङ्गत्वेन धूमादिकः। एवं सति स्मरणमप्रमाणमेव किमस्यावञ्चकत्वप्रतिपादनेन। नहि तत्तत्र प्रमाणं। प्रत्यक्षानुमानयोरेव प्रमाणत्वेनाविसम्वादसङ्गमः। अथ स्मरणमपि पारम्पर्येण प्रतिबन्धात् प्रमाणमेव। तदेव तर्हि लिङ्गिज्ञानमनुमानञ्चेति किं लिङ्गलिङ्गिनोर्भेदेन निर्देशः(।)अथ तदप्रमाणमेव गृहीतग्रहणादित्युच्यते। तथा सति प्रत्यक्षवृत्तम्प्रत्यक्षमेव तत्र प्रमाणं। तच्च तदाभासशून्यन्न भवतीति विरोधः। तस्मादन्यथो(प)पत्त्या व्याख्यायते। लिङ्गधीः स्वभावहेतोर्जाता लिङ्गिधीरेव लिङ्गलिङ्गिनोः परमार्थतो भेदाभावात्। लिङ्गिधीः कार्यहेतोः कारणविषया। तत्रभेदादसौ न लिङ्गधीः। न चात्यन्ताभ्यासादस्माद् धूमादग्निधीः स्वलक्षणग्राहिण्या धूमधियो नोदेति।

---

[1] तत्रैव—"केचिदिति धर्मोत्तरप्रभृतयः।"
[2] तत्रैव—"तेन यदुक्तं शङ्करेण तीर्थिकेन" ( नैयायिकेन ? )
[3] T. लिंगिनस्तु ज्ञानं अत्रानुमानं तस्य चाविसंवादनभ्रान्तते
[4] तत्रैव—शङ्करेण "तन्निराकृतं यदुक्तमित्यर्थः"।
[5] तत्रैव—"अवशेषः। [6] तत्रैव— "साधारणधर्मयोः"।

धूमस्य च तत्त्वेन ग्रहणमेव प्रतिबद्धता। तत्त्वञ्च प्रत्यभिज्ञानात् प्रत्यभिज्ञानञ्च तद्रूपदर्शनादनुमानमेव। तद्रूपदर्शनञ्च प्रत्यक्षमत्यन्ताभ्यासाद् व्यवहारकारणमिति नानवस्था।

तस्मात् स्वलक्षणग्रहणमेव लिङ्गप्रतिपत्तिः। य(त्) त्वग्निप्रतिबद्धधूमस्य तत्सामान्यग्रहणन्तद्रूपदर्शनादुदयमासादयदनुमानमेव लिङ्गिप्रतिपत्तिरूपमिति नान्यथा व्यपदेशः।

तस्माद् वस्तुनि बोद्धव्ये व्यापकम्व्याप्यचेतसः।
निमित्तन्तत्स्वभावो वा कारणन्तच्च तद्धियः ॥८४॥

द्विविधं हि साध्यम्वस्तु तत्प्रतिषेधश्च। वस्तुनि साध्ये व्यापकं साध्यं। यतस्तद्व्यापकम्व्याप्यचेतसो निमित्तं। तच्च व्याप्यस्य लिङ्गस्य स्वभावो कारणम्वा। तच्च व्यापकचेतसो निमित्तमिति पराम्पर्येण प्रतिबन्धसम्भवात्। प्रमाणमनुपलब्धेः कथम्प्रतिबन्ध इति दर्शयति।

## (२) अनुपलब्धिचिन्ता

प्रतिषेधस्तु सर्व्वत्र साध्यतेऽनुपलम्भतः।
सिद्धिम्प्रमाणैर्वदतामर्थादेव विपर्ययात् ॥८५॥

यत्र नाम क्वचित् प्रतिषेधसाधनन्तत्र सर्व्वत्रानुपलम्भत एव। यत्र वस्तुसाधनाय प्रमाणम्प्रवर्त्तते तत्र वस्त्वेव सिध्यति न तस्य प्रतिषेधः। अतो विपर्ययादेव प्रतिषेधसिद्धिः। तथाहि युक्तोपलम्भमनुपलभमानास्तीत्याहुः। अनुपलम्भ एव हि प्रतिषेध इति तन्मात्रानुबन्धित्वात्तादाम्यमेव प्रतिबन्ध इति।

ननु विरोधोपि नाम साक्षात् पारम्पर्येण वा प्रतिबन्ध एव ततोपि वस्तुप्रतिषेधसिद्धिरुपलभ्यते। यथा नास्ति शीतस्पर्शोऽग्नेर्नास्य रोमहर्षादिविशेषः सन्निहितदहनविशेषत्वादिति। तत्कथं साध्यतेऽनुपलम्भतः।

तत्र परिहारः। अस्त्येतत् किन्तु।

दृष्टा विरुद्धधर्मोक्तिस्तस्य तत्कारणस्य वा।
निषेधे यापि तस्यैव सा(ऽ)प्रमाणत्वसूचना ॥८६॥

विरुद्धोपि पदार्थस्तदभावङ्गमयति। न विरोधसम्बन्धादेव। नहि विरोधी प्रमातुमिष्टः। असद्रूपतयेष्ट इति चेत्। असत्त्वेनैव तर्हि प्रतिबन्धः सम्प्रधार्यो न च तेन सह विरोधः। यत्रासौ तत्रासत्त्वम्भवतीति चेत्। कुत एतत्। एवमेव प्राग् दृष्टत्वादिति चेत्। तदसत्त्वम्विरोधग्रहणकाले किमुपलम्भे वस्तुनो चेतरथा। यद्युपलम्भः कथमभावोऽथानुपलम्भः[1] तदिदमायातमनुपलम्भादेव प्रतिषेधः।

अन्यथैकस्य भावस्य सद्भावोक्त्या परस्य तत् (।)
नास्तित्वङ्केन गम्येत; विरोधाच्चेत् असावपि ॥८७॥
सिद्धः केन (।) सहस्थानादिति चेत् तत्कुतो मतं।
दृश्यस्य दर्शनाभावादिति चेत्, साऽप्रमाणता ॥८८॥

---

[1] T. भावोऽथानुपलम्भः

**एकस्य हि सद्भावे यदि परो न भवेत् । सर्वस्य भावे परस्य प्रतिषेधो भवेत् ।**

**विरोधोपि सहानवस्थानलक्षणो विनाऽनुपलब्ध्या न प्रतीयते । यद्येवम्विरोधोऽनुपलब्ध्या प्रतीयते । ततो विरोधिनो लिङ्गात् अभावगतिर्नानुपलब्धेः । अथ विरोधसाधिकानुपलब्धिः प्रागासीत् । तदनुसरणादेव विरोधिनोपि लिङ्गादभावगतिरिति सैव परमार्थतोऽभावस्य साधनी । यद्येवम् ।**

प्रतिबन्धप्रसिद्ध्यर्थमुपयोगी य ईक्षितः । साध्यसिद्धिस्ततश्चेत् स्यादनुमानङ्कथम्प्रमा ।।२६९।।
प्रत्यक्षेण हि सम्बन्धोऽनुमानस्य प्रसिद्धिभाक् । तत एव हि साध्यस्य सिद्धिरित्यप्रमाऽनुमा ।।२७०।।

**न । यत एव हि प्रत्यक्षादनुमानस्य सम्बन्धग्रहणन्तत एव साध्यस्याग्नेः सिद्धिरिति कथमनुमानमपरम्प्रमाणं ।**

**अथ परोक्षेऽग्नौ न प्रत्यक्षम्प्रवृत्तमिति तत्रानुमानं । परोक्षेपि खल्वभावे किमनुपलब्धिः प्रवृत्ता । यापि प्रवृत्ता सा नोपलब्धिलक्षणप्राप्तानुपलब्धिः । अथ स्मर्यमाणोपलब्धिलक्षणप्राप्तानुपलब्धिः । तदप्यस्य दुर्नीतम् ।**

स्मर्यमाणं यतोध्यक्षमनुमानेपि नास्ति न । अध्यक्षस्यैव तत्रापि प्रामाण्यमनुमा वृथा ।।२७१।।

**तस्मादिदमत्रार्थसत्तत्वं ।**

अभावेन हि शीतस्य वह्नेः प्रागुपलब्धिभाक् । सम्बन्धस्तेन तत्सिद्ध्या तदभावः प्रसिध्यति ।।२७२।।

**स चाभावोऽनुपलब्धिरेव । तेनानुपलब्धिरेवानुमानसिद्धा साधयत्यभावव्यवहारं यथा प्रत्यक्षसिद्धा । यतो वक्ष्यति ।**

"तस्मादनुपलम्भोयं स्वयम्प्रत्यक्षतो गत इति ।" (प्र० वा०४।२७४)

**अत्राप्यनुमानतो गत इत्यवगन्तव्यं । यदा तु रोमहर्षाभावः साध्यते । तदाग्निना शीतानुपलब्धिस्तया कारणानुपलब्ध्या रोमहर्षाभावः । तत्राग्निरूपेण स्पर्शस्योष्णात्मन एकसामग्र्यधीनतयाऽनुमानं । स च शीतभावस्वभावः (।) तस्यानुमानोपलब्धिरेव शीतानुपलब्धिस्तेन कार्यहेतुकारणानुपलब्ध्योरेकत्र प्रवृत्तत्वान्न विरोधिलिङ्गान्तरं । तस्मादनुपलब्धिरेवानुमानसिद्धाऽभावङ्गमयति । तेनानुमितानुमानमेतत् ।**

**यद्येवमनुमानेन प्रत्यक्षम्प्रसाध्यते(।) तेन च वस्तुभाव इति न वस्तुविषयम्प्रामाण्यम्भवेदनुमानस्य । तदपि यत्किञ्चिदेव । यतः । प्रत्यक्षमुपलम्भरूपमेवोपलम्भः सत्ता चोच्यत इति । तेन वस्तुविषयमनुमानं । अनुपलम्भ एवासत्तेति चेत् । भवतु को दोषः । अग्निनाऽभावः साध्यते नानुपलम्भेनेति महान् दोषः । नन्वग्निरेव शीताभाव इति स एव तेनैव च साध्यते । यावानेव देश उष्णतया व्याप्यते तावत्येव शीताभाव इति नोष्णस्पर्शव्यतिरेकी शीताभावः । स्वभावहेतुरयमिति चेत् । इष्यत एवानुपलब्धेः स्वभावहेतुता । तेन नास्त्यत्र शीतस्पर्शोऽग्नेरिति कार्यस्वभावहेतू निर्दिश्येते ।**

**तस्मात् स्वशब्देनोक्तापि साऽभावस्य प्रसाधिका ।**
**यस्या प्रमाणं साऽवाच्यो निषेधस्तेन सर्व्वथा ॥८६॥**

विरोधिनो हि वह्न्यादेर्यः स्वशब्दस्तेनोक्तापि प्रतिपादितापि सैवानुपलब्धिरन्यभाव-लक्षणा सैवानुपलब्धिरभावस्य साधिका। यस्य सा न प्रमाणन्तेन विरोधिसद्भावेनावाच्यो निषेधः। न खलु निषेधस्यान्या गतिः।

**एतेन तद्विरुद्धार्थकार्योक्तिरुपवर्णिता।**
**प्रयोगः केवलम्भिन्नः सर्वत्रार्थो न भिद्यते ॥९०॥**

प्रतिषेध्यशीतादिविरुद्धस्याग्न्यादेरर्थस्य यत्कार्यन्तत्राप्यनुमितानुमानेनानुपलब्धिरेव साधिताऽभावङ्गमयति व्यवहारतः। तथाहि।

धूमादग्निः कार्यभूतात् प्रसिद्धः शीताभावं साधयेत् पूर्व्वयुक्त्या (।)
शीताभावो ह्यन्यथा नैव सिदध्येत् पारम्पर्यादेव तत्राप्यभावः ॥२७३॥

धूमादग्निरग्नेः शीताभावरूपादुपलब्धिविपर्ययाच्छीताभावव्यवहार इति तस्मात् प्रयोगवचनविन्यासमात्रमेव विद्यते।

**विरुद्धन्तच्च सोपायमविधायापिधाय च।**
**प्रमाणोक्तिर्निषेधे या न सा न्यायानुसारिणी ॥९१॥**
**उक्त्यादेः सर्व्ववित्प्रेत्यभावादिप्रतिषेधवत्।**
**अतीन्द्रियाणामर्थानाम्विरोधस्याप्रसिद्धितः ॥९२॥**

न खलु वचनं सर्व्ववेदनविरुद्धं। न खल्वतीतेन्द्रियेण सह विरोधसिद्धिः। सम्वेदनादेव वचनम्प्रवर्त्तते कथन्तदभावं साधयेत्। सर्व्ववेदनेन विरुद्धमिति चेत्। केन विरोधग्रहणं। यदि हि वेदनोत्कर्षान्वयेऽपचयो दृश्यते वचस्विता (? स्विता)याः सर्व्वं शोभेत सर्व्ववेदने सकलवचस्विताऽभाव एव। न चैतत्। वक्तारोऽसर्व्ववेदिन उपलब्धा इति चेत्। वक्तारो मूर्खा उपलब्धा इति किन्न सर्व्वस्य मूर्खता। वक्तुः पाण्डित्यमुपलभ्यत इति चेत्। तदपि नोपलप्स्यत इति कुतः। तथाहि।

**बाध्यबाधकभावः कः स्यातां यद्युक्तिसम्विदौ[1]।**
**तादृशोऽनुपलब्धेश्चेदुच्यतां सैव साधनम् ॥९३॥**

यथाहि मूर्खस्य वचनन्तदभावेपि पाण्डित्यसमये विशेषम्वचनन्तथा यदि सर्व्ववेदनावस्थायामपि को विरोधः। नहि सर्व्वम्वेदनोत्कर्षविरोधिवचनम्। अत्यन्तोत्कर्षे विरोध्येवेति चेत्। न(।) विरोधस्याग्रहणात्। तादृशस्य वक्तुरनुपलम्भ एवेति नोत्तरं। अनुपलम्भस्य दृश्यविषयत्वेन गमकत्वात्।

**अनिश्चयकरम्प्रोक्तमीदृक्कानुपलम्भनं।**
**तत्रात्यन्तपरोक्षेषु सदसत्ताविनिश्चयौ ॥ ९४ ॥**

अत्यन्तपरोक्षस्य हि सर्व्ववित्प्रेत्यभावादेरनुपलम्भमात्रादभावनिश्चयात्।

अथापि स्यात्(।) सर्व्ववेदने सति अभ्रान्तस्य कुतो वचनसम्भवः। विवक्षा हि पूर्व्वापरपरामर्शतो भ्रान्तोपजायमाना प्रवर्त्तयति वचांसि। नैतदपि सम्यक्।

---

[1] T. गल्-ते-स्म्र-पो-रिग्-यिन्-न = (स्याद् वक्ता यदि युक्तिविद्)

स्पष्टं सर्व्वपदार्थानाम्वेदनेपि प्रवर्त्तते । विवक्षाभ्यासतस्तत्र वचसोऽसम्भवः कुतः ॥२७४॥

न खलु भावनाबलावलम्बिस्पष्टतरपरिमितेतरपदार्थदर्शनसमकालाभ्यासतो विवक्षा न भवति । विवक्षाभावेपि पूर्व्वविधतो वचनं । नहि वचनानां सन्निहितैव विवक्षा कारणं । पूर्व्वविधतोन्यमनसोपि पदवाक्यविविक्तपाठदर्शनात् । अनेकपूर्व्वाभ्यस्तक्रियाप्रक्रमदर्शनाच्च । अनेन पूर्व्वापरपर्यालोचनमन्तरेणापि सन्निहितप्रतिपत्तृप्रतिवचनङ्कथमिति प्रत्युक्तं ।

शत्रुसन्निधिमात्रेण[1] प्रवर्त्तन्तेऽविकल्पतः । प्रगे च तन्निराकारिप्रक्रियाः कायनिर्मिताः ॥२७५॥

यथा च पूर्व्वाभ्यासतो झटिति प्रबोधितस्यारिणा प्रहारविदानेनानुरूप एव प्रक्रमः शस्त्रोद्धरणादिकस्तथा सर्व्ववेदिनोपि सकलाः क्रिया इत्यविरुद्धं ।

तस्माद् विरुद्धादेवाभावनिश्चयः प्रतियोगिनः ।

**भिन्नाऽभिन्नोपि वा धर्मः स विरुद्धः प्रसज्यते[2] ।**
**यथाग्निर्हिमे साध्ये सत्ता वा जन्मबाधनी ॥ ६५ ॥**

शीतोष्णस्पर्शयोः परस्परम्भेदात् सहानवस्थानलक्षणो विरोधः । सत्ताजन्मनोश्च परस्परपरिहारलक्षण इत्यभेदः । न खलु जन्म सत्ताव्यतिरेकेण विरोधश्च । नहि सदेव जायते । सतो हि सर्व्वनिरासंश (?शंस)स्य को जन्मार्थः । कथमव्यतिरिक्तयोः परस्परम्विरोधः । परेणाव्यतिरेकेणाभ्युपगमादेवमुच्यते ।

ननु कोयम्विरोधो नाम । निवर्त्त्यनिवर्त्तकभावः । तथाहि ।

अविकलकारणमेकं यदपरभावे यदा भवेन्न भवेत् ।
भवति विरोधस्स तयोः शीतहुताशात्मनोर्दृष्टः ॥२७६॥

ननु यद्यन्यस्याभावोऽन्येन क्रियते । तदयुक्तमभावस्य कार्यत्वाभावात् । अथ न क्रियते तदा स्वयमेव विनश्यतः कः परेण विरोधः । न च क्षणस्य विनाशोऽन्येन क्रियते । उत्पन्नानुत्पन्नावस्थयोरयोगात् । अनुत्पन्नमसत् कस्य विरोधो विनाशो वा । उत्पन्नं स्वकाले विनाशयितुमशक्यं क्षणस्याविकार्यत्वात् । अन्यकाले तु एव नास्ति कस्य विनाशः । सन्ततेर्विनाश इति चेत् । न । तद्व्यतिरेकेण सन्तत्यभावात् ।

ननु सन्ततेस्स एवं विनाशो य उत्तरक्षणप्रबन्धविघातः । तदप्यसत् ।

यदि कारणसद्भावः कथम्व्याघातकृत् परः । अथ कारणसद्भावः कथम्व्यघातकृत् परः ॥२७७॥

यद्युत्तरक्षणोत्पत्तौ कारणमस्ति कथम्व्याघातः । अथ न कारणन्दैवरक्ताः किंशुकाः । अथ कारणवैकल्यमेव विरोधिना क्रियते । तदप्यसत् । यतः ।

असतो यदि वैकल्यङ्किंशुके दैवरक्तता । सतश्च स्वेन रूपेण वैकल्यङ्किं करिष्यति ॥२७८॥
यदि तत्रास्त्यवैकल्यकारणन्तदसत् कथं । अथावैकल्यकृन्नास्ति विकलः स्वयमेव सः ॥२७९॥

कारणस्यापि हि वैकल्यमवैकल्यकारणसद्भावे न शक्यमभावे तत्कारणस्य स्वयमेव भवति वैकल्यन्तत्र किम्विरोधी करिष्यति । अत्रपरिहारः ।

शीताच्छीतान्तरोत्पत्तिरनग्निसहकारिणः । सहकारिणमासाद्य तदशीतस्य कारणम् ॥२८०॥

---

[1] T. चोम्(?=मात्र) [2]. M. प्रयुज्यते

सन्निवेशीयमानवह्नसहकारी मन्दतरतमादिशीतस्पर्शजनको हि पूर्वकः शीतस्पर्शो यावच्छीतान्तरं शीतस्पर्शस्याजनकम्भवति। तस्य स्वयमेव निवृत्तेरपरस्य च कारणाभावेनानुत्पत्तिरिति सहकारित्वेन विगुणशीतकारणजननेन निवर्त्तको वह्निः शीतस्येति व्यपदिश्यते। तत्कृता तस्य विकलकारणोत्पत्तिरिति ततोऽनुत्पत्तिरेव। तस्य प्रागभावलक्षणा निवृत्तिरिति व्यपदिश्यते। उत्पत्तौ हि कारणानि व्याप्रियन्ते न निवृत्तौ। अथवा शीतस्य स्वहेतुनियतः स स्वभावो येनाग्निसन्निधाने शीतक्षणान्तरं स्वकार्यन्नोत्पादयति। प्रतिनियता हि भावानां शक्तयः। एकत्र सन्निधानं विरुद्धयोः कथमिति चेत्। एवमेव विरोधोऽन्यथाऽयोगात्। न च क्षणयोर्विरोधोपि तु प्रबन्धयोः(।) दृश्यते चैवमुष्णमनुभवतोपि नाद्यापि शीतमपैतीति सम्वेदनं। तथा न स्पष्टान्धकारमपैतीति। अतिपरिस्फुटालोकसम्भवे तस्मिन्नेव क्षणेऽपैतीति चेत्। न(।) तत्रापि तत्कारणसहितस्यान्धकारान्तरजननसामर्थ्यादालोक एवोत्पत्तिमान्नान्धकारः। स एव नष्ट इति चेत्। न। तस्य स्वरूपेणोत्पन्नत्वात्।

येन स्वभावेनोत्पत्तिर्न ते नैव विनश्यति। येनापि तस्यानुत्पत्तिस्तथापि न विनश्यति ।।२८१।।

तस्मान्न स एव विनष्टः।

नन्वदर्शनमेव विनाशः स एव च विनाश(ा)वस्थायामप्रतीतेः[1] कथं स इति प्रतीतिः। यदा प्रतीयते न तदा विनष्टः(।) यदापि विनष्टस्तदापि न प्रतीयते। तेनैवासौ विनष्टो येन न प्रतीयते। अन्यथा प्रतीयमाने को विनाशार्थः। यदि नोपलभ्यमानो विनष्टः। न प्रदेशे घटोपलब्धिरिति सोपि नष्टो भवेत्। प्राग् दृष्टो नोपलभ्यते यः स विनष्ट इति चेत्। सोपि प्राग्दृष्ट एव। यत्र दृष्टस्तत्र तदैव नोपलभ्यमानो विनष्टस्तदैवोपलभ्यते तदैव नोपलभ्यत इति व्याहतं। कालान्तरे नोपलभ्यतेऽनन्तर इति चेत्। देशान्तरेऽनन्तरेऽनुपलभ्यमानः कथन्न नष्टः।

कालान्तरे न नष्टश्चेत् नष्टो देशान्तरे न किं। न चेद् देशान्तरव्याप्तिर्ननु कालान्तरस्य किं।।२८२।।

यदि देशान्तरव्यापी न सम्भवत्येव कश्चित्। तेन स एव न नष्टः कालान्तरव्याप्यपि नैव सम्भवति कथं सोपि नष्टः।

ननु देशान्तरेऽनुपलभ्यमानेपि देशान्तर उपलभ्यमानः कथम्विनष्टः। देशान्तरवदेव तर्हि कालान्तरेप्युपलभ्यमानः कथम्विनष्टः। कालान्तरेऽनुपलब्धिरिति चेत्। समानमेतदुभयत्रापि। तस्माद्(।)

यो यथा दृश्यते भावः स तथैवान्यथा नहि। नीलन्नीलतया दृष्टन्न सितत्वेन विद्यते।।२८३।।

तस्मान्न स एव विनष्टोऽपि तु परो नोत्पन्नः कारणाभावात्। तदनुपलब्धौ स नष्ट इत्यभिमानमात्रकं। तेनैवम्भूते विषये सहानवस्थानलक्षणविरोधव्यवस्था। परमार्थतः कारणभावविशेष एव विरोधः। परस्परपरिहारस्थितलक्षणो विरोध एवमेव। यः क्षणिकञ्जनयति स नित्यस्वभावञ्जनयितुमसमर्थः। तेन नित्यत्वस्यानुत्पत्तिरेव। यथा चानित्यत्वमपि(?) तन्नित्यत्वेन[2] तथा नीलत्वादयोपि परस्परमिति नानयोर्विशेषः।

---

[1] T. पश्चात् न दृश्यते तेन स एव विनष्टः। न ख०

[2] T. (यथा चानित्यत्वं) त्तग्-प-दङ-म-ऽद्रेस्-प (=अमिश्रितं) नित्यत्वेन

(नानयोः परमार्थतः परस्परं विरोधयोर्व्विशेषः) । ततः परस्परम्विलक्षणत्वमेव विरोधः कारणवशात् । स च पदार्थस्वरूपमेवान्यथा स्वरूपाभावात् । सा च तयोः परस्वरूपविलक्षणोपलब्धिरन्यापेक्षयाऽनुपलब्धिरेवेति सर्व्वोऽनुपलम्भत एवाभावव्यवहार इति ।

"प्रयोग: केवलम्भिन्नः सर्व्वत्रार्थो न भिद्यते" (प्र. वा. २।९०)

इति युक्तमुक्तं । अतीन्द्रियाणाञ्च नायम्विरोध इति नाभावसाधिका विरुद्धोपलब्धिः । नाप्यनुप(ल)ब्धिमात्रं । नोपलभ्यत इत्येतावता नास्तीति न भवति । यस्य हि दर्श(न)ञ्ज्ञेयसत्ताम्व्याप्नोति स एवम्ब्रुवाणः शोभेत । तदापि स एव सर्व्वज्ञ इत्यप्रतिक्षेपः सर्वविदः नापि परलोकादेः । सर्व्वदर्शिना नोपलभ्यत इत्यत्र प्रमाणाभावात् । विपर्यये च प्रमाणमुक्तं । तस्मात् ।

यथा वस्त्वेव वस्तूनां साधने साधनम्मतं ।
तथा वस्त्वेव वस्तूनां स्वनिवृत्तौ निवर्त्तकं ॥९६॥

यथा प्रतिबन्धतो वस्त्वेव वस्तुनः साधनं । यथाकथञ्चिन्न वस्तु वस्तुनः साधकमप्रतिबद्धमेव । तथा वस्त्वेव स्वनिवृत्तौ निवर्तकम्वस्तुनः । नहि प्रतिबन्धमन्तरेण वस्तुनिवृत्तौ वस्त्वपरन्निवर्त्तते । यथा कार्यङ्कारणं साधयति व्यापकञ्च व्याप्यन्तथाकारणाभावः कार्यस्याभावम्व्यापकाभावश्च व्याप्याभावस्येति । अन्यथा स एव प्रतिबन्धो न स्यात । अयमपि प्रतिबन्धस्य भावो यावन्वयव्यतिरेकौ नान्यः प्रतिबन्ध इति ।

एतेन कल्पनान्यस्तो यत्र क्वचन सम्भवाद् ।
धर्मः पक्षसपक्षान्यतरत्वादिरपोदितः ॥९७॥

न हि पक्षासपक्षान्यतरत्वन्नित्यानित्ययोरेकत्रापि प्रतिबद्धं । इच्छाकृतो हि पक्षस्तदनुसारेण यः सपक्षः सोपि तथैव । तत इच्छामात्रप्रतिबद्धत्वान्न वस्तु गमयति । न ह्यन्यप्रतिबद्धत्वमन्यङ्गमयत्यतिप्रसङ्गात् । नापि व्यावर्त्तते कुतश्चित् येन तदभावङ्गमयेत् । तस्यापि पक्षत्वमिच्छाकृतमस्त्येव । तस्मात् सपक्षान्यतरत्वमगमकं । तथाऽविपक्षत्वादिकञ्च ।

तस्मात् प्रतिबन्धादेव विधिनिषेधप्रसिद्धिः ।

तत्रापि व्यापको धर्मो निवृत्तेर्गमको मतः ।
व्याप्यस्य स्वनिवृत्तिश्चेत् परिच्छिन्ना कथञ्चन ॥९८॥

ननु स्वभावानुपलम्भोपि गमक एव । नैतदस्ति । न तत्र परमार्थतो गम्यगमकभावः । अभाव एवासौ य उपलब्धिलक्षणप्राप्तस्यानुपलम्भः । ततस्तेन सिद्धेन व्याप्यस्याभावसाधनं ।

यदप्रमाणताऽभावे लिङ्गन्तस्यैव कथ्यते ।
तदत्यन्तविमूढार्थम् ; आगोपालमसम्वृतेः ॥९९॥

अयमेवाभावः स्वभावानुपलम्भो नाम । आगोपालाङ्गनाप्रसिद्धमेतत् । सां ख्य स्तु शास्त्रदृष्ट्या व्यामूढः प्रबोध्यते । एतावन्मात्रनिमित्तकोयमन्यत्राप्यभावव्यवहारः । अन्यथा सुखादीनामात्मनाञ्च न भेदसिद्धिः । शास्त्रादेव भेदसिद्धिरिति चेत् । न(।)प्रामाणिकत्वाद्-

भेदस्य। शास्त्रस्यापि च परस्परन्न भेदः स्यात् परस्परविविक्तोपलब्धिमन्तरेण।[1] सैव च विविक्तोपलब्धि[2]रन्यस्यानुपलब्धिः (।) व्यक्ताव्यक्तयोश्च भेदो नानुपलब्धिमन्तरेण सिध्यति।

एतावन्निश्चयफलमभावेऽनुपलम्भनं।
तच्च हेतौ स्वभावे वाऽदृश्ये दृश्यतया मते ॥१००॥

त्रिविध एवानुपलम्भो हेतोर्व्यापकस्य स्वभावस्य चेति। तस्य च हेत्वादेरुपलब्धिलक्षण-प्राप्तस्यानुपलम्भो गमको नान्यस्य नान्यथा। तस्मात् कार्यस्वभावानुपलब्धिजनितं लिङ्गिज्ञानं साध्यप्रतिपादकमविसम्वादि। ततस्तेन वस्त्वेव तथासिद्धमिति नावस्तुधर्मः।

नन्वनित्योपम्वर्ण्णं इति स्वलक्षणयोजनाऽनित्यत्वस्य। तत्कथं योजनाद् वर्णसामान्य इत्यादि। नैतदस्ति।

अनुमानादनित्यादेर्ग्रहणेऽयङ्क्रमो मतः।
प्रामाण्यमेव नान्यत्र गृहीतग्रहणान्मतं ॥१०१॥

स्वसामान्यलक्षणाभ्यां ह्यव्यपदेश्यवर्णत्वाभ्यां वर्णादिगृहीत्वाऽनित्यतया चानित्यम्व-र्णादीति मनसा संधत्ते (।) यदुक्तमाचार्येण (।) तत्रायङ्क्रमो वर्णितो "योजनाद् वर्णसामान्य" (प्र०वा०२।७९) इत्यादिना। अनुमानेन वर्णत्वसामान्येऽनित्यता प्रतिपत्तौ प्रमाणान्तरं। तत्सामान्यन्धर्मि केन प्रतिपन्नं। अनुमानेन प्रतिपत्तौ अपरस्तत्रापि धर्मीत्यनवस्था स्यात्। यदा चालिङ्गज्ञानम्प्रत्यक्षोत्तरकालभावि तदा प्रमाणान्तरमेव। स्वलक्षणेन योजनात्। उभयत्रापि परिहारः। प्रामाण्यमेव तत्र नास्ति। उभयत्रापि प्रत्यक्षत एव सिद्धत्वात्। विकल्पस्य सामान्यग्राहिणो गृहीतग्रहणत्वात्। कथमनित्यत्वम्प्रत्यक्षसिद्धं। यतः।

नान्यास्यानित्यताभावात् पूर्व्वं सिद्धः स चेन्द्रियात्।
नानेकरूपो वाच्योऽसौ; वाच्यो धर्मो विकल्पजः ॥१०२॥

न खल्वनित्यता वर्ण्णत्वादि चान्यभावस्वरूपात्। अभावस्वरूपमेव तत्तादृशं। तदेव विकल्पस्य तद्रूपग्रहणाशक्तेः सामान्यरूपम्भवति। ग्रहणव्यापार एव न तु सामान्यन्तत्। नहि नीलमेतदिति प्रत्यक्षप्रतिभासमानरूपादपरमिदन्नीलमिति विकल्पे प्रतिभाति तदेव तु तथा व्यवह्रियते। अथ यथाभूतन्तन्नीलन्तथाभूतमेतदिति सामान्यम्पूर्व्वापरप्रत्यया भ्यामागृहीतमेव गृह्यते। तदप्ययुक्तं। नहि पूर्व्वापररूपव्यतिरेकेणापरं सामान्यमुप-लभ्यते। तदेव तु तेन व्यवह्रियमाणं सामान्यं। व्यवहारस्य च तदेव स्वलक्षणमाश्रयः।

ननु सामान्यानामनित्यत्वादीनाम्परस्परन्तद्वतश्च भेदो नानात्वं। अत्रोच्यते। "नानेकरूपो वाच्योसौ" स्वलक्षणात्मा विकल्पमात्रस्यानादिवासनासामर्थ्याद् भेदः। विक-ल्पस्य हि व्यावृत्तिभेदादन्वयव्यतिरेककल्पनया भेदाध्यारोपवृत्तत्वात्।

सामान्याश्रयमसिद्धौ सामान्यं सिद्धमेव तत्।
तदसिद्धौ तथास्यैव ह्यनुमानस्य सिद्धये[3] ॥१०३॥

---

[1] T. परस्परभेदोपल०
[2] T. सैव च भेदोप०
[3] ह्यनुमानं प्रवर्त्तते

व्यवहारमात्रकं हि सामान्य[1] व्यहारविषयस्य च प्रसिद्धौ व्यवहारो नियमेन सामान्याधिकरण्येनान्यथा वा[2] प्रसिध्यति। व्यवहाराप्रसिद्धौ तु निमित्तप्रदर्शनेन स व्यवहारो विस्मृतव्यवहारनिमित्तस्य निमित्तत्वस्मरणेन स्मरणविषयभावमुपनीयते[3]। तस्मादनुमानम्व्यवहार मात्रकमेव साधयति नापरं।

ननु कार्यहेतोरनुमानाद् वस्त्वेवासिद्धमग्न्यादिकं साध्यते न व्यवहारः। तदप्यसत्।

तत्रापि ह्यनुमानेन यदि वस्तु प्रसाध्यते। सर्व्वाकारप्रसिद्धौ स्यान्न तत्रैव प्रमान्तरम् ॥२८४॥

यद्यनुमानादग्न्यादिवस्तु प्रसिध्यति तदा तत्र कीदृशोऽग्नेरयमित्यवान्तरभेदजि घृक्षायां प्रमाणान्तरमध्यक्षादिकन्न प्रवर्त्तते। तस्य प्रथमानुमानत एव सर्व्वाकारप्रसिद्धेः। प्राग् (?) सम्भवोऽसम्भवः प्रमाणविरोधश्चेति। कारणात् योग्यात् कार्यमुत्पत्तिमदिति सम्भवः। कारणाभावे कार्यानुत्पत्तिरित्यसम्भवः। प्रमाणविरोधोपि शीतोऽग्नेरिति। तत्राध्यक्षेण सर्व्वाऽकारग्रहणमिति सम्भवः। अनुमानेनासम्भवः। प्रमाणविरोधश्चेति। प्रमाणान्तर-प्रवृत्तेः। तदेतत् तमोविजृम्भितं। यतः।

असम्भवे विरोधे च वस्तुनो ग्रहणञ्च कुतः। ग्रहणे वस्तुनः प्राप्तं द्वयमेतदयुक्तिमत् ॥२८५॥

यदि तदव्यतिरिक्ताकारपरित्यागोऽसम्भवात् सर्व्वाकारग्रहणस्य प्रमाणान्तरप्रवृत्त-विरोधाच्च तदा वस्तुग्रहणमपि नास्त्येव। कथं हि तद्ग्रहणे तदव्यतिरिक्तापरिग्रहः। न खलु तदेव गृहीतमगृहीतञ्च युक्तिमत्। तथा ज्ञानमपि तद्ग्राहि तदग्राहि चेत्येषोप्यसम्भवस्य।

अथापि स्यात्।

सर्व्वाकारग्रहे हेतुर्न लिङ्गम्व्यभिचारतः। सामान्याव्यभिचारित्वाद् विशेषस्याप्रसिद्धितः ॥२८६॥

लिङ्गं हि सकलव्यक्तिसाधारणतया परिगृहीतमनैकान्तिकम्प्रतिनियतव्यक्तौ। यद्येवम्।

विशेषग्रहणन्नास्ति लिङ्गसामर्थ्यसम्भवि। अनैकान्तिकता हेतोरिति वस्तुग्रहः कथम् ॥२८७॥

न ज्ञायते कोत्र वह्निरिति वह्निमात्रमेव प्रतीयते। कोप्यत्र वह्निरिति पूर्व्वानेकवह्नि-दर्शनानुसारेण प्रतीतिरेवेयञ्च केवला न वस्तुसंस्पर्शः। प्रत्यक्षेण वस्तुसंस्पर्शे किम्भेदसन्देहः सम्भवी।

ननु सन्देहे कथम्प्राप्तिः। प्राप्तिरपि सन्देहानुरूपैव। कदाचित्कस्यचिदग्नेः प्राप्तेः। तेन कार्यहेतावपि व्यवहार एव केवलन्न वस्तुसाधनं।

ननु स्वभावहेतौ वस्तु दृष्टमिति प्राप्यते (।) कार्यहेतौ तु कथमदृष्टस्य प्राप्तिः।

न दृष्ट इत्येवार्थस्य प्राप्तिरस्तित्वतः सदा। तस्य वस्तुनिवृत्तिस्तु भ्रान्तेरपि तदर्थिनां ॥२८८॥

न खलु केशादिषु दर्शनमस्ति।[4] तथापि तदर्थतया भवत्येव वृत्तिः। यत्रास्ति तत्र प्राप्तिरन्यत्र नेति निर्ण्णयः। न च स्वभावहेतौ प्रत्यक्षे कार्यहेतौ च वस्तु गृह्यते। अगृही-

---

[1] T. व्यव० सामान्यं—न दृश्यते [2] T. सामानाधिकरण्येव वा

[3] T. स्मरणेन तथा विषयाभावः पदार्थमुपनीयते, इतोग्रेऽनेकाः पंक्तयो न भोटभाषान्तरे

[4] इतः प्राक्तनाः पंक्तयो न भोटभाषायाम्

तस्यैव सर्व्वत्र प्राप्तेः। भावि हि वस्तु प्राप्यं। न च स्वरूपङ्कथन्तस्य ग्रहणं। भाविरूपेणैव गृह्यत इति चेत्। न (।) तथाऽप्रतीतेः। अथापि भाविरूपेण प्रतीयते। तथापि तदन्यथाप्रतीतमन्यथोत्पत्तिमन्न स्यात्। सामान्यस्य प्रतीतिरिति चेत्। सामान्यस्य प्रतीतौ विशेषस्य कथम्प्राप्तिः। स्थितत्वाच्चेत्। नहि सामान्यं (विशेष) वस्त्वन्तरेण भवति। धूमादिकमेव तर्हि लिङ्गम्वस्त्वन्तरेण न भवतीति तत एवास्तित्वमिति किं सामान्येनासामान्यप्रतीतिमन्तरेण कथम्प्रवर्त्तते। लिङ्गप्रतीतावेव प्रवर्त्तिष्यते। अन्य प्रतीतौ कथमन्यत्र प्रवृत्तिः। सामान्यमप्यन्यदेवेति समानो दोषः। नैकान्तेनान्यत्सामान्यं। यद्येवं।

सामान्यग्रहणेऽर्थस्य तदेव ग्रहणम्भवेत्। तथा सति न संदेहो गृहीते स कथम्भवेत् ॥२८९॥

सामान्यरूपेण ग्रहणन्न विशेषरूपेण (इति) चेत्। विशेषरूपे कथम्प्रवर्त्तते। तदपि गृहीतमेवेति चेत्। किमर्थम्प्रवर्त्तते। प्रप्त्यर्थमिति चेत्। ननु सापि प्राप्तिः स्वरूपप्रतिपत्तिरेव सापि यदि जाता किमर्थम्प्रवर्त्तते। केनचिद्रूपेण प्रतिपत्तिः केनचिन्नेति चेत्। येन रूपेण प्रतीतिस्तेन न प्रवर्त्तते व्यर्थत्वात्। येन च न (।) तेनापि नाशक्तेः। न च प्रतिपन्ने सन्देहः। नाप्यप्रतिपन्ने। उभयरूपसंस्पर्शरूपत्वात् सन्देहस्य। सामान्यविशेषयोरेकरूपत्वादप्रतिपन्नेपि विशेषे प्रवर्त्तत इति चेत्। न (।) अविषयीकृतेऽयोगात्। न च प्रतिपन्नेनाप्रतिपन्नस्यैकत्वमिति प्रतिपादितं। प्रतिपन्नैकत्वम्प्रत्येति नाप्रतियन्। अथापि कालान्तरे प्रत्येति। कालान्तरे न प्रत्यक्षन्नानुमानमिति प्रतिपादितं।

ननु यदि वस्त्वनित्यत्वादेकङ्गृहीतमेव सर्व्वात्मना कथन्तस्यानुमेयत्वं। व्यवह्रियमाणतया चेत्। कस्मात् स एव निश्चयो न भवति व्यवहारात्मा। नेदमुत्तरं। यतः।

क्वचित्तदपरिज्ञानं सदृशापरसम्भवात्।
भ्रान्तेरपश्यतो भेदम्मायागोलकभेदवत् ॥१०४॥

न खलु मायागोलके भेदस्य न प्रतीतिः। तथापि सदृशत्वात् तदन्तरेण स एवायमिति प्रतीतेर्न्न भेदव्यवहारः।

ननु यद्यपि स एवायमिति प्रतीतिर्भ्रान्ता, दर्शनन्तु पुनरभ्रान्तमेव कथन्न भेदप्रतीतिः। अथ तिरस्कृता सती प्रतीतिरप्यप्रतीतिरेव कार्यतः। न तिरस्करणन्नामास्ति स्वरूपसम्वेदनयोर्वेदनयोः। परस्परपरिहारेणावस्थानाद् द्वयोर्व्वा परस्परन्तिरस्करणमिति प्राप्तं।

अन्योन्यपरिहारेण व्यवस्थिता चेत् तिरस्क्रिया।
अन्योन्यपरिहारस्य समानत्वन्द्वयोरपि ॥२९०॥

यथैव विकल्पः स्वरूपसम्वेदनात्माऽनुभवतो भिन्न इत्यनुभवस्य तिरस्कारकारी। तथानुभवोपि विकल्पस्य स्यात्। अथैकत्वे समासक्तचेतनस्य भेदे बुद्धिरेव नोपजायते। तथा सत्यनुभव एव नास्तीति कस्तस्य तिरस्कारार्थः। अत्रोच्यते।

भिन्नन्तत्पूर्व्वकम्वस्तु न पश्यति विनाशतः। नित्यत्वाध्यवसायाच्च नित्यमेवेति मन्यते ॥२९१॥

पूर्व्वकम्वस्तुदर्शनञ्च व्यतीतं तदिदानीम्व्यवहर्त्तव्यमेव केवलं। व्यवहारश्च नित्यतया। ततः कथन्तेनातीतेन दर्शनेनास्य तिरस्कारः विपरीताध्यवसायस्तु तदानीमस्ति। ततः] स एव व्यवहारयति लोकं। ततः स एव तस्य तिरस्कारो यस्तदनुरूपव्यवहाराभावः परस्पर-

भेदेनानुपलक्षणात् । ततो मायागोलकस्येव द्वितीयादिक्षणस्य भेदेनानुपलक्षणत्वात् स एवायमिति व्यवहारः ।

तथा ह्यतिक्रमाबालमसंश्लिष्टोत्तरोदयं ।
पश्यन् परिच्छिनत्त्येव दीपादिन्नाशिनञ्जनः[1] ॥१०५॥

ननु माया गोलकादौ भेदः परिगृह्यत एव निरूपणतो निरूपणैर्न त्वेवं क्षणिकता । तदप्यसत् । तथाहि । अतादवस्थ्यम्विनाशोऽनित्यतेति च व्यपदिश्यते । न च प्रदीपादीनान्ता-दवस्थ्यमपि तु परापरतैलोपादानजन्यमाना परापरैव प्रदीपज्वाला केवलन्तु सादृश्यात् समान-सामग्रीतो वा स एवायमिति व्यवहारः ।

नन्वेकदैव तैलजनित एक एवासौ प्रदीपज्वालावितानः । नैतदपि सम्यक् । यतः ।

यदि प्रथमसम्पातमात्रादुत्पन्न एव सः । कालान्तरस्थायितया वृथा तैलाद्यतः परम् ॥२९२॥

न खलु प्रथमतैलादिसामग्रीसम्पातमात्रतः सकलकाल(कला)कलापव्यापिनी प्रदीपादावुत्पत्तिमति ततः परं स्थालभूतलतैलानलजालसमवधानङ्[2] कथञ्चिदर्थम्पुष्णाति । निष्पत्तेरपराधीनस्वभावत्वात् । अथ निष्पन्नस्यापि कालान्तरव्यापिता तैलाद्यनुवर्त्तमानस्यैव नान्यथेति चेत् । न (।) कालान्तरस्थायितयैवोत्पत्तेः । अकालान्तरस्थायिनस्तु पश्चात् तैलादिसामग्र्या न किञ्चित् कर्त्तुं शक्यमिति व्यर्थता स्यात् । अन्यस्योत्पादने सैवानित्यता । तथा च यद्यसावुत्पन्नः सर्व्वात्मना गृह्यते । चक्षुरादिना सर्व्वात्मना तस्य ग्रहणमिति व्यर्थतैव चक्षुराद्यनुवर्त्तनस्य (।) अथापरापरदर्शनेन कालान्तरस्थायिता ग्रहणेन वा । तथा सति परा-परदर्शनानां विच्छेदादिकेनापि न कालान्तरस्थानग्रहः । ग्रहणस्य तु कालान्तरस्थानवत्त्वे सकृदेव तथा ग्रहणमिति तदेव चक्षुरनुवर्त्तनं वृथेति प्राप्तं । तस्माद् दर्शनस्य न पूर्व्वापर-स्वरूपग्रहणमीषदपीति क्षणमात्रकमेव प्रतिभासते ।

अथापि स्यात् (।) स एव पूर्व्वापररहितो वस्तुस्वभाव आयतो भविष्यति । तदसत् ।

कालदैर्घ्यसकृद्दृष्टौ स्याच्चेत् सर्व्वस्तथा भवेत् । दर्शनस्यानुवृत्त्यैव कालदैर्घ्यम्प्रतीयते ॥२९३॥

यथा यथा दर्शनमपरापरम्प्रबन्धेनोपजायते तथा तथा दीर्घकालताम्प्रत्येति नान्यथा । न च सकृदेव प्रतिपत्तुङ् काला(दि)दीर्घतया दीर्घं । तस्माद् दर्शनङ् क्षणिकतामेव प्रत्येति । यदि क्षणिकतैव प्रत्यक्षेण परिच्छिद्यते स्वभावभूता, कथम्परिच्छिद्यमानतायामपि व्यामोहः । अत्रेवमुच्यते ।

भावस्वभावभूतायामपि शक्तौ फलेऽदृशः ।
अनानन्तर्यतो मोहो विनिश्चेतुरपाटवात् ॥१०६॥

यथा खलु शक्तिः परिच्छिन्नापि न निश्चीयतेऽनन्तरङ् कार्यमदृष्टवता ।

तस्यैव विनिवृत्त्यर्थमनुमानोपवर्णनं ।
व्यवस्यन्तीक्षणादेव सर्व्वाकारान् महाधियः ॥१०७॥

दर्शनेपि सर्व्वाकारतया भावस्य व्यामोहोऽभ्यासवर्जितस्य । ततो न निश्चयः ।

---

[1] M. दीपादि नाशिनं०

[2] T. ततः परं गोलकतूलतैलादि०

ततो व्यामोहव्यावर्त्तनायानुमानप्रवृत्तिमत्। येषान्तु पुनरभ्यासपाटवादयो निश्चयस्य हेतवः सन्ति ते महामतितमत्र(शक्तः)यः[1] अध्यवसायादर्शनमात्रकादेव। तस्मात् सामान्य-माश्रयसिद्धौ सामान्यं सिद्धमेव यत्र न व्यामोहः। यत्र तु व्यामोहोस्ति तत्रानुमानं

कथन्तर्हि वस्तुन एकत्वात् तदनुसारिभिर्विकल्पैरपि नानाधर्मता व्यवस्थाप्यते। नहि नीलानुभवानुसारी विकल्पः पीताध्यवसायस्वभावः। अत्रोत्तरं।

**व्यावृत्ते(:) सर्वतस्तस्मिन् व्यावृत्तिविनिबन्धनाः।**
**बुद्धयोर्थे प्रवर्त्तन्तेऽभिन्ने भिन्नाश्रया इव ॥१०८॥**
**यथाचोदनमाख्याश्च सोऽसति भ्रान्तिकारणे।**
**प्रतिभाः प्रतिसन्धत्ते स्वानुरूपाः स्वभावतः ॥१०९॥**

सजातीयवीजातीयव्यावृत्तिभाजो हि जगति जन्मभूतः। ते यतो यतो व्यावर्त्तन्ते ततस्ततो भेदमवधिभेदोपकल्पितं[2] तन्तमुपादानमादाय नानाधर्माणः प्रतीयन्ते। यदि सर्व्वतो व्यावृत्तिमन्तो भावाः कथमेकयैव हेलया[3] सकलव्यावृत्यनिश्चयः। भ्रान्तिकारण-सद्भावादिति ब्रूमः। पूर्व्ववृष्टस्य विस्मरणात्। नहि पूर्व्ववृष्टस्य तथैव विषयीकरणे व्यावृत्त्यनिश्चयः। तथाहि।

निश्चयो ह्यनुभूतस्य तथैव स्मरणोदयः। विपर्ययोन्यथा दाढर्ये सन्देहश्चलने द्वयोः ॥२९४॥

नानुभूतस्य तथैव स्मरणनिश्चयाभावः। अयमेव निश्चयो यत्तथैव स्मरणं। अभ्यासतश्च तथैव स्मरणात्। तस्मादभ्यासवतामीक्षणान्तरमेव निश्चयः। अन्यथा स्मरणनिवारणायानुमानमिति स्थितमेतत्। अपरः प्राह।

**सिद्धोऽप्यथवा ध्वंसो लिङ्गादनुपलम्भनात्।**

उदयव्ययानुषङ्गिणो हि सर्वभावाः। उदयः प्रत्यक्षविधिसाधकानुमानसाध्यः व्ययश्चा-भावः। सोऽनुपलब्धिसाध्यः (।) यावान् प्रतिषेधः सर्वोऽनपलब्धिसाध्य इति। नापरः प्रतिषेधस्य साधनोपायः।

ननु नित्यताभावस्वभावभूता विधिः साधकेनैव प्रमाणेन प्रतीयते। नेदमस्ति। न स्वभावमात्रकादेवानित्यता। अपि तु।

**प्राग् भूत्वा ह्यभवन् भावोऽनित्य इत्यभिधीयते ॥११०॥**

भूत्वा यो न भवति सो (ऽ) नित्यो न भवनमात्रतः[4] (।) स चा भावोऽन्यत्राप्यनुपलब्धि-साधकः।

नन्वस्य वादित उभयान्तव्यवधायिका सत्तेवानित्यता नाभावलक्षणा। उभयान्तत्वञ्च पूर्वापरान्तयोः (।) सत्ता च नानुपलम्भसाध्या तत्कथमेतत्। अत्राह।

**यस्योभयान्तव्यवधिसत्ता सम्बन्धवाचिनी।**
**अनित्यता श्रुतिस्तेन तावन्ताविति कौ स्मृतौ ॥१११॥**

---

[1] T. ब्लो-छेन्-पो-चन्-गियि-र्युद्-दे-दग् = (ते महामतितंत्राः)
[2] T. ल्दोग्-पऽि-म्छम्स्-थ-दद्-पर् [3] T. दुस्-गृचिग्-ञ्चिद्-दु [4] T. भवनमात्रतः

न तावत् सत्तमात्रमनित्यताऽस्मादीनामप्यनित्यताप्रसङ्गात् । रूपवेदनादीनाञ्चाविशेषेण उभयभूतान्तमध्यमध्यासीना सत्ताऽनित्यता वक्तव्या । न चोभयान्तताऽभावमन्तरेण काचिदस्ति । अभावसङ्क्रमे च सोऽभावानुपलब्ध्या गृह्यते नान्येन ।

**प्राक् पश्चादप्यभावश्चेत् स एवानित्यता न किं ।**

यदि प्रागभावप्रध्वंसाभावोभयाप्तव्यवधायिका सत्ताऽनित्यता । स एवाभावोऽनित्यता किन्नेष्यते ।

**षष्ठाद्ययोगादिति चेत् अन्तयोः स कथं भवेत् ॥११२॥**

यद्ययमभिप्रायो भावस्यानित्यतेति षष्ठ्यादियोगो न भवेद् यद्यभावो नित्यता । अभावेन सम्बन्धाभावात् । नहि भावस्याभावस्य च संयोगसमवायादिलक्षणसम्बन्धोऽयोगात् ।

विशेषणविशेषत्वसम्बन्धः केन वार्यते । न स्यात् सोपीति चेदेवमन्तयोः स कथम्भवेत् ॥२९५॥

यदि विशेषणविशेष्यभावेपि समवायादिसम्बन्धमन्तरेण नेष्यते । स तर्हि षष्ठ्यादियोगो विशेषणविशेष्यभावो वान्तयोः सत्तया भावेन वा कथमुपपन्नोऽन्तव्यवधिभूता सत्ता तद्विशिष्ठा चेति वचनव्यक्तौ ।

**सत्तासम्बन्धयोर्ध्रौव्यादन्ताभ्यान्न विशेषणं ।**

उभयान्तव्यवधिः सत्ता सत्सम्बन्धो वा समवायलक्षणोऽनित्यतेति वचने नियमेन सत्तासम्बन्धयोरन्ताभ्याम्विशेषणमभ्यपगतम् । न चेदं युक्तं । द्वयोरपि नित्यत्वाभ्युपगमात् । अन्तविशिष्टा हि [1]सत्ता कथम्भवेत् यदि सोत्पादव्ययवती । अथ स तत्र भावे सत्तासम्बन्धो वा न स्यात् ताभ्याम्विशेषणमेवन्तर्हि स एव भावस्तद्विशिष्टोऽनित्यः किं सत्तया । अव्यतिरेकात् षष्ठी न भवेदिति चेत् । सत्ताया अस्तित्व[2]मिति कथं । किञ्च । भावस्या नित्यतेति भावस्य प्रागभावप्रध्वंसाभावौ तावेवानित्यता । ततो व्यतिरेकादस्ति व्यतिरेकविभक्तिः । अथ कार्यकारणयोरुभयान्तता । कारणमित्येकोऽन्तः कार्यमिति द्वितीयः । ताभ्याञ्च कार्यकारणाभ्यां सत्तायाः सम्बन्धस्य वा विशेषणं नोक्तः[3] । भावे च कार्यकारणयोः सम्बन्धः कार्यकारणभावः सत्तायाः समवायलक्षणः[4] । अत्र प्रतिवचनम् ।

**अविशेषणमेवं स्यादन्तौ चेत्कार्यकारणे ॥११३॥**
**असम्बन्धान्न भावस्य प्रागभावं स वाञ्छति ।**
**तदुपाधिसमाख्याने तेप्यस्य (च) न सिध्यतः ॥११४॥**

यस्य हि प्रागभावः स्वकारणेन सम्बध्यते । न च भावस्य प्रागभावेन सम्बन्धोऽभ्युपगम्यते । तदभ्युपगमे प्रागभावप्रध्वंसाभावावेवानित्यतेति प्रकृतहानिः पक्षान्तरसमाश्रयणं च । तस्मादसम्बन्ध एव प्रागभावेन भावस्य । प्रागभावोपाधिश्चायं समाख्याविशेषः स

---

[1] तालपत्रे दक्षिणच्छिद्रपार्श्वे पुस्तकस्वामिनो नाम—"दानशीलस्य"—इति दृश्यते ।
[2] तत्रैव—"अस्तित्वमत्र न किमपि ।" [3] T. नायुक्तम्
[4] T. कार्यकारणयोर्भावस्य च संबंधः कार्यकारणलक्षणः । सत्ताया भावस्य च संबंधः समवायलक्षणः ।

तदभावे न स्यादिदङ्कार्यमिति । न च कार्यमन्तरेण कारणं । अथवा नान्येन प्रकारेण कार्यकारणत्वाभावः । यतः ।

सत्ता स्वकारणाश्लेषकरणात् कारणङ्किल ।
सा सत्ता स च सम्बन्धो नित्यौ कार्यमथेह किम् ॥११५॥

सत्तासम्बन्धकरणेन हि कारणं स्वकारणसम्बन्धकरणेन च । स्वकारणं समवायिकारणं समवायिकारणसमवेतं हि प्रायशो वस्तूत्पत्तिमत् । न च सत्तासम्बन्धयोः कार्यता । भावस्यापि सम्बन्ध एव सत्तया कार्यो नान्यथास्य कार्यता । स्वरूपेणैव कार्यता चेत् । न ।

यस्याभावः क्रियेतासौ न भावः प्रागभाववान् ।
सम्बन्धानभ्युपगमान्नित्यम्विश्वमिदन्ततः ॥११६॥

नहि भावस्य कस्यचिदपि प्रागभावेन सम्बन्धः । यद्यपि नामावस्तुत्वादसम्बन्धस्तथापि पूर्वमसावविद्यमान एव । ततः कार्यता भविष्यति ।

ननु यस्याविद्यमानतया सम्बन्धः सोऽविद्यमानः । अन्यथा सर्वमेवाविद्यमानम्भवेत् । ततश्चास्ति प्रागभावेन सम्बन्ध इति प्राप्तं । न चाभ्युपगम्यते । ततः सकलमेव नित्यञ्जगत् प्रसक्तं कथन्तर्ह्यभावेन सम्बन्धः ।

तस्मादनर्थास्कन्दियोऽभिन्नार्थाभिमतेष्वपि ।
शब्देषु वाच्यभेदिन्यो व्यतिरेकास्पदं धियः ॥११७॥

भिन्नो वा भवत्यभिन्नो वार्थस्तत्र बुद्धिपरिकल्पित एव सर्वत्र सम्बन्धः । वस्तु वस्तुनो यदि व्यतिरिक्तङ्कः सम्बन्धः । व्यतिरेक एवेति चेत् । यदि नाम व्यतिरिक्तन्तस्य कः सम्बन्धो व्यतिरेकस्य सर्व्वत्र समानत्वात् असम्बन्ध एव न स्यात् । तादात्म्यतदुत्पत्तिलक्षण इति चेत् ।

भिन्ने का घटनाऽभिन्ने कार्यकारणतापि वा ।
भावेऽन्यस्य च विश्लिष्टौ श्लिष्टौ स्यातां कथन्नतौ॥ २९६॥

न खल्वभिन्नस्य सम्बन्धो द्विष्ठत्वात्तस्य कार्यकारणभावो न स्यात्(।)तादात्म्यलक्षणस्तु कथन्न स्यात् । न(।) तत्र सम्बन्धस्य कल्पितविषयत्वात् । कल्पितौ हि तत्र सम्बन्धिनौ भिन्नत्वे तादात्म्यलक्षणः सम्बन्धो नास्तीति सिद्धमेतत् । कार्यकारणभाव इति चेत् । किमिदं कार्यकारणत्वन्नाम । अन्वयव्यतिरेकित्वमिति चेत् । न(।) तस्य कल्पितत्वात् । प्रत्यक्षतोऽग्रहणात् । तस्मात् सर्वः[1] कल्पनानिर्मित एवायन्न परमार्थः । तस्मादयम्व्यतिरेकविभक्तिर्यथाकथञ्चित् कल्पितं सम्बन्धमाश्रित्य प्रवर्त्तते नापरः प्रकार इति । प्रागभावादिनापि भावस्य सम्वृत्या सम्बन्धो न परमाथन कस्यचित् केनापीत्येकान्त एषः(।) तस्माद् योजनाद् वर्णसामान्ये न प्रमाणान्तरत्वम्प्रमेयान्तराभावात् । न च पुनः पुनरभिज्ञानेऽनिष्ठासक्तेः स्मृतादिवत् । पुनरभिज्ञानं हि स्मर्यमाणमेव ।

नन्विन्द्रियव्यापारानुविधानादविसम्वादाच्च[2] प्रमाणमेव कथमप्रमाणम्प्रत्यभिज्ञानं । न(।) इन्द्रियव्यापारस्य सन्निहितमात्रविषयत्वात् । यदि सन्निहितमात्रविषयत्वङ्कथं स एवायमिति कृत्वा प्रवर्त्तते । नैतदस्ति । यस्मात् न स एवायमित्येव प्रेक्षावान् प्रवर्त्तते ।

[1] T. सर्वः [2] T. न तु इन्द्रियव्यापाराश्रयाद् भाविसंवादाच्च

समीहितफलप्राप्तिहेतुरित्येव वर्त्तते। यद्यपि स एवासौ तथापि न प्रवर्त्तनविषयः। अर्थक्रिया-साधनविषया हि प्रेक्षवताम्वृत्तयः। न च तेनैव सार्थक्रिया साधनीया स्वकारणाधीनशक्तयो हि भावास्तामन्याम्वाऽर्थक्रियाङ्कल्पयन्ति नैकत्वभाजनत्वेन। न चार्थक्रियासम्बन्धः प्रत्यक्षविषयः पूर्व्वदृष्टस्यैव स्मरणात्। तदर्थक्रियाकारित्वेन च स एवायमिति प्रत्ययस्य विषयो न स्वरूपेण। पूर्व्वं यदि दृष्टत्वेन च ग्रहणे स्मरणमेव। इह योजने त्वनुमानन्तदर्थक्रियायोग्यत्वमत्रापि। तदभेदोपचारादेकत्वव्यवहारः। अविसम्वादोपि नैकत्वविषयोऽनैकत्वेप्यर्थक्रियावाप्तेः। अग-म्यागमनादिकन्तु तत्प्रसूतित्वादेव सन्तत्यपेक्षया।

तस्मान्न प्रत्यक्षं सामान्यविषयं। नाप्यनुमानस्य विशेषविषयता।

ननु विशेषदृष्टमनुमानं विशेषमेव प्रत्यभिजानाति। तदप्यसत्।

**विशेषप्रत्यभिज्ञानञ्च प्रतिक्षणभेदतः।**
**न च विशेषविषयन्दृष्टसाम्येन तद्ग्रहात् ॥११८॥**

यदा खलु दृष्टो वह्निः पुनरपसृत्य व्यवधाने सति धूमादवसीयते। तदा कालान्तरे स एव विशेषो न प्रत्यभिज्ञायतेऽपरापरस्य भेदस्य सम्भवात्। भेदे च सत्येकत्वाध्यासेन प्रतिपत्तिः सामान्यमेव विषयीकरोति। यत्र तर्हि स्थिरे पदार्थात्मनि न भेदसम्भवो विकारा-भावात्। तत्र तस्यैव विशेषस्य प्रत्यभिज्ञानं। तदेतत कथमवगन्तव्यं। न ह्यदृश्यमाने विकारो न सम्भवतीति निश्चयः। अथान्यत्राप्येवमेव दृष्टस्तथा सति दृष्टसाम्येन व्यक्तय-न्तरेण प्रतिपत्तिर्न्न विशेषविषयत्वं।

**निदर्शनन्तदेवेति सामान्याग्रहणं यदि।**
**निदर्शनत्वात् सिद्धस्य प्रमाणेनास्य किं पुनः ॥११९॥**

यदि तदेव निदर्शनं पूर्व्वप्रत्यक्षेण सिद्धत्वात् तथा सति पूर्वकेणैव प्रत्यक्षेण ग्रहणात् किम्पुनः प्रमाणेन। नानुमानेनात्र कार्यं। यदि पूर्वकमेव प्रत्यक्षं विशेषदृष्टानुमानकाल-भाविसत्तोपग्राहितेनैव सिद्धत्वात् किमनुमानेन। प्रत्यक्षाविषये हि प्रवर्त्तनमनुमानस्येष्यते न (।)[१] तत्रैव। अत एव विशेषदृष्टमिति चेत्। भवतु विशेषदृष्टं तस्य प्रमाणन्तु न स्यात्। अथ दर्शनेन समानकालभाव्येव पदार्थः परिगृह्यते नेतरस्ततो भाविनि प्रवर्त्तमानमनुमानम्प्र-माणमेव। यद्येवमन्यन्निदर्शनं यद्रूपम्पूर्व्वम्प्रतीतम्(। अन्यदा) दार्ष्टान्तिकं यद् उत्तरकाल-मनुमानेन प्रतीयते। अथ गृहीतमेव तत् किन्तु विस्मृतं(।) ततोयमदोष इत्याह।

**विस्मृतत्वाददोषश्चेत्तत एवानिदर्शनं।**

विस्मृतस्य तस्य पुनर्लिङ्गद्वारेण[२] तथैव स्मरणमिति न व्यर्थताऽनुमानस्य। कथन्त-र्हि विस्मृतस्य दृष्टान्तता। दृष्टान्तद्वारेण हि साधनम्प्रवर्त्तते तस्य चेद् विस्मरणं कथं स दृष्टान्तः। यदि लिङ्गात् प्रागस्य विकलस्य[३] दृष्टान्ततया स्मरणन्तदा किमपरमत्र लिङ्गेन कर्त्तव्यं। तदेव पुनस्स्मर्यत इति चेत्। अनवस्था भवेत्। अथ विस्मृतं तदा न दृष्टान्तता। अथ दृष्टान्तमन्तरेणैवाकस्माद् धूमादग्निप्रतिपत्तावितरस्य विस्मृतस्य लिङ्गात् प्रतिपत्तिः। तदा तस्याविकलकालकलाव्यापिनः पूर्व्वप्रत्यक्षेणैव ग्रहणात् विशेषमप्रतियतः कथम्प्रमाणता।

---

[१] T. न [२] T. हेतुद्वारेण [३] T. अविकलस्य

स्मरणे सति तत्र व्यवहारादिति चेत्। तथा हि स्वभावहेतोर्गृहीतस्यापि सर्वात्मना तथैव व्यवहारे सति प्रमाणता। न(।) तत्रापरदृष्टान्तसाधर्म्येणैव व्यवहारयोग्यतासाधनात्। न त्विह तथा प्रागेवाभावात्। अभ्यासानुत्थानात्। दृष्टमेतदित्यपि न सङ्गतमन्यथा भावसम्भवात्।

न खलु गृहीत एव स्मरणमेतदिति सिद्धमगृहीतत्वस्य भावात् प्रमाणं। स्वकालपर्यवसायि हि रूपम्प्रत्यक्षेण गृह्यतेऽन्यथा मरणावधि गृह्येतेति तदैव मरणं भवेत्। अनुवर्त्तमानेन मरणावधि गृह्यत इति चेत्।

दीर्घेण दीर्घग्रहणमदीर्घेणेतरग्रहः। प्रत्यक्षेण तदैवास्य मरणावधि न ग्रहः ॥२९७॥

यर्त्तार्हि नानुवर्त्तते न तेन कालान्तरव्यापि परिग्रहः। ततः कथङ्गृहीत एवानुमानम्प्रवर्त्तते विशेषदृष्टं। कथन्तदेव निदर्शनमित्यसामान्यग्रहणं।

अथ दृष्टे कालान्तरसम्बन्धेन कालान्तरे यदन्यदुत्पद्यते तस्य तद्भावसिद्धिरिति विशेषदृष्टमेवैतत् अत्रोच्यते।

**दृष्टे सद्भावसिद्धिश्चेत् प्रमाणाद्; अन्यवस्तुनि ॥ १२० ॥**
**तत्त्वारोपे विपर्यासस्तत्सिद्धेरप्रमाणता।**

अथ दृष्टमन्यदपि पुनः कालान्तरे तदेवेदमिति साध्यत इत्यभ्युपगमः। स तर्हि तदन्यत्र तत्त्वारोपो नियोगत एव विपर्यासः। न हि दृष्टेऽन्यतया तत्त्वन्तत्त्वतः सम्भवति। अपरिदृश्यमाने च परिदृष्टरूपाध्यारोप एव शक्यो न तत्त्वग्रहः। तस्य पूर्वदृष्टस्य पूर्वप्रत्यये नानन्यरूपसंसृष्टस्यैव ग्रहणात्। यद्यपि न गृह्यते तथाप्यनुमानेन तत्त्वेनैव गृह्यते नान्यत्वेनेति चेत्। नानुमानस्य पूर्वग्रहणानुसारित्वान्न स्मरणमात्रावन्यदनुमानं। अथ वस्तुग्रहणरूपमनुमानं। तदा।

**प्रत्यक्षेतरयोरैक्यादेकासिद्धिर्द्वयोरपि ॥ १२१ ॥**

यदि प्रत्यक्षमितरच्च रूपमेकमेव तदेकेनैव प्रमाणेन प्रत्यक्षेणेतरेण वा सिद्धत्वादितरदप्रमाणम्भवेत् विशेषस्य कस्यचिदितरेणाकरणात्। तदा स्पष्टाकारा प्रतीतिरुभयत्रापि भवेदितरा वा। अथ चक्षुराद्यव्यापारादस्पष्टता। तत्प्रतिबद्धत्वात् स्पष्टतायाः। नैतदस्ति।

चक्षुरादिनिबद्धेयं यदि स्पष्टावभासिता। अप्रयोजक एव स्यादालोको रूपनिग्रहे ॥२९८॥

अथालोककृता स्पष्टता तदा सत्यालोके कथमनुमानमस्पष्टावभासि। कादाचित्कत्वादालोकस्येति चेत्। स तर्हि परमार्थतो विद्यमानोप्यालोको नावधार्यते(।) तत्कथम्वस्तुग्रहणम्(।) आलोकरहितस्य वस्तुमात्रस्य ग्रहणाददोष इति चेत्। आलोकसहितस्य तद्रहितग्रहणमिति साहसं। तथा चेत् तदेव सामान्यग्रहणमिति न विशेषदृष्टमेतत्।

**सन्धीयमानञ्चान्येन व्यवसायं स्मृतिम्विदुः।**
**तच्चिह्नापेक्षणान्नो[१] चेत् स्मृतिर्न व्यभिचारतः ॥ १२२ ॥**

अपि च। पूर्वदृष्टानुसन्धानमात्रमेतत्। न स्पष्टस्वरूपतया परिग्रहस्तदा स्मृतिरेव। नह्येकरूपतायाम्प्रत्यक्षानुमानयोः किञ्चिदधिकम्प्रमीयत इति स्मृतिरेवे यस्न वस्तुग्रहणम्(।)

---

[१] T. तल्लिङ्गापेक्ष०

अथ लिङ्गादुत्पद्यते तत्कथं स्मरणं। नैतदस्ति। न हि लिङ्गतास्य विद्यते त्वन्मत्या त्रैरूप्याभावादेकत्वाद् दृष्टान्तदार्ष्टान्तिकयोः[1] (।) अस्मत्पक्षे त्वनुमानमेवैतत् सामान्यविषयमिति प्रतिपादितं। यदेव हि पूर्वतयावगम्यते तदेव स्मर्यमाणं न ग्राह्यं (।) गृह्यमाणतयाऽप्रतीतेः। नह्यनुमानस्मरणादन्यत् स्मरणमेव लिङ्गादुत्पद्यमानमनुमानं। तस्मादसकृत् तदेव येन प्रतीयते तत् स्मरणमेव। कथन्तर्हीदानीमस्तीति प्रतीतिः। इदानीन्तनमस्तित्वम्पक्षधर्मसामर्थ्यादेव गम्यते। तत्प्रदेशवर्त्ती धूमस्तत्प्रदेशवर्त्तिनैव वह्निना जन्यत इत्येवमेव पूर्वसम्बन्धग्रहणादनादिवासनाप्रबोधतः। एवञ्च सति सकलमनुमानं स्मरणमेवेति स्थितमेतत् (।) प्रमेयद्वैविध्यात् प्रमाणद्वैविध्यम्प्रत्यक्षानुमानभेदादिति। साक्षादितरप्रतीतिभेदव्यतिरेकेण प्रकारान्तराभावादिति।

## ४. प्रत्यक्षचिन्ता

### (१) प्रत्यक्षलक्षणविप्रतिपत्तिनिरासः

तत्र (।)

"प्रत्यक्षङ् कल्पनापोढमभ्रान्तं"[2]

विशेषणादिसम्बन्धवस्तुप्रतिभासाप्रतीतिः **कल्पना**। अन्यथा प्रतिभासो भ्रान्तत्वं (।) तेनोभयेन रहितं प्रत्यक्षं।

ननु भ्रान्तत्वम्पुनः प्रत्यक्षेणान्यथा दर्शनादवगम्यते। कल्पनापोढता तु कुतः। नहि प्रत्यक्षपूर्वकमनुमानन्तदभावेऽवतरणमासादयति। सकलश्च प्रत्ययः शब्दानुरे (?)-धादेवोपजायते (।) ततः प्रत्यक्षं सविकल्पकङ् कथमात्मनोऽविकल्पतामवगच्छेत्। यस्याप्यालोचनाज्ञानम्विकल्परहितम्प्रथममुपजायते तस्यापि स्मरणादिसामग्रीसमवधानात् सविकल्पकप्रत्ययोदयः। स चाक्षव्यापारतः प्रत्यक्ष एव। तस्यापि कथमविकल्पकत्वसिद्धिः। अत्र प्रतिवचनं।

**प्रत्यक्षङ्कल्पनापोढम्प्रत्यक्षेणैव सिध्यति।**
**प्रत्यात्मवेद्यः सर्व्वेषाम्विकल्पो नामसंश्रयः ॥१२३॥**

विकल्परहितम्प्रत्यक्षं स्वसम्वेदनादेव प्रतीयते। विकल्पो हि नाम जनयति नामापि विकल्पं स नामसंश्रयो विकल्पः प्रत्यात्मवेद्यतयानुभूयते। स्वसम्वेदनेन विकल्पस्यानुभवात्। चक्षुरादिना दृश्यस्य ततो विरुद्धधर्माध्यासतो भेद एव विकल्पकेतरप्रत्यययोः। अथापि सर्वदा तद्भावादिक एवायम्प्रत्ययस्तदपि नास्ति (।) यतः।

**संहृत्य सर्व्वतश्चिन्तां स्तिमितेनान्तरात्मना।**
**स्थितोपि चक्षुषा रूपमीक्षते साक्षजा मतिः ॥१२४॥**

यद्यक्षम्विकल्पसामग्रीविरहि न प्रवर्त्तत एव तदभावे संहृतविकल्पावस्थायामन्यविकल्पसम्मुखीभावे वा चक्षुषो व्यापारो न स्यात् पदार्थग्राही। ततस्तस्यामवस्थायामसङ्क्रान्तविकल्पः प्रतिभासमानः प्रत्ययः प्रत्यक्षत एव गम्यते।

---

[1] T. दृष्टान्तार्थयोः　　[2] T. दिग्नागकृते प्रमाणसमुच्चये

ननु यदि सङ्गतो विकल्पो नास्मिन्निति तदैव प्रत्ययः कथम्विकल्पविरहिणी सावस्था। अथ न विकल्प( आधाराधेयाभाव ) एव तदानीन्तदा निर्विकल्पकमेतदिति कथम्प्रतीतिः। नहि विकल्पमन्तरेण व्यवहारः। न च परमव्यवहारयता परः प्रतिपादितो भवति। अन्यथा क्षणिकत्वेपि किं स्वभावहेतुना व्यवहारकारिणा। अत्रोच्यते।

**पुनर्विकल्पयन् किञ्चिदासीद् वो कल्पनेदृशी।**
**इति वेत्ति न[1] पूर्व्वोक्तावस्थायामिन्द्रियाद् गतौ ॥१२५॥**

न खलु तदिव तस्य विकल्प उपजायते निर्विकल्पकमेतदिति। अन्यथा विकल्पप्रत्यक्षवादिनोपि यावत् सविकल्पकमेतदिति न जायते निश्चयस्तावत् कुतः सविकल्पकत्वव्यवहारः। ततः सविकल्पकत्वव्यवहारेपि सविकल्पः पुनरेषितव्यस्तत्राप्यपर इत्यनवस्थानादप्रतिपत्तिः। अथ स्वयमेवासौ सविकल्पक इति किन्तत्रापरेण (।) अविकल्पकस्यापि प्रतीतिरूपत्वात् किम्विकल्पेनेति समानमुभयस्यापि।

अथ विकल्पके पश्चाद् व्यवहारः सविकल्पकोयमित्यत्रापि पश्चान्निरूपयत एवम्विधविकल्पपरम्परासीदिति व्यवहारो न संहृतविकल्पावस्थायां। तत्र निर्विकल्पकत्वं ममासीदित्यव्यवहारत्। अथ तदानीमविद्यमानस्य कथम्विकल्पेन व्यवहारः। मृते कथम्मृत इति व्यवहारः। अन्यथा सविकल्पकस्यापि कथं सविकल्पकत्वव्यवहारः। पुनस्तज्जातीयस्य दर्शनादिति चेत्। इहापि संहृतविकल्पावस्थायाम्पुन पुनर्दर्शनमनिवारितमेव। तेन लक्षणभेदादन्योन्यव्यतिरेकेण च भावान्नैकत्वं सविकल्पकेनरयोः।

अथ सामग्रीसद्भावात् (विकल्पारम्भात्) सविकल्पकोऽन्य एवोत्पद्यते तदभावादविकल्पक इति (।) तदसङ्गतं।

सामग्री यदि कल्पिता भिन्नत्वन्नीलपीतयोः। समुदायोऽन्य एवायमुत्पन्न इति कल्पनात् ॥२९९॥

स हि तत्रान्य एव नीलपीतादिसमुदाय उत्पन्नोवान्तरसामग्रीसम्भवात्। अथ प्रत्यभिज्ञानात् तदेवेदन्नीलं न पुनरपरः समुदाय इति प्रतीतेर्नानात्वन्तयोः सर्वकल्पितरूपयोरपि समानम्भेदकल्पनं। तस्मादविकल्पकमेव प्रत्यक्षं।

न चासौ सामग्रीन्द्रियविज्ञानस्य सविकल्पकत्वे स्मरणादिका। इन्द्रियस्यार्थग्रहणप्रवृत्तत्वात्। न चेन्द्रियग्राह्योर्थः शब्देन योज्यते। शब्दस्य तद्वाचकताऽभावात्। स्वलक्षणे सङ्केतस्याप्रवृत्तेः। सामान्यस्येन्द्रियाग्राह्यत्वात्। कस्मादेतदिति चेदाह।

**एकत्र दृष्टो भेदो हि क्वचिन्नान्यत्र दृश्यते।**
**न तस्माद् भिन्नमस्त्यन्यत् सामान्यम्बुद्ध्यभेदतः ॥१२६॥**

देशकालानन्वयी हि भेदः। यत एकत्र दृष्टः पुनरन्यत्र दृश्यते तेनान्येन वा प्रत्यक्षेण तस्य कालान्तरवर्तिन्यभावात् स्वकालपरिच्छिन्नो हि भावः प्रत्यक्षतोऽवगम्यते। ततो न पूर्वम्परत्र न परम्पूर्वत्र प्रत्यक्षं। प्रत्यभिज्ञाय पूर्व्वं स एवायमिति गृह्णातीति चेत्। न(।) प्रत्यभिज्ञाया अप्रत्यक्षत्वात् तत्रेन्द्रियव्यापाराभावात्। तथा हि।

योग्यदेशस्थितेऽक्षाणाम्वृत्तिर्नातीतभाविनि। तदाश्रितञ्च विज्ञानन्न कालान्तरभाविनि ॥३००॥

---

[1] M. ०सीन्मे कल्पने० वेत्ति चेति न

नहि कालदेशव्याप्तिरक्षविज्ञानेन गृह्यते । तथा सति सर्व्वः सर्वाकारदर्शी भवेत् । अथाक्षाणि यदि नातीतभाविनि वर्त्तन्ते तदाश्रितस्य विज्ञानस्य को विरोधः । यदि तदाश्रितस्य विज्ञानस्यातीतादौ वृत्तिश्चक्षुषोपि स्यात् । नहि चक्षुषोन्यावृत्तिः । न च पूर्वापरग्रहणे चक्षुर्व्यापारः प्रतीयते । पूर्वापरयोः स्मरणस्य सम्भवानुमानस्य च वृत्तेः । इन्द्रियवृत्तिरेव सेति चेत् । अनुमानस्यापि प्रत्यक्षताप्रसङ्ग इति प्रतिपादयिष्यामः । अतो भेदानामनन्वयित्वं । सामान्यमिन्द्रियग्राह्यमन्वयीति चेत् । तदसद् (।) यतः ।

"न तस्माद् भिन्नमस्त्यन्यत् सामान्यम्बुद्धयभेदतः" ।

न व्यक्तीनामन्वयो नापि सामान्यस्याभावादेव । व्यक्तीनाम्भावो न तासामन्वयः । सामान्यस्यान्वयो न च तद् दृश्यते । तस्याभावान्नेन्द्रियग्राह्योऽन्वयसम्भवः । नहि सामान्यमत्र प्रतिभाति । आकारान्तराप्रतिभासनादव्यतिरेके व्यक्तय एव (।) ताश्च नान्वयिन्यः । अत एव भिन्नाभिन्नमवाच्यञ्च न सामान्यं ।

**तस्माद् विशेषविषया सर्वैवेन्द्रियजा मतिः ।**
**न विशेषेषु शब्दानाम्प्रवृत्तेरस्ति सम्भवः ॥१२७॥**
**अनन्वयाद् विशेषाणां सङ्केतस्याप्रवृत्तितः ।**

नह्यनन्वयिनि प्रतिभासमाने सामान्यरूपता । न च विशेषे शब्दानाम्वृत्तिरनन्वयेन सङ्केतस्यावृत्तेः । सङ्केतो हि देशकालान्तरे व्यवहारवृत्त्यर्थम्व्यवहारिभिरिष्यतेऽतोन्यथा व्यसनमेव भवेत् । धर्मार्थ इति चेत् क एवम्प्रत्येष्यति । तस्मान्न देशकालप्रतिनियते सङ्केतवृत्तिः । तेन न विशेषः शब्दविषयः ।

**विषयो यश्च शब्दानां संयोज्येत स एव तैः ॥१२८॥**

ततः संयोज्यग्रहणन्निर्विशेषस्य । ततो न विशेषग्राही प्रत्ययः सविकल्पकः (।)यश्च सविकल्पको न स विशेषग्राही । सामान्यस्य शब्देन योजनात् । कस्मादित्याह ।

**अस्येदमिति सम्बन्धे यावर्थौ प्रतिभासिनौ ।**
**तयोरेव हि सम्बन्धो न तदेन्द्रियगोचरः ॥१२९॥**

दृष्टेप्यर्थेऽस्यायम्वाचकोऽस्यायम्वाच्य इति ययोः प्रतिभासः सम्बन्धकारिणि विज्ञाने तयोरेव वाच्यवाचकलक्षणः सम्बन्धो न च तदेन्द्रियगोचरः कुतः । अस्येदम्वाच्यमिति कोर्थः । अस्मादिदम्प्रत्येतव्यं । केन प्रत्ययेन (।) किं सविकल्पकेन परोक्षवस्तुनाऽथ प्रत्यक्षेण साक्षात्कारिणा । यदि साक्षात्कारिणाऽध्यक्षेण प्रत्येतव्यम् (।) वैफल्यमेवेन्द्रियसंहतेः प्राप्तं । अथ परोक्षतया तदेन्द्रियगोचरस्यार्थस्य न सम्बन्धो नहि तदेन्द्रियगोचरोर्थोस्तीति । अथ वाच्यगतेप्यर्थे शब्दे चास्येदम्वाचकमिति सम्बन्धकरणात् । तथाहि ।

**विशदप्रतिभासस्य तदार्थस्याविभावनात् ।**
**विज्ञानाभासभेदो हि पदार्थानाम्विशेषकः ॥१३०॥**

इन्द्रियगोचरो ह्यर्थो विशदप्रतिभासः । विप्रकृष्टे चार्थेऽस्पष्टप्रतिभासिता । न च प्रतिभासभेदेप्येकता । अथ दूरासन्नतया स्पष्टतरप्रतिभासभेदस्यैकविषयतैव ज्ञानानाञ्च कथम्प्रतिभासभेदेन भेदः । अर्थक्रियाभेदेन भेदात् ।

नन्वर्थक्रियाभेदेपि प्रतिभासभेद एव न व्यतिरिक्तकार्यभेदो भेदलक्षणः। नहि कार्यभेदेन कारणस्य भेदः प्रतिभासभेदविना कुतस्य, प्रतिभासभेदोप्यस्त्येवेति चेत्। तत एव तर्हि भेदोस्तु किं कार्यभेदेन। यदि च कार्यभेदाद् भेदः कारणस्य कार्यस्य कुतो भेदः। कार्यभेदान्तराच्चेत्। अनवस्था। प्रतिभासभेदाच्चेत्। कारणेस्यापि तत एव भेदोस्तु किङ्कार्यभेदेन। अथ क्रियाभेदेनापि भेदे स एव प्रतिभासभेदो भेदकः। स्पष्टप्रतिभासस्यैवार्थक्रियाकरणात्। तस्मान्न दूरदेशव्यवस्थितस्यास्पष्टप्रतिभासो वस्तुविषयः। अविसम्वादादेकविषयतेति चेत्। अनुमानस्यापि सोस्त्येव तत्रापि प्रतिभासभेदादेव भेदः। तस्मात् प्रतिभासभेदादेव भेदः।

यदा तर्हि समुन्मीलितलोचनस्तथाभूताय सङ्केतङ्करोति तदा भविष्यति वस्तुविषयता शब्दस्य। तत्र निर्ण्णयः।

**चक्षुषोर्थावभासेपि[1] यं परोस्येति शंसति।**
**स एव योज्यते शब्दैर्न खल्विन्द्रियगोचरः ॥१३१॥**

यद्यपि नाम चक्षुषः श्रोत्रयोः शब्दघटाद्योः प्रतिभासस्तथापि स्वरूपेण प्रतिभासमात्रेण न सम्बन्धः। तस्येदम्वाचकमिति यं व्यतिरेकविभक्त्या शंसति स एव त्याज्यते। न च प्रत्यक्षे विभक्त्यर्थः प्रतिभाति। प्रतिपदिकार्थमात्रस्य प्रतिभासनात्। विभक्त्यर्थस्तु विकल्पप्रतिभासविषय एव। तथा ह्यस्येति सम्बन्धः। उपकार्योपकारकभावमन्तरेण न भवति। ततः कदाचिद् बुद्धिविषयाच्छब्दोऽर्थात् कदाचिच्छब्दादर्थो बुद्धिस्थो भवेदिति बुद्धिरूपविज्ञप्त्योः कार्यकारणलक्षणं सम्बन्धमाश्रित्य विभक्तिर्भवति न च प्रत्यक्षप्रतिभासनमेव सम्बन्धकरणे निमित्तं। तदन्तरेणापि भावात्। यदि च स्वलक्षणे चक्षुरादिजनितप्रतिभासिनि सङ्केतः। तदा तदेव प्रतिभासेत। न चैवं।

**अव्यापृतेन्द्रियस्यान्यवाङ्मात्रेणाविचारणात्[2]।**

अथापि स्याद् (।) यदि नाम न स्वलक्षणे सङ्केतस्तथापि तदेव वाच्यमिति को विरोधः।

**न चानुदितसम्बन्धः[3] स्वयं ज्ञानप्रसङ्गतः ॥ १३२॥**

अथवा स्वलक्षणे यदि सङ्केतः कथं सामान्यप्रतीतिरेवमेवेति चेत्। तत्राह। न चेत्यादि। तस्मादिन्द्रियज्ञानमवाच्यमेवासम्बन्धम्प्रत्येतीत्यविकल्पकं। कथन्तर्हि सोयङ्गौरहिरहिरिति विकल्पप्रत्ययः स्पष्टावभासी प्रतीयते। न च विकल्पः पृथगेवात्रेति शक्यङ ग्राहकस्य परस्यानुपलक्षणात्। न च विकल्पस्य परोक्षमत्र ग्राह्यं। स्पष्टेतरप्रतिभासद्वयप्रसङ्गात्। अथ पूर्व्वमपि तत्प्रतिभासितमविकल्पयतः। न च विकल्पकाले ग्राह्यताविशेषः। ग्राह्ये च विशेषमनारचयन् कथङ ग्राहकः। तदप्यसत्।

निश्चितानिश्चितत्वेन विशेषस्योपलब्धितः। कथम्विशेषो नास्त्यत्र न दृष्टेनुपपन्नता ॥३०१॥

नहि प्रतीयमानमेव प्रतिषेधविषयः। विकल्पिका प्रतीतिरसत्येति चेत्। तदसत्।

असत्यत्वङ कुतस्सिद्धम्विकल्पत्वात् प्रमात्र का। निर्विकल्पकबोधेपि तदसत्यत्वमुच्यताम् ॥३०२॥

---

[1] M. चक्षुषार्थाव० [2] M. ०णाविभावनात्। [3] तत्रैव—"पदार्थः"।

नहि सविकल्पकमित्येवासत्यं । अविकल्पकत्वेप्यसत्यत्वप्रसङ्गात् । अविकल्पकत्वा-न्नेति चेत् । सविकल्पकत्वेपि समानमेतदिति न विशेषः । किञ्च । साक्षात्करणङ्कथम-सत्यैव अविकल्पके हि निश्चयाभावादसत्यत्वम्भवेदपि । निश्चितरूपसाक्षात्करणे तु कथमस-त्यत्वाशङ्का ।

अथानुमानिकोऽयन्निश्चयस्तदसत्यमपरोक्षविषयत्वेनानुमानत्वासम्भवात् । विषयभेदा-देव प्रमाणभेदस्य साधनात् । प्रमाणसम्प्लवाभावस्य च प्रतिपादनात् । तदेतत् सकलमसत् । यतः ।

मनसो युगपद्वृत्तेः सविकल्पविकल्पयोः ।
विमूढो लघुवृत्तेर्वा तयोरैक्यम्व्यवस्यति ॥ १३३ ॥

अस्यायमर्थः । यदि खल्वविकल्पो गौरिति गकारादिवर्णाध्यवसायी स्वलक्षणग्रहण-प्रवणो भवेत् सविकल्पक एक एवायम्प्रत्यक्षप्रत्यय इति युक्तम्भवेत् । यावता वर्णाकारावग्रहो हि पूर्वदर्शनबलायातवासनाबीजसुबोधादस्पष्टवर्णावभासी प्रत्ययस्ततोन्य एव स्पष्टपुरोवर्त्ति-स्तम्भावभासी तु प्रत्यक्षस्तत्र विकल्पासम्भवात् । स एव प्रत्यक्षः प्रत्ययः । कथन्तर्ह्येकता-ध्यवसायः । नास्त्येव । न तावदयङ्गौरिति प्रत्ययः शावलेयगकारादिवर्णानामेकतामध्य-वस्यति । प्रतिभासभेदेन भेदस्यैव गतेः । गकारादिवर्णविकल्पानामपि क्रमेणोदयमासा-दयतामेकत्वाभावः । न च वर्णावभास एव प्रत्ययः शावलेयावलम्बनस्तदभावेपि शावलेय-प्रतिभासनात् । तस्यापि वर्णावभासस्य चक्षुर्निमीलनेपि प्रतिभासात् । तदभावेपि प्रनिभासनमनिश्चयात्मकं । ततो निश्चयो विशेष इति चेत् । कोयन्निश्चयो नाम (।) रूपस्य स्फुटस्य प्रतिभासनमिति चेत् । न (।) प्रागेव प्रतिभासनात् । पूर्वत्वेन प्रतिभासने तदाकारान्तरमेवास्पष्टं । तत्कथमाकारान्तरप्रतिभासेऽन्यन्निश्चितन्नाम । तदेकतानिश्चया-न्निश्चय इति चेत् । कथम्भेदेन प्रतिभासमानयोरेकत्वेन निश्चयः सत्यः । कथन्तर्ह्येकत्व-व्यवहारः । प्रवर्त्तनस्यैकस्य कार्यस्य । भावादेवकार्यतया तदेकत्वाध्यवसायः । कथन्तर्हि क्रमेण ग्रहणन्न भवति । युगपद्विषयसन्निधानादेव । नहि वर्णविकल्पकाले प्रत्यक्षार्थो न सन्निहितः । यथा च भवतो लघुवृत्तेर्विषयसन्निधानेन क्रमेण ग्रहणाध्यवसायस्तथा ग्रहणमपि ममेत्यविशेषः ।

ननु यदि विकल्पोऽन्यत्र एव कथन्तस्य विषयोस्पष्टतया न प्रतिभाति वाच्यरूपः । नास्त्येव तस्य विषयोऽपर इति चेत् । यदि तर्हि निर्विषयस्तत्रार्थेप्यसिद्धत्वात् यत् (?) तेन व्यवधाने[1] दर्शनच्छेदः स्यात् । न (।) व्यवधानाभावात् । नहि समानकाले न व्यवधान-सम्भवः । किञ्च ।

विकल्पव्यवधानेन विच्छिन्नन्दर्शनम्भवेत् ।
इति चेत् भिन्नजातीयविकल्पेऽन्यस्य वा कथम् ॥ १३४ ॥

यस्य हि सविकल्पकमेवाध्यक्षन्तस्य न विच्छेदः । नहि तेनैव तस्य व्यवधानं । निर्विकल्पकवादिनस्तु विकल्पोऽन्य एव ततो व्यवधानमिति चेत् । भिन्नजातीयविकल्पसम्भवे

[1] T. देर्-युल्-मेद्-प-शुग्स्-पस्-दे-वर्-दु-ब्चद्-प-न (=निर्विषयस्तत्र······व्यवधाने)

पदार्थान्तरदर्शनङ कथन्न विद्यते। न ह्यसौ भिन्नजातीयो विकल्पः प्रत्यक्षप्रत्ययस्वभावः परस्य, दृश्यमानरूपविकल्पनाभावात्। अथास्त्येवात्र विच्छेदः। किन्तु दर्शनद्वयभावेनान्तरालवर्त्यदर्शनम्बलवता तिरस्कृतं न स्वव्यवहारं लभते। तेनाविच्छिन्नाध्यवसायः। तदन-क्षसमम्[1]। यतः।

अलातदृष्टिवद् भावपक्षश्चेद् बलवान् मतः।
अन्यत्रापि समानन्तद् वर्णयोर्वा सकृच्छ्रुतिः ॥१३५॥

यदि भावपक्षो बल(व)ान्[2] समानजातीयविकल्पेपि निर्विकल्पकवादिनः समानत्वाद-व्यवधानमेवेति न दोषः। अभ्युपगम्य चैतदुक्तं। न च व्यवधान सम्भवः। नहि लाघवाद् व्यवधानेप्यव्यवधानप्रत्ययः। यतो लाघवाद् वर्ण्णयोरप्याशूच्चारितयोः सकृच्छ्रुतिप्रसङ्गो न चास्ति। तस्मान्न लाघवमत्र क्रमेप्यव्यवधानप्रतिपत्तिकारणं। अथ तत्र लाघवमेव नास्ति तेनासकृच्छ्रुतिः अत्र लाघवमस्तीति कुतः। मनसोर्युगपद् वृत्यभावादिति चेत्। एतदुत्तरत्र प्रतिपादयिष्यते। यौगपद्यप्रतिपत्तिरेवान्यथा न स्यादिति चेत्। न (।) यौगपद्यस्यैव भावात्। उत्पलपत्रशतवेधेपि तर्हि यौगपद्यमेवास्तु किङ क्रमकल्पनया। न। तत्र क्रमेण देशप्राप्तिरनुमानेन गम्यते। नेह तदनुमानमिति कथङ क्रमकल्पना। अक्रमकल्पनायाः किन्निमित्तमिति चेत्। प्रतिभास एव प्रत्यक्षात्मा। न साक्षात्प्रतिभासनादपरमपि साधनम्परमीक्ष्यते। यदपि प्रागभिहितं। लाघवमेव वर्ण्णसकृच्छ्रवणनिमित्तन्नास्ति। तत्रोच्यते।

सकृत् सङ्गतसर्व्वार्थेष्विन्द्रियेष्विह सत्स्वपि।
पञ्चभिर्व्यवधानेपि भात्यव्यवहितेव या ॥१३६॥
सा मतिर्नामपर्यन्तक्षणिकज्ञानमिश्रणात्।
विच्छिन्नाभेति तच्चित्रन्तस्मात्सन्तु सकृद्धियः ॥१३७॥

यस्य मतन्न युगपद् बुद्धय उपजायन्ते। यत्र तु युगपद् भावाध्यवसायो न तत्राशुवृत्तेरपरङ कारणं। लघुवृत्तित्वात् तथाध्यवसायः। तत्रेदमुच्यते। वर्ण्णानान्द्रुतोच्चारणेपि कथन्न भवति।

ननु लाघवमेव तथाभूतन्नास्तीति परः। इहापि तर्हि ततोपि न्यूनतरं लाघवं यत्र पञ्चविषयी समवधानम्विकल्पषाड्गुण्यञ्च(।) यथा सुरभिकमनीयकामिनीवक्त्रसर्वास्वादनम्मधुरगीतिमाकर्ण्णयतः। तत्र पञ्चभिरेकैकस्य व्यवधानञ्चेतसः। तत्र तादृशस्य सुतरां लाघवस्याभावोऽथ च सकृद्ग्रहावभासस्तथा वर्ण्णानामपि स्याद् (।) यत्र हि पञ्चभिर्व्यवधानेपि लाघवस्य सकृदध्यवसायसाधनसामर्थ्यन्तत्र किम्वर्ण्णविषयक्षणिकज्ञानव्यवधाने न स्यात्। तस्मात् सकृदेव धियामुदयो युक्तोऽन्यथायाम्विरोधः समर्थयितुमशक्य एव। तत उपपन्नमेतत्(।) मनसोर्युगपद्वृत्तेरिति। किञ्च।

प्रतिभासाविशेषश्च सान्तरानन्तरे कथं।
शुद्धे मनोविकल्पे च न क्रमग्रहणम्भवेत् ॥१३८॥

[1] T. दे-मि-रिगस्-ते (=तदयुक्तं) [2] T. बलवान्

क्वचित् सान्तरं यत्र धीर्जातीयव्यवधानञ्च क्वचिदनन्तरम्बिजातीयविकल्पाव्यवधानेन। ते सान्तरानन्तरे विज्ञाने कथम्भवतः प्रतिभासस्य चेदविशेषः। मनोविकल्पस्य च यः शुद्धः प्रबन्धस्तत्र प्रतिभासः क्रमवान्न भवेदाशुसम्भवात्।

ननु यदि युगपद् विज्ञानसम्भवः। सङ्गतेप्यर्थे ग्रहणाभावः कथञ्च कदाचिद् भवेत्। अत्र प्रत्युत्तरं।

योऽग्रहः सङ्गतेप्यर्थे क्वचिदासक्तचेतसः।
सक्त्यान्योत्पत्तिवैगुण्याद्बोध्यश्चैतद् द्वयोरपि ॥१३९॥

अन्यासक्तिवैगुण्यसम्भवे हि न स प्रत्ययस्समनन्तरप्रत्ययो भवति(।) सकलसन्निहितविज्ञानोदये। द्वयोरपि समानः पर्यनुयोगः। न समानो मनस एकत्र सक्तेः। तथापि सकृद् ग्रहावसायो भवतु। यत्रासक्तिर्महती नास्ति तत्र भवत्येवेति चेत्। वयमप्येवम्ब्रूमः। यत्रासक्तिस्तत्र क्रमग्रहोऽपरत्र युगपत्। न तु सर्वत्र क्रमग्रह इति प्रमाणमत्र। न चान्यत् मनः पूर्वकविज्ञानव्यतिरिक्तम्प्रमाणविषयः।

नन्वलाभे क्रमग्रहणसम्भवेपि युगपत् प्रतिभाससम्भवः। नैतदपि सत्यं। नहि तत्र क्रमप्रतिभासिनां सङ्घटनेन सा बुद्धिः(।) अपि तु युगपत् प्रतिभास एव तत्र। यतः।

शीघ्रवृत्तेरलातादेरन्वयप्रतिघातिनी।
चक्रभ्रान्तिन्दृशा धत्ते न दृशाङ्घटनेन सा ॥१४०॥

शीघ्रपरिवर्त्तिनां ह्यलातक्षणानामन्वयादुपहतञ्चक्षुरेव चक्रावभासनीन्धियञ्जनयति। नत्वसौ मनसः प्रत्ययो भावपक्षस्य बलवत्त्वेन अथात्रापि पञ्चविषयीसन्निधाने भ्रान्तिरेव युगपत्प्रतिभासः। सर्वत्र तर्हि युगपत् प्रतिभासो भ्रान्त एव। इष्यत एवेति चेत्। न(।) भ्रान्तत्वे प्रमाणाभावात्। युगपत्प्रतिभासो हि प्रत्यक्षत एवाभ्रान्तात् प्रतीयते। स तथा प्रतीयमानोपि बाधकमन्तरेणापि यदि भ्रान्तः सकलप्रत्ययानामेष प्रसङ्गः। तस्मात् सकृदुपलभ्यमानम्बाधकाभावात् विज्ञानपञ्चकं युगपदेवेति सिद्धं। ततो निर्विकल्पकमेव प्रत्यक्षं।

इदानीम्परमतमुपन्यस्य निरस्यति।

केचिदिन्द्रियजत्वादेर्बालधीवदकल्पनां।
आहुर्बाला विकल्पे च हेतुं सङ्केतमन्दतां ॥१४१॥

इन्द्रियजत्वादनुभवाकारप्रवृत्तत्वादमानसत्वादित्यादेरकल्पकम्प्रत्यक्षमित्याहुरन्येबालेन्द्रियज्ञानवत्। बालस्य चेन्द्रियविज्ञानमविकल्पकं सङ्केतग्रहणासमर्थत्वात्।

तेषाम्प्रत्यक्षमेव स्याद् बालानामविकल्पनात्।
सङ्केतोपायविगमात् पश्चादपि भवेन्न सः ॥१४२॥

तेषामेवम्वादिनाम्बालानाम्प्रत्यक्षमेव भवेत्। भवतु बालस्य सकलमेवाविकल्पकमिष्यत एव। न बालस्यापि स्वार्थक्रियासु पूर्वापरपरामर्शो विद्यत एव(।) अथ नास्ति तदा पश्चादपि विकल्पेन न भवितव्यं। सङ्केतग्रहणस्योपायस्याभावात्। विकल्पेन हि सङ्केतग्रहणं स च बालस्य नास्ति। अथ।

मनोऽव्युत्पन्नसङ्केतमस्ति[1] तेन स चेन्मतः ।
एवमिन्द्रियजेपि स्याच्छेषवच्चेदमीदृशम् ॥१४३॥

यदि बालानामपि मनोव्यवहारपतितं विचारकम्विद्यते । बालानान्तेन[2] सङ्केत-ग्रहणात् पश्चाद् विकल्पकता मनसः । यद्येवमिय(मि)न्द्रियजेपि स्याद् (।) इन्द्रियजमपि विकल्पकम्भवेत् पश्चात् केन निवार्यं । तदपि चेन्द्रियज्ञानन्न सङ्केतग्रहणसमर्थम्बालस्येति कुतः । इन्द्रियजत्वादेवेति चेत् । न(।) प्रतिबन्धाभावात् । अपि च । यदि नाम बालस्याविकल्पकमिन्द्रियज्ञानं सर्वत्र तथा भवतीति कुत एतत् । नहि बाधकप्रमाणप्रतिबन्ध-सिद्धिमन्तरेण हेतोर्गमकता दृष्टा दृष्टान्तमन्तरेण । अथेन्द्रियजं यत् तत्सन्निहितमात्रग्रहणात् पूर्वापरपरामर्शशून्यमिति न सविकल्पकं । तदेव पूर्वापरपरामर्शशून्यत्वमस्य कथं सिद्धं । साक्षात्करणस्य पूर्वापरयोरभावादसाक्षात्कारि च न प्रत्यक्षं । एवन्तर्हीन्द्रियजत्वाद् बाल-विज्ञानवदिति च व्यर्थं । प्रत्यक्षप्रसिद्धमेव स्यादविकल्पकत्वं । साक्षात्करणस्य प्रत्यक्षेण प्रतिनियतस्यानुभवात् । अन्यथा यदि न क्वचित् प्रत्यक्षं साधनमविकल्पकत्वस्य तदनुसारि कथमनुमानम्प्रवर्त्तते ।

अथ साक्षात्करणाकारम्बालविज्ञानन्ततोन्यदपीन्द्रियविज्ञानन्तथाभूतमेव । एवन्तर्हि ।

यदेव साधनम्बाले तदेवात्रापि कथ्यतां ।
साम्यादक्षधियामुक्तमनेनानुभवादिकम् ॥१४४॥

साक्षात्करणस्य परोक्षेऽदर्शनादन्यत्र च दर्शनात् प्रत्यक्षमपरोक्षविषयत्वादविकल्पकं (इति)[3] सामान्येन साध्यतां किमिन्द्रियजत्वादिहेतुना । तच्च साक्षात्करणमविकल्पकत्वेन कथितं । अविकल्पकत्वस्य सविकल्पकत्वबाधाद्[4] यत्साक्षात्कारि तदविकल्पकत्वेन व्याप्तं । ततो विरुद्धव्याप्तोपलब्धिरेषा । अथवाऽविकल्पकत्वेन साक्षात्करणं साध्यते । ततोपि प्रत्यक्षत्वं यद्यविकल्पकत्वेन साक्षात्करणं साध्यते तेन प्रत्यक्षत्वन्द्विचन्द्रादिवेदनानामपि स्यात् । अभ्रान्तत्वे सतीति वाच्यं ।

ननु भ्रान्तमित्येवास्तु किमविकल्पकत्वेन । न(।) परमतापेक्षत्वाद्विशेषणस्य । तथा चाह । विशेषणं लक्षणे परमतापेक्षं । सर्व्वेत्वविकल्पका एव । सर्व एवाभ्रान्ताः प्रत्यया अविकल्पका एव । अभ्रान्तत्वश्चा चा र्ये णापवादद्वारेण प्रतिपादितं ।

अथवाऽक्षम्प्रतिवर्त्तत इति प्रत्यक्षं । तेन साक्षात्करणमुपलभ्यते । तत्सर्वे साक्षा-त्करणाकारप्रवृत्ताः प्रत्यया अविकल्पका एवाथवाऽश्नुते व्याप्नोतीत्यक्षं । विषयस्वरूपव्या-प्तिश्च साक्षात्करणमेव ततः सर्वेऽक्षजा अविकल्पका एव ।

अथवा नास्त्येवाभ्रान्तग्रहणमा चा र्य स्य "कल्पनापोढमि"त्येव लक्षणं । कथन्तर्हि भ्रान्त-विज्ञानविच्छेदः । सर्वस्य साक्षात्करणस्य प्रत्यक्षत्वात् । द्विचन्द्राविज्ञानस्यापि प्रतिभासमाने द्वित्वे प्रत्यक्षतैव । तेन यत्र यत् साक्षात्कारि तत्र तत्प्रत्यक्षं । बाह्ये हि तत् भ्रान्तन्तत्र

---

[1] M. मनोऽव्ययुत्प०

[2] T. यिद्-किय-थ-स्ञाद्-ब्येद्-प-दे-ऽि-फियर्-ब्यिस्-प-नेम्स्-ल- नेम्-पर्-द्ब्योद्-प-योद्-प-यिन्-नो (=मनोव्यवहारकरणं, ततो विचारो विद्यते बालानाम्)

[3] T. ०दविकल्पकमिति

[4] T. विकल्पकत्व(?) स्य सविकल्पकत्वबाधनात्

च न साक्षात्कारि प्रतिभासमानरूपव्यतिरेकेणापरमस्तीति कल्पनैवेयं । तथा चाह । मनोभ्रान्तिविषयत्वाद् व्यभिचारिणः ।

नन्वभ्रान्तमपि बाह्येऽर्थे कल्पनाज्ञानमेव । सत्यमेतत् । तथाहि ।

"इदम्वस्तुबलायातं यद्वदन्ति विपश्चितः । यथा यथाऽर्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा"

इति वक्ष्यते (प्र० वा० २।२०९) ॥

## (२) सामान्यनिरासः

अपि च ।

> विशेषणविशेष्यञ्च सम्बन्धं लौकिकीं स्थितिं ।
> गृहीत्वा सङ्कलय्यैतत् तथा प्रत्येति नान्यथा ॥ १४५ ॥
> यथा दण्डिनि जात्यादेर्विवेकेनानिरूपणात् ।
> तद्वता योजना नास्ति कल्पनाप्यत्र नास्त्यतः ॥ १४६ ॥

संयोज्य ग्रहणं हि कल्पना प्रत्येकञ्च विशेषणादीनां ग्रहणमन्तरेण न संयोजनं । यथा दण्डीति प्रतीतौ जात्यादीनाञ्च विवेकेनानवधारणात् तद्वता योजना नास्तीति कथम्विकल्पकमिन्द्रियज्ञानं । तथाहि ।

अभिन्नप्रतिभासस्य योजनङ कस्य केन वा । विभिन्नप्रतिभासस्य योजनं न प्रतीतिभाक् ॥३०३॥

अभिन्नप्रतिभासे हि तदेकमेव कस्तत्र योजनार्थ उभयापेक्षत्वाद् योजनायाः । अथ भिन्नप्रतिभासन्द्वयन्तदा परस्परविवेकेन प्रतिभासना नतरां योजनेत्यसम्भवो योजनायाः । तस्मान्न पारमार्थिकी योजना ।

भवतु वा (।) यदि प्रत्येकम्प्रतिभासनं विशेषणादीनां । न च जातिजातिमदादीनामेतत् सम्भवति । न जातिगुणक्रियास्तद्वतो भेदेनावभासन्ते । अत एव संसृष्टप्रतिभासनं योजनेति चेत् । न । भिन्नयोः संसृष्टप्रतिभासायोगात् । समानदेशकालत्वादेवमिति चेत् । न । समानदेशकालानामपि स्वरूपस्य भेदात् । भिन्नदेशकालानामपि हि स्वरूपभेदादेव तथाप्रतिभासो न देशकालभेदात् । यदि हि तत्र न स्वरूपभेदो देशादिभेदेपि न भेदप्रतिभासनं । देशाभेदेपि परेषाम्वर्णसंस्थानयोरवभासत एव भेदो वातातपयोश्चेति न देशाद्यभेदादवभासभेदो हीयते ।

अथ समवायसम्बन्धबलादेकलोलीभावेन प्रतिभासनन्तथा सति सर्वत्र तथात्वकल्पनाप्रसङ्गः । सर्व एवाभेदप्रतिभासोऽभेदसाधनन्न भवेत् ।

ननु गौरिति विशिष्टप्रत्ययादेव योजनारूपा बुद्धिरेषा । विशिष्टप्रत्ययो हि न विशेषविशेषणमन्तरेण क्वचिदुपलब्धो दण्डीति प्रत्ययवत् । इदन्तदिति न निर्दिश्यते । विवेकेनाप्रतिभासनात् । न हि दण्डीत्यपि प्रत्यये दण्डस्य विवेकेन प्रतिभासः । पुरुषमात्रस्यैव तत्र प्रतिभासनात् । प्रागेव दण्डसम्बन्धात् कस्मान्न भवतीति चेत् । न (।) सा(म)प्रयभावेन विशिष्टत्वस्याभावाद्(।) विशिष्टत्वञ्च नापरम्पुरुषे तस्याप्रतीतेर्दण्ड एव तु विशिष्टत्वं । यथा

बीजस्य सहकारिण एव जलादयः शक्तिः। यदि तु दण्डप्रतिभासोपि भवेद्दण्डपुरुषाविति प्रत्ययः स्यात्। तदेतत्सकलमयुक्तं। केवलप्रतिभासश्चेत्। अप्रतीतिविशेषणन्न भवेत्। प्रतिभासे तु स्याद् दण्डपुरुषाविति। यथैव हि पुरुषप्रतिभासे केवलस्य न विशिष्टताप्रतीतिस्तथा दण्डीत्यपि। अथ विशिष्टप्रत्ययविषयत्वमेव विशिष्टता। अत्राप्युच्यते।

स्वगतेन विशेषेण विशिष्टः प्रत्ययो भवेत्। प्रमेयस्य विशेषाद्वा द्वयस्यापि न सत्यता ॥३०४॥

यदि तावत् स्वगतो विशेषः। प्रत्ययस्य तदा नार्थस्य योजनारूपा कल्पना। न खलु सुख(?)विना स्वगतेन विशेषेण सविकल्पकतेन्द्रियज्ञानस्य। विषयमन्तरेण स एव विशेषः प्रत्ययस्य नेति चेत्। न। समनन्तरप्रत्ययादपि विशेषप्रसिद्धेरिति प्रतिपादयिष्यामः। विषयगते तु विशेषे दण्डपुरुषयोः द्वयोरपि प्रतीतिरिति कथम्पुरुषमात्रविषयता। दण्डिप्रत्ययस्य द्वयोरपि प्रतीतिरिति व्यवहारमात्रत एतदुच्यते नहि परमार्थतः। विकल्पस्य निर्विषयत्वादिति द्वयोरपि विषयत्वे कथन्न द्विवचनं। व्यवहारमात्रमेतत् पूर्वपूर्ववासनाविशेषप्रभवमिति न दोषः। अप्राधान्याद् विशेषणस्य प्रतीयमानमपि तन्न विवक्षितमिति पुरुषमात्रसङ्ख्ययैकत्वं। यद्यनेन न्यायेन पुरुषमात्रविषयत्वमुच्यते उच्यतान्न तु प्रतिभासनाभावेन।

अथापि स्यात्।

दिक्कालदिविशिष्टानाङ कैवल्यप्रतिभासनं। न च तत्र विशिष्टत्वं ज्ञानस्य न विभाव्यते ॥३०५॥

तत्रापि समाधिः।

पदार्थान्तरसाङ्गत्यं स्वभावो वा विलक्षणः। विशिष्टता तदा सर्व. परपक्षः प्रहीयते ॥३०६॥

यदि तावत् पदार्थान्तरसहितताविशिष्टत्वं यथालङ्करणविशिष्ट इति(।) तदेतत् पूर्वपरादिप्रत्ययप्रतिभासिनि नास्ति। न खलु तत्र दिगपरा प्रतिभाति। अथ विलक्षणस्वन्तदा पूर्वपरयोर्घटयोर्न विलक्षणता विभाव्यते।

वैलक्षण्यञ्च स्वरूपमेव पदार्थस्य तत्प्रतिभासने निर्विकल्पकत्वमेव। विशिष्टप्रत्ययविषयत्वन्तु प्रत्युक्तं। तस्माद् यदि द्वयोः प्रतिभासने योजना ततः कल्पनेति न्याय एषः। न च द्वयोः प्रतिभासनमात्रङ कल्पनाऽपि तु योजनापूर्व्वप्रत्येकदर्शनपूर्व्विका।

ननु जात्यादयः प्रतिभासन्त एव। अन्वयिप्रत्ययस्योपलम्भात्। तदाह।

**यद्यप्यन्वयि विज्ञानं शब्दव्यक्त्यवभासि तत्।**
**वर्णाकृत्यक्षराकारशून्यङ्गोत्वं हि वर्ण्यते ॥१४७॥**
**समानत्वेपि तस्यैव नेक्षणं नेत्रगोचरे।**
**प्रतिभासद्वयाभावाद् बुद्धेर्भेदश्च दुर्लभः ॥१४८॥**

यत् खल्वन्वयि विज्ञानन्तत्तु न सामान्यमपरम्प्रतिभाति। अनुगतरूपम्प्रतिभातीति चेत्। न। शब्दव्यक्तिव्यतिरेकेणापरस्याप्रतिभासनात्। शब्दात् समानाकारः प्रत्ययः प्रतिभातीति चेत्। न। यथा दृष्टवर्ण्णसंस्थानतया स्मरणात्। न चात्रानुगमोऽपरः प्रतिभासते। वर्ण्णसंस्थानाकारमात्रस्य प्रतिभासनात्। नाममात्रसङ्गम एव सर्वेषामनुयायी। अयमपि गौरयमपि च गौरिति नाम समानमर्थक्रिया च। अथवा परामर्शप्रत्ययस्यैव समानता नार्थस्य कस्यचित्।

अथ स एव शब्दादुपजायमानोऽस्पष्ट आकारः सामान्यम्। सर्वत्र समानत्वात्। न(।) तस्यापि प्रतिनियतविकल्परूपत्वात्। गौरित्युक्ते कदाचिच्छाबलेयः कदाचिद् बाहुलेय इत्यादि प्रतीतेः। न समानाकारताप्रतीतिर्यथानुभवस्मरणात्। अनेन शब्देन सर्वेषाम्प्राक् सम्बन्धदृष्टेः। नवस्वर्थेषु गोशब्दवत्[1]।

ननु प्रतिनियतत्वाद्वागादीनान्नवानामर्थानान्तदुपदर्शनेन सङ्केतः सम्भवति क्रियाग्रहणयोर्विषयः। अप्रतिनियमे तु व्यक्तीनाङ्कथं सङ्केतग्रहः करणम्वा। एतदुत्तरत्र वक्ष्यामः। तस्यैव वा समानत्वे नेक्षणं नेत्रविषयत्वे। नहि नेत्रविज्ञाने स्पष्टप्रतिभासिनि मन्दप्रतिभासः स एवायमिति प्रत्ययो भवत्येवेति चेत्। न। स्पष्टास्पष्टप्रतिभासे एकत्वायोगात् कारणभेदाच्चाचक्षुरादिवासनानिमित्तत्वात्। अतश्चक्षुरादिजनितायाम्बुद्धौ प्रतिभासद्वयस्याभावः।

अथ स्पष्टास्पष्टप्रतिभासिनी बुद्धिरेकैवासौ यदि नामाकारहेत्वभेदः। तत्रेदमुच्यते। यदि प्रतिभासकारणभेदेपि न भेदो बुद्धीनामन्यत्रापि भेदो दुर्लभः स्यात्। सर्वत्र समानकालभाविनी प्रत्यक्षानुमानबुद्धिरेकैव स्यात्।

ननु समवायसम्बन्धस्य कथमग्रहः। जात्यादेर्हि विवेकेनावधारणन्नास्ति(।) समवायसद्भावादेव(।) नेदं सधीयो यतः।

**समवायग्रहादक्षैः सम्बन्धादर्शनं स्थितं।**

अतीन्द्रियत्वात् समवायस्य न चक्षुरादिना वेदनसम्भव इति स्वयमेवैतद् व्यवस्थितम्वः। अथेह तन्तुषु पर इति व्यवहारात् समवायः। नैतदस्ति(।) यतः।

**पटस्तन्तुष्विहेत्यादिशब्दाश्चेमे स्वयङ्कृताः ॥ १४९ ॥**

न खलु तन्तु(षु)[2]पटः शृङ्गादिषु गौरिति क्वचिद् बुद्धयः। तदभावात् कथं समवायगतिः। यतः।

**शृङ्ग गवीति लोके स्याच्छृङ्गे गौरित्यलौकिकं।**

गवि शृङ्गमिति हि बुद्धयः प्रवर्त्तन्ते न च तेऽत्र समवेताः सास्नादयः। यश्च तेषु समवेत इष्यते स नाधेयतया प्रतीयते। तस्मादियम्बुद्धिर्न समवायाद्(।)

## (३) अवयविनिरासः

अपि तु।

**गवाख्यपरिशिष्टाङ्गविच्छेदानुपलम्भनात् ॥ १५० ॥**

समवायाभावेपीह बुद्धिरुपलभ्यत एव। अस्तमनसमये वृक्षे सूर्य इति यथा। परिशिष्टाङ्गस्य गौरिति कल्पनायां शृङ्गस्याधेयकल्पनाच्छृङ्गङ्गवीति प्रत्ययः। तथा हि न शृङ्गादिसमुदायव्यतिरेकेणापरो गौरस्ति यस्याधाराधेयभावः(।) कल्पनामात्रमेवैतत्।

अथापि स्याद्(।) एषु तन्तुषु पट इति भवत्येवायम्प्रत्यय इति। नैतदस्ति।

---

[1] T. नवसु अर्थेषु गोशब्दवृत्तिवत्  [2] T. न खलु तन्तुषु

**तैस्तन्तुभिरियं शाटीत्युत्तरङ्कार्यमुच्यते ।**
**तन्तुसंस्कारसम्भूतन्नैककालङ्कथञ्चन ॥१५१॥**

तन्तुशब्दो हि पटप्राग्भाविन्यवस्थाविशेषे वर्त्तते । तदुत्तरकालभावी त्ववस्थाविशेषः पट इति । ततस्तैस्तन्तुभिरियं शाटीति तदुत्तरकालभावि कार्यम्व्यपदिश्यते । न तु तन्तुसमानकालः । ततः कुत आधाराधेयभावः । नहि भिन्नकालानामाधाराधेयभावः । कार्यकारणभाव एव केवलोऽसम्बद्धता वा । तस्मादाधाराधेयभावोपि कार्यकारणभावविशेष एव । एकसामग्र्यधीनतया । एकसामग्र्यधीनयोरेव कुण्डतदाधेयाभिमतयोस्तथा व्यवहारात् । न खल्वन्या स्थितिस्तत्स्वरूपविशेषात् । तन्तुपटयोः पुनरेषापि कल्पना नास्ति । ततो यथाकथञ्चित् कल्पनैव केवला न त्वाधाराधेयभावो भेदाभावात् । नहि पटाव[1]स्थायान्तन्तवः सन्ति ।

ननु यदि नास्ति भेदः पटावस्थायान्तन्त्वभावात्कथमेते तन्तव इति प्रत्यययोऽयम्पट इति च । नैतदस्ति । न परमार्थतस्तत्र द्वयमस्ति । यतः ।

**कारणारोपतः कश्चिदेकापोद्धारतोपि वा ।**
**तन्त्वाख्याम्वर्त्तयेत् कार्ये दर्शयन्नाश्रयं श्रुतेः ॥१५२॥**

तन्तुकार्यो हि पट एव( । ) तदानीन्न तन्तवः । तन्तुप्रत्ययस्तु कारणस्वरूपारोपतो न परमार्थतः (।) तथा हि पूर्वस्मरणे सत्येते तन्तव इति प्रत्ययः । एकापोहेन वा । नह्येकैकतन्त्वपोहे पटो नामापरोस्ति । त एव समुदिताः सेनावनादिवत् पटव्यपदेशभाज इति । सम्वृतिसन्नेव पटः । तेनाधाराधेयभावः कल्पित एव ।

यदि तर्हि पटो नाम नास्ति कथम्पटशब्दः प्रवर्त्तते । नहि निबन्धनम्विना शब्दाः प्रवर्त्तन्ते । तत्रोत्तरं ।

**उपकार्योपकारित्वम्विच्छेदाद् दृष्टिरेव वा ।**

पटव्यपदेशस्य निबन्धनमित्युपस्कारः । अत्रोपकार्योपकरित्वं । त एव तन्तवः परस्परमुपकार्योपकारकभावेन व्यवस्थिताः । संयोगविशेषतो वा प्रावरणादिकामर्थक्रियामुपजनयन्तः पटव्यपदेशभाज इति तेषामुपकार्योपकारकभावः पट इति व्यपदिश्यते । यथा च तन्तवस्तुरिवेमाद्युपकारविरहे विच्छिन्नानायासेन परस्परतो नीयन्ते न तथा पटावस्थाः । ततोसौ विच्छेदादृष्टिर्निबन्धनमिति न व्यपदेशादेवार्थान्तरङ्कल्पनीयं । प्रमाणं हि पदार्थकल्पनानिबन्धनं । व्यपदेशाः पुनरन्यथापि प्रवर्त्तन्ते प्रायशः ।

यदि तर्हि व्यतिरिक्तम्व्यपदेशस्य निबन्धनन्नास्ति तथा सति पटव्यपदेशो न मुख्यः स्यात् । **वा ही के** गोव्यपदेशवत् । **वा ही के** हि निःशौचतादि[2]निबन्धनोपि ततो व्यतिरिक्तस्य सामान्यस्य गोत्वस्याभावादमुख्यो गोव्यपदेशः । तथोपकार्योपकारकत्वादिनिबन्धनोपि पटव्यपदेशः स्यात् । अत्र परिहारः ।

**मुख्यं यदस्खलज्ज्ञानमादिसङ्केतगोचरः ॥१५३॥**

यदादितः सङ्केतविषयन्तन्मुख्यं । आदिसङ्केतगोचरत्वेनास्खलत्(?ज्ञ्)ज्ञानत्वात् ।

---

[1] T. पटा०  [2] T. खुर्-बु-व-ल गु'चङ-स्त्र-छुङ-व-ल-सोगस्

यत्तु सङ्केतविषयवस्तुसाधर्म्येण प्रवर्त्तते तत्त्वाध्यारोपात् तदमुख्यं। स्खलत् प्रत्ययविषयत्वात्। ऋजुप्रक्रमाभावे सादृश्यादाधेयान्तरानुसरणेन स्खलनं। तत्सादृश्यं हि न तदनुसरणम्विना। तस्मान्न मुख्यामुख्यभेदादर्थान्तरन्निमित्तम्पटादिशब्दानां।

अथाऽनुमानाज्जात्यादिसाधनं। तथा हि।

तद्रूपः प्रत्ययोऽन्यत्र स समानान्निमित्ततः। यथा दण्डीति सम्वित्तिः समानादेव दण्डतः ॥३०७॥

समानदण्डनिमित्ता हि विलक्षणेष्वपि पुरुषेषु दण्डीति समाना सम्वित्तिः। शावलेयादिषु गौरिति बुद्धिर्विलक्षणेषु तत्र गोत्वन्निमित्तन्दण्डवत्। तदनुत्तरं।

## (४) नानुमानतः सामान्यसिद्धिः

यतः।

अनुमानञ्च जात्यादौ वस्तुनो नास्ति भेदिनि।
सर्वत्र व्यपदेशो हि दण्डादेरपि साम्वृतात् ॥१५४॥

यदि साम्वृतन्निमित्तं समानमाश्रित्य गवादिप्रत्ययाः शावलेयादिषु वर्त्तन्ते। तदेतत् सिद्धसाधनमेव। यतो दण्डीत्यपि प्रत्यये न दण्डनिमित्तता। अन्यथा सर्व एव दण्डिनः स्युः। अथ सम्बन्धाद् भवति। सम्बन्धोपि सम्बद्ध इति प्रत्ययादेव गम्यते। तत्रापि सम्बन्धान्तरकल्पनायामनवस्था। अथ सम्बन्धमन्तरेण सम्बन्धीति प्रत्ययः। तथा सति सम्बन्धोपि कल्पित एव ततः साम्वृतादेव निमित्ताद् दण्डीति प्रत्ययः। स एव सम्बन्धः समानः सर्वस्य। अथ दण्डसंश्लेषः सत्य एव न साम्वृतः। तदप्यसत्(।) तद्व्यतिरेकेण संश्लेषाभावात्। द्वयमात्रे च संश्लेषे यथा दण्डी पुरुषस्तथा पुरुषी दण्ड इत्यापि स्यात्। अथवा द्वयमात्रप्रतिभासने परस्परं संसृष्टावेताविति भवेत् प्रत्ययो न तयोर्विशेष्यविशेषणभावः। अथ दण्ड उपकारकत्वादप्रधानन्तथा सति स एवोपकारकभावः साम्वृतस्तत्र निमित्तं। स च प्रत्यक्षे न प्रतिभाति ततो न तद्विशिष्टप्रत्ययनैन्द्रियकः।

अथापि स्याद्(।)विशेषणभावः साम्वृतः विशेषणन्तु दण्डः पारमार्थिक एव तथा गोत्वादिकमपि। न। दण्डस्य पारमार्थिकत्वम्विवेकेन प्रत्यक्षेण ग्रहणात्। परमार्थत्वन्नैवञ्जात्यादेः समवायतो न विवेकेन ग्रहणमिति चेत्। समवायस्य कुतो भेदेनाप्रतिभासनं। समवायान्तराच्चेत्। अनवस्था। किञ्च।

पारमार्थिकताऽर्थस्य तत्राप्यस्त्येव सङ्गता। वाहदोहादिकङ्कार्यम्परमार्थतयास्तु तत् ॥३०८॥

यथैव हि दण्डः पारमार्थिकः समानो दण्डीति प्रत्ययनिमित्तन्तथा वाहादयोपि गोत्वादिनिमित्तं शृङ्गादयो वा। शृङ्गादीनाम्भेद इति चेत्। दण्डादेरपि समानो भेद इति कथन्दण्डीति दृष्टान्तः। तस्माद् भिन्नमेवाभेदेन प्रतीयमानम्।

जातिर्वाहादि सम्बन्धापरा क्वचिदीक्ष्यते। तेषु गोत्वङ्किमत्रेति शृङ्गादि व्यपदिश्यते ॥३०९॥

अथैव हि ब्राह्मणादिजातिप्रश्ने गोत्राध्ययनादयो व्यपदिश्यन्ते। न तु जातिस्तथा गोत्वेपि वाहदोहादिव्यपदेश इति नापरा जातिरस्ति प्रमाणविषयस्तस्मात् पारमार्थिकन्नि-

मित्तन्नास्त्येव क्वचिदव्यपदेशविषयः साक्षादिति न जातिः परमार्थः व्यपदेशनिमित्तमेव जातिरिष्यते। स च साम्वृतादेवेति व्यर्थिका जातिः।

किञ्च। यदि सर्वत्र व्यपदेशः पारमार्थिकन्निमित्तमाश्रित्य प्रवर्त्तते तदाऽनपेक्षता शब्दस्य न स्याद् (।) दृश्यते च। यतः।

**वस्तुप्रासादमालादिशब्दाश्चान्यानपेक्षिणः।**

षट्सु पदार्थेषु[1] यो व्यपदेशः प्रासादमालादिव्यपदेशश्च यः प्रासादादिषु स नापरन्निमित्तमपेक्षते। नहि द्रव्यादिपदार्थेषु वस्तुत्वन्नामापरं। न तावद् द्रव्यम्वस्तुत्वन्न हि द्रव्यङ्गुणादिषु समवेतं संयुक्तम्वा। न च प्रासादोपि द्रव्यं। संयोगो भविष्यति विजातीयानारम्भात्। अत्राह। यद्यपि गेहो नाम संयोगो माला तु किं। तदाह।

**गेहो यद्यपि संयोगस्तन्माला किन्न[2] तद्भवेत् ॥१५५॥**

न द्रव्यन्न गुणो न कर्म्म द्रव्यस्य गुणेऽभावात्। न गुणस्तत एव। न च कर्म द्रव्याश्रितत्वात् कर्मणः। न समवायविशेषौ तत्कार्याभावात्। ननु जातिर्माला भविष्यति जातेर्गुणेपि भावात्। तदाह।

**जातिश्चेद् गेह एकोपि मालेत्युच्येत वृक्षवत्।**

यथैकोपि वृक्षो धवादिक उच्यते वृक्षजातियोगात् तथा मालैकोपि गेहो जातेरेकैकव्यपदेशनिमित्तत्वात्। अथ सन्निवेशविशेषो माला। एकदिङ्मुखावस्थितयो हि भावा युगपद्भाविनो मालाव्यपदेशभाजः। सोपि सन्निवेशो न द्रव्यादिव्यतिरिक्तः। तदभ्युपगमे सप्तमपदार्थान्तरप्रसङ्गात्। तदन्तर्भावे चोक्तो दोषः।

यदि च माला जातिस्तदा(।)

**मालाबहुत्वे तच्छब्दः कथं जातेरजातितः ॥१५६॥[3]**

मालाबहुत्वे तच्छब्दः कथम्माला एता इति। जातेरजातितः। न हि जातौ जातिरभ्युपगम्यते। अभ्युपगमे वा जातिरि(ति) तत्रापि व्यपदेशो निर्निबन्धनो भवेत्। जातिनिबन्धनत्वे तत्राप्यपरा जातिरित्यसमञ्जसं। तथा हि।

जातिर्जातिषु सामान्यव्यवहाराय कल्पिता। अत्रापि व्यवहारोसौ परजातिनिबन्धनः ॥३१०॥

सापि जातिर्व्यवहृतेर्विषयः परजातितः। इत्यनन्तप्रत्ययत्वात् प्रतीतेर्न समञ्जसम् ॥३११॥

ततो न मालादिशब्दवृत्तिः सनिबन्धना।

किञ्च। मालादौ महती मालेत्यादिर्महत्वादिव्यवहारो यः स कथम्भवेत् महत्त्वगुणस्य द्रव्यसमवायान्न च मालादिकन्द्रव्यं। उपचारादिति चेत्। तदसत्। यतः।

**मालादौ च महत्त्वादिरिष्टो यश्चौपचारिकः।**
**मुख्याविशिष्टविज्ञानग्राह्यत्वान्नोपचारिकः ॥१५७॥**

---

[1] तत्रैव—"द्रव्यादि ष······स्तव्यं। अधिकत्वे सप्तमः पदार्थः।"

[2] M. किन्तु

[3] T. नात्रायं कारिकांशः

मालादिषु महत्वोपचार इति कुत एतत्। नह्यसावुपचरितत्वेन प्रतीयते। न चाप्रतीयमानन्तथा तथेति शक्यमभ्युपगन्तुम्प्रतीतिनिबन्धनत्वादुपगमस्य। अर्थान्तरभूतस्य महत्त्वस्याभावादिति चेत्। स एवाभावः कुतः। अभावे सिद्धे उपचार उपचारे चाभाव इति सोऽयमितरेतराश्रयदोषः। मालाया अद्रव्यत्वान्महत्त्वं द्रव्यं धर्मो नेति चेत्। न। अद्रव्यत्वस्यैवासिद्धेः। क्रियावद् गुणवत् समवायिकारणन्द्रव्यमिति[1] द्रव्यलक्षणमस्ति। क्रियावत्वन्नास्तीति चेत्। न(।) समुदितस्यालक्षणत्वात्। नाकाशादीनाङ्क्रियावत्वङ क्वचित् क्रियावदादिसमुदायः क्वचित् किञ्चिल्लक्षणमिति। अथ महत्त्वमेव नास्ति परमार्थतो विचार्यमाणमिति न द्रव्यं। प्रत्ययस्य भावान्नास्तीति कुत एतत्। अमुख्यत्वात् प्रत्ययस्येत्यपि न सङ्गतम्। मुख्याविशिष्टत्वात्। यदि मुख्याविशिष्टस्यापि न मुख्यत्वम्मुख्यामुख्यविभाग एव न स्यात्। तस्माद् विशेषाभावात् सकलम्मुख्यन्न वा किञ्चिदिति न्याय एषः। तस्मान्न स्वविहितेयन्द्रव्यादिप्रक्रिया परस्य। न च मालाना म काचिद् वृक्षादि व्यतिरेकेणोपलभ्यते प्रत्ययमात्रमेतदवस्था न विशेषतः। तस्मान्न मालादौ महत्त्वादिशब्द उपचारितो न मुख्यः। मुख्यस्तावन्नास्त्यर्थान्तरनिमित्तत्वाभावात्। नाप्युपचरित उपचारनिमित्तस्याभावात्। यथा हि वनङ कुसुमितमिति वने कुसुमितत्त्वोपचार एकार्थसमवायतः। वृक्षेषु वनस्य कुसुमितत्वस्य समावेशात्।

अनन्यहेतुता तुल्या सा मुख्याभिमतेष्वपि।
पदार्थशब्दः कं हेतुमन्यं षट्सु[2] समीक्षते ॥ १५८॥

यदुक्तम्(।) अन्यहेतुर्मुख्योऽनन्यहेतुस्तदितर इति तदसम्भवि। यतो मुख्यार्थत्वेनापि येभिमता दण्डीत्येवमादयस्तेष्वपि नान्यो हेतुरिदानीमेव दण्डादेरपि साम्वृतादित्युक्तं। पदार्थशब्दश्च प्रवर्त्तमानः कमन्यं हेतुं षट्स्वपेक्षते द्रव्यादिषु। स्वरूपे च प्रवृत्तिनिबन्धने सैवानन्यहेतुता बलादापतेत्।

अथापि स्यात्। पदार्थशब्दो निमित्तान्तरेणैव प्रवृत्तः। स तत्र मुख्य इति युक्तं। यस्तु पुनर्महदादिव्यपदेशः स गुणनिमित्तको यत्र निमित्तमन्तरेण प्रवृत्तिमान् अवश्यमेव तत्र गौणस्तस्मात् सदर्थो मुख्यस्तदितरस्तु गौणः। तदप्यसत्। यतः।

यो यथा रूढितस्सिद्धस्तत्साम्याद्यस्तथोच्यते।
मुख्यो[3] गौणश्च भावेष्वप्यभावस्योपचारतः ॥ १५६॥

रूढितया निमित्तमन्तरेणान्यथा च प्रवृत्तौ मुख्य एव तेन समानत्वमपेक्ष्य यत्र प्रवृत्तस्तत्रामुख्यस्तथाभावेपि पुत्रादावभावोपचारदर्शनाद् रूढिरेव मुख्यतानिबन्धनं सदर्थतायामितरथा चान्यथा च विपर्ययो दृश्यते। निमित्ताभावो ह्यन्यथाभावे निबन्धनमुपचारस्य स्यात्।

यत्तु पुनरुक्तम्(।) अनिबन्धन एव पदार्थशब्दः स तथैव मुख्य इति। एवन्तर्हि निमित्तप्रयुक्तता न मुख्यता निबन्धनन्तदभावेपि भावात्। यदभावे हि यद् भवति तत्तस्य निबन्धनन्न भवति। अन्वयव्यतिरेकलक्षणत्वात् कार्यकारणतायाः। कारणञ्च निबन्धनं। अथ सैव रूढिः शब्दस्य प्रवृत्तिनिमित्तमन्तरेण कथं। तदप्यसत्। यतः।

[1] T. वैशेषिकसूत्रे··· ··· [2] M. षट्कं [3] M. यत्र

सङ्केतान्वयिनी रूढिर्वक्तुरिच्छान्वयी च सः ।
क्रियते व्यवहारार्थञ्छन्दः शब्दाङ्गनामवत् ॥ १६० ॥

यत्र सङ्केतवृत्तिः स रूढोर्थः । सङ्केतोपि वक्तुरिच्छानिबन्धनः । नहि शब्दाः प्रवृत्तिनिमित्तमस्तीत्येव वक्तुरिच्छामन्तरेणापि प्रवर्त्तन्ते । प्रवृत्तिनिमित्तमन्तरेणापीच्छयापि प्रवर्त्तमाना उपलभ्यन्त एव । यदा सिंहादिसंज्ञाः पुरुषे प्रवर्त्तन्ते । तस्मादिच्छायाः स्वातन्त्र्यात् सैव प्रवृत्तिनिबन्धनमिति न्याय्यं । स एव निमित्तमन्तरेण कस्मात् सङ्केतेन शब्दः प्रवर्त्त्यते । निमित्तेपि कस्माद् (।) व्यवहारार्थमिति चेत् । सोयम्व्यवहारः प्रवृत्तिनिमित्तमन्तरेणापि समानः । अर्थक्रियाविषये हि व्यवहारः । न च निमित्तमन्तरेणार्थक्रिया न भवति । निमित्तमन्तरेण न भवतीति चेत् । नहि ब्राह्मणा जातिमन्तरेणार्थक्रिया समर्थाः । न (।) अत्र प्रमाणाभावात् । न हि काचिज्जातिरस्तीति प्रमाणं । यावदेव दृश्यते रूपमन्वयव्यतिरेकाभ्यां समर्थन्तावदेवोपयोगवदिति युक्तमन्यथाऽतिप्रसङ्गात् । तस्मान्निमित्तमन्तरेणापि व्यवहारार्थसङ्केतकरणं । यथा छन्दः शब्दस्य गायत्र्यादिनामसङ्केतः प्रकृत्यादि सङ्केतश्च । नहि तत्र किञ्चिन्निमित्तं । गायत्र्यादीनाम्प्रकृत्यादीनाञ्च यथेष्टम्परिकल्पनात् । न हि वर्ण्णक्रमे किञ्चिन्निमित्तमस्त्यन्यथाऽगृहीतसङ्केतोपि प्रतीयात् । विद्यमानं हि यत् प्रतीयते किन्तत्र सङ्केतेन । सङ्केतेन व्यज्यत इति चेत् । न(।) प्रतीतिमन्तरेण तस्यैवाभावात् । न ह्यप्रतीते सङ्केतः । सङ्केतादेव प्रतीतिरिति चेत् । इतरेतराश्रयदोषप्रसङ्गात् ।

न यावद् दृश्यते वस्तु सङ्केतस्याप्रवर्त्तनं । सङ्केतस्याप्रवृत्तौ च कुतो दर्श(न)सम्भवः ॥३१२॥

प्रकृत्यादयस्तु न व्यवस्थितरूपाः । तथा हि ।

केषाञ्चित् सम्भवीत्येष धातुः पश्चादडामः । अपरेषामसम्भवि सन्तीत्यादावलोपिता ॥३१३॥

तस्मादेवम्विधे विषये व्यवहारमात्रप्रयोजन एव सङ्केतो न व्यतिरिक्तनिमित्तप्रयुक्तः । न च सङ्केत इच्छानुबन्धी निमित्त एव जातिर्भवति । व्यभिचारदर्शनेन व्यभिचारात् तस्माद् वस्तुप्रासादादिशब्दा न वस्तुभूतव्यतिरिक्तपदार्थनिबन्धनास्ततो व्यपदेशसाम्यसद्भावान्न सामान्यम्परिकल्पनीयं । कथन्तर्हि बुद्धिशब्दयोरनुगम इत्याह । न वस्त्वन्वयात् प्रत्ययस्यान्वयोऽपि तु वासनाबीजप्रबोधादन्वयः (।) यथा ऽशोभनेपि वस्तुन्यभ्यासवशाच्छोभनत्वान्वयः । तथा हि ।

वस्तुधर्मतयैवार्थास्तादृग्विज्ञानकारणम् ।
भेदेपि यत्र तज्ज्ञानन्तास्तथा[1] प्रतिपद्यते ॥१६१॥
ज्ञानान्यपि तथा भेदेऽभेदप्रत्यवमर्शने ।
इत्येतत्कार्यविश्लेषस्यान्वयो नैकवस्तुनः ॥१६२॥

वस्तुनि हि तथा भूतम्विज्ञानञ्जनयन्ति येन वासनाप्रबोधप्रक्रमेणैकाकारस्सर्वत्रपरामर्शप्रत्यय उदयमासादयति सुखादिवेदनमिव । न हि सुखादिविज्ञानानां सुखत्वं नाम पदार्थगतन्निबन्धनमस्ति । तथात्वे दुखस्यानुदयप्रसङ्गात् । अथ तत्त्वमप्यस्ति । तदोभयरूपप्रतीतिप्रसङ्गो वर्ण्णसंस्थानप्रतीतिवत् ।

---

[1] M. ज्ञानात्तान्तथा

अथादृष्टेन निबन्ध(न)स्त्रैवं। तथा सत्यदृष्टमेव तथाभूताम्प्रतीतिमेव जनयतीति किन्नेष्यते। नियमकार्यदृष्टन्न विधानकारीति चेत्। न। प्रमाणाभावात्। विधि-नियमसम्भवे विधिरेव ज्यायान्। नियमे अनेककल्पनाश्रयसम्भवात्। तथा हि।

सुखाद्यन्विततार्थस्य कल्पनीया तथाऽपरम्। अदृष्टम्विधिकल्पे तु केवला दृष्टकल्पना ॥३१४॥

तस्माद् भेदे सत्येव क्वचिदभेदपरामर्शः। तदन्वयादेव सामर्थ्यादर्थसाधनं। किम-न्तर्गडुना सामान्येन। अन्तरकारणनिमित्तन्तु प्रत्ययानामवश्याभ्युपगन्तव्यं। अन्यथा सामान्यतद्वतोराकारद्वयप्रतीतिप्रसङ्गात्। समवायादेकलोलीभाव इति चेत्। न(।) समवायस्यापि तृतीयाकारप्रतीतिप्रसङ्गात्। तस्मात् प्रतीत्य शक्तिरेव तत्रान्तरकारणा-धीनाभ्युपगन्तव्या। तथा ज्ञानान्यपितदेकपरामर्शजननादेवान्वयीनि जातयश्चेति (।) न (।) अपरजात्यभ्युपगमो युक्तः। शेषः प्रसङ्ग उक्त एव। तेनाभेदप्रत्यवमर्शेन कार्यत्वात् सामान्यव्यवहारः। तदेव तत्कार्यत्वं सामान्यमिति चेत्। न। स्वरूपव्यति-रेकेण तत्कार्यत्वस्याभावात्। अथापि स्यात्। तथा सति क्षित्युदकादीनामप्यङ्कुरकार्यत्व-सद्भावादेकताप्रतीतिः स्यात्। तत्कार्यत्वप्रतीतिरस्त्येव सामान्यप्रतीतिरितिचेत्। न। गोत्वप्रत्ययवदेव स्यात्। तस्माद् भेदानुपलक्षणात् सामान्यप्रतीतिर्नान्यथेति स्थितमेतत्।

अथ सामान्यमेव तत्र प्रतीयत इति किन्नेष्यते। न वात्र नास्ति सामान्यमिति बाध-कप्रत्ययोदयः। न च विवादायासेन प्रयोजनं। अथैवानेककल्पनायासस्तथा विवादायासोपि समानः प्रसङ्गः। तदप्यसत्। यतः।

विवादमात्रसांकर्यमिति[२] सामान्यमिष्यते। यदि सम्वृतिसत् प्राप्तमविचारैकगोचरः ॥३१५॥

नहि सामान्यम्विद्यते विचार्यमाणं। विचाराभावादभ्युपगम्यमानम् विचारैकरमणीय-मिति प्राप्तं। एककार्यता तु।

**वस्तूनाम्विद्यते तस्मात् तन्निष्ठा वस्तुनि श्रुतिः।**

तदेवैककार्यतालक्षणमतत्कार्येभ्योव्यावर्त्तमानं सामान्यम्विद्यते शावलेयादीनां। ततस्तत्प्रवृत्तिनिमित्तप्रयुक्तैव वस्तुनि श्रुतिः प्रवर्त्तताम्।

कथन्तर्हि विश्लेषस्यानाकारत्वादाकारवती सामान्यबुद्धिः। अत्र परिहारः। आका-रवद् बुद्धिसम्बन्ध एव नियतस्तदन्यविश्लेषः सा च वासनासङ्गमादाकारवती पूर्वपूर्वताभूत-प्रत्ययपरम्परायाता हि सा बुद्धिः। न च गौरयमिति प्रत्यये शावलेयादिव्यतिरिक्तमपर-म्प्रमेयमस्ति। प्रमेयाकारप्रतिभासेन च प्रमेयव्यवस्थानं प्रमेयाकारशून्यप्रत्ययमात्रात्। यदि तर्हि वासनाऽनादितासामर्थ्यादयम्प्रत्ययस्तत्र प्रतिबद्धत्वात् तदविसम्वाद्येवास्तु कथम्वस्तु-सम्वादः। तस्मान्न तत्कार्यव्यावृत्तिपरिच्छेदेन भवितव्यं(।)सा च तत्कार्यता तस्य बाह्यस्य शक्तिरेव व्यावृत्तिर्वा बाह्यस्वरूपमेव। तस्य चान्वये सैव जातिर्न जातिप्रतिक्षेपः। तस्य च परिच्छेदे बाह्यमेव परिच्छिन्नम्भवेत्। न बाह्यरूपस्य व्यवच्छेदस्याभावात्।

---

२ T. चोंद्-प-चम्-शिग्-ऽद्रेन्-पऽि-फियर = (विवादमात्रसांकर्यमिति)

## (५) अन्यापोहचिन्ता

बाह्यशक्तिव्यवच्छेदनिष्ठाऽभावेपि तच्छ्रुतिः ॥१६३॥
विकल्पप्रतिबिम्बेषु तन्निष्ठेषु निबध्यते।
ततोऽन्यापोहनिष्ठत्वादुक्ताऽन्यापोहकृच्छ्रुतिः ॥१६४॥

यद्यपि नाम बाह्यस्वरूपासंस्पर्शी विकल्पः शब्दादुदयवान्। तथापि तद्विकल्पप्रतिबिम्बकम्बाह्यनिष्ठम्बाह्यद्वारेणोत्पत्तेः पारम्पर्येणोत्पत्तेरर्थासंस्पर्शि बाह्यनिष्ठमपि। तच्च प्रतिबिम्बकमन्यव्यावृत्तपदार्थजनितमन्यव्यावृत्तमेव प्रतिभाति। तदव्यतिरिक्तैव व्यावृत्तिः शब्दात्प्रतीयते न बाह्यव्यतिरिक्ता। तेनान्यव्यावृत्ताकारविकल्पजननादन्यापोहकृच्छ्रुतिरुक्ता। अन्यव्यावृत्तेषु प्रवर्त्तनाच्च। ततो हि विकल्पादबाह्यसंस्पर्शिनोप्यन्यव्यावृत्तेषु व्यवहारिणां वृत्तेरन्यव्यावृत्तिविषय उच्यते।

ननु बुद्धिव्यतिरिक्तम्विकल्पस्य ग्राह्यन्तत्कथन्तस्य बुद्धिरूपता। न हि तद्व्यतिरेकेण प्रतिभासमानन्तदेव भवति। भेदप्रतिभासो हि भेदलक्षणन्तदन्यस्य भेदनिबन्धनस्याभावात्। नाभेदप्रतिभासमात्रस्यातल्लक्षणत्वात्। अभ्रान्तो हि भेदप्रतिभासो भेदलक्षणन्न तु यः कश्चित्। इदन्तु पुनः।

व्यतिरेकीव यज्ज्ञाने भात्यर्थप्रतिबिम्बकम्।
शब्दात्तदपि नार्थात्मा भ्रान्तिस्सा वासनामयी[१] ॥१६५॥

यद्यपि वर्णसंस्थानप्रतिभासि तत्तथापि न तद्वस्त्वपि तु तत्प्रतिबिम्बकं। को विरोध इति चेत्। यतो वासनालक्षणाद्धेतोरुत्पत्तिरस्य तथापि कस्मादवस्तु। आन्तरकारणमात्राधीनत्वात् तैमिरिकोपलब्धकेशादिवत्। अथ वासनाबलादुत्पद्यमानमपि वस्त्विव। नैवम्वस्तु भवतीति वक्ष्यामः।

तदेव तर्हि बुद्धिलक्षणम्वस्तुशब्देन विधीयते। तदेवान्यापोहो वस्तुभूत इति केचित्।

तस्याभिधाने श्रुतिभिरर्थे कोंऽशोवगम्यते।
तस्यागतौ च सङ्केतक्रिया व्यर्था तदर्थिका ॥१६६॥

अपि नाम शब्दाद् वस्तुलेशप्रतिपत्तिः स्यादिति सङ्केतः क्रियते न बुद्धिप्रतिबिम्बकमात्रप्रतिपादनाय। अतः सङ्केतक्रियाव्यर्थिका वस्त्ववबोधनार्थत्वात् तस्याः। न तर्ह्यन्यापोहोपि शब्दार्थः। ततस्तत्रापि सङ्केतक्रिया न भवेत्। तस्याप्यन्यापोहस्य बुद्ध्याकारत्वात्। न(।) शब्दार्थाशब्दस्यैवान्यापोहत्वात्। यतः।

शब्दोर्थांशकमाहेति तत्रान्यापोह उच्यते।
आकारः स च नार्थेस्ति तम्वदन्नर्थभाक् कथम् ॥१६७॥

यदि स एवान्यापोहस्तदा तस्य प्रतिपादने नार्थांशताऽन्यापोहस्य स्यात्। अर्थांश एव ह्यन्यापोहोर्थांशं शब्दः कमाहेति प्रश्ने प्रतिवचनमन्यापोह इति। स चार्थे नास्त्याकारो

---

[१] M. वासनोद्भवा

बुद्ध्याकारत्वात्। यो हि नार्थेन तत्प्रतिपत्त्यार्थप्रतिपत्तिस्तैमिरिककेशादिप्रतिपत्तिवत्। किञ्च। सामान्यमन्यापोह इतीष्यते(।) यतः।

**शब्दस्यान्वयिनः कार्यमर्थेनान्वयिना स च।**
**अनन्वयी धियोऽभेदाद् दर्शनाभ्यासनिर्मितः ॥१६८॥**

शब्दो हि शावलेयादिष्वन्वयी दृश्यते (।) तस्य चान्वयिनोऽन्वयिनार्थेन प्रयोजनेन भवितव्यं। स चाकारोऽनन्वयी धियो भेदाभावात्। दर्शनाभ्यासेन जनितत्वाद् बुद्धिवदेवानन्वयी। न हि कार्यस्यान्वयित्वं युक्तङ कारणभेदेन भेदात्। तस्मादनन्वयित्वादेव नापोहः प्रतिबिम्बकं। तस्मान्न वस्त्वन्यापोहो नापि बुद्ध्याकारः। कथन्तर्हि शब्दादर्थप्रतीतौ सामान्यप्रतीतिः। वस्तुगतव्यावृत्तिप्रतीतौ हि वस्त्वेव प्रतिपन्नन्न च तत्सामान्यं।

अथ वस्तु न प्रतीयते कथम्वस्त्वशरूपान्यापोहगतिः। अत्राह।

**तद्रूपारोपगत्याऽन्यव्यावृत्ताधिगतेः पुनः।**
**शब्दार्थोऽर्थः स एवेति वचनेन विरुध्यते ॥१६९॥**

बुद्धिरूपमेव वस्त्वित्यारोपेण तदेकत्वाध्यवसायात् प्रत्येति न परमार्थतः। तच्चान्यव्यावृत्तमित्यन्यापोहः शब्दार्थः। तच्च सर्वत्र बुद्धिरूप(बाह्येर्थेनारोप)मध्यारोप्यते। ततः सामान्य मन्यापोहो वस्त्वंशश्चेति प्रतीयते।

**मिथ्यावभासिनो वैते प्रत्ययाः शब्दनिर्मिताः।**
**अनुयान्तीममर्थांशमिति चापोहकृच्छ्रुतिः ॥१७०॥**

मिथ्यावभासत्वान्न वस्तुविषयः। अन्यापोहस्य च सत्यत्वान्न हि तत्र बाधकमस्ति(।) यथा वस्त्वाकारे बाधको हि न तत्र प्रवर्त्तते(।) अन्यव्यावृत्तोयन्न भवतीति। ततो बाधकभावाभावाभ्यामप्रतिपन्नेतरव्यवस्था सम्व्यवहारतो न परमार्थतः।

तस्मादबाधितत्वादन्यापोहप्रतिपादनस्य बाधितत्वादितरस्यापोहः शब्दार्थ इत्यवगम्यते। तेन तमन्यापोहं शब्दार्थमनुयान्ति शब्दा अनिष्टपरिहारेण च वर्त्तयन्तीति सान्यापोहकारिणी श्रुतिः।

अथवा विकल्पप्रतिबिम्बकमेवान्यापोहो बाह्यत्वेनाध्यवसितो भवतीति न दोषो न तु स्वेन रूपेण। तस्मान्न किञ्चित् स्वेन रूपेणाविधेयं शब्दस्येति न विधिः शब्दार्थः।

ननु स्वरूपे प्रतिभासमाने ज्ञानस्य कथम्बाह्ये प्रवर्त्तते। बाह्यत्वेनाध्यवसायात्। कोयमध्यवसायः। तद्व्यवहारविषयतया व्यवस्थानं। कथमन्योन्य[1]व्यवव्यवहारविषयः। तत्रानुरागाभ्यासात् सादृश्याद् गोत्रस्खलनवत्।

ननु तत्रान्यरूपाध्यारोपोऽध्यवसायः। न(।) अध्यारोपस्यापि ज्ञानान्तरत्वात्। यदि तेन तद् वस्तुप्रतिपन्नङ कोध्यारोपः। अन्यत्र प्रतिपन्नमिति चेत्। किन्तदन्यत्रास्ति। तथेति चेत्। नाध्यारोपः सत्यत्वात्। अथ नास्ति ज्ञानमेव तर्हि कथमन्यस्याध्यारोपः। यत्रापि तदध्यारोप्यते तदपि ज्ञानरूपमर्थरूपम्वा। तदा तत्रारोप इति कोर्थः। तत्र तत्प्रतिपन्नन्तेन सह प्रतिपन्नन्तदा च नाध्यारोपः। अथाविद्यमानमेव विद्यमानतया प्रतीयते।

---

[1] तत्रैव—"अन्येनान्यस्य व्यवहार इति"।

किमविद्यमानता प्रतिपन्ना। अन्येन प्रतिपन्ना तद्रूपस्यानुपलम्भादिति चेत्। न(।) तस्यागोचरत्वात् कथमभावः। गोचरीभूतस्य हि वस्तुनोऽनुपलम्भो गमकः। इन्द्रियवैगुण्यात् तथा प्रतिपत्तिरिति चेत्। अपूर्वप्रतिपत्तिरेव सा, नाविद्यमानप्रतिपत्तिः। तस्य तदैव विद्यमानत्वात्।

अथाप्राप्य व्यवहारन्न करोति प्राप्य व्यवहारकरणात्। एवन्तर्हि तदन्यव्यवहारकरणमेव तदन्याध्यारोप इति, तदेवायातमन्यव्यवहारविषयीकरणमध्यारोपः।

तस्मादन्यापोहः शब्दार्थः। अत एवाह।

तस्मात् संकेतकालेपि ; निर्दिष्टार्थेन संयुतः।
स्वप्रतीतिफलेनान्यापोहः सम्बन्ध्यते श्रुतौ ॥१७१॥

सङ्केतयन्नपि न विधिमुखेन सङ्केतकारः सङ्केतङ करोति। अपि त्वन्यापोहमुखेनैव यतः। सङ्केतकालेप्यन्यापोह एव श्रुतौ सम्बध्यते न वस्तु।

नन्वयन्देवदत्त इति सङ्केते स्वलक्षणमेव सम्बध्यमानमीक्ष्यते। नेदं साधीयः(।) निर्दिष्टोप्यर्थः प्रतिबिम्बकमेवमोपलक्षयति[1]। तथा हि।

सङ्केनोर्थंप्रतीत्यर्थमभिप्रेतो द्वयोरपि। प्रतीतिः प्रनिबिम्बस्य न त्वध्यक्षस्य वस्तुनः ॥३१६॥

अस्येदन्नामेत्यस्मादिदमन्यदपि प्रतिपत्तव्यं। ततोन्यत् कालप्रत्यतीत्यवस्थाव्याप्त्यैव सङ्केतो नियमेन द्वयोरपि स्वपरयोरभिप्रेतः। ततोन्यापोह एव सम्बध्यते श्रुतौ न स्वलक्षणं।

अथापि स्याद्(।) अस्येदन्नामेति न व्याप्तिः प्रतीयते(।) प्रतिबिम्बस्य केवलमस्येदन्नामेति स्वलक्षणमेव सङ्केतविषयतया प्रतीयते। न(।) अत्यन्ताभ्यासादेवम्प्रतीतेरपेक्षापूर्वकारित्वाद्वा। विपर्यये तु नियमेनैव प्रतिबिम्बकप्रतीतिः(।) यस्तु पुनर्व्यवहारात् सङ्केतम्प्रतिपन्नवांस्तस्य नियमेन सङ्केतकालरूपाध्यवसायः प्रतिबिम्बरूपः। तथा हि।

अस्येदन्नाम सङ्केतादस्मादेतत् प्रतीयते। प्रेक्षावतो भवत्येतत् प्रेक्षावानन्यथा कथम् ॥३१७॥

अथ(।)

इदमानयेति वचनात् तस्यानयनदर्शने। नामास्येद मयाप्येतत् प्रत्येयमिति शब्दतः ॥३१८॥

अथवा निर्दिष्टोर्थो यः प्राक् प्रतिपादितः प्रतिबिम्बस्वभावः। तेन संयुतोन्यापोहो व्यावृत्तिरूपः। तस्य च प्रतिबिम्बस्य व्यावृत्तिप्रतिपादनमेव फलन्न स्वरूपप्रतिपत्तिः। स्वरूपस्यार्थेऽभावात्। व्यावृत्तेश्च भावात्।

*अन्या सा व्यावृत्तिरिति चेत्। न(।) अपोद्धारकल्पनया तदेकत्वव्यवहारात्।*
अपि च।

अन्यत्रादृष्टरूपत्वात्[2] क्वचित् तद्दृष्ट्यपेक्षणात्।
श्रुतौ सम्बध्यतेऽपोहो नैतद्वस्तुनि युज्यते ॥१७२॥

शब्दस्य ह्यन्यत्र तद्विजातीये दृष्टत्वात् क्वचित्तु तज्जातीये दर्शनादपोह एव सङ्कृत इति ज्ञायते। सामान्ये व्यक्तौ वा सङ्कृत इति किन्न भवति। न। तथा सति विधिरूपेणैव

---

[1] T. ०मेवोपलक्षयति [2] M. अन्यत्रादृष्ट्यपेक्षत्वात्।

सङ्केते सर्वत्र दर्शनप्रसङ्गात् सामान्येपि दर्शनमात्रापेक्षा स्यात्। अन्यत्रादर्शनापेक्षा न स्यात्। सामान्यस्य सव्यतिरेकस्य प्रतीत्यर्थमिति चेत्(।) स एव तर्हि तदन्यव्यतिरेकोस्तु किं सामान्यकल्पनया। व्यक्तिरेव हि तदन्यव्यतिरेकवती प्रतीयताङ किं सामान्येन। व्यक्तेरप्रतीतिरिति चेत्। न(।) व्यक्तिमन्तरेण सामान्येन प्रतीतेनापि किं। लक्षितलक्षणाद् व्यक्तिरपि प्रतीयते इति चेत्। किं द्वयमत्रक्रमेण प्रतीयते। प्रतीयत एव प्रथमङ गोत्वमात्रम्प्रतीत्या विषयीकरोति पश्चाच्छावलेयादिविशेषं। नैतदस्ति। नहि शावलेयादीनामवान्तरविशेषप्रतिपत्तिसम्भवः। ततस्तदपि सामान्यमेव। ततो न व्यक्तीनां सामान्येन लक्षणं सामान्यस्यैव लक्षणात्। अवश्यङ केनचिद् विशेषेण भवितव्यमत्रेति लक्षणमेवेति चेत् न। शब्दस्यात्र व्यापाराभावात्। प्रतिपन्नमेतत् भवति न वेति नात्र प्रमाणं। न च सामान्यमपि लक्षणभूतम्प्रतीयते। तेन बुद्धिरेव सा वस्तुरहितत्वात्। कथन्तर्ह्यन्यापोहः शब्दार्थः। अत एवान्यव्यावृत्तावेव प्रवर्त्तनात्। यदि तु सामान्यम्व्यक्तिर्वा प्रतीयेत न विसम्वादो भवेत् नहि प्रतिपन्ने विसम्वादः। विसम्वादे सति कथमन्यव्यावृत्तिरपि शब्दार्थः। अन्यदर्शनेपि तदन्यानयनात्। तत् तावन्नानयति। अन्यत्तु तेनानेतव्यमिति नास्ति नियमः। अत एव शाब्दप्रत्ययसमानाकारत्वादनुमानमपि व्यवच्छेदमात्रस्य साधकं।

अथवाऽन्यत्रावृत्त्यपेक्षत्वादिति व्यवहारेण सङ्केतग्रहणेऽन्यत्रादृष्टमपेक्षते। क्वचिच्च सजातीये दृष्टमपेक्षते सङ्केतस्य ग्रहीता। ततो यत्र न दृष्टस्तस्य तावद् व्यवच्छेदञ्जानीते। यत्र तु दृष्टो व्यवहारस्तदस्ति न वेति विवेकेन न जानाति। तथा हि तथैव सङ्केतग्रहणं। यतः। आनयेदम्वस्तु बाह्यस्यानयने व्यापारो नास्तित्वे वस्तुनः। अविद्यमानन्नानेतुं शक्यमिति चेत्। यदीयं राजाज्ञा तदाऽवश्यमानयति। स तु प्रमाणान्तरात् पर्यालोचयन्नास्तित्वम्प्रतिपत्त्या विषयीकरोति। अर्थापत्त्या वा। अर्थापत्तिसहितः शब्दोस्तित्वे प्रमाणमिति चेत्। न(।) अर्थापत्तेरसम्भवात्। अर्भकाभिप्रेतयाञ्चावदेतत् स्यात्। ततः सति सम्भवे आनीयते नान्यथा। अन्यत्तु नानीयत एव।

अन्ये तु पुनः सर्वतो विजातीयाद् व्यावृत्तिङ क्वचिद् विधेये वृत्तिमपेक्षत इति व्यतिरेकितात्पर्यमन्वये तु नेति व्यतिरेक एव प्राधान्येन प्रत्याय्यते। तदसत्। यदि नामान्वयव्यतिरेकयोः प्राधान्यमेकस्य तथापि न विधिशब्दार्थव्यतिक्रमः। न चाप्राधान्यमन्वयस्य प्रतिपादयितुं शक्यं। एकव्यक्तिदर्शनेनापि सामान्यस्य सर्वात्मना प्रतिपादनात् तदन्वयस्याप्राधान्यमिति न युक्तं।

अथवा क्वचिद् दृष्ट्यपेक्षणादिति। अस्येदन्नामेति न सर्वदाऽनेन भवितव्यं। शब्दप्रयोगे अस्य तु नाभेदमित्येतन्मात्रमस्मादेतद् व्यवहर्त्तव्यमिति। अन्यत्र तु व्यवहाराभावादन्यापोहविषयता शब्दानां। अथ यत्र वस्तु प्राप्यतेऽनुमानेन तज्ज्ञानस्य कथमन्यापोहविषयता। तत्राप्यन्यापोहविषयतेष्यते एव। न(।) तत्र विशेषे सन्देहादेव हि तत्र प्रतीतिरनग्निस्तावदयन्न भवति। अग्निस्तु किम्भूत इति न ज्ञायते।

ननु यदि सामान्यन्न परिच्छिन्नङ कथमग्निविशेषे सन्देहः। प्रतीतिमात्रेण सन्देहात्। प्रतीतिस्तावदियमस्ति विशेषो न ज्ञायते किमग्निरस्ति नेति किम्भूतो वात्राग्निः।

ननु यत्र कार्यहेतुस्तत्र नियमेनाग्निः। न(।)स्पर्शविशेषस्याग्नित्वात्। तत्र च न

नियमः कथमग्निप्रतीतिः। उष्णतामात्रस्य प्रतीतेः। सामान्यम्प्रतीयत इति चेत्। न। तारतम्यस्यैव भावात्। न च तरतमादिभेदव्यतिरेकेणोष्णसामान्यन्नाम। तत्र च न प्रतीतिः।

ननु प्रतीतिरपि तारतम्यमेवालम्बते। आलम्बताम्न त्वेकैव बुद्धिः। कदाचिदेवङ्कदाचिदेवमित्यपरापरबुद्ध्युत्पत्तेरेकमेवैकदा नानारूपमालम्बत इति चेन्नैकेनासत्येन नियमेन भवितव्यं। तस्मात्तत्रापि प्रतीतिमात्रमेव सत्यन्नान्यदित्यन्यापोहमात्रं शब्दार्थोनुमानस्य च न चैतद् वस्तुनि युक्तं(।)लिङ्गेपि सम्बध्यतेऽपोह इत्यपि द्रष्टव्यं।

**तस्माज्जात्यादितद्योगानार्थे तेषु च न श्रुतिः।**
**सम्बध्यते[1] ऽन्यव्यावृत्तौ शब्दानामेव योजनात्॥१७३॥**

तेन जात्यादीनाम्प्रमाणाभावादसत्वे न जात्यादिसम्बन्धकल्पना द्रव्यसम्बन्धकल्पनापि द्वयोः स्वरूपेण प्रतिभासमानयोः कैव। संयोगस्य प्रतिभासनादिति चेत्। न। अकल्पयतोप्यन्यदर्शनेन (अन्यकल्पनेन) तद्रूपस्य प्रतिभासनात्। तावन्मात्रकेण कल्पनासम्भवः। सैव कल्पनेति चेत्। इष्टत्वान्न किञ्चिद् बाधितं। उभयकर्मजोन्यतरकर्मजः। संयोगजश्च संयोग इति न प्रतीतिरस्ति। स्वरूपमात्रेण प्रतीतिरिति चेत्। न(।)संयोगस्वरूपस्याप्रतिभासनात्। वस्तुद्वयमेव तथाभूतमुत्पन्नम्प्रतिभासविषयो न संयोगः। तदेव वस्तुद्वयं संयुक्तमिति तु प्रतीतिरपि न ततोऽपरः संयोगः। न(।)पूर्वेण सहैकत्वप्रतीतेरभावात् (।) न हि प्रत्यक्षम्पूर्वापरभावे व्याप्रियते। मा भूत् पूर्वप्रतीतिस्तथापि संयुक्तप्रतीतिरस्तीति चेत्। न (।)

असंयुक्तं हि संयुक्तम्पुनरेतद्धि योक्ष्यते। एकेन[2]कार्यङ्कर्त्ताहमिति तद्वित्तिरिष्यते ॥३१९॥
यदि नेयम्प्रतीतिः स्याद् वृथा संयोगकल्पना। एकमेतद्धि भवति ततोऽयोगोऽर्थवान् भवेत् ॥३२०॥

## (६) प्रत्यक्षे शब्दकल्पनानिरासः

शब्दयोजनापि नास्ति शब्दस्य तत्राभावात्। संकेतकाले शब्द आसीदिति चेत्। तेनापि योजनन्नास्ति। यतः।

**सङ्केतस्मरणोपायन्दृष्टसङ्कलनात्मकं।**
**पूर्वापरपरामर्शशून्ये तच्चाक्षुषे कथम् ॥१७४॥**

अयङ्गौरिति न गोशब्द एवायङ्गोशब्दवाच्योऽयमित्यर्थः। सामानाधिकरण्यन्तु तत्सम्बन्धाद् यष्टीः प्रवेशयेति यथा। अथवा गौः शब्दो यस्य स गोशब्दः। तत्र यदैकदेशप्रयोगात् गौरयमिति। तत्र गोशब्दवाच्योऽयमिति गोशब्दादयम्प्रत्येष्यते। अयं स गौरिति तु गोशब्दोऽत्र सङ्केतितः। तच्चैवम्भूतम्वस्तु पूर्वापरपरामर्शशून्यात्मनाऽध्यक्षेण कथङ्गृह्यते। यत उक्तमेतत्।

योग्यदेशस्थितेऽक्षाणाम्वृत्तिर्नातीतभाविनि(।)
अक्षाश्रितञ्च विज्ञानमक्षव्यापारगोचरं ॥३२१॥

---

[1] M. संयोज्यते [2] तत्रैव—"पृथग्भविष्यति"।

यदि पूर्वापरयोरपि चक्षुराद्यक्षवृत्तिरतीतानागतं सकलम्प्रतीयेत । सर्वं हि कथञ्चित् केनचित् सम्बद्धम्पूर्वगृहीतं प्रतीयत एवेति चेत् । न(।) सर्वदा प्रतीतेरभावात् । स्मरणे सतीति चेत् । स्मरणमेव तदिति प्राप्तं । स्मर्यमाणेन सहैकत्वम्प्रत्यक्षेण प्रतीयत एवेति चेत् । न(।) स्मरणस्याप्रमाणत्वात् । स्मर्यमाणमसदेव कथन्तेनैकता प्रतीतिः सत्या ।

अथापि स्यात्(।) स एवायन्तदर्थक्रियाकरणात् । ननु सार्थक्रियेत्यपि स्मरणमेव तच्छब्दवाच्य इति च । तेनैव चार्थक्रिया कर्त्तव्येति कुतः । तस्माद् व्यवहारमात्रमेवैतत् । नैकता हि प्रमाणमस्ति । व्यवहाराविसम्वादादेव प्रमाणमिति चेत् । नैकत्वेऽविसम्वादोपि त्वर्थक्रियायां । सा चास्त्येव । अर्थक्रियाकारित्वादर्थता तस्य न त्वेकता पूर्वेण । अथेदमनसाधनमभवि(ष्य)ति स एवायामिति । यदि पूर्वापरयोरेकता नास्ति कोनुसन्धाता भवेत् । अनुसन्धातुरेकत्वे पूर्वापरग्राहि प्रत्यक्षमनुसन्धातर्याश्रितं । न(।) स्मरणदर्शनाकारव्यतिरेकेणापरस्यानुसन्धानस्याभावात् । प्रत्यक्षञ्च यद्यप्यात्मन्याश्रितन्न तावता तस्य प्रमाणत्वं । अक्षाश्रयेण प्रामाण्यमात्माश्रयेणैकताग्रहणमिति चेत् । न(।)अक्षानुसारेण तस्य वृत्तेरक्षस्य च पूर्वापरत्वेऽवृत्तेः । तदनुसारिणो ज्ञानस्यानुवृत्तिरिति चेत् । न(।) तदनुसारित्वायोगात् । नहि पूर्वत्र पूर्वज्ञानानुसरणमन्तरेण वृत्तिः । तदन्यानुसारि तदनुसारीति साहसं । एकत्वप्रतीतिस्तु नाक्षव्यापारमन्तरेण भवति । ततो नैकताप्रतीतिरक्षजा । प्रत्यक्षे या सा भवत्येवेति चेत् । नैकताया विशेषाभावात् । स्पष्टतयाविशेष इति चेत् । ननु स्पष्टतयैकत्वं भवत्वस्पष्टतया तु कथमेकत्वमध्यक्षगम्यं ।

ननु तस्यानेन सहैकत्वमनध्यक्षगम्यं । तेन त्वस्य कथन्न स्यात् न समानत्वात् । द्वयोरध्यक्षेणाग्रहणे कथन्तदेकत्वमध्यक्षविषयः । एकत्वमध्यक्षगम्यन्न पदार्थ इति चेत् । तत्तर्ह्येकत्वन्न पदार्थगतं । एकत्वस्य स्वतन्त्रस्यासम्भवात् तद्वानाक्षिप्यते । आक्षेपो हि नामानुमानं । ततः प्रत्यक्षेण स्वतन्त्रस्य ग्रहणेऽनुमानतोऽन्यथा ग्रहणमित्ययुक्तं । प्रत्यक्षपूर्वकत्वादनुमानस्य । तस्मात् पूर्वापरपरामर्शाभावादयङ्गौरिति न प्रत्यक्षा प्रतीतिः । किञ्च । मृतेपि पूर्वापरपरामर्शः । सम्भवी तत्कथमस्य प्रमाणता । तस्मात् सन्निहितमात्रग्रहणमिति प्रमाणं । तत्र च । न योजनेत्यविकल्पकमध्यक्षं । किञ्च ।

**अन्यत्रगतचित्तोपि चक्षुषा रूपमीक्षते ।**
**तत्सङ्केताग्रहस्तत्र स्पष्टस्तज्जा च कल्पना ॥१७५॥**

न खलु विकल्पयन्नेव रूपादिकमीक्षते येन स्मरणसहकारिता भवेदिन्द्रियस्य । नहि यः सहकारी यस्य तमन्तरेण स्वकार्यकरणे सामर्थ्यन्तस्य क्षित्यादिविरह इव बीजस्याङ्कुरकरणे । अथ कार्यकरणमात्रेण न सहकारिता स्मरणस्यापि तु सविकल्पकजनने । तदप्यसम्यक् ।

## ( चित्रैकत्वचिन्ता )

व्यतिरिक्तेन कल्पेन यदि तत् सविकल्पकं । सिद्धसाधनमन्यत्रं विरुद्धाध्यासमम्भवः ॥३२२॥

**यदि सहविकल्पेन परेण वर्त्तत इति सविकल्पकतायान्तथाभूतायां स्मरणं सहकारि सिद्धमेव साध्यते । अथात्मभूतेन विकल्पेन तदा न युक्तं ।**

तस्मिन् सत्यपि यन्नास्ति तदभावेपि विद्यते । विरुद्धधर्मसंसर्गे तेन तस्यैकता कथम् ॥३२३॥

अन्यदेव तत् सविकल्पकमन्यत् प्रागविकल्पकमिति। तथा सति भवतः प्रत्यभिज्ञा विशीर्यते। अतिप्रसङ्गश्चेत्युक्तं। तस्माद् यदेकदाऽन्यत्रगतचित्तावस्थायामविकल्पकमन्यदपि तत्तथैवेति युक्तम्(।) अथान्यविकल्पेनैव सविकल्पकं। तथासति श्रोत्रविज्ञानेनापि सविकल्पकम्प्राप्नोति श्रोत्रस्यापि सहकारित्वात्।

अथ पृथगेव तानि ज्ञानानि। समानमन्यत्रापीति न विशेषः। अथान्योपि तदवस्थस्यास्ति विकल्पः (।) तदसत्। अनुपलम्भात्।

अथ व्यवहारादनुपलभ्यमानमपि साध्यते। न ह्यविकल्पयतो व्यवहारो दृष्टः।

कार्यकारणता सिद्धा व्यवहारविकल्पयोः। कार्यानुमानमत्रेति तत्सङ्केताग्रहः कथम् ॥३२४॥

न खल्वनुमानेन शब्दयोजना न प्रतीता भवति। तस्यापि प्रामाण्यात्। अथानेनैव व्यभिचारः। न (।) पक्षेण व्यभिचारा भावात्। अन्यथा धूमादग्न्यनुमानेपि व्यभिचारः पक्षेणैव भवेत्। न (।) तदानुमानेनोपलम्भात्। स्पर्शपरव्यवहारादपि प्रतीतेः।

परोक्षः स्पर्शविज्ञानाच्छीतनद्व्यवहारतः। प्रतीयते पावकात्मा तदप्यत्यन्तदुर्घटम् ॥३२५॥

यद्यनुमीयमानवह्न्यदर्शनमाशङ्काविषयः। कदाचिदिदानीमेव धूमो वह्निम्बिना भवेदिति। तत्र स्पर्शविज्ञानेन धूमरूपप्रतिपत्तेर्वितपनव्यवहारेण वा व्यभिचारपरिहारः। तदप्यसत्।

स्पर्शविद्व्यवहाराभ्यामनुमानेन तद्गतौ। तस्यापि चानुमानस्याव्यभिचारोऽनुमान्तरात् ॥३२६॥
समानत्वानुमितेरनवस्था तथा सति।

यद्यनुमाने व्यभिचाराशङ्कायामनुमानमेवाव्यभिचारसाधनन्तथा सति समानमेवानुमानमिति तल्लक्षणे सर्वत्राशङ्का भवेदिति(।) तदिदमसिद्धमसिद्धेन साध्यत इति। न च स्पर्शेन रूपस्य साधनं। स्पर्शस्य पीतशङ्खज्ञानविषयेपि सम्भवात्। यत्र च धूमस्य व्यभिचारशङ्का तत्र वह्निपूर्वकृतानाम्वितपनादिव्यवहाराणां सुतरामेव। तस्मादनुमानेन विकल्पसाधने यदि पक्षेणैव व्यभिचारः सर्वत्रानुमाने स्यादिति नेयं सध्वी कल्पना। तदसत्।

परो वस्तुबलाद् धूमादनुमानम्प्रवर्त्तते। तच्च दृष्टाविसम्वादन्न तथा कल्पसाधनम् ॥३२७॥

अग्न्यनुमानं हि परोक्षविषये प्रवर्त्तमानन्न प्रत्यक्षेण बाध्यते। प्रत्यक्षस्यातद्विषयत्वात्। विकल्पसाधने तु विकल्पस्य स्वसम्वेदनप्रत्यक्षविषयत्वान्न दूरादिति सूक्ष्मतापि परोपलम्भापेक्षया। आत्मरूपे तु यथा सूक्ष्मतोपलभ्यस्य तथोपलम्भकस्यापीति। न श्वपचः श्वपचाद् विभेति। स्वसम्वेदनस्यापि चायमेव वा भावो यदसम्वेदन्नाम। न चानुमानम्विकल्पे प्रवर्त्तते वह्न्यादाविव। तथा प्रतीतेरभावात्।

ननु विकल्पम्विना व्यवहारायोगात् प्रतिबन्धग्रहण कथन्नानुमानं। न(।) प्रतिबन्धग्रहणस्यैवान्यथा भावात्। तथा हि।

विचारादि विना भावादनभ्यासस्य सम्भवी। व्यवहारो न तत्त्वे तु व्यवहारो विनापि सः ॥३२८॥

व्यवहारो हि पूर्वापरपर्यालोचनमन्तरेणानभ्यासस्य नेति प्रतिबन्धपरिग्रहोऽभ्यासे तु सत्यन्यथापीति नान्यथा।

अतोभ्यासाद्विनाप्येष व्यवहारः प्रवर्त्तते । प्राणिनान्दृष्टिरत्रैव व्यवहारेण नानुमा ॥३२९॥

प्रतिबन्धग्रहणानुरूपैवानुमानस्य प्रवृत्तिरन्यथानुमाने प्रतिबन्धग्रहणन्नोपयोगी । स च प्रतिबन्धोऽनभ्यासावस्थायामेव गृह्यते नान्यत्र ।

ततो नास्ति विचारादेरनुमाव्यवहारतः । व्यवहारो हि नामायमन्यथाप्युपलभ्यते ॥३३०॥

अन्यथा ।

रूपवत्याम्विलासिन्याङ्कामिनाम्वृत्तिदृष्टितः । विरूपायामपि ततो रूपवत्तानुमीयताम् ॥३३१॥

तस्मात् सङ्केतकालोपलब्धशब्दाग्रहणमन्यविकल्पने परिस्फुटमेवेति तज्जा कल्पनापि नास्त्येव ।

ननु प्रत्यक्षेण यदि शब्दसम्बन्धो न गृह्यते कथमयं स तस्य शब्दस्य वाच्य इति कृत्वा व्यवहारः । न(।) भ्रान्त्यापि व्यवहारसम्भवात् । भ्रान्तिरपि च वस्तुसम्बन्धेन प्रमाणमेव । यथा तरुत्वपिण्डादिग्राहिणः प्रत्ययाः(।) तत्रापि न पिण्डता नामास्ति(।) तथापि वृक्षव्यवहारोऽविसम्वादी । एवन्न योजनन्नामास्ति तथापि योज्यव्यवहारोऽवितथः । तथा हि(।) गौरयमिति समानाधिकरणार्था प्रतीतिरन्यस्य गोशब्दोस्य वाचक इत्यर्थः । ततोऽविसम्वादिनी प्रतीतिरियमेवम्भूता । एवम्विषयेऽस्य प्रयोगस्य दर्शनात् । यथा वृक्षविषये पिण्डप्रतिपत्तेर्भावो नान्यत्रेति प्रतिबन्धादविसम्वादः । यदि तर्हि गोशब्दात् स्वलक्षणन्न प्रतिपन्नङ्कथन्तद्दर्शने सोयमिति प्रतिपत्तिः । यत्तन्मया प्रतिपन्नमासीदभिधानाविदन्तदिति लोके प्रतीतिः । न(।) दृष्टे प्रत्यभिज्ञानाभावात् । सोयमिति प्रत्यभिज्ञानन्नायमिति । स इति च परोक्षाकारा प्रतीतिर्न दर्शनाकारा । ततो न्योन्यविलक्षणत्वात् प्रतीत्योर्नैकविषयत्वम् । प्रतिभासभेदो हि भेदक इति । तस्याभेदात्मकत्वेन भेदो भवेत । अथार्थक्रियाभेदाद् भेदो न प्रतिभासभेदात् । न(।) प्रतिभासभेदव्यतिरेकेणार्थक्रियाया अभावात् । अर्थक्रियाविशिष्टप्रतिभासभेदादिति चेत् । यद्यर्थक्रियारहितः प्रतिभासस्तत्तर्हि निरालम्बनविज्ञानमन्यदेवाक्षजप्रत्ययात् । स इति हि वासनामात्रभावितया नार्थक्रियाकारिवस्तुग्राहि ज्ञानं । अतो वस्तुसंस्पर्शाभावात् स एवायमिति प्रत्यययोर्न सामानाधिकरण्यं । अयमित्यपि प्रतिभास इदन्तदिति सकलपुरोवर्त्तिसाधारणरूपाध्यवसायी । साधारणताविरहेण तु निर्विकल्पक एव । यदि च कल्पनारूपमिन्द्रियविज्ञानन्तदायमपरो दोषः ।

जायन्ते कल्पनास्तत्र यत्र शब्दो निवेशितः ।<br>
तेनेच्छातः प्रवर्त्तेरन्नेक्षेरन् बाह्यमक्षजाः ॥१७६॥

शब्दो हि परोक्षार्थे निवेशितस्तत्र च कल्पनानान्निवेशस्ततो न बाह्यदर्शि स्यादिन्द्रियविज्ञानमनालम्बनं शाब्दवदेव भवेत् । नहि परोक्षे प्रवर्त्तमानं सालम्बनं स्वरूपस्यासंस्पर्शात् । स्वरूपसंस्पर्शे वर्त्तमानं स्पष्टग्रहणादयमित्येव स्यात् । न स इति । स्मरणस्य वा सकलस्येन्द्रियज्ञानता विशेषाभावात् ।

न खलु शाब्दाः प्रत्यया बाह्यरूपसंस्पर्शिनः । अथ बाह्येर्थे शब्दनिवेशस्तथा सति शाब्दप्रत्ययो यथेच्छया प्रवर्त्तते तथेन्द्रियजोपि । ततो बहिरर्थाभावेपि प्रवर्त्तमानो निरालम्बनो भवेद् विशेषाभावात् । अथ यत्रेच्छानुविधानन्नास्ति तत्रार्थानुविधानाद् बाह्यार्थालम्बनता । यद्येवमर्थानुविधानम्प्रत्यक्षलक्षणन्तदा निर्विकल्पकमेवेन्द्रियविज्ञानं । शब्दाकारताया इच्छा-

पराधीनत्वान्न सा बाह्यार्थान्वयिनी वासनान्वयित्वात् । अथ यद्यपि वासनान्वयः शब्दाकारस्य तथापि वासनेन्द्रियसामग्रीत एकमेव तदिति सविकल्पकम्प्रत्यक्षं । एवं हि व्यवहारोऽन्यथा परामर्शेनाविषयीकृते व्यवहार एव न स्यात् । निश्चिन्वतो हि सुखसाधनमेवमेतदिति लोकस्य व्यवहारो दृष्टः । तदप्यसदेव । यतः ।

यथैव खलु सामग्र्याः प्रत्ययोदय इष्यते । व्यवहारस्तथैवास्तु प्रमाऽत्रैव हि विद्यते ॥३३२॥

यतः कारणभेदादभेदः । कारणञ्च वासनादिभिन्नमेव शब्देन्द्रियजप्रत्ययार्थाकारयोर्व्यवहारस्तु नैकत्वेन । सामग्रीमात्रेण प्रत्ययद्वयस्य व्यवहारोपपत्तेरन्यविकल्पनेपि च व्यवहारसम्भवात् । न ह्यन्यविकल्पसम्मुखीभावे तस्य परामर्शेन विषयीकरणं । न च शब्दयोजनामात्रेण व्यवहारोऽर्थक्रियायोजनेन व्यवहारादर्थक्रिया च पूर्वानुभूतानुभविष्यते च । न सेन्द्रियविज्ञानविषयोऽनुमानाभावप्रसङ्गात् । नेक्षेरन् बाह्यमक्षजा इति कोर्थः । नेक्षेरन् ये बाह्यन्तेप्यक्षजाः प्राप्नुवन्ति विशेषाभावादिति । एवम्व्यवधानादिभावेपि जायेतेन्द्रियजा मतिरिति । व्यवधानादिभावेपि या मतिः सापीन्द्रियजा स्यात् । यथा स इत्यङ्श इति । एतच्च प्रागेव प्रत्यपादि । कथन्तर्हीदम्वस्त्विति निश्चयो वस्तुनः । पुरोवृत्तेनिश्चायकः । न ह्यत्र परोक्षविषयता निश्चयस्य । इदञ्च प्रत्यक्षं सन्निहितार्थत्वात् तदसत् । मानसम्प्रत्यक्षमेतदिति प्रतिपादयिष्यामः । यदि च प्रत्यवमर्शमन्तरेण व्यवहारो नास्ति । नापरामृष्टो गृहीतः । तदा ।

रूपं रूपमितीक्षेत तद्धियङ् किमितीक्षते ।
अस्ति चानुभवस्तस्याः सोऽविकल्पः कथम्भवेत् ॥१७७॥

सकलसविकल्पकप्रत्ययवादी हि रूपमितीक्षेत रूपन्तद्धियन्तु कथमीक्षते । न हि तत्र तद्धीरिति विकल्पः । अथानुभव एव नास्ति तथापि व्यवहारोस्ति । तत्राननुभूयमानेपि यावद् व्यवहारः सम्वेदने भवन्मते नार्थापत्यादेः सम्भवति । किम्पुनरविकल्पकत्वेन स्पष्टाकारतयाऽनुभूयमाने । न चानुभववस्तस्या नास्ति । अन्यथा रूपदर्शनम्ममेदमिति विकल्पस्य कुतः सम्भवः । सुखादयश्च तदानीमनुभूयन्त एव । न च तत्र सुखादिकमिदमिति विकल्पकानुभवः । ततोऽविकल्पक एव बुद्धेरनुभवः । अविकल्पकानुभवे नापि व्यवहारे बुद्धिवद् रूपादिष्वपि व्यवहारोस्तु । अथायमपि विकल्पो रूपदर्शनं ममेदमिति प्रत्यक्षमेव सविकल्पकं अत्रोच्यते । तत्सविकल्पकम्प्रत्यक्षं रूपदर्शनमेव अथान्यद्रूपदर्शनादिति द्वयी गतिः । तत्र ।

तथैवानुभवे दृष्टश्च विकल्पद्वयं सकृत् ।

यदि स एव रूपप्रत्यय आत्मानं विकल्प्य प्रत्येति तदा सकृद् विकल्पद्वयप्रसङ्गः । एकस्य क्रमायोगात् । न च दृश्यते । सैव क्रमेण रूपादिस्वरूपानुभवात्मिकेति चेत् । यद्येका बुद्धिः क्रमं स्वीकरोति क्रमोप्यक्रमः प्राप्तः । तमपि क्रमेण स्वीकरोतीति चेत् । अनवस्था स्यात् । रूपाभिनिवेशावस्थायां स्वाभिनिवेशाभावात् कथमेकता । नह्यभिनिवेशमन्तरेणापरा बुद्धिः । तस्य भेदबुद्धिरपि भिन्नेति कथमेकस्याः क्रमः । अभिनिवेष्टाऽभिन्न इति चेत् । तत्रापि स्वरूपाभिनिवेशेऽपरेणाभिनिवेष्ट्रा भवितव्यमिति सैवानवस्था । तस्मात् तथैवानुभवे सकृदेव विकल्पद्वयप्रसङ्गः ।

**एतेन तुल्यकालान्यविज्ञानानुभवो गतः ॥१७८॥**

तुल्यकालविज्ञानानुभवभावेपि सकृद् विकल्पद्वयप्रसङ्गः । ततश्च तत्राप्यपरेण विकल्पेन भवितव्यमित्यनन्तविकल्पप्रसङ्गः ।

अथापि स्याद(।) उत्तरकालभाविना बुद्धचन्तरेणानुभूयते प्रत्यक्षेणार्थापत्त्या वा । न सदेतद्(।) यतः ।

**स्मृतिर्भवेदतीते च साऽगृहीते कथम्भवेत् ।**
**स्याच्चान्यधीपरिच्छेदादभिन्नरूपा स्वबुद्धिधीः ॥१७९॥**

यद्यतीतं सम्वेदनन्न तत्र प्रत्यक्षम्विद्यमानविषयत्वात् । तदापि विद्यमानमेव सम्वेदनमिति चेत् । न तर्हि रूपग्रहणस्वभावग्रहो न चान्या बुद्धिः । अथ बोधरूपा बुद्धिस्तस्यां यो य एव सन्निहितोर्थः स एव प्रतिभाति स्फटिकदर्पणादिवत् । तदसत् । अतीतमेव तर्हि तदा रूपग्रहणम्(।) बोधरूपता तु तदा सत्यपि क्वोपयोगिनी । ततो रूपग्रहणम्ममेतदिति न स्यात् । आसीदिति स्यान्न च तथा प्रत्यक्षवृत्तिः(।)अथ रूपग्रहणस्यातीतत्वमप्यस्ति । वर्त्तमानत्वमपि(।) तथा सति पूर्वमप्यतीतत्वमस्तीति दुर्घटम्भवेत्(।)तथा हि ।

सर्वदातीतभावेन वर्त्तमानः सदा स न । तथा सति सदैवास्ति रूपग्रहणमित्यसत् ॥३३३॥

सदैवातीतत्वे ततोपि प्रागस्तीति सर्वदा रूपग्रहणन्न भवेत् । अथ पूर्वम्वर्त्तमानता पश्चादतीतता । तथा सति तदेकं ज्ञानमिति न स्यात् । अथैकता । तथा सति सकृदुभयग्रहणम्भवेत् । क्रमेण ग्रहणे एक एव न स्यात् । एकत्वङ् क्रमश्चेति विरुद्धं । एकस्य त्यागे परस्योपादानमिति क्रमार्थः । एतच्च प्रागेव प्रतिपादितमिति नोच्यते पुनः । तस्मादतीतस्य ग्रहणाभाव एव । स्मृतिरपि ग्रहणन्नान्तरेणेत्यभाव एव प्रसक्तो रूपग्रहणप्रतिपत्तेः । यदि च सम्वेदनमतीतन्न सम्वेदनमेतदिति प्रतीतिः । तथा सति न ज्ञायते कस्येदं सम्वेदनमिति । अन्यधीप्रतिपत्तितुल्यता भवेदतीतत्वस्मरणस्याविशेषात् । कथमिदम्विज्ञायतेऽन्यधीपरिच्छेदादिति किमन्यधिया परिच्छेदः । किम्वाऽन्यस्य धियः परिच्छेदः । यदि तावदन्यधिया परिच्छेदस्तदेतदिष्टमेवास्वसम्वेदनवादिनः । अन्यथाऽन्यस्य धियः परिच्छेदः । तदसत् । अन्यधियः परिच्छेदासम्भवात् । अनुमानेन ह्यन्यधीपरिच्छेदः । न चात्मधियामनुमानम्परिच्छेदकम् (।) अतः कथन्तुल्यता परिच्छेदस्य । अत्रोच्यते ।

अतीतस्य परोक्षत्वमभिप्रेत्येदमुच्यते । साक्षात्सिद्धौ तु नातीतपरोक्षत्वस्य सम्भवः ॥३३४॥

यदि हि तत्साक्षात् प्रतीयते तदा रूपादिवदस्य न परोक्षता नाप्यतीतत्वं । साक्षात्क्रियमाणस्य वर्त्तमानत्वादन्यथा वर्त्तमानतैव न स्यात् । तस्मात् परोक्षं सकलमनुमानत एव प्रत्येयं । तच्च स्मरणरूपमिति समानता बुद्धिसम्वेदनस्य भवेत् ।

अथ पक्षस्याप्यात्मबुद्धिरनुमानादन्येन मानेन मीयते तथा सति सैव समानता प्राप्ता । अथ परबुद्धिः परसम्बन्धित्वेन प्रतीयते नात्मबुद्धिस्तस्याः स्वसम्बन्धित्वेनैव प्रतीतिः । न ह्यन्यदन्यथा प्रत्येतुं युक्तं । तदसत् ।

साक्षात्करणरूपे हि ग्रहणे सम्भवेदिदं । अनुमानस्मृतौ पूर्वग्रहणस्यानुवृत्तितः ॥३३५॥

तदेव दर्शयति ।

**अतीतमपदृष्टान्तमलिङ्गञ्चार्थवेदनं ।**
**सिद्धन्तत्केन तस्मिन् हि न प्रत्यक्षन्न लैंगिकं ॥१८०॥**

न ह्यतीतप्रतिपत्तौ दृष्टान्तोऽस्ति प्रत्यक्षाभावात् ततो न लैङ्गिकं ज्ञानमात्मपरसम्बन्धितया प्रत्येति वेदनं। तथा प्रत्यक्षाभावात्। भावे वातीतता न स्यादित्युक्तम्। ततश्च लिङ्गं सम्बन्धग्रहणमन्तरेणानुमापकमिति बुद्धिमात्रपरिच्छेदक एव प्रसक्तः। स्वसम्वेदने तु तदितरत्वकृत एव विभागः। अथ सम्बन्धमन्तरेण यथानुमानन्तथा विभागानुमानमपि। नैतदपि युक्तं।

रूपग्रहणमत्रासीद् येन तद्बुद्धिरीक्ष्यते। यथाग्निरत्र प्रागासीत् देशे दाहस्य दर्शनात् ॥३३६॥

न चाग्निर्मया कृतो ऽन्येन वेति तत्र विभागः। अथ परदेहसम्बन्धितयाऽनुमीयते सा परबुद्धिरन्यथान्येति विभागः। तदेतदात्मनि बुद्धेः प्रत्यक्षेण ग्रहणे युक्तं। तथा हि। स्वसम्विदितं यद्रूपग्रहणन्तदाऽतीयमन्यदन्यथेति युक्तो विभागः। अथ यथा सौत्रान्तिकस्य रूपादयस्तदनन्तरभाविना तद्रूपावभासविज्ञानेन गृह्यन्तेऽतीता एव सन्तस्तथा रूपग्रहणमपि। तदसद्यतः।

**तत्स्वरूपावभासिन्या बुद्ध्यानन्तरया यदि।**
**रूपादिरिव गृह्येत; न स्यात् तत्पूर्वधीग्रहः ॥१८१॥**

नहि रूपादयः पूर्वरूपतयाऽवभासन्ते वर्त्तमानबुद्धिसङ्क्रान्ता वर्त्तमानतयैवावभासिनः। तद्रूपबुद्धिग्रहणमेव च रूपग्रहणं। नत्वेवम्बुद्धेर्बुद्धिर्बुद्धिग्रहणाभावात्। अथ तदा बुद्धिबुद्धिरपि गृह्यते (।) तथा सति तदपरापि बुद्धिर्ग्राह्येत्यनवस्था। तथा सत्यग्रहणमेव सकलस्य। अथ बुद्धिबुद्धेरग्रहणमेव। तथा सति तत्सङ्क्रान्तस्य ग्राह्यस्याप्यग्रहणप्रसङ्गः। यदनन्तरभाविनी बुद्धिबुद्धिः सैव गृह्येत न ततः पूर्विका। अथ पूर्वबुद्ध्यनन्तरमपि बुद्धिरुत्पत्तिमतीष्यते। तथा सति निरन्तररूपबुद्धादिग्रहणाभाव इति वक्ष्यते(।)अथैकैव प्रबन्धेन बुद्धिरुत्पद्यते तदनन्तरं सर्वपूर्वबुद्धिग्राहिका बुद्धिरुदेति। तथापि क्रमवत्सर्वबुद्धिप्रतिपत्तिर्न स्यात्। अक्रमेण बुद्धिबुद्धावभासनात्। अथ क्रमेणैवावभासनन्तथा सति प्रत्यक्षत एकत्वप्रतिपत्तिर्न स्यात्। त्रुट्यत्तया ग्रहणात् स्मृतिरेवेति दोषः प्रागुक्त एव।

यदि नाम स्वरूपं स्वेन गृह्यमाणमविकल्पकेन गृह्यते व्यतिरिक्तस्य तु ग्राह्यस्य सविकल्पकेन ग्रहणे को विरोधः। न कश्चित्। किन्तु।

**सोऽविकल्पः स्वविषयो विज्ञानानुभवो यथा।**
**अशक्यसमयन्तद्वदन्यदस्त्वविकल्पकम् ॥१८२॥**

तत्तावत् स्वरूपग्रहणङ्कस्मादविकल्पकग्रहणग्राह्यं। तत्रापीदमेवोत्तरं। न हि स्वरूपेण स्वरूपस्य योजना शब्देनान्येन वा धर्मेण सम्भवति। एवञ्चेद् रूपादिकमपि न योजयितुमपरेणापरेण शक्यं स्वरूपेण प्रतिभासमानस्य योजनाऽसम्भवात्। न हि स्वरूपेण प्रतिभासमानमपरेण प्रतिभासमानेन योज्यते। स्वरूपप्रतिभासनव्यतिरेकेण योजनानुपलक्षणात्। अप्रतिभासमानञ्च स्वेन रूपेण योज्यत इति न परमार्थः। अथायङ्गौरिति प्रत्ययप्रतिभासेनैव योजना। अत्र प्रतिपादितं। अयङ्गौरिति। न चायङ्गोशब्दस्वभाव इति प्रत्ययोऽपि तु गोशब्दवाच्योयमेव निश्चयानुभवात्।

किञ्च । यस्य सामान्यविषया एव **मीमांसकस्य** शब्दास्तदेकार्था च कल्पना । तस्याभावे निर्विकल्पस्य विशेषाधिगमः कुतः ।

**सामान्यविषयाः[1] शब्दास्तदेकार्था च कल्पना ।**
**अभावे निर्विकल्पस्य विशेषाधिगमः कुतः[2] ॥१८३॥**

अथ तदेकार्था न भवति कल्पना तथा सति न शब्देन योज्यते विशेष इत्ययङ्ग गौरिति सविकल्पकः प्रत्ययो विशेषग्राही न भवेत् । अन्योहि योजनाप्रत्ययोन्यश्च विशेषग्राहीति प्राप्तं । परिस्फुटेतरस्वभावभेदात् । कारणभेदाच्च । तथा हि ।

कारणं शब्दसामान्याकारतायाः स्ववासना । स्पष्टरूपादिनिर्भासश्चक्षुरादेरुदीयते ॥३३७॥

शब्दाकारता हि सङ्केतसमयानुभूतशब्दभावनाबलादेवोदयमासादयति न चक्षुरादिकात् । तथा सामान्याकारतापि । तथा हि चक्षुरादिकमन्तरेणापि भवति पूर्वानुभूतवासनासंस्कृतचेतसः । सत्यपि चक्षुरादिके तदनुरूपवासनाविनाकृतचेतसस्तदभावाच्चक्षुरादिहेतुकत्वाभावः ।

अथ चक्षुरादिकारणप्रतिबद्धप्रतिभासपदार्थसमानाधिकरणता न भवत्येव चक्षुरादिकमन्तरेणेति मतिः । तदपि यत्किञ्चित् ।

अनुमानप्रतीतेन रूपेणापि हि दृश्यते । सोयमग्निरितिज्ञानसामानाधिक(र)ण्यतः ॥३३८॥

न खलु तेन सामानाधिकरण्यमात्रादेव तद्ग्राहि प्रत्ययैककारणाधीनप्रत्ययग्राह्यता । प्रत्ययान्तरानुमानादिगृहीतेनापि सामानाधिकरण्यसम्भवात् । न च तदाकारद्वयानुभवव्यतिरेकिणी समा(ना)धिकरणता । कस्तर्हि समानाधिकरणेतरयोर्विशेषः । रूपद्वयानुभवो हि भिन्नाधिकरणयोरपि पदार्थयोर्नासम्भवी । तदपि सुगमं । यतः ।

एकार्थऽक्रियैकत्वव्यवहारस्य जातितः । सामानाधिकरण्यस्य व्यवहारोप्यदुर्घटः ॥३३९॥

व्यवहारस्य यथा कथञ्चित् कारणमात्रतो भावः । अनादिव्यवहारपरंपरायातो हि सामानाधिकरण्यादिव्यवहारः परीक्षणाऽक्षम एव(।) यतः परीक्षमाणो विशीर्यत एव । तथा हि ।

सोयमग्निरिति ज्ञानं द्वयमेवात्र केवलं । तत्स्वरूपावभासान्न समानाधारता परेति ॥३४०॥ सङ्ग्रहः

कस्मादन्यत्रापि द्वितयप्रतिभासेन सामानाधिकरण्यव्यवहारो वासनानियमेन व्यवहारनियमात् । प्रबोधोपि वासनाया एकार्थक्रियाकृतो नियत एव (।) प्रत्ययद्वयप्रतिभासे कस्माद् भेदव्यवहार एव न भवति (।) वासनानियमादित्युक्तं । तस्मान्न सामानाधिकरण्यतः सविकल्पकैकप्रत्ययता । अथ सामान्यविशेषयोर्नात्यन्तम्भेदस्तत एकार्थत्वेपि विशेषाधिगतिः सविकल्पिका । तदसत् ।

सामान्यतो विशेषस्य वेदनं यद्यभेदतः । सर्वात्मना कथञ्चिद्वा सर्वा वित्समताम्व्रजेत् ॥३४१॥

यदि कल्पनायां सामान्यप्रतिभासने तद्भेदाद् विशेषस्यापि प्रतिभासः शाब्दप्रत्ययेपि प्रतिभासो भवेत् । न्यायस्य समानत्वात् । न खलु न्यायसमानतायां न्यायस्यासमानता ।

---

[1] M. सामान्यवाचिनः [2] M. कथं

न्याय्यताऽभावप्रसङ्गात्। अथ चक्षुरादिकारणाभावादप्रतिभासः सविशेषस्य। कथन्तर्हि तदभिन्नं। नहि तेन सहाननुप्रवेशेऽभिन्नमिति शक्यम्विज्ञातुं। पश्चादनुप्रवेशादिति चेत्। तदेव तदानीन्नास्ति। न तु तस्यानुवेशस्तेनैव हि रूपेण तस्य तत्त्वं।

तच्चेत् तेनावभासेतानुप्रवेशगतिः कथं। नो चेत् तेनावभासेतानुप्रवेशगतिः कथं ॥३४२॥

येन रूपेण स पूर्वन्दृष्टस्तेनैव यद्यवभासमानता कथमनुप्रवेशगतिः पूर्ववत्। न चेत् तेन रूपेणावभासते तत्त्वमस्य नास्तीति कथन्तस्यानुप्रवेश इति गतिः।

तस्मादप्रतिभासमानसंकरञ्च नाना। ततः पूर्वम्भेदेन प्रतिभासितस्य पश्चादनुप्रवेश इति यत्किञ्चिदेतत्। तेन कारणाभावेनाप्यप्रतिभासितस्यैकत्वेन नानात्वमेव। तस्माद्(।)

**अभावे निर्विकल्पस्य विशेषाधिगमः कुतः[1] ॥१८३॥**
**अस्ति चेन्निर्विकल्पञ्च किञ्चित् तत्तुल्यहेतुकं।**
**सर्वन्तथैव हेतोर्हि भेदाद् भेदः फलात्मनाम् ॥१८४॥**

अथ कल्पनारूपम्परित्यज्य विशेषाधिगमञ्चक्षुरादिकारणाहितविशेषसम्वेदनात्। तथा सति तत्कारणाधीनं सविकल्पकमविकल्पकमेव। न खलु कारणभेदमनवलम्ब्य भावभेदः स प्रमाणको युक्तः। ततस्तज्जातीयकारणासङ्गितज्जातीयमेव न च सविकल्पकेतरप्रत्यययोः समानकारणता। तथा हि(।)

**अनपेक्षितबाह्यार्थयोजना समयस्मृतेः।**
**तथाऽनपेक्ष्य समयम्वस्तुशक्त्यैव नेत्रधीः ॥१८५॥**

परस्परपरिहारव्यवस्थितस्वभावसामग्रीबलादुपजाते हीन्द्रियविज्ञानयोजनास्वभावकल्पने कथमिव स्वभावसामग्रीभावभाजा स्वभावेन संसर्गवती भवेतां। बाह्यानपेक्षसमयस्मरणबलादेव योजना। बाह्यसापेक्षं समयानपेक्षमिन्द्रियविज्ञानं। न तत्र कल्पनाकारणाभावात् कल्पनात्वं। नहि कारणमन्तरेण कार्योदयः।

अथ बाह्यस्य शब्दसामान्यादिसम्बन्धस्य सामर्थ्यादुपजायमानमिन्द्रियविज्ञानं सविकल्पकम्भवेत्। तदप्यसत् यतः।

यस्य येनाभिसम्बन्धः स तेन सह भासते। नियमादिति नैवेदम्प्रमागोचरताङ्गतम् ॥३४३॥

एवञ्च किमत्रापि दर्शने सकलसम्बन्धिप्रतिभासनप्रसङ्गः। अथ यद् यत्र व्यवस्थितं सामान्यादि तत् तत्र प्रतिभासमानं प्रतिभासत एव। तदप्यसत्। शब्दस्याग्रहणप्रसङ्गात्। न हि शब्दः पटादिके विद्यते। अन्यथाऽगृहीतसङ्केतस्यापि पट इति प्रत्ययो भवेत्। न चास्ति वाच्यतायां सन्देहदर्शनात्। तदर्थसिद्धावपि वाचकप्रभेदस्यानिश्चयात्(।)समानाकारतायानिश्चय एवेति चेत्। न(।)प्रथमदर्शनेऽभावात्। न तस्माद् भिन्नमित्यादिप्रतिपादनाच्च।

अथापि स्याद्(।)गौरित्यादिप्रत्ययसङ्केतस्मरणमपेक्ष्य रूपादिकमेवेन्द्रियसहकारि सविकल्पकञ्जनयति नानपेक्ष्य, सामग्रीतः कार्यनिष्पत्तेः। शब्दः सामान्यमन्यद्वा विशेषणं यदा गृहीतम्प्राक् स्मर्यते तदा स्मरणसहायञ्चक्षुरादिकञ्जनयति। तेन गृहीतसङ्केतपूर्वदर्शनरहितयोर्न भवति तन्न सुनिरूपणं। तथा हि।

---

[1] M. कथं

**सङ्केतस्मरणापेक्षं रूपं यद्यक्षचेतसि ।**
**अनपेक्ष्य न चेदुक्तं स्यात् स्मृतावेव लिङ्गवत् ॥१८६॥**

नहि पूर्वानुभूतिमन्तरेण तेन योजना । न च प्रतिनियतस्मृतिमन्तरेण प्रतिनियतशब्दादियोजना । न च प्रतिनियतस्मृतिबीजप्रबोधकमन्तरेण प्रतिनियतस्मरणं न च दर्शनमन्तरेण प्रतिनियतप्रबोधकत्वं । तेन दर्शने तस्य तद्वाचकस्मरणं स्मरणे च योजनमिति दृश्यमानस्य तत्स्मरणे लिङ्गतैव तस्य प्रबोधकस्य दृष्टस्य रूपादेः । ततो योजनाप्रत्ययो लैङ्गिक एव सकलः ।

अथ सामान्यन्न दृष्टमेव कथं लिङ्गात् प्रतीयते । अवयवसमानता हि सामान्यमुच्यते । सा च प्रागुपलब्धैव(।) ततः सा स्मर्यते तादृगवयवयोगस्य तत्समानताव्यवहारविषयत्वात् । अवयवानामपि समानता तादृशावयवसाम्यात् । यावत् तथाभूतबुद्धिसाम्याद् बुद्धेरपि तथा भूतपरामर्शादिति । परामर्शोप्यनादिवासनात इति न दोषः । तस्माच्छब्देन सामान्यादिना च योजना लिङ्गत एव स्मृतिरत्रानुमानम् ।

अथाक्षव्यापारेण योजना प्रत्यक्षमेवोच्यते । तथा सति सकलमनुमानमक्षजमेवेति प्रत्यक्षं प्रसक्तं । तथा हि ।

प्रदेशे वह्निरत्रेति प्रदेशे नाग्नियोजना ।
नाक्षव्यापारविरहे प्राप्ता प्रत्यक्षता न किम् ॥

अथाग्निमात्रेऽनुमानयोजनायान्तु प्रत्यक्षमेव । तदप्यज्ञानं । यतः । एवमपि शक्यम्वक्तुम् ।

प्रदेशमात्रम्प्रत्यक्षं योजना त्वनुमानतः । पावकेनेन्द्रियज्ञानमगृहीत्वा न योजना ॥३४४॥

अनुमानेनैव हि योजना युक्ता दहनेऽक्षव्यापारासम्भवात् । नहि प्रत्यक्षेणागृहीतन्तेन योजयितुं शक्यं । अप्रतिपन्नन्तेन युक्तम्प्रतिपन्नमिति व्याहतं ।

नन्वनुमानेनापि न योजना स्यात् । यतः ।

प्रदेशे नानुमावृत्तिरगृहीतन्न योज्यते । प्रत्यक्षोऽर्थोऽनुमानेन गृहीत इति साहसम् ॥३४५॥

यथैव हि परोक्षे हुतभुजि न जायते प्रत्यक्षन्तथा प्रत्यक्षेपि प्रदेशे नानुमानमिति समानो न्यायः । अनुमेयत्वे च न प्रत्यक्षता(।) नहि प्रमाणसम्प्लव इष्यते ।

योजना परमार्थेन न सम्भवति कस्यचित् । द्वाभ्यामनन्तरञ्जातो विकल्पस्तु तथा विधः ॥३४६॥

प्रत्यक्षानुमानपृष्ठभावी विकल्प एवेदमत्रेति योजनाप्रत्ययः । स चानादितथाभूतव्यवहारजातोऽनुमानमेव (स्वार्थानुमानं) । ततोऽनुमानेन योजना व्यपदिश्यते । अनुमानमपि कथं योजनारूपमुत्पद्यते । प्रत्यक्षेण तथा दृष्टेरित्यदोषः ।

तस्मान्न प्रत्यक्षं योजनारूपमिति स्थितं । एतच्च प्रागेव प्रतिपादितं ।

अथापि स्यात्(।) परोक्षेपि प्रत्यक्षम्प्रवर्त्तत एव स्मर्यमाणे । तेन प्रत्यक्षत एव योजना । तदप्यसत्यं यतः ।

**तस्यास्तत्सङ्गमोत्पत्तेरक्षधीः स्यात् स्मृतेर्न वा ।**
**ततः कालान्तरेपि स्यात् क्वचिद् व्याक्षेपसम्भवात् ॥ १८७ ॥**

तस्या अक्षधियः स्मृतिसङ्गमेन स्मर्यमाणे यद्युत्पत्तिरिष्यते(।) तदाऽक्षधीः स्मृतेरेव

स्यान्नार्थसन्निधानमपेक्षेत । अथार्थसन्निधानमपेक्षेत तदा नैवासौ स्मृतेर्भवति साक्षात्करणस्य स्मरणादन्यत्वात् । कालान्तरेपि वा स्यात् क्वचिद् व्याक्षेपस्यान्यविकल्पलक्षणस्य तदा सम्भवात् । ततस्तदपीन्द्रियविज्ञानङ्कालान्तरस्मरणम्भवेत् ।

किञ्च । यद्यसावर्थः प्रथममविकल्पकज्ञानहेतुः सर्वदा तथैव भवेत(।) ततोऽविकल्पकमेव प्रत्यक्षम् ।

**क्रमेणोभयहेतुश्चेत् प्रागेव स्यादभेदतः ।**

यद्यसावुभयस्य हेतुः प्रागेवोभयमुत्पत्तिसङ्गतं स्यात् । अथ स्मरणसहायमिन्द्रियं सविकल्पकञ्जनयेन्नान्यथा । तदसत् । न खलु स्मरणस्य चक्षुः सहायतोपलभ्यते । न हि सहाय इत्येव सर्व्वः सर्व्वस्य सहायः(।) किन्तु यस्तथा दृश्यते । न खलु स्मरणेन परिस्फुटादिकङ्क्रियते चक्षुरादिप्रत्ययस्य । अथ निश्चितरूपता क्रियते । तदसारं । यतः ।

निश्चयो यदि तद्रूपे प्रागेव स्यादभेदतः । अतद्रूपेपि तत् प्राप्तम्प्रत्ययान्तरमक्षजात् ॥३४७॥

यदि पूर्वप्रतिभासित एव रूपनिश्चितत्वं नातिरिक्तं । तत् प्राग्रूपसमानमिति नाधिकत्वं । निश्चयस्यानिश्चयात् ।

अथाधिकं रूपन्तत्र प्रतिभाति । तर्त्तर्हि रूपान्तरासङ्गि प्रत्ययान्तरमेव । तत्र रूपे विशेषणादावक्षव्यापाराभावात् । अथेदमित्युल्लेखस्तत्रैव प्रवर्त्तते(।) तेन साक्षात्करणप्रवृत्तत्वादस्य प्रत्यक्षता । तदप्यसत् । यतः ।

विकल्पस्येदमित्यस्य निर्विकल्पकता भवेत् । अर्थक्रियादिसम्बन्धपौर्वापर्याप्रकल्पनात् ॥३४८॥

सन्निहितरूपादिमात्रसाक्षात्करणात् । पौर्वापर्यार्थक्रियादिसम्बन्धग्रहणरहितत्वाद विकल्पकतोऽपरस्यान्न विशिष्यते । न ह्यविकल्पयन्नेव सविकल्पको नाम । तस्मात् स्मर्यमाणविशेषणादेरस्पष्टाकारादन्यदेवेदमिति स्पष्टाकारन्तत् । तथा सति ।

**अन्योक्षबुद्धिहेतुश्चेत् स्मृतिस्तत्राप्यनर्थिका ॥ १८८ ॥**

अथापि स्यात्(।) स्मर्यमाणादाकारादन्य एव स्पष्टाकारोऽक्षबुद्धिविषयः । यद्येवं स्मृतिस्तत्रापार्थिका । न हि स्मरणन्तत्र ग्रहण उपयोगि स्मरणमन्तरेणापि तस्य तथा प्रतिपत्तेः ।

**यथा समितसिद्ध्यर्थमिष्यते समयस्मृतिः ।**
**भेदश्चासमितो ग्राह्यः स्मृतिस्तत्र किमर्थिका ॥ १८९ ॥**

यदि स्मृतिसहायचक्षुरादिना तद्रूपतोल्लिख्यते तदभावे तत्प्रत्ययो न स्यात् । न भवत्येवेदमित्युल्लेख इति चेत् । न । इदमित्युल्लेखाभावेपि तद्रूपावभासनात् । सतापि तेन विशेषान्तरस्याभावात् कस्तत्रोपयोगः । प्रवर्त्तनमुपयोगश्चेत् । विनापि तेन प्रवर्त्तनमिति प्रतिपादयिष्यामः । मानसञ्च तत् प्रत्यक्षमिति प्रतिपादयिष्यते ।

अथापि स्यात् । स्मृतिमन्तरेण न प्राथमिकस्यानभ्यासवतः प्रवर्त्तनमिति तदर्थं स्मृतिरिष्यते । अत्रोच्यते । भेदश्चेद् असमित एवासङ्केत एव ग्राह्यः (।) स्मृतिस्तत्र किमपरङ्करिष्यति । यतः सङ्केतसिद्ध्यर्थं स्मृतिरिष्यते स चेन्न तथा सिध्यति न तत्प्रतिपत्तौ स्मृतिरुपयोगिनी (।) प्रवर्त्तनन्तु प्रमाणान्तरादनुमानात् प्राथमिकस्य भवेदेव । तस्मान्न विकल्पस्य

स्वरूपग्रहणम्प्रति व्यापारो न प्रवर्त्तनमभ्यासात्तु निरर्थकोप्येष प्रवर्त्तत एव। न हि प्रयोजनमित्येव भावा भवन्ति (।) कारणमात्रापेक्षित्वाद् भावभावस्य।

अथ पूर्वस्मादन्यस्वरूपग्रहणन्तथा सति प्रत्ययान्तरमेवैतन्मानसप्रत्यक्षरूपं। तथा प्रतिपादयिष्यते (।) अथापि स्यात्। सामान्यमेव तया परिगृह्यते न भेदः पूर्व्वमपरिदृष्टः। एवन्तर्हि।

**सामान्यमात्रग्रहणे भेदापेक्षा न युज्यते।**

यदि सामान्यग्रहणमेव चक्षुरादिकात्। तदा परस्य भेदग्राहिणोऽसम्भवात् सामान्यग्रहणे सति भेदग्रहणाकांक्षा न भवेत्। भवति च। तथा हि। सामान्यग्रहणे गौरिति प्रतिपत्त्या किम्भूतो गौरिति दृश्यते लोके।

**तस्माच्चक्षुश्च रूपञ्च प्रतीत्योदेति नेत्रधीः ॥१६०॥**

स्मरणस्य तत्रानुपयोगात्। चक्षूरूपमात्रत एवोदयमासादयति नेत्रबुद्धिः। तथा हि।

रूपमात्रे प्रवृत्तस्य पुरतश्चक्षुषो गतिः। अन्यत्र गम्यमानस्य व्यापारोस्त्वन्यथा कथम् ॥३४९॥

न ह्यन्यथा प्रतीयमानमन्यथा शक्यङ्कल्पयितुं। न खलु पुरोवर्त्तिरूपमात्रे चक्षुः प्रवर्त्तनमीक्षमाणं शब्दसामान्यादौ प्रवर्त्तत इति शक्यम्वक्तुं प्रमाणाभावात्। तथा कल्पनायामतिप्रसङ्गः। तस्मात्।

स्मरणोत्तरकालम्वा पूर्वम्वा स्मरणोदयात्। विषयस्य विभिन्नत्वात् प्रत्यक्षमविकल्पकम् ॥३५०॥

न हि स्मरणादुत्तरकालं सुगन्धमिदन्दुर्गन्धमित्यादि ज्ञानम्प्रत्यक्षं। रूपमात्र एव चक्षुर्विज्ञानस्य व्यापारात्। तस्माद् यदेवार्थे चक्षुरादिसमाश्रयेणोत्पत्तिमत् तदेव प्रत्यक्षं। न तदन्यद् (।) अतः शब्दसामान्याद्याकारस्याप्रत्यक्षता। अन्यदपि यत् स्पष्टप्रतिभासनिमित्तन्तदाश्रयतापि गृह्यते तेन मानसादिकम्प्रत्यक्षं।

अथवा तदप्यक्षमेवाश्नुते व्याप्नोत्यर्थरूपमित्युक्तम्।

## ६. प्रत्यक्षभेदाः—

### (१) इन्द्रियप्रत्यक्षम्

अथ कस्माद् (वि)षयाधीनायामुत्पत्तौ प्रत्यक्षमुच्यते न प्रतिविषयम्। विषयेण हि रूपादिना व्यपदेशो युक्तो नेन्द्रियेण(।) न हीन्द्रियेण जनितमित्येव प्रत्यक्षं। विषयस्वरूपग्रहणप्रवृत्तन्तु सकलमेव प्रत्यक्षं। अक्षाश्रयन्तु किञ्चित् प्रत्यक्षमपरमन्यथा। व्यपदेशश्च स तस्य युक्तो योऽव्यभिचारनिमित्तः।

ननु विषयजनितमपि द्विचन्द्रादि रूपम्भ्रान्तमेव। ततो न विषयादप्युदयमासादयत् सकलमभ्रान्तं। ननु विषय एवासौ न भवत्याकारार्पणाक्षमकारणत्वात्तस्य। एवन्तर्ह्यक्षमेव तन्न भवत्युपहतत्वादनुपहतमक्षं स त्वक्षाभासः। एवन्तर्हि।

**साक्षाद् विज्ञानजनने[1] समर्थो विषयोक्षवत् ।**
**अथ कस्माद् द्वयाधीनजन्म तत् तेन नोच्यते ॥१९१॥**

विषयस्याक्षस्य कारणत्वेन समानत्वे कस्माद् विषयेण न व्यपदेशः । नहि प्रेक्षापूर्वकारिभिर्यथा कथञ्चिद् व्यपदेशाः क्रियन्ते त्यज्यन्ते वा । अत्रोच्यते ।

**समीक्ष्य गमकत्वं हि व्यपदेशो नियुज्यते[2] ।**
**तच्चाक्षव्यपदेशेऽस्ति तद्धर्मश्च नियोज्यतां ॥१९२॥**

गमकागमकत्वेन ह्युपादानपरित्यागौ । अक्षव्यपदेशे च गमकत्वमस्ति । यदक्षाश्रितन्तत्प्रत्यक्षं । उपहतेन व्यभिचारस्तु प्रत्युक्तः । विषयेणापि तर्हि व्यभिचारो नास्ति तस्याविषयत्वात् । नैतदस्ति ।

विषयो यद्यसौ न स्यात् प्रत्यक्षोऽन्यस्य किम्भवेति ।

इन्द्रियत्वन्तु नैकस्य भावाभावविशेषणम् ।।३५१।।

अत एवाह । साधारणेन व्यपदेशो दृष्टो भेरीशब्दो यवाङ्कुर इति । यवाङ्कुर इत्युक्तेऽयवाङ्कुरप्रतीतिः । पृथिव्यङ्कुर इति तु भवति तस्याप्येवमन्यत्रापि ।

अथ प्रतिविषयमिति विषयस्वरूपग्रहणं । तथा (।) सति स्वसम्वेदनमेव प्रत्यक्षम्भवेदन्यत्रागमकता स्यात् । अथ लोकप्रसिद्धविषयस्वरूपग्रहणमुच्यते । तथा (।) सति प्रत्यक्षमिति लोकप्रसिद्धिरेवैवास्तु किम्व्यपदेशान्तरकल्पनया । वैभाषिकादिमतेन तु मनोविज्ञानमपि प्रत्यक्षम्प्राप्नोति विषयग्रहणात् । तस्मा(द)पि (प्रत्य)क्षव्यपदेश्यतैव युक्ता । तथा चाह । विषयो हि मनोविज्ञानान्य सन्तानिकविज्ञानहेतुत्वात साधारण. । तस्मादिन्द्रियेण व्यपदेशात् कल्पनापोढता प्रत्यक्षस्य स्वरूपं शक्यं लक्षयितुं । न विषयव्यपदेशात् ।

ननु विषयेणापि शक्यमुपलक्षयितुं । तथा हि(।) अर्थस्य सामर्थ्येन समुद्भवादित्याह । तद्धि अर्थस्य सामर्थ्येनोत्पद्यमानन्तद्रूपमेवानुकुर्यात् । न(।) अनैकान्तिकत्वात् । द्विचन्द्राकारतया व्यभिचारात् । अथार्थसामर्थ्येन भ्रान्तस्य नोत्पत्तिः । तथा सति निर्विकल्पकत्वमस्य नानया युक्त्या साधितं स्यात् । तस्मादिन्द्रियमेवात्रार्थस्येति व्यपदिश्यतेऽर्थाभिनिवेशित्वात् । अत एवेन्द्रियस्य गमकत्वात् तेनैव व्यपदेशः ।

**ततो लिङ्गस्वभावोत्र व्यपदेशे नियोज्यतां ।**
**निवर्त्तते(ऽ)व्यापकस्य स्वभावस्य निवृत्तितः ॥१९३॥**

प्रेक्षापूर्वकारिणो नियोगमेव गमकत्वमाहुः । ततो गमकतायामेतदेवं लिङ्गं ।

ननु प्रेक्षापूर्वकारिता नियोक्तुः कुतो गम्यते । सत्यमेतत् । न पुरुषप्रामाण्याद् वचनस्य सदर्थता गतिः । लोकव्यवहारादेवमुच्यते । परमार्थतस्तु लिङ्गत्वेन व्याप्यतोच्यते । येन व्यापकस्य स्वभावस्य निवृत्त्या निवृत्तिमाह ।

ननु प्रतिविषयमिति सविकल्पकस्य लोकप्रसिद्धस्य गमको व्यपदेशः । पूर्वापरभूतश्चैकविषयः सविकल्पकस्य प्रत्यक्षस्य । इदं हि लोके प्रत्यक्षमिति प्रसिद्धं । तथा हि ।

स एष यो मया दृष्टः प्रत्यक्षेण प्रतीयते । लोकप्रतीतिगम्या हि शब्दार्थाः सर्व एव हि ।।३५२।।

---

[1] M. साक्षाच्चेत् ज्ञानजनने [2] M. न गृह्यते

अबाधिता प्रतीतिश्च प्रमाणव्यपदेशभाक् । प्रमाणेन प्रतीतञ्च किङ्कर्त्तुं शक्यमन्यथा ।।३५३।।

तदेतदसदेव ।

साक्षात्करणमेवात्र प्रत्यक्षार्थः प्रतीतिमान् । न हि साक्षात्कृतेरन्यदनुमानात्प्रमान्तरं ।।३५४।।

असाक्षात्करणाकारमनुमानमेवैकम्प्रमाणं । ततो यदि प्रत्यभिज्ञाप्रमाणमसाक्षात्कारवृत्तन्ततोनुमानमेव । साक्षात्कारितायाः पुरोवर्त्तिवस्तुमात्रवृत्तित्वान्न प्रत्यभिज्ञानं । तेन साक्षात्करणमिन्द्रियव्यपदेशादेव प्रतीयते नान्यतः । विषयव्यपदेशेन सविषयता नाम स्यात् । न साक्षात्कारिताकथनं । न च तद्व्यपदेश्ये प्रत्यक्षता लोकप्रसिद्धा । प्रमाणञ्च प्रत्यक्षन्न च साक्षात्करणव्यतिरिक्तं सम्वेदनम्प्रत्यक्षमिति स्थितमविकल्पकम्प्रत्यक्षं ।

कथन्तर्हीदमुक्तं ।

"तत्रानेकार्थजन्यत्वात् स्वार्थे सामान्यगोचरम् ।"

न खलु सामान्यगोचरमविकल्पकं सामान्यकल्पनायास्तद्विरोधित्वात् । तदेवाह ।

**सञ्चितस्समुदायस्स सामान्यन्तत्र चाक्षधीः ।**
**सामान्यबुद्धिश्चावश्यं विकल्पेनानुबध्यते ॥१६४॥**

न खलु बहूनाम्परस्परस्वरूपपरिहारेणावस्थितानान्तथैव ग्रहणे समुदायबुद्धिः । पारमार्थिकः कल्पितो वा समुदायः स्यात् । न तावत् पारमार्थिकस्तद्व्यतिरेकेण समान्याभासाभावात् ।

"प्रतिभासे वा तेन्यस्य सोऽपरः प्रतिभासतां ।"

नत्वसौ समुदायः । तथात्वे वात एव परस्परव्यपेक्षया समुदायव्यपदेशभाजो भवन्तु किमपरेण ।

अथ तेषां रूपन्तिरोधाय परं रूपम्प्रतिभाति तदपि वस्तुनस्तथा भूतस्याभावादध्यारोपमात्रङ कथन्न कल्पनाविषयः । कल्पितविषयत्वे च सविकल्पकत्वन्दुर्वारं । अत्रोच्यते ।

**अर्थान्तराभिसम्बन्धाज्जायन्ते येऽणवोऽपरे ।**
**उक्तास्ते सञ्चितास्ते हि निमित्तं ज्ञानजन्मनः ॥१६५॥**
**अणूनां स विशेषश्च नान्तरेणापरानणून् ।**
**तदेकानियमाज्ज्ञानमुक्तं सामान्यगोचरं ॥१६६॥**

अणवो हि परतोऽनुपजातज्ञानहेतुशक्तयः सम्विदमुपजनयितुं न क्षमाः । सूक्ष्मेतरदृशाः । ततः सर्वैस्सम्विदुपजनयितव्या । न ह्येकनियतन्तु ज्ञाननिर्मितसामान्यविषयमुक्तं । परस्पर विविक्ता एव कस्मान्न प्रतिभासन्त इति चेत् । नन्वसंसक्ताः केशादयोपि दूरे नासंसक्ततया प्रतिभासगोचरीभवन्ति (।) ततः स्वकारणनियतस्वरूपार्पणासक्तेर्यदि न प्रतिभान्ति कस्यात्रोप(?)लम्भः (।)न तर्ह्यप्रत्यक्षे भावत्वप्रतिभास इति भ्रान्तता भवेत् । अध्यासेपि तथावभासने च सविकल्पकत्वमपरसामान्यविकल्पवत् ।

अथ तत्र बुद्धिस्वरूपमेवैकघनस्थूलाकारतया साक्षात्कृतम्प्रतिभाति ततोऽविकल्पता । उच्छिन्नमिदानीं सविकल्पकत्वं । सर्वत्र कल्पनाज्ञाने बुद्धिरूपस्यैव प्रतिभासात् । अत्रोच्यते ।

*बाधकप्रत्ययाभावादिदानीन्तनजन्मिनां । अभ्रान्ततोच्यतेऽर्थास्तु सर्वमालम्बने भ्रमः ॥३५५॥*

**अनुदितप्रबोधप्रभावानामिदानीन्त(न)जन्मिनामिदमभ्रान्तमिति प्रतिभाति । तदपेक्षयेदमुक्तमभ्रान्तमिति । परमार्थतस्तु सकलमालम्बने भ्रान्तमेव । अतः ।**

अविकल्पकतैवं हि प्रत्यक्षे नेयमुच्यते । साक्षात्करणरूपत्वाद् ग्रहणे न समुच्यते ॥३५६॥

**न हि साक्षात्कारि सविकल्पकं । कल्पनायाम्पूर्वोपगृहीतवस्त्वध्यासात् । न हि साक्षात्करणमेवाध्यास उच्यते । तद्विपर्यये तत्त्वप्रसिद्धेः । एवन्तर्हि सामान्यगोचरत्वमसत् । लोकप्रसिद्धया स्वलक्षणत्वस्य भावात् । उक्तञ्च । आयतनस्वलक्षणम्प्रत्येते स्वलक्षणविषया न द्रव्यस्वलक्षणं । तदप्यसत् ।**

परमार्थमभिप्रेत्य पूर्वाचार्यैः प्रकल्पितः । विभागोयमतः साम्यगोचरत्वाविरोधिता ॥३५७॥

**परमाणव एव तथा गृह्यमाणाः सामान्यं । यदप्युच्यते । सर्वमेवाविकल्पकमिति तत्रापि ब्रूमः ।**

दृष्टमेव तदायातम्प्रमाणेन प्रतीतितः । परप्रसिद्धिमाश्रित्य विभागं शास्त्रकृज्जगौ ॥३५८॥

**मीमांसकादिपरप्रसिद्धिमाश्रित्यानुस्मरणविकल्पतया कल्पनार्थप्रतिपादनं । न च साक्षात्करणे तदस्तीति विकल्पकेतरविभागं शास्त्रकृत् करोतिस्म ।**

**अथैकायतनत्वेपि नानेकङ् गृह्यते[1] सकृत् ।**

**ततः पूर्व्वगृहीतार्थाध्यारोपात् सविकल्पकम् ।**

**सकृद् अनेकपरमाणुग्रहणे हि न पूर्वगृहीतार्थाध्यारोप इति नानुस्मरणविकल्पेन सविकल्पकत्वं । क्रमग्रहणात्तु दुर्निवारं । न चैकं ज्ञानमेकदानेकग्रहणसमर्थमेकत्र मनसो व्यापृतत्वे परत्र तदैव व्यापारायोगात् । एकम्वावयविद्रव्यमभ्युपगन्तव्यं सकृद् ग्रहणात् ।**

एकैकानेकग्राह्यन्तदेकत्वङ्गतोपि च ॥३५९॥

**सकृद् ग्रहावभासः किम्वियुक्तेषु तिलादिषु ॥१९७॥**

**यदि परमाणवो न सकृद् गृह्यन्ते तथा सति पूर्वाध्यारोपात् सविकल्पकत्वमस्माभिरिष्यत एव । अथ दृश्यन्ते तथा सति साक्षात्करणादविकल्पकत्वं सिद्धं ।**

**किञ्च । केनेदम्प्रसिद्धमनेकं योग्यदेशव्यवस्थितमेकेन सकृन्न गृह्यते । मनस एकत्वादिति चेत् । न । मनसो युगपज्ज्ञानोत्पत्तिविरोधिनोऽसिद्धत्वात् । मनस्कारमात्रकस्यैव मनस्त्वस्य प्रसिद्धत्वात् ।**

**किञ्च (।) सकृद् ग्रहणप्रतीतिरुपलक्षत एव परस्परमसंसर्गेषु तिलतण्डुलवण्डकमण्डलुभाण्डकुण्डलेषु । लाघवाद् ग्रहणस्य सकृदवभास इत्यप्यसत् । यतः ।**

**प्रत्युक्तं लाघवञ्चात्र तेष्वेव क्रमपातिषु ।**
**किञ्चाक्रमग्रहस्तुल्यकालाः सर्वाश्च बुद्धयः ॥१९८॥**
**काश्चित् तास्वक्रमाभासाः क्रमवत्योऽपराश्च किं ।**
**सर्वार्थग्रहणे तस्मादक्रमोयं प्रसज्यते ॥१९९॥**

---

[1] M. दृश्यते

नहि लाघवात्सकृद् ग्रहणमुपपत्तिमल्लाघवस्याभावात्। प्रत्युक्तत्वात्। कुत एतत्(।) प्रतिपन्नं लाघवादसकृद् ग्रहणाभिमानः उत्पलपत्रशतवेधवदिति चेत्। न(।) दृष्टान्तमात्रादर्थासिद्धेः। न ह्येकत्र सिद्धमपरत्रापि तथा। पत्रशतवेधे तु औत्तराधर्ययोगिना सह वेधासम्भवादनुमानसिद्धः क्रमः। न चैवङ्कल्पनायामतिप्रसङ्गः शक्यो निवारयितुं। तस्माद् बाधकाभावान्न सिध्यति भ्रान्तिः। यदि च लाघवात् सकृद् ग्रहणाभिमानस्तेष्वेव क्रमेण एतत्सु प्रागसत्सु किन्न तथा। लाघवाभावादिति चेत्। अत्रापि तदिति कुत एतत्। सकृद् ग्रहाभिमानादिति चेत्। एतदपि कुतः। इतरेतराश्रयप्राप्तेः। यावत्सकृद् ग्रहस्य भ्रान्तता न सिध्यति न तावल्लाघवसिद्धिः। यावच्च न तत्सिद्धिस्तावद् भ्रान्तताया अप्रसिद्धिः। अपि च।

क्षणिकत्वेन बुद्धीनां सर्वासान्तुल्यकालता। ततः सर्वत्र बुद्धीनां कस्मान्नाक्रमभासनं ॥३६०॥
बुद्धिपरिमाणकालं हि प्रमेयप्रतिभासनं।

ततः सर्व्व एवाक्रमः प्रतिभासो भवेत् प्रमेयस्य। तस्मान्न लाघवकृतः सकृदवभासोऽपि तथैव सद्भावात्। यत्र तु कारणवैकल्यान्न सकृदवभासस्तत्र विपर्यय इति व्यवस्था।

एकमग्रहणेऽकल्पप्रतिभासस्य सम्भवः। न विकल्पकताभावे स्पष्टार्थग्रहसम्भवः ॥३६१॥
आरोपः पूर्वदृष्टस्य कथं स्पष्टावभासन। अत्यन्तम्भावनाभावादविकल्पक एव सः ॥३६२॥
तथा हि योगिनां ज्ञानमेवमेवाविकल्पकं।

तथा च सकृदवभासनमेव पूर्वरूपता ग्रहणाभावात्।

**नैकश्चित्रपतङ्गादि रूपम्वा दृश्यते कथं।**
**चित्रन्तदेकमिति चेदिदञ्चित्रतरन्ततः ॥ २०० ॥**

यदि मनस एकत्र वृत्तेर्न युगपदनेकग्रहणन्ततो न चित्रपतङ्गरूपग्रहणमित्येक एवावयवीत्यभ्युपगम्यते। तदेतदभ्युपगमनन्तस्मादपि चित्रपङ्गादि विचित्राच्चित्रतरं। यतः।

**नैकंस्वभावं चित्रं हि मणिरूपं यथैव तत्।**

चित्रमिति परस्परसंसक्तस्वभावस्य भावात्मनो व्यपदेशोऽन्यथा क इह चित्रार्थः। ततो नानारूपरत्नसञ्चयवत् कुतश्चित्रपतङ्गात्मन एकत्वं। अथ मणीनां विभागयोग्यत्वादनेकता न पतङ्गस्य। न(।) तत्रापि विभागसम्भवात्। परस्परविभागेन प्रतिभासनमेव विभागः।

अथ सत्यपि विभाग एकत्वं। तथा सति रत्नसञ्चयस्यापि। अन्यस्तत्र विभागो वियोजनाख्यस्ततोऽवियोजनञ्चित्रमप्येकमेव। तन्न(।) सर्वत्र वियोजनसम्भवात्। तथा हि।

छेदभेदादिना सर्वत्र वियोजनसम्भवः। तदा विनाशो द्रव्यस्येत्येतत्सर्वत्र सम्भवि ॥३६३॥

यदि विभागो वियोजनाख्यः सम्भवति मणिसमूह इति नैकस्तत्रावयवी। तदेतच्चित्रपतङ्गादावपि किन्न भवति। तत्र यत्नाद् वियोजने छेदादिना विभागोत्पत्तेरवयविविनाशस्ततोऽवियोजनमिति[1] न दोषः। एतन्मणिसमूहेपि कल्प्यतामिति समानः प्रसङ्गः।

---

[1] तत्रैव—"वियोजनमिति पाठ(:)"।

( अवयविनिरासः )—

ननु नीलादीनाम्परस्परपरिहारेणोपलक्षणेपि स्पर्शस्य तदेकरूपत्वात् परस्पराविच्छेदाच्चावयवानामेक एवावयवी । तदप्ययुक्तं । यतः ।

**नीलादिप्रतिभासश्च तुल्यश्चित्रपटादिषु ॥२०१॥**

विजातीयसूत्रसमाहाररूपेषु कृत्रिमचित्रपतङ्गादिषु समान एव नीलादिप्रविभागः स्पर्शाद्यविभागसहचारी । तत्र तत एकत्रावयवी परत्र नेति कुतोयम्विभागः ।

**तत्रावयवरूपञ्चेत् केवलन्दृश्यते तथा ।**
**नीलादीनि निरस्यान्यच्चित्रञ्चित्रं यदीक्षसे ॥२०२॥**

यदि चित्रपटादिषु कृत्रिमेष्ववयवरूपमेव केवलन्तथोपलभ्यते एकत्वाभिनिवेशेन । तदा नीलादीनि विभागरूपेण व्यवस्थितानि परित्यज्यान्यच्चित्रमकृत्रिमेष्वपि नास्त्येव । एकत्राभिनिवेशस्तत्र शरणं । तच्चावयविनमन्तरेणापि कृत्रिमेषु विद्यते । ततः सापि प्रत्याशा व्यपगतैवेति नावयविनश्चित्रता युक्तिमती । प्रत्यक्षानुमानयोरसाधकत्वात् । एकाकर्षणेत्वपराकर्षणमयस्कान्तायोगोलकादीनामुपलभ्यत एव । तत्र चानेकस्य सकृदुपलम्भ इति सिद्धं ।

अथ क्रमेणैव कृत्रिमेषु नीलादीनामुपलम्भस्तदन्यत्र सकृदिति विभागः । तदप्यसत् ।

**तुल्यार्थाकारकालत्वे नोपलक्षितयोर्धियोः[1] ।**
**नानार्था क्रमवत्यैका किमेकार्थाऽक्रमाऽपरा ॥२०३॥**

अर्थाकारकालयोः समानत्वेपि धियोरेका नानार्थप्रतिभासा क्रमवत्यपरा तु पुनरेकमेवार्थमवयविनं स्वगोचरचारिणम्विदधाना न क्रमवतीति किमत्र निबन्धनं । न खलु सर्वत्र समानतोपलक्षणे विलक्षणत्वमभ्युपगमविषयः । कृत्रिमाकृत्रिमचित्राभिमतयोश्चेवमभ्युपगम्यते । तदेतदप्रमाणकमभ्युपगममात्रकन्न त्राणाय ।

ननु यदि कुतश्चित् प्रमाणबलादयमेकानेकविभागस्तदा क इवात्र दोषः । न युक्तमेतत्(।)यतः ।

**वैश्वरूप्याद् धियामेव भावानाम्विश्वरूपता ।**
**तच्चेदनङ्गङ्केनेयं सिद्धा भेदव्यवस्थितिः ॥२०४॥**

एकानेकरूपप्रतिभासवतीनां धियामेव तद्रूपव्यवस्थापने प्रामाण्यन्नापरः प्रमाक्रमः । ताश्च तथाभूतव्यवस्थापनाप्रहतप्रक्रमा अपि धियो यदि साधर्म्यमात्रोपनिबन्धनप्रकल्पित प्रामाण्ययापरधियावधूयेरन्(।) क्व नाम साधर्म्यन्न लभ्यमेतदिति न भावव्यवस्थानामास्तीति सकलमसमञ्जसम्भवेत् तस्मात् ।

प्रतिभासान्तरासिद्धिप्रतिबन्धा हि ता धियः । प्रतिभासस्यवैयर्थ्यङ्कथयन्तीति युक्तिमत् ॥३६४॥
साधर्म्यमात्रकादेव यदि भावः प्रसिध्यति । क्व नाम न तदस्तीति सर्वं सिध्येन्न वा क्वचित् ॥३६५॥

नहि प्रत्यक्षपरिगृहीतप्रतिबन्धकमनुमानमपरेणानुमानेन तथोदयमासादयता प्रत्यक्षा-

---

[1] M. ०तयोर्द्वयोः

न्तरेण वा प्रतियोगितायोगम्बिभ्राणेन शक्यन्तिरस्कर्त्तुं । न हि प्रमाणं प्रमाणेन तिरस्क्रियते । समानबलत्वे कः तिरस्कारः । प्रमाणत्वञ्च कथन्तिरस्कारकरणे । असमानबलतायाम्वा अथ प्रमाणमेव तन्न भवति यदनुमानेन वाध्यते(।) अनुमानमेव तन्न भवति यत्प्रत्यक्षेणेति समानः प्रसङ्गः । अर्थप्रतिभासा यथा कथञ्चित्कारणदोषतो भवन्ति नानुमानं । ततस्तदेव बाधकमिति । तदप्यसत् ।

हेतुदोषात् प्रमेये धीरन्यथापीति युक्तिमत् । स्वरूपे तु कथं युक्ता हेतुदोषशतादपि ॥२६६॥

क्रमवत्प्रतिभासस्वरूपं हेतुदोषादक्रमम्भवतीति न युक्तं (।) न ह्येकस्य स्वरूपन्नाना तथा प्रतिपत्तिप्रसङ्गात् । अप्रतिभास एकस्येति चेत् । न (।) स्वभावताऽभावप्रसङ्गात् । न खल्वप्रतिभासने प्रतिभासनन्नाम । अप्रतिभासनम्प्रतिभासनस्वभाव इति दुर्घटं । अथ क्रमभासनमेव नेतरत् । भ्रान्तिमात्रमेवेतरत् । केयम्भ्रान्तिः (।) किमप्रतिभासमथान्यथा प्रतिभासनं (।) किञ्चातः ।

भ्रान्तिरप्रतिभासश्चेत् सर्वत्र स्यादवारिता । तदेव प्रतिभातीत्थङ्कथम्भ्रान्तिर्निरुच्यते ॥३६७॥

यदि सर्वा प्रतिभासनम्भ्रान्तिः सुषुप्तस्योपलादेश्च भ्रान्ततापसङ्गः । यदि चाक्रमस्या-प्रतिभासः क्रम एव तर्हि प्रतिभात्यनुपहतस्ततः कथम्भ्रान्तिः । न हि स्तम्भादेः प्रतिभासनमेव भ्रान्तिः ।

भ्रान्तिरन्यवभासश्चेत् स्वरूपाभासिता कथं । अस्वरूपावभासे च तन्नास्तीतिभ्रमः कथम ॥३६८॥

यद्यन्यस्य विवक्षितात् प्रतिभासस्य भ्रान्तता तदा तर्हि स्वरूपप्रतिभासनमेव तस्य नास्ति कथं सा बुद्धिरस्ति । अप्रतिभासमानापि यदि बुद्धिरस्ति सर्वदा सर्वस्य सर्वा एव धियः सन्तीति वक्तव्यं । भ्रान्तिश्च । अथ नास्त्येव सा बुद्धिः । एवन्तर्ह्यविद्यमानैव क्रमवती बुद्धिरक्रमाभा परोत्पन्नेति कथम्भ्रान्तिः । अथ तस्याः प्रमेयन्नास्तीति भ्रान्तिरसौ ।

नन्वक्रमेषु तिलादिष्वक्रमाया एव बुद्धेः प्रमेयमस्ति । प्रत्युत क्रमवत्याः प्रमेयासम्भवोऽ-न्यथाऽवभासनात् । अथाक्रमम्प्रमेयमेव न भवति तेनैवमिति चेत् । स्वरूपेपि तर्हि नाक्रमा-वभासस्ततो न भ्रान्तियोगः । अथ ।

स्वरूपे बुद्धिरपरा यदि बुद्धौ कृतग्रहा । क्रमग्रहस्वरूपायाः कथमक्रमभासनम् ॥३६९॥

यदि क्रमवती बुद्धिर्बुद्ध्यन्तरेण गृह्यते । प्रमेयस्याक्रमावभासो न स्यान्मणिमुक्तादेः । तद्ग्राहिकाया बुद्धेः क्रमेण प्रवर्त्तनात् । बुद्धिग्राहिकायाश्च न प्रमेये वृत्तिः । न च क्रमोऽ-क्रमेण प्रतिभाति ।

भ्रान्त्या तत्प्रतिभासश्चेत् सैवाभ्रान्तिःप्रसज्यते । प्रमेयग्रहणन्तस्यास्तथा केन निवार्यते ॥३७०॥

यदि क्रमावभासिनी बुद्धिरुदयवती बुद्धिबुद्ध्यापि तथा भवितव्यं । भ्रान्त्या सकृद् ग्रहणञ्चेदेकया सकृदनेकग्रहणप्रसङ्गः । न हि पूर्वापरग्रहणानामेकता प्रतीत्यभावात् । उत्तरया बुद्ध्यैकतया प्रतीतिरिति चेत् । सापि क्रमवती कथमेकताम्प्रतीयात् । ग्रहणकालो हि ग्राहिकालानतिपाती । अथाक्रमैवासौ (।) तथा सत्येकयाऽनेकग्रहणं । अत एवासौ भ्रान्तिरिति चेत् । तथाप्यनेकस्वरूपप्रतिभासनमव्यावृत्तमेव (।) चित्राबुद्धिरेकैव चेत् । किन्न मणिमुक्तादयो नीलादयश्च प्रमेयम्विरूपेणावभासमाना अपि यदि बुद्धिरूपा इति

सर्व्वस्य प्रमेयस्य तथा प्रसङ्गः। तस्मान्न भ्रान्तावपि प्रतिभासनं युक्तं सकृदनेकस्य। तस्माद् यो यथाऽनुभूयते सकृदन्यथा वा स तथैवाभ्युपगन्तव्यः। तथैव विचारक्रमत्वात्। अन्यथा प्रमेयस्थित्यभावः।

नन्वालेख्यादौ चित्रबुद्धिरुपलक्ष्यते। कथमेकता न युक्ता। मणिमुक्तादिषु तु न चित्रैका बुद्धिस्ततो बुद्धेरेव प्रतिभासविभागादयम्विभागः। न(।)स्वसमयविरोधात्। यतः।

**विजातीनामनारम्भान्नालेख्यादौ विचित्रधीः।**
**अरूपत्वान्न संयोगश्चित्रो भक्तेश्च नाश्रयः ॥२०६॥**

यदि बुद्धिरनुविधीयते स्वसमयः परित्यक्तो विजातीयानारम्भादिति। विजातीयसूत्रसंयोगोपजनितस्य हि पटादिरूपस्य न चित्रावयविता।

अथ बुद्धिरियम्भ्रान्ता तथाप्यस्ति सकृद्ग्रहः। असत्यरूपग्रहणे सत्यरूपग्रहो न किं ॥३७१॥

भ्रान्तापि हि बुद्धिः प्रवर्त्तमाना सकृदनेकग्रहणे प्रवर्त्तत एव(।)को हि पुरोवर्त्तित्वप्रतिभासने सत्यासत्ययोर्विवेकः। अथ बुद्धेरेव तद्रूपं। तदेतदसत्।

सत्यबुद्धेरसद्रूपमात्मभूतङ्कथन्न तत्। एकात्मत्वे विभागोयमसत्यो नैकताऽथवा ॥३७२॥

अथापि स्याद् (।)

आत्माबुद्धेस्तेन रूपेण सत्यः पीताद्यात्मा बाह्यरूपस्त्वसत्यः।
नैतत्सारन्तस्य रूपं न तच्चेत् तस्मिन्नेषा कल्पना युक्तियुक्ता ॥३७३॥

अथापि स्याद्(।)आत्मरूपे प्रवर्त्तत एकापि बुद्धिरनेकत्र तत्र प्रयासाभावात्। पररूपे तु महान् प्रयासो मनसो गमनादिलक्षणस्ततो नैकया ग्रहणसम्भवो ग्रहणस्य सकृद् विरुद्धदेशेष्वसम्भवात्। यदि तर्हि गमने न मनो ग्रहणकारणं (।)

शाखाचन्द्रमसोस्तुल्यकालग्रहणासम्भवः। शीघ्रवृत्तेरसकृद्ग्रहणावभास इति चेत्। न(।)अतिदूरे शीघ्रताऽसम्भवात्। किञ्च(।)किमत्रप्रमाणम्प्राप्यकारि चक्षुरादीति। परः प्राह। उपलब्ध्यनुपलब्ध्योरनावरणेतरापेक्षणात् दूरेतरापेक्षणाच्च। यदि चक्षुरादिकमप्राप्यकारि भवेत्। यथाह(।) चक्षुःश्रोत्रमनोऽप्राप्तविषयमिति(।) तदावरणभावादनुपलब्धिरन्यथोपलब्धिरिति न स्यात्। न हि तत्रावरणम्व्याघातकरणसमर्थं। प्राप्यकारित्वे तु मूर्त्तद्रव्यप्रतिघातादुपपत्तिमान् व्याघातः। अतिदूरत्वे च गमनाभावात्। तदसत्। अप्राप्यकारित्वेपि योग्यदेशापेक्षणादयस्कान्तवत्। न खल्वयस्कान्तोऽप्राप्याकर्षणे प्रवर्त्तमानोऽयसः सर्वस्य समर्थः। अथ तत्राप्ययःस्पर्शोस्त्येव। सूक्ष्मत्वादनुपलक्षितो यथा नायनरश्मिसंस्पर्शः।

नन्वेतदेवान्येन साध्यते कथन्तदेव साधनं(।)तस्मात्।

अत्यन्तङ्क्रियमाणेयन्नष्टैः कष्टप्रकल्पना। विदुषामुपहासाय वर्त्तते न तु सम्विदा ॥३७४॥

अथापि स्यात्(।)संसृष्टस्याकर्षणन्दृष्टमित्ययस्कान्ताकृष्यमाणस्यापि तत्। न(।) मन्त्रस्याप्याकर्षकत्वन्दृष्टन्तदा कृष्टस्यापि स्पर्शप्रसङ्गेनातिप्रसङ्गात्। भवतु तत्रापीतिचेत्। न (।)शब्दस्य गुणत्वात्। यदि वानैकान्तिकत्वदर्शनविषयेपि स एव धर्म्म आसज्यते। न क्वचिदनैकान्तिकत्वेन भवितव्यं। स श्यामस्तत्पुत्रत्वादिति व्यभिचारदर्शने गौरपुत्रेण तत्राप्यस्ति श्यामतेति प्रसङ्गः। कस्मान्न दृश्यत इति। अदर्शनकारणमत्रमीयतां।

किञ्च । यदि चक्षूरश्मयोनिर्गत्य संसर्गवन्तः कस्मादतिदूरेपि न दर्शनमध्यवहिते प्रदीपरश्मिवदिति न दोषः । एवन्तर्हि अतिनिकटग्रहणप्रसङ्गः । न हि प्रदीपरश्मयोऽतिनिकटे न प्रवर्त्तन्ते । तस्मादपरो धर्मश्चक्षुरादीनाम्प्रदीपादभ्युपगन्तव्यः । स एव ग्रहणकारणन्न रश्मिसन्निकर्षः यदि च रश्मयश्चक्षुरादीनामनुकारेपि ग्रहणप्रसङ्गः । अथ मनसः सा शक्तिर्यतः सा शीघ्रता । सकृद्ग्रहणमेव तर्हि जनयतु किमनया कष्टकल्पनया । न च मनस्तथाभूतं प्रमाणसिद्धं । मनस्कार एव पूर्वविज्ञानरूपस्तदर्थक्रियाकारी । तस्य विषयान्तरावधानवैगुण्येऽन्यत्र ज्ञानानुपपत्तेर्युगपज्ज्ञानानुत्पत्तिस्ततश्चान्यथासिद्धित्वात् न मनस्ततो लिङ्गादवगतिः ।

तस्माद् बुद्धिस्तदत्कारग्राहिका व्यपदिश्यते । सन्दंशैरिव विज्ञानैर्न त्वर्थग्रहणेक्षणम् ॥३७५॥

तस्मादभ्रान्तमेवालेख्यानेकाकारग्रहणं सकृत् । अथ तत्र संयोगश्चित्रो नावयविरूपं । तदसत् । संयोगस्य गुणत्वान्न तत्र रूपग्रहणसमवायः । तथा सति गुणवदिति द्रव्यमेव भवेत् । एवञ्च विजातीयानारम्भादिति समयव्यतिक्रमः ।

अथोपचारेण संयोगस्य चित्रता । तदप्यसत् । एकार्थसमवायेन हि वनङ्कुसुमिति यथा बुद्धिस्तथेयमपि स्यात् । न चानयोः साम्यं । वनं हि वहुत्वसङ्ख्याया तरुष्वसमवेता यत्र कुसुमितत्वन्तत एकार्थसमवाय इत्युक्तं । नत्वत्र चित्रत्वमवयवेषु समवेतं यत्र संयोगः । यदाह ।

प्रत्येकमविचित्रत्वात् ;

न खलु प्रत्येकं सूत्रादीनाञ्चित्रता येन तत्समवेतः संयोगोपि तथा भवेत् । अथ यथाग्नित्वङ्ग गृहीतमग्नौ तीक्ष्णतासाधर्म्यग्रहणोपपादिताऽग्निवासनाप्रबोधस्तस्य स्मरन्नध्यारोपयति माणवकेपि पावकतां । तथा क्रमेण गृहीतान्नीलादीनन्यतरग्रहणसमये गृह्यमाणेऽध्यारोपयतीति चित्रप्रतीतिः । तदनुपपन्नं । यतः ।

गृहीतेषु क्रमेण च (।)

न चित्रधीसङ्कलनमनेकस्यैकयाऽग्रहात् ॥२०७॥

तत्र हि तीक्ष्णतासादृश्यमध्यारोपनिमित्तमिह तु गृह्यमाणस्य नीलादेः कथमध्यारोपः । अथ प्रत्यासत्तिः । सा सकृद् ग्रहण एवोपपत्तिमती । क्रमग्रहणे तु न प्रत्यासत्तिग्रहणं । तद्देशे ग्रहणादिति चेत् । तद्देशग्रहणेपि न पूर्वापरयोश्चित्रताग्रहः । अध्यारोपाद् भवतीति न युक्तं । अस्यैव चिन्त्यत्वात् । अथ स्मर्यमाणङ्ग गृह्यमाणतया प्रत्यवभासते भेदाग्रहणात् । कथमन्यस्यान्यथा ग्रहः । स्मर्यमाणरूपताम्परित्यज्य प्रतिभासने ग्रहणमेव तत् । ततो न सङ्कलनं । अथ ग्रहणरूपमेव सङ्कलनं । तथा सति अनेकस्यैकया ग्रह एव प्रसक्तः । न चेष्यते । चक्षुर्व्यापारेण सकलस्य प्रतीत्युपलक्षणात् । तस्मादनर्थममीभिरनिबद्धकल्पनाकलङ्काङ्कितजडजनकल्पितैरित्याह ।

( चित्रैकत्वचिन्ता )—

नानार्थिका[1] भवेत् तस्मा(त्) सिद्धातोप्यविकल्पिका ।
विकल्पयन्नप्येकार्थं यतोन्यदपि पश्यति ॥२०८॥

---

[1] M. नानार्थैका

चित्रप्रतिभासे हि नानानीलादिरूपे नीलमिदमिति विकल्पयन्नपि पर्यन्तवर्त्तिपीतादिकम्पश्यत्येव न च युगपदनेकविकल्पसम्भवः। चित्रमिति विकल्पते एवेति चेत्। न(।) नियमाभावात्। न ह्यवश्यञ्चित्रमित्येव विकल्पितव्यं। एकत्रापि विकल्पदर्शनात्। एवञ्च सकृत् सकलनीलाद्याकारा बुद्धिरेकैव चित्राकारा। तत्र चोद्यं।

**चित्रावभासेष्वर्थेषु यद्येकत्वन्न युज्यते।**
**सैव तावत् कथम्बुद्धिरेका चित्रावभासिनी ॥२०९॥**

एतत् प्रतिपादयति।

यथैव बुद्धिर्भवता चित्राकारोपगम्यते। तथैव यदि बाह्योपि विभागस्तत्र किङ्कृतः ॥
वैश्वरूप्याद् धियां यत्र भावानां चित्ररूपता। तदारूढ़स्य रूपस्य किम्बुद्धेर्न भविष्यति ॥

तस्माद् बुद्धिदृष्टान्ते नानैकान्तिकमेतच्चित्रत्वादेवानेकमिति। तत्रेदमुच्यते।

**इदम्वस्तुबलायातं यद् वदन्ति विपश्चितः।**
**यथा यथाऽर्थाश्चिन्त्यन्ते विशीर्यन्ते[1] तथा तथा ॥२१०॥**

यतः।

**किं स्यात् सा चित्रतैकस्यां ; न स्यात् तस्यां मतावपि।**
**यदीदं स्वयमर्थानां रोचते तत्र के वयं ॥२११॥**

अयमर्थः। न खल्वेका सती बुद्धिरपि चित्रा(।) तत्राप्यनेकाकारत्वादनेकैवाकारलक्षणत्वाद् वस्तुनः। आकारबहुत्वेन नियमेन वस्तुनोपि। ततस्तावत्य एव बुद्धयो यदि का क्षतिरुत्तरपक्षवादिनः। अथ नानात्वे बुद्धीनां प्रतिपरमाणु तावत्यो बुद्धय इति परमाणुग्रहणप्रसङ्गोऽनेकप्रतिपत्यप्रसङ्गश्च। परस्परमप्रतिपत्तेरभावात्। न खलु स्वसम्विदितानान्नानात्वप्रतिपत्तिः। सन्तान्तरस्यापि प्रतिभासप्रसङ्गात्। नैतदस्ति। दृष्टत्वात्। न हि दृष्टेप्यनुपपन्नता नाम। न तर्हि स्वसम्वेदनम्परस्परस्यापि वेदनात्। न स्वसम्वेदनमन्तरेण वेदनासम्भवात्। एतच्च प्रतिपादयिष्यते। सम्वेदने तु परसम्वेदनेन प्रयोजनमेव। कस्तर्हि बहुत्वम्प्रतिपद्यतां। न कश्चित्। तद्व्यतिरेकेण प्रतिपत्तुरभावात्। तस्मात्।

नैकत्वन्नापि नानात्वम्बुद्धीनामुपपत्तिमत्। एकत्वे चित्रताऽभावोऽनेकत्वे सुतरामसत् ॥३७६॥

तस्माद् यथा यथा वस्तु चिन्त्यते तथा तथा विशीर्यत एवेति किमत्र कुर्मः। तस्मादाह। "विज्ञानम्विज्ञानरूपतया शून्यमिति सकलधर्मशून्यतैव न्याय्या।"

अथ प्रतिभासमानङ कथमेकत्वानेकत्वविकल्पनादेव न भवति। विकल्प्यमानमपि तत् प्रतिभासत एव। मायामरीचिप्रभृतिप्रतिभासवदसत्त्वेपि न दोषः। तेषामप्यविद्यमानत्वे कथम्प्रतिभासः। प्रतिभासश्चेत् कथमविद्यमानता। अर्थक्रियाकारित्वाऽभावादेव। अर्थक्रियाकारित्वलक्षणत्वात् सत्त्वस्य न प्रतिभासमात्रेण सत्त्वव्यवहारः। केशादिप्रतिभासेप्यसत्त्वनिश्चयात्।

**( अर्थक्रिया )—**

ननु केयमर्थक्रिया (।) किम्प्रतिभासमानादपराऽथ तदेव। अपरा चेत्। तस्या अपि

[1] विविच्यन्ते—तत्रैव

प्रतिभासमानरूपादपरार्थक्रियाऽभ्युपगम्यतेऽनवस्थानादप्रतिपत्तिः। सैव चेत्। सर्वप्रतिभासानां सत्त्वप्रसङ्गः इति न मायादीनामसत्त्वं। अत्रोच्यते।

कस्यचिद् व्यतिरिक्तैव कस्यचित् तद्विपर्ययात्।

स्वभाव एष भावानामविभागेन व्यवस्थितिः ॥३७७॥

न हि प्रतिभासमान इत्येव सर्वोर्थक्रिया। य एवार्थक्रियात्वेन प्रतिभाति स एवार्थक्रियास्वभावः। न चार्थक्रियास्वभावस्यासत्त्वमव्यतिरेकेण व्यतिरेकेण च सत्त्वव्यवस्थितेः। एवन्तर्हि न सर्वप्रतिभासानामसत्त्वङ कस्यचिदर्थक्रियासम्बन्धात्। न(।) पराभ्युपगमेन प्रसङ्गकरणात्। अर्थक्रियया हि सत्त्वमभ्युपगच्छन्ति सत्त्ववादिनः। तत्प्रतिभासव्यतिरेकेणार्थक्रिया। न हि नीलादिस्वरूपादपरमर्थक्रियात्वमवभासते। यदेव यस्येष्टं सैवार्थक्रिया। एतदनवस्थितमेव कस्यचित् किञ्चिदेवेष्टं। पीडानिवर्त्तनमाह्लादनं चार्थक्रियेति चेत्। न(।) पीडाह्लादयोरप्यनवस्थितत्वात्। भावनावशेन च सर्वस्योत्पत्तेः। भावनाया भावे चाभावादसत्त्वमेव परामार्थत इति व्यवस्था। यद्येवम्भावनाबलात् ज्ञानमेव तथा भूतन्न त्वसत्त्वं। अविद्यावशादुत्पन्नत्वमेवासत्त्वं। तथाभूतस्य स्थितरूपस्यासत्त्वात्। प्रतिभासमात्रेणत्वविचारितरमणीयेन भावात् सम्वृति सत्यतैव।

**तस्मान्नार्थेषु न ज्ञाने स्थूलाभासस्तदात्मनः।**
**एकत्र प्रतिषिद्धत्वाद् बहुष्वपि न सम्भवः ॥२१२॥**

अर्थेषु हि परमाणुष्ववयविषु च न स्थूलाभासः। स्थूलता हि दिग्भागभिन्ना दिग्भागानाञ्च परापरपरिहारेण स्थानानैकत्वं। अथ बहुषु स्थूलाभासता। तथा हि बहवः समानजातीयाः परमाणवोऽविच्छिन्नतया प्रतिभासमानाः स्थूलतया व्यपदिश्यन्ते। नैतदपि युक्तं। बहव एवते स्थूलतायाः प्रत्येकमभावात्। समुदायस्य भविष्यतीति चेत्। कोपरस्तेभ्यः समुदायः। एकघनश्च प्रतिभासः स्थूलव्यपदेशभाक्। न च परस्परविविक्तप्रतिभासे एकघनतास्त्यन्तरालस्यापि प्रतिभासनात्। अथ न प्रतिभाति न तर्हि ते प्रतिभासिताः स्युः। अथ परमाणुप्रलये तत्संयोगावन्य एवावयवी जायते। न तत्र परमणवोऽवयवा वा केचन। यद्यन्य एवावयवी उत्पन्नस्तथा सति परमाणवोपि नश्यन्त्यवयवी चापरउत्पन्नो बीजादिवांकुरः। ततश्च संयोगसहायाः परमाण्वादयोऽवयविनं स्वसमवेतमारभन्त इति समवायिकारणत्वन्तन्त्वादीनान्न स्यात्। द्विष्ठत्वात् सम्बन्धस्य। इह बुद्धिश्च निरालम्बना भवेत्। सप्तम्यर्थस्याभावात्। तस्य वाऽनवयवस्य ग्रहणे परभागादिग्रहणप्रसङ्गः। परभागे च दृश्यमानेऽपरस्यापि दर्शनन्तस्याप्यवयवित्वात्। परभागस्येति सर्व्वः सर्व्वदर्शी भवेत्। अथ परभागो न दृश्यते। परभागस्यैवाभावात् परेण कथन्दृश्यते। अन्य एवासाविति चेत्। न तर्ह्यसावयवती। न च स्थूलता। पर्यायेण तस्य दर्शनमिति चेत्। न(।) एकत्र पर्यायासम्भवात्। न च स एवासाविति शक्यम्प्रतिपत्तुं। स्पृश्यतया दृश्यतया च प्रतीतेरवयवीति चेत्। न। प्रमाणाभावात्। परस्परस्वरूपपरिहारेण प्रतिपत्तौ कथमेकत्वं। ग्रहणकृतोयम्परस्परविभागो ग्राह्यन्त्वेकमेव। सकलस्तर्हि भेदो विशीर्यते। द्वयमेव भवेत्। न च तद्व्यतिरेकेण तस्यापि प्रतिभासनमिति शून्याः सर्वधर्म्माः। न च यदेव दृश्यते तदेव स्पृश्यत इति प्रमाणमस्ति। तस्मान्नावयवी नावयवाः प्रतिभासगोचर(रा)ः। प्रतिभास इत्येवास्तु। यदि तर्हि प्रतिभास एवायं स एव विज्ञान वा दः प्रसक्तः। कथं सर्व्वधर्म्मशून्यता। अत्रोच्यते।

**परिच्छेदोन्तरन्योयम्भागो बहिरिव स्थितः ।**
**ज्ञानस्याभेदिनो भेदप्रतिभासो[1] ह्युपप्लवः ॥२१३॥**

ज्ञानमपि यदीदं स्वसम्वेदनं स्वस्वरूपपर्यवसानात् भेदावभासिता न युक्ता । न हि स्वसम्वेदने परसम्वेदनं । ततो न भेदप्रतिभासः । अथ परस्परेणैव सम्वेदनन्तेन भेदः । तत्रापि ।

प्रत्येकम्प्रतिपत्तौ स्यात् सन्तानान्तरवत् प्रमा ।
तथा मया परिच्छिन्नमिति नास्त्यस्ववेदने ॥३७८॥

यदि ते वेदने स्वञ्च परञ्च वित्तः स्वपरवेदने । द्वयं स्वसम्वेदनमायातं । न हि स्वरूपसम्वित्परसम्विदमाविशति । अथ स्वसम्वेदनन्नास्ति । परस्यैव सम्वेदनम्परस्पराभ्यां । तथा सति देवदत्तयज्ञदत्तपरिच्छिन्नमिव न द्वयमिति वेद्येत । मया विदितमेतदिति च न स्यात् कर्त्तुरस्वसम्वेदनत्वेनावभासनात् । ततश्च ते एव स्वसम्वेदने स्यातां । तथा च सन्तानान्तरप्रतिपन्नवदप्रतिपत्तिर्द्वयोः । अत एवात्मा द्वयोः प्रतिपत्तेष्यतेऽन्यथायम्प्रसङ्ग इति परः । अत्रोच्यते ।

स्वसम्वेदनेतरत्वे पूर्वन्यायानतिक्रमात् । सोपि पर्यनुयोगेन नैवानेन विमुच्यते ॥३७९॥

यदि सम्वेदनरूप आत्मा तस्य तस्य स्वात्मनि निमग्नत्वान्न परसम्वेदनं । परस्यापि वेदने को विरोध इति चेत् । तेन रूपेण परम्वेत्ति परेण वेत्ति विकल्पयोरेकत्र स्थातव्यं । स्वरूपेण वेत्तीति न युक्तं । स्वरूपस्य स्वात्मनि व्यवस्थानात् । स्वरूपे निविष्टं यद् रूपं स्वाभिमुखमेव तत्कथम्परम्वेत्ति । अन्यमुखञ्चेत् । तेन तर्हि स्वात्मा न प्रतीयते । ततः सन्तानान्तरवेदनवन्न द्वयं प्रतीतिः । यस्य तदस्ति मुख्यद्वयं स एक इति चेत् । द्वयमेतदिति कः प्रतिपत्तिमान् । स एवेति चेत् । पुनराभिमुख्यद्वयेन प्रयोजनमित्यनवस्था । ततः स्वसम्वेदनरूपं त्रयं । ततस्तद्वेदनेपर आत्मोपगन्तव्यः । पुनरपर इति महत्यनर्थपरम्परा । ततो वेदनादेकमेव सम्वेदनमतो "ज्ञानस्याभेदिनो भेदप्रतिभास उपप्लव" इति ज्ञानमपि स्वरूपेणाप्रतिपन्नमसदेवेति शून्यतैवावशिष्यते । यतः ।

**तत्रैकस्याप्यभावेन द्वयमप्यवहीयते ।**
**तस्मात् तदेव तस्यापि तत्त्वं या द्वयशून्यता ॥२१४॥**

स्यादेतद्(।) एकस्य परित्यागे ज्ञानमात्रम्भविष्यति । प्रतिभासमानपरित्यागे द्वयमपि तथा न वा किञ्चिदित्येकान्त एषः । अस्तु द्वयमपीति चेत् । न(।) उक्तोत्तरत्वात् । न स्वसम्वेदनम्परसम्वेदनमिति प्रतिपादनात् । तस्माच्छून्यतैव ज्यायसीति युक्तं ।

इदानीं माध्यमिक-योगाचारबाह्यार्थवादिनयेन च शून्यतार्थम्प्रतिपादयति । रूपम्वेदना संज्ञा संस्कार(ो) विज्ञानमित्यादिभावानाम्व्यवस्था सा ।

**तद्भेदाश्रयणी चेयम्भावानाम्भेदसंस्थितिः ।**
**तदुपप्लवभावे च तेषाम्भेदोप्युपप्लवः ॥२१५॥**

---

[1]. M. भेदिनौ भिन्नौ प्रतिभासो ।

विजानातीति विज्ञानमिति ।

> न ग्राह्यग्राहकाकारबाह्यमस्ति च लक्षणम् (।)
> अतो लक्षणशून्यत्वान्नि(ः) स्वभावाः प्रकाशिताः ॥२१६॥
>
> व्यापारोपाधिकं सर्व्वं स्कन्धादीनामविशेषतः ।
> लक्षणं स च तत्त्वन्न तेनाप्येते विलक्षणाः ॥२१७॥
>
> —इत्यन्तरश्लोकाः ।

ननु बाह्यपदार्थरूपादिदेशना भगवतस्तदन्या च कथमिति वक्तव्यमित्याह ।

> यथा स्वप्रत्ययापेक्षादविद्योपप्लुतात्मनां ।
> विज्ञप्तिर्वितथाकारा जायते तिमिरादिवत् ॥२१८॥
>
> असम्विदिततत्त्वा च सा सर्वापरदर्शनैः ।
> असम्भवाद् विना तेषाङ्ग्राह्यग्राहकविप्लवैः ॥२१९॥
>
> तदुपेक्षिततत्त्वार्थैः कृत्वा गजनिमीलनं ।
> केवलं लोकबुद्ध्यैव बाह्यचिन्ता प्रतन्यते ॥२२०॥

ननु यदि परमार्थतः सकलमेव शून्यम् (।) भगवाँश्च तत्त्वदर्शी (।) तत्कथम्बाह्यपदार्थदेशना भगवतः । न हि तत्त्वदर्श्यतत्त्वन्देशयति । देशने वा कथन्तत्त्वदर्शीति गम्यते । अत्रोच्यते । न बाह्यार्थविधानार्थम्भगवतो बाह्यदेशना (।) अपि त्वनुवादार्थम् (।) आत्मनिषेधस्य तदनुवादेन विवक्षितत्वात् । अनुवादोपि कथं शून्यतादर्शिनस्तदप्रतिभासनात् । न (।) लोकबुद्ध्यैवानुवादसम्भवात् । लोकस्य च तथा बुद्धिरनाद्यविद्याभ्यासात् ।

ननु यदि लोकबुद्धिर्भगवतः कथन्तत्त्वदर्शिता । न (।) पूर्वविधेन देशनासम्भवात् । चक्रभ्रमणवत् । तस्मादनेकाकारदेशनावताराय लोकस्य विरुध्यते ।

एवन्तावद् बुद्धेः शून्यतामभ्युपगम्यानैकान्तिकपरिहारः कृतः । इदानीञ्चित्रत्वमभ्युपगम्य परिहरति । चित्राभासापि बुद्धिरेकैव बाह्यचित्रविलक्षणत्वात् । शक्यविवेचनञ्चित्रमनेकमशक्यविवेचनाश्च बुद्धेर्नीलादयः । यतः ।

> नीलादिश्चित्रविज्ञाने ज्ञानोपाधिरनन्यभाक् ।
> अशक्यदर्शनः; तं हि पतत्यर्थे विवेचयन् ॥२२१॥

चित्रविज्ञानात्मभूतो यो नीलादिः केवलोऽशक्यदर्शनस्ततो विवेचयितुमशक्यत्वादेकतैव बुद्धेश्चित्रायामपि । यदि तर्हि चित्रमप्येकं शब्दादिप्रतिभास्यप्येकः स्यात् । भवतु यदि विवेचयितुन्न शक्यः । अथ कर्ण्णौ पिधायापि रूपादिकमुपलभ्यते । ततः केवलग्रहणादनेकता । तदप्यसत् । न ज्ञानस्य विवेचनं । तदा पूर्व्वप्रतिभासस्याभावात् । अप्रतिभासनात् । अप्रतिभासमानो (?) शब्द आस्ते ततो भेद इति चेत् । नासौ तदा ज्ञानपरोक्षत्वाद् (।) एवं हि विवेचयन्नर्थ एव पतेदसम्विदितत्वादर्थस्य ।

अथ पूर्व्वकविज्ञानाकारात् सहप्रतिभासमानादिदानीङ्केवलः प्रतिभासमानोन्य इति विवेचनं । तदप्यसत् । न हि पूर्वतायां ज्ञानम्प्रत्यक्षम्प्रवर्त्ततेऽपि तु ।

**यद् यथा भासते ज्ञानन्तत् तथैवानुभूयते[1] ।**

**इति नाम स्यात् । न त्वनुभतमासीदिति भवति । न हि स्वसम्वेदनप्रत्यक्षम्परोक्षे प्रवर्त्तते । परोक्षस्यास्वसम्वेदनात् ।**

**अथ स्मृत्वा ज्ञायते । न युक्तमेतत् । स्मृतेरप्रमाणत्वात् । अथानुभवादुत्पत्तिमती स्मृतिः प्रमाणमेव नानुभवात् स्मृतिरुदयवतीति किञ्चिदत्र प्रमाणमनुभवकाले स्मृतेरभावात् । न चास्य स्मृतिरहमनुभवादुत्पन्नेति जानाति । अनुभवस्य तयाऽदर्शनात् । अनुभवानुभवे वा न स्मृतिर्भवेत् । अनुभव एव तदा स्यात् । तस्मादशक्यविवेचनञ्चित्रमेकमिति न दोषः । बाह्यस्यापि तर्ह्यशक्यविवेचनत्वादेकतेति चेत् । न(।) तदैव परेणैकस्य दर्शनात् ।**

**अथ परेण यद् दृश्यते तदन्यदेव सुतरां तर्हि विवेकः । स्वदृष्टमेवैकमिति चेत् । न(।) स्वसम्वेदनप्रतिभासाज्ज्ञानमेव तत् ।**

**इति नामैकभावः स्याच्चित्राकारस्य चेतसः[2] ॥२२२॥**

**न हि ज्ञानत्वम्प्रत्याख्याय विवेचनमस्ति । तस्माद् ग्राह्यग्राहकनीलाद्याकारा चित्रा बुद्धिरेकैवेति चित्राद्वैतमेव । न वा तच्चित्रमचित्राद् भेदेन व्यवस्थापनासम्भवात् । तस्मात् सम्वेदनमेव केवलमद्वैतमपरस्याभावादिति स्थितं । एवन्तर्हि भावाभावाभ्याम्विवेकसम्भवात् कथमद्वैतं । तथा हि ।**

न भेदोस्ति ततोऽभावाद् भिन्नोऽभेदो व्यवस्थितः। अभावाप्रतिपत्तौ तु भेद्यस्याद्वैतता कुतः ॥३८०॥

**यदि भेदो नास्ति भेदादन्योऽभेद एवास्तीति प्रतीयते । तथा सत्यभावम्प्रतिपद्यमानो भावञ्च भावाभावयोर्द्वैतमेव प्रतिपद्यते तत्कथमद्वैतं । तथा हि ।**

स्तम्भोत्र कुम्भे नास्तीति प्रतिषेधन्न नास्तितां ।
विनाभेदस्य सम्वित्तिरायाता नान्तरीयिका ॥३८१॥

**प्रतिषेधो हि भेदेनान्तरीयक एव सकलस्तत्र प्रतिषेधम्प्रत्येति । प्रतिषेधाप्रतिपत्तौ तु यथाभूताभ्यनुज्ञानान्न किञ्चित् प्रतिपादितं स्यात् । परञ्च प्रतिपादयता परोभ्युपगन्तव्य इति कथमद्वैतं । न ह्यात्मानमेव कश्चित् प्रतिपादयति ।**

**अथ परन्न कश्चित् प्रतिपादयेत् तथा सत्यात्मन एव व्यामोहः कथमद्वैतप्रतिपादनं । व्यामोहे वा निवर्त्तमाने पररूपस्योत्पत्तेरद्वैताभावः । कथञ्च पूर्वापरप्रतिप्रत्तिरिति सर्व्वमसमञ्जसं । अत्रोच्यते ।**

भेदो नाम न दृश्योयं येनैवम्प्रतिपादितं । भावाभावादिकल्पोयन्तम्प्रति स्यान्न सङगतः ॥३८२॥

**न तावत् पूर्वापरयोरयम्भेदः प्रतिभासवान् । प्रत्यक्षस्य पूर्वापरयोरवृत्तेः । यदि पूर्व्वम्प्रत्यक्षे तदैव प्रतिभासेत । वर्त्तमानतैव तस्य स्यात् । द्वितीयवदेतदेव तस्य वर्त्तमानत्वं यत्प्रत्यक्षे साक्षात्करणरूपे प्रतिभासः ।**

**अथ योगिनां साक्षात्करणेनप्रतिभासमानमपि कथमतीतादिकं । अथ नैत्युच्यते । कथमतीतादि वेदनं । तदसत् ।**

---

1. M. प्रकाशते ।
2. M. चेतसि

इह जन्मनि केषाञ्चिन्न तावदुपलभ्यते । तामवस्थाङ्गतानान्तु न विद्मः किम्भविष्यति ॥३८३॥

**यत्र हि दृश्यमानाभिमतस्यापि प्रतिषेधस्तत्रानागते क इवादरः । इहापि सत्यस्वप्नदर्शिनोतीतादिकम्विदन्त्येव । नोत्थितानामनुपलम्भावस्थायान्तथा व्यवहारात् । तस्मान्नातीतम्प्रत्यक्षेण गृह्यते नागतं । ततः कथन्ततो भेदप्रतिपत्तिः । स्मरणमेवातीते तदप्यप्रमाणं ।**

**अथानुमानेन दृढतादिप्रतिपत्तेः कारणस्य ततो भेदं प्रत्येष्यति । तदप्यसत् । यतः ।**

अनुमानं हि व्यथन तेन सम्बन्धवित्तितः । कारणस्य दृढत्वस्य न चाध्यक्षेण वेदनं ॥३८४॥

**यदि भाव्यर्थेन दृढतायाः कारणस्य च सम्बन्धग्रहणन्तदानुमानं युक्तं । प्रतिबद्धात् परोक्षार्थप्रतीतिरनुमानमित्यनुमानवादिनः । अथ प्रतिबन्धग्रहणमन्तरेणैवानुमानन्दृष्टत्वादिति चेत् । अतिप्रसङ्ग एव तर्हि प्रसक्तः । अदृष्टत्वादेव न भविष्यति । न हि दृष्टमितरच्च शक्यमेकीकर्त्तुं । यदि दृष्टत्वात् परिहारम्वदेत्(।) दृष्टत्वमनुमानेन प्रत्यक्षेण वेति चिन्त्यं । यद्यनुमानेन(।) तदेवानुमानञ्चिन्त्यते कथन्तेन । अथ प्रत्यक्षेण(।) तदेतदसत् । नहि प्रत्यक्षेणानुमानं शक्यन्द्रष्टुं । तस्य परोक्षविषयत्वात् । परोक्षे च प्रत्यक्षस्यावृत्तेः कथम्परोक्षविषयतयानुमानस्य स्वीकारः । न हि परोक्षमविषयीकुर्व्वता तद्विशेषणमनुमानं शक्यम्प्रतिपत्तुं ।**

**अथ तद्विषयतया न गृह्यते(।)तथा सति तदनुमानन्न दृष्टमेव । कथन्दृष्टत्वादिति हेतुः । स्वरूपसम्वेदनमात्रमेवानुमानं स्वसम्वेदनप्रत्यक्षेण तथा दृष्टत्वात् । अथैवमेव व्यवहारस्तथा सति । व्यवहारमात्रकमेवास्तु किम्भेदाभिनिवेशेन । भेदाभिनिवेशोपि दृश्यत इति चेत् । किन्दृष्टमपनेतुमशक्यमेव (।) एवमेतदिति च न सङ्गतं । सर्वस्य व्यामोहस्यापनेतुं दृष्टत्वेना शक्यत्वाद् व्यर्थक एव भवतामुपदेशदानोद्यमः । भवतामपि व्यर्थक एवेति चेत् । न (।)अदृष्टे दृष्टाभिमानसम्भवात् तथाभूतत्वकथनार्हत्वात् । तथा सति भेदाभिनिवेशमन्तरेणैव भवताम्भेदाभिनिवेशाभिमान इति तद्योग एव युक्तः । तथा हि ।**

वर्त्तमानः प्रतीभासो निर्विभागो न भेदभाक् । पूर्वापरप्रत्यययोः प्रत्येकञ्च न भिद्ग्रहः ॥३८५॥
समुदायात् तथा स्याच्चेद् गुडनागरकार्यवत् । कार्यन्तत्र द्वयोरेकमिति सम्भूयकारिता ॥३८६॥
न कार्यमिह किञ्चित्तु स्यात् पूर्वापरचेतसोः । ततः परा तु विज्ञप्तिः स्मृतिस्सानुभवान्तरा ॥३८७॥
भेदे चानुभवो नास्ति स्मृतिर्नानुभवाद्विना । तया समानकालस्य वेदने प्राप्तमद्वयम् ॥३८८॥

**इक्षुविकारनागराभ्यां हि तन्निवर्त्त्यरोगनिवर्त्तनं स्वास्थ्यम्वा कार्यङ क्रियते । तेन समुदायव्यपदेशः । इह तु पूर्वापरप्रत्यययोः स्वार्थमात्रप्रतीतिरूपयोर्न कार्यमपरं । प्रतीतिस्तयोरात्मभूते च(।)तस्याश्च भेदे किमपरमभिन्नं यदपेक्षया समुदायता भवेत् । स्मृतिस्तयोः कार्यमेकं पूर्व्वापरग्रहणरूपा(।)न स्मृतिरनुभवाद् भवन्ती तथाभूतरूपानुकारिणी न चानुभावो द्वयग्राही ततो न स्मृतिरपि । कथन्तर्हि रूपस्पर्शविज्ञानार्थयोर्मानस एष स्मार्तविकल्पः । भेदग्रहणमभिप्रेत्य तदुक्तं । न चात्र तथा प्रक्रमः । न च स्मृतिरर्थग्रहणे प्रवर्त्तते येन स्वतन्त्रा प्रवर्त्तेत । स्मृत्या चेद् द्वयङ गृह्यते । समानकालमेकमेव तदविवेकादिति प्रतिपादितं । किञ्च ।**

स्मृतिरेव विवेकस्य ग्राहिकेति मतम्भवेत् । नैवानुभव इत्येतत् साम्वृतम्भेदवेदनं ॥३८९॥

**तथा हि ।**

रक्तारक्तावभासे हि चित्रमेकङ्गतम्भवेत् । पृथग्भूतम्मया दृष्टन्द्रक्ष्यते च तथा पुनः ॥३९०॥
एवं हि भेदावसतिरन्यथा न प्रवर्त्तते । तस्मान्न भेदग्रहणङ क्वचित् सिध्यति तत्त्वतः ॥३९१॥
न चावभासमात्रेण चित्राचित्रविवेकिता । तस्मात् पूर्वानुसारेण सर्व्वमेतद् विवेच्यते ॥३९२॥

**स्मृत्यभ्यासावितपाटवा तर्हि प्रत्यक्षाद् भेदोपग्रह इति चेत् ।**

प्रत्क्षेण न यत् सिद्धन्तदभ्यासात् कथम्भवेत् । अभ्यासादपि तस्येष्टं युगपत् प्रतिभासनं ॥३९३॥
तत्रापि तद्विवेकस्य स्मृत्यैव कृतिरिष्यते । एवञ्चानुभावारूढो न भेदः सिध्यति क्वचित् ॥३९४॥
स्मृतौ स्मृत्यनुभवयोः केवलोनुभवो यदि । अनेकरूपता सापि न विविक्ता परस्परं ॥३९५॥
विवेककरणाशक्तेः स्वयमन्येन भावतः । विच्छिद्य शक्यते नेतुन्न द्रष्टुन्नान्यथा च यत् ३९६॥
भिन्नेनापि हि किन्तेन हेमोपादेयता कृतेः ।

**ननु स्मृतिरपि यदि प्रत्यक्षप्रत्ययसमानकालजन्मा तेन सहैकतां स्वीकुर्यात् । सविकल्पक एव प्रत्यक्षात्मा प्रसक्तः । ततश्च विकल्पकम्प्रत्यक्षमिति प्रस्तुतस्य हानिः । सोपं शुष्के पतिष्यामीति कर्दमे पातः । न सदेतत् ।**

भेदवादिनमारभ्य स्मृतेरन्यत्त्वमुच्यते । हेतुस्वभावभेदेन सकलस्य विभिन्नता ॥३९७॥

**भेदवादिनो हि सकल एव भेदो हेतुभेदेन स्वभावभेदात् । तत्र स्मृतेर्वासनामात्रकादुदयो न तथेन्द्रियविज्ञानस्य स्मृतिः परोक्षविषया नेन्द्रियजसम्वेदनमतः स्तम्भादिवदेव भेदोऽनयोरिति बा ह्या र्थ वा दी स्वाभ्युपगमेन प्रबोध्यते । अभेदवादिनस्तु कुतोयम्विभागः ।**

न हि कारणवद् वित्तिः प्रत्यक्षेण तदग्रहात् । अनुमानन्तु नाध्यक्षमन्तरेण प्रवर्तते ॥३९८॥

**न खलु प्रत्यक्षतः पूर्वापरस्तुद्वयग्रहणं । कार्याभिमतग्रहणकाले स्मरणमेव कारणाभिमते । यदा स गृह्यते तदा स्वरूपेणैव ग्रहणन्न कारणत्वेन । कार्यस्याग्रहणात् । कार्यग्रहणकाले च तदतीतं स्मरणगोचर एव । न च स्मरणमननुभूते न च कारणत्वस्यानुभवः कथं स्मरणं(।) अथ कार्यकालेपि तदनुभूयत इति मतिः । तथा सति पूर्वरूपतानुभवाभावात् समानकालतयाऽशक्यविवेचनत्वादभेद एव कुतः कार्यकारणभावः । अथ स्मरणेन पूर्वमपि केवलमेतदनुभतमिति व्यवस्थाप्यते । ततो विवेचनाद् भेद एव ।**

**अथ किन्तत् स्मरणम्(।) अनुमानमथ स्मृतिमात्रं । यदि तावदनुमानङ्कथम्प्रत्यक्षमन्तरेण । न हि प्रत्यक्षेण प्राक्पूर्व्वतापरिग्रहो वर्त्तमानग्राहि सकलमेवाध्यक्षं ।**

**अथ यत्प्रत्यक्षेण नियतावधिगृहीतम्परेणामिश्रितन्तदेव परग्रहणापेक्षया पूर्व्वकमिति व्यवहारः । तदप्यसत ।**

न परापेक्षया पूर्व्वप्रत्यक्षस्य प्रवर्त्तनं । ततस्तेन न पूर्वत्वङ गृह्यते स्वात्मनि स्थितेः ॥३९९॥

**पूर्व्वकं हि प्रत्यक्षं स्वकालं परिगृह्णत् कथम्परापेक्षमात्मानञ्जानीयात् । तथा परमपि प्रत्यक्षं । तत एषा पूर्व्वापरप्रत्यक्षा न पूर्व्वपरप्रत्यक्षग्राह्या ततः स्मरणमपि कथन्तत्र प्रवर्त्तते ।**

तस्मान्नाध्यक्षतो नापि स्मृत्याऽपेक्षा प्रतीयते । ततो सम्विदिते कस्मादनुमानम्प्रवर्त्तते ॥४००॥
अथ स्मरणमात्रन्तदप्रमाणङ्कथन्ततः । प्रतीयताम्पूर्वपरव्यपेक्षा येन कार्यवित् ॥४०१॥

**अथ सामग्रीबलात् स एवायमिति प्रत्यय एकताग्राही ततो विवेचनं। स एवायमित्यपि स्मरणानुभवरूपम्प्रत्ययद्वयमेव। ततः केनैकता गृह्यते। दृश्यते ग्रहणमिति चेत्। न ग्रहणान्दृश्यते। अपि तु स्मरणग्रहणे। कथन्तर्हि स्मर्यमाणदृश्यमानयोः शकटशाकटवन्न प्रतीतिः। एवमेव प्रतीतिर्यदि निरूप्यते, नहि स्मरणप्रत्यक्षाकारयोरेकताप्रतीतिः। तथात्वे तावेव न स्यातां। तथा च न पूर्वापरयोरेकताप्रतीतिः। न हि स्मरणाकारतयाऽप्रतीयमानम्पूर्व्वमिति शक्यं। साक्षात्करणे वर्त्तमानतैव न पूर्व्वतेति न्यायः। अथ व्यवहारदर्शनादेकता। तदेतदन्धकारनर्त्तनं।**

प्रतीतिस्साधिकार्थानाम्प्रभेदभ्येतरस्य वा। प्रतीतेरप्रसिद्धस्य व्यवहारात् कथङ्गतिः ॥४०२॥

**व्यवहारो हि नाम किम्प्रमाणमथाप्रमाणं। प्रमाणञ्चेत्। प्रत्यक्षानुमानयोरन्तर्भावादसाधकत्वमिति प्रतिपादितं। अथा प्रमाणङ्कथम्भेदसिद्धिरत इति विचार्यतां। कथन्तर्हि भेदाभावे व्यवहारः। ननु भेदेपि समानमेतत् न समानं ज्ञानाद् भिन्नस्य प्राप्यस्य भावात् तदर्थी प्रवर्त्तते। भेदे तु पुनरसङ्गतमेव। अत्रोच्यते।**

भेदेपि यद्यसौ ज्ञातः किमर्थं स प्रवर्त्तते। अथाज्ञातः कथं बन्ध्यातनयेन प्रवर्तते ॥४०३॥
तस्याभावदस्य भावादेतावदेव कुतो मतं। स्पर्शादेः पूर्व्वदृष्टत्वात् पूर्व्वमेव प्रवर्त्ततां ॥४०४॥
इदानीन्तत्कथम्वृत्तिरसम्वेदनसम्भवे। अनुमानेन वित्तिश्चेत् कस्मै तर्हि प्रवर्त्तते ॥४०५॥
तत्सामान्यस्य वित्तिश्चेद् विशेषे वर्त्तते कथं। अभिन्नं यदि सामान्यम्प्रवृत्तिर्निष्फला भवेत् ॥४०६॥
भिन्नाभिन्ने यथा भिन्नङ्कथन्तत्र प्रवृत्तिमान्। यथा न भिन्नन्तत्प्राप्तेः कस्मै तत्र प्रवर्त्तनं ॥४०७॥
प्रवर्त्तनन्दृश्यते चेत् किम्प्रत्यक्षमथान्यथा। न हि प्रत्यक्षतो वृत्तिर्दृश्यते स्वार्थवेदनात् ॥४०८॥
पूर्व्वापरस्वरूपा हि वृत्तिस्तत्राक्षवित्न हि। नानुमानमनध्यक्षन्ततोपि नहि वृत्तिवित् ॥४०९॥
अद्वैतेपि कथम्वृत्तिरिति चोद्यनिराकृतं। यथा बलिस्तथा यक्ष इति किञ्चेन सङ्गतम् ॥४१०॥

**अनेनैतदपि निराकृतं। "अद्वैते कथम्परप्रबोधनाय प्रवर्त्तत" इति। स्वपरयोरस्यार्थस्यासिद्धेः। अयम्परोहन्न पर इति स्वसम्वेदमेवैतद् उदयमासादयति। नात्र परमार्थतो विभागः। अहम्प्रश्नयिता परः कथयति द्वयोरपि स्वाकारोपरक्तप्रत्ययसम्वेदनमेवैतन्न तु विभागः स्वप्नप्रत्ययवत्। उन्मत्तप्रत्ययप्रलापवच्च। उन्मत्तस्तर्हि वादी कथन्ततोऽद्वैतप्रतीतिरपि।**

**ननु सर्वप्रत्ययप्रलाप एवायम्प्रवर्त्तते नात्र प्रतीतेरुदयः। किन्तर्हि प्रतिवादिनान्येन वा कर्त्तव्यं। किङ्क्रियमाणङ्किञ्चिद् दृश्यते। यथा च न दृश्यते तथा प्रतिपादितमेव। कथन्तर्हि हेतुमन्तरेण भावः।**

कस्यात्र भावो भवता कारणादुपलभ्यते। कार्यकारणभावस्य प्रतीतिर्नेति साधितं ॥४११॥

**आकस्मिकी तर्हि सत्ता नेयङ्कदाचित् कस्यचिद् विरमेत। तथा।**

"नित्यं सत्त्वमसत्त्वम्वा हेतोरन्यानपेक्षणादिति" (प्र. वा. ३।३४)

**अयमप्यदोषः। यतः।**

किं सत्ता विरमन्त्येषा त्वया क्वाप्युपलक्षिता। कादाचित्कतयाथापि तत्पतज्जाड्यजल्पितं॥४१२॥

**भेदवादिनम्प्रति स मार्गः प्रदर्शितः। परमार्थतस्त्वविभागोपि बुद्धया नेत्येतदेव भविष्यति। तस्मादेकैव चित्रावभासिनी बुद्धिरिति स्थितं।**

**अथ बुद्धिवदेव घटादिरूपमपि चित्रमेकमेव को विरोध इति चेत्।**

**पटादिरूपस्यैकत्वे तथा स्यादविवेकिता!**

**यदि पटादिरूपमविवेकि भवति तथा सति बुद्धिरूपमेव तत्। बुद्धिसमानधर्मत्वात्। यथा हि बुद्धिर्न परेण दृश्यते। नोत्तरकालन्नापिधाय खण्डशस्तथा बाह्योपि यद्यर्थस्तथा सति बुद्धिरेव सा। माममात्रमेव बाह्यमिति अथ पिधाने सति तथा भतोन्य एवोत्पद्यते। यस्तवर्द्धतादिना दृश्यते। ततश्च।**

यो यथा विद्यते भावस्स तथैवोपलभ्यते(।) इति किन्नैकभावः स्याच्चित्राकारेप्यचेतसि ॥४१३॥

**अत्र समाधिः।**

यथा यथा दृश्यते तत्तथैवोत्पद्यते यदि। परोक्षपरदृश्यत्वभावेनोत्पद्यतान्न सः ॥४१४॥
कारणान्तरजन्यत्वन्तथा नास्तीति गम्यतां। विज्ञानकारणेभ्यस्तु जातो विज्ञानमेव हि ॥४१५॥

**न खलु परोक्षतया वस्तु दृश्यते। नाप्यन्यदृश्यतया। न च कारणान्तरश्चक्षुरगविकारणत एव तु ग्राहकवदस्य निर्वृत्तिरिति कथन्न विज्ञानता।**

**अथ यावदुपलभ्यते सर्व्वोसावर्थ एव। सुखादयोपि न सम्वेदनस्वभावाः।**

**वस्त्वेव तदान्तरमिति परः। एतदप्यसत्। यतः।**

उपलभ्यस्य वस्तुत्वं यदि सर्वस्य कल्प्यते। ज्ञानस्यानुपलभ्यस्य सत्ता स्यादप्रमाणिका ॥४१६॥
येनोपलभ्यते ग्राह्यन्तच्चेज्ज्ञानन्तदप्यसत्। स्वयमेवोपलभ्यस्य वेदनं स्यात् तथा सति ॥४१७॥
यदि ग्राहकस्यानुपलब्धिस्तदस्तीति कुतः। उपलभ्यतोपलम्भादुपलम्भकोऽनुमीयते ॥४१८॥

**उपलब्धिर्वा। अन्यथा केनेदमुपलब्धमिति पर्यनुयोगेवतरति यदि नार्थापत्तिः परिहार एव न स्यात्। तस्मादर्थापत्त्या विज्ञानस्य सत्ताप्रतीतिस्तदसत्। उपलभ्यताया विचार्यत्वात्। परेण स्वयमेव चेति।**

परोपलभ्यताहेतुर्यदि केनोपलभ्यते। साप्यन्येनेति चेदेवमनवस्था प्रसज्यते ॥४१९॥
स्वयमेवोपलभ्यत्वे ग्राह्यस्यापि प्रसङ्गि तत्। स्वबोधरूपं सकलमात्मवद् वस्तु गृह्यतां ॥४२०॥

**अथात्मा स्वबोधकरूपतयोपलभ्यते रूपादिकन्तु परापेक्षतया। मयोपलब्धमेतदन्येनोपलब्धमिति व्यपदेशनिश्चयात्।**

परापेक्षा यदि ज्ञाता कथन्न परवेदनं। परम्विना परापेक्षा परापेक्षा कथन्न सा ॥४२१॥
सन्दिग्धेपि परापेक्षा सन्दिग्धैश्चैव निश्चिता। अनिश्चितस्य हेतुत्वन्निश्चयाय न विद्यते ॥४२२॥
अथात्मापेक्षा वेद्यत्वं सिद्धमात्मस्ववेदनात्।
स्ववेदनं समस्तं स्यादात्मवन्नान्यवेदनं। बुद्धिरन्या तथा नास्ति तावन्मात्रात् समाप्तितः ॥४२३॥

**अथापि स्याद्(।)यथाहमात्मा कर्त्तेति ज्ञातेति च सामानिधिकरण्यन्तथाहङ कुड्यङ्घटः पटः स शकटमिति स्यात्। तथा यथा मम सम्वेदनन्तथा मम रूपं स्पर्शो गन्ध इत्यपि स्यात्। तदपि यत्किञ्चित्।**

सामानाधिकरण्यस्य प्रसादादेकता यदि । अहङ्गौरादिरित्येवं समानाधारता न किम् ॥४२४॥

**यत्र सामानाधिकरण्यं ।**

यदि तत्रैकतावश्यन्तदभावादनेकता । तदा भवेदनेकत्वे न साध्यन्न विपर्ययः ॥४२५॥

**तथा राहोः शिर इत्यस(ा)मानाधिकरण्येपि न भेदः ।**

बाध्यते भेददृष्ट्या चेच्छिरो राहोरिदं यदि ।
स्वसम्वित्तिरिहाप्यस्ति भेदाध्यारोपबाधनी ॥४२६॥

**यथा । खलु राहोः शिर इति भेदाध्यारोपस्त द्विपर्ययोपलम्भेन बाध्यते । तथा मम सम्वेदनम्मम रूपस्य दर्शनमिति स्वसम्वेदनमात्रेण बाध्यतां । न हि नीलशरीरमुखा-विवेदनम्भेदवत् स्वरूपसम्वेदनस्य प्रतिपादनात् ।**

जातं सम्विदितम्वस्तु सामानाधिकरण्यदृक । किन्नास्ति येन सम्वेद्य सम्विदोभदकल्पना ॥४२७॥

**कथन्तर्हि पारमार्थिकभेदादर्शने भेदाध्यारोपोपि । न खलु निबन्धनमन्तरेण किञ्चिदुदयवत् ।**

अन्वयव्यतिरेकाभ्याम्भेदस्यास्य प्रकल्पना । अनादिवासनासङ्गादन्वयव्यतिरेकवित् ॥४२८॥
मामन्तरेणापि रूपादिकम्परेण निरूप्यते ।

**अनिरुपितमेवास्तु । अन्यत्र वा भवति । ततो देशकालस्वरूपप्रतिबन्धाद् भेद-प्रकल्पनावतारः । न चान्वयव्यतिरेकयोः परमार्थतः सम्वेदनमिति प्रतिपादितं । यतः ।**

प्रत्यक्षेणान्वयस्यैव स्वरूपस्य च वेदनं । भावाभावविभागस्यावेदने वेदनाभिमा ॥४२९॥

**अवेदनेपि वेदनाभिमानः कस्यचिद्(।) यथा कृतमेतन्मया दृष्टमेतन्मयेति । तत्राती-तत्वादवेदनस्य[1] विस्मरणे भवत्यभिमान इति चेत् । किमिदम्विस्मरणन्नाम । विपरीता-ध्यारोप इति चेत् । इहापि समानं । संस्कारक्षय इति चेत् । न(।) संस्कारस्याभावात् । न हि संस्कारस्य प्रागभावमन्तरेण क्षयः । न हि भूतं क्षयमुपनेतुं शक्यमिति प्रतिपादितं । यदि च संस्काराभावः कारणम्विपरीताध्यारोपस्य(।) भेदाध्यारोपोऽन्वयव्यतिरेकाध्यारोपोपि तथास्त्विति कोत्र विरोधः । न च परमार्थतोऽन्वयव्यतिरेकप्रतिपत्तिरन्यत्राभिमानात् । अभिमानमात्रमेव सकलमिति । तस्माद् विवेकतो ग्रहणेपि पूर्वापरयोरेकताभ्युपगन्तव्याऽन्यथा ज्ञानमात्रकं । न च साभ्युपगन्तुं शक्या । यतः ।**

**विवेकीनि निरस्यान्यदा विवेकि च नेक्ष्यते[2] ॥२२३॥**

**न ह्यदृश्यमानमस्तीति शक्यमभ्युपगन्तुं । न च तस्मिन्नसत्यवयवाविवेकिनो निर्वि-वेकस्यावयविन इति शक्यप्रतिपादनं । तस्माद् बाह्यमर्थमभ्युपगच्छता सकृदेव ग्रहणमभ्यु-पगन्तव्यं ।**

**नन्वनेकमेकेन कथन्दृश्यते सकृत् । न हि दर्शनमेकत्र प्रवृत्तमन्यत्र तदैव प्रवर्त्तितुम्प्र-भवति । यद्यनेकदर्शनमेवमेव नान्यथेति प्रतिपादितं । परमार्थतस्तु स्वसम्वेदनमेकमेव । नान्येनान्यस्य ग्रहणसम्भवः ।**

---

[1] तत्रैव—"वेदनस्येति पाठान्तरं" ।

[2] M. नेक्षते

किञ्च । न ग्रहणन्नाम कस्यचिदपि तु तदाकारतया बुद्धेरुत्पत्तिः । न चानेकमेक स्याजनकं(।) यतः ।

को वा विरोधो बहवः सञ्जातातिशयाः सकृद्[1] ।
भवेयुः कारणम्बुद्धेर्यदि नात्मेन्द्रियादिवत् ॥२२४॥

यथैव हीन्द्रियार्थमनस्कारा आत्मेन्द्रियमनोर्थसन्निकर्षा वा सकृदेकमिन्द्रियविज्ञानं जनयन्ति तथा यदि परमाणवोपि को विरोधः ।

नन्वनित्यत्वेपि परमाणूनाङ्कोतिशयः । न हि परमाणवः सहकारिसन्निधानेपि महान्तो भवन्ति । सूक्ष्मताञ्चेन्न परित्यजन्ति कथङ्ग्राह्याः । तदप्यसत् ।

महत्तातिशयो नात्र सामर्थ्यातिशयः स तु । असामर्थ्यादहेतुत्वममहत्वात्तु नेष्यते ॥४३०॥

यदि परमाणोः स्वरूपानुकारिधीजननन्दृश्यता । सा नास्त्येवेति सिद्धसाध्यता । अथ विज्ञानमात्रजननं । तदस्त्येव न विरुद्धं केशादिषु दर्शनात् । यथैव केशा दवीयसि देशेऽसंसक्ता अपि घनसन्निवेशावभासिनः परमाणवोपि तथेति न विरोधः । तदपि सूक्ष्माः कथञ्जनयन्ति । केवलवदेवेति चेत् । केवलानामसामर्थ्यात् । असामर्थ्यमेव हेतुभावविरोधि न सूक्ष्मता । केशवदेव न चेन्द्रियादीनां स्थूलतादिविशेष उपजायते सामग्र्यवस्थायां । अथ च सामर्थ्यविशेषादेव जनकत्वं । कथन्तर्हि परेण सन्निहितेन तत्सामर्थ्यान्न दृश्यते । अदृश्यमानङ्कथमस्ति । कथञ्च समानत्वे तदेकस्य कार्यञ्जनयति नापरस्येति विभागः । दूरदेशतादिसहकारिताविभागात् ।

ननु दूरदेशत्वेनापि त एव केशाः कुतो विभागः । सामग्र्यन्तरानुप्रवेशादिति विचारितमेतत् । यदि कारणत्वाद् ग्रहणञ्चक्षुरादीनामपि ग्राह्यताप्रसङ्गः कारणत्वात् । तदाह ।

हेतुभावादृते नान्या ग्राह्यता नाम काचन ।
तत्र बुद्धिर्यदाभासा[2] तस्यास्तद्ग्राह्यमुच्यते ॥२२५॥

रूपायतनसामान्येन तदाकारता न परमार्थतः । तथा हि नीलपरमाणुसञ्चयान्नीलाकारता विज्ञानस्य । परमाण्वाकारता मा भूत् ।

ननु यदि परमाण्वाकारता न प्रतिभाति परमाणूनामियन्नीलाकारतेति कुतः । अन्यथाऽयोगादिति न दोषः । यदि च सकृदनेकन्न गृह्यते तदायमपरो दोषः । यदाह ।

कथम्वावयवी ग्राह्यः सकृत् स्वावयवैः सह ।

गृह्यत एवेति चेत्(।)न ।

नाह गोप्रत्ययो दृष्टः सास्नादीनामदर्शने ॥२२६॥

गुणप्रधानाधिगमः सहाप्यभिमतो यदि ।
सम्पूर्णाङ्गो न गृह्येत सकृन्नापि गुणादिमान् ॥२२७॥

यदेव विशेषणत्वेनोपादित्सितं तेनैवाङ्गेन ग्रहणात् सम्पूर्णाङ्गस्याग्रहणं । सर्व्वएव ते विशेषणमिति चेत् । न ।

---

[1] M. पृथक्  [2] M. यदाकारा

**विवक्षापरतन्त्रत्वाद् विशेषणविशेष्ययोः ।**
**यदङ्गभावनोपात्तन्तत् तेनैव हि गृह्यते ॥२२८॥**

न हि विशेषणविशेष्यभावः पारमार्थिकः (।) विशेषणस्यैव परेणान्यथा च तेनैव विशेष्यतया प्रतीतेः । तथा हि(।)गोर्विषाणं विषाणी गौः । गौः शुक्लो गौर्वर्त्तुलः परिमण्डलो वा न भवतीति प्रतिपत्तिवैचित्र्यन्दृश्यते(।)न युगपत्सकलविशेषणग्रहणं । अनेकस्य विशेषणत्वेन सकृद् गृहीतुमशक्यत्वात् । न चाविकल्पितो विशेषणविशेष्यभावग्रहः ।

अपि च ।

**स्वतो वस्त्वन्तराभेदाद् गुणादेर्भेदकस्य च ।**
**अग्रहाद् भेदबुद्धि.[1] स्यात् पश्यताप्यरापरं[2] ॥२२९॥**

स्वतो हि गौर्न गौर्नागौः (।) गोत्वयोगाद् गौरिति । तथा हि शुक्लो न शुक्लो नाप्यशुक्लः शुक्लयोगाच्छुक्ल इत्यादि । ततश्च गुणादेर्भेदस्य युगपद् ग्रहात् परापरदर्शनेप्येकबुद्धिरेव स्यात् । पश्चाद् गुणस्य केवलस्य ग्रहणमिति प्राप्तं ।

अथ गुणस्य ग्रहणाद् भेदबुद्धिः पश्चाद् भविष्यति । अत्रोच्यते ।

**गुणादिभेदग्रहणान्नानात्वप्रतिपद् यदि ।**
**अस्तु नाम तथाप्येषाम्भवेत्सम्बन्धिसङ्करः ॥२३०॥**

पूर्वमेकतया द्रव्ये गृहीते पश्चाद् विशेषणग्रहणेपि योजनाविवेकेन न भवतीति सङ्करप्रसङ्गः । तथा हि(।)एकतया गृहीते पश्चाद् विशेषणमेकत्रैवानेकमपि योजितमित्यनेकमपि विशेषणमेकस्येति स्यात् । देशाभेदेन भिन्नयोजने नैकमिति चेत् । न(।)देशभेदस्यापि विशेषणत्वात् सोपि देशभेद एकस्यैवेति स्यात् । तस्मादनेकमेकदा न गृह्यते । पश्चाच्च विशेषणङ् गृहीतन्न ज्ञायेत कस्येति । भिन्नाभिन्नविशेषणपक्षे तु न भेदः कस्यचिदस्तीति सुतरां सम्बन्धिसङ्करः ।

साङ्ख्यदर्शने तु ।

**शब्दादीनामनेकत्वात् सिद्धोनेकग्रहः सकृत् ।**
**सन्निवेशग्रहायोगादग्रहे सन्निवेशिनाम् ॥२३१॥**

पञ्चानान्तन्मात्राणां सन्निवेशविशेषः सकलं घटादिवस्तु त्रिगुणात्मकम्वा । ततः शब्दादिग्रहणे त्रिगुणग्रहणं तन्मात्रग्रहणम्वा । न च तदग्रहणे तत्सन्निवेशग्रहणसम्भवः । नाङ्गुल्यग्रहणे मुष्टेर्ग्रहणं । न च कर्णान्तिरमेकमेवोत्पत्तिमत् । सर्वस्य कार्यस्य कारणादभिन्नत्वेनेष्टत्वात् । परिणामपक्षश्च तैरिष्यते न च कार्यपक्षः । परिणामश्च तत्त्वादप्रच्युतस्य धर्मान्तरपरित्यागोऽपरस्परोत्पत्तिः । तत्र शब्दपरिणाम आकाशः । शब्दस्पर्शपरिणतिर्वायुः । शब्दस्पर्शरूपपरिणतिस्तेजः । शब्दस्पर्शरूपरसपरिणतिरुदकं । शब्दस्पर्शरूपरसगन्धपरिणतिः पृथिवीत्यनेकता घटादीनां(।) तद्ग्रहणेनेकग्रहणमिति सिद्धिं । शेषः परिहारः पूर्ववदेव ।

तस्मात् सकृदनेकग्रहणेपि न सविकल्पकत्वं । निर्विकल्पकमेव प्रत्यक्षमिति स्थितं ।

यद्यविकल्पकं प्रत्यक्षङ्कथन्तर्हि धर्मिधर्मादिग्रहणम्प्रत्यक्षतः । प्रत्यक्षेण चाग्रहणे

---

[1]. M. अग्रहाद् भेदबुद्धिः                    [2]. M. पश्यतोपि परापरम्

धर्मिणोऽनुमानावताराभावः । धर्मिणोप्यनुमानेन ग्रहणे तत्राप्यपरोधर्मीत्यनवस्थापातः । धर्मिग्रहणे चानेकधर्मखचितात्मनस्तस्य ग्रहणमिति कथम्विकल्पकत्वं । अत्रोच्यते ।

धर्मिणोनेकरूपस्य नेन्द्रियात् सर्वथा गतिः । स्वसम्वेद्यमनिर्देश्यं रूपमिन्द्रियगोचरः ॥४३१॥

न ह्यनेकरूपादिधर्मयोगी कश्चिद् धर्मी गृह्यते । इन्द्रियविज्ञानेनापि तु स्वेनैव सम्वे-रूपेण कर्त्ता च तदेव रूपमध्यक्षस्य विषयः (।) तथा हि ।

परस्परवियोगेन रूपादेश्चक्षुरादिकात् । ग्रहणञ्जायते तेषामेकाधारतयाऽगतेः ॥४३२॥

न खलु रूपादिधर्मीन्द्रियविज्ञानैरुपलभ्यते । रूपादीनामेव परस्परविवेकिनाङ ग्रहणा-न्नापर आधारस्तद्गता वा ग्रहणगोचर इति प्रतिपादितमेतत् ।

ननु यदेवाहमद्राक्षन्तदेव स्पृशामीत्यादिगतेर्गम्यत एकाधारतैकता वा । न प्रत्यभिज्ञानं भवति प्रत्यक्षमिति प्रतिपादितत्वात् । रूपस्पर्शविज्ञानप्रबोधितानादिवासनातः तथा प्रत्ययो-दयात् । तथा हि ।

चाक्षुषं रूपमात्रस्य स्पृश्यमात्रस्य चापरं । सम्वेदनम्वेदनायाम्प्रवृत्तमिति दृश्यते ॥४३३॥

न चापरेण परस्परसमागमस्तयोरुपलभ्यते । स्पृशन्नेष पश्यतीति चेत् । न(।) रूपे स्पर्शनिवेशाभावात् । एकता च तथा सिध्यति यद्येकार्थनिवेशप्रतीतिः ।

ननु दृष्टं शुक्लं स्पर्शनेन मलिनीकृतमुपलभ्यते हस्तलग्नञ्च । तत्कथन्नैकार्थ(ा) भिनिवेशनं । तदेतदाकाशावकाशकाशावलम्बनं ।

यदा तत् स्पृश्यते वस्तु यस्य च स्पर्शगोचरः । तदा तेनाप्रतीतिश्चेदनुमानन्न साधकं ॥४३४॥

प्रत्यक्षयोः परस्परङ ग्राह्यग्राहकयोरनभिनिवेशे प्रत्यक्षेण भेदपरिच्छेदे नानुमानसहस्रमपि सामर्थ्यपथप्रस्थायि । अथ तदेव स्पृशामिति मानस एष प्रत्ययः प्रमाणं । नहीन्द्रियजमेव प्रमाणमिति प्रमाणमवतरति । इन्द्रियजमप्यर्थाव्यभिचारतः प्रमाणन्नेन्द्रियजत्वात् । मानसज-त्वादित्यपि सम्भवात् । नैतदस्ति । यतः ।

यदेवाद्राक्षमित्यादि प्रत्ययेऽव्यभिचारिता । नानुमानाद् विना कश्चिदर्व्वाग्दृगवगच्छति ॥४३५॥

तत्र हि यदि कश्चित् पर्यनुयुंक्ते(।) कथमवगतिर्भवतः प्राग्दृष्टस्य स्पृश्यतेति । तदा किमेवमेव प्रतीतिरिति नैतदस्ति । यद् दृष्टन्तत्स्पर्शकाले न दृष्टं । ततः कथन्तदेव स्पृश्यत इति प्रतीतिः । तत्रेदमेवोत्तरं । "येन तन्मलिनीकृतं ।" ततो ज्ञायत एतदित्यनुमानमुपविशति । अस्पृश्यता तर्हि कथम्मलिनीक्रियते । स्पृश्यता तर्हि कस्मान्न प्रतीयते शुक्लमेतदिति स्पृश्य-तायाः शुक्लेतरयोः समानरूपत्वादिति चेत् । न सदुत्तरमेतत् ।

समानमसमानञ्ज वस्त्वेकमिति साहसं ।

यत एव स्पर्शस्य समानताऽसमानता च रूपस्य तेन तयोरेकता न युक्ता विरुद्धधर्मा-ध्यासात् । अथ प्रतीयते । तद्विचार्यते । किमेकाकारया प्रतीत्या अथ नानाकारया(।) नानाकारया प्रतीयमानं कथमेकं । अथैकाकारतया(।) तदसत्यं । रूपमप्रतीयमानं स्पर्शे प्रतीयमाने कथमेकाकारमतिग्राह्यं । न हि प्रतीयमानमप्रतीयमानञ्च ग्राह्यमप्रतीयमानताऽ-योगात् । तस्माद् न रूपादीनाम्भेदेनावयवी नाम कश्चित् । तस्मात् स्वेनैव रूपेण वेद्यन्ते

रूपादयो न परस्पररूपेण । तथा स्वसम्वेद्यमेव रूपन्न परसम्वेद्यमत एव शब्देन परस्मै निर्द्देष्टुम-शक्यत्वादवाच्यगोचरमिन्द्रियविज्ञानं । यदि तर्हि शब्देन न निर्द्दिश्यते इन्द्रियगोचरः कथं यमहपश्यौषन्तमेव पश्यामीति गतिः । अनिर्दिष्टस्य हि कथमेवम्प्रतीतिः । तस्मादेव हि निर्देश्य इत्यवसीयते । तदेतदसत् । यतः ।

प्रत्यभिज्ञा प्रमाणन्न भवत्येवेति साधितम् । ततस्तत्प्रत्ययादेष प्रतीतोर्थः कथम्मतः ॥४३६॥

न तावच्छब्दात् प्रतीतिकाले सोर्थः प्रतिभासते । सन्देह एव शब्दादर्थेऽन्यथा प्रत्यक्ष-प्रतीत इव न सन्देहसङ्गतिः ।

अथ समानः शब्दात् प्रतिभासो भावाभावयोरर्थस्य तेन सन्देहः । प्रत्यक्षेपि कस्मा-देवन्न भवति । तत्र प्रतिभासविशेषोपलक्षणादेवन्न भवति । अत्रापि प्रतिभासविशेषग्रहणङ्क केनापनीयते विशेषाभावादेव । न तर्हि भावस्वभावग्राही शाब्दः प्रत्ययः । प्रत्यक्षविलक्षण-त्वात् । यदि तु स्वरूपप्रतिपादनम्भवेत् । दर्शनमप्रमाणमेव भवेद् गृहीतग्रहणादर्था-भावश्च स्यात् । शाब्दादेव रूपस्वरूपप्रतिपत्तेः । अथ सामान्याकारेण प्रतीयते । कामलो-पहतलोचनोपि तर्हि पीताकारेण शुक्लम्प्रत्येति (।) तदपि प्रायकत्वात् प्रमाणम्प्रसक्तं । भवतु तदपि प्रमाणमिति चेत् । न । बाधनात् । गामानयेति शब्दः प्रत्ययो न बाध्यत इति प्रमाणमेव । न(।) अत्रापि बाधनात् । गामानयेति यद्यस्तित्वमाक्षिप्तम्तत्कदाचित् न भवत्यपि । अथ नाक्षिप्तं । तत आनयनासम्भवात् सुतरामप्रमाणत्वं । अथ यदि सम्भ-वत्यानयेति वक्तुरभिप्रायः । तदा सन्दिग्धानयनचोदनादप्रमाणमेव । सन्दिग्धमेव चोदित-मिति चेत् । सन्दिग्धमेव गृहीतमिति सर्व्वः सन्देहप्रत्ययः प्रमाणम्भवेत् । न चाप्रमाणेन वस्तु गृह्यते । कथन्तर्ह्यानियनादावव्यभिचारः । नाव्यभिचारसम्भवः । कस्यचिदकरणात् । न ह्यवश्यञ्चोदितं करोति ।

किञ्च ।

क्रियायाङ्कारकः शब्दो यदि वा ज्ञापको मतः ।
कारकत्वेऽविसम्वादाभावतो न प्रमाणता ॥४३७॥

न हि कारकोऽविसम्वादीति व्यवहारः । आप्तिस्तु कृते सति प्रामाणान्तरात् । ज्ञाप-कत्वन्तु स्वरूपस्य भाविन्याः क्रियायाः भावादसम्भवि । न ह्यविद्यमाना क्रिया स्वरूपेण गृह्यते । स्वरूपभावे भाविनी न स्यात् । सामान्यं गृह्यत इति चेत् । तर्त्तहि सामान्यङ्क क्रियाऽसम्भवेपीति सामान्यप्रतिपत्तौ क्रियायान्न प्रवर्त्तते । तस्माच्छब्दो न ज्ञापक इन्द्रिया-र्थस्य । तस्मादनिर्देश्यमेवेन्द्रियगोचरः ।

कथन्तर्हि धर्मिधर्मानेकताप्रतीतिः । अत्रोच्यते ।

**सर्वतो विनिवृत्तस्य विनिवृत्तिर्यतो यतः ।**
**तद्भेदोन्नीतभेदोसौ[1] धर्मिणो (ऽ) नेकरूपता ॥२३२॥**

व्यावृत्तिभेदपरिकल्पितो हि धर्म्यादिव्यवहारः[2] । तथा हि (।) प्रथमतरम्प्रतिभा-समानः कनककलशः किम्वर्णसंस्थानादिभ्यो[3] भेदेनावभासते । ते वा ततो भेदभासिनः ।

[1] M. ०भेदा सा [2] T. धर्मादि० [3] T. कलशः वर्णसंस्थान०

अपि त्वेकमेव वर्णाद्यात्मकं साक्षादवभासगोचरः। तत्रेदानीमपरापरानेकाकारपदार्थ(ा)न्तर-व्यावर्त्तनमाश्रित्यापोद्धारपरिकल्पनया भेदमारचयन्ति व्यवहारपद्धतिमध्यासीनाः संसार-सरित्पतिपतिताः।

यद्यभेदो भवेद् वर्णसन्निवेशविशेषयोः। अनीलात् कलशान्नीलः कलशो भिद्यतां कथम् ॥४३८॥

यदि वर्णसंस्थानादीनामभेद एव। तदा कलशादनीलान्नीलस्य व्यावृत्ति र्न स्याद्(।) अनीलेनापि तत्संस्थानात्मना नीलेनैव भाव्यं। संस्थानस्य नीलवर्णादभिन्नत्वात्। भवति वा नीलमपि संस्थानादेकं (।) तस्माद् भेदस्तयोरिति लोकस्य कल्पनाभेदभासिनी। पारमार्थिक एव तर्हि भेद इति चेत्। न कल्पनामात्रेणणोपचरितम्पारमार्थिकं युक्तं। यदि तदेव सितत्वादिकमसंस्थानात्मना प्रतिभासेत भवेत् पारमार्थिको भेदः। एकार्थसमवायस्याभेदावभासहेतुत्वादभेदावभासो भेदेपीति चेत्। नन्वेकार्थसमवायेपि रूपरसयोररित भेदावभासिता। भिन्नेन्द्रियग्राह्यता तत्रेति चेत्। यद्यभेदेनावभासकरी शक्तिः समवायस्य भिन्नेन्द्रियग्राह्यता दुर्घटैव। समानदेशत्वादभेदावभास इति रूपरसादिभिरनेकान्तः। एवङ्गोत्वादिकाच्छावलेयत्वादयः शावलेयत्वादेः खण्डमुण्डादयो भेदकल्पनया व्यवस्थाप्यन्ते भेदेनेति स्थितं।

तत्र क्वचिद् धर्मी रूपादिभ्यो भिन्नः कल्प्यते यथा घटः। यदि घटावयव्येको न स्यात् क्रमेण रूपरसग्रहणे घट प्रतीतिर्न स्यादिति क्वचिद्धर्मः। यदि गोत्वमभिन्नम्भिन्नाभिन्नम्वा न भवेत्। शावलेयादीनान्तदभिन्नानाम्भेदो न स्यात्। एवमन्यदपि योज्यं। तस्माद् व्यावृत्तिभेदमुपादाय भेद उन्नेयः।

नन्वानुमानिकोपि भेदो भेद एव। सत्त्यं यदि प्रत्यक्षपूर्वकं तदनुमानश्च स्यात्। यथाग्निः प्रत्यक्षे प्रतिभासितोऽनुमानेन प्रतीयमानस्तथैव भवति। नत्वेवङ्कदाचिदपि धर्मधर्मिभेदः। यदि प्रतिभाति किमनुमानेनेति चेत्। अग्नावपि समानमेतत्। कालान्तरादौ चेदनुमानमिहापि तथास्तु।

अथात्र नित्यानुमेयता। तदप्यसत्।

नित्यानुमेये दृष्टान्तः केन सिध्यति तत्त्वतः। अनुमानान्तरासिद्धौ सेयमन्धपरम्परा ॥४३९॥

अथ घटादयो दृष्टान्तः घटादिभ्यो भिन्नाः। तथा हि (।) ययोरन्वयव्यतिरेकौ तयोर्भेदौ यथा घटशकटयोः। तथा च वर्णसंस्थानयोरीति। नान्वयस्प तत्रापि प्रत्यक्षेणाग्रहणात्। न चान्वयव्यतिरेकाभ्यान्तत्र भेदः। कथन्तर्हि युगपद् भेदप्रतिभासनादेव। अथ चित्रप्रतिभास एवान्वयव्यतिरेकमन्तरेण स्यान्न भेदः। एवन्तर्हि न कुतश्चिद् भेद इत्यद्वैतप्रसङ्गात् सुतरामेव भेदसाधनमयुक्तं।

अथवा।

विकीर्य प्रतिभासेन घटादौ भेदभावना। संस्थानादेः स नास्त्येव न पटादिसमानता ॥४४०॥

अन्वयस्तु गोत्वादेर्न प्रत्यक्ष गम्य इति न तस्य भेदोऽनन्वितात्। एकपरामर्शयोगेन तु त एवान्वयितया व्यवह्रियन्ते। एकपरामर्शगोचर एव तर्हि सामान्यमन्यद् भेदेभ्यः। नैकपरामर्शगोचरस्य भेदेनानवभासनात्। एकपरामर्श एव भिन्नेषु कथमिति चेत्। अत्रोच्यते।

•न दृष्टेऽनुपपन्नत्वमदृष्टे नोपपन्नता । दर्शनादर्शनाभ्यां हि भावाभावौ व्यवस्थितौ ॥४४१॥

एकपरामर्शो हि दृश्यमानत्वादुपपन्नः । तद्वदेव त्वदृश्यमानेनाभेदेनाप्युपपत्तिमता भाव्यमिति नेयं भावना । न च भिन्नेष्वेकपरामर्शस्तस्य स्वरूपमात्रेऽवस्थानात् । न चायमेकपरामर्शः क्वचिदेकतायान्दृष्टः । उपलब्धेर्हि भवति । सा च क्रमवती । न चैकैकक्षणपरामर्शः शक्यः प्रतिपत्तिसम्वेदनाभावात् । तस्मादनेकभाव्येवैकपरामर्शः सर्वत्र । तस्मात् कल्पनाकृतमेव सकलं धर्मधर्मित्वं (।) तदेव प्रत्यक्षेण गृह्यतामिति चेत् । नैतदस्ति । यस्मात् ॥

**ते कल्पिता रूपभेदा(द्)[1] निर्विकल्पस्य चेतसः ।**
**न विचित्रस्य[2] चित्राभाः कादाचित्कस्य गोचरः ॥२३३॥**

प्रत्यक्षं हि साक्षात्करणाकारप्रवृत्तन्न तस्योत्प्रेक्षितविषयाकारता युक्ता । अथ भावापेक्षितया हि कदाचिदेव प्रत्यक्षप्रतिभासिता । अकादाचित्कास्तु विकल्पितरूपप्रतिभासाः । एकाकारञ्च प्रत्यक्षमनेकाकारता च विकल्पस्य (।) विकल्पप्रत्यक्षयोरत आकाराभावादपि भेदो हेतुभेदादपीति परमार्थः ।

ननु सितादिधर्मभेदा अकल्पिता अपि सन्ति ते भविष्यन्तीन्द्रियगोचरः । नैतदपि चोद्यं यतः ।

**यद्यप्यस्ति सितत्वादिर्यादृगिन्द्रियगोचरः ।**
**न सोभिधीयते शब्दैर्ज्ञानयोरूपभेदतः ॥२३४॥**

सितं हीन्द्रियेण न धर्मतया धर्मितया वा कस्यचित् परिगृह्यते । भेदेन वा संस्थानात् । शब्देन तु भेदेन धर्म्यादितयाऽस्पष्टादितया गहणमित्यनिर्देश्यमेव रूपम्प्रतिपत्तीन्द्रियमतयः । तस्माज्ज्ञानाकारभेदान्न शाब्दी मतिरिन्द्रियग्राह्येषु वर्त्तते । तस्माद् रूपभेदो न युक्त एकार्थत्वे ।

अथापि स्याद् (।) आश्रयभेदादाकारभेदो भविष्यति । तथा हि । कामलावलेपलोपितलोचनशक्तिः सितमपि पीतम्पश्यत्याश्रयभेदतः । तैमिरिकः स्पष्टेतरत् । एवमन्यत्रापीति न दोष एकार्थत्वेप्याकारभेदमभ्युपगच्छतः । नैतदस्ति ।

**एकार्थत्वेपि बुद्धीनान्नानाश्रयतया स चेत् ।**
**श्रोत्रादिभिन्नानी[3]दानीम्भिन्नार्थानीति तत्कुतः ॥२३५॥**

यदि ह्याश्रयभेदादाकारभेदसम्भवो लुप्ता तर्हि नानात्वव्यवस्थाऽकारभेदस्यैकार्थताया अपि सम्भवात् । शब्दादीनामप्याश्रयश्रोत्रादिभेदादेवाकारभेदः । पीताद्यवभासानाञ्च भ्रान्तता सा शाब्दादीनामपि प्राप्ता । शक्तिभेदोप्यनेन प्रत्युक्तः ।

य आह । शब्दशक्तिरेवेयमीदृशी येनान्यथात्वप्रतिपत्तिः । भेदेनान्यथा च । अन्यथा प्रतिपत्तौ भ्रान्तता न विचार्या स्यात् ।

ननु शब्देनान्यथाप्रतिपादितोप्यर्थक्रियाकारी दृश्यते । तत्कथम्भ्रान्ततास्य युक्ता । तथा हि । वक्त्रासवादिशब्दैः[4] स एव प्रतिपादितः तामर्थक्रियाङ्करोति । नार्थप्रति-

---

[1] M.　　　[2] ना विचित्रस्येति तत्रैव

[3] M. चित्तानी०　　　[4] T. ख-छु-ल-सोगुस् (=निष्ठीवनादि)

बद्धेयमर्थक्रियाऽपि तु भावनाप्रतिबद्धा। यथा गरुडादिभावनाप्रतिबद्धा विषशमनादय इति। तस्मादेकार्थत्वे नाकारभेदः सत्यस्याश्रयभेदे। अपि च।

**जातो नामाश्रयादन्य[1]श्चेतसान्तस्य वस्तुनः।**
**एकस्यैव कुतो रूपन्नानाकारावभासि तत् ॥२३६॥**

आश्रभेदो हि ज्ञानस्याभेदमुपजनयेन्न त्वर्थस्य। अर्थस्तु नीलादिक एक एव स तस्मिन् विज्ञाने एकरूप एव प्रतिभासेत। नह्यविद्यमानस्य प्रतिभासः। प्रतिभासश्चेत् न तर्हि स प्रतिभासते। नान्यस्मिन् प्रतिभासमानेन्यस्य प्रतिभास इति सम्बन्धः। अथ तस्य कारणत्वात् तस्य प्रतिभासः। कारणत्वेन तर्हि विषयत्वमिति चक्षुरादीनामपि विषयताप्रसङ्गः।

भवतु को दोषः इति चेत्। एकार्थताविरोधः। चाक्षुषोपि विषयत्वात्। विषयत्वे हि एकार्थत्वे हि बुद्धीनामपि प्रकृतम्व्यारन्यते। न हि विषयत्वे आश्रयभावः। तत एष बाह्यार्थः। स्यादेकार्थत्वेपि बुद्धीनान्नानार्थतया स चेदिति परस्परव्याहृतिः। तस्मात् प्रतिभास एव स्वेन रूपेण विषयत्वं। नापरः प्रकारः। अथ शब्दाश्रयत्वादिति परिहारः प्रतीताच्च शब्दात् स्वेन रूपेणार्थप्रतीतिः। न चासावर्थप्रतीतिविषयः प्रतीतत्वात्। अर्थोपि तर्हि न विषयः। स्वेन रूपेण प्रतीतेः।

अथ तस्मादर्थस्य प्राप्तिरिति विषयः। तदयुक्तं। तस्य तस्मात् प्राप्तिरिति कः सम्बन्धः। स्वरूपेण हि संप्राप्यते। कथमन्यतः प्राप्त उच्यते। ततः प्रवृत्तेरिति चेत्। प्रवृत्तिरेषा प्रतीतेः कथमिति चिन्त्यं। तस्मादाकारात्तस्य प्राप्तिर्दृष्टेति चेत्। स एवा-कारस्तस्मात् प्रतीयते। ततस्तत्र प्रवृत्तिरित्यानुमानिकी प्राप्तिर्न शाब्दीति स्यात्(।) ततश्चासावनुमानस्यैव विषयो न शब्दस्येति प्राप्तं। ततश्चानिर्देश्यमेव रूपमिन्द्रियबुद्धेर्विषयः अनुमानविषयता तर्हि प्राप्ता। नानुमानेपि तस्य स्वरूपस्याप्रतिभासनात्। कथन्तर्ह्य-प्रतिभासिते प्रवृत्तिः। सर्व्वता(?दा) प्रतिभासित[2] एव प्रवृत्तिरिति प्रतिपादितं।

ननु प्रतीतमेतन्मयेति प्रवर्त्तते। सत्यं। तथापि न परमार्थ एषः। अप्रतीते च प्रतीत्यभिमानतः। सकल एव प्रवृत्तिमा(म)नन्त्येष एव परमार्थः। यत्राभिमानः स एव विषय इति चेत् पारमार्थिकं शब्दविषयत्वमिन्द्रियविज्ञानार्थस्य वार्यते न साम्वृतमिति न दोषः। तदेव यदि परेणाभ्युपगम्यते सिद्धमस्त्यत्र समीहितं। यदि तु स एव स्वेन रूपेण प्रतीयते। पारमार्थिकम्विषयत्वम्प्रतिपादितम्भवेत्। तस्मान्नानाश्रयत्वेपि स्वरूपेणा-प्रतीयमानन्न विषयः। कस्यचित् तद्रूपस्य तत्रानुप्रवेशाद् विषय एवेति चेत्। यदि तर्हि परमार्थतस्तदयं' शब्दप्रतीत्यनुप्रविष्टं। अन्येनापि स्पष्टरूपग्राहिणा प्रतीयेत। न ह्यनुप्र-विष्टमन्यथा प्रत्येतुं शक्यमिति।

ननु प्रत्यभिज्ञानादाकारभेदेप्येकत्वन्न विरुध्यते। तदपि न सत्यं यतः।

**वृत्तेर्दृश्यापरामर्शेनाभिधानविकल्पयोः।**
**दर्शनात् प्रत्यभिज्ञानङ् गवादीनाञ्च वारितं[3] ॥२३७॥**

---

[1] M. नामाश्रयोन्योन्य० [2] T. सर्वदाऽप्रतिभासित [3] M. निवारितं

सम्प्रत्येव प्रत्यया(?यो)प्यभिधान[1]विकल्पाभ्यान्दृश्यम्वस्तु न स्पृश्यते इति। गृहीतम्प्रत्यभिज्ञायते। न च शब्दविकल्पाभ्याङ्ग्रहणं(।) तत्कृतः प्रत्यभिज्ञा। कथन्तर्हि स एवायं यो मम तदाऽनेन प्रतिपादित इति प्रत्ययः।

नन्वप्रतिपन्नेपि भवति प्रतिपन्नाभिमानः। कथन्तर्हि न बाध्यते(।) बाध्यत एव परामृशतः(।) प्रतीतिभेदो हि बाधकः स चास्त्येव शब्दविकल्पयोः स्मर्यमाणविषयत्वात्। तच्च स्मरणम्पूर्व्वगृहीतस्य दर्शनमिदानीन्तनस्य(।) यदि पुनर्दृश्यपरामर्श एवाभिधानविकल्पयोः स्यात् किन्दर्शनेनेति प्रतिपादितं। तस्मात् **प्रत्यभिज्ञान**मप्यभिमानमात्रकमेव न परमार्थतः प्रतिपत्तिः। दर्शनात् तु पूर्वानुसारेण विकल्प एव केवल एकत्व व्यवहार साधको न परमार्थग्रहणं।

**अन्वयाद्यानुमानं यदभिधानविकल्पयोः।**
**दृश्ये गवादौ जत्यादेस्तदप्येतेन दूषितम् ॥२३८॥**

न ह्यभिधानविकल्पाभ्याम्वस्तुसंस्पर्श इति। न ह्यन्वयः परमार्थतः कस्यचिद् गृह्यतेऽभिमानमेतदिति प्रतिपादनात्। यथादृष्टस्यैव स्मरणात्। दृश्ये चासंस्पृश्यमाने दृश्यसम्बन्ध्यन्वयि रूपन्न गह्यते। तेन दृश्य सामान्यमस्तीति न प्रतीतिः। कथन्तर्हि स एवायङ्गौरित्येककल्पना। अत्राह।

**दर्शनान्येव भिन्नान्यप्येकाङ् कुर्व्वन्ति कल्पनां।**
**प्रत्यभिज्ञानसङ्ख्यातां स्वभावेनेति वर्णितं ॥२३९॥**

दर्शनानि खलु परापरविविक्तपदार्थोपग्रहभाञ्जि जायमानानि नैकाकारव्यतिरिक्ताव्यतिरिक्तग्रहसामर्थ्यपथस्थितानि। केवलं स्वभावानुरूपसंस्कारबीजप्रबोधसामर्थ्यपाटवाटोपसङ्कटप्रविष्टानि गत्यन्तराभावात् प्रत्यभिज्ञानकल्पनामुपजनयन्ति। तदनुरोधतो जात्याविकल्पनानर्थपथप्रस्थानं। तस्मादनिर्देश्यविषयं प्रत्यक्षमिति स्थितं।

## २. मानस-प्रत्यक्षम्

"मानसञ्चार्थरागादिस्वसम्वित्तिरकल्पिका ॥" (प्रमाणसमुच्चये)

मानसमप्यर्थरागादिस्वरूपसम्वेदनमकल्पकत्वात् प्रत्यक्षं। अनुभवाकारप्रवृत्तेः।

ननु चक्षुरादिविज्ञानमेवानुभवाकारेण वृत्तमुपलभ्यते। चक्षुरादिजनितमिन्द्रियविज्ञानमेव। अथ तत उत्पन्नं मानसन्तदा तेन पूर्व्वानुभूतग्राहिणा भवितव्यं।

**पूर्व्वानुभूतग्रहणे मानसस्याप्रमाणता।**

न हि पूर्व्वानुभूतमस्मर्यमाणरूपतया प्रत्येतुं शक्यं। अस्मर्यमाणतया साक्षात्करणे अनुभूतमिति कथं। वस्तुतः पूर्व्वानुभव इति चेत्। कथमवगन्तव्यं(।) प्रत्यभिज्ञानञ्च प्रतिक्षिप्तं। अथादृष्टङ्गृह्णाति। तथा सति।

**अदृष्टग्रहणेऽन्धादेरपि स्यादर्थदर्शनं ॥२४०॥**

---

[1] T. द-ल्त-ञिद्-ब्स्ग्रुब्स्-प-यिन्-नो (=संप्रत्येव सिद्धमभिधानं)

अर्थस्यापि मानसमस्ति। ततस्तस्य सकलार्थग्रहणप्रसङ्गोन्यस्य च। ततोन्धबधिराद्यभावः।

**क्षणिकत्वादतीतस्य दर्शनस्य न सम्भवः।**
**अक्षणिकत्वेपि वाच्यं[1]स्याल्लक्षणं सविशेषणं ॥२४१॥**

क्षणक्षयिणो हि सर्व्वभावास्ततोऽतीतस्य कथङ्ग्रहणं येन गृहीतमेव गृह्णीयात्। अथाक्षणिकत्वमभ्युपगम्यते। तदा पूर्वदर्शनगृहीतत्वाद् गृहीतग्रहणमप्रमाणं स्मृतिवदेव (।) गृहीतग्राहित्वेपि वा प्रमाणं मानसमिति सविशेषणं लक्षणम्वक्तव्यं।

किञ्च।

**निष्पादितक्रिये कञ्चिद्विशेषमसमादधत्।**
**कर्मण्यैन्द्रियमन्यद्वा साधनं किमितीष्यते ॥२४२॥**

यस्य हीन्द्रियविज्ञानेनैव स्वरूपपरिच्छेदस्तस्य किमपरेण कर्त्तव्यं। तदेव स्वरूपं परिच्छिद्यत इति चेत्। परिच्छिन्ने कः परिच्छेदार्थः। य एव पूर्व्वः स एव। अपरिच्छिन्नेपि कः परिच्छेदार्थः। स्वरूपावभासिता। सान्यत्रापि को दोषः।

नन्वेवन्नित्यन्नित्यम्परिच्छिन्नमेवास्ते (।) तत्किमपरन्तत्र करिष्यति। इदानीमन्येन परिच्छिद्यते। न नित्यत्वादिदानीमपि तेनैवेति नापरस्य सामर्थ्यं। परिच्छेदकस्य तस्याभावादिति न सङ्गतं। परिच्छेदकाभावे नित्यताऽग्रहणात्। अन्येन ग्रहीष्यते इति चेत्। न(।) अप्रत्ययत्वात्। कथमन्यः स्वकाल एव प्रतियन् प्रत्येति नित्यतां। तस्मात् तेनैव परिच्छेदकेनासितव्यमिति व्यर्थमपरं ग्राहकं तद्रूपेणैव प्रतिपत्तेरिति।

**सकृद् भावश्च सर्वासां धियां तद्भावजन्मनां।**
**अन्यैरकार्यभेदस्य तदपेक्षाविरोधतः ॥२४३॥**

तदाकारनिवेशे हि नित्ये प्रवर्त्तमानं सकलमेव विज्ञानं समानकालं किन्न कालत्वे नित्यैकत्वविषयत्वम्विरुध्यते। आकारभेदात्। अथोत्तरकालकारणान्तरादुपजायते। तदापि तत्कालाभिनिवेशेनैव भवितव्यमन्यथा तद्ग्रहायोगात्। सत्यस्वप्नदर्शनवत्। सत्यस्वप्नदर्शनं हि तत्कालानुयातेनैव ग्राहकमीक्षते। न चानुभवाकारमपरमिन्द्रियविज्ञानात्मा न समुपलभ्यते। अनुपलब्धेन चोपलम्भ इति न युक्तं प्रमाणाभावात्।

अन्ये तु।

मानसेन यदि नोपलम्भनं मानसेन पुनरस्मृतिर्भवेत्।
न स्वयम्विदितमत्र केनचित् स्मर्यते तदपरेण जातुचित् ॥४४२॥

यदीन्द्रियविज्ञानेन गृहीतम्मनसा न स्मर्यते (।) भिन्नत्वात् सविकल्पकेनापि गृहीतन्न स्मर्यते। तयोरपि भेदात्। मानसत्वादिति चेत्। विज्ञानत्वादित्यपि स्यात्।

**तस्मादिन्द्रियविज्ञानानन्तरप्रत्ययोद्भवं।**
**मनोन्यमेव गृह्णाति विषयन्नान्धदृक् ततः ॥२४४॥**

---

[1] वाच्यमक्षणिकत्वे (पि लक्षणं) सविशेषणं—इति है ०पुस्तके पाठः; M. वाच्यमक्षणिकत्वेस्यात्।

मानसमपीन्द्रियविज्ञानेन स्वविषयानन्तरविषयसहकारिणा जनितम्प्रत्यक्षं । नन्विन्द्रियविज्ञानसमानकालभावि यदि तद् इन्द्रियविज्ञानेनैव तस्य ग्रहणात् मानसम्व्यर्थं । इन्द्रियविज्ञानोपरमे वा अनुपलब्धमेवापरमिति कस्य लक्षणमेतत् । अत्रेदमुच्यते ।

इदमित्यादि यज्ज्ञानमभ्यासात् पुरतः स्थिते । साक्षात्करणतस्तत्तु प्रत्यक्षम्मानसम्मतं ॥४४३॥

इदमिति पुरोर्वत्तिनि साक्षात्करणाकारेण प्रवर्त्तमानं मानसम्प्रत्यक्षं । अथ चक्षुर्व्यापारादुपजायमानञ्चाक्षुषमेव । न रूपप्रतिभासमात्रे चक्षुष उपयोगोऽभिनिवेशे तु पूर्व्वाभ्यासस्य तेन चक्षुषोत्र व्यापाराभावात् । मनसः पूर्व्वाभ्यासलक्षणादुत्पत्तेर्मानसं प्रत्यक्षमेतत् ।

अथापि स्यात् (।) तदाकारस्य चक्षुरादिविज्ञानेनैव ग्रहणात् मानसम्व्यर्थं । न व्यर्थं । अधिमुक्तेरधिकायाः सम्भवात् । इदमित्येव कृत्वा प्रवर्त्तते । तेन प्रवर्त्तकत्वात् प्रमाणं । इन्द्रियज्ञानन्तर्हि प्रवर्त्तकन्न स्यात् । नात्यन्ताभ्यासादन्यविकल्पनेपि वृत्तेः प्रमाणमेव । तस्मादेवंभूतं मनः पूर्वगृहीतन्न प्रत्येत्यपि तु तदुत्तरकालभावि । न च गृहीतग्राहिसन्निहिते पूर्व्वग्रहणस्यावृत्तेः । आकारद्वयन्तर्हि समानकालम्प्राप्तं ।

नन्वाकारद्वयमेवेदं कथन्तर्ह्येकत्वाध्यावसायः । तैमिरिकद्वयद्विचन्द्रन्यायेनेत्यदोषः । सुखादयोपि तर्ह्यभ्यासादुपजायमानाः पुरोवर्त्याकारग्राहिणो मानसप्रत्यक्षरूपाः प्राप्तास्तत ऐन्द्रियं सुखमिति लुप्तमेतत् ।

सत्यं (।) लुप्तमेवैतन्नालुतेनानेन किञ्चित् । ऐन्द्रियस्यैव सुखासुखस्योत्पत्तिरिति विरुध्यत इति चेत् । अत्रापि मूलाचार्यवचनम्विरुध्यते । "रागद्वेषमोहसुखदुःखादिषु स्वसम्वेदनमिन्द्रियानपेक्षत्वान्मानसं प्रत्यक्षमिति ।" इयन्तर्हि धर्मकीर्त्तेरकीर्त्तिरायाता, ऐन्द्रियस्यैव सुखासुखस्येति । सुखादिशब्देन न सुखहेतूरसादिकमेवोच्यते । कटु मिष्टम्प्रतिभात्यविकल्पयतोपीन्द्रियज्ञान इति यावत् । मानसमेव वाऽविकल्पकत्वसाधर्म्म्यात् तथोच्यते-इत्यविरोधः । यदि तर्हि मानसमन्यथाग्राहीन्द्रियज्ञानमन्यथा[1] ग्राह्यनेकाकारम्भविष्यतीति चेत् । न (।) इन्द्रियज्ञानेपि स एव प्रसङ्गः । इन्द्रियविज्ञानमपि यथाभ्यासन्नानाकारम्प्रवर्त्तमानन्न निवार्यमेव ।

एवं तर्हीदमित्यपि विज्ञानमभ्यासादिन्द्रियजमेव भवतु । न । मानसत्वम्व्यापारान्तरस्यापि प्रतीतेः । इदमेवमिति मानस एष व्यापार एवमेव प्रतीतेः ।

कथन्तर्ह्ययम्मानसः प्रत्ययः स इत्यपि परोक्षे न प्रवर्त्तते । नेवं साधीयः ।

परोक्षे वर्त्तमानस्य साक्षात्करणवृत्तिता । नेति प्रत्यक्षता तस्य कथमित्यवधार्यतां ॥४४४॥

साक्षात्कारित्वमेव प्रत्यक्षतार्थः । तदेव मानसङ क्वचित्साक्षात्करणाकारं क्वचिन्नेति कुतः । इन्द्रियविज्ञानमपि तर्हि क्वचिद् भ्रान्तं क्वचिन्नेति कुतः । तिमिरस्य सामग्र्यन्तरस्य भावादिति चेत् । इहापि सामग्र्यन्तरमस्त्येव । यतः ।

**स्वार्थान्वयार्थापक्षैव हेतुरिन्द्रियजा मतिः ।**
**ततोन्यग्रहणेप्यस्य नियतग्राह्यता मता ॥ २४५ ॥**

स्वार्थं इन्द्रियविज्ञानस्य प्रथमः क्षणः प्रबन्धो वा । तदन्वयो योर्थक्षणस्तदर्थापेक्षमेवे-

---

[1] तत्रैव—"इन्द्रियज्ञानमनन्यथाग्राही अनेकाकारं"—इति पाठान्तरम् ।

न्द्रियविज्ञानम्मानसञ्जनयति । यत्तु पुनरनया सामग्र्या नोत्पत्तिमत्तदप्रत्यक्षं । अत एव च नियतग्राह्यतया न विषयान्तरस्य गतिः । यतो न विषयान्तरेण जन्यते । तेनैव जन्यते अन्येन नेति किमेतत् । इन्द्रियविज्ञानेपि समानमेतत् । चक्षुर्विज्ञानमपि कस्मान्न शब्देन जन्यत इति । नियतहेतुफलभाव इति चेत् । अत्रापि न ब्रह्मशाप इति समानमन्यत्रापि ।

ननु द्वितीयेपि क्षण इन्द्रियविज्ञानेनैव गृह्णाति । तथा च दृश्यते । न(।) मानसस्यापि तत्रोल्लेखस्य सम्भवात् । न च तत् सविकल्पकम्पुरोवर्त्तिस्पष्टाकारमात्रत्वात् । यदि तर्हीन्द्रियविज्ञानसमानकालभावि मनोविज्ञानं प्रत्यक्षङ्कथमिन्द्रियविज्ञानमस्य समनन्तरप्रत्ययः(।) पूर्वकस्य हीन्द्रियविज्ञानस्य मनोविज्ञानार्थः स्वविज्ञानकालिकासहकारी न भवति भिन्नकालयोः सहक्रियाऽयोगात् । अत्रोच्यते ।

**तद्‌तुल्यक्रियाकालः कथं स्वज्ञानकालिकः ।**
**सहकारी भवेदर्थ इति चेदन्नचेतसः ॥२४६॥**

न युक्तं । यतः ।

**असतः प्रागसामर्थ्यात् पश्चाच्चानुपयोगतः ।**
**प्राग्भावः सर्व्वहेतूनान्नातोर्थः स्वधिया सह ॥२४७॥**

न हीन्द्रियविज्ञानेनासमानकालो मनोविज्ञानार्थः । तस्य मनोविज्ञानात् पूर्वकालत्वात् । हेतुविषयो न च हेतोः फलेन समानकालता । फलेन समानकालतायां हि प्रागसत्त्वं असतश्चासामर्थ्यम्प्राक् । पश्चात् कार्यकाले सामर्थ्यमिति चेत् । कर्मकाले कार्यस्य विद्यमानत्वाद् व्यर्थं सामर्थ्यं । एवं हि स कार्यस्य कालो यदि तदा कार्यस्य सत्त्वं । तस्मात् प्रागेव सत्त्वं सर्वहेतूना । अतोर्थो हेतुर्न फलभूतस्वग्राहकज्ञानसमानकालभावी ।

**भिन्नकालं कथङ् ग्राह्यमिति चेद् ग्राह्यताम्विदुः ।**
**हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमं ॥२४८॥**

ननु प्रतिभासमानमेव स्वेन रूपेण ग्राह्यता न तदाकारविज्ञानजननं । प्रतिभासनञ्च ज्ञानसमकालमिति कथं हेतुत्वमेव ग्राह्यता । किमिदं प्रतिभासनन्नाम, किमर्थस्वभावोथान्यदेव । यद्यर्थस्वभावो नीलादिवत् । नापैति कदाचिदपि तत्स्वभावादिति सर्वदा प्रतिभासप्रसङ्गः । ज्ञानाभावान्न प्रतिभासनमिति चेत् । ननु ज्ञानेनापि तदेव कर्त्तव्यन्तच्च प्रागप्यस्तीति कथम्प्रागप्रतिभासनं । ज्ञानस्य व्यर्थता चेत् । अयमपरस्तवैव दोषो न तु तत्स्वरूपस्यैव प्रागप्रतिभासनं । तदेवास्ति तदेव नास्तीति व्याहतं । अथ ज्ञाने सति दृश्यते नान्यथेति चेत् । किमिदानीं ज्ञानस्य कारकत्वं प्रतिभासनंप्रति । न च कारकत्वं समानकालत्वात् । असत इत्यादिप्रतिपादनात् । समानकालन्दृश्यते न च ज्ञानमन्तरेणेति किमत्र कुर्म्मः । एवन्तर्हि चक्षुषस्तवैवोत्पत्तिमत् । ततो नार्थस्वभावः प्रागर्थेसतीदानीमुत्पत्तेः ।

यस्मिन् स्थिते यदुत्पन्नं स्थित एव विनश्यति । तस्मात् तदन्यदेवास्तु भेदलक्षणसम्भवात् ॥४४५॥
वदनप्रतिबिम्बं हि वदने सति सम्भवात् । पश्चाद् वदनतो भिन्नम्प्रतिभासस्तथास्तु नः ॥४४६॥
भिन्नदेशत्वतो भिन्नम्प्रतिबिम्बम्भवेद् यदि । प्रमाणप्रतिपन्नश्च स भेदो मुखबिम्बयोः ॥४४७॥
प्रतिभासस्य भेदस्य नार्थात् साधनमीक्ष्यते । तेनैकतार्थतः सिद्धा नीलादिप्रतिभासयोः ॥४४८॥

एवन्तर्हि ।

यथैव चक्षुरादिभ्य इदानीम्प्रतिभासभूः । नीलादेरपि तद्वत् स्याद् योगक्षमसमत्वतः ॥४४९॥
यथैव चक्षुरादिभ्योर्थस्य प्रागेव सम्भवः । प्रतिभासस्य तद्वत् स्यादिति नैवेदमीक्ष्यते ॥४५०॥
यस्माद् यदीष्यते भिन्नो नीलादिः प्रतिभासतः ।
प्राक् सत्त्वन्तस्य नीलादेः प्रतिभासादितीष्यतां ॥४५१॥
तदनन्तरमुत्पन्नन्नीलादिप्रतिभासवत् । विज्ञानङ्ग्राहकन्तस्य पितूरूपग्रहो यथा ॥४५२॥

**कार्यं ह्यनेकहेतुत्वेऽप्यनुकुर्वदुदेति यत् ।**
**तत्तेनार्पिततद्रूपङ् गृहीतमिति चोच्यते ॥ २४९ ॥**

पुत्रः पितू रूपङ्ग गृह्णातीति यथा व्यपदेश इति ॥०॥

## ३. स्वसंवेदन-प्रत्यक्षम्

सुखादीनामपि स्वसम्वेदनम्मानसं प्रत्यक्षं । नन्वेवम्विकल्पस्य स्वरूपस्याप्रत्यक्षता प्राप्ता । तथा च परोक्षविज्ञानसमयप्रसङ्गः । न(।)सर्व्वचित्तचैत्तानामात्मसम्वेदनस्य प्रत्यक्षत्वात् । सुखादिग्रहणन्तु स्पष्टसम्वेदनदर्शनार्थं ।

ननु विकल्पस्य निर्विकल्पकत्वाभावात् कथम्प्रत्यक्षता । न हि विकल्पस्य स्वरूपमविकल्पकं । अर्थे विकल्पकत्वमिति चेत् । तदसत् । यतः ।

अर्थे विकल्पकत्वं चेत् स्वरूपेपि विकल्पकं । न हि स्वरूपे तस्यान्यत् स्वरूपमुपपत्तिमत् ॥४५३॥

अत्राह ।

**अशक्यसमयो ह्यात्मा रागादीनामनन्यभाक् ।**
**तेषामतः स्वसम्वित्तिर्नाभिजल्पानुषङ्गिणी ॥ २५० ॥**

उत्पत्तिमासादयन्नेव सुखाद्यात्मा सम्विदाम्विषयभावम्विभर्त्ति । तदतिरेकेण तत्सम्विदोऽभावात् । तदा च कोवसरः पूर्वापरभावाभिलापसंयोजनस्य । पश्चात् संयोजनमिति चेत् । न(।)तदातदभावात् । पूर्वरूपतया हि सम्वेदने परेण तदा तत्सम्वेदनमेव न स्यात् । न हि पूर्वादिरूपतयान्यथा वा सम्वेद्यमानाः सुखादयस्संविदिता भवन्ति । परसुखसम्वेदनवत् । तस्माद् वर्त्तमानतया सुखादीनाङ्ग्रहणे स्पष्टया वा निर्विकल्पकमेव ग्रहणं । अथ मानसं सुखं विकल्पग्रहणं ग्राह्यमिति मतिः । तदप्यसद्(।)यतः ।

स्मृत्यासम्वेदने तस्य यदि मानसतोच्यते । न तस्य सुखसम्वित्तम्पूर्ववृत्तिप्रतीनितः ॥४५४॥
तदैव चोदिते तस्य[1]साक्षाद् वित्तौ न कल्पना ।
अभिलापस्य संसर्गादिति चेन्नाभिलापिता ॥४५५॥
सुखस्य तद्विविक्तत्वे कथं संसर्गसम्भवः । समानकालविन्मात्रान्नैष संसर्ग उच्यते ॥४५६॥
मानसोपि न रूपादेराकारः स्वात्मनि स्थितः । तदैवोदयसद्भावाद् विकल्पविषयः कथं ॥४५७॥
नन्वर्थेपि विकल्पत्वङ्ग कथमस्योपपत्तिमत् । अर्थस्याग्रहणात् तेन स्वरूपस्याप्यकल्पनात् ॥४५८॥

---

[1] T. दे-ऽि-छे-ञिद्-न-स्क्येस्-प-दे (=तदैव चोदिते तस्य)

**सत्यमेवैतदुक्तम्भवता ।**

यदि ग्रहणमर्थस्य विकल्पः कथमत्र सः । अथाग्रहणमर्थस्य विकल्पः कथमत्र सः ॥४५९॥
अथार्थारोपतस्तत्र विकल्पत्वन्निरुच्यते । ग्रहणाग्रहणे मुक्ता तत्राप्यर्थोऽस्ति नापरः ॥४६०॥
ग्रहणारोपसद्भावे विकल्प इति चेन्मतिः । ग्रहणारोपयोरैक्ये द्वयोः सम्भव इत्यसत् ॥४६१॥
तत्रैकपक्षनिक्षिप्तो दोषः प्रागेव वर्णितः । अथ भेदस्तयोरस्ति द्वयमेव प्रसज्यते ॥४६२॥
सविकल्पकसम्विर्त्तिरविकल्पा तदैव च ।

**तस्मात् ।**

ग्रहाभिमानो यत्रास्ति विनाशग्रहणमुच्यते। स एव हि विकल्पोस्मिन्नस्मत्पक्षे निरीक्षितः ॥४६३॥
अभिमानोपि कस्तत्र ग्रहणाग्रहणात् परः । इति चेद ग्रहे यस्य प्रवृत्तिप्रति कर्त्तृता ॥४६४॥
प्रवर्त्तकत्वमग्राह्ये यदि सर्वत्र किन्न तत् । प्रवर्त्तकत्वङ ग्राह्येपि यदि कस्मात् प्रवर्त्तते ॥४६५॥
सर्वन्तर्हि भवेज्ज्ञानमिदानीं सविकल्पकं। अगृहीत एव सर्वस्माद् यतो ज्ञानात्[1] प्रवर्त्तते ॥४६६॥

**अत्र ब्रूमः ।**

असाक्षात्करणाकारे यत्र स्यात् कल्पनान्तरैः । व्यवहारः स एवात्र विकल्पो लोकसम्मतः ॥४६७॥
दर्शनाभिमतिर्यत्र तज्ज्ञानमविकल्पकं । साक्षात्कृत्यधिमोक्षाच्च प्रत्यक्षमिति गीयते ॥४६८॥
परमार्थस्तु विज्ञानं सर्वमेवाविकल्पकं । स्वग्राह्यविषये सर्वस्याविकल्पनवृत्तितः ॥४६९॥

**किञ्च ।**

वासनाबलतः पूर्वसम्विद्भेदानुसारतः । यत् ज्ञानं जायते क्वापि तदुक्तं सविकल्पकं ॥४७०॥
तत्त्वर्थपरतन्त्रत्वमादधानं प्रवर्त्तते । निर्विकल्पकमित्युक्तन्तज्ज्ञानव्यवहारतः ॥४७१॥
सुखादीनान्तु रूपस्य स्वसम्वित्याऽविकल्पनात् । अविकल्पकता तत्र सर्वेषामेव सम्मता ॥४७२॥
तस्मात् तेषां स्वसम्वित्तिर्नाभिजात्यानुषङ्गिणी । न कर्मकरणत्वेन सोभिजल्पोत्र सङ्गतः ॥४७३॥

**अथापि प्रतिभासमान एव प्रबन्धेन सुखादाविदं सुखादीति यदा विज्ञानमधिमुक्तिरूपमुपजायते तदा कस्मान्न सविकल्पकता । अत्र मानसं प्रत्यक्षमर्थ इवेति वर्णितं । तथा हि ।**

अर्थरूपे सुखादौ च यदेदमिति वर्त्तते । स्वरूपग्रहसाक्षात्त्वे सर्वन्तन्मानसम्मतं ॥४७४॥

**न हि तत्रापि कथञ्चित् कल्पनावकाशः । तेन तदविकल्पकत्वात् प्रत्यक्षमेव ।**

**ननु स्वसम्वेदनं मानसञ्च पदद्वयमपि समुदितन्तदा परस्परासंस्पर्शात् कथं न द्वयाकारप्रतीतिः । भवत्येव । तैमिरिकद्वयद्विचन्द्रदर्शनन्यायेन त्वेकार्थाभिनिवेशादेवमव्यवहारः । ननु तत्रापि कथं स्वसम्विदितत्वे न भवति तथा व्यवहारः । अनुमानस्य तथा वृत्तेः । तत्र हि सामान्यरूपकार्यदर्शने तदेकत्वानुमानेन च द्वितीयस्य दर्शनमिति तदेकताव्यवहारः । इह तर्हि द्वयोरपि दर्शनात् कथमेकताव्यवहारः (।) न चानुमानमत्र । स्वसम्विदितत्वे किमनुमानेन । ननु परम्परासम्वेदनात् कथं द्वयं सम्विदितं । पुरुष एकस्तस्य तत् द्वयं सम्विदितमिति चेत् । न । सम्वेदनव्यतिरेकेण पुरुषस्याभावात् । ताभ्याञ्च न द्वयसम्वेदनं । अथरूपरससम्वेदनवत् सम्वेदनं द्वयोः । तत्रापि कथं स्वसम्विदितत्वे सतीति**

---

[1] T. अगृहीते (च) सर्वस्य यतो

प्रतिपादितं परसम्वेदनेपि प्रसङ्गादिति । तस्मात् स्वसम्वेदनमेकमेव चित्राकारमिति प्रतिपादितमेतत् ।

इदञ्च पुनर्बाह्यार्थमाश्रित्य ग्राह्यग्राहकभावञ्चाभ्युगम्योच्यते (।) परमार्थतस्तु सकलमेव स्वसम्वेदनमात्रन्नेन्द्रियादिप्रत्ययविभागोस्ति । इन्द्रियव्यापारस्यापि समानकालतया वेद्यत्वाव् रूपादिवत् । अथ चक्षुरादीनां व्यवहारतः कारणत्वं । तथा समान सम्वेदनयोर्मानसेन्द्रियविज्ञानयोश्च भेदः ।

नन्वत्र व्यवहारो नास्ति व्यवहारिकः । आनुमानिकोपि व्यवहार एवेत्यदोषः । आत्मादिष्वपि तर्ह्यानुमानिकोपि व्यवहार एवेत्यादीनामपि सत्वप्रसङ्गः । न (।) तत्र बाधकव्यवहारसद्भावात् । तस्मात् सुखादीनामात्मा विशेषरूपो शक्यसमय इति स्थितमेतत् ।

अवेदकाः परस्यापि ते स्वरूपं कथम्विदुः ।
एकार्थाश्रयिणा वेद्या विज्ञानेनेति केचन ॥ २५१ ॥

यदपि तावद् विज्ञानं परस्य वेदकन्तस्यापि तावत्स्ववेदनन्नास्ति किमङ्ग पुनः परावेदिनां सुखादीनां ।

ननु वेद्यत्वात् स्ववेदनम्भविष्यति सुखादिकमन्यथा वेदनमेव न स्यात् । न(।) स्वसम्वेदनस्यासिद्धत्वात् । परेण वेदने घटादिवदस्ववेदनं । घटादिवदेव तर्हि बहिर्वेशत्ववेदनप्रसङ्ग इति चेत् । न(।) एकार्थसमवायिना विज्ञानेन वेदनात् । घटादीनां हि नकार्थसमवायो विज्ञानेन । तेन तेषां ग्राह्यरूपतया तटस्थत्वेन वेदनं । सुखादयस्तु पुनरभेदेनैव विज्ञानात्प्रतीयमाना विज्ञानरूपमवापन्ना ग्राहकाकारतयान्तःसन्निविष्टा वेद्यन्त इति न घटादिवत् प्रसङ्ग इति केचित् । तेषां ।

तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः ।
तत्सुखादि किमज्ञानम्विज्ञानाभिन्नहेतुजं ॥२५२॥

न तावदेतत् प्रत्यक्षप्रतिपत्तिकमेव वः । अनुमानात् प्रतीतिस्तु न विना लिङ्गमिष्यते ॥४७५॥

न खलु विज्ञानाद् भेदेन प्रतीयन्ते सुखादयः । एकार्थसमवायस्य विरोधिनः सम्भवात् । अनुमानम्पुनर्न लिङ्गमन्तरेण प्रवर्त्तते । स्यादत्र लिङ्गं यदि हेतुभेदो दर्शयितुं शक्यः । न ह्य प्रत्यक्षमनुमानाद् विना प्रत्येतुं शक्यं । हेतुभेदात्तु भेदम्प्रतिपद्यस्व । अवश्यं हि सामग्री भेदात् कार्यभेदः । कार्यभेदस्तु न भेदं साधयति । कारणादेकस्मादपि कार्यभेददर्शनाद् भस्मधूमवत् । न च सुखादिविज्ञानयोर्भेदस्य साधकः कार्यभेद उपलभ्यते । तस्मात्कारणभेद एवोपदर्शयितव्यः स च नास्ति । कस्मादभिन्नहेतुकमभिन्नरूपञ्चोपलभ्यमानम्भिन्नमिति व्यपदिश्यते किमत्र प्रमाणमिति यावत् ।

अथवा यदि विज्ञानमन्यत् सुखादिभ्यः सुखादीनाम्विज्ञानस्य तत्को हेतुः । चक्षूरूपमनस्काराः ततश्च सुखादिकमुत्पद्यते एव विज्ञानहेतोश्चशरावेः । तथा च तत्किम ज्ञानम्विज्ञानेन कस्मादिव न वेद्यते । नास्त्येवेति चेत् । न(।) विज्ञानहेतुकत्वेनोत्पत्तेः कथमस्यावेद्यमानता । भवत्पक्षेपि कस्मान्नैवमिति चेत् । न(।) वासनाप्रबोधविशेषस्य हेतुत्वात् । वासनाप्रबोधविभागबलात् कदाचित् सुखरूपम्विज्ञानं दुःखरूपमन्यथा वेति नानुपपन्नं । समानहेतुत्वमेवोपदर्शयति ।

**सार्थे सतीन्द्रिये योग्ये यथास्वमपि चेतसि।**
**दृष्टं जन्म सुखादीनान्तत्तुल्यं मनसामपि ॥२५३॥**

न चक्षुरन्तरेण रूपदर्शनसुखं(।) न च मनोहारिरूपमन्तरेण। नापि शोकादिना मनस्युपहते। विज्ञानजन्मनोऽपीयमेव सामग्री ततो न हेतुभेदो भेदस्य बोधकः। नापि हेतावात्ममनस्संयोगे रूपादिसामग्रीतः सुखमुत्पन्नमविज्ञानं युक्तिमत्। अथ तदा नोत्पन्नमेव सुखं तदवश्यमेवाविद्यमानमविज्ञानं। न ह्यविद्यमानङ्ग्रहीतुं शक्यं। अत्रोच्यते।

**असत्सु सत्सु चैतेषु न जन्माजन्म वा क्वचित्।**
**दृष्टं सुखादेर्बुद्धेर्वा तत्ततो नान्यतश्च ते ॥२५४॥**

न च खलु चक्षूरूपालो(क)मनस्कारेषु सत्सु सुखादय उदयभाजो येन विज्ञानात् कारणान्तरं सुखादिकस्य कल्प्येत। ततो विज्ञानकारणमेव सुखादिकारणं। अथ तच्च तदन्यच्च सुखादीनां धर्मादिकारणं तदेवाधर्मादि। तदपि नास्ति यतः। सत्सु चक्षुरादिष नाजन्म दृष्टं येन कार्यव्यतिरेकात् कारणान्तरपरिकल्पनावकाशः स्यात्।

अथ व्यतिरेकमन्तरेणापि धर्म्मादि कारणमेव। इष्टं सुखमनिष्टं दुःखन्तत्रावश्यं धर्माधर्मयोः कारणत्वं। सर्वप्रवादिप्रसिद्धञ्चैतत् स्थापयित्वा चार्व्वाकमेकं। तदप्यसत्।

धर्म्मादीनान्न सामर्थ्यं सिद्धमव्यतिरेकतः। सुखादिमात्रे धर्म्मादेः सामर्थ्यन्नेष्टसाधने ॥४७६॥

धर्मादिकं हि सुखादिसाधनानि समं श्रयति न सुखादीन्येव। अन्यथा तत्साधनमन्तरेणापि सुखादिप्रसङ्गः। अथापि स्यात् (।) सत्यपि सुखासुखसाधने रूपादौ शोकादिनोपहतेन्तःकारणसामर्थ्यन सुखमुत्पत्तिमत्। ततो धर्म एव कारणन्न रूपादीति गम्यते। तदयुक्तिमद् (।) यतः।

अधर्मेणैव शोकादिसामग्री ढौकिता सती। तत उत्पत्तिमद् दुःखन्न तद् दुःखमधर्मतः ॥४७७॥

शोकादिसामग्र्येवाधर्मेणोपनीता दुःखन्तस्यास्तु दुःखं स्वयमेवोदयवत्।

अथवास्तु सुखमेव धर्मादन्यतो दुःखं। तथापि तेन भिन्नं सम्वेदनञ्जनयितव्यमिति कुतः। सम्वेदनाव्यतिरेकिसुखजननेपि न धमण भवतः किञ्चिदुपकृतमिति। सुखादिना हि भवतः प्रयोजनन्तच्चाव्यतिरिक्तमपि सम्वेदनतो न कटु भवति। अथ कारणभेदाद् भेदस्तदप्यसत्। यतः।

अस्त्येव शुद्धविज्ञानात् सुखज्ञानस्य भिन्नता। एकान्तेन तु यो भेदः स नैतावति सिध्यति ॥४७८॥

धर्मसहिता हि सामग्री तदेव कार्यम्विशिष्टं जनयेन्न त्वत्यन्तं भिन्नमेव। अधिकोपकारेण तस्या एव विशेषात्। सार्द्रेन्धनत्वे धूमो हि भस्मनो नातिरिच्यते। न हि भस्मनो त्यन्तमतिरिच्यते धमः श्यामतादिमलिनीकरणस्य तत्रापि सम्भवात्। तस्मान्न धर्मादेरत्यन्तव्यतिरेकजनने सामर्थ्यावधारणं। अत एवाह।

**सुखदुःखादिभेदश्च तेषामेव विशेषतः।**
**तस्या एव यथा बुद्धेर्मान्द्यपाटवसंश्रयाः ॥२५५॥**

यदि विज्ञानसुखादीनां समानहेतुता विज्ञानम्विज्ञानमित्येतावदेवास्तु कथं सुखादिभेदः। तस्या एव सामग्र्याविशेषात्। क्षीराद्यवसेके धात्री बीजादिसामग्रीवत्। नहि

क्षीराद्यवसेकाधिक्येपि धात्री बीजं जनयति धात्रीविलक्षणमेव कार्यं । अपि तु तद्रूपमनतिक्रम्यापरविशेषाधिष्ठितं । अथ भिन्नमपि कस्मान्न जनयति । न (।) भिन्नमेव जनयतीत्येवम्वक्तव्यं । एवञ्च कारणभेदाद् भेदस्तया प्रतिपादितो भवति । यदि सामग्री भिन्नकार्यजनिकेति प्रसिध्यति ।

अपि च (।) प्रज्ञादयोपि धर्म्मा आदित एवोत्पत्तिमन्तस्ततस्तेषामपि बुद्धेर्भेद एव प्रसक्तः । अथाभ्यासादेः प्रज्ञादयो न धर्मादेः । एवं सति सुखादयोपीष्टानिष्टाभ्यासादिति न धर्मादिहेतुता तेषां स्यात् । इष्टादिसन्निधानं धर्मादिति चेत् । न तर्हि सुखादीनां धर्मादुत्पत्तिरपि त्वविगणमनस्कारादेरेव । तच्च मनस्कारादेरविगुणत्वं ज्ञानेपि कारणमिति न भिन्नसामग्रीजन्याः सुखादयः (।)

अथापि स्यात् (।) न प्रज्ञादयः सुखादिहेतुधर्मादिहेतुकाः प्रज्ञासद्भावात् (।) यत् सुखन्तदेव धर्मादिहेतुकन्तेन सुखादीनां समानकारणत्वमसिद्धं । तदपि न सुभाषितं यतः ।

प्रज्ञादयो न धर्मादेरपि त्वेते सुखादयः । इति प्रमाणतस्सिद्धञ्च कुत एतद् भवादृशां ॥४७९॥

न हि प्रमाणादप्रसिद्धं स्वप्रक्रियाप्रपञ्चप्रकाशनमात्रं परेषाम्परितोषस्य । न च प्रज्ञादयो धर्मादन्यतो भवन्ति । धर्मम्विनाप्यभ्यासाद् दृश्यन्ते इति चेत् । न (।) धर्ममन्तरेण तस्यैवाभ्यासस्य सकलत्वायोगात् । जडत्वादेवाकलत्वमिति चेत् । सुखादीनामपि तर्हि सन्तानविशेषादेव सम्भवः । तथा हि ।

सुखं सर्वापदां हेतावदीनत्वे स्वभावतः । सन्तानतिशयादेव पूर्व्वाभ्यासप्रवर्त्तनात् ॥४८०॥

सुखं स्वभावातिशयादेव पूर्वाभ्यासप्रवर्त्तितादसतामपि दुराचाराणान्दर्शनात् । सत्यपि धर्मे समतादर्शिनोऽभावात् । समताभावनाभ्यासविपर्ययसहायाद् धर्मादेरेवेति चेत् । एवन्तर्हि न धर्मस्य सामर्थ्यमभ्यासपूर्वकत्वाच्च प्रज्ञादिवद् बोधरूपा एव सुखादयः ।

ननु विषयादिभ्यः सुखादय उत्पत्तिमन्तो विज्ञानन्तु विज्ञानहेतुकाद् भावनाख्यात् संस्कारादिति हेतुभेदः । तथा हि ।

सोयं यमहमद्राक्षं पूर्वसंस्कारसम्भवात् । इति तद्रूपविज्ञानं सुखादाविदमस्ति किं ॥४८१॥

तदसद् । सुखादिष्वप्यस्य हेतुत्वं । तथा हि भावनावशादेव सुखादयोपि जायन्त इति प्रतिपादितमेव ।

अथापि स्यात्(।) मानसा एव सुखादयः संस्कारतो भवन्ति नेन्द्रियजाः । एवन्तर्हि मानसमेव विज्ञानं संस्कारादिति समानमेतत् । अथेन्द्रियजस्यापि विज्ञानस्य पाटवादिविशेषो भावनाविशेषादेव । सुखादीनामपि तर्हीन्द्रियजानान्तत एव पाटवादिकमिति समानं ।

किञ्च । मानसमेव सकलं सुखादिकमिति प्रतिपादितं ।

ननु गृहीते क्वापि वस्तुनि भावनावशात् तत्रैव वस्तुनि पुनः पुनर्ज्ञानोदयलक्षणात् पाटवं युक्तिमत् । सुखादीनामपि यद्यनेन ज्ञानेन ग्रहणन्तदा युक्तन्तद् ग्रहणं पटु भवतीति स्वसम्वेदनपक्षे तु कीदृशी भावना । तथा हि ।

स्वम्वेदनञ्चेदुत्पन्नञ्च कीदृशी तत्र भावना । स्वम्वेदनञ्चेन्नोत्पन्नञ्च कीदृशी तत्र भावना ॥४८२॥

**अपरापरस्य सुखसम्वेदनस्योत्पत्तेर्नाभ्यासयोगः। यदि पुनःपुनस्तदेवोपलभ्यते तदाभ्या-सव्यपदेशः। अर्थस्तु पुनरेक एव तत्र भावनाप्रयुक्ता परापरविज्ञानेनानुभवे।**

**ननु सुखमप्येकं किन्न भवति। नन्वेकस्य कः पुनः पुनरर्थः। अर्थस्य पुनरेकताया-मप्यनुभवावृत्तिकृतम्पौनःपुन्यं। तदप्यसत्।**

ज्ञानस्य यदि भेदोस्ति विपर्येभ्यो गतिः कुतः।
प्रत्यभिज्ञाप्रसादाच्चेत् सुखादावप्यसौ न किं ॥४८३॥

**ननु सुखमेकन्न भवति(।) कथन्तत्र प्रत्यभिज्ञा। विषये तु ज्ञानभेदेपि तदेकत्वाद्युक्ता। ननु न विषयभाविनी प्रत्यभिज्ञाऽपि तूपलम्भभाविनी। न च ज्ञानभेद एकस्योपलम्भः। ज्ञाने च कथम्प्रत्यभिज्ञा। न परमार्थतस्तत्र प्रत्यभिज्ञा।**

**अर्थैकत्वेन तदेकत्वमारोप्य ज्ञानमेकमिति व्यवह्रियते। अत्र विचार्यते। किमिदं स्वसम्वेदनं ज्ञानमिति पक्ष उच्यते। अथ ज्ञानान्तरवेद्यमथार्थापत्तिवेद्यं। किञ्चातः।**

स्ववेदनञ्चेदाश्रित्य प्रत्यभिज्ञा कथम्भवेत्। न हि दृश्यस्य भेदेन तदैवैकत्वविभ्रमः ॥४८४॥

**स्वसम्वेदनपक्षे हि परिस्फुटे भेदवेदने कथं विषयाभेदेपि तदैव तत्कृत आरोपविभ्रमः। ज्ञानान्तरवेदनेपि समानमेतत् अर्थापत्तिवेदने त्वर्थानुरूपा ज्ञानकल्पना ततो ज्ञानमप्यभिन्नमेव कल्पनीयं। अथान्यथा नोपपद्यत इत्यर्थापत्तिः।**

वेदनामात्रमर्थस्य वेदनामात्रकल्पकृत्। नानेकेनैकतार्थस्य ग्राह्येत्येकं प्रकल्प्यतां ॥४८५॥

**न ह्यनेकेन विज्ञानेनापरापरकालभाविना स्वकालार्थपरिच्छेदकेन पूर्वापरकालभाव्ये-कोर्थ इति शक्यङ्कल्पयितुमेकस्याव्यापारात् समूहस्य चाभावात्।**

आत्मैकः सोनुसन्धायी तस्य स्मरणसम्भवात्। स्मरणे ह्यस्य सामर्थ्यं सन्धाने चापि विद्यते ॥४८६॥

**तदेतदसत्।**

बोधरूपात्मतापक्षेहि नेदं युक्तिमदीक्ष्यते। आवृत्तिरेकरूपस्य कथमस्य प्रमान्विता ॥४८७॥

**भिन्नाभिन्नात्मपक्षेयमदोष इति चेत्। येन रूपेणाभिन्नस्तेन रूपेण न प्रत्यभिज्ञानं। ज्ञानभेदेन भिन्नत्वात्। ज्ञानस्याभेदे तदभिन्नस्य भेदस्य। येन तु रूपेण ज्ञानाद् भेदस्तेन रूपेणैकता ततो नावृत्तिः।**

**अथाबोधरूप आत्मा तदा स ज्ञानेन बुद्ध्यते तच्च भिन्नमिति कथन्तेनाभेदग्रहण। तस्माज्ज्ञानभेदेनैकत्वग्रहो युक्त इत्येकमेव ज्ञानं परिकल्पनीयमर्थापत्त्या।**

**अथार्थापत्त्या ज्ञानभेदः परिगृह्यते तथापि नैकत्वम्विज्ञाने प्रतीयतेऽतः कथं प्रत्यभिज्ञा।**

**अथालक्षितनानात्वस्य प्रत्यभिज्ञानं(।)तथा सति सुखादिष्वपीति तदेकत्वस्य सम्वृत्या सम्भवात्(।) तत्रैव पुनःपुनरनुभव इति भवत्यभ्यासात् सुखादीनाम्पाटवादिविशेषः। अभ्या-साच्च सुखादीनामुत्पत्तिर्बोधरूपाणामेव।**

**नन्वभ्यासाद् गमनादयोपि विकटादिरूपा भवन्ति न च ते बोधरूपाः। अत्रोच्यते।**

अबोधरूपादभ्यासादबोधस्यैव सम्भवः। बोधरूपात् तथाभ्यासद् बोधरूपोदयो न किं ॥४८८॥

**प्रज्ञादिवदेव।**

अथापि स्याद् (।) बोधरूपाभ्यास इति किं स्वसम्वेदनाभ्यासः । अथ बोधरूपगृहीतार्थाभ्यासो: (।) यदि स्वसम्वेदनाभ्यासस्तत्सम्वेदनमसिद्धं । अथ द्वितीयः पक्षः सोनैकान्तिकसम्भवादयुक्त एव । बोधरूपगृहीतगमनाभ्यासेपि गमनादिबोधरूपतानुपलम्भात् । अत्रोच्यते ।

योभ्यस्यते यथाभूतः स तथैव प्रकृष्यते । अन्तः सम्वेदनाभ्यासः सुखादीनान्तथा फलः ॥४८९॥

अन्तः सम्वेदनरूपा हि सुखादय उपलब्धाः । जडरूपाः सन्त एकार्थसमवायेनोपलभ्यन्ते तथेत्येतत्तु न सम्वेदनसमासादनोपनतपरितोषं । ततः स्वसम्वेदनरूपमेवाभ्यस्यति (।) ततस्तथाभूतमेव भावनाप्रकर्षाभ्यासे प्रादुर्भवेत् । प्रथमन्तर्हि स्वसम्वेदनाभावः स्यात् ( । ) न । यज्जातीय इत्यादिना तस्यापि तथाभूतत्वात् । तस्माद् भावनाबलादुपजायमानाः प्रज्ञादिवत् सम्वेदनस्वभावा एवेति स्थितं ।

अनेनैतदपि निरस्तम् ।

तदतद्रूपिणो　　भावास्तदतद्रूपहेतुजाः ।
तद्रूपादि[1] किमज्ञानम्विज्ञानाभिन्नहेतुजं[2] ॥२५२॥

तस्यायमर्थः । परस्परसहकारित्वेन चक्षुर्मनस्कारपुरोवर्त्तिशकटादयः समानसामग्रीका उपजायमानाः सर्वे बोधरूपाः स्युरबोधरूपा वा । न हि तत्र कश्चित् प्रधानेतरविवेक इति । सा हि रूपादिसामग्री बोधाबोधरूपानेककार्यजनने दृष्टशक्तिका नान्यथा शक्या विधातुं । तयैवानैकान्तिकत्वमत एवेति चेत् । न (।) अन्यथाहेत्वर्थस्य विवक्षितत्वात् ।

भावनोयदजन्मानो यथा प्रज्ञादयस्तथा । सुखादयोपि किन्तस्मात् कारणादस्वसम्विदः ॥४९०॥

यो हि यथा भूतोभ्यस्यते स तथैव भवतीति प्रमाणार्थः । न च रूपादीनामान्तरस्वभावाभ्याससम्भवः । यस्य तावदर्थापत्तिगम्याः प्रज्ञादिविशेषास्तेन ते आत्मसमवायिन इति कथमवगन्तव्यं । केवलमर्थापत्त्या येन विना यत्नोपपत्तिमत् तदवगम्यते । न चात्मसमवायित्वेन विनाऽबोधरूपतया च नोपपत्तिमत् किञ्चित् । केवलमपरेणापि केनचिद् भवितव्यं यतो परोक्षतार्थस्य जाता । ततः कथमात्मसमवायादिगतिः । तस्मात् मयैतदवगतमित्यान्तरत्वमेव बोधस्याभ्यस्तं जनेन (?) येनातरत्वप्रतीतिरिति परिहारः ।

येपि बुद्धचन्तरस्य प्रत्यक्षताम्बुद्धौ वर्ण्णयन्ति तेषामपि सा आत्मसमवायिनी बोधरूपा च प्रतिभातीत्येवमवश्यमयमभ्युपगमः । अन्यथा पदार्थान्तरमेव भवेत् । ग्राहकत्वस्य तु प्रसिद्धिरेव । तस्मात् प्रत्यक्षान्तरे तदारूढग्राहकत्वैवासौ प्रतिभाति । तथा च सति तत्रापि सोर्थः प्रतिभासते । नष्टस्य च कथं प्रतिभासः । केवलाबुद्धिः प्रतिभासमाना कथं ग्राहिकात्वेन ग्रहणत्वेन वा प्रतिभासेत । तथात्मादयोपीति चोद्ये आत्मसमवेतत्वेन वाध्यारोपोनादिकालिक

---

[1] M. तत्सुखादि

[2] दानशील पुस्तक इमाः तिस्रः कारिका अनुद्धृताः—

सार्थे सतीन्द्रिये योग्ये यथा स्वमपि चेतसि । दृष्टं जन्म सुखादीनां तत्तुल्यं मनसामपि ॥२५३॥
असत्सु सत्सु चैतेषु न जन्माजन्म वा क्वचित् । दृष्टं सुखादे र्बुद्धेर्वा तत्ततो नान्यतश्चते ॥२५४॥
सुखदुःखादिभेदश्च तेषामेव विशेषतः । तस्या एव यथा बुद्धेर्मान्द्यपाटवसंश्रयाः ॥२५५॥

**उपजायत इति परिहारः स्यात्। तथा च सति तथैव भावनाबलादुपजायमानाः। प्रज्ञादयो वा सुखादयोपि बोधरूपा एव।**

**ननु तथापि बुद्ध्यादीनां स्वसम्वेदनरूपताम्नाभ्युपगच्छन्ति परे। नन्वसम्वेदनत्वेपि सति न प्रत्यक्षता नान्तरत्वमिति प्रतिपादितं। स्वसम्वेदनत्वे पुनस्तथाभूतमेवात्मानञ्चकासयन्त्यर्थञ्च सा चकास्तीति युक्तमेतदेव।**

**अथ भावनाबलादपि सुखादय उदयत्यागिन आत्मसमवायिन एव सन्त एकार्थसमवायिविज्ञानग्राह्याः।**

तेन बोधेन संस्पर्शाद् बोधरूपावभासनं। न तु बोधस्वभावेनेत्येवङ कस्मान्न कल्प्यते ॥४९१॥

**अत्रोच्यते।**

अनादिभावनाभावादिदमेवमिति स्थितेः। तदन्यप्रक्रियाकल्पो न लोकेनावतार्यते ॥४९२॥

**यद्भावनाबलादिदमुपजायते इति प्रतिपाद्यते(।)न तत्रापरा प्रक्रिया ोके समुपजायमानोपलभ्यते। एवञ्चैवञ्चेदमिति। अपि तु भावनाबलाद् यथैतद् दृश्यते तथैवेतदिति व्यवहारः। किम्वैकार्थसमवायकल्पनया प्रयोजनं। कस्य तर्हि तत् सुखं यद्यात्मनि समवायो नेष्यते। एवन्तर्हि कस्य स आत्मा यद्यन्यत्र तस्य समवायानिष्टिः।**

स्वतन्त्र आत्मा नित्यत्वात् पराधीनः कथं हि सः।
सुखादीनां त्वनित्यत्वे पराधीनत्वकल्पना ॥४९३॥

**आत्मा हि नित्यत्वात् स्वातंत्र्यादनाश्रितो युक्त इति युक्तमेतत्। सुखादयस्तु गुणा अनित्याश्च ततो नियमेन तेषामाश्रितत्वेन भाव्यं। तदेतदसद् (।) यतः।**

आश्रयत्वे गुणत्वं स्याद् गुणत्वे वाश्रयस्थितिः। अन्योन्यसंश्रयादेवं न स्यादन्यतरस्थितिः ॥४९४॥

**यदि गुणत्वं प्रथमं सिध्येत् तदा गुणेनाश्रितेन भवितव्यमिति कल्पनावतारः। न च तत् सिध्यति पराश्रयत्वात् सिद्धेः। नाश्रयाश्रयिभावः कस्यचिदस्तीति प्रतिपादितमेतत्।**

**यद्यप्युक्तन्नित्यत्वात् स्वतन्त्र आत्मा न सुखादयो विपर्ययादिति।**

अनित्यमपि हेतुभ्य उत्पत्तेर्निरपेक्षणं। कर्त्तव्यतास्य नास्तीति परत्रायत्तता कथं ॥४९५॥

**यदि तन्नोत्पन्नमेव कथमस्य परायत्तता। अथ कुतश्चिद्धेतोरुत्पन्नन्ततोपि का तस्य परायत्तता। स्वकार्यजनने परायत्ततेति चेत्। स्वहेतोरेव कार्यजननन्तस्येति नान्याधीनतायोग इत्यलम्प्रसङ्गेन।**

**तस्मात् सुखादय एव स्वतन्त्रा भवन्तु किमाश्रयेणात्मनोपकल्पितेन।**

**अस्वसम्वेदने च सुखादीनां कथमर्थग्राहकता। एकार्थसमवायिविज्ञानेन वेदने भविष्यतीति चेत्। अत्रोच्यते। किमेकार्थसमवायिना विज्ञानेनेन्द्रियजेन वेद्यन्तेऽथान्येन। न तावदिन्द्रियविज्ञानेन। यतः।**

**यस्यार्थस्य निपातेन ते जाता धीसुखादयः।**
**तम्मुक्त्वा प्रतिपद्येत सुखादीनेव सा कथं ॥२५६॥**

सैवेन्द्रियबुद्धी रूपाद्यभिनिवेशिनी कथं सुखादीनेव प्रतिपद्यते या चक्षुरादिना रूपादिषु नियुक्ता। नहि सुखे प्रवृत्तञ्चक्षुर्ममेति बुद्धिः। अथ सुखग्राहकम्विज्ञानं रूप एव प्रवृत्तं वर्त्तयिष्यति(।) तथासत्यतिप्रसङ्ग इति प्रतिपादितं। अनुमानस्यापि चाक्षुषत्वप्रसङ्ग इति।

अथेन्द्रियज्ञानादपरो ग्राहकाकारो नोपलभ्यते तेन तेनैवेत्युच्यते। विकल्पोपि तर्हि समानकाल इन्द्रियविज्ञानेनैव गृह्यत इति प्राप्तं। अनुमेयेपि प्रसङ्ग इति निवेदितं। न हि तत्रापरो ग्राहकाकार उपलभ्यत इति। अथ ग्राह्याकारात् तथा ग्राहकाकारपरिकल्पना। विकल्प्येपि शब्दे समानमेतत्। सुखादावपि ग्राहकाकारः किन्न कल्प्यत इति चेत्। न(।) ग्राह्यत्वेनाननुभवात्। नह्यैकार्थसमवायेपि ग्रहणान्तरेण ग्रहणाद् ग्राह्यता नास्तीति शक्यम्वक्तुं। एकलोलीभावेन प्रतिपत्तेरिति चेत्। स तर्हि तदात्मा सुखम्बुद्धिर्वा। एकस्यापि स्वरूपेणाग्रहणात् सुखाकारमेव केवलं सम्वेदनम्(।)अपरस्याप्यसम्वेदनस्य सुखभाव इति चेत्। न (।) परोपधानत्वस्याप्रतीतेः। वृक्षपिण्डाकारप्रतिपत्तिवत्। अथानुमानात् परोपधानता साध्यते। यत् प्रतीयते तत्परोपधानं पिण्डवत्। न। बाह्यार्थभावप्रसङ्गात्। वासनोपधानस्य सम्भवात्। तस्मात् यद् यथा प्रतीयते तत् तथैवोपगन्तव्यं। न तु तदनुमानेनान्यथा स्थापनीयं। ततो बाह्यार्थः स्वरूपेण ग्राह्यतया प्रतीयमानस्तथावस्थाप्यते प्रतीतिमात्रानुबन्धित्वात् स्थापनायाः। सुखादिकन्तु न ग्राह्यतया वेद्यते ततः स्वसम्वेदनं।

अथात्ममनोयोगमात्रादुत्पन्नं ज्ञानं सुखादीनां ग्राहकं नेन्द्रियजं। तथा सति युगपज्ज्ञानानुदयात् क्रमग्रहणेन भाव्यं। ततश्च।

**अविच्छिन्ना न भासेत[1] तत्सम्वित्तिः क्रमग्रहे।**

क्रमग्रहे ह्युपगम्यमाने न सुखादिबुद्धिरविच्छिन्ना प्रतिभासेत। अयमेव हि क्रमो यदसहभूतत्वन्नाम। सहैव च रूपादिग्रहणेन सुखादिग्रहणामुपलभ्यते। तत्र च सह ग्रहणमिति विरुद्धं। न हि विरुद्धयोरेकत्र भावः।

**तल्लाघवाच्चेत् तत्तुल्यमित्यसम्वेदनन्न किं ॥२५७॥**

यदि सुखग्रहणस्य लघुवृत्तेरविच्छेदप्रतिपत्तिः प्रतिपत्तिरेव नान्तराप्रतिपत्तिः। तदेतल्लाघवमग्रहणेपि सुखादेः समानमित्यग्रहणमेवाविच्छिन्नं सुखरूपयोः प्रसक्तं। अथा ग्रहणमप्यविच्छिन्नं प्रतिभात्येव। यतः।

सुखस्याग्रहणं रूपग्रहणादपरन्न हि। रूपस्याप्यग्रहो नास्ति सुखग्रहणतः परः ॥४९६॥

ततश्च सुखस्याविच्छिन्नमग्रहणम्भवेदित्ययमर्थो रूपादेर्ग्रहणमविच्छिन्नमिति। तदस्त्येव एवम्विपर्ययेपि वाच्यं। ततः सिद्धसाधनमेवैतदग्रहणन्न किमिति। अत्रोच्यते।

एकस्य भावो योन्यस्याभावत्वेन निरुच्यते। तद्विविक्ततया तस्य तदभावस्य चिन्तितः ॥४९७॥

न हि स्वरूपेण कस्यचिदसावभावोऽपि तु तद्विविक्तत्वेन। ततश्च रूपग्रहणं सुखग्रहणविविक्तमुपलभ्यत इत्यभ्युपगमे तद्विविक्तग्रहणं लाघवेनेति तदविच्छेदस्य सम्भवात् कथं सुखसम्वेदनं। सुखसम्वेदनस्यापि स एव क्रम इति द्वयोरप्यग्रहणमिति(।)

[1] M. ०विच्छिन्नाथ भासेत

साधूक्तमग्रह एव न किमिति । न हि परत्राप्युपलभ्यमाने परस्य तद्विविक्तग्रहणं । तद्विविक्तग्रहणमेव तत्स्वरूपस्य तत्राप्रवेशादिति[1] चेत् । न । परस्परस्वरूपाप्रवेशग्रहणेऽक्रमग्रहणं समानकालग्रहणेपि सम्भवात् । अवयवावयविनोस्तुल्यकालग्रहणाभ्युपगमात् ।

ननु दूरतस्सान्तरानेककेशग्रहणेनान्तरस्याग्रहणेप्यग्रहणमेव केशरूपस्य । तत्र यथा निरन्तरकेशरूपग्रहणेन तदन्तराग्रहणम्बाध्यते न तथान्तराग्रहणेन केशग्रहणबाधा । एवमत्रापि नाग्रहणमन्तरा ग्रहणस्य बाधकं । अत्रोच्यते ।

अन्तरग्रहणन्तत्र नैव सद्बाधकङ्कथं । असन्न बाध्यन्नापीष्टं लोकः केवलमिच्छति ॥४९८॥

कस्मादन्तरग्रहणमेव न भवतीति चेत् ।

शक्तिरेषैव भावानां सा किं पर्यनुयुज्यते । तेनान्तराणां ग्रहणमनुत्पन्नन्न बाधकं ॥४९९॥

न च बाध्यं । केवलम्व्यपदेश एव यथाकथञ्चिल्लोके निरूढिमागतः । तत्र तु पुनः सुखरूपादिग्रहणयोरग्रहणन्नोत्पन्नमिति न युक्तं । तथा सति न क्रमग्रहणसम्भवः । अस्त्येवाग्रहणन्तत्र परङ्ग्रहणन्नोत्पन्नमिति चेत् । नैतदस्ति ।

ग्रहणे ग्राहकन्नास्ति ग्राहके ग्राहकान्तरं । परैरप्येवमेवेष्टमन्यथा त्वसमंजसं ॥५००॥

ग्रहणेन हि स्वप्रकाशात्मना भवितव्यं ग्राहकस्य तु कारणात्मनः कर्त्तुर्वा ग्राहकमपरमिष्यतां । अप्रकाशे ग्रहणे सर्व्वार्थाग्रहणप्रसङ्गः । ग्रहणञ्चेत् स्वप्रकाशमिन्द्रियादन्यतो वा यदि भवेत् किमिदानीमपरेण ग्राहकेणेति चेत् । अयमपरोऽस्यैव दोषः । न त्वप्रकाशं स्वयङ्ग्रहणन्नाम । अपरेण प्रकाश्यते तच्चेत् । नन्वपरेणापि प्रकाशनम्परोक्षमेव तस्याप्यपरेणेत्यर्थतैवायाता सर्वस्य जगत इति प्रतिपादयिष्यते । तच्च प्रतिभासमानम्परस्परकालविवेकेनोत्पन्नङ्कथम्परस्परस्य न बाधकमिति यत्किञ्चिदेतत् । अथ सुखग्रहणम्बाध्यत एव कदाचित् केवलस्य रूपादेर्ग्रहणात् । तथा हि मनोहारिरूपदर्शनेपि कदाचिन्न सुखसम्वेदनमस्ति ततः केशान्तरग्रहणमेव सुखग्रहणमपि नोत्पन्नमिति बाधनमवस्थाप्यते । नैतदपि सत् । यतः ।

सर्वदैव न किम्बाधा केशान्तरविदो यथा । तदा तु न सुखादीनामुदयो लोकसम्मतः ॥५०१॥

यथा केशग्रहणमन्तरा ग्रहणस्य बाधकं सर्वदैव । एवं रूपादिग्रहणमपि सुखादिग्रहणस्य स्यात् । न च परमार्थतस्तत्केशग्र(ह)णं केशस्वरूपस्याप्रतिपत्तेः । यदा तु सुखा प्रतिपत्तिः केवलरूपादिग्रहणे तदा सुखमेव नोदपादि । न तूत्पन्नमग्रहणं केवलमिति व्यवस्था । अनुपलम्भादनुत्पन्नव्यवहार इति चेत् । उ(त्)च्छन्न इदानीमुत्पादादिव्यवहारस्ततोनुपलब्धिरपि । तस्माद् यदैव सुखादीनामुत्पत्तिग्रहणस्य तदैव सुखादीनामुत्पत्तिः । तदापि न रूपादिग्रहणेनाभिभवः (।) भवन्मते केशान्तराग्रहणवत् प्राप्तः । अथैकैवेन्द्रियबुद्धिरथ सुखादिग्रहणे प्रवर्त्तिष्यते तेनायं क्रमग्रहणदोषो न भवेत् । तदसदित्याह ।

**न चैकया द्व्यज्ञानन्नियमादक्षचेतसः ।**
**सुखाद्यभावेप्यर्थाच्च जाते तच्छक्त्यसिद्धितः ॥ २५८ ॥**

---

[1] T. तत्र प्रवेशादिति

यदीन्द्रियबुद्धिरेवार्थसुखादिग्राहिणी युक्तं न चैतदिति प्रतिपादितं । आत्ममनः-संयोगमात्रजेनातिन्द्रियजेन सुखादिकं गृह्यते प्रत्ययेनेत्यभ्युपगमात् । अथ कश्चिदेवमप्यु-पगच्छेत् तदपि न शक्यं(।) सुखाद्यभावेप्यर्थादेव केवलादुत्पादादिन्द्रियबुद्धेः सुखादीनां कारणत्वानिर्द्धारणात् । यो हि येन विना नोत्पत्तिमान् सत्स्वपि समर्थेष्वन्येषु तस्य तत्कारण-त्वावधारणं । न च रूपादिसामग्र्यामपि विना सुखादिकमनुत्पत्तिमदिन्द्रिय चेतः ।

अथापि स्यात्(।) नीलं यदा पीतेन सहेन्द्रियवेदने प्रतिभाति न तदा तस्य सामर्थ्यं स्यान्नीलमन्तरेणापि पीतादुत्पत्तेः । अथ च तत्रापि तस्य सामर्थ्यं । अथ नीलपीतावभासि विज्ञानन्न केवलात् पीताज्जायते । एवन्तर्हि सुखरूपावभासस्यापि न केवलाद् रूपादिति समानो न्यायः । न समानमेतत् ।

नीलस्येन्द्रियविज्ञाने पृथक्सामर्थ्यदर्शनात् । शक्तिसिद्धिस्समूहेपि न सुखस्यैवमीक्षणं ॥५०२॥

अभ्युपगमे वा ।

**पृथक् पृथक् च सामर्थ्ये द्वयोर्नीलादिवत् सुखं ।**
**गृह्येत केवलं तस्य तद्धेत्वर्थमगृह्णतः ॥ २५९ ॥**
**न हि सम्वेदनं युक्तं दृष्टमिष्टञ्च कस्यचित्[१] ।**

रूपादेरेव सुखादिरहितादुत्पद्यते तदक्षविज्ञानं । न हि विज्ञानात् पूर्वसुखादिकमस्ति रूपवत् विज्ञानेन सह तत एव रूपादेस्तस्योत्पत्तेः । अथ समानकालभाविनोपि सहभूहेतुत्व-मिष्यते । तदसत् । सहभूहेतुत्वेन परस्परप्रतिबद्धं द्वयम्भवतु भूतवन्न तु वेद्यवेदकभावः ।

असम्वेदनरूपस्य ग्रहणन्न परस्परं । स्वसम्वेदनरूपस्य ग्रहणन्न परस्परं ॥५०३॥
स्वहेतोरुन्मुखीभावाद् यदि ग्रहणमिष्यते । समानकालस्याप्यस्य परसम्वेदनात्मना ॥५०४॥
सुखे तदुन्मुखीभूतं कथमिन्द्रियजम्मतं । नाक्षव्यापारवित्तत्र प्रागेवैतन्निवेदितं ॥५०५॥

अपि च पृथक् सामर्थ्ये केवलं सुखादि गृह्येत(।)नीलवदेव गृह्यत एवेति चेत्(।) न । न हि सुखहेतुरूपादिग्रहणमन्तरेण सुखादिग्रहणं युक्तं । सम्वेद्यमानमप्ययुक्तमेव । न खलु ललनालालित्यप्रतिपत्तिमन्तरेण सुखेन कश्चिदर्थी । तदैव तत् सुखमिच्छति सकलः कामी जनः । न चैवमुपलब्धिः(।) अथ तस्यैव सामर्थ्यम्(।) एवन्तर्हि चन्द्रमसोपि द्वितीयस्य स्यात् । अत एवाह । अर्थेनैव सहग्रहे(।)

**किं सामर्थ्यं सुखादीनामेष्टा धीर्यत्तदुद्भवा ॥ २६० ॥**

न ह्यन्वयव्यतिरेकमन्तरेण सामर्थ्यसिद्धिः । न चेष्यते नेष्टैव तदुद्भवा चक्षुरादिबुद्धिः परेषामिति । अपि च ।

**विनार्थेन सुखादीनां वेदने चक्षुरादिभिः ।**
**रूपादिः स्त्र्यादिभेदोक्त्या गृह्येत न कदाचन ॥ २६१ ॥**

सुखदुःखादिहेतुत्वेन रूपादिकम्प्रतिकूलाप्रतिकूलत्वेन च स्त्र्यादिकन्न गृह्येत । केवलस्य ग्रहणे कारणं किमप्यस्ती(ति) प्रतीतिः स्यात् । सहग्रहणे कारणप्रतीतिरिति चेत् । परस्पर-

---

[१] M. ०युक्तमर्थेनैव सहग्रहे

नीलादीनामपि कारणत्वप्रतीतिः स्यात् । न च भवति । तस्मादनुपपन्नमेतत् । यदि च सुखं केवलञ्चक्षुरादिनां गृहीतुं शक्यं तदा रूपादिग्रहन्नैवोपजायते । यतः ।

**न हि सत्यन्तरङ्गेर्थे शक्तेर्धीर्बाह्यदर्शनी ।**

बाह्यस्त्र्यादिभेददर्शनमन्तरेण यदि सुखसम्वेदनमेव न भवेत् तदा बाह्यदर्शनन्तन्नान्तरीयकत्वात् सुखसम्वेदनस्य । अथार्थग्रहो पीष्यत एवेति मतिस्तदायमपरो दोषः ।

**अर्थग्रहे सुखादीनान्तज्ज्ञानां स्यादवेदनं ॥२६२॥**

अर्थग्रहणकाले हि यद्यपि सुखमुदयवत् तथापि तस्य ग्रहणसामग्री नास्ति । इन्द्रियार्थमनःसंयोगभाविना मनसारूपाद्यर्थस्य ग्रहणं । न चापरम्मनोस्ति युगपज्ज्ञानोत्पत्त्य[1]नभ्युपगमाद्(।) अतस्तज्जं सुखादिकन्न गृह्येत । अथ युगपद् विज्ञानोदय इष्यते तदाप्यपरो दोष इत्याह ।

**धियोर्युगपदुत्पत्तौ तत्तद्विषयसम्भवात् ।**
**सुखदुःखविदौ स्यातां सकृदर्थस्य सम्भवे ॥२६३॥**

अर्थस्येष्टानिष्टस्य सम्भवे सति युगपत् सुखदुःखादिसम्वेदनं निवारयितुन्न शक्यते ।

ननु दृश्यत एवैतत् । तथा हि शीतकाले शीतोष्णस्पर्शसम्वेदनजन्मनी सुखदुःखे वेद्येते । तदप्यसत्(।) यतः । सदा स्यातामित्यभिप्रायः । न च रणरसावर्जितचेतसः स्वामिसम्माननोपकारनिर्देशपराधीनमात्मानं सफलञ्चिकीर्षतः शास्त्रसंस्पर्शदुःखसम्वेदनं(।) अवश्यञ्च दुःखहेतुसद्भावे तदुत्पत्तिः । ततश्च सुखदुःखसहसम्वेदनप्रसङ्गः ।

अथापरेणाभिभवात् परस्यावेदनं । तदयुक्तमभिभवस्यासम्भवात् । महत्त्वादिनाभिभव इति न सम्यक् । हस्तिमशकयोर्युगपत् प्रतिपत्त्यभावप्रसङ्गात् । इष्टत्वेनेत्यपि न सम्यक् । द्वयोरपि सह दर्शनात् । दुःखसुखयोर्हि युगपदनुभवस्य प्रतिपादितत्वात् । पटसंस्कारात् क्वाप्यनुभव इति चेत् । न । भावनाव्यतिरेकेण संस्कारस्यापरस्यादर्शनात् । भावनाबलेन चेदुत्पत्तिस्तु वः सुखादयस्तदा बोधरूपा एवेति प्रतपादितं ।

अथापि स्याद् ।

भावनाबलतो ज्ञानं सुखादिषु विवर्तते । सुखादयस्तु रूपादिकारणादेव भाविनः ॥५०६॥

इयमप्यलीककल्पना । यतः ।

यद्वस्तुबलतो ज्ञानं जायते तत्र भावनां । नाङ्गीकुर्वन्ति विद्वान्सस्तथाचेदसमंजसं ५०७॥

यदि सुखादिकं सन्निहितमेव तद्भावनामन्तरेणापि दृश्यन्त एव । न हि प्रागचिन्तितानुभूता भावा एकदैव नोपलब्धिविषयः । तत्रापि व्यवहिता भावनास्तीति चेत् । किमत्र प्रमाणं (।) अपि च । ज्ञानस्य भावना नार्थाकारभावनां विना (।) केवलस्य भावयितुमशक्यत्वात् । भावनाबलेन चेदुदयवज्ज्ञानं किमर्थादिकमपेक्षते । अथार्थेन सहाभ्यासात् तथा सत्यर्थाकारोपि भावनाबलादेवोपजायते । तथा सति स्वप्नादिज्ञानवदर्थरहितमेव ज्ञानमिति बाह्यरूपसुखादिविज्ञानात् सिषाधयिषतार्थस्याप्यवाह्यरूपता साधितेति महती परस्य परदूषणाभिज्ञता ।

---

[1] T. न्यायसूत्रे

अथापि मतिः(।) युगपत्सुखदुःखासम्भव एव यतः ।

**सत्यान्तरेऽप्युपादाने ज्ञाने दुःखादिसम्भवः ।**
**नोप(।)दानं विरुद्धस्य तच्चैकमिति चेन्मतं ॥ २६४ ॥**

**अविज्ञानस्य[1] विज्ञानं केनोपादानकारणं ।**
**आधिपत्यन्तु कुर्वीत तद्विरुद्धेऽपि दृश्यते ॥ २६५ ॥**

**अक्ष्णोर्यथैक आलोको नक्तञ्चरतदन्ययोः ।**
**रूपदर्शनवैगुण्यावैगुण्ये कुरुते सकृत् ॥ २६६ ॥**

यद्युपादानपूर्वकं ज्ञानमपेक्ष्य सुखादि सम्भवति तदा नोपादानमेकं विरुद्धस्य युक्तं द्वयस्य । किन्तु तदेवायुक्तं विरुद्धानामपि ज्ञानं सुखादीनां दृष्टं । अथ विरुद्धस्योपादानन्न भवत्येव । तथा सत्यविज्ञानस्य विज्ञानमुपादानं कथम्भवेत् । न चोपादानभावो नाम आधिपत्यमेव केवलं कारणानां कार्ये(।) तच्च विरुद्धेपि । यथा कौशिकेतरयोरक्ष्णो-रुपघातेतरौ भवत आलोकादेकस्मादेव ।

**तस्मात् सुखादयोऽर्थानां स्वसंक्रान्तावभासिनां ।**
**वेदकाः स्वात्मनश्चैषामर्थेभ्यो जन्म केवलं ॥ २६७ ॥**

यद्यबोधरूपाः सुखादयो रूपादिसामग्रीतो विज्ञानसमानकाल एवोदयवन्तस्तदा सर्वदेष्टानिष्टविषयसंमुखाभावे युगपत् सुखदुःखविदौ स्यातां । तवापि कस्मान्नैवमिति चेत् । न(।) वासनाप्रबोधस्य तादृशस्याभावाद् रूपादिविकल्पवत् । कदाचिदेव कस्यचित् किञ्चिदेव भवति वासनाप्रबोधकारणं । ममाप्येवमिति चेत् । न । यतः ।

वासनाबलभावित्वे बोधतैव प्रसज्यते । वासना स्मृत्यभिज्ञानकारणत्वेन लक्षिता ॥५०८॥

ननु स्मृत्यादयोपि न स्वरूपसम्वेदनात्मकास्तत्राप्यर्थस्यैव प्रतिभासनात् । वर्णसं-स्थानात्मकं तत्रार्थरूपमेव प्रतिभाति (।) न चापरन्तत्र विज्ञानरूपं सम्वेदनविषयः(।) तस्मात् परोक्षैव सकला बुद्धिः ।

यद्यर्थ एव तत्रास्ति प्रतिभासस्य गोचरः । प्रत्यक्षवत् तदर्थस्य ग्रहणं सङ्गतं भवेत् ॥५०९॥

न ह्यर्थः स्वेन रूपेण भासमानो प्रत्यक्षो भवितुमर्हति, स्वरूपप्रतिभासस्यैव प्रत्यक्ष-त्वाद्, अन्यस्य प्रत्यक्षलक्षणस्याभावात् । तथा सति न प्रत्यक्षस्मरणयोर्विशेषः । अथ पूर्वत्वेन परोक्षतया च प्रतिभाति ततोयमदोष इति चेत् । केयम्परोक्षता नाम । न हि सा प्रत्यक्षेणोपलब्धा ।

प्रत्यक्षेणोपलब्धे च स्मरणस्य प्रवर्त्तनं । अन्यथा पूर्वरूपस्य ग्रहणे स्मरणं कथं ॥५१०॥

न हि स्मरणपूर्व्वार्थविषयं । अथ गृहीतस्यैवार्थस्य परोक्षताग्रहणात् स्मरणं तदिति मतिः । तदप्यसत् ।

परोक्षता किमर्थस्य स्वभावो वेदनस्य किं । अर्थस्यासौ स्वभावश्चेत् प्रत्यक्षे प्रतिभासतां ॥५११॥

यो ह्यर्थस्य स्वभावः स प्रत्यक्षे प्रतिभाति यथा नीलादिता । शक्तिनियमात् स्मरण

---

[1] M. तदज्ञानस्य

**एव प्रतिभातीति चेत् । यथा भावाभावात्मके वस्तुनि भावरूपता प्रत्यक्षेण गृह्यतेऽभावरूपता तु पररूपेण भावप्रमाणगोचरः । तदपि स्वपक्षपातित्वं । तथा हि ।**

अभावस्य हि भावत्वे कथम्प्रत्यक्षतोऽग्रहः । व्यतिरेके ततस्तस्य भावस्यो भयता कथं ॥५१२॥

**आकारभेदलक्षणत्वाद् भावभेदस्य । आकारस्य भेदेनाप्यभेदे सकलमेकरूपम्भवेत् । अथ भावयोराकारभेदादिनैकता न भावाभावयोः । भावयोरभावतो भेदात् । भावाभावयोस्तु नापरो भावः । अन्यथानवस्था स्यात् ।**

अभावो यद्यभिन्नः स्याद् भावाद् भेदग्रहः कथं । प्रमाणभेदादिति चेदभेदग्रहणं कुतः ॥५१३॥

**यदि प्रत्यक्षेण भावांशः परिगृह्यते प्रमाणान्तरेणाभावांशस्तथा सति परस्परेणामिश्रता प्रतिपत्तेः कथमेको भावाभावात्मको भवतीति प्रतिपत्तिः । यदि चक्षर्विज्ञानेन रूपप्रतिपत्तिरन्येन शब्दादेः (।) कथम्मयैव द्वयम्प्रतिपन्नमिति कर्त्तुरेकताप्रतिपत्तिः । अनादिवासनात एषा प्रतीतिर्न तु तत्त्वत इति कस्यात्रोपालम्भः । एवमत्रापीति चेत् । यद्येवमनादिवासनाबलादेवाभावव्यतिरेकप्रतीतिरपि भविष्यति किमर्थान्तरकल्पनया । प्रमाणमपि तदभावाख्यं वासनाबलभाव्येव न पारमार्थिकं । ततो विलक्षणत्वादेव ततो व्यावृत्तं किमभावेन । वैलक्षण्यञ्च प्रत्यक्षत एव प्रतिभाति । तत इदमत्र नास्तीति तदुत्तरकालभावी तत्सामर्थ्यभावी गृहीतग्राहित्वादप्रमाणमेव नाभावो नाम प्रमाणान्तरं । अभावेन प्रमाणेन मयाऽभाव(ः) प्रतिपन्न इति प्रातिस्विकोयम्व्यवहारः । लोकस्य तु येन मया नोपलब्धन्दर्शनयोग्यं सत् तेनेह नास्ति तस्य चात्राभाव इति समानार्थो व्यवहारः । सा चानुपलब्धिः प्रत्यक्षमेवेति वक्ष्यामः । परमार्थतस्तु नाभावो नाम प्रमाणान्तरन्न च प्रमेयमित्यसिद्धौ दृष्टान्तस्तदात्मकेपि शक्तिनियमे ।**

**अपि च(।) यथाऽभावः प्रमाणान्तरन्तथा स्मृतिरपि स्यात् । परोक्षत्वे प्रमाणमेव स्मृतिरिति चेत् । न । प्रमाणलक्षणायोगात् ।**

परोक्षत्वे गृहीतेपि क इवार्थः प्रसिध्यति । अनुमानस्य वृत्तिर्हि धर्मिसम्बन्धवेदनात् ॥५१४॥

**स्यादेतत्(।) परोक्षत्वे ज्ञाते सत्यत्रेदानीम्प्रत्यक्षस्यानवसर इत्यनुमानं प्रवर्त्तयन्ति प्रेक्षावन्तः(।) तत इदं प्रयोजनं परोक्षत्ववेदनस्येति स्मृतेः प्रामाण्यं(।) नैतद्(।) यतः । सम्बन्धग्रहणपक्षधर्म्मसमाश्रयणमात्रकादेवानुमानप्रवृत्तेः । न हि कश्चिद् धूमादिकार्यदर्शनानन्तरमुपजायमानानुमानवह्निग्रहणे परोक्षतान्ततः प्रागेवावधारयति । अवधारणे वा प्रयोजनं । अथ कदाचिदवधारयत्येव कञ्चिदिति चेत् । तदपि यत्किञ्चित् । तथा हि ।**

प्रयोजकोऽङ्गशः किं कश्चित् कदाचित्कनयेक्ष्यते ।
प्रयोजकोर्थः किङ कश्चित् कारणतन्निवर्त्तते ॥५१५॥

**प्रयोजको हि कारणमेव । न चान्वयव्यतिरेकव्यतिक्रमे कारणत्वन्तल्लक्षणकत्वात्तस्य । अपि च ।**

स्मरणेन परोक्षत्वं ज्ञाप्यते कस्य वस्तुनः । यस्यानुमानेन गतिस्तन्न स्मरणगोचरः ॥५१६॥

**अनुमानकालभावी हि योर्थः स न स्मरणगोचरः (।) अन्यथानुमानस्य वैयर्थ्यमर्थावापतति । परोक्षतया तस्य स्मृत्यैव ग्रहणात् । परोक्षतामेव तस्य स्मृतिरवगच्छति न तदा-**

**तनसत्तामिति चेत्। कस्य तर्हि सा परोपक्षता प्रतीयते। पूर्वगृहीतस्येति चेत्। तत्काला-वधेरेव वस्तुनः(।) तर्हि स्मरणं परोक्षतां वेत्ति नान्यस्येति व्यर्थकमेवं स्मरणं। स्मृत्वा परोक्षता-म्प्रवर्त्तते ततः प्रमाणं स्मरणञ्चानुमानप्रवर्त्तनादिति चेत्। स्मृत्वा प्रवर्त्तत इति विचार्यमेतत्। किन्तत्कालसत्तायां प्रवर्त्ततेथेदानीन्तन्यामिति।**

तत्काले यदि वर्त्तेत प्राप्तुमेतन्न शक्यते। प्राप्त्यर्थी च प्रवर्त्तेत प्रेक्षावत्तैव नान्यथा ॥५१७॥

**इदानीन्तनमस्तित्वञ्च स्मृत्या ज्ञायते ततः कथम्प्रमाणता। पूर्वकालेऽर्थे परोक्षता ज्ञायते स च प्राप्तुमशक्यः। अथवा प्रत्यक्षेणैव परोक्षताग्रहणं। तत्कालावधेर्ग्रहणं यत् प्रत्यक्षेण तदेवोत्तरकालापेक्षया परोक्षत्वमिति। तदाकारता तु संस्कारबलादस्यात्मभूतैव स्मरणस्य। तथाभूतार्थ एवासाविति चेत्। नार्थताधिमुक्। अधिमोक्षवशादेव तथा तत्त्वव्यस्थितिः। स्वरूपं हि स्वसम्वेदनेन प्रतीयमानमर्थ इति वा नर्थ इति वा न व्यवस्था-माप्नोति। तदुत्तरयाधिमुक्त्या तथा व्यवस्था। सा च नास्ति स्मरणाकारे। तथा हि(।) सोर्थो योर्थो दृष्टः पूर्वमयन्तु पुनराकार ददानीं भावनाबलादेवोदयभागिति प्रतियन्ति प्रेक्षावन्तः।**

**तस्मात् सुखादयोर्थानां स्वसंक्रान्तावभासिनां।**
**वेदकाः स्वात्मनश्चैषामर्थेभ्यो जन्म केवलं ॥२६७॥**

**यथास्वसम्वेदनसंस्कारादुपजायमाना स्मृतिरात्मसंक्रान्तार्थाकारस्य साम्विदेका तथा सुखादयोपि। यतस्तेपि भावनासंस्कारसमुपनतान्तरं स्प्रष्टव्यविशेषस्यात्मभूतस्यैव वेदकाः। कथन्तर्हि रूपादिकार्थवेक्षणं तद्द्वारेण तदनुरूपवासनाप्रबोधात्।**

स्पृश्यसंसर्गसंभूतसुखाकारप्रवेदनात्। संस्कारो जायते तस्य प्रबोधस्तस्य दृष्टितः ॥५१८॥

**आलिङ्गनसुखसम्वेदनसंस्कारो हि गाढतरमुपजातः पुनस्तादृशरूपदर्शनात् प्रबोध-मुपगच्छँस्तथाभूतमेवान्तरस्पर्शसुखसम्वेदनं जनयति। एतदेव दर्शयति।**

**अर्थात्मा स्वात्मभूतो हि तेषान्तैरनुभूयते।**
**तेनार्थानुभवख्यातिरालम्बस्तु तदाभता ॥२६८॥**

**स्वात्मभूत एवान्तरस्प्रष्टव्यविशेषः सुखादिभिरनुभूयते(।) तत्र एवार्थानुभ(व)ख्यातिः। अन्यथा परसम्वेदने तेनेति न सम्बन्धो भवेत्। तथा हि।**

स्वरूपानुभवो युक्तः स्वरूपं हेतुतो यतः। परस्य रूपानुभवः कथं तस्य पृथक्कृतः ५१९॥
अन्यरूपं हि नान्यस्य कथन्तस्मात् प्रकाशते। प्रदीपात्तु तथाभूतभास्वरत्वोदयो घटे ॥५२०॥
न तु प्रकाशाद् विज्ञानात् प्रकाशोर्थः प्रजायते। कार्यतायां हि तज्ज्ञानादवबोध. कथम्भवेत् ॥५२१॥

**यस्य हि यत्कार्यन्न तेन कारणेन तदवगम्यत इति न्यायः। अन्यथावबोधादुपजा-यमानः कायिको व्यापारस्तेन वेदितो भवेत्। तस्मादात्मरूपमेव वेदयितुं युक्तं। अथो-न्मुखीभावाद्धि वेदनं न स्वसम्वेदनात्। तदयुक्तं।**

स्वरूपमुन्मुखीभावः स्वहेतोर्यदि जायते। अर्थस्यात्र किमायातं येनासौ वेदितो भवेत् ॥५२२॥
अर्थादप्युन्मुखीभावस्तस्येत्येवमथोच्यते। चक्षुषोप्युन्मुखीभावस्तस्य तद्वेदनन्न किं ॥५२३॥
चक्षुषोर्थोन्मुखत्वञ्चेदर्थस्येति कथं मति। अर्थोन्मुख्यप्रतीतिस्तु प्रतीतेर्थे भवेदियं ॥५२४॥

**न ह्यप्रतीयमाने स्वरूपेणार्थे तदुन्मुखताप्रतीतिः प्रतीयते चेदर्थः स्वयं किमिदानीं**

सम्वेदनान्मुख्येन । न खलु सिद्धोपस्थायी तदुपयोगी । तेन विनार्थस्य प्रतिभासनाप्रतीतेरिति चेत् । तेन तर्हि सहैव प्रतिभासमानतास्तु केवलं न तु ततः परं(।) ततस्तस्य ग्रहणमिति ग्राचितकमण्डनमेतत् । अपरः ।

कश्चिद् बहिःस्थितानेव सुखादीनप्रचेतनान् ।
ग्राह्यानाह न तस्यापि सकृद् युक्तो द्वयग्रहः ॥२६६॥

नियमेनेति वाक्यशेषः । न हि नीलादिवत् स्वतन्त्रमालम्बनन्नियमेनान्येनैव सह-नीलादिना सुखादि गृह्यत इति कारणमस्ति । अथ सुखदुःखादिरूपप्रधानविपरिणतिरूपा एते सुखादयः । तथा हि प्रक्रिया । प्रधानान्महान् महतो हंकारो हंकारात् पञ्च तन्मात्राणि[1] पञ्चबुद्धीन्द्रियाणि पञ्चकर्मेन्द्रियाणि मनश्च पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानीति । एतावदेव सकलम्विकारजातं । प्रकृतिस्वरूपान्वयी च विकारः । तद्यथा मृद्विकारघटादिकः । अत्रोच्यते ।

सुखाद्यभिन्नरूपत्वान्नीलादेश्चेत् सकृद्ग्रहः ।
भिन्नावभासिनोर्ग्राह्यञ्चेतसोस्तदभेदि किं ॥२७०॥

सुखादिरूपप्रधानरूपा एव सुखादय इति कुत एतत् । तद्रूपान्वयदर्शनादिति चेत् । तथा हि(।) मृद्विकारास्तदन्वयिनो दृश्यन्ते ।

नन्वनैकान्तिकमेतत् । भेरीदण्डसंयोगादुपजायते शब्दो न च भेरीदण्डरूपान्वयी । यद्यपि वायोरणूनां शब्दस्य शब्दत्वापत्तिरिष्यते । तथापि न सिद्धमेतत् । अथ मृद्विकारवत् समानजातीयमत्रापि कारणं परिकल्प्यते । एवन्तर्हि यत्किञ्चित् कार्यन्तद्रूपं तत्सर्वम्विजातीयाद् यथा शब्दादि । कार्यञ्च घटादिस्तदपि विजातीयादेव । कुलालादिकञ्च विजातीयं । सत्स-जातीयादेव सकलमुदयवदिति न व्याप्तिः । सजातीयविजातीयाद्वोदयवदिति विपर्ययसिद्धिः । नासहायं सजातीयं कारणन्दृश्यते क्वचित् ।

अथ सकलमेव सुखाद्यन्वितं दृश्यते (।) तेन सुखादिस्वभावमेव कारणं मृद्विकाराणां मृत्पिण्डवत् । उक्तमत्र । सहायस्याप्यपरस्य कारणत्वात् । तत्समानासमानजातीयं प्रसक्तङ्कारणमिति न प्रधानसिद्धिः ।

अपि च (।) सुखादीनामपि ग्राह्यताद्यन्वयादपरं ग्राह्यं प्रधानं सिध्यति । ततः पर्यन्ते ग्राह्यतावस्तुत्वमित्यादि कारणं स्यात् । अथ तदपि सुखाद्यात्मकं (।) सुखाद्यात्म-कत्वादन्वयिनः पदार्थादित्वस्य । एवन्तर्हि घटाद्यात्मकत्वात् सुखादीनां घटाद्यात्मकत्वं प्रधान-स्य प्रसक्तं । अथेष्यते एव सर्वात्मकत्वन्तस्य । यदि सर्व एव विकारग्रामः प्रधानात्मनि तेनैवात्मरूपेण परस्परव्यावृत्तेन वेद्यते क इवात्र प्रकृतिविकारभावः । आविर्भावतिरोभाव-मात्रकमिति चेत् आविर्भावो विकारस्तिरोभावः प्रकृतिः । कोयमाविर्भावो नाम कोयन्तिरो-भावः । व्यक्तिराविर्भावो नाम (।) कोयन्तिरोभावः । व्यक्तिराविर्भावस्तदभावस्तिरोभाव इति चेत् । केयम्व्यक्तिः (।) दृश्यात्मता (।) तदभावोनुपलब्धिस्तिरोभाव इति ।

ननु सिद्धस्वभावे प्रमाणे नु तस्यानुपलब्धिरिति शक्यम्(।) असिद्धौ स्वभाव एवोत्पत्ति-रिति न प्रधानसिद्धिः । यदि चानुपलब्धा घटादयः पूर्वमेवं भूता एव तिष्ठन्ति किम्प्रधान-

[1] तत्रैव—"पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि, पाठान्तरमेतत्"

कारणपरिकल्पनेन । सुखादिरूपतैवैषां प्रधानमिति चेत् । न । सुखादिरूपताया भेदेन ग्रहणात् । भिन्नावभासि मनोग्राह्यञ्च कथमभिन्नं । अपि च ।

**तस्याविशेषे बाह्यस्य भावनातारतम्यतः ।**
**तारम्यश्च बुद्धौ स्यान्न प्रीतिपरितापयोः ॥२७१॥**

यदि बाह्यनीलादिरूपा एव सुखादयः । न तर्हि नीलादिवदेव भावनाविशेषतः प्रीति-परितापादिविशेषसम्भवः । न खलु नीलादिस्वरूपनिर्भासो भावनाविशेषतो विशिष्यमाण उपलब्धः(।) तथा चेद् भावनान्वयमेव सकलमान्तरम्बाह्यञ्चेति भावनाबलप्रभवमतत्त्वमेव सकलं जगदित्यापतितं । बहीरूपेण च प्रतिभासप्रसङ्गो यदि बाह्यः सुखादयः । भ्रान्तिरिय-मिति चेत् । न । भ्रान्तिकारणादर्शनादबाधनाच्च ।

**सुखाद्यात्मतमया बुद्धेरपि यद्यविरोधिता ।**
**स इदानीङ्कथम्बाह्यः सुखाद्यात्मेति गम्यते ॥२७२॥**

स्यादयभिप्रायः (।) प्रधानपरिणतिस्वभावा यथा शब्दादयस्तथा बुद्धिरपि । अत आत्मना बुद्धिरूपसुखादिवेदने नियमेनाबहीरूपवेदनं । भावनातारतम्यतो बुद्धितारतम्ये सुखादीनामपि तदात्मना तारतम्यं । भावना हि नामाहंकारमनःप्रवर्त्तिता । स चाहङ्कारो बुद्धावहमिति । मनसश्च सङ्कल्पात्मकत्वात् संकल्पकमन एव भूयो भूयो भावना । ततो बुद्धिः सात्विकाहङ्कारपराधीना सुखात्मताप्रतिपन्ना सती तथा प्रकाशते । यद्येवम्बाह्य-रूपाः सुखादय इति कथमवगतिः । बाह्यानामपि शब्दादीनां प्रधानपरिणतिरूपत्वादित्यपि न सङ्गतः समाधिः ।

एतदेव कुतो जातं प्रधानपरिणामतः । शब्दाद्याः सम्भवन्त्येते न तद्रूपान्वयेक्षणं ॥५२५॥

यदि शब्दादीनां बुद्धिवत् सुखाद्यन्वयः प्रमाणतोऽवधार्येत तदा कारणान्वयि कार्यमिति तथाभूतकारणजन्यतां जानीयाज्जगन्निवासी जनः । सुखादिरूपप्रधानविपरिणतेरेव तथा निश्चय इति चेत् । इतरेतराश्रयणमेवैतत् । तथा हि ।

प्रधानपरिणामत्वे ज्ञातेऽस्य स्यात् सुखादिता । सुखादिना परिज्ञानाच्छब्दादेस्तत्त्वनिश्चयः॥५२६॥

प्रधानपरिणामित्वे शब्दादीनां सुखाद्यन्वयः(।) सुखाद्यन्वये च निश्चिते प्रधानपरिणति-रूपतेत्येकासिद्धावुभयस्याप्रसिद्धिः ।

अपि च(।) यदि नामाग्निपरिणतिरूपता धूमस्य तथापि किन्तस्योज्ज्वलत्वं प्रसिध्यति । प्रत्यक्षबाधितत्वान्नैवमिति चेत् । समानं शब्दादिषु ।

स्यादेतद(।) यदि शब्दादयो न सुखरूपाः स्युस्तेषां ग्राहिका न बुद्धिः स्याद् भिन्न-जातीययोर्ग्राह्यग्राहकताऽयोगात् । अत्रोच्यते ।

**अग्राह्यग्राहकत्वाच्चेद् भिन्नजातीययोः पुमान् ।**
**अग्राहकः स्यात् सर्वस्य ततो हीयेत भोक्तृता ॥ २७३ ॥**

न हि पुमान् शब्दादिसमानजातीयस्तस्याप्रधानात्मकत्वात् । सुखादीनान्तु विपर्ययात् । भवतु तस्याग्राहकत्वमिति चेत् । न । भोक्तृत्वाभावप्रसङ्गात् । भोक्ता हि पुरुष इष्यते । न चानभवादपरं भोक्तृत्वं ।

**कार्यकारणतानेन प्रत्युक्ताः**

कुतः(।)

**(ऽ) कार्यकारणे ।**

**ग्राह्यग्राहकताभावाद् भावेन्यत्रापि सा भवेत् ॥२७४॥**

बुद्धिशब्दादिसुखे ग्राह्यग्राहकताया भावादेव। यतो नीलादिः स्वाकारार्पणेन बुद्धि-जननाद् ग्राह्यो नान्यथा ग्राह्यता कार्यकारणताभावात्। ततो ग्राह्यतयैव कार्यकारणता सिध्यति। सा च ग्राह्यता कार्यत्वदायिका पुंस्यपि शब्दादीनामिति (।) स चापि कार्यन्तेषां भवेत्। न तथेत्यनेकान्तः।

अथवा कार्यकारणतानेन प्रत्युक्ता असिद्धत्वादित्याह। अकार्यकारणे बुद्धिसुखे ग्राह्यग्राहकताया भावात्। न हि यत्र ग्राह्यग्राहकभावस्तत्र कार्यकारणभावः (।) पुरुषशब्दादि-सुखयोरिव।

अथ बुद्धिसुखादीनां ग्राह्यग्राहकभावादेव कार्यकारणभावः। तत्वादेव र्तार्हि सा कार्य-कारणता। एवं सति पुंस्यपि कार्यताप्रसङ्ग इत्यनिष्टमनैकान्तिकता वा तेनैव।

अथवा न कार्यकारणे बुद्धिसुखे ग्राह्यग्राहकताया अभावात्। भावे वा सान्यत्रापि भवेत्।

**तस्मात् त आन्तरा एव; सम्वेद्यत्वाच्च चेतनाः ।**

कुतः(।)

**सम्वेदनं न यद्रूपन्न हि तत् तस्य वेदनं ॥२७५॥**

बाह्यत्वे प्रमाणाभावादान्तरत्वेनैव सम्वेद्यमानत्वात्।

यद् यथा वेद्यते वस्तु तत् तथैवोपगम्यते। सम्वेदनम्विना नास्ति भावानाम्भावनिर्णयः ॥५२७॥

न हि यद् रूपं सम्वेदनन्न भवति तत् तस्य वेदनं। न च सुखादीनाम्बाह्यरूपानुरूप-म्वेदनम्(।)अन्यथा वेदनमन्यथा पदार्थ इति न युक्तं। न हि नीलस्य वेदनम्पीतस्येति युक्तं। तथा सम्वेदनं स्वविद्रूपतया प्रवर्त्तमाने स्वविद्रूपतामेवावेदयते। न हि परेण प्रतीयमानाः सुखादयो वेद्यंते। रूपादयस्तु चक्षुरादिवत्या वेद्यन्त इत्यसम्वेदनरूपाः। अथवा निराकारेण न गृह्यन्ते सुखादयस्ततः सुखाकारेणैव वेद्यन्त इति सुखाकारता विज्ञानस्य सिद्धा(।)तदन्त-र्गतं सुखम्बोधरूपमेवेति सिद्धं। घटादिवदेव र्तार्हि सुखादयोपि बाह्यास्स्युः। न युक्तमेवं। घटाद्याकारस्य विज्ञानात्मभूतस्यापि परोपधानेनोत्पत्तेर्भावनायास्तत्र व्यापाराप्रतीतेः। सुखाद्याकारस्य भावनाबलतः प्रकृष्यमाणत्वान्न परोपधानाधीनता।

ननु भावनाधीनतायामपि न सम्वेदनरूपता सुखादीनामतत्स्वभावेनानुभवेन वेदनात्। न हि भावनातः प्रकृष्यमाणा अपि सुखादयः सम्वेदनरूपाः। अत्रोच्यते।

**अतत्स्वभावोनुभवो बौद्धाँस्तान् समवैति चेत्[1] ।**

स्वसम्वेदनत्वे हि सति बोधरूपता सुखादीनान्न परेणात्मनाऽतदाकारेण। अतः कार्य-

[1] M. सन्नवैति

तापि न भवति पुंसः। तदाकारतोत्पन्नत्वेन तस्य कार्यता भवेत्(।)न चासावस्ति तस्यातदाकारत्वात्। अतत्स्वभाव एव हि बुद्धयन्तर्गतं सुखादिकमनुभवो वेति समवैति वा। ततः समवायसम्बन्धादेकत्वाभिमानः सम्वेदनस्य बुद्धेश्च।

मुक्त्वाध्यक्षस्मृताकारां सम्वित्तिम्बुद्धिरत्र का ॥२७६॥

केयं बुद्धिः। अध्यवसायः(।) किमिदं सम्वेदनं(।) अनुभवः।

ननु भेदे प्रमाणे सत्येवमुच्यते। अध्यवसायः सम्वेदनमिति च पर्यायमात्रं। विषयाकारताऽसम्वेदनात्मिका बुद्धिः (।)अनाकारसम्वेदनं बोधरूपमिति चेत्। अनाकारं सम्वेदनमिति नात्र प्रमाणं। अप्रत्यक्षा सम्वित्तेन प्रमाणाभाव इति चेत्। अनाकारसम्वेदनमिति नात्र प्रमाणं अप्रत्यक्षा सम्वित् तेन प्रमाणभाव इति चेत्। न (।) अभ्युपगमस्याहेतुत्वात्। न हि प्रत्यक्षाभावेनुमानमपि(।)ततोभ्युपगम एव न युक्तः। अथापरं सम्वेदनम्विना सुखादीनामवेदनप्रसङ्ग इति चेत्। स्वसम्वेदनतया वेदने को विरोधः। तावतैव च समाप्तो व्यवहार इति व्यर्थमपरं।

अथापि स्याद्(।)यदि सम्वेदनमपरन्नेष्यते तदा मोक्षावस्थायां।
सुखदुःखविनिर्मुक्तो कथं मुक्तो भविष्यति। स्वभावस्य परित्यागे धर्मिलोपः प्रसज्यते ॥५२२॥

न हि स्वात्मा हातुं शक्यः। व्यतिरिक्तास्तु सुखादयो विवेकाध्यारोपगोचरीकृताः शब्दा एव हातुं यदि नामाभेदेनेदनीन्तनावस्थायाम्प्रतीयन्ते। यदि नामेदमिष्टन्तथापि प्रमाणाप्रसिद्धन्न सिध्यति। न हीष्टम्मम न सिध्यतीत्यप्रमाणकोर्थो भवति सिद्धविषयः। न च कारणानीष्टिमनुवर्त्तन्ते। न चास्यार्थस्य कारणमस्तीति प्रमाणमत्र किञ्चत्। इदानीमेव भावनाप्तौ लेशस्य हानिदृष्टेः। सम्वेदनान्तरमेवेदानीन्तथाभूतमुपजायते न तु सुखादेस्सम्वेदनाद् भेदावगमः। एवं मुक्तावस्थायामपीति न विरोधः। तस्मात्(।)

ताँस्तानर्थानुपादाय सुखदुःखादिवेदनं।
एकमाविर्भवद् दृष्टन्नदृष्टन्त्वन्यदन्तरा ॥२७७॥

ननु बुद्धिसुखदुखादय इति व्यपदेशभेदादेव भेदोन्यथार्थभेदमन्तरेण कथम्व्यपदेशभेदः। न (।) एकमेवेदं हर्षविषादाद्यनेकाकारविवर्त्तम्पश्यामः। तत्र यथेष्टं संज्ञाः क्रियन्तां। अवस्थाभेदप्रत्यायनार्थमेव भेदव्यपदेशः। बीजाङ्कुरपत्रनाडव्यपदेशवत्।

संसर्गादविभागश्चेदयोगोलकवह्निवत्।
भेदाभेदव्यवस्थैवमुत्सन्ना[1] सर्ववस्तुषु ॥२७८॥

यदि दृष्टान्तोस्तीत्येतावतैव संसृष्टद्वयमेतदिति प्रमाणमन्तरेणैव कल्प्यते। तथा सति सर्वत्रैकाकारप्रतिपत्तिके स्तम्भादौ नैकत्वप्रसिद्धिः(।) एकताप्रसिद्धौ च तत्समुदाय रूपस्यानेकत्वस्यापि न प्रसिद्धिरित्युत्सीदेत् सकलभावव्यवस्था। एकानेकव्यतिरेकेण भावस्याभावात्। तथा हि।

अभिन्नवेदनस्यैक्ये यन्नैवन्तद्धि भेदवत्।
सिध्येदसाधनत्वेस्य न सिद्धम्भेदसाधनं ॥२७९॥

[1] M. ०स्थैवमच्छिन्ना

तस्मादेकासिद्धौ द्वयोरप्यसिद्धि.(।) तस्मादभिन्नवेदनमेव तद्विपर्ययादनेकमिति युक्तं। सां ल्य स्य तु।

**भिन्नाभस्सितदुःखादिरभिन्नो बुद्धिवेदने ।**
**अभिन्नाभे विभिन्ने चेद् भेदाभेदौ किमाश्रयौ ॥ २८० ॥**

इत्यन्तरश्लोकः ।

अथापि स्याद्(।) यथा वेदनाचेतनादीनाञ्चैत्तानां महाभूमिकादीनाञ्च परस्परम्भेद उपलभ्यते। अथवानुपलक्षणेपि भेद इष्यते(।) तथा बुद्धिसम्वेदनयोरपि किन्नेष्यते। अभिन्नवेदनमेकमिति चित्तपरिकरभूतैश्चैत्तैरनेकान्तः। तत्रेदमुच्यते।

**तिरस्कृतानां पटुनाप्येकदा भेददर्शनात् ।**
**प्रवाहे चित्तचैत्तानां[1] सिद्धा भेदव्यवस्थितिः ॥२८१॥**

नैवमभ्युपगम्यते। "चित्तेभ्यश्चैतसा नान्या" इति वचनात्। अभ्युपगम्य परिहारः। यद्यप्येकेन पटुतरवृत्तिना चेतनादितिरस्कृतं न पटुतरोपलब्धिविषयस्तथाप्यन्यदोपलब्धिविषय इति भिन्नमेव वेदनादितश्चेतनादिकम्(।) अन्यदा स्वरूपेणोपलक्षमाणत्वात्। दिनकरनिकर-पराकृतस्वप्रकाशनशक्तिकमिव तारकानिकुरुम्बं न तदा नास्ति। न त्वेवं बुद्धिसम्वेदनयोरे-कदापि विवेकस्य स्पष्टग्रहणं। चैतसानान्तु कदाचित् कस्यचित् प्रकटीभूतस्य ग्रहणं।

ननु विकल्पप्रत्यय एव निमित्तग्रहणादिकमुपलभ्यते नाविकल्पके। न। तत्रापि सन्त्येव चैतसाः। तथा हि (।) कदाचिदनुभवानन्तरं निमित्तविकल्पः कदाचिदिदं करिष्यामी-त्यादि विकल्पः। ततोनुभवानुसारिविकल्पतोवसीयते सन्त्यविकल्पा अपि चैत्ता इति। तत एषां भेदे युक्तिलेशोपि विद्यते नैषोपि बुद्धिसम्वेदनयोरिति परमार्थः ॥०॥

## (४) योगि-प्रत्यक्षम्

**प्रागुक्तं योगिनां ज्ञानन्तेषान्तद् भावनामयं ।**
**विधूतकल्पनाजालं स्पष्टमेवावभासते ॥ २८२ ॥**

चतुरार्यसत्यविषयं योगिनां ज्ञानं प्रागुक्तं। कुतो हेतोस्तद् भवतीत्याह। भावनामयं भावनाहेतुकं भावनाबलेन च स्पष्टाभं(।) स्पष्टाभत्वादेवाविकल्पकं। ततः प्रत्यक्षं।

नन्वर्थस्य सामर्थ्येन समुद्भवाद् वर्त्तमानार्थविषयमाविकल्पकमिति युक्तं। अतीतानाग-तविषयस्याविद्यमानविषयस्य च कथम्भावनामात्रादविकल्पकता। भावनाप्येवं भूतकार्यसमर्थे-वेति दर्शयति अविद्यमानविषयेपि। अथा हि।

**कामशोकभयोन्मादचौरस्वप्नाद्युपप्लुताः ।**
**अभूतानपि पश्यन्ति पुरतोवस्थितानिव ॥ २८३ ॥**

न ह्यभूतविषयं सम्वेदनमर्थसामर्थ्यत उपजायते। न च तत् सविकल्पकं पुरःस्थितत्वेन दर्शनात्। तथा च साक्षात्करणकारतयाऽविकल्पकं प्रत्यक्षं। अथ सविकल्पकमपि सत् स्पष्टाभन्नाविकल्पकमिति चेत्। तन्न।

---

[1] M. वित्तिभेदानां

**न विकल्पानुबद्धस्य स्पष्टार्थप्रतिभासिता ।**
**स्वप्नेपि स्मर्यते स्मार्त्तं न च तत् तादृगर्थवत् ॥ २८४ ॥**

विकल्पस्य परोक्षविषयमेव रूपमिति प्रतिपादितं । तच्च यदि न स्यात् तदेव सवि। कल्पकन्न भवेत् । स्वप्नेपि विकल्पाः परोक्षविषयाकाराः सम्वेद्यन्ते ।) न च ते स्पष्टावभासिनः - विप्लवबलात्तु स्पष्टतायान्न किञ्चित् स्वप्नादिष्वस्पष्टं भवेत् । दृश्यन्ते च स्वप्नेप्यनुभूत-स्मरणाकारा विकल्पास्तस्मान्न विप्लवाद् विकल्पस्यापि स्पष्टता । ततो निर्विकल्प एव परिस्फुटाकारः प्रत्ययः ।

अत्र **वैभाषिका** आहुः । ननु वस्तुनि प्रमाणप्रसिद्धे भावनाबलात् स्पष्टाभतेति युक्तं । भावनयाऽविद्याकालुष्यापगमे स्वेन रूपेणार्थस्य प्रतिभासनात् । अविद्यमाने तु न स्वरूपमिति कस्य प्रतिभासः । योगिनान्त्वतीतानागतविषयज्ञानमतीतानागतस्य विद्यमान-त्वात् । अत्राह ।

**अशुभा पृथिवीकृत्स्नाद्यभूतमपि दृश्यते ।**
**स्पष्टाभान्निर्विकल्पञ्च भावनाबलनिर्मितं ॥ २८५ ॥**

अतत्त्वमनस्कारत्वादशुभादीनान्नाकाशे पृथिव्यादीनां सम्भवः । अथ पृथिव्यादयोपि विद्यन्ते योगिप्रत्यक्षेण दृश्यमानत्वात् । न भावनामात्रत एव योगी भवति । अपि तु श्रुतमयेन ज्ञानेनार्थान् गृहीत्वा युक्तिचिन्तामयेन व्यवस्थाप्य भावयतान्तन्निष्पत्तौ यदवितथ-विषयन्तदेव प्रमाणन्तद्युक्ता योगिनः । तथा च शमथविपश्यनायुगनद्धवाही मार्गो **योग** इति वचनं ।

तत्र योगिनां यद्यप्यमी प्रतिभासन्ते तथापि कार्यार्थमसावतत्त्वरूपैव भावना ततोऽतत्त्वरूपेणैव तेषाममी प्रतिभासन्ते । तेन यदि योगिनामतत्त्वरूपतया प्रतिभासन्ते कथन्तावता सत्त्वं । तस्मादतत्त्वरूपतैव तेषां योगिप्रत्ययप्रतिभासिनामपि । न हि प्रतिभासमात्रात् तत्त्वमपि तु परीक्षातः । न च कल्पनामात्राद्दुद्वयमासादयन्ती भावना तत्त्वप्रतिपत्तिहेतुः प्रमाणबलायाता तु तथेत्येकान्त एषः । तथा हि ।

भावनामात्रभावित्वमतत्त्वमिति गीयते । वस्तुद्वारप्रतीतेस्तु वस्तुनिर्णय इष्यते ॥५२९॥

भावनामात्रतस्तु ।

**तस्माद् भूतमभूतम्वा यद् यदेवाभिभाव्यते ।**
**भावनापरिनिष्पत्तौ तत् स्फुटाकल्पधीफलं ॥ २८६ ॥**

न हि सदेव भाव्यतेन्यस्यापि भावनागोचरत्वात् । ततो यद् यदेवाभिभाव्यते तत् तत् स्फुटाकल्पधीफलमेवाभिभावनं । भावनापरिनिष्पत्तौ । न हि भावनान्यथा भवन्ती दृश्यते ।

**तत्र प्रमाणसम्वादि यत् प्राग् निर्णीतवस्तुवत् ।**
**तद्भावनाजं प्रत्यक्षमिष्टं शेषा उपप्लवाः ॥ २८७ ॥**

यत् खलु भावनाबलभावित्वेप्यविसम्वादसम्भवि प्राग्निर्णीतवस्तु परलोकचतुरार्य-सत्यादिकं तद्विषयमेव प्रत्यक्षं । न तु कामादिविषयं । तद्विस्पष्टाभतया निर्विकल्पकत्वेप्यु-पप्लव एव । एतेन स्वप्नादिज्ञानानाम्विसम्वादिनामप्रत्यक्षतैव ।

**ननु भावनाबलाज्ज्ञानप्रत्यक्षमिति सकलतीर्थ्यसङ्गतसम्वेदनप्रत्यक्षताप्रसङ्गः। नहि तेषां भावना नास्तीति शक्यमेतत्। तथाहि।**

लोकसाधारणो योर्थः कस्यचित् सम्भवेदसौ। इति किन्नियमो न्यायमनतिक्रम्य वर्त्तते ॥५३०॥

**ततश्च तेषामपि तीर्थकरान्तराणां भावनाप्रभवप्रत्यक्षप्रसिद्धा स्वप्रक्रिया प्रपञ्चान्तर्गताः पदार्थराशयो न भवन्तीति कुत एतत्। ततश्च तदुपदेशतोपि वर्त्तितव्यं। अनुमानादिना बाधनान्नेति चेत्। न।**

अतीन्द्रिया न सम्वेद्यान् पश्यन्त्यार्षेण चक्षुषा। ये भावान् वचनन्तेषान्नानुमानेन बाध्यते ॥५३१॥

**अथैतदेव न ज्ञायते तैरिदन्दृष्टमिति (।) यदि पश्यन्ति न बाध्यत एतद् वचनं। यद्येवम्भगवतापि व्यज्ञायि सत्यादिकमिति कुत एतत्। तदसत्।**

ताथागते हि वचसि प्रमासम्वाद ईक्ष्यते। प्रमाणबाधा त्वन्येषामतो द्रष्टा तथागतः ॥५३२॥

**ननु पौरुषेयम्प्रमाणमप्रमाणमेवातीन्द्रियेर्थे। तत्कथन्तेन साधनम्बाधनम्वार्थस्यातीन्द्रियस्य।**

समानविषया यस्माद् बाध्यबाधकतास्थितिः। अतीन्द्रिये च संसारि प्रमाणन्न प्रवर्त्तते ॥५३३॥

**योगिज्ञानेनापि तेषाम्बाधनमेव। तथा हि।**

ताथागतम्वचस्तेषाम्विरोधेन व्यवस्थिते। तद्वचोहेतुविज्ञानबाधितत्वं प्रकाशयेत् ॥५३४॥

**तदेतद् विपर्ययेपि तुल्यं। तदसत् (।) यतः।**

अतीन्द्रियार्थं कथयेत् केवल यदि वेदकः। तद्वचस्तः प्रवर्त्तेत न कश्चिदपि पण्डितः ॥५३५॥
अतीन्द्रियार्थं हि वचः सर्वेषामेव विद्यते। परस्परविरुद्धञ्च ततस्तत्राप्रवर्त्तनं ॥५३६॥

**तस्मात् परं प्रतिपादयता शक्यपरिच्छेद एवेतरैः प्रतिपादयितव्याः। असम्भवान्नैवमिति चेत्। योगिज्ञानमपि तत्र कुतः सम्भवतीति चिन्त्यमेतत्।**

वेदः स्वभावसिद्धो वा योगी तत्प्रतिपादकः। इति चेन्निर्णयो भावे वस्तुन्यत्र प्रमा कुतः ॥५३७॥
अथ शब्दपरिच्छेदो नोपादेयस्तदर्थिनां। इत्ययुक्तन्न दुःखस्य विच्छित्तेरप्रधानता ॥५३८॥

**न खलु सकलदुःखव्यपगमो नोपादेयः। तथा हि।**

आत्मात्मीयग्रहावेशाज्जन्तूनान्दुःखसङ्गतिः। तस्य व्यपगमे सर्व्वदुःखानां प्रलयोदयः ॥५३९॥
सुखानामपि चेदेवन्दुःखाभावः परं सुखं। यदि सम्वेदयन्नास्ते सदा दुःखविपर्ययं ॥५४०॥
ततः परमुपादेयङ किमन्यद् युक्तिसङ्गतं। प्रदीपस्येव निर्वाणमिति चेन्नाप्रमाणकं ॥५४१॥

**इदं। यतः।**

दाहच्छेदादिना ज्ञानं विच्छेत्तु हि न शक्यते। ततः प्रबन्धाविच्छेदादास्त एव निराकुलं ॥५४२॥
तामवस्थाङ्गतस्यास्य वैमुख्य स्याद् विवेकतः। उद्वेजनीये वैमुख्य यदि कस्मिन् विरोधिता ॥५४३॥
शमतादर्शिनस्तस्य वैमुख्यमपि किङ्कृत। नास्य पीडाकृतः केचित् समाधिबलभाविनः ॥५४४॥
क्षुद्दुःखादिसमाधानात् सर्व्वमेव प्रतीयते। शस्त्रादिपीडापि ततः सर्व्वैवास्य प्रतीयते ॥५४५॥
भावनाबलतः सर्व्वं शौर्यधैर्यादि सम्भवि। धृतिम्विना हि नाहारः कस्यचित् परिपुष्टये ॥५४६॥

धृतेर्योगात् तु यः कश्चिदाहारपरिपुष्टये। विनापि चैवमारादस्याथस्याप्तिसम्भवः ॥५४७॥
जन्मान्तरादिसम्वित्तिरभ्यासादेव जायते। ततः कर्म्मफलज्ञानं ततः सर्व्वस्य वेदनं ॥५४८॥
कार्यकारणभावस्य विशेषेण विनिश्चये। अतीतानागतज्ञानमस्य भावि परिस्फुटं ॥५४९॥
भावनावलतो ज्ञानम्बाह्यानामपि भावि चेत्। तदेतदिष्यतेस्माभिः सर्व्वाकारन्तु तायिनां ॥५५०॥
स्थिरमध्याक्षणम्भावनैरात्म्यादिप्रवेदनं। रागादिव्याकुलत्वान्न तीर्थ्यानाम्वेदनन्तथा ॥५५१॥
एवम्भूतार्थवचसस्तत्कर्त्तुर्ज्ञानवद् गतिः। परिशुद्धम्वचो नास्ति परिशुद्धविदम्विना ॥५५२॥
स्वतर्कानुस्मृतेरेष प्रपञ्चो क्वचसां यदि। भावनाज्ञानमप्यस्ति सदर्थेनादरो न हि ॥५५३॥
ततोस्य वीतरागत्वे सर्वार्थज्ञानसम्भवः। समाहितस्य सकलं चकास्तीति विनिश्चितं ॥५५४॥
सर्वेषाम्वीतरागाणामेतत् कस्मान्न विद्यते। रागादिक्षयमात्रे हि तैर्यत्नस्य प्रवर्त्तनात् ॥५५५॥
तन्निवृत्तौ ततस्तेषाङ्कृतार्थातिमाभिमानिनां। यत्नो नैवोत्तरस्तावद् विश्रान्तिसुखलिप्सया ॥५५६॥
पुनः कालान्तरे तेषां सर्व्वज्ञगुणरागिणां। अल्पयत्नेन सर्वज्ञत्वस्य सिद्धिरवारिता ॥५५७॥
प्रदीपस्येव निर्वाणमिति चेन् तन्न सम्भवि। निष्क्लेशे ह्यात्मनि कुतस्तस्य वैराग्यसम्भवः ॥५५८॥
प्रेक्षापूर्वकृतस्तस्य तदाधिक्येन वाञ्छितं। यदि तस्यापि किं हानिमसौ वाञ्छायनादृतः ॥५५९॥
न वीतरागस्य सुखं योषिदालिङ्गनादिजं। वीतद्वेषस्य तु कुतः शत्रुसेना विमर्दजं ॥५६०॥
वीतमोहस्य न सुखमात्मीयाभिनिवेशजं। ततः किन्तादृशा तेन कृत्यम्मोक्षेण जन्मिनां ॥५६१॥
तदेतदसदवेत्थं मद्यपानादि चिन्त्यतां। मद्यपानादिसुखं द्विजानान्नास्ति सन्ततं ॥५६२॥
पुरीषभक्षणसुखन्नागरक्रोडजन्मिनां। आममानुषमांसाद्धि सुखन्नैवास्त्यरक्षसां ॥५६३॥
स्वामिप्रमादादिसुखं किमभृत्यस्य विद्यते। शिरसस्ताडनसुखन्नादासस्य विकाशवत् ॥५६४॥
इति सर्वमिदं प्रार्थ्यमायातमधिमुक्तिषु। नापारसीके मात्रादिश्रोणीसङ्गम इत्यपि ॥५६५॥
अप्राप्तस्य चावीचि तद्वियोगसुखं क्वचित्। ततो नरकपातादि सर्वमिप्येत जन्मिभिः ॥५६६॥

**अथ विशिष्टमिष्यते सुखन्तथा सति तदेवास्मदीप्सितमायातं। अथ सर्ववेदनस्य कथं सम्भवः कथम्वा तत्र सम्वादः। कथम्वा सकलवेदने सकलरागादिपरचित्तसाक्षात्करणेन रागादितादयो दोषा इत्याह।**

अनेकोपायसङ्घातात् कालवैपुल्ययोगतः। अभ्यासात् सर्ववित्त्वस्य प्राप्तिरस्येति युक्तिमत् ॥५६७॥

**असङ्ख्येयकल्पतयाभ्यासो हि किन्तदस्ति यन्न प्रापयति। सम्वादस्तु पुनरस्माकं सर्ववेदनम्प्रति नास्तीतीष्यत एवैतत्। तथा चोक्तं।**

"असर्ववित् सर्वविदं कः कथं त्वामवभोत्स्यते। स्वयम्विदितमाहात्म्यविस्तराय नमोस्तुते ॥५६८॥

**नासर्वज्ञः सर्वज्ञं जानीते। तथा(।) "मा भिक्षवः पुद्गलः पुद्गलं प्रविणोतु। अहम्वा प्रविणुयां यो वा स्यान्यद्विध" इति।**

**सर्ववेदने तु सर्वात्मना परसन्तानरागादिवेदने रागादिमत्त्वमिति न सत्। तथाहि।**

परसन्तानसम्वित्तौ वीतरागित्ववेदने। तस्य रागित्वमप्यस्तीत्येतदत्यन्तदुर्घटं ॥५६९॥

**यदैवासौ रागी पररागवेदने तथा परवीतरागवेदने वीतरागोपि। उभयमपि तदैवेति चेत्। न।**

एकेनाप्यनुभूतत्वाभावे रागी कथम्मतः। तटस्थस्य हि सम्वित्तौ न रागित्वादिसम्भवः ॥५७०॥

**तथा हि न घटवेदने घटी भवति । एवं रागादयोपि परसन्तानान्तर्गतास्तटस्थतयावगम्यमाना न रागित्वन्निर्वर्त्तयन्ति ।**

**अथ सर्वात्मना वेदने यथा स्वयम्वेत्त्यसौ तथा योग्यपीति न रागित्वहानिः । तदयुक्तं ।**

तद्रूपेणैव वेद्यत्वे स्वयं रागित्वसम्भवे । कथमप्यव्यवस्थाप्यं पररागादिवेदनं ।।५७१।।

**न हि तदात्माननुप्रवेशे पररागादिवेदनं । स एवात्मीयो राग इति । अयमप्यपरो दोष इति चेत् । तथा हि ।**

तटस्थत्वेन वेद्यत्वे तत्त्वेनावेदनं भवेत् । तदात्मना तु वेद्यत्वे रागितैव प्रसज्यते ।।५७२।।

**तदसत्(।) तथाहि ।**

रागादिना परस्थेन तस्य वाक्कायविक्रिया । परस्था न भवत्येव तस्य रागादिवासना ।।५७३।।

**वासनासामर्थ्यायातो हि रागो रागितामावहति न परवासनाबलायातः सिद्धोपस्था-(यि)तया सम्वेद्यमानः ।**

**ननु स्वरूपसम्वेदने रोमाञ्चादिकायविकारोपि कस्मादस्य न भवति वचनविकारश्च । न सवेतत् ।**

कायवाचोर्विकारोयं वासनाबलसम्भवी । प्रहीणवासनस्यास्य द्वयोरपि न सम्भवः ।।५७४।।

**ननु भावनाबलादेव परचित्तवेदनं भावना संस्कारश्च वासना । तत्र भावनासंस्कारसम्भवे कथन्न वासना नहि भावनावासनायाः कश्चिद्विशेषः । न युक्तमेतत् । तथा हि ।**

गमकस्य विशेषस्य तात्पर्येणोपलक्षणे । विशेषप्रतिभासोस्ति परचित्तस्य वेदने ।।५७५।।

**लिङ्गविशेषोपलक्षणे हि तत्र भावनाव्यापारः । न च तत्रार्थस्य गम्यस्य भावना । सत्याम्वा नात्मसम्बन्धितया । ततस्तत्र वासनाऽभावात् प्रतिभासेप्यरागिता ।**

**अनेनाशुचिरसादिवेदनेपि दोषः प्रत्युक्तः ।**

अपवित्रत्वयोगः स्यादिन्द्रियेणास्य वेदने । कर्मजेन न चान्येन भावनाबलभाविना ।।५७६।।

**भावनाबलाद् रसनमुत्पाद्य यदि वेदनमदोष एव तदा(।) नहि स्वप्नेऽगम्यागमने दोषः । असत्यता तस्य तेनादोष इति चेत् । सम्वादे सति कथमसत्यता ।**

यदा मातुरपि स्वप्नस्तथाभूतस्तदा भवेत् । तदागम्यागतौ दोषो भवतः किन्न सम्भवी ।।५७७।।

**तस्मात् परमतमसत् ।**

क्रमेण वेदनेऽनादिवस्तुनो वेदनं कथम्(।) इति चेन्नाक्रमेणैव सर्वार्थानां प्रवेदनात् ।।५७८।।

यथा सकलशास्त्रार्थः स्वभ्यस्तः प्रतिभासते । मनस्येकक्षणेनैव तथानन्तादिवेदनं ।।५७९।।

**यथा हि शास्त्रार्थः स्वभ्यासत एकक्षण एव मनसि प्रतिभाति(।) तथानाद्यनन्तवेदनमपि । परिम.णवत्त्वाच्छास्त्रस्येति चेत् । न परिमाणवदिति प्रतिभासनमपि त्वभ्यासात् । तत् सकलं शास्त्राभिधेयं प्रतिभासितं तेन स्मरणे प्रतिभातीति चेत् । न(।) अपूर्वस्यापि शास्त्रार्थस्य भासनात् ।**

**ननु शास्त्रार्थः परस्परं सम्बद्धस्तत्र केनचित् प्रत्यासत्तिनिमित्तेनापरमपि प्रतिभाति नत्वेवमनाद्यनन्तानामिति कथमपूर्वस्य प्रतिभास इति सर्वं समानं । तथा हि ।**

कार्यकारणसम्बन्धविनाभूता न विद्यते । प्रत्यासत्तिः पदार्थानाम्व्यवहारेप्यसौ न किं ॥५८०॥

**कार्यकारणभावो हि पदार्थानां शास्त्रे प्रत्यासत्तिस्ततो पूर्वस्य प्रतिभासनं । एवं च व्यवहारेपि तुल्यः । तथाहि । अयमस्य विकार एवंभूतेनास्य कारणेन भवितव्यं । तच्च कारणमियत्कार्याणां पारम्पर्येण जनकं ।**

ईदृशान्यस्य पूर्वाणि येनास्य सहकारिणः । न सन्ति सन्ति वेत्येतत् परचित्तविदीक्षते ॥५८१॥
पूर्वजन्मादिवित्तौ च पारंपर्यात् परस्परं । सम्बद्धं सर्वथा वेत्ति ततः कल्पान्तराण्यपि ॥५८२॥
कल्पात् कल्पान्तरोत्पत्तौ कार्यकारणता विदा । वेत्ति सर्वं जगत्तत्वं तस्य चावान्तरस्थितिं ॥५८३॥
इति सकलपदार्थवेदनं सकलनयानवधूय दर्शितं ।

इह नयमनुसृत्य यत्परन्तदपि सुखेन परैः परीयतां[1] ॥५८४॥

## (७) प्रत्यक्षाभास-चिन्ता

**[2]यदि भावनाबलतः स्पष्टाकारं प्रमाणङ् कल्पनाज्ञानन्न तर्हि प्रमाणं स्पष्टाकारस्याभावात् । अथार्थेऽस्पष्टाकारतेष्यतेन्यथा न प्रमाणं । स्वरूपेपि तर्हीष्यतां । न(।) स्वरूपन्तदेव स्पष्टाकारमर्थस्तु न तथा । ततः स्वरूपे तन्निर्विकल्पकमर्थे तत्सविकल्पकमिति स्मरणम्(।) अर्थस्मरणं स्वरूपे प्रत्यक्षं । कुत एतत् । स्वरूपे तदभ्रान्तमर्थे भ्रान्तमिति । स्वरूपस्यानन्यसम्वेद्यत्वात् । पररूपस्य तु वेदनान्तरेण । ततस्तेन तस्यान्यथा वेदनाद् बाधा ततो भ्रान्तिः । नहि स्वरूपे स्मरणस्य संभवस्तदैव तस्योत्पत्तेर्वेदनाच्च । यदि च स्वरूपमपि पूर्वमासीदिदानीं नास्तीति नेदानीं स्मरणम्भवेत् । अथ तेनैवेदानीं स्मरणं तदिदमायातं मृतेनापि कुक्कुटेन वासितव्यं । अत एवाह ।**

कल्पनापि स्वसम्वित्ताविष्टा नार्थे विकल्पनात् ।

स्वरूपस्याविकल्पत्वात् परोक्षत्वाप्रसिद्धितः ॥५८५॥

तेनैव तस्य ग्रहणे साक्षात्करणसंभवात् ।

**अत एव सम्वेदनं प्रत्यक्षमुक्तं । यतः ।**

**शब्दार्थग्राहि यद् यत्र तज्ज्ञानन्तत्र कल्पना ।**
**स्वरूपञ्च न शब्दार्थस्तत्राध्यक्षमतोखिलं ॥२८८॥**

**सविकल्पस्येतरस्य च स्वरूपन्न शब्दार्थो न सामान्यन्न परमार्थविषयः । तथा सति शब्दायोजनाऽभावात् सामान्यसंसर्गाभावाच्चाविकल्पकं । शब्दार्थग्राहि च ज्ञानं कल्पना । तस्मादव्यक्तं । स्पष्टाभता कथन्न भवति । स्पष्टमेव तत्किमुच्येत नेति यतः ।**

तद्रूपस्य परित्यागादस्पष्टमिति गीयते । स्वरूपस्य परित्यागः कथमित्यवगम्यतां ॥५८६॥

**नहि स्वरूपन्त्यक्तुं शक्यं(।) तत्परित्यागे सम्वेदनन्नास्तीत्युक्तं । तथा च न स्वरूपसम्वेदनं न परसम्वेदनमिति सर्वाभाव एव । अथार्थापत्त्या वेदनमिति न स्वरूपवेदनं । न(।) अर्थापत्तेरपि**

[1] T. इहभोटभाषान्तरे प्रथमवेष्ठनं ते (पत्राणि ३०८)समाप्तम्
[2] T. इतः द्वितीयवेष्टन( थे )प्रारम्भः

स्वरूपं सम्वेदनेनैव गन्तव्यं। अथात्राप्यर्थापत्तिः सापि तथेत्यनवस्था। अर्थसम्वेदने सिद्धे यद्यर्थापत्तिः किमर्थसंवेदनेऽर्थापत्त्या। अर्थे सिद्धे नार्थसंवेदने सिद्ध इति चेत्। केयमर्थस्य सिद्धिः (।) यद्युत्पत्तिः सर्वार्थवेदनप्रसङ्गः। अथार्थज्ञानन्तदायमर्थः। अर्थज्ञानादर्थज्ञानवेदनमिति साध्वी वाचोयुक्तिः। अथार्थाज्ज्ञापनादर्थज्ञानवेदनं। किमिदमर्थस्य ज्ञानत्वं। ज्ञाने प्रतिभासनञ्चेत्। अज्ञाते ज्ञाने ज्ञानप्रतिभासनङ्कथं ज्ञायते। प्रतिभासमानोर्थः प्रत्यक्ष एवेति चेत्। प्रत्यक्षप्रसिद्धिश्चेत् तथैवास्तु किमर्थान्तरकल्पनया। इदमेव प्रत्यक्षमन्यथा घटेत यदि प्रत्यक्षं ज्ञानन्न स्यात्। चक्षुर्व्यापारे सत्येतद् भवत्यन्यथा नेति किं ज्ञानेन। श्रोत्रादिवृत्तिः प्रत्यक्षमिति चेत्। केयं श्रोत्रादिवृत्तिः। ज्ञानमिति चेत्। तज्ज्ञानं परोक्षं कथं ज्ञातं। श्रोत्रादिवृत्तिरेव ज्ञानमिति चेत्। श्रोतादिवृत्तिः प्रत्यक्षा तेन ज्ञायते ज्ञानं तु कुतः। अन्यथा किं श्रोत्रादिव्यक्त्येति चेत्। किं भवतः प्रयोजनमपेक्ष्य भावा भवन्ति।

कारणादेव भावानां भावो नैषां प्रयोजनात्। प्रयोजनम्विना भावो न भवेदन्यथा तव ॥५८७॥

यदि नामाश्रोत्रसमन्मखीभूतं ज्ञानस्य किमायातं। यदि ज्ञानन्नोदपत्स्यत परोक्ष एवार्थः स्यात्। यदि ज्ञानमुत्पन्नमर्थस्य किमायातन्तथापि परोक्ष एव स्यात्। नहि ज्ञानस्योत्पत्तिरर्थस्य प्रत्यक्षता। परोक्षत्वप्रसङ्गात्। तस्याः परोक्षत्वात्। दृश्यते चेत्। यथा तर्हि दृश्यते तथैवास्तु। तथापि कथमिति चेत्। तदाकारताज्ञानस्यार्थस्य ज्ञातत्वन्नाम। सा च स्वसम्वेदनगम्या न तदाकारज्ञानान्तरगम्या येनानवस्था पतेत्। तस्मात् स्वसम्वेदनमेव ज्ञानस्वरूपसाधनमिति युक्तं।

यदि तर्हि भावनाबलादुपजातवैशद्यं प्रत्यक्षं स्वप्नज्ञानमपि प्रत्यक्षप्राप्तमविसम्वादकत्वमपि तत्रास्त्येव। तत्रापि गमनप्राप्तयः। नैतदस्ति। यतः।

भ्रान्तिसम्वृतिसंज्ञानमनुमानानुमानिकं। स्मार्त्ताभिलापिकञ्चेति प्रत्यक्षाभं सतैमिरं ॥५८८॥

द्विविधः प्रत्यक्षाभो विकल्पो विप्लवश्च। पुनश्चतुर्विधः। तदाह।

त्रिविधङ्कल्पनाज्ञानमाश्रयोपप्लवोद्भवं।
अविकल्पमेकञ्च प्रत्यक्षाभञ्चतुर्विधं ॥२८९॥

स एव द्विविधो विकल्पस्य त्रिधा भेदाच्चतुर्विधः। कल्पनापोढं प्रत्यक्षन्ततो विकल्पस्त्रिविधोपि प्रत्यक्षाभासः। तत्र भ्रान्तिज्ञानं मृगतृष्णादिषु तोयादिकल्पनाप्रवृत्तत्वात प्रत्यक्षाभासं। सम्वृतिसत्स्वर्थान्तराध्यारोपात् तद्रूपकल्पनाप्रवृत्तत्वात्। अनुमानतत्फलादिज्ञानं पूर्वानुभूतकल्पनयेति न प्रत्यक्षं। प्रभास्वरस्पन्दमानमरीचिनिचयप्रतिभासं प्रत्यक्षमेव। तोयादिकल्पना तु प्रत्यक्षाभासः। तोयेऽसाक्षात्करणाकारत्वात्। सम्वृतिसत्स्वपि रूपादिग्रहणमात्रमेव प्रत्यक्षं। अवयविनि तु तत्समवायकारणत्वेनाभिमतेन साक्षात्करणमर्थान्तरस्य स्पर्शादेः पूर्वदृष्टस्याध्यारोपात्। द्रव्यस्य वा पूर्वपूर्वप्रत्ययेन कल्पितस्य। नावयवी रूपादिव्यतिरेकेण क्वचित् प्रत्यक्षे प्रतिभासित इति। अनुमानज्ञानं लिङ्गज्ञानं। तत्फलं लिङ्गज्ञानन्न पूर्वानुभूतिमन्तरेण। एतच्चानुमानज्ञानं क्वचिदप्रत्यक्षं। क्वचित्तु प्रत्यक्षमेव अकस्माद् धूमादग्निप्रतिपत्तौ। नहि पूर्वानुभूतकल्पनास्ति। अविकल्प्य कथं लिङ्गप्रतिपत्तिरिति चेत्। तथैव दृष्टेः। न खलु दृष्टमन्यथा भवितुं युक्तं।

कस्मात् पुनः कल्पनाप्रभेदनिर्देशः। उदाहरणप्रपञ्चार्थत्वादिति चेत्। न (।) लक्षणस्याभेदात्। प्रपञ्चमात्रनिर्देशे त्वतिप्रसङ्गः। नैतदस्ति। अन्यदस्ति प्रयोजनमिति। तथाहि।

अनक्षजत्वसिद्ध्यर्थमुक्ते द्वे भ्रान्तिदर्शनात्।
सिद्धानुमादिवचनं साधनायैव पूर्वयोः ॥२९०॥

अक्षजमेव तदिति परेषाम्भ्रान्तिर्मृगतृष्णिकाजलज्ञाने। तथाहि। "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यदेश्यमव्यभिचारि प्रत्यक्ष"[1]मित्यत्र लक्षणे मरीचिजलज्ञानव्यवच्छेदायाव्यभिचारिग्रहणं कृतं। यदि पुनरनिन्द्रियजमेव तत् स्यात् प्रथमपदेनैव व्यावर्त्तनात् किमेतदर्थेनाव्यभिचारिग्रहणेन। द्विचन्द्रादिज्ञानस्यानर्थसंभतस्य निवृत्त्यर्थमिति चेत्। न(।) अर्थसन्निकर्षग्रहणेनैव तस्य व्यावर्त्तनात। इन्द्रियग्रहणेनानिन्द्रियजस्य व्यावर्त्तनं। सम्वृतिसद्विषयस्य त्विन्द्रियजत्वाभिमानः परेषां सविवाद एव। अनुमानादिवचनन्तर्हि व्यर्थं। नहि तेनानिद्रयजत्वं साध्यते। सिद्धत्वादनुमानादिरनिन्द्रियजत्वस्य(।) अत्रोच्यते।

सिद्धस्याप्यनुमानादेस्साधनत्वादुपात्तता। दृष्टान्तेन हि सिद्धेन सर्वत्रैव प्रयोजनं ॥५८९॥

न ह्यसिद्धमसिद्धेन साध्यते। किमत्र भ्रान्तिकारणं येन साध्यता पूर्वयोरिति चेत्। आह।

सङ्केतसंश्रयान्यार्थसमारोपविकल्पने।
प्रत्यक्षासन्निवृत्तित्वात्[2] कदाचिद् भ्रान्तिकारणं ॥२९१॥

सङ्केतसंश्रयोवयवी संकेतमात्रस्य तद्व्यवस्थाहेतुत्वात्। अन्यार्थो जलं(।) समारोपोधिकाध्यारोपः। विकल्पनं स्मरणं जलं हि पूर्वदृष्टत्वात् स्मर्यते(।) न तस्यारोप एव केवलो दर्शनस्य समतया[3]भावात्। अथवा विपर्यय आरोपो जलस्य विकल्पनमवयविनः। उभयत्र वोभयमिति(।) ते च समारोपविकल्पने प्रत्यक्षस्येन्द्रियजस्यासन्निवृत्ती[4] कदाचिदभवत इतीदमसन्नवृत्तित्वम्वा तत्र भ्रान्तिकारणन्त एव वा तेन भ्रान्तिकारणमिति। अस्मिन् भ्रान्तिकारणे सति दृष्टान्तद्वारेणानुमानं।

यथैवेयं परोक्षार्थकल्पना स्मरणादिका[5]।
समयापेक्षिणी नार्थम्प्रत्यक्षम्प्रत्यवस्यति[6] ॥२९२॥

तथानुभूतस्मरणमन्तरेण घटादिषु(।)
न प्रत्ययोनुयंस्तच्च प्रत्यक्षात् परिहीयते ॥२९३॥

अनुमादिकल्पना हि सम्बन्धग्रहणापेक्षिणी सम्बन्धग्रहणमेव च समयः। ततस्सम्बन्धात् परोक्षार्थप्रतिपत्तिरिति नाध्यक्षतः। साक्षात्करणेन हि सा भवेत्। एवङ घटादिष्वप्येकेन केनचिदिन्द्रियेण रूपादिकम्प्रतिपन्नन्ततः परिशेषे रसादौ स्मरणं पूर्वानुसारतः। रसादावेव स्मरणं नावयविनीति चेत्। न(।) रसादिव्यतिरेकेण तस्यानुपलक्षणात्। यदेतच्छुक्लन्तदेव कर्कशमित्याद्येकताप्रतिपत्तिविषयोवयवीति चेत्। तथाहि न तावद्वर्णस्य स्पर्शस्य चैकता।

---

[1] T. न्यायसूत्रं १।१ [2] M. न प्रत्यक्षानुवृत्ति० [3] तत्रैव—"सत्यतया" पाठान्तरं।
[4] T. प्रत्यक्षस्येन्द्रियजस्य निवृत्तिर्निवृत्तिः कदाचित् सा चेति
[5] M. स्मरणात्मिका [6] M. ०क्षमध्यवस्यति

तत एकत्वप्रतीतिरेव न स्याद् यद्यवयवी न भवेत् । यद्यप्यवयवी तथापि कथम्वर्णस्पर्शादीनां सामानाधिकरण्यं । नहि तयोरेकता । एकाधिकरणत्वादेकतेति चेत् । उपचार एषः । न चात्रोपचारप्रतिपत्तिः(।) प्रतिपत्तौ चोपचारस्य नावयविसिद्धिस्स्यात् । अन्यथाप्युपचारेण सामान्य धिकरण्यसम्भवात् ।

समानदेशताभावादेकार्थविनियोगतः । तद्विकारविकारित्वादेकता व्यपदिश्यते ॥५९०॥

य एव देशः स्पर्शस्य स एव रूपस्य प्रतीयते तेनैकताध्यवसायः । यदेवोदकादिधारणं स्पर्शस्य कार्यन्तत्रैव रूपस्यापि व्यापारः । स्पृश्ये मसृणतामापाद्यमाने रूपस्यापि चैकचिक्यादिता । तत एकमेवेदमिति व्यवहाराध्यवसायाः । यदि पुनरन्यदेवाधिकरणं । रूपादिभ्यस्तेषान्तस्य विवेकेन प्रतिपत्या भाव्यम् (।) अप्रतीयमानन्तूपलब्धिलक्षणप्राप्तमसदिति । अथावयविनमन्तरेण परस्परस्य कस्मान्न विघटनं ।

सत्यप्यवयविन्येतत् कस्मान्न विघटनं त्रये । समवायसम्बन्धबलात् तस्याप्यस्तु वियोगिता ॥५९१॥
अयमेव स्वभावश्चेदादावेवेदमुच्यते । रूपादीनां स्वभावोयं स्वहेतोरुपपत्तिभाक् ॥५९२॥
समवायस्य नित्यस्य कुत एतद्विचिन्त्यतां ।

यद्यप्यवयवी परस्तथापि त्रितयं जातं कस्मात् त्रयस्यापि परस्परस्य न विघटनं । अथ समवायो हेतुरविघटनेऽसावपि कस्मान्न विघटते । तस्य स एव स्वभाव इत्यपि नोत्तरं । रूपादीनामेव स स्वभावोस्तु किमर्थान्तरकल्पनया । रूपादीनाञ्च स्वहेतोः स्वभाव इति युक्तिमदेतत् । समवायस्य त्वहेतुकस्य कुतः स्वभावः । समवायाश्रयस्य स्वहेतोस्स स्वभावो येन समवाय एवमिति चेत् । तत्किमनया परम्परया । तैः स्वहेतोस्तथाभूतैर्भाव्यं येन समवायस्तेषामविघटनं कुर्यात् । तद्धेतुरेव तदविघटने हेतुरिति किमत्र न्यूनमास्ते यदर्थं परम्परेष्यते । एवमेतद् दृश्यत इति चेत् । भवतु यदि दृश्यते दृश्यमानस्यान्यथा विकल्पयितुमशक्यत्वात् । रूपादय एव तु दृश्यन्ते परस्परमवियुक्ता न तु तदधिकमित्येषामेव स स्वभावः कल्प्यतां । तस्मादवयव्यध्यारोपो न प्रत्यक्षः ।

तदस्य न्यायप्रपञ्चस्य प्रदर्शनार्थन्दष्टान्तदार्ष्टान्तिकोपन्यासः । सतैमिरिकग्रहणं किमर्थं । तैमिरमपि सविकल्पकमिति कश्चित् (।) तद्व्यावर्त्तनार्थन्तद्वचनमन्यथा स्मार्त्तादिग्रहणेनास्यापि ग्रहणात् पृथगुपादानमनर्थकं । यद्यविकल्पकङ कल्पनापोढत्वात् प्रत्यक्षम्प्राप्तं । न सर्वङ कल्पनापोढं प्रत्यक्षमपि त्वभ्रान्तत्वे सति । "अभ्रान्तङ कल्पनापोढं प्रत्यक्षं" न सर्वं । यतः (।) प्रकल्प्यापवादविषयं तदपवर्जिते तूत्सर्गः प्रवर्त्तते । कोपवाद इति चेत् ।

**अपवादश्चतुर्थोत्र तेनोक्तमुपघातजं ।**
**केवलन्तत्र तिमिरमुपघातोपलक्षणं ॥२९४॥**

त्रिविधाद् विकल्पाच्चतुर्थन्तैमिरग्रहणमपवादः । कल्पनापोढमिति सामान्येन प्रत्यक्षविधानमतैमिरमिति विशेषे प्रत्यक्षाभासताविधानं । विशेषविहितञ्च सामान्यविहितस्य बाधकं । किमत्र प्रमाणं । सामान्यप्रतिपत्तिर्विशेषप्रतिपत्त्या बाध्यते । यतः ।

प्रागदर्शनमात्रेणानुमानं शेषवद् यदा । कल्पनापोढतामात्राद् विपक्षस्य प्रवर्त्तते ॥५९३॥
तस्यातीव प्रसक्तस्य विशेषे बाधकं स्फुटं । ततस्तदपरत्रैव तस्य पूर्वस्य वृत्तिता ॥५९४॥

नहि सामान्यतो दृष्टमदर्शनमात्रेण विपक्षस्यानुमानमपरेण प्रत्यक्षेणानुमानेन वा न बाध्यते । तेन प्रत्यक्षसिद्धः । सामान्यविशेषयोर्विशेषे बाध्यबाधकभावः । तदर्थसूचकयोरपि वचसोः स एव बाध्यबाधकभावः । आचार्यस्तर्हि सामान्यतो दृष्टानुमानाल्लक्षणं कस्मादाह । न आचार्येण विशेषतो दृष्टमेवानुमानमभिप्रेतं तस्य तु योर्थः स एकेन वचसा निर्देष्टुमशक्य इत्यपवादसहितं नोक्तवान् । किमर्थन्तर्हि कल्पनापोढग्रहणसहितमेवाभ्रान्तग्रहणन्न कृतं किङ्कजस्नानाङ्गीकरणेन । सतैमिरग्रहणेन चापवादेनाभ्रान्तग्रहणार्थो लब्धव्योन्यथा-वेति को विशेषः । अनन्तरमेव कल्पनापोढग्रहणस्य लभ्यतामिति चेत् । न (।) विशेषाभावात् ।

"अर्थतो ह्यसमानानामानन्तर्यमकारणं ॥"

बाध्यबाधकभावश्च प्रमाणविषयः सूचितो यथा स्यादित्येवङ्कारणं । न ह्यवश्यम्बाधकमनन्तरमेव भवति ।

अभ्रान्तग्रहणमेव कस्मान्न क्रियत इति चेत् । सत्यमेतत् । साक्षात्कारि हि प्रत्यक्षन्तच्चाभ्रान्तग्रहणेन शक्यन्निदर्शयितुं (।) न ह्यसाक्षात्करणाकारमभ्रान्तं सविकल्पकस्य भ्रान्तत्वात् । परे तु सविकल्पमपि साक्षात्करणाकारमभ्रान्तमिच्छति (।) तदनुरोधेन द्वयमेतदुच्यते । तथा चाह । "विशेषणलक्षणे परमतापेक्ष सव त्वविकल्पका एवे"ति । अथवा (।)

प्रतिपत्त्रपेक्षः सकलो बाध्यबाधकतानयः । अदृष्टबाधकः पूर्वं सामान्येनावगच्छति ॥५९५॥

नाचार्याभिप्रायञ्जानाति विशेषोत्राभिमत इति । बाधकदर्शनादवगच्छत्यसावपि पश्चाद्विशेषं । अपौरुषेये तु वचसि प्रमाणमूलत्वाभावान्न बाध्यबाधकभावः । पौरुषेये तु पूर्वबुद्धेर्भ्रान्तता ज्ञाप्यते प्रमाणमूलया परया बुद्ध्या । न तु वेदाद् भ्रान्तबुद्ध्युदयः । तथा वेदप्रमाणता सर्वस्य तथात्वप्रसङ्गात् । अबाधने प्रमाणमेवेति चेत् । न (।) पश्चादपि बाधकसम्भवात् । पर्यालोचयतोन्य एवार्थो भवतीति प्रमाणेप्येवमिति चेत् । न (।) प्रमाणस्य स्थिरत्वात् । तथा च प्रमाणविरुद्ध आगमार्थस्त्यज्यते वेदवादिभिः । अन्यथार्थवादव्याख्यानमनिबन्धनं स्यात् । तस्मात् पौरुषेय एव वचसि बाध्यबाधकभावः । तैमिरमित्येव बाधकन्न कामलादीति चेत् । आह । सर्वमेव तेनोपघातजमुक्तं । तिमिरं पुनरुपघातोपलक्षणन्नोपघातान्तराणाम्व्यावर्त्तकं । यतः ।

तैमिरस्यार्थशून्यत्वादसाक्षात्करणत्वतः । प्रत्यक्षाभासतान्दत्वा प्रत्यक्षत्वनिराक्रिया ॥५९६॥

सा चार्थशून्यता कामलावहलावलेपलुप्तलोचनबलानां विज्ञानस्य न न्यूनाकल्यापि तेनोपलक्षणं सतैमिरग्रहणमिति न्यायवादिभिरवगन्तव्यं (।) तिमिरमशेषोपघातोपलक्षणं ।

अन्ये तु कल्पनापोढग्रहणं प्रत्युदाहरणमेवैतन्नापवादः । तदाह ।

**मानसन्तदपीत्येके तेषाङ् ग्रन्थो विरुध्यते ।**
**नीलद्विचन्द्रादिधियां हेतुरक्षाण्यपीत्ययम् ॥२६५॥**

मानसमेवैतद् द्विचन्द्रादिज्ञानं मरीचिकाजलज्ञानवत् । तथा हि मरीचिकासु प्रथममिन्द्रियज्ञानमभ्रान्तमेवोपजायते पश्चात्तु जलानुभववासनाप्रबोधात् सविकल्पकं जलज्ञानं । स च

प्रबोधो मरीचिदर्शनादेव । सादृश्यभाजो मरीचय एवंधर्माणः । तथात्रापि चन्द्रविषयमभ्रान्तं प्रथमं ज्ञानं पश्चाद् द्विचन्द्राकारो विकल्पः ।

तत्र केचिदाहुः । "स्तिमिताक्ष्णोर्मध्ये स्थाता स एकः चन्द्र उभयपार्श्वे क्रमेणोपलभ्यमानः कालसौक्ष्म्याद् युगपदेव लक्ष्यते । पार्श्वद्वये च द्वित्वाध्यारोपः" । तेषाङ ग्रन्थविरोधः ।

"यद्यपीन्द्रियविज्ञप्तेः कारणं परमाणवः । अतदाभतया नास्या अक्षवद् विषयोणवः"[1] ।।५९७।।

त एव हि चक्षुरादिपरमाणवस्तथान्यथा च भवन्तो द्विचन्द्रनीलाद्याभासहेतवः । द्विचन्द्रप्रतिभासस्य हि मानसत्वे नेन्द्रियहेतुतोक्तिः समर्था ।

अथ मानसत्वे परम्परया हेतुत्वमिन्द्रियस्य न विरुध्यते । साक्षाद्धेतुत्वमिन्द्रियस्य मानसत्वेन विरुद्धं द्विचन्द्रप्रत्यये । अत्रोच्यते ।

**पारम्पर्येण हेतुश्चेदिन्द्रियज्ञानगोचरे ।**
**विचार्यमाणे प्रस्तावो मानसस्येह कीदृशः ॥ २९६ ॥**

इन्द्रियज्ञानस्य गोचरः क इति पर्यनुयुक्ते(।) यतः साक्षादिन्द्रियज्ञानमुत्पद्यते तदाकारतयान्यथा वेति परेण वक्तव्यं । न तावत् तदाकारतया विषयत्वमसम्भवात् । परमाणूनामेकघनाकारस्थूलत्वाभावात् । अथातदाकारस्यापि यो हेतुः स विषयः । तदप्ययुक्तम्(।) इन्द्रियवदन्याकारविज्ञानहेतुत्वेप्यविषयत्वं । तत्र यदि पारम्पर्येण हेतुत्वमभिप्रेतमाचार्यस्य "त एव ही" त्यादि वचसा तदा परं प्रति नेन्दियस्य विषयतां प्रसञ्जयेत् । साक्षात् परमाणूनां हेतुत्वे विषयत्वस्य परेणोक्तत्वात् । प्रसङग एव तर्हि न युक्त इति वक्तव्यं(।) किमुच्यते "प्रस्तावो मानसस्येह कीदृश" इति । अयमभिप्रायः ।

परस्परविविक्ताणुप्रथमप्रतिभासनं । विकल्पकात्तु विज्ञानात् घनाकारावभासिता ।।५९८।।

परः प्राह । "विकल्पकस्य विज्ञानस्यैकघनावभासिता । तस्यापि पारम्पर्येण परमाणवो हेतुत्वाद् विषयः । यथा स्मरणस्यार्थविषयता ।" आचार्यः प्राह ।

"अतदाभतया नास्या अक्षवद् विषयोणवः ।"[1]

यथाक्षाणि परम्परया हेतुत्वेपि न विषयस्तथाणवोपि । अन्यथा भवन्ति ह्यक्षाणि द्विचन्द्रज्ञानस्य पारंपर्येण हेतुः । अत्रोक्तम् (।) "इन्द्रियज्ञानगोचरे विचार्यमाणे प्रस्तावो मानसस्येह कीदृश" इति । न च मानसत्वे विषयनिरूपणा साध्वी निर्विषयत्वात् । तथा नात्र प्रमाणङ किञ्चिदिति युक्तमुत्तरमाचार्यस्य न त्वतिप्रसङ्गचोदनं । तदेवोक्तं प्रस्तावो मानसस्येत्याविना ।

अन्ये तु ब्रुवते(।) मानसे द्विचन्द्रादिज्ञाने यदेन्द्रियाणां कारणत्वं कथयति तदा मानसमेव प्रतिविषयत्वचिन्ता स्यात् । ततश्च प्रस्तावः कीदृश इत्युत्तरं । तदयुक्तमिति प्रतिपादितं ।

**किम्वैन्द्रियं यदक्षाणां भावाभावानुरोधि चेत् ।**
**तत्तुल्यम्विक्रियावच्चेत् सैवेयङ किन्निषिध्यते ॥२९७॥**

यदि तावत् मानसमेतद् द्विचन्द्रादिज्ञानमिन्द्रियभावाभावानुरोधि न स्यात् । अथेन्द्रिय-

---

[1] T. प्रमाणसमुच्चये

भावाभावानुरोध्यपि मानसमेवैतत्(।)तथा सति स्तम्भादिज्ञानेष्वपि मानसत्वप्रसङ्गः। प्रथमं स्वाकारमेव ज्ञानं पश्चादर्थाकारता मनसि अथ मानसमेवेन्द्रियं प्रसक्तं। ऐन्द्रियस्यापि विकार एवेति चेत्। द्वयमपि तर्हीन्द्रियजं प्रसक्तं। साक्षादिति चेत्। न (।) अपरस्य विकारस्यादर्शनात्। एतदनुसारेण तदपि विकृतमेव ज्ञातव्यमिति चेत्। तदपि मानस-मेवेति विकृतत्वादेतद्वदित्यनवस्था। तस्मादेतदेवेन्द्रियजं।

सर्पादिभ्रान्तिवच्चास्याः स्यादक्षविकृतावपि।
निवृत्तिर्न निवर्त्तेत निवृत्तेप्यक्षविप्लवे ॥२६८॥
कदाचिदन्यसन्ताने तथैवार्प्येत वाचकैः।
दृष्टस्मृतिमपेक्षेत न भासेत परिस्फुटं ॥२६९॥

यदि मानसी द्विचन्द्रादिबुद्धिरक्षविकृतावपि निवृत्तिः। अक्षविकारे हि सर्पभ्रान्तिः सत्यपि विचारे निवर्त्तते न द्विचन्द्रादिभ्रान्तिः। अथ सर्पादिभ्रान्तिरपि श्यामतादिलक्षणा न निवर्त्तते(।) समन्धकारे हि प्रदेशे सर्पभ्रान्तिस्तत्र रज्वादेस्तिमिरमन्तरेणापि श्यामतादि-रूपता(।) तिमिरतिस्कारे तु चक्षुषोन्यथाभूतेपि श्यामतादिरूपता(।) सा कथमक्षविकारेपि निवर्त्तते। ततो निवर्त्तनमसिद्धं कथं साधनं।

यदप्युच्येत (।) न निवर्त्तेत निवृत्तेप्यक्षविप्लवे इति तदप्यसत्। नहि मनस्यपि जलभ्रान्तिर्निवृत्ताक्षविप्लवस्य दृष्टा (।) प्रबोधकप्रत्ययस्य आतपोपतप्तत्वस्याभावेऽभावात्। न चान्यसन्ताने जलभ्रान्तेरर्पणन्दृष्टं। नासंतप्तस्य परवचनस्यासौ भवति। सर्पाकारतापि नैव दृष्टस्मरणमपेक्षते श्यामतादितायाः प्रथमतरमेव भावाद्। परिस्फुटप्रतिभासनन्तु मानस्या अपि भ्रान्तेः स्वप्नादावस्त्येव(।) ततो न भासेत परिस्फुटमिति सकलमेतदयुक्तं। तद्भाव-भाविता तद्विकारविकारिता तु पारम्पर्यादपि कार्ये भवत्येव। अत्रोच्यते।

श्यामताद्यवभासो यस्तत्रैन्द्रियक एव स (।) अनिवृत्त्यादयो धर्मास्तत्रेति न सदुत्तरं ॥५९९॥

अवश्यं हि श्यामतादिप्रतिभासस्तत्रैन्द्रियजस्तद्विकारानिवृत्तौ न निवर्त्तते। परिस्फु-टतापीन्द्रियजन्यतायामेव न मानसत्वे। भावनाबलादातपोपतप्तस्य मानसतायामपीति चेत्। परिस्फुटतायामविकल्पकैवासाविति नेन्द्रियजत्वाद् विशिष्यते। तथा चापवादत्वन्तिमिर-ग्रहणस्य न व्याहन्यते। सविकल्पकत्वं हि मानसत्वादभिप्रेतं परेषान्न मानसत्वमात्रं। तथा हि (।) अविकल्पकमेकञ्चेत्येतावन्मात्रमत्र साध्यं(।) द्विविधः प्रत्यक्षाभासो विकल्पो निर्विकल्पकविप्लवश्च। सा च सविकल्पिका सकलभ्रान्तिस्तदा विघटते नान्यथा परिस्फुटापि तर्हि द्विचन्द्रादिर्भ्रान्तिर्मानसी भवत्विति चेत्। न(।) मानसीभावानामन्तरेण भावात्। भावनाबलेन हि मानसी स्फुटतां भजेत तदभावादिन्द्रियजत्वन्न शक्यन्निवारयितुं। द्विविधमेव स्पष्टाकारतायाः कारणमक्षं भावना च। अत्रापि भावनाव्यवहिता अस्त्येवेति चेत्। व्यपगतस्तर्हि बाह्यार्थवाद इत्यलम्प्रसङ्गेन।

का तर्हि सर्पादिभ्रान्तिर्मानसी यस्या दृष्टान्तत्वं जलादिभ्रान्तिश्च। उपघातानुग्राहक-त्वावभासः। उपघातानुग्राहकत्वावभासो हि अक्षविकृतावपि निवर्त्तत एव निवृत्तेपि चाक्ष-विप्लवे न निवर्त्तत एव चिन्तयतः। एवमन्यदपि योजनीयं। एवञ्च।

**सुप्तस्य जाग्रतो वापि यैव धीः स्फुटभासिनी।**
**सा निर्विकल्पोभयथाप्यन्यथैव विकल्पिका ॥३००॥**

मानसत्वेन्यथा वोभयथाप्यविकल्पकत्वं स्पष्टतायान्निर्विकल्पकत्वमिति प्रतिपादितमेतत्,

**तस्मात् तस्याविकल्पेपि प्रामाण्यं प्रति(षि)ध्यते।**
**विसम्वादाद् तदर्थश्च प्रत्यक्षाभं द्विधोदितं ॥ ३०१॥**

विकल्पभ्रान्तताभ्यां द्विधैव प्रत्यक्षाभासता दर्शिताचार्येण(।) इति करणव्यवच्छिन्नाद् विकल्पवशात् पृथक् तैमिरोपलक्षितस्य विप्ल(व)स्य निर्देशादन्यथा पृथग्निदशस्य प्रयोजनाभावेनाकौशलत्वोद्भावनहेतुता स्यात्।

कथन्तर्हि तदुक्तं(।) "स नो भ्रान्तिविषयत्वाद् व्यभिचारिणः।" पराभिप्रायेण तस्योक्तत्वाद्(।) यस्य हि "इन्द्रियार्थसन्निकर्षोत्पन्नं प्रत्यक्षमिति"[1] लक्षणन्तस्य मनोभ्रान्तिविषयता व्यभिचारिणो व्यवतिष्ठते। नहीन्द्रियार्थसन्निकर्षोत्पन्नस्यैव व्यभिचारिता सम्भवति। पारिशेष्यात् मनसा यदधिकस्य विकल्पनन्तत्र व्यभिचारः।

नन्वर्थमन्तरेणेन्द्रियमात्राद् यदुत्पद्यते तस्यापि व्यभिचारिता तत्किं मनोभ्रान्तिविषयत्वादिति वचनं। न (।) तस्यार्थग्रहणेन निराकृतत्वाद् विद्यमानमपि तदविद्यमानकल्पमेव। तथा चोक्तम् (।)

"इन्द्रियार्थोद्भवे नास्ति व्यपदेश्यादिसम्भव" इति (।)

व्यपदेश्यादयो मानसा एवेति प्रतिपत्तव्यं।

ननु न व्यावर्त्तकम्वचनमव्यपदेश्यादि किन्तर्हि स्वरूपकथनपरं तदिन्द्रियार्थसन्निकर्षोत्पन्नन्तदेवम्भूतम्भवति नान्यथा। न (।) व्यवसायात्मकमित्यनिर्देशप्राप्तेः।

नहीन्द्रियार्थसन्निकर्षोत्पन्नमेव व्यवसायात्मकमनुमानस्यापि व्यवसायात्मकत्वात्। तस्माद् यद् व्यवसायात्मकन्तदध्यक्षमन्यत्तु न भवतीति व्यावर्त्तकतैव युक्ता।

अथ किञ्चिद् व्यावर्त्तकङ् किञ्चित् स्वरूपकथनमिति तेन यदीन्द्रियार्थसन्निकर्षोत्पन्नम्व्यवसायात्मकञ्चेत् तदव्याभिचारि भवत्यव्यपदेश्यञ्च।

तदयुक्तमव्यभिचारित्वङ कथयितुं युक्तम्(।) एवं हि प्रमाणता। अव्यपदेश्यविषयत्वेन तु किं। न हि तथा प्रमाण्यमन्यथापि प्रमाण्यात्। ततो यत्किञ्चिदेतत्। स्वरूपकथने चातिप्रसङ्गः। आत्मादिसत्सन्निकर्षस्यापि कथमप्रसङ्गात्। अथ यत् प्रत्यक्षत्वेऽसाधारणन्तदेव कथ्यते न त्वसाधारणमात्मादि। एवन्तर्हि व्यावर्त्तकम्विशेषणं न स्वरूपकथनपरं।

एतेन सत्सन्निकर्षादिकथनं प्रत्याख्यातं। तथाहि(।) लक्षणमेवैतत् स्यात् स्वरूपकथनम्वान्यार्थविधानार्थं। तत्र यदि लक्षणं सत्सन्निकर्ष इत्येव वक्तव्यं। सदर्थग्राहि प्रत्यक्षमिन्द्रियजम्वा प्रत्यक्षमबाधितं। अथ धर्मं प्रत्यनिमित्तताप्रतिपादनार्थं स्वरूपमनूद्यते। तथापीन्द्रियजमित्येव वक्तव्यं किमपरेण व्यर्थजल्पितेन।

किञ्च(।) अनुवादमात्रमयुक्तं। तथा हि।

---

[1] न्यायसूत्रे १।१

बाह्यार्थसाधने यत्नः कर्त्तव्यो वेदवादिभिः । मीमांसकैरतोन्येषां लक्षणेन निराक्रिया ॥६००॥

**बौद्धादीनां हि लक्षणं प्रत्यक्षस्यान्यथाभिमतं स्वप्रक्रियानुकूलं(।) ततस्तद्व्यवच्छेदाय नियमेनान्यथा लक्षणम्विधातव्यं । सौगतानाम्विज्ञानवादशून्यतावादानुकूलत्वाल्लक्षणस्यावश्यमेव तन्निरासाय लक्षणान्तरकरणमेव शोभते(।) नावपतितैरु[१]च्द्रहरणशक्यं । को वा लक्षणकरणे दोषः । प्रमाणेनाप्रसिद्धतेति चेत् । तथाहि ।**

प्रामाणिकम्विधातव्यं लक्षणन्निश्चयस्ततः । इतरेतरहेतुत्वान्नैकमप्यत्र सिध्यति ॥६०१॥

**इतरेतराश्रयत्वादेकस्याप्यप्रसिद्धिरिति न लक्षणकरणं । यद्येवमनुवादोपि नाप्रमाप्रसिद्धस्य युक्तः । लोकप्रसिद्धितश्चेत् प्रसिद्धिः । यद्येवं धर्मोपि लोकप्रसिद्ध एव भविष्यत्यकारणं मीमांसा(।) धर्मविप्लवस्य दर्शनादसिद्धिरेव परमार्थत इति चेत् । यद्येवं ।**

मीमांसयापि किं धर्मविप्लवो दण्डवारितः । अन्यथैतावतः कालान्नाम न स्यान्मतान्तरे ॥६०२॥

**तस्मात् प्रमाणसिद्ध एवानुवादोपि कर्त्तव्यस्तथा लक्षणमप्यनवद्यं ।**

**न च सौगतैरपि लक्षणं क्रियते प्रसिद्धार्थानुवादात् । यथैव हि धर्मप्रत्यनिमित्तत्वप्रदर्शनार्थमनुवादस्तथा निमित्तत्वप्रदर्शनार्थमिति समानमुभयत्रापि । यथा चैतत्तथोपदर्शितमेव प्राक् । ततोर्थाज्ज्ञानं प्रत्यक्षमिति तु लक्षणमेव । तत इत्यनेनान्यस्य प्रकृतस्याभावाद् योर्थः प्रत्यक्षेण दृश्यते तत एवेति गम्यते । तेन द्विचन्द्रादिज्ञानपरिहारः । न हि तत्तत एवापि त्वन्यतः । कथन्तर्ह्याचार्येणोक्तं ।**

"यदाभासा न सा तस्माच्चित्तालम्बं हि पञ्चकं" ।[२]

**नहि (पर)माणुभ्य उत्पद्यमानन्तदाकारञ्चक्षुरादिज्ञानं । अन्याकारस्यापि विज्ञानस्य कारणत्वेनालम्बनत्वे चक्षुरादिपरमाणूनामप्यालम्बनत्वप्रसङ्गः । तेपि हि तथान्यथा वा भवन्तो द्विचन्द्रनीलाद्याभासविज्ञानहेतुरिति । परमार्थमधिकृत्योक्तमेतत् । लोकप्रसिद्ध्या तु वादविवेचनं । लोके हि न परमाण्वादिकल्पना । एतावत् प्रत्यक्षं लोके प्रसिद्धम्विचार्यमाणन्तु न युक्तं ।**

ततोर्थादित्यसिद्धत्वमनैकान्तिकता स्फुटा । परमाणूनभिप्रेत्यानैकान्तिकमिदम्भवेत् ॥६०३॥

**परमाणूनामेव जनकत्वन्तेषामालम्बनत्वे चक्षुरादिभिरनेकान्तः । अथ च त इति प्रतिभासमानमुच्यते तदाऽसिद्धता । नहि तस्य समानकालस्य जननं द्विचन्द्रादिना चानैकान्तिकता ।**

**अथ समानकालमपि जनकं । तदप्ययुक्तं । अवस्तुत्वात् समुदायस्य । अनैकान्तिकता च भ्रान्तविज्ञानैरिति । अथ प्राग्भावजनकं तदाप्यसिद्धता ।**

नहि ज्ञानात् पुरोभावस्तेन ज्ञानेन गृह्यते । परेण ग्रहणे तस्याप्येवमेवानुयोगिता ॥६०४॥
अनुमानेन विज्ञाने प्रत्यक्षादेव तत्पुनः । इतरेतरहेतुत्वे प्रथमङ्कस्य संभवः ॥६०५॥
समानकालता नास्ति प्रत्यक्षानुभयोः क्वचित् । तस्मादसिद्धमेवैतत् परमार्थेन लक्षणं ॥६०६॥

**लोकप्रतीत्यपेक्षतया न विरुध्यते ।**

**यदप्युच्यते । श्रोत्रादिवृत्तिः प्रत्यक्षमिति । तदप्यसत् ।**

---

[१] तत्रैव—"नाधः पतितैरित्यर्थः ।" [२] प्रमाणसमुच्चये

श्रोत्रादिवृत्तिर्भ्रान्तेपि नहि नाम न विद्यते। न च ज्ञानम्विना वृत्तिः श्रोत्रादेरुपपद्यते ॥६०७॥

**प्रवर्त्तनकामो हि प्रत्यक्षादिकं प्रमाणमन्विच्छति। श्रोत्रादीनाञ्च वृत्तिरविज्ञाता कथं लक्षणं। अनुपलक्षितात् कथमयम्प्रवर्त्तेत। अथ प्रत्यक्षतः श्रोत्रादिवृत्तिरुपलक्ष्यते। अस्य तर्हि प्रत्यक्षस्य लक्षणं वक्तव्यं। ततः साक्षात्करणाकारं प्रत्यक्षं (।) तत्तु स्वयमेवोपलक्ष्यत इति परिहारः। तथा सति तदेव साक्षात्करणमभ्रान्तं लक्षणं। भ्रान्तेपि च विज्ञाने श्रोत्रादिवृत्तिः कथं लक्षणं भवेत्। अर्थेषु वृत्तिरित्यदोषः। अर्थेषु वृत्तिरर्थाभिमुख्यत्वं (।) तदपि भ्रान्ते विद्यत एव (।) अथ तत्स्वरूपसम्वेदनं। तदेव तर्हि स्वरूपसम्वेदनमिति लक्षणं। तच्च साक्षात्करणमेवाविकल्पकापरनामकं। तस्मादपरमलक्षणमेव।**

## ( ६ ) प्रमाणफल-चिन्ता

**किम्पुनरस्य प्रमाणस्य फलं। प्रमेयाधिगतिः। उक्तञ्च। "प्रमाणाधीनो हि प्रमेयाधिगमः"।[१]**

**ननु तज्ज्ञानमेव तच्च फलमिति किमिदानीं प्रमाणं। "इन्द्रियार्थसन्निकर्षालोचनविशेषणज्ञानानी"ति[२] केचित्। तदयुक्तम् (।) अधिगमस्य साधनं तदेव युक्तं यतः स भवति।**

**ननु ज्ञानस्य तावदुत्पत्तिरिन्द्रियादेर्दृश्यते ततोधिगमस्यापि तदेवेति किमकल्पनया।**

नहि दृष्टपरित्यागात् कल्पनान्यत्र युक्तिभाक्।
अनवस्था प्रमेये[१] स्यात् तथा सत्यनिवारिता ॥६०८॥

**नैतदस्ति।**

**क्रियासाधनमित्येव सर्वं सर्वस्य कर्मणः।**
**साधनन्नहि तत्तस्याः साधनं या क्रिया यतः ॥३०२॥**

**यद्येकत्रदृष्टसामर्थ्यमित्येव तदेवैकमपरत्रापि साधनायोपकल्प्यते यस्य कस्यचित् साधनस्योपादानात् सकलसमीहितसाधनमिति सर्व्वञ्जगदल्पायासेन सुस्थं स्यात्। न चैवम्(।) अतो या क्रिया यतो दृष्टा तदेव तत्र साधनन्नापरं।**

**तत्रानुभवमात्रेण ज्ञानस्य सदृशात्मनः।**
**भाव्यं तेनात्मना येन प्रतिकर्म विरुध्यते[४] ॥३०३॥**

**अनुभवो हि सा ड् ख्य स्य नीलपीतादौ समानः सत्तामात्रेण। ततः सर्वं व्यवस्थापयेत्। अभिमतव्यवस्थापितपदार्थवत्। नवाऽनवस्थापितवद् व्यवस्थापनार्हमपि तस्याविशेषात्। तथाहि।**

यथा तद्बोधकं वस्तु तथैव तदबोधकं। यदा तद्बोधकं केन मतन्नेष्टमबोधकं[५] ॥६०९॥

---

[१] न्यायभाष्ये
[२] तत्रैव—"प्रमाणानीत्यर्थः।
[१] तत्रैव—"कल्पनीये"
[२] M. विभज्यते
[३] विचारितैषा कारिकाऽलंकवादिराजाभ्यां न्यायविनिश्चय-तद्विवरणयोः १।२८ (पृ० २४४)

अव्यापृतावस्थाया हि विशेषमात्मसात्कुर्वाणमिदमत्र व्यापृतत्नेति गम्येत(।) तथापि किं स्वभावादसो प्रच्यवते । यद्यात्माहं तदात्मभूतोपि न जाने तदा मया सोर्थो न ज्ञात एव भवति ततो न प्रमाणता ।

पुरुषात्मैव लोकोयं भोग्यं वस्त्ववगच्छति ।
स चात्मा न विजानाति[1] साध्वी भोगव्यवस्थितिः ॥६१०॥

बुद्धिः सुखनीलाद्यवसायरूपमात्मानन्तथा व्यवस्थापयतीति चेत् । सैव तर्हि भोक्त्री किमपरेण सम्वेदनेन । सुखाद्यवसायरूपा सुखाकारवेत्याकार एव प्रमाणं । बुद्ध्यध्यवसितमर्थं पुरुषश्चेत् यत इति चेत् । केयं बुद्धिः(।) कोयमध्यवसायः(।) कः पुरुष इति वाच्यं । बुद्धिः करणं(।) अध्यवसायः कर्म(।) कर्त्ता पुरुष इति चेत् । पुरुषोर्थमवगच्छति(।) ततः कर्त्ताध्यवसायस्येति किं बुद्ध्या अध्यवसायस्य बुद्धिः साधनमवगमस्य पुरुष इति चेत् । अवगमस्याध्यवसायस्य च न विशेषं पश्यामः(।) तदाकारसाक्षात्करणमवगमः । स एव चाध्यवसायः । तदाकारतैवाध्यवसायो न साक्षात्करणमिति चेत् ।

यदिनाम तदाकारा बुद्धिवत्ताकथन्तरः ।[2] तद्रूपसाक्षात्करणादर्थ एव तथा न कि[3] ॥६११॥

तदाकारा यदा[4] बुद्धिः साक्षात्क्रियते अर्थ एव तथेति व्यर्थाऽर्थाकारा बुद्धिः । बुद्ध्यढौर्थाकारो ढौक्यते ततोऽदूरे देशस्य प्रतिपत्ति. व्यापित्त्वादात्मनोऽदूरदेशकमेव सकलं । न च दूरदेश इति प्रतिपत्तिः स्यात् । न च तदाकारबुद्धिव्यतिरेकेणार्थ इति च ।

अर्थमन्तरेण तदाकारा बुद्धिः कुत इति चेत् ।

ननु बुद्धित एव तदाकारतार्थानामिष्यते तत्किमयं विपर्ययः । स्वमुखमिव नासङ्क्रान्तं प्रतिपत्तुं शक्यं । नायोग्यदेशत्वात् मुखस्य संक्रान्तिर्द्दर्प्पणादाविष्यते ।

नैवमन्येषां दर्प्पणस्य चासंक्रान्तस्य कथं प्रतिपत्तिः । तस्यापि बुद्धिदर्प्पणे सङ्क्रान्तत्वादिति चेत् । बुद्धिरपि तर्हि बुद्धिः दर्प्पणान्तरे चासंक्रान्तिरिष्यतां । बुद्धिरविदितैवास्त्विति चेत् । आत्मापरोक्षेति व्यर्थं जगत् स्यात् । आत्मनो[5]ऽपक्षत्वे तेनार्थ एव वेद्यतां किमत्र धिया । करणमन्तरेण कथं पश्यतीति चेत् । चक्षुरादयः करणं । अन्तःकरणेन प्रयोजनमिति । चेत् । अन्तरन्तःकरणोनापि प्रयोजनमित्यनवस्था । न चानुपकारकं करणं । तैरभिव्यज्यते । पुरुषश्चेन्नोदासीनस्येवाभिव्यक्तेरग्राहकत्वं । तस्मादर्थान्तरेणात्मना भवितव्यं ।

दर्प्पण इव तत्राविकारकारिणी तदाकारतेति चेत् । न(।)—दर्प्पणं प्रतीत्य तदाकारा बुद्धिरुपजायते । तेन[6] विकारोन्यथा कः संक्रमार्थो यदि न विकारः । दर्प्पणेभिमुखाकारा

[1] तत्रैव—"आत्मा विजानाति नेति हि भोग्यमिति

[2] अत्र यावत् तेर्-गी-ग्रन्थतः भाषान्तरपरीक्षा, इतोग्रे यावद्द्वितीयपरिच्छदसमाप्ति नर-थङ-ग्रन्थतः

[3] इतोऽग्रे यावद्ग्रंथसमाप्ति विभूतिचन्द्रलिखितो ग्रंथ उपरि गृहीतः, दानशीलग्रंथतस्तु पाठभेदा टिप्पणीषु ।

[4] B. यदि

[5] Bटि. अर्थानवबोधकाले यथालामतः । बोधकालेपि नियत्वात्

[6] Bटि. नो नास्ति क्वचित्

भ्रान्ता बुद्धिरुदयवती। अत्रापि[1] विषयाकारा बुद्धिर्भ्रान्तैव न परमार्थतो विषयप्रपञ्चः। प्रधानपुरुषमात्रात्मकत्वाज्जगतः। [2]प्रधानात्मकत्वमपि तर्हि भ्रान्तमेव जगतः घटाद्या.मकवत्। तथा पुरुषात्मकत्वमपि। एतच्च पश्चात्प्रतिपादयिष्यामोऽन्यथा[3] न सांख्य प्रस्थानेन।

तस्मादस्य शुद्धस्यानुभवस्य भाव्यन्तेनात्मना, येन कर्म्मकर्म्मप्रतिविभागो नीलमिदं पीतमित्यादिकः।

ननु श्रोत्रादिवृत्ति प्रत्यक्षं प्रमाणमित्युक्तं। उक्तमिदमयुक्तं तु। तथाहि।

**अनात्मभूतो भेदोस्य विद्यमानोपि हेतुषु।**
**भिन्ने कर्म्मण्यभिन्नस्य न भेदेन नियामकः ॥३०४॥**

अस्य पुरुषस्याभिन्नस्य सर्व्वत्र कर्म्मणि नीलादौ न भेदेन नियामक इन्द्रियादिभेदः। स हि तस्य कारकत्वेन ज्ञापकत्वेन वा नियामकः स्यात् (।) कारकत्वेन नियामके न युक्तस्तस्य नित्यत्वात्। साकारताप्रसंगाच्च। अनाकारत्वे स एव दोषः स्वात्मन एव वेदनप्रसङ्गात्। अथ ज्ञापकत्वान्नियामकः। अपरिज्ञातेर्थे कथं[4] ज्ञापकः। ज्ञापकान्नियमज्ञानं नियमज्ञान(ात्) ज्ञापकमितीतरेतराश्रयदोषः। अ(ा)लोकवज्ज्ञापक इति चेत्। न(।) तेषामपि ज्ञाप्यत्वेऽपरेण ज्ञापकेन प्रयोजनमित्यनवस्था। न च सर्व्वत्रालोको ज्ञापकः। आलोकेन वा ज्ञापिते किं चक्षुरादिभिः। तत्र वालोकभूता शब्दादीनामिति चेत्। तथाप्यसौ स्वबोधरूपः कथं वेत्ति। स्वरूपेवऽस्थानामिति वक्ष्यामः।

**तस्माद्यतोस्यात्मभेदोऽस्यावगतिरित्ययं[5]।**
**क्रियायाः कर्मनियमः सिद्धा सा तत्प्रसाधना ॥३०५॥**

यतः स्वरूपहेतौ तस्य सम्वेदनस्य इयमस्य नीलस्य पीतस्य चाधिगतिरिति नियमः। सापि गतिस्तत्साधनासिद्धा। तन्मात्रकादेव नियमस्यास्य भावात्। तथा चोक्तं।

"भावादेवास्य तद्भावे"

न चेयमर्थस्य घटनासारूप्यादतः सम्वेदनस्य(।)यतः(।)

**अर्थेन घटयत्येनां न हि मुक्त्वार्थरूपतां।**
**अन्यः स्वभेदाद् ज्ञानस्य भेदकोपि कथञ्चन ॥३०६॥**
**तस्मा(त्) प्रमेयाधिगतेः साधनं मेयरूपता।**
**साधनेन्यत्र[6] तत्कर्मसदर्थो[7] न प्रसिध्यति ॥३०७॥**

तदाकारं हि सम्वेदनमर्थं व्यवस्थापयति। नीलमिति पीतञ्चेति। यथा चाकार-योगिता ज्ञानस्य तथोत्तरत्र प्रतिपादयिष्यामः। अन्यत्र तु साधने तेन कर्मणा स्वार्थो न प्रसिध्यति सम्वित्तेः। तदाकारता चेत्परित्यज्यते कथन्तस्य सम्वेदनमिति नियमः। साक्षात्करणादेव नियमो भविष्यतीति चेत्। किमिदं साक्षात्करणमर्थस्वरूपमथ सम्वेदनं। अथान्यदेव किञ्चित्।

---

[1] Bटि. साख्याः। [2] Bटि. सिद्धान्ती [3] Bटि. प्रस्थानान्तरेण
[4] B. सम्बन्धो [5] M. ०स्याधिगति० [6] M. तत्कर्मसम्बधो
[7] अर्थे इन्द्रियादौ। अयमर्थः नियामकेनेन्द्रियादिनार्थो ज्ञाप्यते नियमस्तु न ज्ञातस्तेन। कथं नियतिर्ज्ञायतां ज्ञातेर्थे नियमज्ञानमिति चेत् इतरेतराश्रयो दोषः।

अर्थस्य साक्षात्करणं यदि रूपं सदिष्यते। साक्षात्कारि हि ज्ञानं कथमर्थस्य सम्भवेत् ॥६१२॥

अथ सम्वेदनस्यैव रूपं साक्षात्क्रिया मता ।

साक्षात्कृतः कथं सोऽर्थो न ह्यन्यस्यान्यरूपता। अन्यत्त्वेप्येष दोषस्तु भवेदेवा निवारितः ॥६१३॥

**तथा हि यदि साक्षात्करणमर्थस्य स्वभावो नीलादिः साधारण इति सर्व्वस्य संविदितः सोऽर्थो भवेत्। साक्षात्क्रिया चार्थस्य न युक्ता ज्ञानधर्मत्वात्। अथ ज्ञानधर्मोसावर्थविषयः तेनार्थः सम्विदित उच्यते। अर्थविषय इति को विषयार्थः। अर्थसम्वेदनरूपत्वादिति चेत्। अर्थस्य सम्वेदनमिति किम्। अर्थरूपत्वात्सम्वेदनस्येति चेत्। (त)स्यैवार्थाकारता सम्वेदनस्य। अथार्थाज्ञातत्त्वादर्थसम्वेदनं। तथासति चक्षुषोपि ज्ञातत्त्वाच्चक्षुः सम्वेदनमिति प्राप्तम्। अर्थं पश्यति न चक्षुरिति चेत्। अर्थं पश्यतीति कोर्थः। अर्थम्पश्यन्दृश्यते तेन पश्यतीत्युच्यते। केन पश्यति[1] स्वरूपेण। यथैव तर्हि स्वरूपं[2] सम्वेदनरूपेण पश्यति। तथार्थमर्थरूपेणेत्यर्थरूपतार्थस्य सम्वेदनरूपता सम्वेदनस्येति। तदाकारतैव सर्व्वस्य साधिका। नान्यः स्वभावो भेदको विज्ञानस्यार्थेन घटयति।**

## सा च तस्यात्मभूतैव तेन नार्थान्तरं फलम् ।

अर्थान्तरफलवादिनां हि सर्व्वं दुर्घटमिति। आत्मभूतैव सम्वेदनस्यार्थाकारता प्रमाणं। सम्वेदनन्तदात्मभूतमेव फलं प्रमाणस्य। अर्थाकारतानुभवव्यतिरेकेण नान्यार्थाधिगतिः। नहि सुखाद्याकारतार्थस्य सम्वेदनं,[3] तद्विशेषादर्थविशेषानुभवप्रसङ्गात्। अथ हेतुतयार्थस्यानुभव इति चेत्। यद्यर्थाकारता न स्यात्सुखमेव केवलमनुभूयेत। अर्थे सुखसम्वेदनमिति चेत्। नीले पीतसम्वेदनं कस्मान्न भवति। परस्परस्य वैलक्षण्यादित्यपि स्वपक्षोपघातः। सुख नीलयोरपि तथेति अलम्पिष्टपेषणेन। स्वरूपमेव तत्तस्य न सम्वेदनव्यापार इति चेत्।

अत्रोच्यते।

**दधानं तच्च तामात्मन्यर्थाधिगमनात्मना ॥३०८॥**
**सव्यापारमिवाभाति व्यापारेण स्वकर्मणि[4] ।**
**तद्वशात्तद्व्यवस्थानादकारकमपि स्वयम् ॥३०९॥**

नहि परमार्थतः कस्यचित्कोपि व्यापारः। स्वरूपमेव पदार्थानान्तस्य तथा भवद तत्त्ववेदिभिरव्यापारो यतो व्यापार उच्यते। न परमार्थत। ज्ञानं च पुरुषस्य स्वार्थः। सुखज्ञानवत्। ततः सुखज्ञानमुत्पन्नं स्वार्थो न तु सुखज्ञानेन किंचित्क्रियत इति। एवं रूपादिज्ञानमपि स्वरूपेणैव स्वार्थः। न तु तेन ज्ञायते। अर्थात् तदुत्पत्तिरिति समाप्तो व्यवहारः। एतावता किमर्थं व्यापारेण। न तर्हि अर्थसम्वेदनं फलम्। फलमपि अर्थाकारं सम्वेदनमर्थ सम्वेदनमिति को विरोधः। कथन्तर्हि अर्थंसम्वेत्तीति भेदव्यवहारः। त.मेव दधानमर्थाकारतां वेत्तीति व्यपदिश्यते। तथाहि चक्षुर्विज्ञानं पीतमपहाय यदा नीलादौ वर्त्तते तदा परित्यागोपादानलक्षणोस्य व्यापार इव ल यते। यदि नीलसम्वेदनं नीलरूपमेव पीतं न यायान्नान्यस्य स्वरूप-

---

[1] B.टि. अर्थरुपेण　　[2] B.टि. ज्ञानस्वरूपं स्वसम्वेदनरूपेण

[3] B.टि. नार्थाकारताधिगतिः किन्तु सुखाकारता　　[4] B. कर्मणि

मन्यस्य भ तीति । तेन तत्पृथग्भूतं युक्त्या व्यवस्थाप्यते स व्यपारश्च सा चार्थापत्तिरेव। परमार्थतश्च तदतदाकारमपरापरं विज्ञानमेव। न तत्र व्यापारव्यतिरेकौ ।

अन्वयव्यतिरेकाभ्यां भेदव्यापारकल्पना । अनादिवासनासङ्गान्न भावव्यक्तपूर्वकौ ॥६१४॥
स जातिपूर्व्वविज्ञानानुभवाहितवासना । व्यतिरेककल्पनाबीजं[१] केवलान्धपरम्परा ॥६१५॥
(—) अन्तरश्लोकौ ।

ननु यदि तदाकारं ज्ञानं तेन जन्यते स एवार्थस्तत्र व्यावृतः स्यान्न तु ज्ञानमर्थे तत्कथं विज्ञानं गृह्णातीति निश्चय. ।

अत्र समाधिः ।

**यथा फ(ल)स्य हेतूनां सदृशात्मतयोद्भवाद् ।**
**हेतुरूपग्रहो लोके[२] क्रियावत्त्वेपि कथ्यते ॥३११॥**

तद्यथा पितृसदृशः पुत्र उत्पत्तिमान् पितृरूपं गृह्णातीति व्यपदिश्यते लोके विनापि ग्रहण-व्यापारेण, तथा ज्ञानेपि व्यपदेश इति को विरोधः। तत्र तदाकारता दृष्टा इह तु कथं। इहापि दृष्टैव कामशोकादिषु तदाकारा ज्ञानादेव सा तदाकारता नार्थादिति चोद्यं। तदाकारा तावत्तदाकारतोपलभ्यते भवन्ती। यदि वासनासामर्थ्यमस्ति दर्शने कारणमनुभवात्तदाकारता। अथादृष्टश्रुतपूर्व्वे प्रवर्त्तते तदा वासनासामर्थ्याभावादन्यतस्तदाकारादिति वाक्यार्थः तदाकारः करणम्।[३] तथा हि(०)

वासनातो यदुद्भूत तदेकस्यैव विद्यते । तत्रार्थस्य स्थितन्वे तु सर्व्वसाधारणोदयः ॥६१६॥

तस्मादर्थाकारतैव साधनं ।

**आलोचनाक्षस[१]म्बन्धविशेषणधियामतः[४] ।**
**नेष्टं प्रामाण्यमेतेषां व्यवधानात्क्रियां प्रति ॥३१०॥**

केचिदाहुरालोचनाज्ञानं प्रमाणं, ततः परं जात्यादिविशिष्टवस्तुनिश्चयात्मकं फलं। ततोपि प्रवर्त्तनं ततः प्राप्तिस्ततः सुखमिति। पूर्व्वपूर्व्वं प्रमाणमुत्तरोत्तरं फलमिति क्रमः। आकारबलादेव हि प्रतिनियतार्थव्यवस्था नान्यतः। आलोचनविज्ञानं हि यदि प्रतिनियतमाकारं नोपाददीत कथमस्येदमालोचनमिति स्यात्। अथापरमपि निश्चयादिविज्ञानमेवमेव तत्त्वव्य-पदेशलाभि पूर्व्वपूर्व्वं तु कारणमुत्तरोत्तरोत्पत्तावेव कारणं न प्रतिनियतार्थव्यवस्थायाः तदाकारतैव तु यतः तत्र साधनं।

**सर्व्वेषामुपयोगेपि कारकाणां क्रियां प्रति ।**
**यदन्त्यं भेदकं तस्यास्तत्साधकतमं मतम् ॥३१२॥**

साधतकमं हि करणं (पाणिनिः १।४।४२) तस्य च सर्व्वकारकोपयोगेपि क्रियायां कथं प्रकर्षः। नहि क्रियानिर्व्वर्त्तनमेव। भावेपि[५] तत्रानन्तर्यं यस्य क्रियां प्रति तदेव साधकतमं। तथा हि। सत्स्वपीन्द्रियादिष्वदूरदेशतादिना यदि प्रतिनियताकारता न प्रतिप्राप्येत[६] न

[१] B. टि. व्यतिरेकस्योपलक्षणत्वात् भेदस्यापि ग्रहणं [२] B. ऽक्रि०
[३] B. तदाकारकारणं—पाठान्तम्। [४] B. आलोचनाख्य
[५] B. टि. क्रियानिवर्त्तनभावेपि [६] B. टि. न परिप्राप्येत नोपदीयेत ।

तदाकारार्थपरिच्छेदव्यवस्था। तदनन्तरभासिनी सा क्रियेति तदेव करणं। नन्वदूरदेशतैव साधनं नेन्द्रियोपघातेऽदूरदेशतायामपि न नियतार्थव्यवस्था। अनुपघातस्तर्हि साधनं, नेदमप्यस्ति। यतः।

अक्षस्यानुपघातो हि तदाकारविशेषतः। सम्वेदनस्य विषयः ततः स व्यवधीयते॥६१७॥

ननु स एवाकारो व्यवधीयत इति प्राप्तम् तेन ह्याकारेण निश्चितोऽनुपघातः प्रतिनियतार्थव्यवस्थाहेतुः। नेदं साधीयः। यतः।

आकारनियमः सिद्धो यदि सार्थव्यस्थितिः। अकारणं शरः सिद्धे प्राप्तः किमिति पोष्यते॥६१८॥

नासिद्ध आकारनियमोऽक्षानुयातं साधयति। स चेत्प्रसिद्धः सैवार्थव्यवस्थितिः। व्यर्थ एवाक्षानुपघातः। न खलु सिद्धेऽर्थे प्राप्तः साधयति कश्चित्, सिद्धस्य साधनासम्भवात्। ततः सिद्धोपस्थानहारी किमपेक्ष्यते। तदाकारतायामपि[1] निश्चयोपरः प्रतिनियतव्यवस्थायामपेक्ष्यत इति चेत्। न(।) प्रत्यक्षप्रामाण्यप्रस्तावात्। अभ्याससम्भवे हि प्रत्यक्षं प्रमाणं तदाकारमात्रादेव च तदा प्रवर्त्तननिश्चयमन्तरेणापि। यदा तु निश्चयापेक्षा तदानुमानं प्रमाणं। तस्याप्याकारमात्रादेव प्रवृत्तेः। नापरापेक्षा। तस्मादाकारान्नाऽरंकरणं तथाऽसाधारणमिति। तत्र।

सर्वं सामान्यहेतुत्वादक्षाणामस्ति नेदृशं।
तद्भेदेपि ह्यभिन्नस्य[2] तस्येदमिति तत्कुतः॥३१३॥

सर्व्वस्य हि नीलपीतादिविषयस्य सामान्येन हेतुत्वादक्षं न भेदकं। ननु नीलपीततदुभयादिविषयमन्यान्यदक्षं भविष्यति, तदभिमुखता हि तत्रान्यैव, ततो धर्मभेदेऽक्षाणामिति तद्भेदादेव भेदप्रतिपत्तिरिति किमुच्यते सर्व्वसामान्यहेतुत्वादिति। तदसद्। आभिमुख्यस्य विशेषणाकारभेदमन्तरेण प्रतिपत्तुमशक्यत्वात्। तद्भेदेप्याकाररहितस्य अस्येदमाभिमुख्यं नीलपीतादिविषयमिति कुतः। नहि नीलादिविशेषप्रतिपत्तिमन्तरेणाभिमुख्यविशेषप्रतिपत्तिः, सा चेदस्ति किमिदानीमाभिमुख्यप्रख्यानेन। अथवा तद्भेदेप्यभिन्नस्येति तस्य नीलपीतादिवेदनस्य भेदेपि अभिन्नस्येन्द्रियस्य अस्येदं करणमिति कुतः। आभिमुख्यविशेषाद्विशेष इति चेत्। नाभिमुख्यत्वस्याकारणविशेषप्रतिपत्तिमन्तरेण विशेषेण प्रतिपत्तुमशक्यत्वादित्युक्तं। तत आकारविशेष एव प्रार्थनीयः। स चेदस्ति किमपरेण।

नन्वाकारोप्यर्थस्यैव न ज्ञानस्य, तस्यार्थतया प्रतिपत्तेः। जडरूपतया हि स आकारः प्रतीयते वर्णसंस्थानात्मना। ज्ञानन्तु तद्विपर्ययेण बोधरूपतया। नाकारव्यतिरेकेण बोधरूपतायाः प्रत्येतुमशक्यत्वात्। नीलादिसुखादिकमन्तरेणापरस्य ज्ञानाकारस्यानुपलक्षणात्। परोक्षं तर्हि ज्ञानं न चास्तीति प्राप्तं।

तदसत्। तथा हि(।)

परोक्षं यदि तज्ज्ञान ज्ञानमित्येव तत्कुतः। परोक्षस्य स्वरूपं कस्तस्य लक्षयितु क्षम.॥६१९॥
यतोऽपरोक्षतार्थस्य तज्ज्ञानमिति चेन्मतम्। अर्थापरोक्षताज्ञानमस्तु तत्र परेण किम्॥६२०॥
स्थितेर्थे तु भवत्येषाऽस्थित एव न भाविनी। ततोर्थेन भवतीत्येतदनायासेन सिध्यति॥६२१॥

एतेनाभावोपि प्रत्याख्यातः।

---

[1] B. टि.—अभ्यासकाले [2] M. ह्यतद्रूपस्य

न चापरोक्षताव्यतिरेकेण नीलादितानुभवकालेनुभूयते। ततो नीलाद्याकारा सा। नीलन्तु तस्या उपधानमन्यदेव। दर्पणमुखप्रतिविम्बादि च मुखमित्याकार एवासौ न स्वयमर्थः। ननु दर्पणप्रतिविम्बमुखयोर्द्वयोरपि प्रतिपत्तिरिह त्वाकारमन्तरेण नार्थस्य। एतदुत्तरत्र प्रतिपादयिष्याम इत्यास्तां तावदेतत्। जडरूपता तु स्वयञ्चकाशतः[1] कथं शक्योपपादयितुं। यदि चार्थापरोक्षातायः कश्चिदपरोस्ति यत इदमिति साध्यते। तदा वासना भविष्यति। वासन बलायातोयमाकारो विज्ञानस्य। न च वासनाबलादर्थः सम्भवति। तदभावप्रसङ्गात्।

ननु वासनाबलायातोऽर्थशून्यो भवति स्वप्नाकारवत्।

वासनाया विशेपस्य कस्यचित्तत्र सम्भवः। येनार्थशून्यो न भवत्याकारो जाग्रदीक्षितः॥६२२॥

वासना हि तावदाकारस्य जनिकोपलभ्यते स्वप्नादिषु। तत एषोपि जाग्रदुपलब्धिविषयभावं गतस्तत एव तज्जातीयत्वात्।

नन्वाकारत्वमेव तस्यासिद्धमर्थ एवासाविति प्रतिपत्तेः। न (।) व्यभिचारात्। स्वप्नज्ञानाकारो ह्यर्थ इति प्रतीयत एव। पर्यालोचनतोऽन्यथा प्रतिपत्तिरिति चेत्। अत्रापि पर्यालोचनन्न कार्कैर्भक्ष्यते। वासनाविशेषस्तु जाग्रदवस्थाकारः सा(?सो)र्थ इति वरं कल्पितं। स्वप्नादिप्रत्ययोपि न साकारस्तत्राप्यर्थस्य सम्भवादिति चेत् तदुत्तरत्र प्रतिपादयिष्यामः। अथार्थाकारता नापरोक्षः, अर्थ एव नीलादिकोर्थाकारः। सा तु वस्तुप्रत्यासत्या। तथा लक्ष्यते दर्पणप्रतिविम्बवत्। मुखप्रत्यास्त्या हि दर्पणमनाकरमप्याकारवदिव लक्ष्यते। प्रदीपादिप्रभावद्वा। प्रदीपप्रभा ह्यनाकारापि घटादिसंक्रान्ता घटाद्याकारेव लक्ष्यते।

तदसत्यं।

मुखादिव्यतिरेकेपि दर्पणादिर्निरीक्ष्यते। न त्वाकारातिरेकेनणापरोक्षत्त्वन्निरीक्ष्यते॥६२३॥

अपरोक्षता हि नीलाकारात्मभूतैव सर्व्वदा निरीक्ष्यते नान्यथा। तत्किमर्थं प्रत्यासत्यैवं प्रतिभाति यथैवम्भूतैरेवेति किमत्र प्रमाणम्। भवतोपि किं प्रमाणमिति चेदभेदोपलब्धिरेव। भ्रान्तिरेवेयमिति चेन्न बाधकाभावात्। अर्थप्राप्तिरिति चेत्। (न)। प्राप्तेरप्याकारलक्षणत्वात्। नहि तदाकारतामन्तरेण प्राप्तिरस्तीति प्रतिपादयिष्यामः। यदि स तथाभूत आकारो न स्यान्न कश्चित्प्रतिनियतमर्थं व्यवस्थापयेत्।

**एतेन शेषं व्याख्यातं विशेषणधियां पुनः।**
**अताद्रूप्ये न भेदोपि तद्वदन्यधियोपि वा॥३१४॥**

आलोचनार्थसन्निकर्षादिः शेषः। अर्थसन्निकर्षोपि नाका(र)मभिपत्य ज्ञायते। ततस्तेष(ा)मपि क्रियां प्रत्यसाधकतमत्त्वं, व्यवधानात् विशेषणधियां। पुनस्तदाकारता भावे विशेषणबुद्धिरेव न सिध्यति। तद्विशेष्यादिबुद्धित्वमिति। न तेषामपि करणत्वं यदि तावत्कालाविशेषणबुद्धिर्विशेषणमेतदिति कथं ज्ञातव्यं। न हि विशेष्योपारुढरूपमन्तरेण विशेषणत्वं नाम, नापि तदुपारूढत्वग्रहणं विना विशेषणत्त्वग्रहणम्। तदाकारग्रहणे च विशेष्यमपि गृहीतमेवेति कथं ततो विशेष्यधीरपरा स॰या भवेत्। न हि तदैव[2] गृह्यमाणं तद्ग्राहकबुद्धिज-

[1] B. श्चकासतः [2] B. भेदोपि

नितग्राहकग्राह्यं तत्कालेपि[1] विशेषणस्य प्रतिभास(न)मिति चेत्। पूर्व्वन्तद्ग्रहणं व्यर्थं पूर्व्वमपि विशेष्यं प्रतिभासत इति न युक्तं साधनत्वाभावप्रसंगादेव। किञ्च विशेषणबुद्धिर्विशेषणे विशेष्ये तद्बुद्धिरिति विषयभेदः क्रियासाधनयोः प्राप्तः (।) भवतु को दोष इति चेत्।

**नेष्टो विषयच्छेदोपि[2] क्रियासाधनयोर्द्वयोः।**
**एकार्थत्वे द्वयं व्यर्थं न च स्यात् क्रमभाविता ॥३१५॥**

न खलु पलाशे परश्वादिकरणप्रवर्तनम्। न्यग्रोधे च्छिदा निर्वर्त्तते एकार्थतायां पूर्व्ववत्प्रसंगः। व्यर्थता च द्वयोः। क्रमभावश्च सर्वासां तदर्थहेतूनां धियाम्विरुद्धः। एकत्वे क्रमायोगात्। आवृत्तिभेदात्क्रम इति चेत्। न (।) आवृत्तिभेदस्य प्रत्यक्षेण प्रतिपत्तुमशक्यत्वात्। यदि तदेव ज्ञानमावर्तत इति रेवदा(? सदैवा) वृत्तिसंप्रत्ययः स्यात्। न च तदभिन्नस्वरूपग्राहिणां परस्परं क्रियासाधनभावः क्रमभावेपि पूर्व्वेणोत्तरस्य जनिक्रियैव क्रियते नाधिगतिः पूर्व्वाविशेषात्। जनिक्रियापि नापरा तत्स्वरूपादिति प्रतिपादितमन्यत्र।

**साध्यसाधनताभावः सकृद्भावे धियांऽशयोः।**
**तद्व्यवस्थाश्रयत्वेन साध्यसाधनसंस्थितिः ॥३१६॥**

—इत्यन्तरश्लोकः

नापि सन्निकर्षः प्रमाणं यतः।

**सर्व्वात्मनापि सम्बद्धं कैश्चिदेवावगम्यते।**
**धर्मैः स नियमो न स्यात् सम्बन्धस्याविशेषतः ॥३१७॥**

यदीन्द्रियार्थसन्निकर्षः प्रमाणं तस्य फलमर्थाधिगतिः स सन्निकर्षः संयोगः। संयुक्त-समवायः। संयुक्तसमवेतसमवायः। समवायः। समवेतसमवायः। संयुक्तविशेषणविशेष्य-भावश्चेति। इन्द्रियस्य घटादिना संयोगः। घटसमवेतेन गुणेन संयुक्तसमवायः। गुणत्वेन सितत्वादिना संयुक्तसम(वे)तसमवायः। श्रोत्रस्याकाशात्मनः शब्देन समवायः। शब्दत्वेन समवेतसमवायः। प्रदेशे घटाभावेनेन्द्रियस्य संयुक्तविशेषणविशेष्यभावः। तत्र यदि नाम संयुक्तेन सम्बन्धः। तस्य ग्रहणमिति कुतः। अन्यथा धूमसम्बन्ध (?द्ध) स्य वह्न्यादेरपि प्रतिपत्तिः स्यात्। अथ समवायसम्बन्धात्प्रतिपत्तिः। एवन्तर्हि एकार्थसमवायिनः स्पर्शादेरपि चक्षुषा प्रतिपत्तिः स्यात्। समानदेशत्वमने(?) प्रत्युक्तं। यथा सन्तानस्य एकार्थसमवायिनः प्रतिपत्तिस्तथा स्पर्शादेरपि। अचाक्षुषत्वादप्रतिपत्तिरिति चेत्। तदेवेदम्

एकार्थसमवायित्वान्न कथमिति चिन्त्यते।

तस्मान्न सर्व्वात्मनापि सम्बद्धं कैश्चिदेव धर्मैः प्रतीयत इति न युक्तं। यदि हि चक्षुरादि-परमाणवो बहिर्निर्गत्यान्यदेशसंक्रान्त्यार्थग्रहणनिमित्तं तत्संयोगे तथा सति स-र्वात्मना सम्बन्धाद-शेषरूपप्रतिपत्तिरिति चक्रशो घटादयोपि धर्माः परिस्फुटं प्रतिभासेरन्। वर्णशश्च न संस्थान-मात्रस्य। तथा शेषजात्याद्यभिव्यक्तिः। दूरादौ करणस्यासामर्थ्यमिति चेत्। यद्यसामर्थ्य-मग्रहणमेव सर्व्वदास्तु। एवम्भूता सामग्री येनैवम्भूता प्रतिपत्तिरिति चेत्। न(।)अभिमतत्वात्।

---

[1] B. टि—विशेषणकाले विशेषणग्राहिकया बुद्धया जनितेन विशेष्यग्राहकेण ग्राह्य विशेष्यं।

[2] B. टि—तत्काले विशेष्यग्रहणकाले। M. विषयभेदोपि

संस्थानस्य वर्णतः ।

न हि वर्ण्णतः संस्थानं भेदेनावधार्यते। अवधार्यते वर्ण्णव्यतिरेकेणापि समर्थ(।)कार इति चेत्। तत्रापि श्यामवर्ण्णस्योपलभ्योपलब्धेः। अन्धकारस्यावस्तुत्वान्न वर्ण्णस्योपलब्धिस् (।) तदप्ययुक्तं। उपलभ्यमानस्यावस्तुत्वायोगात्। आलोकेपि निमीलितलोचनस्य प्रतिपत्तेरिति चेत्। न(।) तस्य भ्रान्तत्वात्। न चैकस्य भ्रान्तत्वे सर्व्वत्र भ्रान्तिरित्यतिप्रसङ्गात्।[1] बाहृयार्थाभावप्रसङ्गात्। ततः पुनरिदमेव वक्तव्यं। कश्चित्प्रत्ययो भ्रान्तः कश्चिन्नेति। तेनालोक एव संस्थानग्रहणं नान्धकारे। निकट एव न दूरे।

**तदभेदेऽपि भेदोयं यस्मात् तस्य प्रमाणता[2] ।**

तेन सर्वात्मना ग्रहणमग्रहणम्वा युक्तं। तस्य चार्थस्याभेदेपि भदो यो ज्ञानस्य सम्यग नीलाद्याकारादेव। न बाहृयाकारादिति। तस्मादाकार एव प्रमाणं। अथ संस्थानादनाकारमपि विज्ञानं प्रतिनियतार्थव्यवस्थाकारि भवेत्। अत्राह।

**संस्काराच्चेद्ताद्रूप्ये न तस्याऽव्यवस्थितेः ॥३१८॥**

संस्कारो हि प्रतिनियतव्यवस्थापूर्व्वकः प्रतिनियतमर्थविषयं ज्ञानस्य कुर्यात् स्वयं प्रतिनियतः। तद्यथा योऽर्थोनुभूतस्तथाभूता स्मृतिर्भवति न चार्थप्रतिनियतोनुभवः। आकारं विना कुतः। तत्कथं ततः संस्कारप्रतिनियमो येन ततो नियतार्थव्यवस्था। इतरेतराश्रयणदोषप्रसङ्गात्। सति प्रतिनियमेनुभवस्य संस्कारनियमः। संस्कारनियमे चानुमाननियम इति नैकोपि स्यात्। यदि साकारं ज्ञानं प्रमाणं तदेव फलमिति क्रियाकरणयोरैक्यं प्रसक्तं। आकारस्याधिगमाव्यतिरेकात्। अत्राप्युच्यते।

**क्रियाकरणयोरैक्यविरोध इति चेदसत्।**
**धर्मभेदाभ्युपगमाद्; वस्त्वभिन्नमितीष्यते॥३१९॥**
**एवंप्रकारा सर्व्वैव क्रियाकारकसंस्थितिः।**
**भावे ह्यभिन्नाभिमतेष्वध्यारोपेण वृत्तितः॥३२०॥**

यदि परमार्थतः क्रियाकरणयोरैक्यन्न युक्तमित्युच्यते तदयुक्तं। नहि कारकात्मिका क्रिया कारकात्मतां विरुणद्धि। नहि व्यापारः पदार्थतो भिद्यते। नोत्पतननिपतने पर्शुतो व्यति(रि)च्येते। तस्यैवापरापरदेशसंगिन्युत्पत्तिस्तथा व्यपदेशवती। न च सा स्वरूपादपरा। न च सा स्वरूपेण तदैक्यम्विरुध्यते। अथ व्यावहारिकी क्रिया विरोधिनी कारकैकत्वेन तदेतदिष्यत एव। धर्मभेदाभ्युपगमाद्विकल्पपरिनिष्ठितो हि धर्मभेदोऽभ्युपगम्यत एव। एवं प्रकारैव तु कल्पितभेदवती क्रियाकारकभेदव्यवस्था। तथा हि।

अन्वयव्यतिरेकाभ्यामेकत्वानैक्यकल्पने (।) क्रियाकारकभेदेन व्यवहारो व्यवस्थितः ॥६२४॥

देवदत्तस्तावदेक एव प्रत्यभिज्ञाबलाद्व्यवस्थाप्यते। तस्य स्थानगमने प्रदेशवृत्तिनी। ततस्तत्र क्रिययोर्भेदः कल्प्यते। यो हि यस्मिन्नभिन्ने भिद्यते स तस्माद्व्यतिरिच्यते। परमार्थतस्तु देवदत्त एव। अवस्थाभेदाद्व्यतिरेकी भिद्यते। तेन भावेषु भिन्नाभिमतेष्वपि लोक

[1] B. टि—बाहृयार्थाभावप्रसङ्गात्।

[2] B. टि—तदभेदेपि भेदोयं यस्मात् तस्य प्रमाणता।

**एकत्वारोपेण प्रवर्त्तत इति। तदनुरोधात्क्रियाकारकव्यवस्था न परमार्थतः। एवमाकारोपि न फलाधिगतिव्यापकः। अधिगतिस्तु सकलाकारव्यापिका। ततो भेदव्यवस्था प्रमिति-प्रमाणयोः। परमार्थतस्त्वाकार एव प्रकाशमानः प्रमितिः। तस्मादाकारः प्रमाणमर्थसम्वेदनं फलमव्यतिरिक्तमेव फलं प्रमाणात्ततो वा प्रमाणमिति। तथा चोक्तं।**

सव्यापार प्रतीतत्त्वात्प्रमाणं फलमेव सत्।

## २. स्वसंवेदनफलम्

**अथवा स्वसम्वित्तिः फलञ्चात्र। उभयाभासस्य विज्ञानस्य स्वसंवेदनमेव फलं। नन्वर्थसम्वेदनं फलमर्थार्थी लोक इति। अत्रोच्यते।**

लोकस्यार्थार्थिताऽयुक्ता यदानार्थस्य वेदन। न जातु चिददृष्टेऽर्थे लोकस्यार्थित्वसम्भवः॥६२५॥

**श्रुतो हि परम्परया दृष्ट एव।**

# ९. विज्ञप्तिमात्रता

## (१) अर्थसंवेदनचिन्ता

### (क) अर्थसंविद्–

**ननु नीलादिरर्थः सम्वेद्यत एव। कथमसम्विदर्थस्य। अत्र पर्यनुयोगः।**

**कार्थ संम्विद्; यदेवेदं प्रत्यक्षं प्रतिवेदनम्।**
**तदर्थवेदनं केन ताद्रूप्याद् व्यभिचारि तत्॥३२१॥**

**यदि प्रतिनियतम्वेदनं[1] प्रतिविदितम्वा तदा साकारज्ञानमेवार्थवेदनमिति व्यपदेशमात्रमेव केवलं। नत्वर्थस्य वेदनं सिध्यति।**

**अथ ताद्रूप्यादेवार्थस्य वेदनन्तथाभूतमर्थमन्तरेण ताद्रूप्यस्याभावात्। न। व्यभि-चारात् केशमशकादिषु।**

**अथ सोनुभवः क्वास्य; तदेवेदं विचार्यते।**

**यद्यर्थसम्बन्धो नास्ति तदा कोसावनुभवः अनुभूयमाननिष्ठत्वादनुभवस्य। कथं केशाद्यनुभवस्तैमिरिकस्य।**

**ननु कश्चिदर्थनिष्ठ एव दृश्यते तदेवेदम्विचार्यते। दृश्यतामर्थस्येति च न दृश्यते। अर्थस्यादर्शनात् (।) यदि चोदयमात्रादर्थसम्वेदनं चक्षुषोपि वेदनं तदिति प्राप्तं तत उत्पत्तेः[2] (।)-तथैवानुमानात्कार्यदर्शनादनुमीयतेर्थस्तथा[3] चक्षुरपि तद्वेदनं तदेव तदाकारं कल्प्यतां। बहिर्देशा-**

---

[1] B. टि—प्रतिनियतं वेदनं प्रतिविदितम्वा वेदनं विदितयोर्मध्यपदलोपाः।

[2] B. टि—अनेनास्माकं मतेऽर्थस्यज्ञानं नास्ति भिन्नार्थाकाराज्ञानादर्थानुमाना।

[3] B. टि—तथा कार्यात् चक्षुरपि कारणमनुमीयते यस्याकारः तस्य कारणस्यानुमान-मिति चेत् चक्षुरपि नीलाकारं क…।

कारेण बहिरेव कल्प्यत इति चेत्। किन्दर्पणमुखाकारेण तद्देशस्य मुखस्य कल्पना। ततः सकलमेवात्मस्थं मुखवत्प्रतिविम्बरूपेण प्रतिभातीति कल्पनीयं।

**सरूपयन्ति तत् केन स्थूलाभासश्च तेणवः ॥३२२॥**

अणव एव यदि विषयस्ततः स्थूलाभासविज्ञानमिति सारूप्याभावात्कथम्विषयो विज्ञानस्य। वृक्षादिपिण्डग्रहणवद् भ्रान्तमे(व) भवेत्। वर्ण्णाकारतया सरूपयन्तीति चेत्। न। वर्ण्णव्यतिरेकेण संस्थानाभावात्। वर्ण्णात्मकसंस्थानवत्त्वे स्थूलतैव प्राप्ता। अथ स्थूलता ग्रहणधर्मः। वर्ण्णस्तु ग्राह्यधर्मः। बहुषु गृह्यमाणेषु स्थूलमिति भवति व्यपदेशः। न स प्रत्येकं परमाणुषु। नीलादिता तु प्रत्येकमतोऽसौ ग्राह्यधर्मः। यद्येवन्तथा सान्तराणामनन्तरत्वग्रहाणद्भ्रान्तिरेव। नाविषयतयान्तरस्यापि प्रतिभासनादिति चेत्। यद्येवं सर्व्व सामर्थ्योपाख्याविरहलक्षणं निरुपाख्यमिति भाव एवान्तरस्य। ततो निरन्तरमेव वस्तु परिकल्पनीयं। निरन्तरस्यायोगादिति चेत्। नहि वस्तु सावयवं युक्तं। विज्ञानवत् निरवयवमेव वस्त्विति परमाणुप्रसिद्धिः। न। प्रतिबन्धाभावात्। प्रत्यक्षबाधि(त)त्वाच्च प्रतिज्ञाया एतदयुक्तं। प्रत्यक्षमन्तरेण चानुमानाभावात्। स्थूलं सूक्ष्मोपचयरूपमेवेति चेत्। दत्तमत्रोत्तरं प्रागिति न पुनरुच्यते।

**तन्नार्थरूपता तस्य सत्यार्थाव्यभिचारिणा[1]।**
**तत्संवेदनभावस्य न समर्था प्रसाधने ॥३२३॥**

अर्थरूपता सत्यपि व्यभिचारिणी ततो न भावनार्थसम्वेदनमिति सिध्यति। नहि व्यभिचरन्नेव साधयत्यव्यभिचारार्थत्वात्साधनार्थस्य। व्यभिचारिणोपि साधनत्वे सर्व्वः सर्व्वस्य साधनम्भवेत्। अस्तित्वेन व्यवस्थानं साधनं। व्यभिचारस्तु कदाचिदसौ नास्त्यपीति नास्तित्वं पाक्षिकमाक्षिपति। तदिदमस्तित्वमितरच्चैकदकत्र विरुद्धं। तस्मान्नीलादिरूपतामात्रादेव विज्ञानस्यार्थसाधनता नेत्येकान्तः। अपि च सम्वेदनानामर्थानाञ्च सारूप्यन्न च तेषां परस्परं सम्वेदनभावः। न हि[2] सन्तानान्तरसम्वेदनसरूपमपि वेदकं वेद्यम्वा।

**तत्सारूप्यतदुत्पत्ती यदि संवेद्यलक्षणं।**
**संवेद्यं स्यात्समानार्थं विज्ञानं[3] समनन्तरं ॥३२४॥**

यदि यत उत्पद्यते सरूपं च तेन तस्य वेदनं तदा तर्हि अनन्तरविज्ञानं तुल्यविषयं विषयः स्यात्। यदा पूर्व्वकमपि नीलाकारमुत्तरमपि ततः समनन्तरादुदयवत्। तदा पूर्व्वकस्य सरूपकत्वादुदयकारणत्वाच्च विषयवत्त्वं प्रसक्तं। अथ यत उत्पत्तिमान्नीलादिक आकारः स तस्याकारवान् विषयः। समानविषयविज्ञाने तु य आकारः स न समनन्तरादन्यथा नीलाकारसमनन्तरात्पीतविज्ञानं न स्यात्। ततो लग्यते(?)भवति नीलाद्याकारः समनन्तरप्रत्ययकृत इति न तस्य विषयत्वं। अपरे व्याचक्षते। नीलसमनन्तराद्य दा सविकल्पकं नीलाकारमुदयमासादयति तस्य स पूर्व्वको विषयः स्यादाकारकारित्वात्तस्य। तदप्यसदिष्यत एव स्मरणस्य सम्वेदन-

---

[1] B. सत्याम्वा व्यभिचारिणी।

[2] B. टि—सन्तानान्तरवर्तिनामर्थानां सजातीय पटानां न च तेषां परस्परं सम्वेदनमस्ति। ज्ञानानां सादृश्येपि न वेदनं तदेवाह नहीति।

[3] B. नार्थविज्ञानं।

विषयत्वमेव विज्ञायते च। तथा हि सकलो लोकः[1] स्मरणादर्थवेदनं लक्ष्यते। अनुसरन्नस्मात्साक्षादर्थान्निरीक्षते। सकलमेव स्मरणमर्थानुभवे प्रवर्त्तमानमुपलक्ष्यते यदा न स्मृतिविप्रमोषः। ततश्चानुभवविषयत्वमस्येष्यत एव। न चाभ्युपगम एव दोषाय। किं च। निर्व्विषयमेतत्स्मरणमस्य किं विषयचिन्तया। अत्र क्रमः। यद्भावनाबलास्येष्टा (?) तमुपजायते पूर्व्वकान्नीलानुभवात्तस्य स पूर्व्वको विषयः प्राप्तः। कथन्तस्य समनन्तरमिति चेत्। तादृशस्यापरस्य समानजातीयस्य सम्वेदनस्यान्तरालभाविनोऽभावात्। कथन्तज्जनकमिति चेत्। दत्तमत्रोत्तरं। व्यवहितमपि जनकमिति प्रतिपादितमेतत्। अथवा विकल्पाकार एव भावनातः स्पष्टाकार एव भावनातः स्पष्टाकारजनको विषयः स्यात्। ततस्तत आकारान्नार्थस्य व्यवस्था। भावनाबलादेव समानजातीयादयमर्थाकारो यज्जातीय इति न्यायादवतिष्ठत इति नार्थपरिकल्पनायां न्यायः तस्मात्समनन्त(र)विज्ञानमेव विषयः। एवन्तर्हि।

## (ख) दृश्यदर्शने प्रत्यासत्तिविचारः—

> इदं दृष्टं श्रुतं वेदमिति यत्रावसायधीः।
> स तस्यानुभवः सैव प्रत्यासत्तिर्व्विचार्यते ॥३२५॥
> दृश्यदर्शनयोर्येन तस्य तत्साधनम्मतं[2]।
> तयोः सम्बन्धमाश्रित्य द्रष्टुरेष विनिश्चयः ॥३२६॥

यदि निश्चयादर्थव्यवस्था निश्चयः किल नार्थादन्यत्र। नहि समनन्तरप्रत्ययादयमिति निश्च(यः)। अपि त्वविषयोऽयं ममानुभवो न समनन्तरप्रत्ययविषय इति। न ह्यर्थानुभवमन्तरेणार्थ इति निश्चयो युक्तः। अनुभवानुसारित्वान्निश्चयस्य।

अत्रोच्यते। अनुभवान्नार्थव्यवस्था किन्तर्हि तदनुसारिणो निश्चयादिति। तदेतदायातमर्थ एकः पन्थानं न प्रतिपद्यते। तेनाकृष्यमाणो द्वितीय इति महदद्भुतं। तथा हि।

साक्षादुत्पत्तिमानर्थात्प्रत्ययो यः स नेक्षते। तमर्थमपरस्तस्मान्न्यूनोपीत्यनिसाहमं ॥६२६॥

अनुभवानुसारी निश्चयस्ततो निश्चयादेवावगम्यतामर्थानुभवोसौ न स्वरूपमात्रस्येति। अन्यथा तथैव निश्चयो भवेदिति चेत्।

तदेतदसत्। नन्वनुभव एव न ज्ञायते कस्येति कथमनुभवानुसारित्वं प्रसिध्यति। कुतस्तर्हि निश्चय इति चेत्। अभ्यासादेवेति प्रतिपादितं। सोप्यभ्यासोऽनुभवादेवेति कुतो विपरीतनिश्चयः। अयमप्यपरिहारः। यत एवं सति न कस्यचिद्विपरीतनिश्चयः स्याद् दृश्यते च। तस्मादयुक्तमेतत्।

नन्वालोचनमात्रमविवेककारि ततो निश्चयादेवार्थानर्थविवेकः। यद्येवं निश्चयोपि न विवेककारी स्यात्। नहि द्विचन्द्रप्रत्यय एकचन्द्रनिश्चयकारी। अथाभ्यासान्निश्चयो विवेकसाधनं। न(।)अभ्यासस्याहेतुकत्वात्। प्रतिनियतानुभवे हि तन्नियतोऽभ्यासः सत्यतां यायात्(?)। अर्थ इत्यपि निश्चयोर्थक्रियाकारित्वाभिप्राय एव। सा चार्थक्रिया प्रतिभासान्तरमेव। न च प्रतिभासात्प्रतिभासान्तरस्यानुदयः। तस्मान्न निश्चयादर्थव्यवस्था।

---

[1] इदं वाक्यं न भोटभाषान्तरे। [2] तद् दर्शनं मतम्

यदप्युक्तं। अथ सोऽनुभवः क्वास्येति। तत्राप्युच्यते।

**आत्मा स तस्यानुभवः स च नान्यस्य कस्य चित्।**
**प्रत्यक्षप्रतिवेद्यत्त्वमपि तस्य तदात्मता ॥३२७॥**

स्वरूपस्य हि पदार्थानां कारणमन्तरेण नोत्पत्तिरिति कारणप्रश्नो युक्तिमान्। तत एतदिति। क्वायमिति तु कः प्रश्नार्थः। तथा हि।

क्वायमनुभव इत्युक्ते यदा प्रत्युच्यते पुनः। अर्थे तदापि प्रश्नःस्यात् सोर्थः क्वेत्यनवस्थितिः ॥६२७॥

क्रीडनकप्रश्न एवम्विध इति चेत्। कस्मात्पर्यवसानस्य दर्शनात्। तथा हि सोर्थः क्व भूमौ। सा क्व एवमेव दृश्यते इति न पुनः पर्यनुयोगः। यद्येवमर्थस्यादर्शनादनुभवोपि स्वरूपेवस्थित एवमेव दृश्यतामिति किमाधारकल्पनया। अनेन षष्ठ्यर्थपर्यनुयोगोपि प्रत्युक्तः। तदाह।

"स च नान्यस्य कस्यचित्।"

कथं तर्हि प्रत्यक्षप्रतिवेद्योर्थो निराकर्तुं शक्यः। तथा हि। प्रत्यक्षेण नीलं पश्यन्ति तद्वन्तः। नार्थस्यादर्शनादित्युक्तं। तदाकारतैव प्रत्यक्षवेद्या न व्यतिरिक्तोर्थः। तदाकार एवं नील इति व्यवह्रियते नान्यः। तस्मान्नीलात्मकोऽनुभवो नीलानुभवः शिलापुत्रकस्य-शरीरमिति यथा। न हि षष्ठ्यर्थ इत्येव भेदः। यथाकथञ्चिदस्य भावात्। अथवा स कथं प्रत्यक्षोनुभवो यदि तस्यापरोनुभवो नास्ति। न स्वरूपगतेनैवानुभवेन सुतरां प्रत्यक्षता। पररूपे प्रत्यक्षताऽयोगात्। नहि तद्रूपमन्यस्य। तथा चेत्। अन्य एव भवेत्। अथवाऽपरोक्षं विज्ञानं यस्यानुभवः सोऽर्थो भविष्यति। यद्येवमात्मा स तस्यानुभवः। अन्यत्रावेद्यमानत्वात्। भवतु को दोष इति चेत्। "स च नान्यस्य।" यद्यात्माऽर्थस्य स्यादन्यस्यापि तथैव भवेदिति सर्व्वस्तद्दर्शी भवेत्। न चान्यस्य तथा।

ननु प्रत्यक्षेण वेद्यते नात्मना। न। तदेव रूपं पृथग्व्यवस्थाप्य कल्पनया तथा व्यपदेशः। तस्मादनन्यसम्वेद्यो नीलाद्यात्मैवानुभवः। अथवा यद्यर्थो नानुभूयते किमिदं बहिर्देशसम्बद्धतयाऽनुभवगोचरः। आत्मैवानुभूयते। चित्तमेवानुभूयते। कथं बहिर्देशता। स च नान्यस्य। ततोसौ कुतो बहिर्भूतः। अथवाऽऽत्मा स आत्मैवेदमर्थमिति भवतोप्यभ्युपगमात्। तस्य चानुभवः स च नान्यस्य अपि त्वात्मन एव तद्व्यतिरिक्तस्याभावात्। अथवा तत्स इति चेत्। न। प्रत्यक्षप्रतिवेद्यत्वात्। यतस्तदात्मनैव प्रत्यक्षप्रतिवेद्यत्वं नान्यथा।

नन्वात्मवादः प्रसक्तः। न(।) चित्राकारसम्वेदनात्। अविद्यावशेनोत्पत्तिः सम्वेदनमेव तत्। नात्मवाद उपयोगी। निरात्मकत्त्वन्तु वा रागादिप्रशमानुकूलमिति न दोषः। एतदेवोत्तरेण दर्शयति।

**नान्योनुभाव्यस्तेनास्ति तस्य नानुभवो परः।**
**तस्यापि तुल्यचोद्यत्वात्स्वयं सैव प्रकाशते ॥३२८॥**

बुद्ध्या योनुभूयते स नास्ति परः। यथान्योनुभाव्यो नास्ति तथा निवेदितं। तस्यास्तर्हि परोऽनुभवो बुद्धेरस्तु। न(।) तत्रापि ग्राह्यग्राहकलक्षणाभावः। परं हि सम्वेदनस्वरूपेऽवस्थितं कथं परस्यानुभवः। साक्षात्करणादिकं प्रत्याख्यातं। तत्सम्वेदनानुप्रवेशे च तयोरेकत्वमेव स्यात। तथा च स्वयं सैव प्रकाशते न ततः पर इति स्थितं।

कथन्तर्हि योगिनां परचित्तप्रतिपत्तिः। एतदुत्तरत्र प्रतिविधास्यते। तस्मात्स्वयमेव स्वरूपप्रकाशकत्वात्तथा भवति। एवन्तर्हि स्वरूपानुभव इत्यस्तु कथं नीलानुभव इति ख्यातिः। अत्राह।

## (ग) नीलाद्यनुभवप्रसिद्धिः—

**नीलादिरूपस्तस्यासौ स्वभावोनुभवश्च सः।**
**नीलाद्यनुभवात् ख्यातः स्वरूपानुभवोपि सन् ॥३२९॥**

नीलरूपत्वान्नीलानुभव न तु नीलस्यापरोनुभवः। शुद्धस्यानुभवस्याभावात्। यो हि यदव्यतिरिक्तः स तद्रूपेणैव व्यवहारविषयः।

तथा हि यदि शुद्धः स्यात्तथैवाध्यवसीयते। व्यतिरेकः स्वरूपेपि दृश्यते न ततस्तथा ॥६२८॥

नीलानुभव इति यथा ख्यातिस्तथैवासौ नीलस्वरूपतयाऽनुभवरूपतया भवतीति युक्तं। न च व्यतिरेकव्यपदेशमात्रकादेव भेदः। व्यतिरेकव्यपदेशो हि यथा कथञ्चिद्वासनाबलादपि भवन्नुपलभ्यत इति प्राक्प्रतिपादितं।

ननु नीलं कथमात्मरूपं प्रकाशयति। नहि प्रकाश्या घटादयः प्रदीपादिना स्वप्रकाशकाः। आत्मनि क्रिया विरुध्यते। न हि सैवासिधारा तयैव च्छिद्यते।

अत्र परिहारः।

**प्रकाशमानस्तादात्म्यात्स्वरूपस्य प्रकाशकः।**
**यथा प्रकाशोभिमतस्तथा धीरात्मवेदिनी ॥३३०॥**
**अवेद्यवेदकाकारा ;**

स्वात्मनि क्रियाविरोध इति कुतः प्रमाणादवगतं। नहि दृष्टान्तमात्रादर्थस्य प्रसिद्धिः। समीहितस्य विपर्ययेपि दृष्टान्तस्य प्रदीपस्य सम्भवात्। यदि घटः प्रदीपेन बाह्यात्मना प्रकाश्यते। प्रदीपोपि तथाभूतेनापरेणेति न पर्यनुयोगः। न च घटोपि प्रदीपेन प्रकाश्यते। अपि तु तथाभूतस्यैव तत उत्पत्तिः। अथ प्रदीपोप्यपरेण चक्षुरादिना प्रकाश्यते। न। चक्षुरादेः सकलघटादिसाधारणत्वेपि चक्षुषि च (स)त्यपि प्रदीपमपेक्षते प्रकाशकं घटस्तथा प्रदीपोपि स्यात। अथ घट उत्पद्यत एव तथा प्रकाशनन्तु तस्य चक्षुरादिभिः। एवन्तर्हि।

अप्रकाशेपि बाह्येर्थे यथा दीपात्प्रकाशनं। व्यपदेशस्य विषयश्चक्षुरादेरपीष्यतां ॥६२९॥

यथा ततस्तथाभूतरूपोत्पत्तावपि प्रदीपात्प्रदीपाभिव्यक्तो घट इति व्यपदेशः। तथा चक्षुरादिकादपि तथोत्पत्त्यैव व्यपदेशः। अथ द्वयमपि प्रकाशकं घटादेः, प्रदीपादेस्त्वेकमेव। एवन्तर्हि।

एकं कस्यचिदन्यस्य द्वयमेव प्रकाशकं। यथा सम्भवतोन्यस्य नैकमप्यस्तु का क्षतिः ॥६३०॥

अत्यन्तमशक्तस्य द्वयमपरस्यैकमन्यस्य नैकमपीति वस्तुस्वभाव एष इति का वात्र क्षतिः। अथ स्वात्मनि क्रियाविरोध इत्युच्यते।

यदा स्वरूपन्तत्तस्य तदा कैव विरोधिता। स्वरूपेण विरोधे हि सर्वमेव प्रलीयते ॥६३१॥

नहि स्वेनैव रूपेण कस्यचिद्विरोधः, तथा चेत् न किञ्चिद् भवेत् स्वेन रूपेणेति सकलमस्तंगतं भवेत्। छेदस्तु पुनर्विशिष्टोत्पादनं न च तेनैव तस्योत्पादनं। अयमेवार्थः स्वात्मनि क्रियाविरोध इति। स्वप्रकाशरूपन्तु तस्य स्वरूपं न तेनैव विरुध्यते। कुतस्तदिति वक्तव्यं स्वहेतोस्तथाभूतादिति। यदि स हेतुर्न्नास्ति तदा युक्तम्भवेत् नान्यथेति न्यायः। तत इदम्परेण वक्तव्यं स्वप्रकाशकत्वमेव न दृश्यते। तत्र चोत्तरमुक्तमेव सर्व्वस्य स्वरूपेण प्रकाशनादिति। पुनरप्युच्यते।

**तस्याश्चार्थान्तरे वेद्ये दुर्घटौ वेद्यवेदकौ।**

अर्थान्तरभूता बुद्धिः स्वप्रकाशान्यथा वा भवेत्। यदि स्वप्रकाशा स्वरूपेण प्रकाशते ततोन्योर्थस्तया प्रकाश्यत इति। नाप्रकाशे तस्मिन् व्यपदेशस्तथा भवेत्। प्रकाशते चेत्सोपि तथैव प्रकाशते तदैवेति कथं तस्य परेण प्रकाशनं। नहि तदा विशेषः प्रकाश्यप्रकाशकयोः। क्रमेण तद्व्यापारात्प्रतिपत्तिविशेषस्तस्येति चेत्। तथा हि।

ढौक्यमाने प्रदीपादौ विशेषस्तस्य गम्यते। ततस्तयोर्द्वयोस्तत्त्वं तथोत्पादो न किम्मतः॥६३२॥

विशेषः प्रकाशत इति। स्वेनैव रूपेण तस्य प्रकाशनं ततः स्वरूपस्यैव तथा प्रकाशनं। ततः स्वप्रकाशनमेवान्तेपि। अथ स्वयं प्रकाशत इति न प्रतीयते। व्यवहार एवम्भूतो न भवति तत एव उच्यते।

नन्वनुभवानुरूपो व्यवहारः प्रमाणयितव्यो न सर्व्वः। अथ सर्व्व एव व्यवहारः प्रमाणं तथा सति न किञ्चित्प्रतिवादिबोधनाय वक्तव्यं। तस्माद्यथा प्रतीयते तथाभ्युपगमः।

ननु सम्वेदन नाम न परोक्षं युक्तं तथा सम्वेद्यं न सर्व्वदा तथेति[1] न्यायः। सम्वेद्यस्य परोक्षतापि युक्ता। यदि तु सर्व्वदा सम्विदितमेव, ज्ञानार्थयोर्भेदो न गम्यते।

तदयुक्तं।

सम्वेद्यतातिरेकेण न नीलादि प्रतीयते। असम्वेद्ये प्रतीतिश्चेत्तदभावे कथम्भवेत् ॥६३३॥

असम्वेद्यमेव प्रतिपन्नमिति व्याहतं। तथा चायमर्थः स्यादप्रतीतं प्रतीतमिति। अथाप्रतीयमानं प्रत्यक्षेणानुमानेन प्रतीयते। तदप्यसत्। प्रतीयमानताव्यतिरेकेण नार्थः[2] पर इति पक्षो न तु प्रत्यक्षप्रतीततैवेति। अनुमानप्रतीतिरपि स्वरूपे प्रत्यक्षप्रतीतिरेव ग्राह्या।

ननु ततः परोपि तत्रार्थोऽस्ति परेण दृश्यमानोऽन्यथा[3] वा। न। प्रतीत्यभावादप्रतीयमानमस्तीति कुत एतत्। अनुमानेनैव प्रतीयत इति चेत्। अनुमानतैव तर्हि न स्यादर्थस्य साक्षात्करणात्। असाक्षात्करणेनेति चेत्। किमिदं तच्च नास्ति तच्चास्तीति युक्तं। असाक्षात्करणं प्रतीतिरिति कोर्थः। स्वरूपं चेत्प्रतिपन्नं तदेव साक्षात्करणं न चेदप्रतीतमेवेति न्यायः।

स्वरूपेण प्रतीतञ्चेत्साक्षात्करणमेव तत्। स्वरूपेणाप्रतीतञ्चेत्सर्व्वथास्याऽप्रतीतता॥६३४॥

---

[1] B टि—सम्विदितं

[2] B टि—अनुमानविषयातिरे(के)ण नार्थः बाह्यः। अथवा नार्थ इति प्रत्यक्षप्रतीतिरेवास्ति नार्थ इति नादरो विषयः

[3] B टि—पश्चादात्मनापि दृश्यते

स्वरूपेण प्रतीतेपि तदसाक्षात्कृतं यदि। नीलरूपस्य सम्वित्तेर्भेदस्तर्हि कथम्भवेत् ॥६३५॥
प्रतीतिभेदाद् भेदो हि नीला[1]देरेकरूपता। भिन्नेन्यस्मिन्कथम्भेदस्तदन्यस्य प्रमान्वितः ॥६३६॥
तत्संसर्गात्तथात्वञ्चेदपरोक्षः कुतो भवेत्। तदेकताप्रपन्नस्य ततो भेदः कुतो मतः ॥६३७॥
अन्वयव्यतिरेकाभ्यां भेदोपोद्धारिको न सन्। न हि प्रत्यक्षसम्वित्तिरन्वयव्यतिरेकयोः ॥६३८॥
अनुमानात्प्रतीतिश्चेन्नानुमाध्यक्षपूर्व्विका। तदभावेनुमाभावे भवेद धपरम्परा ॥६३९॥
व्याप्यस्यापि हि तद्भावो व्यापकेन विना कथं। अप्रतीतं कथन्नाम तद व्यापकमुच्यते ॥६४०॥

**यदि हि तदा प्रतीयते प्रतीत्यं तद्गतमेव कथमर्थता। अथ न प्रतीयते कथं व्यापकताप्रतीतिः। व्यापकत्वेन प्राक् प्रतीतमिति चेत्। किमिदानीमनुमानेन। एतत्कालता न प्रतिपन्ना ततोनुमानं न व्यर्थं। कथन्तर्हि व्यापकताप्रतीतिः।**

प्रागिदानी प्रतीतिर्न्न कथं व्यापकतागतिः। प्रतीतिमात्रकन्तच्चेत्कथं व्याप्तन्तदुच्यते ॥६४१॥
धूमाकारा प्रतीतिर्हि न विना पावकं यदि। पावकप्रत्ययोप्यपि विना पावकमिष्यते ॥६४२॥

**पावककार्यो धूमः कथं प्रतीतिमात्रं।**

**तदसत्। तथा हि।**

सति पावककार्यत्वे धूमादेर्बाह्यरूपता। बाह्यत्वे च प्रसिद्धे स्यात्तस्य पावककार्यता ॥६४३॥

**तदिदमितिरेतराश्रयणव्यवस्थितवस्तुकमनुपन्यसनीयमेव ( ) अनेन प्रत्यभिज्ञाज्ञानमव ज्ञातं। य आह प्रत्यभिज्ञाबलादेव विज्ञानमात्रता निराक्रियते। तथा हि।**

यदि सम्वेदनान्तस्थः प्रत्यभिज्ञा किमर्थिका। अथासम्वेदनोर्थात्मा कथं विज्ञप्तिमात्रता ॥६४४॥

**नहि मध्यसत्तार्थस्य प्रत्यभिज्ञया प्रतीयमाना सम्वेदनान्तद्गतापरोक्षतया प्रतीतेरिति। तदसत्। तथा हि। परोक्षतयापि प्रतीतिः प्रतीत्यन्तर्गतत्त्वमेव वस्तुनः प्रतीत्यन्तर्गतस्याप्रतीतेरिति चेत् प्रतिपादितं। अप्रतीत्य मध्यसत्तामन्तरेण कथं प्रत्यभिज्ञेति चेत्। पूर्वं परयोः समानजातीयत्वप्रतीतिमात्रकादेव दृष्टा, तथैव भविष्यति किमपरेण, लूनपुनर्जातकेशनखप्रत्यभिज्ञावत्। अथ तत्र जात्यादिविषयः प्रत्यभिज्ञाप्रत्ययः। जातिरेवैकेति प्रतीयतां ततो व्यक्तेरेकता न सिध्यति। न च जातिरपि मध्य विद्यते। प्रमाणाभावात्। प्रत्यभिज्ञा प्रमाणमिति चेत्। न। स्वरूपमात्रमेव पूर्व्वापर प्रत्यभिज्ञाया निबन्धनमिति तदेवालम्बनं प्रत्यभिज्ञायाः। न च तदेव प्रत्यभिज्ञाज्ञानं मध्यरूपालम्बनं, मध्यरूपस्यावेदनात्। न खलु परोक्षमदृष्टमालम्ब्यते। दृष्टत्त्वे च तदपरोक्षत्त्वाद्विज्ञानमेव। ननु परोक्षं चेत्कथं विज्ञानं यस्यामवस्थायामस्ति तस्यामपरोक्षमेव। इदानीमतीततया परोक्षत्त्वेपि न विज्ञानत्वहानिः। यदि स्यादर्थस्याप्यर्थत्वहानिः स्यात्। अर्थस्याप्यतीतत्वेर्थत्वहानिः समस्त्येवेति चेत्। न तर्हि मध्यसत्तायामर्थत्वं तस्या अप्यतीतत्त्वात्। अतीतत्त्वेपि परोक्षतायामप्यर्थत्वं नापैति विरोधाभावात्। सम्वेदनत्वं त्वसम्विदितस्य कथमिति चेत्। अर्थत्वमपि तर्हि कथमनर्थक्रियाकारिणः। न ह्यसम्विदितमर्थक्रियाकरणसमर्थं। अनुमानेन तस्य वेदनं प्रत्याख्यातं। अन्येन मध्ये वेदने तदेव विज्ञानत्वं न चान्येन विदितत्वं प्रत्यभिज्ञायते। ततस्तेन सहैकता नास्ति। प्रत्यभिज्ञात एकत्वाप्रसिद्धेः। अनुमानाकारश्च वासनाबलादुत्पत्तेरेक एव विज्ञानात्मना ततो वासनात एव सकल आकारः परिस्फुटप्रतिभासोपि।**

---

[1] B टि—प्रतीतिभेदाद् यदि न भेद एकता नीलादेः

ननु वासनाया एकरूपत्वादाकारभेदो विज्ञानानां कथं । वासनाभेदाद् भेद इति चेत् । यदि वासना नीलपीताद्यनन्तभेदा विज्ञानस्य जनिका तदाकारताया बाह्यस्यास्याश्च को भेदः । वासनेति हि नाममात्रमेव ।

तदसत् ।

वासना पूर्व्वविज्ञानकृतिका शक्तिरुच्यते । तस्या अमूर्तताभावात् कथमर्थसमानता ॥६४५॥

वासनेति हि पूर्व्वं विज्ञानजनितां शक्तिमामनन्ति वासनास्वरूपविदः । अर्थस्तु पुनर्मूर्त्तरूपः सदोपद्रवदायी ।

नन्वर्थोऽपि सम्विदितावस्थायामेवोपद्रुतिहेतुर्न्न सदा । ततो वासनाबलादुदयभावी प्रतिभास उपद्रुतिहेतुरर्थो वेति कोनयोर्भेदः ।

तदसत् ।

अविशेषेपि बाह्यस्य स्पष्टत्वादेर्व्विशेषतः । भावनाया विशेषेण नार्थस्य प्रतिभासनं ॥६४६॥

भावनाबलायातत्त्वे हि विपरीतवासनाविनिवृत्तौ स्व(ा)भीष्टवासनासमागमसमयेऽनभीष्टविनिवृत्तिरिष्टस्य च प्राप्तिरिति महानेष भेदः । ततो बुद्धिरूपवासनाकृत एव सकलो भेदावभासः ।

ननु वासनाया एकविज्ञानात्मभूतत्वात्प्रबोधके सति सकलवासनाप्रबोधादनन्तप्रतिभासविज्ञानोदयः स्यादिति महदसमञ्जसं । बाह्याभ्युपगमे तु न दोषः । य एव सन्निहितोऽर्थः स एव दृश्यते । न । असन्निहितस्यापि दर्शनाभ्युपगमात् । तथा हि ।

विप्रमोषः स्मृतेरिष्टः कैश्चित्तु विपरीतचित् । असत्ख्यातिः परैरन्यैः सर्व्वं सर्व्वत्र विद्यते ॥६४७॥

येषान्तावत्सर्व्वं सर्व्वत्र विद्यते तेषां समान एव दोषः । असत्ख्यातावपि सकलासप्रतिभासनप्रसङ्गः । यस्य तु स्मृतिविप्रमोषः तस्याप्यनेकदर्शनं पूर्व्वं कस्मान्नानेकदर्शनं समानमेतद्विज्ञानवादेपीति न दोषवान् । विज्ञानं वा पूर्व्ववृत्तं स्मर्येतार्थो वेति को भेदः । विपरीतख्यातिरपि पूर्व्वदृष्टे प्रवर्त्ततामन्यथा वा किन्न सर्व्वत्रेति समानः पर्यनुयोगः पुनरपि तत्र स एव वासनानियमो वक्तव्य इति समानं । न च समनन्तरविज्ञानात्मभूता वासनेष्यते । पटुप्रकाशः पूर्व्वात्मप्रतिभासो हि वासना (।)

तथाभूतात्मसम्वित्तिजनकत्वाद्विना कुतः ।

प्रबोधक य सद्भावे धियां जन्म यथायथं । नीलपीतादिनिर्भा(स)सङ्गतानामितीक्ष्यते ॥६४८॥

इविदमेवात्रेक्ष्यते पूर्व्वविज्ञानमभिमतेतरप्रतिभासं पाटवादिप्रकाराधिष्टितं ततस्तदनन्तरं कालान्तरे वा तथा भूतम्विज्ञानमुदयवत् । जाग्रद्दृष्टं स्वप्नप्रतिभासं जनयीत यथा । व्यवहितात्कथमुत्पत्तिरिति चेत् । दृष्टाः स्मृतिः स्वप्नविज्ञानादयो व्यवहितादपीति न दृष्टे[1]ऽनिष्टन्नाम ।

ननु नासौ जन(य)त्यथ प्रणिधानादेस्तदेव प्रतिभाति । न । अतीतस्य प्रतिभासाभावात् । अतीतमपि प्रतिभासमानं दृष्टमिति चेत् । असत्प्रतिभासत इति कोर्थः । तदाकारा प्रतीतिरित्ययमेव । तस्मादनुभवात्स्मृतिरुदयमासादयन्ती तस्यैव शक्तिविशेषमावेदयति । स

---

[1] C. 33a6—34a3 पृष्ठयोः मोटग्रन्थे प्रमादतो लब्धो भागोत्र ४५-४६ पृष्ठयोरुपलभ्यते ।

**शक्तिविशेषो वा स नेति व्यपदेश्यः। अयञ्च कार्यकारणभाव एवम्भूत उपलब्ध एव। ततो न वासनास्तित्वे पूर्व्वविज्ञानभेदे च प्रमाणाभावोऽनादिवासनाभावस्य पदार्थानादितावदेव सिद्धेः।**

कार्यकारणसन्तानो नादिर्व्वाह्यो यथोदितः। तथाविज्ञानसन्तानो नादिः किमिति नेष्यते ॥६४९॥

**वासनाभेदे किन्निमित्तमिति चेत्। तदसत्।**

अस्त्येव वासनाभेदस्तन्निमित्तस्य सम्भवात्। ज्ञानभेदो निमित्त हि तस्य भेदस्ततः पुनः ॥६५०॥

**पूर्व्वप्रवृत्तज्ञानभेद एव वासनाभेदनिबन्धनं, ज्ञानभेदोपि तत एव वासनाभेदादिति को दोषः। नन्वेवमितरेतराश्रयणदोषस्तदसद्यतः।**

न सैव वासना तेन जन्या तस्यैव कारणं। ज्ञानस्य येन दोषोयमितरेतरसंश्रयः ॥६५१॥

**अपि त्वन्या वासनान्यविज्ञानभेदहेतुरन्यः प्रत्ययोन्यवासनाहेतुः पूर्व्ववासनाभेदजनितः। ततो नेतरेतराश्रयदोषः। अन्यथार्थदर्शनेपि समानमेतत्। तथा हि।**

अर्थभेदो निमित्तं चेत् तस्य भेदः कथं पुनः। ज्ञानभेदेन भेदे हि प्रापदन्योन्यसंश्रय ॥६५२॥

**न खल्वर्थभेदोप्यनिमित्त एव ज्ञानभेदनिबन्धनन्तस्यायोगात्। ज्ञानभेदो निमित्तमितीतरेतराश्रयदोषः। अर्थभेद एवार्थभेदस्य निमित्तमिति सुतरामसङ्गतं। अथान्योर्थभेदोन्यस्यार्थ(भे)दस्य निबन्धनमिति सोप्यन्यस्येति वासनायामपि समानमेतत्।**

**नन्वर्थभेदः प्रतिभासमानो भिन्न(?न)त्ति विज्ञानमिति युक्तमेतत्। वासना तु कथमिति कः परिहारः। यदि वासनापि प्रतिभासतेर्थवदर्थ एव सेति नाममात्रकमेव भिद्यते। तत्र वासनामात्रग्राहके व्याप्रियमाणा ग्राहकभेदमेव जनयेत्। न तु ग्राह्यस्य। तथा ह्यनुभवादुत्पन्ना वासना स्मृतिमात्रमेव जनयन्ती दृश्यते। अत्र परिहारः।**

पूर्व्वविज्ञानमेवात्र वासनेत्युदितं पुरा। तत्तदाकारविज्ञानं जनयदभेदकं न किं ॥६५३॥
यथा हि शृङ्खलाबन्धः स्त्यनिता गतिमादवत्। अभावेप्यात्मनो दृष्टस्तद्रूपगतिकारणम् ॥६५४॥
वासनाभेदतो भेदो ग्राह्याकारेपि दृश्यते। अभावेपि पदार्थाना कामशोकभयादिषु ॥६५५॥

**अथ तत्रापि देशकालान्यथात्मकं बाह्यमेवालम्बनं सर्वविज्ञानानां सालम्बनत्वात्। यद्यपि तदा तत्र न प्राप्यते तदैव तत्रैव माभूदन्यदान्यत्र तु नास्तीति किमत्र प्रमाणं। तथा हि घटो यत्र यदा नोपलभ्यते तदा तत्र नास्ति न तु सर्व्वत्र। अत्रोच्यते।**

इहोपलभ्यमानस्य कथ देशादिनान्यता। नीलादित्वेन दृश्यस्य किमन्याकारतास्ति वः ॥६५६॥

**यद्यन्यदेशोप्यन्यदेशतयोपलभ्यते नीलाकारोपि तथेति समानमेतत्। अन्याकारे प्रमाणाभावादन्यथा नेति परिहारेन्यदेशोन्यथेति समानः परिहारः। आकारे नास्ति बाधनं देशे तु बाधा तेन स एव देशयोगी नास्ति न त्वाकारः। तत्र तर्हि निरालम्बनं ततः सर्व्वं सालम्बनमित्यसिद्धं।**

**ननु सालम्बनत्वं तत्रापि यतः।**

देशाधेयातिरेकेण न योगः कश्चिदीक्ष्यते। तयोरालम्बनत्वे च ज्ञानानालम्बता कथं ॥६५७॥

**देशतदाधेयाकार एव तत्र प्रतिभाति तयोश्च सत्त्वे किमनालम्बनं रूपं। नहि योगोऽपरस्तयोरिति सालम्बनमेव सकलम्विज्ञानमिति।**

यदि योगेपि सालम्बं कथं प्राप्तिस्तथैव न । अप्राप्तावपि सालम्बमिति स्यादसमञ्जसं ॥६५८॥

**यदि नास्ति प्राप्तिस्तथापि सालम्बनम्विपरीतख्यातिरपि तर्हि नास्त्येवेति अभ्युपगम-विरोधः। अपि च विपरीतख्यातिस्तथा सर्व्वमेव भवतु किमन्यथा कल्पनयेत्यादर्शितमेवैतदिति नोच्यते पुनः। बाधकप्रत्ययाभावान्नैवमिति चेत्। बाधकप्रत्ययाभावोपि विपरीतख्यातिरेवेति न सत्त्या बाधकता। यत्र च कालान्यता तत्र वासनाया एव व्यापारः प्रतीयते नार्थस्य, पूर्व्वानु-भवादेव तदाकारता नाविद्यमानार्थाकारप्रतिभासनम्। अथ क्षणिकम्विज्ञानं कथं वास्यवासक-भावस्तत्र।**

अनुत्पन्नं न वास्येत अतीतोपि न वासकः।

**सहितयोरपि परस्परमसम्बन्धान्न वास्यवासकभावः। तदसत्। कार्यकारणभावविशेष एव वास्यवासकभाव इति प्रतिपादनात्। क्षणिकानामेव च स विद्यते न नित्यानामिति क्षणिक-त्वादिति विपरीतसाधनमेतत्। ततश्च।**

स्मृतौ ग्राहकभेदोन्यो न ग्राह्याकारवर्ज्जितः। अर्थस्तत्र न सत्त्वेन तत्र सन्निहितः पुरः ॥६५९॥
क्षणिकेषु च चित्तेषु विनाशे च निरन्वये। वास्यवासकयोरर्थो न नित्यत्त्वे तु कल्प्यते ॥६६०॥
पूर्व्वक्षणाद्भवन्नेव विशिष्टो जायते क्षणः। ततः कालान्तरे तस्मादन्यत्कार्यं विजायते ॥६६१॥
वास्यवासकभावोय नापरं कार्यकारणात् ॥

विनश्यता हि वास्येत पूर्व्वेणोत्तरमुद्भवत्। अवस्थिता न वास्यन्ते भावा भावैरवस्थितैः ॥६६२॥
नित्यस्य ह्यविकारत्त्वात्कार्यकारणता कुतः। अवस्थितो न पूर्व्वस्माद्वासनासङ्गमर्हति ॥६६३॥
पूर्व्ववद्वासना तस्य न स्यादविशेषतः। भङ्गुरे पूर्व्वसादृश्याद्भिन्नत्वाच्चास्ति वासना ॥६६४॥
तच्चानुरूप्यमस्त्येव क्षणिकत्वेपि चेतसा। पूर्व्वज्ञानात्तदोत्पन्नादुत्तरस्योदयो न किं ॥६६५॥
नेष्यते क्षण एवासौ कार्यमुत्पादयेत्परं। तेनोत्पद्य विनष्टत्वेप्यस्त्यारम्भः क्षणं स्थितेः ॥६६६॥
निरन्वयविनाशित्वे यानुरूप्यस्य कः क्षतिः। न तदीयोस्ति कश्चिच्चेद्धर्म उत्तरबुद्धिषु ॥६६७॥
न समानपरामर्शप्रत्ययादेकरूपता। यदि स्यादानुरूप्याच्च गोधियो वासना यदा ॥६६८॥
हस्तिबुद्धिर्भवेत्तत्र वैलक्षण्यान्न वासना। अन्यथा व्यवधानेपि वासना पूर्व्वदार्ढ्यतः ॥६६९॥
दृढमावर्जकं ज्ञानं व्यवधानेपि कार्यकृत्। गजज्ञानाद् गजज्ञानं पूर्व्ववज्जातप्रवर्त्तते ॥६७०॥
मध्ये विलक्षणं ज्ञानं जायते वासनान्तरात्। न चैकज्ञाननाशेन विनष्टाः सर्व्ववासनाः ॥६७१॥
कुसुमस्य विनाशे हि राग उत्पद्यतां कुतः। बीजाङ्कुरादि नालादेस्तद्विलक्षणतः कथं ॥६७२॥
तेपि तज्जनिता एव क्रमात्कार्यस्य कारकाः। महिष्यादिधियामेतत्कस्मादेव न विद्यते ॥६७३॥
तन्न सर्व्वाभ्य एताभ्यः सर्व्वाकारं समुत्थितं। ज्ञानमेकक्षणेनैव विनाशं गन्तुमर्हति ॥६७४॥
तदाश्रयविनाशेपि शक्तेः स्यादाश्रयापरः। न च क्षणिकताहानिः शक्तेरव्यतिरेकतः ॥६७५॥
वासनानां प्रवाहस्तु नैव ज्ञानप्रवाहवत्। इष्यते वासनाविद्भिः शक्तिरूपा हि वासना ॥६७६॥
वासनातश्च तज्ज्ञानं भवेत्तेभ्यश्च वासना। कुर्यातां तुल्यमेवैतेऽन्योन्यन्तु (हि) कदाचन ॥६७७॥
विलक्षणोपि हेतुर्यदस्ति शक्त्यन्तरात्मकः। ततो विलक्षणाद्धेतोः फलमन्यद्विलक्षणं ॥६७८॥
तस्मात्सम्वृतिसत्येषाव्यतिरेकेण कल्पिता। न वस्तुत्वे न तस्याः किं कार्यमन्यदसम्भवि ॥६७९॥
यस्यत्ववस्थितो ज्ञाता ज्ञानाभ्यासश्च सम्मतः। न तस्य वासनाधारो नाप्यसौ वासना मता ॥६८०॥
कुसुमे बीजपूरादेः यल्लाक्षाद्युपसिच्यति। तद्रूपस्यैव संक्रान्तिः फले तस्येति वासना ॥६८१॥

युक्त्योपपन्नां हि सतीं प्रकल्प्य यद्वासनामर्थनिराक्रियेयं।
तथापि बाह्याभिनिवेश एष जगद् ग्रहग्रस्तमिदं समस्तं ॥६८२॥
तस्माद्विभक्त आकारः सकलो वासनाबलात्। बहिरर्थत्वरहितस्ततो ऽनालम्बना मतिः ॥६८३॥

**अत एव सर्व्वे प्रत्यया अनालम्बनाः प्रत्ययत्वात्स्वप्नप्रत्ययवदिति प्रमाणस्य परिशुद्धिः। तथा हीदमेवानालम्बनत्वं यदात्माकारवेदनत्वं।**

**ननु सकलप्रत्ययपक्षीकरणे न दृष्टान्त इति कथमनुमानं। न (।) अर्थापरिज्ञानात् (।)**

प्रमाणफलमेतद्धि प्रमाणापेक्षसाधने। दृष्टान्तस्य ह्यतः सिद्धेः सर्व्वं इत्यादियुक्तिमत् ॥६८४॥

**विवादास्पदीभूतजाग्रत्प्रत्यया एव पक्षीकृताः। स्वप्नप्रत्ययानान्तु भावनान्वयव्यतिरेकानुविधानात्सिद्धमेव निरालम्बनत्वं दृष्टान्तीक्रियते। कथं व्याप्तिसिद्धिः। यज्जातीयो यतः सिद्ध इति न्यायात्। अन्यथा सकलकार्यकारणभावाभाव एव भवेत्प्रमाणाभावात्। अन्वयव्यतिरेकानुविधानमेव हेतुफलयोस्तत्त्वमाचक्षते तद्विदः।**

आदराभ्याससंसर्गि जाग्रद्दृष्टं हि दृश्यते। स्वप्ने ततो परं ज्ञानं तथैवेति प्रतीयतां ॥६८५॥

**ननु न प्रत्ययत्वादनालम्बनत्वं स्वप्नप्रत्ययानामपि तु बाधकसद्भावात्। तथा हि।**

स्वप्नदृष्टं पुनर्जाग्रिद्दर्शनेन न दृश्यते। तेनान्यदा तदैवान्यैस्तदनालम्बनं ततः ॥६८६॥
बाधकप्रत्ययस्तस्यालम्बनम्विनिवारयन्। नानालम्बनताज्ञानं करोत्यत्र सुनिश्चित ॥६८७॥

**न चैवं स्वप्नज्ञानवद्बाधको जाग्रत्प्रत्यये। तत्कथं तद्दृष्टान्तः।**

**नैतदस्ति। बाधकप्रत्ययो हि कथन्तस्य विषयापहारक्षमः। नहि ज्ञानस्यार्थापनयनं व्यापारोऽङ्कुरादीनामिव। कस्तर्हि। ज्ञापनव्यापार एव। तथा च नास्य विषयोस्तीति परेण ज्ञापयितव्यं। अभावञ्चानुपलब्धिरेव ज्ञापयति। एकः प्रतिषेधहेतुरिति वचनात्। विरोधस्याप्यनुपलब्ध्यैव साधनात्। ततस्तत्प्रमेयशून्यतावबोध एव बाधकेन करणीयः। तदभावश्चान्य भाव एवेति तदन्यालम्बनतैव बाधकत्वं। तच्च जाग्रत्प्रत्ययेपि[1] सकलं सम्भवि।**

**ननु जाग्रत्प्रत्ययेनैवं भवति नैतदेवमिति, तत्कथं स बाधितः।**

**ननु नैतदेवमेतदेवमिति फलमसम्वेदनेतरयोः ततः कथं फलतो व्यवस्था न सम्वेदनात्। फलेन हि व्यवस्था प्रमाणाभावात्सम्वृतिसदेव। सम्वेदनमन्तरेण कथं फलमिति चेत्। असम्वेदने सम्वेदनात्। ततः फलमिवार्थसम्वेदनमपि स्वसम्वेदनमात्रमेव। ततस्तत्रैवार्थसम्वेदनमिति व्यवस्था। तथा हि।**

अर्थसम्वेदने ज्ञाते तदनन्तरतो भवत्। फलन्तस्य भवेदेवं गमकन्नान्यथा तु तत् ॥६८८॥

**तस्मादिदमेव तस्य बाधकं यदन्यरूपग्राहकत्वं तच्च सर्व्वप्रत्ययापेक्षया प्रत्ययान्तराणां।**

**ननु जाग्रत्प्रत्ययार्थः सम्वादी तत्कथन्तस्यान्येनाग्रहणं। स्वप्नप्रत्ययानामपि तत्स्वप्नदर्शिना तदन्यस्वप्नप्रत्ययग्रहणादविसम्वादनमेव। तत्कथं बाध्यत्वं। जाग्रत्प्रत्ययेन बाध्यत्वादिति**

[1] B. टि—दिवाविज्ञानस्य धारकत्वं स्वप्नविज्ञानविषयालम्बकत्वात्। तच्च जाग्रत्प्रत्ययेपि स्वप्नप्रत्ययस्य विषयान्तरालम्बना सम्भवति। पटज्ञानस्य घटज्ञानम्वा।

**चेत्। जाग्रत्प्रत्ययोपि तेनेति समानमेतत्। निद्रोपहते मनसि तस्य भाव इति न बाधकत्वं। यथोपहते चक्षुषि न केशादिदर्शनं तद्विपर्ययस्य बाधकमिति। तदसत्।**

सिद्धेनोपहतं चेतः केनेदं संप्रतीयतां। न तावत्तदवस्थायामिदमेवं प्रतीयते ॥६८९॥

**स्वपन् प्रत्येति व्युत्थितो वा। ननु स्वप्नेपि विद्यते सर्व्वमेतत्। तथा हि (।)**

स्वपन्तमात्मानं प्रत्येति प्रबुद्धं पुनरेति च। स्वप्नेपि तत्केन कृतो विभागो भवतोदितः ॥६९०॥

**स्वप्नेपि प्रबोधादिव्यवहारो दृश्यते। ततोऽयमपि प्रबोधादिव्यवहारोऽलक्षणत्वेनेक्षणात् कथं संप्रत्ययकृत्। अथ संप्रत्ययसम्वेदनादेवं स्वप्नेप्येवमिति समानमेतत्। अथ स्वप्नेपि स्वप्न एष इति कदाचित्संप्रत्ययस्ततो नैवं। सत्यमेतदिति किं न संप्रत्ययोस्ति। ततः सत्यता भवतु। अत एवानवस्थितः स्वप्न इति चेत्। अयमप्यनवस्थित एवैश्वर्यादीनामनवस्थानादेव। सहेतुकमिहानवस्थानं अहेतुकं स्वप्न इति चेत्। तथा हि। झटित्येव स्वप्नदृष्टं नश्यति। वासनादार्ढ्यमेतन्नत्वर्थ एवं साधयितुं शक्यः। तथा हि।**

प्रियादिदृष्टिरत्रापि झटित्येव विनश्यति। तत्स्वप्नेपि भवत्येव दिनं संततदर्शनं ॥६९१॥

**ननु स्वप्नास्वप्नप्रत्यययोर्व्विवेकसाधनं ज्ञानं प्रमाणमप्रमाणम्वेति द्वयी कल्पना। यदि प्रमाणं तदा सालम्बनं तदिति तेनानैकान्तः। अथ न प्रमाणन्तदा न पक्षदृष्टान्तप्रसिद्धिरिति कथमनुमानावतारः। कथं निरालम्बनत्वप्रसिद्धिः।**

**तदसत्। प्रमाणमेव तदिति न दोषः। न च सालम्बनं सकलं प्रमाणमनुमानस्य सालम्बनत्वाभावात्। अनालम्बनत्वेपीह व्यवहाराविसम्वादापेक्षया प्रमाणत्वात्। भेदश्च यद्यपि तयोः सिद्धः स्वप्नेतरविज्ञानयोस्तथापि न तत्साधकं प्रमाणं सालम्बनमिति न सर्व्वसालम्बनत्वप्रसङ्गः।**

लौकिकप्रतिपत्त्यैव ततो भेदे प्रसाधिते। साध्यदृष्टान्तचिन्तेयं प्रतिभाससमाश्रयात् ॥६९२॥

**लोके तावदिदं स्वप्नविज्ञानमिदं जाग्रत इति विभागः प्रतीयते[1]। ततस्तदाश्रयेण साध्यसाधनव्यवहारः। ततः पश्चाद्यदि परामृशतो न किञ्चिदत्र विभागकरणमुपलक्ष्यत इति साधयत्यभेदं तथा सति कः परस्य दोषः। यदि च दोष एवं स्यात् वेदप्रामाण्यसाधनेपि दोषो भवेत्। तथा हि।**

**वेदो धर्मो कथन्तस्य लौकिकाद्वचनाद्विवेक इति पर्यनुयुक्तेन किम्वक्तव्यं। यद्यप्रमाणं लौकिकवचनसदृशमिति कथन्तस्य विवेकेन धर्मित्वं। अथ प्रमाणत्वं प्रसाध्य विवेकं कथयेत् तथा सति किं साधनोपन्यासस्य फलं। तत एव तच्चोद्यं कथं परिहर्त्तव्यं। नत्वन्यत एवस्वरवर्ण्णानुपूर्व्वीविशेषाद्वेदस्य प्रबन्धभेदसिद्धिः। नान्येषामपि परस्परस्य तथा भेदसिद्धेः। अथास्ति तावदेष प्रबन्धः किमयम्वेद उत नेति विचार्यमाणो यदि प्रमाणं भविष्यति वेद एवान्यथा नानेन प्रयोजनमिति परित्यक्ष्यामः। एवं तर्हि समानमिदमिति परित्यक्ष्यामः। एवन्तर्हि समानमिदमत्रापि प्रत्ययस्तावदीक्ष्यते।**

स्वप्नप्रसिद्धिरस्मात्किं भिन्ना नो वेति कल्पने। या वा भविष्यति परं तथा द्रक्ष्याम इत्यपि ॥६९३॥

---

[1] B. तत्स्वप्नदर्शना–इति बहिःपंक्ति पाठः।

**यदि पश्चाद्विचार्यमाणं स्वप्नज्ञानमन्यद्वा परस्परं परमार्थतो भिन्नमभिन्नम्वेति भवेत्तथा ग्रहीष्यामः। तत्र यदि परामृष्यमाणेन भेदे प्रमाणं किमप्यस्तीत्यभेदं प्रतिपत्स्यामहे। ततः क इवात्र विरोधः। पूर्व्वं भेदग्राहकमप्रमाणमिति चेत्। भवतु को दोषः। पक्षादिप्रविभागो न भवेदिति चेत्। मा भूदिदानीं किं नो विघटितं। इदमेव यदप्रमाणत्वमभेदसाधनस्य। एवं तर्हि।**

यत्साधारणधर्मित्वप्रतिपत्तिस्तथा सति। प्रमाणन्न भवेदन्यदप्येवं द्वारकं परं ॥६९४॥

**वेदलक्षणप्रमाणाप्रमाणसाधारणधर्मिप्रतिपत्तिरप्रमाणमेव स्यात्पश्चात्प्रमाणत्वसाधनेन निवर्त्तनात्। ततो धर्मिसाधनस्याप्रमाणत्वात्तद्द्वारेण प्रामाण्यसाधनमप्यप्रमाणं भवेदिति न वेदप्रामाण्यप्रसिद्धिः। ततः सकल एव साध्यसाधनव्यवहारो विशीर्येत। अथ धर्मिणः साधारणस्य ग्रहणेपि न तद्ग्राहकमप्रमाणं प्रामाण्यस्याधिकस्य तत्रैव साधनात्। यदि तत्प्रमेयोन्माननं परेण स्यात् स्यादप्रामाण्यं।**

**तदप्यसत्। यतः।**

प्रमाणत्वं हि तस्यैव स्वरूपं धर्मिणो यदा। तस्य तत्परिहारेण ग्रहणेपि कथं प्रमा ॥६९५॥

**प्रमाणस्वरूपं हि वेदवचनं तस्य तद्विपर्ययग्रहणे तद्विपर्ययप्रमेयोन्मूलने परेण कृते कथमप्रमाणता न भवेत्। नहि स्वरूपेणैव कस्यचिदाधिक्यं। अगृहीते तदाधिक्यव्यवहार इति चेत्। अग्रहणे कथं प्रमाणता(।) कस्यचिद्रूपस्य ग्रहणादिति चेत्। न। भेदाभावात्। व्यतिरिक्तधर्माभ्युपगमान्नैवञ्चेत्। न। अनवस्थाप्रसङ्गात्।**

व्यतिरिक्तो यदा धर्मम् तेन योगः परो भवेत्। तेन योगः पुनस्तेनेत्यनन्तो धर्मविप्लवः ॥६९६॥
तद्युक्तत्वं तयोरेव स्वरूपं यदि सम्मतं। प्रमाणत्वं तथा प्राप्तमस्माकं का विरोधिता ॥६९७॥
भेदेनापि गृहीतस्य समारोपस्य भावतः। परामर्शादभेदस्य प्रतिपत्तिः किमप्रमा ॥६९८॥

**अथापि स्याद् भवतोऽभेदं प्रतियतः कथं विवेकेन पक्षीकरणादिविभागेन साधनप्रवर्त्तनं।**

**तदसत्। परप्रत्ययापेक्षयेदमनुवादमात्रकं स्वयमपि पूर्व्वाभ्यासेन साधनप्रयोग इति न किञ्चिदवद्यं। ममाप्येवमासीदिति परः प्रतिपाद्यते।**

स्वप्नादिबाधधीवच्चेत् सकलः प्रत्ययो न किं। सालम्बनः प्रसाध्येत प्रत्ययत्वात्परैरपि ॥६९९॥

**यथा निरालम्बनाः सर्व्वप्रत्ययाः प्रत्ययत्वात्स्वप्नप्रत्ययवदिति तथा सालम्बनाः सर्व्वप्रत्ययाः स्वप्नबाधकप्रत्ययवदेव। अत्रोच्यते।**

प्रत्ययत्वाविशेषेण स्वप्नप्रत्ययतः परः। प्रत्ययोन्यो निरालम्ब इति किं प्रतिसाधनं ॥७००॥

**यथा स्वप्नप्रत्ययत्वाविशेषाद्बाधकप्रमाणपरिनिश्चितनिरालम्बनत्वप्रतिबन्धादनालम्बनत्वसाधनं तथा यदि सालम्बनत्वमपि ततो विरुद्धाव्यभिचारीति नैकस्यापि प्रसिद्धिरिति तदेव निरालम्बनत्वं। न च सालम्बनत्वे साध्ये प्रतिबन्धः। अनुपलब्ध्या तुद्वयोरपि निरालम्बनत्वं। तथा हि।**

यथास्वरूपविन्मात्रादपरस्याप्रवेदनं। स्वप्नादिप्रत्यये जाग्रत्प्रत्ययेपि तथेष्यते ॥७०१॥

**नहि जाग्रत्प्रतिभाससम्विदितमपि परेण वेद्यते। प्रत्ययान्तरस्यैव तथा वेदनादित्युक्त-**

मेव तत्। तत्राप्यालम्बनमस्त्येवेति चेत्। तस्मादर्थक्रिया न भवति। यदि नामार्थक्रियाकारि न भवति प्रतीयमानं त्वस्त्येव। न ह्येकस्याभावेऽपरं न भवति। नहि धूमाभावादग्निर्न भवति। सर्व्वदा[1]ऽभावार्त्तिकशुकराशिवन्न भवत्येवेति चेत्। एवन्तर्हि तदर्थक्रियाकारि न भवति किंशुकराशिवत्। स्वेनरूपेणास्तु। किंशुकराशिः स्वेन रूपेणार्थक्रियाकारी भवतु न स्वप्नोपलब्धः। नहि स्वप्नभुक्तं पुष्टिकृत्। अथ रूपमेव तत्तथाविधं तेन नेति चेत्। न। स्वरूपसम्वेदनाद्विज्ञानमेव तदिति सूक्तं। अथ स्वरूपत्वे को विरोधः। वासनाबलभावित्वं स्वप्रतीतत्त्वञ्च। अर्थ एव तादृशो भविष्यतीति चेत्। नामकरणमात्रकमेतत्। भवतोपि किन्नेति चेत्। न(।)अनन्तरकारणाधीनस्य प्रतिपादनात्। तेन ज्ञानमेव तत्। तथा च।

तस्याश्चार्थान्तरे वेद्ये दुर्घटौ वेद्यवेदकौ ।।

नहि तदर्थान्तरं तस्या एव भवति रूपं। ततोऽप्रवेशे न वेदनं। प्रवेशे नार्थान्तरं। ननु यदि बुद्धिस्वरूपमेव तत्तस्य स्वसम्विदितेन नीलादिना भवितव्यं। कथं परेणापि वेदनं(।) न। भ्रान्तिरेषा तैमिरिकद्वयद्विचन्द्रदर्शनवत्। तत्राप्यर्थ एवेति चेत्। तथा हि।

अभ्रान्तः प्रत्ययो यद्वदर्थानां वेदको मतः। साधारणानां भ्रान्तोपि तथार्थस्यैव वेदकः ।।७०२।।

यथा साधारणत्त्वेन प्रतीयमानो भ्रान्ताभिमतप्रत्ययार्थस्तथेतरोपि। तदयुक्तं।

साधारणत्वमर्थस्य न प्रत्यक्षतयेक्ष्यते। प्रत्यक्षासम्भवादत्र नानुमानं न वेदनं ।।७०३।।

न तावत्प्रत्यक्षेण परवेदनसाधारणता प्रतीयते। अन्यथा लिङ्गमन्तरेणैव सकलपरप्रतीतिवेदनप्रसङ्गः। अथ परेणापि प्रतीयमानं तादृशमेव तत्। ततः सैव तस्य साधारणतेति चेत्। यथा मयैतत्प्रतीयते तथा परेणापि योग्यदेशस्थितेन प्रतीयत इति हि लोकप्रतीतिः। न। तैमिरिककेशादिषु स्वप्नदृष्टेषु चैवं प्रतीतेरभावात्। तत्रापि भवत्येवेति चेत्। इदमेव रूपं स्वप्नावस्थायामपि ततस्तत्समानत्वादसावपि बाह्य एव। न। भावनादावात्मप्रतिभास एव तादृशो न तु परः तत्रास्तीति लोकस्य प्रतीतिः एवं एतदवस्थापीति समानं। परमार्थतस्तु स्वरूपप्रतिभासमात्रकमुभयत्रापीति न सालम्बनता।

ननु स्वप्ने व्याकुलत्त्वमयत्ननिर्व्वर्त्त्यं सकलं तत् कथं समानता प्रत्ययानां। तदसत्।

नीलादिप्रतिभासेभ्यः कान्या व्याकुलतेक्ष्यते। साप्यभ्यासबलायाता ततः कथमियं स्थितिः ।।७०४।।

नीलपीतादिप्रतिभास एव केवलः कुतोऽपरा तत्र व्याकुलताऽयत्नोपनतिश्च। स्वप्ने प्रयत्नमन्तरेण भावो वृक्षादिस्थाने झटित्येव तद्रागादेरिति चेत्। ननु प्रयत्नमन्तरेण भाव इति केन परिगृहीतं, कार्यभाविना प्रत्ययेन कार्यमेव कारणभाविना तु कारणं। इदमतो भवतीति क्रमः। इदमन्तरेणेदमित्यपि क्रम इत्यध्यवसायः। न प्रत्यक्षमत्र नानुमानं। आकुलमेतदित्यपि न केनचिद्वेद्यते। भावनाविशेषाच्च निराकुलतादिभावः स्वप्नेपि। तथा जाग्रदवस्थायामपि। अरिष्टादावाकुलतादर्शनं। अरिष्टदोषादेव चेत्। न। अरिष्टानरिष्टयोर्व्विशेषाभावात्। तत्राप्यपरेण विवेककारिणा भवितव्यं। तत्राप्यपरेणेति नैवं भूतोस्ति यतो विवेकः। स्वयमेव विवेक इति चेत्। न। स्वरूपनिष्ठितामात्रत्वादस्य। नहि स्वरूपनिष्ठस्य परसम्वेदनं। स्वरूपमात्रवेदनं त्वाकुलानाकुलसमानं। दीर्घकालानुबन्धि-

---

[1] B. टि—सर्वथा

व्यभिचाररहितमनाकुलमिति चेत्। न। प्रत्यक्षेण दीर्घकालानुबन्धाग्रहणात्। ततः परो विकल्प एवावशिष्यते। तेन च नार्थप्रतिपत्तिः। ततोपि न व्यवस्था तस्यापि स्वरूपे प्रत्यक्षत्वात्। वस्त्वनुभवेन जनितो विकल्पः संवादीति चेत्। न। प्रतिबन्धाग्रहणात्। यदा वस्त्वनुभवो न तदा विकल्पः, स यदा न तदानुभव इति कुतोऽत्र सत्यार्थग्रहणं। विकल्पेनेति चेत्। अयमपि न प्रमाणम्। तस्यापि प्रतिबन्धसापेक्षत्वादपरो विकल्प इत्यनवस्था। एवन्तर्हि वासनयापि कथं सम्बन्धग्रहणं। न। परमार्थतस्तयापीति पक्ष एवायमिति प्रतिपादितं।

कार्यकारणभावाख्या वासनाभ्युपगम्यते। बाह्यार्थवादिभिर्ग्राह्यं न तु विज्ञानवादिभिः ॥७०५॥

वासनाजन्यतामन्तरेणापि विज्ञानमात्रकमेतदिति प्रतिपादितमेवेति न दोषः। ननु वासनाभाविता न जाग्रद्विज्ञाने प्रतीयते। स्वप्नावस्थायां न स्वप्नप्रति(भा)सनमिति समानमेतत्। उत्थितस्य भवति जाग्रदवस्थायां तु न तथेति चेत्। तदपि यत् किञ्चित्। तथाहि।

उक्तमेतत्प्रबोधो हि स्वप्नेपि प्रतिवेदितः। ततः प्रबोधावस्था या न स्वप्नाद्भिन्न लक्षणा ॥७०६॥

प्रबुद्धोहमिति स्वप्नेपि भवत्येव। ततः कथं प्रबोधप्रतिभासतो व्यवस्था। अन्येन प्रबोधेन सापि स्वप्नत्वमापादितेति चेत्। इयन् तु न केनचिदपीति। अतएव पदार्थव्यवस्था यद्यपि न तथा तथापि तत्समानत्वान्न प्रत्ययस्थानं। अनुमानकालभाविनो हि धूमस्य नाग्निपूर्वकत्वसिद्धेरनुमानकत्वमपि तु तल्लणक्षत्वेन। एवमस्या अपि जाग्रदवस्थायास्तल्लक्षणत्वादेव तद्रूपता।

ननु न तत्र भावनाव्यापार उपलभ्यते जाग्रदवस्थायां कथं स्वप्नतुल्यता। तदाह।

भावनाव्यधानेपि भवत्येवावभासनं। बालदृष्टं यथा वृद्धावस्थायामुपलभ्यते ॥७०७॥
जन्मान्तरादिदृष्टस्य मरणस्वापसम्भवे। जन्मान्तरोदयः स्वप्न इति किं न प्रतीयते ॥७०८॥

यथा रजनीस्वाप तथा मरणरजन्यामपि।

दिने दिने दर्शनमत्र चित्रं स्वापप्रबोधात् न तथा किमेतत्।
पूर्व्वस्य यद्दर्शनमेष हेतुः पदार्थदृष्टेरिति साम्यमेव ॥७०९॥

पूर्व्वदिनदृष्टं यथा रजनीस्वप्नदर्शनस्य हेतुस्तथा पूर्व्वपूर्व्वदिनदृष्टमपररजनीव्यवहितदिनस्वप्नदर्शनमेवेति महतीयं स्वप्नपरंपरा। अपूर्व्वस्यापि दर्शनमिति चेत्, स्वप्नाभिमतेप्येवमेवेति सर्व्वं समानं।

गमनागमनं स्वप्ने यथान्यान्योपलम्भकृत्। गमनागमनं जाग्रत्स्वप्नेपि न किमिष्यते ॥७१०॥

व्यवहाराभावादिति चेत् अनेनैवानुमानेन विदुषां व्यवहार इति किन्न पर्याप्तं। यथा कार्यकारणव्यवहार आनुमानिकः तथायमपीति समानं। क्षणिकत्त्वे च न व्यवहार इति किं तेन न भवितव्यं। तदपि नेति चेत्। एतत्प्रतिपादयिष्यामः।

ननु निद्रोपघातात्स्वप्नदर्शनमसत्यार्थमिति युक्तं। ननु परिस्फुरन्नेवासौ कथं स्वप्नः। प्रारम्भे तु स्वप्नत्वं नोपयुज्यते। तदेव तस्य प्रतिभासस्य कारणञ्चेत्। न। भावनाविशेषात्प्रतिभासविशेषदृष्टेः। समानेपि स्वापप्रारम्भे कश्चित्कथञ्चित् स्वप्नदर्शी भवति। तदभावेऽभावादिति चेत्। भवतु निमित्तमात्रत्वं तथापि न तस्य प्रतिभासविशेषकारणत्वं।

**अयमपि स्वापानन्तरमेव प्रतिभासः ततः समानता स्वप्नेन प्रबोधे सतीति चेत्। न। प्रतिभासव्यतिरेकेण प्रबोधाभावात्। प्रबुद्ध इति प्रत्ययात् प्रबोध इति चेत्। न। स्वप्नेपि स प्रत्यय इत्युक्तं। तस्मान्न स्वप्नेतरयोर्विशेषः। ततो यो विशेषदर्शनात् सालम्बननिरालम्बनत्वभेदमाह तस्य तद्विशिष्टत्वमसिद्धमिति दूषणं। नन्विदानीं सालम्बनत्वसिद्धिः प्राप्ता जाग्रत्प्रत्ययाविशेषादिति विपर्ययसिद्धिः। न। विपरीतादिख्यातेरभावप्रसङ्गात् जाग्रत्प्रत्ययवदेव तथा चाभ्युपगमबाधः। किञ्च।**

बाधकप्रत्ययो व्यक्तः प्रत्ययत्वादिहेतुना। विधातु नान्यथा शक्यो नामुना व्यक्तबाधिका ।।७११।।

**बाधकप्रत्ययो ह्यनुपलब्धिलक्षणो विपर्ययोपलब्धिरूपः प्रत्यक्षरूपो नानुमानेन प्रत्ययत्वादिना बाधितुं शक्यः। यदि धूमादग्न्यनुमाने पश्चाद्विपर्यये प्रत्यक्षवृत्तिः किमनुमानं प्रमाणं।**

**ननु प्रत्यक्षवृत्तावपि यदि द्विचन्द्रविषयेनुमानं बाधकं किन्तत्प्रत्यक्षमिति समानो न्यायः। न। तत्रापि प्रत्यक्षस्यैव बाधकत्वं। पूर्व्वमेकस्य दर्शनात्। अन्यथानुमानमेव न स्यात्।**

**न तु प्रत्यक्षमनुमानपूर्व्वकं। यदि तु स्यात्। अनुमानमेव तत्रापि बाधकमिति भवेदनुमानबाधायां प्रत्यक्षमप्रमाणम्। तथा च परस्परव्याघातान्न किञ्चिद् भवेत्। ततः प्रत्यक्षमूलमनुमानं। न त्वनुमानमूलं प्रत्यक्षं।**

**नन्वनुमानमूलमेव प्रत्यक्षमपि व्यवस्थितं। तथा**

नानुमानं विनाध्यक्षं प्रथमं संप्रवर्तकं । अनुमानेन सम्बन्धग्रहणेस्मात्प्रवर्तनात् ।।७१२।।

**अनुमानेन हि सम्बन्धग्रहणेऽर्थक्रियया प्रत्यक्षस्य प्रवर्त्तकत्वं ततोऽनुमानात्प्रत्यक्षं प्रमाणं प्रत्यक्षादनुमानमिति समानं परस्परबाधनं। यद्येवमितरेतराश्रयणदोष एव स्यान्न तु प्रामाण्यमेकस्यापि। उक्तमेतत्स्वरूपस्य स्वतो गतिः। प्रामाण्यव्यवहारेण व्यतिरिक्ते प्रवृत्तिविषयेथात्मनि। तच्चानादिव्यवहारान्धपरम्परया। तच्च सम्वादात्प्रमाणं सम्बादश्च भाविनि। भाविनि च सम्वेदनमेव। ततः कथमर्थविषयं प्रामाण्यं।। अनुमानमपि स्वरूपविषये प्रत्यक्षमन्तरेणैव चेत्। न। तत्र तस्य प्रत्यक्षतैवेति। ततोनुमानेन प्रत्यक्षं व्यतिरिक्ते[1] बाध्यते। तस्या[2]नुमानविषयत्वात्। परोक्षत्वात्तस्य। कथं परोक्षे[3] प्रत्यक्षं प्रमाणमिति चेत्। प्रवर्त्तकत्वेन। न ग्रहणेन। ग्रहणं चेदप्रवर्त्तकमेव भवेत्। तथा हि।**

यद्यसावेव पूर्वस्मिन् प्रत्यक्षे प्रतिभासिनः। प्रवर्तेत किमर्थं स प्राप्त एव स्वरूपतः ।।७१३।।
अर्थक्रियार्थिनो वृत्तिर्न सा र्ताह प्रकाशिता। प्रकाशमानताया हि पुनः स्यादप्रवर्तनम् ।।७१४।।
प्रकाशितार्थक्रियापि प्राप्त्यर्थं संप्रवर्त्तते । प्राप्तेरप्रतिभासत्वाद्वृत्तिरप्रतिभासिते ।।७१५।।

**तत्र चानुमाने च न(?) बाध्यते यदि सुतरामस्मत्समीहितसिद्धिः। तथा हि। व्यतिरिक्तेऽर्थेऽनुमानेन प्रवर्त्यते प्रत्यक्षं। स च परोक्षत्वादनुमानस्य विषय इति तत्रैवानुमानेन बाधा प्रत्यक्षस्य। तत्र चानुमानबाधायामनुमानमेवानुमानेन बाधितं भवेत्। तच्चान्धपरम्परायातमनुमानं। तस्यानुमानेन बाधने प्रत्यक्षेण वा न कदाचित्क्षतिः। प्रत्यक्षतत्समुत्थापितानुमानयोस्तु नानुमानेन बाधा न प्रत्यक्षेणेति न्याय एषः।**

---

[1] B. टि—भाविनि [2] B. टि—तस्य भाविनः
[3] B. टि—समानविषयत्वात् बाध्यबाधकस्प

ननु प्रत्यक्षमपि द्विचन्द्रविषयमेकचन्द्रावभासिना तदुत्तरकालभाविनान्येन वा बाध्यत एव। तस्याप्रत्यक्षत्वादिति चेत्। कस्माद्बाध्यमानत्वात्। परस्परपरिहारेणावस्थितयोः कथं बाध्यबाधकभावः। एवमेतदिति चेत्। द्वयोरपि बाध्यबाधकभाव इति। न प्रापकत्वादेकस्य बाधकत्वमेव। तथा ह्येकत्राभिप्रेतप्रापकत्वं नापरस्य। एवन्तर्हि तदेव पारम्पर्येणानुमानस्य बाध्यत्वमायातं। ततो निरालम्बनाः सर्व्व एव प्रत्ययाः स्वप्नप्रत्ययवदिति कोर्थः (।) स्वरूपालम्बनाः। तत्र च प्रत्यक्षन्तत्समुत्थापितं चानुमानमनुपलब्धिरूपं। तच्च नानुमानेनान्येन वा बाधितुं शक्यम्। व्यतिरिक्तालम्बनसाधनं तु न प्रत्यक्षं नापि तदुत्थापितमनुमानमन्धपरस्परायातत्वात्। तत्र चानुमानं प्रत्यक्षं वा भवति बाधकमित्येकान्त एषः। ततः सर्व्वे सालम्बना जाग्रत्प्रत्ययवदिति न प्रतिप्रमाणममूलत्वात्। स्वप्नादीनां सालम्बनत्वबाधिका बुद्धिरनालम्बना। तथा सति तद्दृष्टान्तेन कथं सालम्बनत्वसिद्धिः।

ननु च निरालम्बनत्वं प्रत्ययान्तरगतं तदनया बुद्ध्या साध्यते। तच्च व्यतिरिक्तं। ततोन्योपि प्रत्ययो व्यतिरिक्तसाध्यविषय एव प्रत्ययत्वादिति कथमप्रतिप्रमाणम्। यदि नाम प्रत्यक्षपूर्व्वकत्वादस्या[1] व्यतिरिक्तालम्बनत्वं। तद्विपर्ययबुद्धेस्तु विपर्ययग्रस्तायाः किमायातं येन सापि तथेष्यते। न चासौ व्यतिरेकं साधयति, व्यवहारमात्रप्रसाधनात्। अपरं व्यतिरिक्तेतरालम्बनं सम्वादयति। स च सम्वादस्तदनुभवाभिनिवेशी तत्काल एव। ततो नेदानीन्त[2]दत्र प्रतिभाति मयि। अहन्तु स्वाकारपर्यवसितैवेति तदात्मानमनालम्बनमेव प्रतिपादयति ततो नानया[3] सालम्बनया परापि सालम्बना साध्यते।

## ( ग ) ग्राह्यग्राहकाकारप्रतिभासव्यवसायः—

ननु यदि तद्रूपं न विषयीकरोति कथमनया तत्साधितम्। तत्र सम्बादादित्युक्तं। सम्बादाद्विषयीकृतमिति ज्ञायते। अत एवाह।

> अवेद्यवेदकाकाराः यथा भ्रान्तैर्निरीक्ष्यते ॥३३१॥
> विभक्तलक्षणग्राह्यग्राहकाकारविप्लवा।
> तथाकृतव्यवस्थेयं केशादिज्ञानभेदवत् ॥३३२॥
> यदा तदा न संचोद्यग्राह्यग्राहकलक्षणा।

अवेद्य एव वस्तुनि वेदकाकारा केशादौ प्राप्य, न हि तत्र केशादौ प्राप्ये बुद्धिर्वेदिका तस्यासत्त्वात्। भ्रान्तैस्तु प्राप्य वेदिकेति प्रतीयते। अतश्च प्रतीयते यत्प्रवर्त्तन्ते। तत्रेदानीं प्रवृत्तानां प्राप्तिर्नास्ति तत्रानालम्बनत्वं स्फुटमेव। तेनापरमनालम्बनं साध्यते। समानरूपोपलक्षणाद्विलक्षणस्यानुपलक्षणात्। सालम्बनत्वन्तु न क्वचिदुपलक्षितं ततः कथं तत्समानत्वात्सर्व्वसालम्बनत्वप्रसिद्धिः। नहि प्राप्य रूपप्रतिभासि तदुपलक्षितं प्रवृत्तेरेवान्यथा तस्य प्रतिभासनादप्रवर्त्तनं स्यादित्युक्तं। प्रतिभासितेपि पुनः प्रतिभासनार्थं प्रवर्त्तत इति चेत्। पुनः प्रतिभासमानत्वन्तर्हि न प्रतिभासितं। तस्यापि प्रतिभासमानत्वेन प्रवर्त्ततेत्यनवस्था। पुनः

---

[1] B. टि—अनालम्बनसाधन्या बुद्धेः

[2] B. टि—जाग्रत्प्रत्ययगतमनालम्बनं नेदानीमपि प्रति। अहमेव तदाकारबुद्धिरित्यर्थनालम्बना

[3] B. टि—अनुमानसाधन्या

**प्रतिभासनञ्च किमर्थं। सुखार्थं ग्रहणार्थम्वेति चेत्। तदर्थं तर्हि प्रवर्त्तते। तच्चाप्रतिभासितमेव। तस्मादप्रतिभासमान एव सर्व्वत्र विषयत्त्वमित्यनालम्बनं सकलं सम्वेदनमिति कथन्ततो विपर्ययसाधनं। कथन्तर्ह्यविषयीकृते प्रवर्त्तते।**

**तदसत्।**

विषयीकृतेपि हि कथं प्रवर्त्तनमितीरितं। कार्यकारणभावोयमेवमेव व्यवस्थितः ॥७१६॥

**स्वसम्वेदनप्रतिपत्तेः प्रतिपत्त्यनन्तरम्भवति स्वहेतुसामर्थ्यादहेतुतो वा। यथा दृष्टं तथाभ्युपगम्यतामत एवोक्तं (।) "निर्व्यापाराः सर्व्वधर्मा" इति। अथवा व्यतिरिक्तस्य पूर्व्वमप्रतिपत्तेः प्राप्यस्य पश्चाच्च भेदप्रमाणाभावात्कथं व्यतिरिक्तप्रतीतिः। एतेनार्थक्रिययापि सहकार्यकारणभावः प्रत्युक्तः। पूर्व्वापरयोर्भेदाप्रतीतेः समानकालस्य चाजन्यत्वात् स्वरूपमेवार्थक्रिया सा च स्वप्नेप्यस्तीति समानं। ततो बुद्धिरवेद्यवेदकाकारैव। विभक्तलक्षणौ ग्राह्यग्राहकाकारौ विप्लव एव ततः। ततः स्वरूपमात्रसम्वेदनादपरो विकल्प एव केवलमुदेति पूर्व्वानुबोधात्। ततस्तथा व्यवस्था न परमार्थतस्तत्र तथात्वं। तथा हि केशज्ञाने सति पूर्व्वानुस्मरणादेवंभूतप्रतिभासानन्तरं प्राप्तिरासीत्। ततो विकल्पो ग्राह्यग्राहकोल्लेखेनोत्पत्तिमान्। सोपि स्वरूपे ग्राह्यग्राहकरूपरहित एवापरेण तथा व्यवस्थाप्यते। न तस्यापि स्वतो व्यवस्था।**

सम्वेदनेन बाह्यत्त्वमतोर्थस्य न सिध्यति। सम्वेदनाद्बहिर्भावे स एवन्तु न सिध्यति ॥७१७॥
यदि सम्वेद्यते नील कथ बाह्य तदुच्यते। न चेत्सम्वेद्यते नीलं कथम्बाह्यं तदुच्यते ॥७१८॥
अन्येन वेदने तेन कथम्बाह्यन्तदुच्यते। अन्येन वेदने तेन तेनेत्येषानवस्थितिः ॥७१९॥
अन्येन वेदनञ्चेतत्कुतोऽवसितमात्मना। तत्कार्यदर्शनान्नैतत्कार्यत्वस्याप्रसिद्धितः ॥७२०॥

**नहि कार्यकारणभावः प्रसिध्यतीति निवेदितमेतत्। अनुमानस्य सामान्यविषयत्वस्य वर्णनात्।**

स एव दृश्यतेन्येनेत्येतदेव न सिध्यति। यथा च रोमहर्षादिकार्यदृष्टेस्तदेकता ॥७२१॥
तथा सुखादेरेकत्वं तत एव प्रसिध्यति। अन्यदेव सुखन्तस्य ग्राह्यमप्यन्यदस्तु तत् ॥७२२॥
देशभेदात्सुखादीनामन्यत्त्वमिति चेन्मतिः। एकत्वे देशभेदोपि कथं सिध्यति तत्वतः ॥७२३॥
तत एव सुखादन्यरोमहर्षादयो न किं। अन्यत्वाद्रोमहर्षादेः सुखस्य यदि भिन्नतां ॥७२४॥
अन्यत्वे ग्राह्यमप्यन्यदिति कस्मान्न गृह्यते। रोमहर्षादयोप्यस्मत्सम्विदन्तर्गता यदि ॥७२५॥
कथन्तेन्योन्यसातादिप्रतिभासगतिः स्फुटा। अस्मत्सुखं विनाप्यस्य रोमहर्षादयो यदि ॥७२६॥
अस्मद्ग्राह्यम्विनाप्यस्य रोमहर्षादयो न किं। कालभेदेन तत्रापि यदि भेदः समिष्यते ॥७२७॥
अभिन्नस्य स्वरूपेण कालभित्किङ्करिष्यति। अभेदोप्यस्तु तत्रापि परोक्षो न भवेदसौ ॥७२८॥
सम्वित्तिपरिहारेण स्थितमेकं कथञ्च तत्।

**यदि तदेकमेवाद्याप्यनुवर्त्तते कथमस्य परोक्षता। परस्परसम्वेदनपरिहारेण च व्यवस्थितं कथमेकमिति चिन्त्यमेवैतत्। यदि च साधारणत्वं प्रतिभाति त्वया दृष्टं न वेति किमिति प्रश्नः। प्रमाणान्तरसम्वादार्थं। यदि प्रत्यक्षान्न प्रत्येति वचनादपि नैव प्रत्येष्यति। तदपि स्वप्रतिभासमेव सूचयति त्वत्प्रतिभासितं मम प्रतिभातीति तेनापि बुधैवं ज्ञातव्यं। तत इतरे-**

**तराश्रयदोषः। यच्च प्रत्यक्षेण न प्रतिपन्नं तत् कथं वचनात्प्रत्येतव्यं। नहि प्रत्यक्षेर्थे परोपदेशो गरीयान्। किञ्च।**

प्रत्यक्षस्य प्रमाणत्वे वचनस्य प्रमाणता। वचनस्य प्रमाणत्वे प्रत्यक्षस्येत्यसाध्वदः ॥७२९॥
परस्परसहायत्वं न तैमिरिकयोर्द्वयोः। न प्रत्येकमसामर्थ्ये समुदायस्य तद्यतः ॥७३०॥

**तस्माच्चक्षुरादिकरणाधीनस्वसम्वेदनत्वाद्विज्ञानमेव नीलादिकमित्यवेद्यवेदकाकारा बुद्धिरूपा बुद्धिः। तथैव कृतव्यवस्थेयं बुद्धिः। तथैव वेदनादिति परमार्थः। ततः स्वसम्वेदनमेव फलमर्थ इति च निश्चयस्तत्रैव। नार्थसम्वेदनन्नामास्तीति। ततो यदुक्तं न ग्राह्यस्य स्वरूपग्राहकत्वे दृष्टान्तः कश्चिदस्तीति। तत्र विपर्ययाभावेऽनुपलब्धिसाधिते कथमदृष्टान्तता शशविषाणादिरनुपलभ्यमानो दृष्टान्तः प्रत्यक्षप्रसिद्धे वा किं दृष्टान्तेन। ततो यदि शक्ष्यामो विस्पष्टं स्वाङ्गग्राह्यनिवारणम्। तदा शुद्ध एव ते पक्षो विशेषणरहित एव ग्राह्यनिवारणो भवेत्। तस्य च पक्षस्य प्रत्यक्षेण बाधनं। यतः प्रत्यक्षादेः प्रत्ययवर्गस्य बाह्यमेवालम्बनमवशिष्यते। स्वाङ्गग्राह्यनिवारणात् इति यदुक्तं परेण, तदसङ्गतं। प्रत्यक्षस्य बाह्यविषयत्वाभावस्य प्रतिपादनात् स्वनिश्चयेनैव तेषां जाग्रत्प्रत्ययानां बाधकरहितत्त्वेनावलम्बनत्त्वमिति चेत्। न।**

स्वनिश्चितत्त्वमेतेषां स्वाङ्ग एव समीक्ष्यते। निश्चयो बहिरर्थे तु नासावनवभासिते ॥७३१॥

**प्रतिभासस्मरणातिरेकेण न निश्चयो नाम। न तावत्प्रतिभासनमर्थस्य प्रतिभासाभावे च न स्मरणं। ततोऽपरस्य निश्चयस्याभावात् निश्चयो बहिरर्थ इति वचनमात्रकमेवैतदिति व्यर्थं।**

[1]दुष्टज्ञानगृहीतेर्थे प्रतिषेधो हि युज्यते। अगृहीतग्रहग्राहनिषेधः किन्न युक्तिमान् ॥७३२॥
गृहीतमात्रबाधे तु स्वपक्षस्या[2]स्त्यसिद्धता। अगृहीतस्य सत्वन्तु भवता कथमुच्यते ॥७३३॥
अग्राह्यत्वाच्च भेदेन विशेषणविशेष्ययोः। अप्रसि[3]द्धोभयत्वं वा वाच्यमन्यतरस्य वा ॥७३४॥
भेदेन पूर्वग्रहणात्पश्चात्तत्त्वनिरूपने(?णे)। न भेदः परमार्थेन ततः किम्वा विरुध्यते ॥७३५॥
विशेषणविशेष्यत्त्वं व्यावृत्तिपरिकल्पितं। कार्यकृद्बौद्धराद्धान्ते न गतं श्रुतिगोचरं ॥७३६॥
चक्ष[4]श्श्रोत्रोश्च यज्ज्ञानं विशेषणविशेष्ययोः।
तन्निरालम्बनत्वेन स्ववाग्बाधो न कस्यचित् ॥७३७॥
सम्भवोस्ति प्रभेदस्य विशेषणविशेष्ययोः। ततो निरूपणा किन्न प्रतिज्ञार्थस्य शोभना ॥७३८॥

**अपि च।**

निरालम्बनता नाम न किञ्चिद्वस्तु गम्यते। तेनैतद्व्यतिरेकादौ प्रश्नो नैवोपपत्तिमान् ॥७३९॥
यद्यवस्तु कथन्त्वस्मांस्त्वंबोधयितुमिच्छसि। बुध्यसे वा स्वबुध्या त्वं कल्पयित्वाथ साध्यते॥७४०॥

---

[1] श्लोकवार्तिके एताः कारिकाः २२५ पृष्ठे। परं तत्र 'अगृहीतग्रहग्राह—', 'अगृहीतस्य सत्त्वं तु—'इत्यर्धद्वयं, 'भेदेन पूर्वग्रहणात—''विशेषणविशेष्यत्वं—'इति श्लोकद्वयं च नास्ति।
[2] श्लोकवार्तिके स्वपक्षोऽपि न सिद्ध्यतीति पाठः।
[3] ,, अप्रसिद्धोभयत्वं वेतिपाठः।
[4] ,, वक्तृश्रोत्रोरिति पाठः। [5] श्लोकवार्तिके २२६ पृ.।

असतः कल्पना कीदृक् तत् क्लिष्टौ वस्तु सज्यते । कथमिष्टमभावे चेद्वस्तु सोपीति वक्ष्यते[५] ॥७४१॥

उक्तमेतद्व्यावृत्तिभेदकल्पितेन रूपेण विशेषणविशेष्यभावो निरालम्बनत्वं कल्पितबाह्यालम्बनभेदेन पृथगिव व्यवस्थाप्यते । तथाभूतस्वरूपबोधनाय न परमार्थतो भेद प्रतिपाद्यतेऽभेदप्रतिपादतस्य वस्तुत्वात् । अवस्तुनि कल्पना कथमिति चेत् । अत एव । अन्यथा

वस्तुनः कल्पना कीदृक् तथाऽवस्तु प्रसज्यते । अभावे कल्पनावृत्तिर्न च वस्तु स विद्यते ॥७४२॥
[१]अथ प्रत्यय इत्येष कर्मभावादि वा भवेत् । भावादिषु विरोधः स्यात्कर्म चेत्सिद्धसाधनं ॥७४३॥

कर्म न उच्यते प्रत्यय इत्येष धर्मिरूपोऽन्यः कर्मव्युत्पत्त्या वा स्यात् प्रत्याय्यत इति प्रत्ययः । अथवा प्रतीतिः प्रत्ययः । प्रत्याययति प्रत्याय्यतेऽनेनेति वा प्रत्यय इति । भावकर्तृकरणरूपता वा स्यात् सर्व्वमेतदनुपपन्नं । यदि प्रतीतिः प्रत्ययः सा प्रत्याय्येन विना न भवति । एवं कर्त्रादिकमपि । ततश्च प्रत्यय इति बाह्यार्थापेक्षः । निरालम्बन इति तदभाव इति परस्परविरोधिता ।

तदसत् । यदि प्रतीतिः प्रत्ययः सा स्वात्मनिष्ठाऽन्येन विना न भवतीति कुत एतत् । अन्यस्य तस्यामदर्शनात् । स्वरूपमेव च तत्र प्रत्याय्यं भविष्यति किमन्येन । तथा च प्रतिपादितं । प्रत्याययति प्रत्याय्यतेऽनेनात्मैवेति किञ्चिद्विरोधगतमत्र । कर्म चेत् कर्मत्वं नाम नावगम्यते । स्वरूपेण हि नीलादिकं प्रतिभासते न तु तस्यापरा कर्मता नाम । यद्यसावन्येन कर्त्रा स्वव्यापारेणार्थ्यमान उपलभ्येत तदेवालम्बनमन्यस्य तच्च निराक्रियते यदि कथं सिद्धसाधनम् । किंत्वसावर्थ्यमान एव न सिध्यति । ततः कथं कर्मतया तस्यालम्बनभावः । स्वरूपेण तदा लभ्यते चेदिदमिदानीं सिद्धसाधनम् ।

नन्वालम्ब्यमान आत्मना अहं नीलं प्रत्येमीति प्रतीयते । तदसत् ।

अहमित्यपि यत् ज्ञानन्तच्छरीरेन्द्रियात्मवित् । अहं काणः सुखी गौरः समानाधारवेदनात् ॥७४४॥

न हीन्द्रियादिभ्योऽपरमात्मानमहं प्रत्ययालम्बनत्वेनोपलभामहे ।

ये ( प्रेरणमेतेषां स आत्मा चेदनन्यवित् । स्वस्वभावोदयादेषां प्रमाणं नापरं क्वचित् ॥७४५॥
उदयश्च यतो दृष्टः स एव प्रेरको यदि । अन्योन्यप्रत्ययत्वेन प्रेरकास्ते परस्परम् ॥७४६॥
समुदायात्तदन्यस्य समुदायस्य सम्भवे (।) कार्यकारणभावेन व्यवहारः प्रवर्त्तते ॥७४७॥
बुद्धिरूपविवेकेन प्रेरकं नान्यदीक्ष्यते । पूर्व्वपूर्व्वस्तथाभूताभ्यासो वा प्रेरकः क्वचित् ॥७४८॥
सुखेन्द्रियाकारबुद्धेर्यदि बुद्धयन्तरोदयः । नीलाद्याकारतां प्राप्तः तत्कृतः कर्मकर्तृता ॥७४९॥
समानकालवृत्तौ वा व्यापारो न परस्परं । ततः कर्मादिभावानां न भाव उपपत्तिमान् ॥७५०॥

यत्तूक्तं ।

प्रत्य[२]यस्य हि रूपादेर्निरालम्बनतेष्यते । स्वविज्ञानात्मकत्वेन किञ्चिन्नालम्बते ह्यसौ[३] ॥७५१॥

तदत्यन्तमसत् । यतः ।

प्रत्ययस्य न रूपादेर्निरालम्बनतेष्यते । अबोधरूपव्यावृत्तः स्वाङ्गमालम्बते ह्यसौ ॥७५२॥

---

[१] T. श्लोकवार्तिके २२६ पृ० ।
[२] श्लोकवार्तिके प्रत्याय्यस्येति पाठः । [३] श्लोकवार्तिके २२७ पृष्ठे ।

**व्यतिरिक्तालम्बनत्वेन तु निरालम्बनता विज्ञानात्मकत्वेनैव सुतरामिति प्रतिपादितम् । यत्पुनरभ्यधायि ।**

कर्त्तृत्वे करणत्वे वा पक्षत्वं शब्दयोरपि(।)

तन्निरालम्बलनत्वेन पक्षाभावः प्रसज्यत इति ।।७५३।।

**तदतिसुभाषितं । यतः । ताभ्यामपि किल प्रत्याय्यते निरालम्बनप्रत्ययशब्दाभ्यां ततः तयोरपि प्रत्ययत्वं । तदनालम्बनत्वेन कश्चित्प्रत्यक्षः शब्दगतमात्रकमेव केवलं ।**

अर्थो नालम्बनं तत्र व्यावृत्तिः शब्दगोचरः । तस्य सम्वादितामात्रात् पक्षत्वं न विरुध्यते ।।७५४।।

**नहि शब्दगोचर एव पक्षः । साधनविषयत्वात्तस्य[1] । साधनञ्च प्रत्यक्षलक्षणोऽनुपलम्भः[2] । तेन स्वाकारालम्बनता साध्या सा पक्षः । कथं पक्षाभावः । प्रत्यय इति चात्र ज्ञानं प्रकरणादवगतं तत्कथं शब्दद्वारकदूषणावसरः । नहि यावद्व्युत्पत्त्या विषयीक्रियते स शब्दप्रतिपाद्योपि तु प्रकरणायात एवान्यथा न शब्दादर्थगतिः । सामान्यशब्दानामपि प्रकरणाद्विशेषवृत्तितोपलभ्यते, सैन्धवमानयेति यथा । भोजनबेलायां लवणस्यैव प्रतीतिः । इदमप्येकफूत्कारेणैव गतं । यदाह ।**

प्रत्याय्येन च वाक्येन[3] विना कर्त्राद्यसम्भवः ।

प्रत्यये तन्निमित्ते वा बाधः स्ववचनेन ते[4] ।।७५५।।

**यदि न प्रत्यायपयति किञ्चित्प्रत्याय्यते वा न तेन, कथमसौ तथा, प्रत्ययविषयाभावे वा किम्विषया प्रतीतिरिति । यतः ।**

प्रत्याय्येन हि भिन्नेन विना कर्त्रादिसम्भवः । प्रत्यये तन्निमित्ते च बाधः स्ववचनात्कथं ।।७५६।।
कल्पितः कर्मकर्त्रादिः परमार्थो न विद्यते । आत्मानमात्मनैवात्मा निहन्तीति निरुच्यते ।।७५७।।

**अबाह्यनिमित्तौ च प्रत्ययशब्दार्थो न स्ववचनबाधः ।।**

अथापि रूढिरूपेण प्रत्ययः स्यात्तथापि तु । [5]ग्राहकं वस्तु नः सिद्धं प्रत्ययोन्यस्य वस्तुनः[6] ।।७५८।।

**रूढ़िरूपेणापि प्रतीतिनिरपेक्षः प्रत्ययशब्दो व्यतिरिक्तस्यैव वस्तुनः सिद्धः प्रत्यय इति । ततः सिद्धमेव लोकप्रसिद्धया बाह्यवस्तुविषयत्वं । नहि लोकप्रसिद्धमन्यथा शक्यविधानं ।**

**तदसत् ।**

लोकप्रसिद्धिमात्रेण न वस्तूनां व्यवस्थितिः । विचारकस्य लोकस्य वस्तुसिद्धौ निमित्तता ।।७५९।।
सम्वेदनातिरेकेण लोकः को वार्थसिद्धये । सम्वेदनस्य लोकत्वे तदनालम्बनीकृतं ।।७६०।।
सम्वेदनं विना लोको यदि तत्त्वं विवेचयेत् । विवेचयेयुः सर्वेमी जनात्मानः शिलादयः ।।७६१।।

**यदप्युच्यते ।**

---

[1] तस्य । शब्दस्य प्रत्ययस्य वा [2] टि—निरालम्बनं ज्ञानं व्यतिरिक्तार्थादुष्ट (?)

[3] श्लोकवार्तिके वाक्येनेत्यत्र भिन्नेनेति, बन्ध इत्यत्र बाध इति पाठः ।

[4] श्लोकवार्तिके २२७ पृष्ठे । [5] श्लोकवार्तिके "ग्राहकं वस्तु सिद्धं नः" इति पाठः ।

[6] श्लोकवार्तिके २२८ पृष्ठे ।

तमभ्युपेत्य[1] पक्षश्चेद अभ्युपेतं विरुध्यते ।

विशेष्य(स्याऽ)प्रसिद्धिश्च तवास्माकमतादृशे[2] ॥७६२॥

**तादृशे वस्त्वन्तरप्रत्यायके तवासिद्धिर्विशेष्ये प्रत्ययेऽस्माकमन्यथाभूते । तथा ।**

आत्मधर्मस्वतन्त्रत्वकल्पनेपि तथा भवेत् (।)

न च प्रत्ययमात्रत्वं किञ्चिदस्त्यनिरूपणादिति ॥७६३॥

**तथा हि । यदि व्यतिरिक्तसाधनत्वमभ्युपगम्य प्रत्ययः पक्षीक्रियेत स तथाभूतो धर्मी न भवतः सिद्धः । नहि बौद्धस्यैवमभ्युपगमः । अथ विपर्ययाभ्युपगमोऽव्यतिरिक्त-साधनत्वं तथासति प्रतिवादिनामस्माकमसिद्धः । न ह्यव्यतिरिक्तसाधनः प्रत्ययोरस्माभि-रभ्युपगतः, एवमात्मधर्मत्वं बौ द्धा ना मसिद्धं । स्वतन्त्रत्वं च मी मां स का नां । न च प्रत्ययमात्रमस्ति । यस्य धर्मित्वमुभयपक्षव्यतिरेकेण निरूपयितुमशक्यत्वादिति । तद्यथा-कथञ्चिन्मुखमस्तीत्युक्तं । यतः उक्तमेतत् ।**

विवादपदभूतस्यावश्यमेवाप्रसिद्धता । प्रसिद्धिस्तस्य चेज्ज्ञाता साधनं कस्य साधनम् ॥७६४॥

**य एव हि व्यतिरिक्तसाधनधर्मः प्रत्ययस्य धर्मिणो विशेषणत्त्वेनासिद्ध इति तदसिद्धि-द्वारेण विशेष्यासिद्धयुद्भावनार्थं भवता स एव विवादास्पदीभूतः भवता साध्यः, तेन च विशेषणे-नासिद्धत्वमिष्यत एव धर्मिणः । साधनकाले यदि तु स एव सिद्धः किमिदानीं सिद्धोपस्थायिना साधनेन । नत्वसिद्धविशेषणः पक्षो दुष्ट एव यथा सां ख्यं प्रति विनाशी शब्द इति ।**

**तदसत् । यतः ।**

साख्यंप्रत्यपि पक्षस्य दुष्टत्त्वं विनिवारितम् । नहि दृष्टान्तसिद्धेऽर्थे पक्षेऽसिद्धविशेषणः ॥७६५॥
अप्रसिद्धोथ दृष्टान्ते विनाशो हेतुदुष्टता । अनैकान्तिकता वा स्याद्धेतोर्वा स्याद्विरुद्धता ॥७६६॥

**यदि पक्षे न सिद्धो निरास (=स्वनाशः) इति दोषः । तदसत् । तत एव साध्यते । ततोऽप्रसिद्धविशेषणत्त्वमेव पक्षस्यादोषः कथमसौ दोषः । नहि स्वरूपमेव दोषः । अथ दृष्टान्तेऽसिद्धिस्तदा दृष्टान्तदोषो हेतुदोषो वेति न पक्षदोषता ।**

न चात्मधर्मताऽसिद्धौ धर्मनिप्रत्ययो भवेत् ।

न ह्याकाशगुणासिद्धौ शब्दो धर्मी न सिद्ध्यति ॥७६७॥

**श्रोत्रग्रहणमात्रेणैव तस्य धर्मित्वं । अन्यथा न कश्चिद्धर्मी भवेत्प्रतिवाद्युपक्षिप्तस्य धर्मस्य सर्व्वत्रासिद्धत्वात् । तस्मादयमदोष एवेति यत्किञ्चिदेतत् । तत एवापरमपि परोदितमयुक्तं ।**

शब्दार्थ[3]मात्ररूपेण यथान्येषां[4] निरूपणं ।

तथापि[5] भवतो न स्याद्वाद्यभेदमनिच्छत ॥७६८॥ **इति**[6]

---

[1] B टि—सालम्बनःप्रत्ययः पक्षो निरालम्बनो वा सालम्बनमभ्युपगम्याह । धार्म्मिणोप्यसिद्धिः ।
[2] B टि—निरालम्बने [3] B टि—पर्वतमात्ररूपेण [4] B टि—सामान्यवादिनां
[5] B टि—एतेनापि प्रकारेण विकल्पितेन विकल्पश्चोक्त आत्मव्यतिरिक्तधर्मप—
[6] श्लोकवार्तिके २२८-२२९ पृष्ठयोः ।

वाचकाद्वाच्यन्तरेभ्यश्च भेदानभ्युपगमाद्यस्य च वादिनः शब्दार्थमात्ररूपेणापि निरूपणमशक्यं सामान्यानभ्युपगमेन धर्मादिविकल्पने सति परवादिना तेन प्रत्यवस्थातुमशक्यमिति ।

तदसत् । प्रत्यय इत्यविशेषणं शब्दार्थमात्रं विज्ञानमिति योऽर्थः प्रतिभासनमिति यस्य पर्यायः तस्य सिद्धत्वात् । असदेतत् । द्विचन्द्रादिप्रत्ययेऽन्यत्र च यत्प्रत्ययत्वं । तदेकाकारपरामर्षविषयः सिद्धमेव । तस्य तु पुनः किन्तत्त्वमित्यपरं सकलं विचार्यत्वात्साध्यमध्यमध्यासीनमसिद्धमिति किमयुक्तं । अत्रासिद्धता पश्चादाक्षिप्य निराकरिष्यते । अन्यवुच्यते तावत् ।

निरालम्बनता चेह सर्व्वथा यदि साध्यते । विशेषणाप्रसिद्धिः स्याद् दृष्टान्तश्च न विद्यते[1] ॥६६९॥

सर्व्व एव प्रत्ययो निरालम्बनः साध्यः । को दृष्टान्तस्तत्र । अथ जाग्रत्प्रत्ययस्तथाप्यसिद्ध एव दृष्टान्तः । स्वप्नप्रत्ययस्यापि सालम्बनत्वात्कथञ्चित्तत्कालान्यकालवस्त्वालम्बनत्वात् । अथ तत्कालालम्बनाभावः । तदा

केनचिच्चेत्प्रकारेण निरालम्बनतोच्यते । रसज्ञानस्य रूपादिशून्यत्वात्सिद्धसाधनम्[2] ॥६७०॥

यथा यस्य यदालम्बनन्तत्कालमन्यकालादि वा तथा तत्सालम्बनमभ्युपगन्तव्यं । तथाप्यनालम्बनत्वे रसज्ञानमपि रूपेणानालम्बनमिति प्राप्तं तच्चेष्यत एवेति सिद्धसाधनं ।

अथ बुद्धिर्यदाकारा तदालम्बनवारणम् । स्वाकारस्याभ्युपेतत्वात्तदभावो विरुध्यते[3] ॥६७१॥

ग्राहकाङ्शो हि ज्ञानस्य नार्थाकारता । किन्तर्हि ज्ञानाकारतैवेति भवतामभ्युपगमः । तत्रेदानीं ज्ञानस्य ग्राह्याभावः प्रसक्तोऽनिष्टश्च । तत्र ग्राह्यात्मनालम्ब्येन भाव्यं अथ बाह्यानालम्बनं ।

तदसत् ।

बाह्यानालम्बनत्वेपि बाह्य इत्यग्रहो यदि । स्तम्भादौ नैव तद्बुद्धिरित्येवं सिद्धसाधनम् ॥६७२॥

अत्रापि बहिर्घट इति बुद्धिस्तत्रापि न घट एवालम्बनं । अपि तु बहिर्विषय एव । तत्सामानाधिकारण्यात्तु घटे तथा प्रत्ययः ।

अथ स्तम्भादिरूपेण निरालम्बनतोच्यते । सम्वेदनस्य दृष्टत्वात्तद्विरोधः प्रसज्यते ॥६७३॥

द्विचन्द्रादिषु तुल्यञ्चेदिन्द्रियाप्राप्तितो हि सः ।

तत्रानालम्बनोक्तिः स्यान्नार्थसम्वित्त्यभावतः ॥६७४॥

इन्द्रियेण चक्षुरादिना प्राप्तं गृह्णाति बुद्धिरिति निरालम्बनतोच्यते । द्विचन्द्रादिबुद्धेः । न तु तदालम्बनमेव । एकचन्द्रप्रतिपत्तिरासीदस्य प्रागिति तेन सम्प्रयोगेण इन्द्रियेण द्वयस्येत्यनालम्बना । न तु सर्व्वदाऽर्थ एव नास्ति । एकचन्द्रदर्शने सति तद्विपर्यये नालम्बनत्वमिति कारणमनालम्बनत्वप्रतिपत्तेः । एतदेव दर्शयति ।

सर्व्वत्रार्थेन्द्रियाणां न संयोगसदसत्तया । सम्वित्तौ विद्यमानायां सदसद्ग्राह्यतास्थितिः ॥६७५॥

भवत[4]स्त्विन्द्रियादीनामभावाद् ग्रहणादृते । नालम्बनत्वहेतुः स्वान्निषेधः तेन[5] युज्यते ॥६७६॥

---

[1] T. श्लोकवार्तिके २२८-२२९ पृष्ठयोः ।
[2] T. श्लोकवार्तिके २२९-२३० पृष्ठयोः ।
[3] T. श्लोकवार्तिके २२९-२३० पृष्ठयोः ।
[4] T. भवत इति भोटभाषान्तरे ।
[5] T. निषेधोतो न—इति हे. पुस्तके ।

निरालम्बनाः प्रत्यया इति । तदेतदलीककल्पनामलमलीमसचेतः परेणाहङ्कारमाविष्कृतमिति महती मोहस्य महीयस्ता । तथा हि (।)

निरालम्बनशब्दस्य स्वांशालम्बाभिधेयता । प्रसिद्धा चेत्प्रमाणेन दूषणं दूषणं कथम् ॥६७७॥

परपरिकल्पितयाक्षग्राह्यालम्बननिषेधेन स्वांशालम्बन एवायं शब्दः प्रयुक्त इति प्रकरणादितः प्रतीतिः । अन्यथा शब्दादर्थप्रतीत्यभावात् । तत्र शब्दादयमर्थः प्रतीयते लोके कथमस्य निरूपणमशक्यं ।

ननु न तस्यापि वाचकाद्वाच्यान्तराच्च भेद इति कथं शब्दार्थमात्रस्य धर्मित्वमित्युक्तं ।

सत्यमुक्तमयुक्तन्तूक्तमिति किन्तेन । नेदमिदानीमेवाद्वैतमायातं यतो[1] भेदो न स्यादपि तु भिन्न एव प्रत्ययान्तरेभ्यः परस्परञ्च । तत्र घटशब्दादन्यः प्रत्ययोऽन्यश्च घटः शब्दादित्यादि । शब्दाश्च गृहीतमेवार्थं प्राक् स्मरणविषयतामुपनयन्ति । तत्र ये ते प्रत्यया नीलाद्यालम्बनत्वेन भवतः प्रतीतिगोचरास्ते निरालम्बना इति परमवबोधयतः किमयुक्तं । यदि कश्चिदनग्निकमेव धूमं प्रत्येति स किमेवं न वक्तव्यः, त्वयाऽनग्नित्वेन यः प्रतीयते धूमः स तथा न भवतीति । कुतो वा दोषसम्भावना वक्तुः । अथ साग्नित्त्वेन पूर्व्वदृष्टेन स बोधयितुं शक्य इह तु कथं । इहापि निरालम्बनं तैमि(रि)कज्ञानं सिद्धमेव बाह्यस्यासम्भवात् । तत्रापि गगनमालम्बनमिति चेत् । यथा तर्हि केशालम्बने गगनमालम्बनं तथा गगनालम्बनेपि अन्यदेव । प्रतिभासमानस्यालम्बनत्वाभावात् । प्रतिभासमानमेव गगनप्रत्यये आलम्बनमिति चेत् । इहाप्यस्तु केशप्रत्यये सर्व्वत्र विपरीतख्यातिस्मृतिसंप्रमोषः । लौकिकेष्वादिकल्पना न वा क्वचिदिति एकान्त एवः ।

अथ सालम्बनमेकचन्द्रज्ञानमुपलब्धवतो द्विचन्द्रविज्ञानं निरालम्बनमिति युक्तं । एकचन्द्रविज्ञानन्तु कथं । तदपि तज्जातीयत्वादिति प्रतिपादितं । बाधितत्वादिति चेत् । तत्रापि बाधितत्वमिति प्रतिपादितम् । न चाप्रतिभासमानमालम्बनमिति प्रतिपादयिष्यामः । ज्ञानत्वञ्च नीलादेः प्रतिपादयिष्यते । यथा च केशादिज्ञानं काशादिनासालम्बनं तथा नीलरूपं ज्ञानं पीतमधुरादिना सालम्बनमिति प्राप्तं । कथं रसाद्यनालम्बनत्वेन सिद्धसाधनं रूपज्ञानस्य । अथ रश्मितप्तोषरमन्तरेण न भवति जलज्ञानं रसादिकमन्तरेणापि किम्भवति रूपविज्ञानं । भवति च सत्यजले तप्तोषरमन्तरेणापि जलज्ञानं । विशेषस्तत्रेति चेत् । परस्परस्य विशेषाद् द्वयमप्यनालम्बनमन्यथा वेति प्राप्तं । भवतु द्वयमपि सालम्बनमिति चेत् । यदि प्रतिभासमानेन[2] रश्मितप्तोषरमित्यादि न वक्तव्यम् । अप्रतिभासमानमालम्बनं कार(ण)त्वेनेति[3] चेत् । वासना भविष्यतीति सिद्धमस्मत्समीहितं । प्रतिभासमानमेव तर्हि भवतु किमन्येनेति चेत् । प्रत्यक्षानुमानयोर्भेदाभावप्रसङ्गात् प्रतिभासमाने सकलं प्रत्यक्षमेव ।

भ्रान्ताभ्रान्तविभागश्च न स्याल्लोकप्रसिद्धिभाक् । स्वरूपे सर्व्वमभ्रान्तं पररूपे विपर्ययः ॥७७८॥

प्राप्तेः सालम्बनत्वञ्चेत् प्राप्तिर्न्नास्तीति साधितं ।

मरीचिकाजलभ्रान्तेः प्राप्तिः स्यादपि तद् भवेत् ॥७७९॥

---

[1] T. यतो भेदो न स्यात् । [2] B टि०—सालम्बनत्वं

[3] B टि०—कारणत्वेनानालम्बनमप्रतिभासनम् ।

सर्व्वदा नास्ति सर्वत्र सर्व्वदा नेति[1] दृश्यते । क्षणिकत्वात्

अविनष्टे भवेदेव विनाशी स कथम्भवेत् ॥७८०॥

प्रत्यभिज्ञानिरस्तैव ततः सर्व्वं समंजसम् ।

**तस्मात्प्रत्यक्षानुमानाभ्यां प्रतीतेः सकलमनालम्बनं । उक्तः शेषः ।**

**एवं परपरिकल्पितं विशेषणमनूद्य यदि तन्निराक्रियते क इवात्र दोषः । अनेनेदमपि निराकृतं । यदाह ।**

**तथा हि (।)**

बहिर्भावाप्रसिद्धत्वात्तेनानालम्बना मतिः । कथञ्च साध्यते नैष पक्षो हि ज्ञायते यदा[2] ॥७८१॥
यथान्यबोधनाशक्तेर्न्नाप्रसिद्धे विशेषणे । पक्षसिद्धिस्तथैव स्याद्विशेषणविशेषणे ॥७८२॥
नाप्रसिद्धे पदार्थे हि वाक्यार्थः संप्रतीयते । तत्पूर्व्वकत्वात्पक्षश्च वाक्यार्थः स्थापयिष्यते[3] ॥७८३॥

**मत्वर्थस्य साध्यत्वमिति स्थापयिष्यत इति ।**

**तदेतदसदेव । येनैव बाह्यमालम्बनमसिद्धं परमार्थतः । परेण केवलमभ्युपगतं । तत एव निषिध्यते । भ्रान्तिनिरासाय साधनप्रवृत्तेरित्येतत्पश्चात्प्रतिपादयिष्यते । प्रमाणप्रसिद्धस्य तु कथमभावः साध्यः स्यात् । प्रमाणस्य बाधनद्वारेणेति चेत् । न । प्रमाणस्य प्रमाणेन बाधनायामनाश्वासेन प्रमाणतोच्छेदप्रसङ्गात् । न विरुद्धाव्यभिचारी नाम सम्भवतीति प्रतिपादयिष्यामः । देशकालादौ दृष्टस्यान्यत्र निषेध इति चेत् । न प्रागभावात् ।**

नहि देशान्तरादौ यद्दृष्टमन्यत्र कल्प्यते । भ्रान्त्यभावेन तत्रास्य वृथाभावस्य साधनं ॥७८४॥

**अथ कुतश्चिच्छास्त्रादन्यतो वा प्रमाणाभावादन्यत्र कल्पना । नहि भ्रान्तयो न दृश्यन्ते । एवन्तर्हि ।**

प्रमाणदृष्टे या भ्रान्तिर्देशादौ क्वचिदेव सा । निवर्त्यते प्रमाणेन भ्रान्तावेव तु काऽक्षमा ॥७८५॥

**या हि कदाचिद् भ्रान्तिः सा निवर्त्त्यते । या तु पुनरत्यन्तं सा किन्ननिवर्त्तयितव्या । तन्निवर्त्तने महान् पुरुषकारः ।**

**ननु साऽन्यत्र बाधकप्रमाणोपदर्शनेन निवर्त्यते । या तु सदा भ्रान्तिरेव सा कथन्नि-वर्त्तयितव्या । बाधकाभावाच्च कथं सा भ्रान्तिरित्युच्यते । तदप्यसत् । यतो बाधको नाम नास्त्येव । तथा हि ।**

बाधकः किन्तदुच्छेदी किम्वा ग्राह्यस्य हानिकृत् ।

ग्राह्याभावे ज्ञापको वा त्रयः पक्षाः परः कुतः ॥७८६॥

**यदि बाधको बाध्यप्रत्ययाभावं करोति तदालम्बस्य वा । तदा तज्जातमजातं वा ।**

अजातस्य कथन्तेन तस्याभावो विधीयतां । न जातु खरशृङ्गस्य ध्वंसः केनचिदाहितः ॥७८७॥
जातस्यापि न भावस्य तथाभावो विधीयते । तदस्तिहेतोः तन्नास्ति बाधकादिति साहसम् ॥७८८॥

---

[1] टि—नष्टत्वात् । [2] श्लोकवार्तिके २३०—२३१ पृ०
[3] श्लोकवार्तिके २३०-२३१ पृ०

**यदि जातोसौ भावः केन तस्याभावः क्रियते। दैवरक्ताः किंशुकाः क एनानधुना रञ्जयति।**

**अथ जातः कारणात्तथा सति यथा जातः तथास्ति कथं विनाशावेशः। तथा सति तदेव नष्टं तदेव सदिति महदसमञ्जसं। अथ यथा न जातस्तथा विनाश्यते। तथा सति।**

अन्यरूपेण जातस्य यद्यन्येन विनाश्यता। नीलादेरन्यपीतादिरूपेणास्तु विनाश्यता ॥७८९॥

**न च तस्य तद्रूपमिति त एव दैवरक्ताः। तेन च**

स्वरूपेणासौ पश्चाद् विनाश्यतेऽथ सर्व्वदा। यदि पश्चाद्विनाश्येत पूर्व्वं तद्रूपता भवेत् ॥७९०॥
तेन रूपेण जातस्य कथं पश्चाद्विनाशनं। तदैव तेन रूपेण जातं पश्चाद्विनाश्यते ॥७९१॥
पश्चात्तद्रूपनास्तित्वे दैवरक्तः स किंशुकः। पूर्व्वमेवास्य नाशश्चेत् कारणादेव तत्तथा ॥७९२॥
नाशकेन परं कार्यं किमस्येति निरूप्यताम्।

**एतदालम्बनविनाशेपि समानं। तथा हि।**

यथा स जातस्तेनास्य रूपेण न विनाशनं। यथा न जातस्तेनापि न रूपेण विनाशनं ॥७९३॥
व्यर्थकत्वादशक्यत्वात्प्रमाणेनाप्रतीतितः। अस्यार्थस्य कथन्न स्यात्कल्पनापि सचेतसाम् ॥७९४॥

**अथालम्बनाभावं ज्ञापयति बाधकः।**

**तदप्यसत्।**[1]

यदासौ दृश्यते भावस्तदाभावो न विद्यते। यदा न दृश्यते भावोऽदर्शनन्तस्य बाधकं ॥७९५॥
तदा भावाप्रसिद्धौ च नाभावः सविशेषणः। विशेषणाप्रसिद्धौ च बोधशक्तिः कथन्तव ॥७९६॥
विशेषणमथान्यत्र सिद्धमत्रानुवादवत्। भावरूपं हि तत्तत्र नाभावस्य विशेषणम् ॥७९७॥
तदेवान्यत्र नास्तीति यद्येवं प्रतिपाद्यते। तथैव प्रतिपन्नस्य निषेधोस्य किमर्थकः ॥७९८॥
अन्यथा प्रतिपन्नस्य तथापि न निषेधनं। प्रागुक्तमेतदेवेति न पुनः पुनरुच्यते ॥७९९॥
न दृश्यते यदा भावः तदा न स्यान्निषेधनं। स्मृत्याव्या कृत्य तत्रास्य क्रियते चेन्निषेधनं ॥८००॥
स्मृत्यानुरूपग्रहणे न कथञ्चिन्निषेधनं। स्मृत्या स्वरूपग्रहणे नाभावस्य विशेषणम् ॥८०१॥
अथ स्मृतौ विकल्पे वा यदेव प्रतिभासते। तत्तावन्मात्रमेवास्ति बाह्यरूपं न विद्यते ॥८०२॥

**एवं तर्हि**

लोकप्रतीतावन्यत्र यद्बाह्यमिति भासते। तत्तावन्मात्रमेवास्ति न तु तत्तत्त्वमीक्ष्यते ॥८०३॥
प्रतीतिमात्रमालम्बो न तु तद्बाह्यमीक्ष्यते। स्वप्नादिप्रत्ययेभ्योस्य विशेषग्रहणन्नहि ॥८०४॥
प्रतीतिमात्रकादस्य वासनाबलनिर्मितान्(।) न विशेषपरिच्छेद इत्यनालम्बना मतिः ॥८०५॥

**कथन्तर्हि बाध्यबाधकभावप्रतीतिः।**

प्रतीयमानस्यैकत्वं भाविनारोप्य तत्र च। बाधकप्रत्ययापाते तन्मध्ये बाधकस्थितिः ॥८०६॥
बाधको यदि नायं स्यादेवमेव भवेदयम्। अविच्छिन्नस्ततश्चेदकारणम्बाधको मतः ॥८०७॥

**तथा हि कालान्तरस्थायिता सकलस्य भावस्य। तत्कालमध्य एव यदाऽपरस्वरूपनि-**

---

[1] T. गङ-छे द्ङोस्-दे मथोङ-ग्युर्-व। दे-छे मेद्-पर् र्तोग्स् म-यिन्॥ (यदा स दृश्यते भावो नाभावप्रत्ययस्तदा।)—इत्यधिकः पाठो भोटभाषांतरे।

रूपणापरः प्रत्ययो भवति । तदा तेन विच्छिन्नं पूर्व्वकमालम्बनं प्रत्ययो वाऽध्यवसायविषयः । तेन स बाधको व्यवस्थाप्यते । तथा हि यद्ययं न स्यात्तदाऽविच्छिन्नमेव पूर्व्वकविज्ञानालम्बनं भवेदन्यकालवत् । ततो ऽन्वयव्यतिरेकाभ्यां बाधकेन विच्छिन्नमिति गम्यते । एवं विनाश्य-विनाशकभाव आलम्व्य आलम्बनभावश्च । तथा हि ।

परोक्षे भावितामर्थे विनिश्चित्य घटादिके । तदाकारोदयज्ञानन्तदालम्बनतास्थितिः ॥८०८॥

तथा

स्वच्छं स्फटिकवज्ज्ञानं यो यस्तत्रापचीयते । तं तमाकारमासाद्य तच्चकास्ति तथा तथा ॥८०९॥

अपरोक्षस्तावदस्तीति कुतश्चिदागमादनुमानतो वावसितः स्वच्छञ्च विज्ञानं । यदि न स्यादयमर्थः परिप्लवेतैव केवलं किमस्ति किमत्र नास्तीति । परिदृष्टे चार्थात्मनि प्लवमान इव तीरमासाद्य स्थिरीभवति तेन तदालम्बनमिति व्यवस्थाप्यते । तथा हि ।

चिन्ताव्यापृतचेतस्कः प्लवमानेन चेतसा । इदं तदा दृष्टमिति पूर्व्वदृष्टे स्थिरीभवेत् ॥८१०॥

दृष्टश्रुतविस्मृतं हि विकल्पयन् किं किं दृष्टं तत्र प्रपञ्चकथायां श्रुतम्वेति पर्यन्वेषणपरो यदा यथाश्रुतादिकमभिमुखीकरोति तदाभिमुखीभते स्थिरत्त्वेन तत्र प्लवमानतापरित्यागनि-मित्तमालम्बनतया व्यवस्थापयतीति लोकव्यवहारः ।

तत्त्वमेव किमेवं चेत् न भवत्यस्य वस्तुनः । न प्रत्यक्षानुमानाभ्यामप्रतीतेरवस्तुता ॥८११॥

न तावत्परोक्षस्य सत्ता प्रत्यक्षेण प्रतीयते । तदभावादनुमानमपि नेति कुतः । सति परोक्षप्रतीतौ सद्भावे तदालम्बनता प्रत्यक्षस्य सिध्येत् । सालम्बनतायाञ्च प्रत्यक्षस्य वस्तुसम्बद्धं सिध्यति । ततोनुमानं तत्प्रतिबद्धवस्तुलिङ्गोदयाद्वस्तु गमयति ततोऽनुमानप्रसि-द्धवस्तुविषयत्वात्सालम्बनं प्रत्यक्षं ततो वस्तुसम्बन्धोऽनुमानस्य ततो वस्तुगतिरिति चक्रकम-व्यवस्थापि भवेदिति न वस्तुप्रतिपत्तिसम्भवः ।

एवमप्रतिपन्ने हि वस्तुन्युपगमः परं । प्रमाणरूपाविज्ञानात्पूर्वसम्वित्तिसम्भवात् ॥८१२॥
तत्प्रतीत्यनुसारेण विशेषणविशेष्यता । मया प्राक् प्रत्यपादीदं तद्रूपामर्षवर्जनात् ॥८१३॥
त्वया वा पुनरामर्शे कथमस्त्वस्य वेदनं । एवं निरूपणायाञ्चेत् स तथा नास्ति तत्त्वतः ॥८१४॥
नास्त्येव तत्र को दोषो यतः पर्यनुयुज्यते । बाध्यबाधकभावश्चेत् प्रतीत्योः परपूर्व्वयोः ॥८१५॥
स्वप्रतीतौ कस्य दोषो येन पर्यनुयुज्यते (।) आत्मानमेव किं कश्चिदनुयुञ्जन् प्रवेद्यते ॥८१६॥
भ्रान्तिरेव कुतस्तस्य नात्मा पर्यनुयोगभाक् । भ्रान्तित्वेवसितेत्वत्र कारणान्वेषणेन किं ॥८१७॥
परोपि प्रतिपाद्येत यदेवं सुपरिस्फुटं । तदा सोपि न वक्त्येव कुतो मे भ्रान्तिरीदृशी ॥८१८॥

यदा हि भ्रान्तिसम्भवे स्वयं परामर्शवतः पुनरसौ निवर्त्तते नेदं रजतमिति तदा किमात्मनः पर्यनुयोगं कश्चित्करोति (—) कथमहमप्रतिपन्ने रजते तद्विशेषणमभावं प्रतिपाद्ये विशेषणे चाप्रसिद्धे कथन्तद्विशेषणे चाप्रसिद्धे कथन्तद्विशेषणं परोक्षं जानीयां । येन मम पक्षदोषो न भवेत् । परप्रतिपादनेप्येवमेव ।

ननु तत्र सत्यरजतदर्शने सम्भवति भ्रान्तिरिह पुनर्न्न किञ्चिद् दृष्टमिति कुतो भ्रान्तिः एतदुत्तरत्र प्रतिपादयिष्यामः । अपि च । भ्रान्तिश्चेत्परमार्थेन कथञ्चिदवगता किमिदानीं भ्रान्तिकारणान्वेषणप्रयासेन । यदि कारणं नास्ति भ्रान्तिरेव न भवेत ।

**नैतदस्ति ।**

कारणे सति न भ्रान्तिः परमार्थेपि कारणम् । सकारणत्वाद् भ्रान्तिश्चेत्तदापीष्टं विहन्यते ॥८१९॥

**न कारणमस्तीत्येव भ्रान्तिः । अन्यथा सर्व्वा भवेद् भवतो भ्रान्तिः । अभ्रान्तावपि पर्यनुयोगेन भवितव्यमेव कुत इयं भ्रान्तिः । तथाप्रतीतेरिति चेत् । भ्रान्तावपि[1] समानमेतत् । अभ्रान्तिपूर्व्विका भ्रान्तिश्चेत् । यदि कथञ्चिदभ्रान्तिर्न्नाम नास्त्येव कारणाभावात्किन्नु भ्रान्त्या भवितव्यम् । भवतु कथं प्रत्येतव्या । अभ्रान्तिविपर्ययेण हि भ्रान्तिरिति व्यवस्थाप्यते । समानमितरत्रापि भ्रान्तिविपर्ययेणाप्यभ्रान्तिरिति । अथ विधिरूपेण भ्रान्तिर्न्न तु भ्रान्तिविपर्ययेण । भ्रान्तिस्तु बाधके सति । ततो विपर्ययादेवाभ्रान्तेर्भ्रान्तिरिति ।**

**तदप्यसत् ।**

विधिरूपेण यद् दृष्टं तत्तदेव तथेयते (।) न बाह्येविधिरस्तीति भ्रान्तिस्तत्रेति निश्चयः ॥८२०॥

**अथ यत्र कारणं सा भ्रान्तिरिति नोच्यते[2] । या भान्तिः सा कारणम्विना न भवतीति । एवन्तर्हि सविशेषणो हेतुः ।**

भ्रान्तिकारणसद्भावाद् भ्रान्तिर्भवति नान्यथा ।

ज्ञाते च भ्रान्तरूपत्त्वे तत्कारणविनिश्चयः ॥८२१॥

**सविशेषणे हि हेतौ भ्रान्तिः प्रथमं ज्ञातव्या पुनः सापि भ्रान्तिः कारणादिति अनवस्था । तस्माद्येन रूपेण सा भ्रान्तिस्तद्रूपविज्ञानादेव व्यवस्थाकारणं भवतु मा वाभूत् । स्वरूपेण हि भावो भवति न कारणरूपेण । तत्स्वरूपं कुत इति चेत् । किमनेन । इयमपि भ्रान्तिस्वरूपप्रतिपत्तिर्भ्रान्तिर्न्न भवतीति कुतः । यथेयं प्रतिपन्ना तथा यदीयमपि भवतु को दोषः । पूर्व्विका न भ्रान्तिरिति चेत् । तदप्यसत् ।**

रजतप्रतिपत्तौ स्यात् शुक्तिकाप्रत्ययक्षये । शुक्तिकाप्रत्ययस्यापि यद्यन्यः क्षयकारकः ॥८२२॥
ततः किं सत्यता तस्य प्रत्ययस्य भवेत्पुनः । रजतग्राहिणः किम्वा द्वयं नास्तीति नेक्ष्यते ॥८२३॥
अथापि सत्यता क्वापि प्रतीता यदि तद्भवेत् । तत्रावष्टम्भसद्भावादितरत्र विपर्ययः ॥८२४॥
बाधकप्रत्यये हि स्यादितरत्र विपर्ययः । बाधको यदि नास्त्येव तद्विपर्ययसत्यकृत् ॥८२५॥
विपर्ययस्यासद्भावं कस्तदा प्रतिपादयेत् ।

**अत्रोच्यते ।**

यदि विपर्ययवित्तिरथान्यथा कथमिवाभवनस्य विनिश्चयः ।

अनुपलब्धिकृतोथ विनिश्चयः किमपरेण विनिश्चयकारिणा ॥८२६॥

विपर्ययोपलब्धिश्चेत्तस्यासिद्धिर्न्निरुच्यते । स्वसम्विन्मात्रमेवास्तु बाह्यस्यासम्विदा ततः ॥८२७॥

**तस्मादनुपलब्धिरेव बाधकं प्रमाणं नापरमिति न्यायः । सा चात्राप्यस्तीति कथं सालम्बनम्विज्ञानमिति । ततोऽवेद्यवेदकात्मबुद्धिः ।**

---

[1] इतोऽग्रे बन्धनीस्थः पाठः C. 33a6—34a3 पृष्ठयोः स्थापितः प्रमादेन ।

[2] ०मेव कुत इयं भ्रान्तिः० विपर्ययेण हि भ्रान्तिरिति । अथ विधिरूपेण० रिति नोच्यते— इति पाठो विभूतिचंद्रेण स्वपुस्तकान्ते पुनर्लिखितः ।

**यत्पुनरुक्तं मत्वर्थनिरासः साध्यत इति तदप्यत्यन्तमयुक्तं ।**

मत्वर्थाभाव एवात्र साध्यते परमार्थतः । निरालम्बनत्वसाध्यत्वमन्यथा न भवेत्तदा ॥८२८॥

**निरालम्बनं विज्ञानमिति । आलम्बनत्वस्याभावः साधयितुं प्रस्तुतो येन कथन्तस्य स एव साध्य इत्युपरि निक्षिप्यते । इच्छया हि विषयीकृतः पक्षः स कथमन्यथा क्रियेत । यो यः साधयितुमिष्टः स एव पक्षः । अथ स तथाभूतः साधयितुमशक्यः । तथा सति हेतुदोषः एवासौ न पक्षदोषः अभाववत्त्वेन साधने मत्वर्थ एव ।**

**न तु पारमार्थिकमत्वर्थसाध्यतायां प्रमाणमस्ति। कल्पितस्य धर्मिधर्मभावस्याश्रयणात् । अन्यव्यावृत्तिद्वारेण स्वभावभूत एव धर्मो व्यतिरेकेण व्यावस्थाप्योऽर्थवत्तया कल्प्यते तत्र यद्यपि नामायं संवृत्या व्यवहारः तथापि न तावता क्षतिः । गजनिमीलनेन तावदयं व्यवहारः प्रवर्त्यताम् । पुनरयमपि निरूप्यमाणो विशीर्येत एव ।**

**ननु केयं सम्वृतिः । यदि वस्तु तदेव वक्तव्यम् । किन्तत्र नामान्तरेण । अथ नास्ति किञ्चित्तदा सम्वृतिरिति किन्नामान्तरेण ।**

सत्याभासः परन्तत्र न तत्त्वं परमार्थतः । विचार्यमाणशून्यत्वे सम्वृतिः सेति गीयते ॥८२९॥

**तत्त्वसम्वरणात्सम्वृतिः प्रतिभासमानं हि रूपमसदिति न तावता युक्तं । विचार्यमाणतायां पुनरसत्त्वादभावनिश्चयः । ततः परमार्थापेक्षया संवृतिरुच्यते । संवृत्यास्तीति भ्रान्तजनापेक्षयास्तीति । न च भ्रान्तस्य बाधकोदय इति सत्यतयाऽभिमानात्संवृतिसत्यन्तदुच्यते । तत इदमपि वक्तुमेव ।**

अभावे भ्रान्तता केयं भावश्चेद् भ्रान्तता कथम् ।
अतत्त्वभासो[1] भ्रान्तिश्चेदतत्त्वे सम्वृतिर्न्न किम् ॥८३०॥
अतत्त्वे सत्यता नो चेत्सत्याभासो भवेन्न किं। ततः संवृतिसत्यत्वं सत्याभासत्वमित्यपि ॥८३१॥
वञ्चनोक्तिः कथन्तस्यान्तालावकासवादिवत् । यस्य सत्यावभासित्वमसत्येप्यसमञ्जसं ॥८३२॥
यस्यासत्यावभासित्वकथने कैव वञ्चना । तस्मात्पराशयाज्ञाने आत्मोत्कर्षाभिधित्सया ॥८३३॥
प्रलापः केवलस्तस्मादन्या नास्त्येव वञ्चना ।

**तदास्तान्तावदेतत् । अन्यदुच्यते । यदत्रैव प[1]रेणोक्तं ।**

पर्युदासे निषेधे वा व्यतिरिक्तस्य वस्तुनः । प्रमेयत्वाद्यभेदेन जगतः सिद्धसाधनम्[1] ॥८३४॥

**प्रमेयत्वेन व्यतिरिक्ततैव नास्ति सम्वेदनात्सर्वस्य जगतः । व्यतिरिक्तस्यालम्बनस्याभावात् । सिद्धमेव साधनं ।**

यदि चात्यन्तभिन्नेन निरालम्बनतोच्यते । कथञ्चिच्चेत् विरुध्येत प्राक्पक्षः कल्पितेन ते[1] ॥८३५॥
वस्त्वाद्याकारभेदेन धीर्निरालम्बनेष्यते । ग्राहकाच्चेदभिन्नत्वं शक्तिभेदो विरुध्यते ॥८३६॥
निरालम्बनबुद्धेश्च यद्युत्पत्तिः प्रसाध्यते । दृष्टत्वात्सेष्यतेऽस्माभिर्बाह्यग्राह्यविवर्जिता ॥८३७॥
सम्यक्त्वं पुनरेतस्यास्त्वं नेच्छसि कथञ्चन ।
आत्मांशेऽवसिता ह्येषा मृगतृष्णाम्बुबुद्धिवत् ॥८३८॥

---

[1] श्लोकवार्तिके २३१-३२ पृ० ।

चैत्यादिप्रत्ययानाञ्च निरालम्बनता यदि । धर्मभूता न गृह्येत साधनोत्थितया धिया ॥८३९॥
ततो विषयनानात्वात्प्रतियोग्यनिराकृतेः । रूपात्सालम्बनप्राप्तिः सती केन निवार्यते ॥८४०॥
यदि प्रत्ययशब्दोपि प्रत्ययत्वेन गृह्यते । सम्वित्यालम्बनत्वञ्च वार्यते सिद्धसाधनम् ॥८४१॥
बुद्धयुत्पादनशक्तिश्चेद्वार्या साध्यन्न सिध्यति ।
साधनस्य प्रयोगो हि बोधकत्वाद्विना न ते ॥८४२॥
न चाभिधास्त्यसम्बद्धादृते भेदाच्च नास्त्यसौ ।
न चासौ तद्गतम्भेदं बोधयन्त्या धिया विना ॥८४३॥
प्राश्निकैर्न्नागृहीते च वाक्ये सावयवे पृथक् । पक्षे हेतौ सदृष्टान्ते वादिनि प्रतिवादिनि ॥८४४॥
साधनस्य प्रयोगः स्यात्तदुत्पत्त्येष्यते यदि । पूर्व्वाभ्युपगमेनैव प्रतिज्ञा बाध्यते तदा[1] ॥८४५॥

**इति सकलं यत्किञ्चिदेतत् । यतः (।)**

विज्ञानाद्व्यतिरिक्तेन निरालम्बनमुच्यते । न च नीलादिको बोधात्तद्धर्मापि ततोऽपृथक् ॥८४६॥

**यद्यपि ज्ञेयत्वादिनाऽस्य धर्मेण तद्धर्मत्वमभे(द?)स्तथापि ज्ञानत्वस्याभावाद्व्यतिरक्त एवासौ । नहि मनुष्यत्वयोगेपि ब्राह्मणादव्यतिरिक्तो भवति चण्डालः । ततो विज्ञानमात्मव्यतिरेकिणालम्बनेन न सालम्बनमिति ज्ञानत्वरहितेनेति प्रकरणाद् गतिः । प्रमेयत्वञ्च यथाव्यतिरिक्तं प्रमेयात्ततो विज्ञानादस्य भेद इति कुतः सिद्धसाधनं ।**

प्रमेयत्वादभेदश्चेत् सम्वेदनतदन्ययोः । सम्वेदनात्तदन्यत्वं नास्त्येव ज्ञानमेव तत् ॥८४७॥
अत्यन्तभिन्नापेक्षायामनालम्बनसाधने । सिद्धसाधनता कस्मादबोधत्वेऽतिभिन्नता ॥८४८॥

**यदि केनचिदप्याकारेण भेदः सर्व्वदा भेद एव भिन्नाभिन्नस्य द्रष्टुमशक्यत्वात्ततो भिन्नस्यात्यन्तं भेद एव तदालम्बनत्वे स्वांगालम्बनत्वमेव केवलन्ततः कथं सिद्धसाधनता । ज्ञानाकारतया चाभेदे ग्राह्यस्य भवत्ववान्तरभेदः, तथापि तदव्यतिरिक्ताल बनमेव ।**

बोधरूपस्य सद्भावे द्वयोः सालम्बनं कथं । द्वयोरपि न बोधत्वे तदस्ति सुखदुःखयोः ॥८४९॥
ग्राह्यग्राहकभेदश्चेत् कथम्बोधादभिन्नयोः । सितनीलादिभेदश्च न कस्याभेदनास्तिता ॥८५०॥
सुखदुःखादिभेदोयं यथा बोधात्मनोरपि । सितसातादिभेदोपि न तु ग्राह्येतरात्मवित् ॥६५१॥

**यथा सुखदुःखयोः तत्त्वभेदो बोधत्वादभेदेपि तथा सितसातात्मतयापि भेदे को विरोधः । ग्राह्यग्राहकाकारात्मता तु न प्रतिभात्येव । नहि सितसातादिव्यतिरेकेण ग्राहकादिता प्रतिभासमानोपलभ्यते ।**

**तस्माद् ग्राहकादिव्यपदेशो दुरात्मभिः स्वमनीषिकाविप्रणष्टैरुपाक्षिप्तः ।**

निरालम्बनबुद्धश्च यद्युत्पत्तिः प्रसाध्यते । स एव पक्षः प्राक्पक्षात्कथम्भेदेन दर्शितः ॥८५२॥
सर्व्वा बुद्धिर्न्निरालम्ब्या सर्व्वोत्पत्तिमती तथा ।
नानयोः साधने भेदः कथन्धर्मो न साध्यते ॥८५३॥
धर्मभूतैव साध्येयं साधनोत्थितया धिया । बुद्धौ सालम्बनत्वं स्यान्निरालम्बतया क्षतम् ॥८५४॥

**यदाहि निरालम्बना सर्व्वा बुद्धिरुदयवती साध्यते । तदार्थतो निरालम्बनतैव धर्मभता साध्यते । तथा सति सालम्बनता भ्रान्तिवशादभ्युपगम्यमाना निराक्रियत एव । कथं**

---

[1] श्लोकवार्तिके पृ० २३२–३४ क्वचित् पाठभेदेन ।

साधनोपन्यासो व्यर्थः। प्रत्ययशब्दे तु प्रत्ययशब्दो न वर्त्तत एव प्रकरणादिति प्रतिपादितं। ततः सिद्धसाधनता कथमसम्वेदनात्मत्वाच्छब्दस्येति। बुद्धयुत्पादनशक्तिनिषेधस्तु नाभिप्रेत एव। येन साधनव्यर्थता भवेत्। नहि बुद्धिरेव नोत्पत्तिमती। निरालम्बनवादस्यायमर्थः।

ननु यदि बुद्धिरुदयवत्यपि निरालम्बना किन्तयोत्पन्नयापि। अथ सालम्बना तदा तयैवानैकान्तिकत्वं (।)

तदप्यसत्।

अन्यापोहस्य साध्यत्वात् व्यावृत्तिः परवञ्चिते।

क्रियते साधनेनेति व्यर्थकं साधनं कथम्॥८५५॥

निरालम्बना सकला बुद्धिरिति प्रमाणेन केनचित्प्रतिपत्तव्य एषोऽर्थः। कथमन्यथा साधनोपन्यासः। ततश्च साधनानिरालम्बनबुद्धेरपि निरालम्बनतैव साध्यते। तस्या निरालम्बनत्वे कथं निरालम्बनत्वसिद्धिः। नानुमानस्य सम्वादेन प्रामाण्यात् न सालम्बनत्वेन। सालम्बनता नास्तीति कथं सम्वादः। आलम्बनस्यानुपलब्धेः। नास्तीति बुद्धेः कथं सम्वादो यदि दृश्यानुपलब्ध्या पश्चात्तदासौ पदार्थो नोपलभ्यते। एवञ्चेदनालम्बनापि बुद्धिस्तत्त्वनिश्चयनिबन्धनम्। ततोन्यापोहबोधक एव साधनप्रयोगो नाबोधकः। ततोन्यापोहेपि शब्दार्थे सम्बन्धोस्त्येव पदार्थानां। भेदोपि काल्पनिकः। पक्षश्च सावयवः संवृत्त्या भवत्येव भेदग्रहणविषयः। वादिप्रतिवादिनोर्भेदग्रहणं किं प्रथममेव विशीर्यते। तदपि च पश्चात्स्वप्नवदेव निरालम्बनन्तदा च निर्वृत्ते कार्ये किमिदानीमसिद्धतादिचोदना करिष्यति। अपि च। प्रतिपादितमेव तत्पुरस्तादिति किमनेन चोदितेन।

स्त्रीशूद्रविस्मापनमेव दुष्टैस्तत्त्वानभिज्ञर्गदितम्वराकैः (।)

न तत्त्वबोधस्य पुनः पुरस्तादयुक्तियोगि प्रलयं प्रयाति॥८५६॥

तस्मादभ्युपगम्यापि भेदप्रपञ्चपक्षादिकं ग ज नि मी ल ने न पुनः परामर्शप्रक्रमेण तदभावसाधनेन दोषः।

नन्वहं स्वप्रतिभासमेव केवलं प्रतिपद्ये इति प्रतिपादयन्परप्रतिपत्ता बाध्यते परेण तदपि प्रतीयत एव। ततः कथं स्वांगालम्बना सिध्यति बुद्धिः।

तदसत्। परेण प्रतीयते इति नात्र प्रमाणमिति प्रतिपादितं। प्रा श्नि का नामपि स्वांशमात्रकादपरत्र नास्ति प्रतीतिः। इति निरालम्बनवचनादस्त्येव प्रतीतिस्ततः कुतः प्रमाणादेषा तव प्रतीतिर्भेदग्रहणमन्तरेण प्रा श्नि का नां न साधनवृत्तिरिति। अथ ये भेदप्रतीतिमन्तो न भवन्ति ते न प्राश्निका इति।

तदसत्।

ये तत्त्वं प्रतियन्त्यत्र तेषां प्राश्निकता न चेत्। अतत्त्ववेदिनां नैव प्राश्निकत्वेधिकारिता॥८५७॥
अथैकपक्षपातेन प्राश्निकत्वं न विद्यते। पक्षपातविनिर्मुक्तः कुत एव भविष्यति॥८५८॥
परस्परविरुद्धं हि द्वयम्बोद्धुमसांप्रतम्। एकैकबोधादेकत्र पक्षपातस्य सम्भवः॥८५९॥
ततः प्राश्निकयोरेव परस्परविरुद्धयोः। विवादे प्राश्निकैरन्यैर्भाव्यमित्यनवस्थितिः॥८६०॥
वादिनो प्राश्निकत्वञ्चेदितरेतरसंश्रयः। तयोरपि यतो नूनं पक्षपातः स्वपक्षिणि॥८६१॥

तस्मात्प्रमाणपातत्वे नियताभ्युपगम्यता । यत्तु प्रागभ्युपगतं तद्विरोधि तदस्य ते ॥८६२॥

**प्राश्निकानां यदा पक्षवादिप्रतिवादिषु भेदबुद्धिः । तथापि यद्यसौ वादिवचनाद्विपर्येति प्रमाणबलायातन्न तत्र तैर्व्विरोद्धव्यम् । स्वबुद्ध्या निरूपयतां तेषां यदि तत्परिशुद्धं भवति कस्तात्रानभ्युपगमे हेतुः । ततः पूर्व्वाभ्युपगमेन यथा कथञ्चिदस्य वाचा ।**

**नन्वनेन प्रमाणबलिनापि पूर्व्वस्येति किमिदमनलसमप्युच्चैरुच्यते ।**

यत्र सत्याभिमानोस्ति सा निरालम्बना मतिः ।

इति पक्षे विरोधः किन्तत्सत्त्यत्वमनिच्छतः ॥८६३॥

**अथापि स्यात् ।**

"धर्मा[1]धर्मादिबोधे च नासिद्धे परमार्थतः । शिष्यात्मनोश्च धर्मादिरुपदेशोऽवकल्पते ॥८६४॥

तदनुष्ठानतो बुद्धैरिष्टो भेदः स्फुटञ्च तैः । सूत्रान्तरेभ्युपेतत्वाद् भवेदागमबाधनम् ॥८६५॥

सर्व्वलोकप्रसिध्या च भवेत्पक्ष[2]स्य बाधनम् । कृत्स्नसाधनबुद्धिश्च यदि मिथ्येष्यते ततः ॥८६६॥

सर्व्वाभावो यथेष्टम्वा न्यूनता[3]ह्यभिधीयते । तेषां सालम्बनत्वे वा तैरनैकान्तिको भवेत् ॥८६७॥

तदन्यस्य प्रतिज्ञा चेत् तदन्यप्रत्ययो मृषा । पक्षा[4]द्यनन्तर्गमना" त्तस्य पक्षादिता नहि ॥८६८॥

तन्मिथ्यात्वप्रसङ्गेन सर्व्वं पूर्व्वं न सिध्यति । साध्य[6]साधनविज्ञानभेदो नहि तदा भवेत् ॥८६९॥

यावद्यावत्प्रतिज्ञैव[7]न्तदन्येस्येतिभाष्यते । तावत्तावत्परेषां स्यान्मिथ्यात्वा[8]दाद्यबाधनम् ॥८७०॥

विरुद्धाव्यभिचारित्वं बाधो नाप्यनुमानतः । इत्थं सर्व्वेषु पक्षेषु वक्तव्यं प्रतिसाधनं ॥८७१॥

बाह्यार्थालम्बना बुद्धिरिति सम्यक्त्वधीरियम् । बाधकापेतबुद्धित्वाद्यथा स्वप्नादिबाधधीः ॥८७२॥

सापि मिथ्येति चेद्ब्रूयात्स्वप्नादीनामबाधने । न स्या[9]त्साधर्म्यदृष्टान्तो भवतः साधनेधुना ॥८७३॥

विज्ञानास्तित्त्वभिन्नत्त्वक्षणिकत्वादिधीस्तथा । सत्या[10]चेदभ्युपेयेत तदानैकान्तिको भवेत् ।८७४।

तन्मिथ्याप्रतिप[11]त्तौ वा पक्षबाधः प्रसज्यते । तथा च बद्धमुक्तादिव्यवस्था न प्रकल्पते ॥८७५॥

ततश्च मोक्षयत्नस्य वैफल्यं वः प्रसज्यते[12] ॥८७६॥

**तदेतदसत् । यतः ।**

अन्यत्त्वं यद्यभिप्रेत्य संसारिप्रत्ययः स्थितः । धर्माधर्मादिचिन्तेयन्तदेतन्नासमञ्जसम् ॥८७७॥

अतत्त्वेपीष्टतादित्वं बालक्रीडाबदिष्यते । तत इष्टप्रसिध्यर्थं धर्मो(न) नोपदिश्यते ॥८७८॥

**इष्टसाधनस्य धर्मत्वं तदन्यस्य धर्मत्वमिति भेदमसौ संसारी निश्चिनोत्येव तस्य भेदवासनानपगमात् । यदा च तस्य मुक्तता तदा न केनचिदपि तस्य प्रयोजनम् । नहि बालक्रीडाविषयेष्टसिध्यर्थं परमार्थवित्प्रवर्त्तते (।) यतः ।**

---

[1] श्लोकवार्तिके पृ० २३४— । [2] मुद्रिते ग्रंथे—न्यूनत्व० ।

[3] मुद्रिते ग्रंथे—०नन्तगमना । [4] श्लोकवार्तिके—पक्षबाधोत्र ते ध्रुवमिति पाठः ।

[5] श्लोकवार्तिके पक्षादीति नास्ति । [6] श्लोकवार्तिके—स्तम्भादिसाधनज्ञानेति पाठः ।

[7] श्लोकवार्तिके—यावद्यावत्प्रतिज्ञेयं तदन्यस्य प्रतीयते इति पाठः ।

[8] श्लोकवार्तिके—०दन्यबाधनमिति पाठः ।

[9] तत्रैव मुद्रिते ग्रंथे—तस्मात्सा । [10] श्लोकवार्तिके—सम्यक् चेति पाठः

[11] श्लोकवार्तिके—भ्युपपत्तौ चेति पाठः । [12] T. श्लोकवार्तिके २३६ पृष्ठे ।

प्रवर्त्तते जनः सर्व्वस्तत्र यत्रास्ति तत्त्वधीः। रागाच्छोभनबुद्धया किं विरूपायां न वर्त्तनं ॥८७९॥
तस्मादतत्त्वेपि नृणां तत्त्वबुद्धया प्रवर्त्तनं। तस्य तस्योपदेशः किं न कृत्वा गजनिमीलनं ॥८८०॥
अनेन तत्रानुष्ठानमविरोधीति साधितम्। तदभिप्रायसूत्रान्तकथितैः का विरोधिता ॥८८१॥
अतत्त्ववित्प्रतीत्या च बाधने सिद्धसाधनम्। सर्व्वानालम्बनत्वस्य तं प्रत्यनुपदेशनम् ॥८८२॥
कृत्स्नसाधनबुद्धिश्च तस्यानालम्बनाद्विना। यदा तु बोध्यते तत्त्वं सर्व्वाभावेप्यदुष्टता ॥८८३॥
इष्ट एव तदाऽभावः सर्व्वस्यालम्बनात्मनः। तत्साधनमनालम्बं ततस्तच्चेन्न सिध्यति ॥८८४॥
अविसम्वादिता तेन साध्यानालम्बनास्तिता। तस्य साधर्म्यदृष्टत्वात्तेनानेकान्तता कुतः ॥८८५॥
तदन्यस्य प्रतिज्ञानं सत्येवमुपगम्यते। तदन्यप्रत्ययस्यापि न मिथ्यात्वञ्च नेष्यते ॥८८६॥
तन्मिथ्यापूर्व्वको दोषः कथमिष्टाप्रसिद्धितः। तदन्यस्य प्रतिज्ञायामनवस्था न विद्यते ॥८८७॥
यत्र सत्ताभिमानोस्ति तदनालंबनं मतं (।) निरालम्बनतान्यत्त्वसम्वादेपि निरूपिता ॥८८८॥
प्रतिसाधनमित्थञ्च कथं शक्यनिदर्शनम्। बाधकापेतबुद्धित्त्वमसिद्धमिति साधितम् ॥८८९॥
स्वप्नादिबाधधीः सत्यानुपलम्भेन साधिता। तदुत्थितानुमानस्य बाधकत्त्वादसिद्धता ॥८९०॥
बाधकापेतबुद्धिश्च हेतोः सालम्बसाधने। क्षणिकत्त्वादिबुद्धया यदनैकान्तिकचोदनम् ॥८९१॥
तदयुक्तं यतो ज्ञानं क्षणिकं बाह्यवर्जितं।
विज्ञानरूपक्षणिकत्त्वसिध्या साल (म्ब) नासौ क्षणिकत्वबुद्धिः।
ततोऽनिरालम्बनता सबाह्या न सिध्यतीत्यर्थतया हि पक्षः ॥८९२॥

**बाह्यालम्बनाः प्रत्यया न भवन्ति स्वप्नबुद्धिवत्। इति विशिष्य पक्षः कृतः। क्षणिकत्त्वादि बुद्धयानेकान्त इति चेत्। न, क्षणिकत्त्वं योगाचार दर्शने विज्ञानात्मभूतमेव साध्यं ततो विज्ञानात्मसालम्बनता दृष्टान्तेन तथाभूत सालम्बनतैव भेदवत्। अथ व्यतिरिक्तमालम्बनं तावत्सिद्धं। न व्यतिरिक्तालम्बना क्षणिकत्त्वबुद्धिः। तथा हि।**

प्रत्यक्षमनुमानम्वा क्षणिकत्त्वादिवेदनं (।) नानुमानं तदन्येन सालम्बनतया स्थितं ॥८९३॥
अविसम्वादितामात्रान्न सालम्बनता विदाम्।

**अविसम्वादो हि योनुमानेन स प्रत्ययान्तरेण व्यवहितः। ततः प्रत्ययान्तरं तथाभूतमुत्पादयदनुमानं प्रमाणम्। न स्वाकारमात्रग्रहणात्। प्रत्ययान्तरञ्च प्रत्यक्षमेव। साक्षात्करणे हि वस्तुग्रहणाभिमानः। तच्च साक्षात्करणं ज्ञानरूपस्य क्षणिकस्य स्वरूपं सम्वेदनेनैव न तदात्मभूतं तदन्यसम्वेदनेन ग्रहीतुं शक्यम्। अथ स एव स्वसम्वेदनपक्षो न सिध्यति प्रतिप्रमाणे सति।**

तद्रूपे वेद्यमाने हि यदान्यन्न प्रवेद्यते। तदा स्वरूपसम्वित्तिं को वारयितुमर्हति ॥८९४॥
अवेदनेन वित्तिश्चेत्किं न सर्व्वेण वेदनं। तथा न दृष्टमिति चेदन्यथापि किमीक्ष्यते ॥८९५॥
अर्थापत्तेः क्षयादेवं यथा दृष्टन्तथेप्यतां। आत्मानुभविता दृष्टस्तस्य दृष्टिः कुतो मता ॥८९६॥
स्ववेदनेन चेदेतन्नीलादावपि नाधिकम्। आत्मनो द्रव्यता नैव साधिष्ठा यदि मीयते ॥८९७॥
नीलादेरपि नीलत्ववृत्तिर्वेदनतो न किम्।

**यथैवात्मनो द्रव्यरूपतान्या सम्वित्या वेद्यते तथा नीलादेरपि किन्नाभ्युपगम्यते। नीलस्यापि स्वबोधरूपताऽन्या द्रव्यरूपतान्या भविष्यति। आत्मवत्स्वबोधरूपा नीलादयोपि।**

**अथोभयरूपता बौद्धस्यासिद्धा(।) सामीमांसकस्याप्यसिद्धिः समानैव। न ह्येकमुभयरूपं नाममात्रकेण शक्यम्।**

एकरूपम्भवेदेकमिति मानं प्रवर्त्तते। अनेकरूपमेकञ्चेत्सर्व्वमेकं प्रसज्यते ॥८९८॥
वेद्यवेदकमेकञ्चेन्नीलादि न किमिष्यते। आत्मनीले भवेतां हि तदैके वेद्यवेदके ॥८९९॥
भिन्नदेशतया नो चेत् भिन्नरूपतया न किं। रूपभेदेन भेदो हि प्रसिद्धः सार्व्वलौकिकः ॥९००॥
देशभेदेन भेदो हि रूपाभेदे कथं भवेत्। तथा च सति देशादिभेदः स्याद्व्यापिभेदकः ॥९०१॥

**तस्मात्स्वसम्वेदनमन्तरेण वेदनमेव न सिध्यतीति सकलमनालम्बनमेव वेदनम्।**

बद्धमुक्तादिभेदोऽपि नैवास्ति परमार्थतः। भेदो हि नावभात्येव सर्व्वत्र समदर्शिनां ॥९०२॥
मोक्षादियत्नोपि न पारमार्थिकीं स्थितिन्दधानः क्वचिदस्ति लोके।
वैयर्थ्यचिन्ता यदि तत्र युक्तिभाक् शशस्य शृंगेपि न किम्विधेया ॥९०३॥

**यथा स पारमार्थिको न भवति यत्नस्तथा भेदोपि बद्धमुक्तादिष्विति समानमेतत्। किञ्च।**

विकल्प्योत्पद्यमाना च बाह्यास्तित्वादिधीर्मृषा। बहिरादिविवेकस्तु नाविकल्पकसाधनः ॥९०४॥

**विकल्पयन्नेव बाह्यमान्तरं साधारणमवासनानिमित्तादिकं व्यवस्थापयति। अविकल्पकेन तु साक्षात्करणरूपेण स्वरूपमेव प्रतीयते न पररूपमिति पुरः प्रतिपादितमेतत् तत एतन्निराकृतम्।**

[1]विकल्पचोत्पद्यमाना च ज्ञानास्तित्वादिधीर्यदि।
मृषेष्टा न च दृष्टात्र प्रमाणान्तरतो गतिः ॥९०५॥
प्रमाणाभावतस्तेन ज्ञानास्तित्वादि दुर्लभम्[2]।

**निर्व्विकल्पकं किल बहिरर्थरूपमेव। बाधोर्थापत्तिगम्यः। सा चार्थापत्तिर्व्विकल्परूपा बौद्धस्य च न विकल्पकं प्रमाणमिति ज्ञानाद्यस्तिता प्रमाणाभावादवशीर्यंत(।)**

**तदसदेतत्। यतः।**

अन्याभावे विकल्पस्य प्रामाण्यं यदि युक्तिमत् ॥९०६॥
विकल्पस्य प्रमाणत्वन्न युक्तमिति युक्तिमत्। यदा तु न विकल्पस्य न चान्यस्य प्रमाणता ॥९०७॥
तदा विशीर्यमाणेपि सर्व्वस्मिन्कोपराध्यतु। व्यवहारो न चेदेवं सम्वृत्या केन वार्यते ॥९०८॥

**ननु विकल्प एव सम्वृतिः सा चेद्व्यवहारनिमित्तं ततः स एव परमार्थः व्यवहाराविसम्वादात्।**

**तदप्ययुक्तम्।**

अविभावितरूपस्य प्रतिभासस्य सम्भवे। अविसम्वादिताख्यातिवासनासङ्गभाविनः ॥९०९॥
कलधौतादिमानेन यदि कामलिनिद्वये। परस्पराविसम्वादः का तत्र परमार्थता ॥९१०॥

**एतत्तु वक्ष्यामः।**

---

[1] श्लोकवार्तिके। [2] श्लोकवार्तिके—सत्त्वासत्त्वे च दुर्लभे इति पाठः।

सर्व्वञ्चाप्यस्मदादीनां मिथ्याज्ञानं विकल्पनात् ।
सान्निध्यविप्रकृष्टत्त्वे सत्त्वादि न च दुर्लभम्[1] ॥९११॥

**इदं सन्निधानम्भगवतः । ततो देशनाधर्मस्य विपर्ययश्चैतयोः । इदं सदिदमसदिति किल दुर्ल्लभमसत्यत्वादेतत्साधकस्य विकल्पात्मनः । तदेतद्वासनाबलनियमादसदपि परमार्थतः सदेव ।**

बौ द्ध द र्श न[2] एकस्मिन् पक्षपातोपि युज्यते । मृषात्वेपि च बुद्धीनां बाधो नैवोपलभ्यते ॥९१२॥
द्वासनायास्तथा भावाद्बाधके सैव कारणम । भ्रान्तत्त्वस्य कथम्वित्तिरसत्ति प्रतिवक्तरि ॥९१३॥
प्रतिपादितमेतत्प्राक् न पुनः पुनरुच्यते ।

**यदि वासनाबलादेव परवशस्य प्राणिनो भवतः सत्यासत्यावभासौ । तौ च बाधितुमशक्यौ किमिदानीम्विवादेन परवादिबोधनेन वा । यदि तस्य वासना प्रबोधाभिमुखी स्वयमे(व) प्रतिपत्स्यते । अथ न(नगं) वचनशतादपि ।**

**तदसत्यम् ।**

वासनायाः प्रबोधोयं यथानेनाभवन्मम । तथास्यापीति विज्ञाय वचनं वर्त्तयेत्परः ॥९१४॥

**ततो यदुक्तं ।**

मृषात्त्वं यदि बुद्धेश्च वाधः किन्नोपलभ्यते ।
बाधाद्विनापि तच्चेत्स्याद्व्यवस्था[3] न प्रकल्पते ॥९१५॥
प्रतियोगिनि दृष्टे च जाग्रज्ज्ञाने मृषा भवेत् । स्वप्नादिबुद्धिरस्माकं तत्र भेदोपि किंकृतः ॥९१६॥
न चान्यः प्रतियोग्यस्ति जाग्रज्ज्ञानस्य शोभनः ।
यद्दर्शनेन मिथ्यात्त्वं स्तम्भादिप्रत्ययो व्रजेत् ॥९१७॥
स्वप्नादिप्रतियोगित्वं सर्व्वलोकप्रसिद्धितः । तदीयधर्मवैधर्म्याद्बाधकप्रत्यये यथा ॥९१८॥

**तदपि पराकृतम् । यद्यपि वासनाप्रबोध एव सर्व्वस्य भवन्नवबोधो व्यामोहो वा तथापि परावबोधाय वचनं प्रवर्त्तयितव्यमेव । तथा हि स एव वासनाप्रबोधोऽनेन प्रकारेण मम जात आसीदन्यस्याप्येवमेव भविष्यतीत्यवबोधाय वचनप्रवृत्तिः प्रतिनियतवासनाप्रबोधार्थं । तथाभतवासनाप्रबोधार्थितामवधार्य. ततो न व्यर्थता । ततो यदि बुद्धेर्मृषात्त्वं किन्न बाधोपलब्धिः । तथाभूतवासनाप्रबोधाभावात् । कथन्तर्हि मृषात्त्वपरिज्ञानं वासनाप्रतिबद्धत्वज्ञानादेव । द्विविधं हि मृषार्थत्वमसदर्थत्वं विसम्वादित्वञ्च । विसम्वादित्वं विपरीतवासनाप्रबोधतोऽविपर्यासवासनाप्रबोधतश्च सम्वादित्वमिति ।**

**ननु सम्वादश्चेदस्ति कथमसदर्थत्त्वं । अविसम्वादाकारस्यापि वासनाप्रतिबद्धत्वात् । न हि सम्वादिप्रतिभासेप्यर्थान्वयव्यतिरेकानुविधानमस्ति । एतदेवासदर्थत्वं (।) ततः स्वप्नादिप्रत्ययसमानत्वादसदर्थता । न हि बाधकप्रत्ययात्स्वप्नादिप्रत्ययानामसदर्थता, येन तदभावात् जाग्रत्प्रत्ययसत्यत्वं भवेत् ।**

---

[1] श्लोकवार्तिके पृष्ठे २३७ ।

[2] श्लोकवार्तिके—बौद्ध-दर्शन एकस्मिन्पक्षापातो न युज्यते इत्युक्तस्य प्रत्याख्यानमिदम् ।

[3] श्लोकवार्तिके पृ. २३७—बाधः, स्याद्व्यवस्था, प्रत्ययो—इति पाठान्तरेण ।

वासनाप्रतिबद्धत्वे कथमेतद्विभज्यते । इदं सम्वादि न परं नैकत्रास्ति विरुद्धता ॥९१९॥

**तदसत् ।**

वासनाप्रतिबंधेपि यथा नीलादिभेदिता । स्वप्नादिध्वंसयोगश्च सम्वादादि तथा न किम् ॥९२०॥
यत्समानं कथञ्चित्किं सर्वथा तत्समानता । मनुष्यत्वे समानेपि[1] ब्राह्मणेतरता कथम् ॥९२१॥
यथार्थप्रतिबद्धत्वे सर्व्वासम्वादभाङ न वित् । तथा विपर्ययेप्येतत्किमकस्मादसम्भवि ॥९२२॥
वासनाप्रतिबद्धोर्थविदां नास्त्येव सर्व्वथा । अर्थप्रतिवित्तेशो हि सर्व्वासामेव दृश्यते ॥९२३॥

**तदसत् ।**

यथासौ दृश्यतेर्थार्थी तथैव यदि विद्यते । प्राप्तिरस्तु सदार्थानां बाधकः प्रत्ययः कथम् ॥९२४॥
अलौकिकत्वाद्भयात्मयोगात्स्मृतिप्रमोषाद्विपरीतवित्तेः ।
सबाधकत्वं न तथार्थसत्त्वं ततः स सम्वादतया न योगः ॥९२५॥

**अलौकिकोसावर्थसम्वादप्रत्ययाद्यगोचरत्वात् । अथवा तस्य सत्त्वस्यासत्त्वञ्च । ततो दृश्यतेपि बाध्यतेपि । अथवा स्मर्यमाणोऽसदर्थो देशान्तरस्थः प्रत्यक्षतया प्रतिभाति न तत्रस्थ एव । ततोऽप्राप्तिस्तत्र (।) एवं विपरीतख्यातावपि योजनीयम् । तदेतदप्रमाणवृत्तम् ।**

नादृष्टपूर्व्वसर्प्पस्य रज्वां सर्प्पमतिः क्वचित् । पूर्वदृष्टचनुसारित्वान्न हेतुर्वासना कथम् ॥९२६॥

**पूर्व्वदर्शनमन्तरेण हि न भवति रज्ज्वां सर्प्पबुद्धिः । पूर्व्वदर्शनादिदम्वेदनमत्रार्थो नास्तीति सकललोकनिश्चयः । अन्यथा सकलकार्यकारणभावोच्छेद एव । प्रतिभासमात्रेणाशक्यग्रहणात् प्रतिभासमात्रे हि स्वसम्वेदनमेव केवलं हेतुरहितमिति प्रतिपादितं । तस्मात्तन्निश्चयादेव कार्यकारणभावः । नात्र विपरीतादिख्यातियोगप्रतीतिः । अथापि स्यादेषापि विपरीतादिख्यातिरेव नात्रार्थो विद्यत इति ।**

विपरीतादिवित्तश्चेत्पूर्व्वविद्धेतुता भवेत् । प्रतीतिरन्यापि ततस्तथैवेति प्रतीयताम् ॥९२७॥
अर्थस्य प्राप्तिरन्यत्र ततो नालौकिकादिता । सर्व्वत्रार्थस्य न प्राप्तिरिति पूर्व्व प्रसाधितम् ॥९२८॥
निश्चयादर्थ इत्येवं नेति चेत्तन्न सङ्गतम् । निश्चयोऽलौकिकाद्येपि बाह्योर्थ इति किन्न सः ॥९२९॥
अर्थेप्यनर्थ इति तु निश्चयस्याप्रवृत्तितः । अनर्थनिश्चयस्यास्य तेनानैकान्तितास्ति न ॥९३०॥
वासनामूलताज्ञानमर्थता स न बाधनम् । तेन जाग्रद्धियो नास्ति प्रतियोगित्वसम्भवः ॥९३१॥
पूर्व्वदर्शनतो ज्ञानं तदप्यस्तु तदन्यतः । अनादिवासनाज्ञ्जनितं सर्व्ववेदनम् ॥९३२॥
निरालम्बनवादोयमत एव विराजते ।

**अत एवेदमपि निरस्तम् ।**

"योगिनां जायते बुद्धिः बाधिका प्रतियोगिनी ।
जाग्रत्स्तम्भादिबुद्धीनां ततः स्वप्नादितुल्यता[2] ॥९३३॥
प्राप्तानान्तामवस्थाञ्च सर्व्वप्राणभृतामपि । बाधोयम्भविता तेन सिद्धा सप्रतियोगिता[3] ॥९३४॥

---

[1] श्लोकवार्तिके पृ० २३८ ।

[2] श्लोकवार्तिके—स्वप्नादि तुल्यतेति पाठः ।

[3] श्लोकवार्तिके पृ० २३८ ।

**अवश्यं हि प्रमाणपरिशुद्धार्थभावनाबलात् योगिनां प्रमाणभूतप्रत्यक्षं ज्ञानमुदेति विपर्ययबाधकम्। तेन (।)**

"इह जन्मनि केषाञ्चिन्न तावदुपलभ्यते। तामवस्थां[1] गतानान्तु न विघ्नः किम्भविष्यति"[2] ।९३५।

**इति निरस्तम्। यतो विदितमेव भावनायाः सामर्थ्यम्। ततोऽवश्यमेव स प्रत्ययो भावीति कस्मान्न विघ्नः। तत इदमत्यन्तमसम्बद्धमेव। यदुच्यते(।)**

"योगिनां चास्मदीयानां त्वदुक्तप्रतियोगिनी ।

त्वदुक्तविपरीता वा बाधबुद्धिर्भविष्यति"[3] ॥९३६॥

**इति। यतः।**

अप्रमाणबलायातभावनाबलभाविनी। येषां ते योगिनो बुद्धिः किन्न शोकादिविप्लुताः ॥९३७॥

ईदृक्[4]त्वे योगिबुद्धीनां दृष्टान्तोस्तीति साधितम्।

दृष्टान्तो युष्मदीयानां न कश्चिदपि विद्यते ॥९३८॥

तत(:)स्तम्भादिबुद्धीनां भवेत्सप्रतियोगिता ।

बाध्यत्वं वापि बुद्धित्वान्मृगतृष्णादिबुद्धिवत् ॥९३९॥

इष्टं सप्रतियोगित्वं मृगतृष्णादिबुद्धिभिः। तदात्मना च बाध्यत्वं ग्राह्यान्तरतयापि चेत् ॥९४०॥

जात्युत्तरमिदं प्राह नैवं बाधकतास्थिति.। बाधकत्वविवक्षा हि निर्मूलोच्छेदकारिणी ॥९४१॥

यथाकथञ्चिद्वदतस्तदेतज्जातड्यजृम्भितं ।

**नहि प्रतियोगित्वमात्रं विवक्षितमपि तु बाधकप्रतियोगित्वं। तेन प्रतियोगित्वमात्रं साधनमसम्बद्धम्।**

बाध[5]कश्[6]चाप्यनैकान्तस्तदन्यत्त्वञ्च पूर्व्ववत् ॥९४२॥

बुद्धादिप्रत्ययान्यत्त्वसाधकप्रत्ययो मृषा। अत्राप्युत्तरमस्माभिः पूर्व्वमेव निरूपितं ॥९४३॥

बुद्धादिप्रत्ययः सर्व्वः स्वाङ्गमात्रावलम्बनः। व्यवहारप्रसिद्धिस्तु यथा तदभिधास्यते ॥९४४॥

मिथ्याधीप्रतियोगित्त्वं[7]स्वप्नादाविव ते भवेत्। इति पूर्व्वमेव विहितं नोत्तरं पुनरुच्यते ॥९४५॥

**तथाहि।**

मिथ्यात्त्वे सर्व्वबुद्धीनां तारतम्यादिभावतः। बाध्यबाधकभावोयं वासनातारतम्यतः ॥९४६॥

यथा मिथ्यात्वभावेपि बाह्यभावानुरोधतः। बाध्यबाधकभावोयं भवतामविगानतः ॥९४७॥

**तत्र विपरीतादिख्यातित्वादसौ इहापि वासनादार्ढ्यभावाभावाभ्यां बाध्यबाधकभाव इति न दोषः।**

---

[1] श्लोकवार्तिके—योगवस्थामिति पाठः। [2] T. तत्रैव। [3] श्लोकवार्तिके पृ० २३८।

[4] ईदृक्त्वे इत्यादि ग्राह्यन्तरतयापि चेत्यन्तस्य श्लोक वार्तिकस्य (पृष्ठ २४० श्लोक ९५-९८) अनुवादेन सह निराकरणम्।

[5] वाधकैश्चापीति, मिथ्याधीप्रतियोगित्वमित्यर्धद्वयं श्लोकवार्तिकं (पृ० २४० श्लोक ९९) अनूद्येह खाण्डेतम्।

[6] B. टि—या बुद्धिः सा बाध्या यथा स्वप्नबुद्धिः बुद्धिश्च बाधिका बुद्धिः। अबाधायामनेकान्तः [7] B. टि—मिथ्याधियः प्रतियोगित्वं। जाग्रद्बुद्धि प्रति।

**ननु बु द्ध स्य भगवतो बुद्धिर्योगित्वरागादिक्षयनिमित्तवती तस्य च विशेष्यबाधनाद्विरुद्धः । तथा हि ।**

रागादिक्षययोनित्वनिमित्तादिगतस्तथा । यावान्विशेष इष्टःस्यात्सर्व्वबाधाद्विरुद्धता[1] ।।९४८।।

**स्तम्भादिप्रत्ययबाधके बुद्धादिज्ञाने यावन्तो विशेषा रागादिक्षयनिमित्तत्वादयस्तेषां बाधनाद्विरुद्धतापि हेतोर्भवेत् । तथा हि मिथ्याधीप्रतियोगित्वं यदैव स्वप्नादिज्ञानानां साधितं । तदा ताथागतमपि ज्ञानं प्रतियोगित्वान्मिथ्याप्रसक्तम् । स्वप्नबाधकस्तम्भादिज्ञानवदेव । अत्रोच्यते ।**

यदि विशेषविरुद्धतया क्षतिर्ननु न हेतुरिहास्ति न दूषितः ।
निखिलहेतुपराक्रमरोधिनी न हि न सा सकलेन विरुद्धता ।।९४९।।

**यथा स्वप्नबुद्धिर्मिथ्यास्तम्भादिबुद्धिप्रतियोगिनीति साध्यते । तथा प्रतियोगिबुद्धिप्रतियोगित्वमपि बुद्धित्वात्स्वप्नबुद्धिवदेव । एवं यथा धूमोऽग्निं साधयति । तथा इहेदानीमग्न्यसम्भवमपि साधयतीति न हेतुरेव कश्चित्साध्यसाधनः स्यात् (।) किं च । बुद्धित्वात्प्रतियोगित्वमात्रमेव साधयति । न विशेषप्रतियोगित्वं तथा यथा कृतकत्वमनित्यत्वं साधयति शब्दस्य तथाकाशगुणत्वविपर्ययमपि साधयतीति प्राप्तं । न चाकाशगुणत्वमपि शास्त्राङ्गीकरणात्साध्यम् । इष्टः सा ध्य इति वक्ष्यते । तस्मान्न विशेषविरुद्धता हेतुदूषणम् ।**

**ननु (।)**

महाजनस्य चाबाधादिदानीन्तनबुद्धिवत । वाच्योऽनुमानबाधो वा यदि वा प्रतिसाधनम्[2] ।।९५०।।

**महाजनबाध्यबुद्ध्यभावादिदानीन्तनबाधकबुद्धिवत् स्तम्भादिबुद्धिः सत्या विवादास्पदीभूतस्तम्भादिबुद्धिरबाध्या । तद्विषयत्वेन महाजनस्य बाधकबुध्यनुत्पादात्स्वप्नादिबाधकबुद्धिवत् ।**

**तदप्रतिरूपं । तथाहि ।**

प्रतिबन्धविनाभूता दृष्टिमात्रप्रसाधना । इष्टा स्यात्साध्यसिद्धिश्चेत् तदेवं युक्तमुत्तरम् ।।९५१।।

**न च स्वप्नबाधबुद्धिरबाध्या परमार्थतः । प्रत्यक्षस्यैव बाधकस्य दर्शनात्संवृत्यात्वबाध्यत्वं स्तम्भादिबुद्धेरपि न काचिन्नः क्षतिः ।**

असत्यया (कथं) तर्हि बाधः स्वप्नादिवद्धिया । तारतम्यस्य सद्भावादिति पूर्व्वं निवेदितम् ।।९५२।।

**किञ्च ।**

जाग्रद्बुद्धिर्न सत्यत्वाद्बाधते स्वप्नदर्शनं ।
तत् ज्ञेयानुपलब्धित्वात्तच्चासत्यस्य नास्ति किम् ।।९५३।।

**प्रतिपादितमेतन् (।) न बाधको नाम स्वाल(म्ब)नसत्यतया बाधकोऽपि तु तदनु-**

---

[1] श्लोकवार्तिके (पृ० २४०) क्षययोगित्व-निमित्ताधिगति-विशेष इष्टश्चेत्सर्वभावात् इति पाठभेदेन् ।

[2] श्लोकवार्तिके (पृष्ठ २४०)—दिदानीं बाधबुद्धिवदिति पाठान्तरेण ।

**पलब्धितः । सा चानुपलब्धिरूपता विपर्ययोपलब्धिरूपतयैव । सा च स्वांशसम्वेदनत्वेपि न परिहीयते । तथाहि ।**

मेयान्तरं स्वरूपं वा सर्व्वोसौ तद्धियर्ययः ।
ततो जाग्रद्धिया बाध्या स्वांशेपि स्थितया परा ॥९५४॥

**नन्वियमपि यदि भ्रान्तिः तदा किमवष्टम्भादसौ बाध्या स्वप्नबुद्धिः ।**

**तदप्यसत् ।**

निवृत्ते साधनार्थे स्यात्स्वप्नबुद्धिसमानता । बाध्यबाधकभावेन तदा किन्नः प्रयोजनं ॥९५५॥

**नन्वपरमुच्यते ।**

पूर्वसाधनदोषाश्च सन्धेयास्तस्य चाधुना । साध्याभेदादवाच्यत्वाद्धेतोर्न्नोभयसिद्धता[1] ॥९५६॥

**बोधनं बुध्यति बुध्यते वानेनेति वा विकल्पाः । तत्र च पूर्व्ववद्दोषाः साध्याभेदेन प्रतिज्ञार्थैकदेशत्वेनाबाध्यत्वात्प्रत्ययत्वस्य हेतोर्नोभयसिद्धता ।**

**ननु प्रत्ययविशेषो धर्मी सामान्यं साधनमिति न प्रतिज्ञार्थैकदेशता ।**

**तदाह ।**

सामान्यं प्रत्ययत्वञ्च भिन्नाभिन्नन्न विद्यते । भवतीत्यन्तभिन्नञ्च प्रत्यक्षेपि[2] न किञ्चन ॥९५७॥
सारूप्या[3]न्यनिवृत्ती च नेत्येतद् गमयिष्यते ।
तस्मान्न हेतुः सामान्यमस्ति सिद्धं द्वयोरपि[4] ॥९५८॥

**न युक्तमेतद्यतः ।**

सामान्यं प्रत्ययत्वञ्च भिन्नाभिन्नं मतं हि नः । व्यावृत्त्या समभावस्तु तया नेतीति वक्ष्यते ॥९५९॥

**तत एव परामर्शयोगात्प्रत्ययः प्रत्यय इत्यर्थस्य हेतुता पारम्पर्येण वस्तुसम्बन्धात् । प्रत्यय इति[5]कोर्थः सम्वेदनमात्मरूपसम्वित्तिमात्रं । ततोऽसिद्धमेतद् ।**

विशेषयोश्च हेतुत्वं पक्षतत्तुल्यसंस्थयोः । न स्यादन्वयहीनत्वादतद्धर्मतयापि च[4] ॥९६०॥

**तथा इति ।**

न चार्थहीना तद्बुद्धिर्हेतुत्वेन भविष्यति । आश्रयासिद्धता चोक्ता विशेष्यस्याप्रसिद्धितः ॥९६१॥
तथा हेतोर्व्विरुद्धत्वं दृष्टान्ते साध्यहीनता[6] । विशेषणाप्रसिद्ध्यर्थविकल्पेनैव बोधिता[6] ॥९६२॥

**सर्व्वमेतत्प्रागेव परिकृतं । तस्मादसदेतत् । तत एतदनवद्यं सर्व्वं** "प्रत्यया निराल(म्ब)नाः प्रत्ययत्वात्स्वप्नप्रत्ययवत्" ।

---

[1] श्लोकवार्तिके (पृ० २४१)—साध्याभेदादवाच्यत्वादिति पाठान्तरेण ।

[2] श्लोकवार्तिके—मत्यक्षेपीति पाठः ।

[3] श्लोकवार्तिके—सारुप्यान्यनिवृत्ति च नेत्येतत्साधयिष्यते इति पाठान्तरेण ।

[4] श्लोकवार्तिके पृष्ठ २४१—२४२ ।

[5] B. टि०—विशेषस्य सालम्बनस्य निरालम्बनस्यात्मधर्मस्यानात्मधर्मस्य वेति पूर्वोक्तं । परः प्राह ।

[6] B. टि०—स्वलम्बनत्वेन व्याप्तत्वात् ।

## ( ङ ) बाह्यार्थनिरासः—

तेन निरालम्बनत्वे सर्व्वप्रत्ययानां ।

तदान्यसम्विदो(ऽ)भावात्स्वसंवित्फलमिष्यते ॥३३३॥

स्वसम्वेदनमेव फलं । विज्ञानं स्वयमुदयत्स्वरूपमेवावभासयति नार्थम् । अर्थप्रतिपावने तस्य सामर्थ्याभावात् । अदर्शनाच्चार्थप्रतिपादनस्य । अत्रोच्यते ।

यदि बाह्योनुभूयेत को दोषो नैव कश्चन ।
इदमेव किमुक्तं स्यात्स बाह्योर्थोनुभूयते ॥३३४॥

किमनया सूक्ष्मेक्षिकया बाह्यमनुभूयत एव । अस्य प्रयासस्य किं फलं । यथा लोकव्यवहारस्तथास्तु । न चानालम्बनत्वप्रतिपादेनेऽन्यथा व्यवहारो न च व्यवहारादपरमिह फलमस्ति ।

तदप्यसदेव ।

यदि व्यवहृतिः साध्या व्यवहारो यथा तथा । वेदस्यापौरुषेयत्वे प्रयासः किंफलस्तव ॥९६३॥

न खलु यदनादिव्यवहारोन्यकृतः । पौरुषेयत्वेतरतया सिद्धो येन तदभावेन तद् भवेत् । अथ स एव विचार्य क्रियमाणः सदर्थः । तथा सति विचार्यतामपरमपि । अथ पौरुषेयत्वे प्रमाण्यमेव न स्यादेतदपरस्यापि समानम् । अपौरुषेयत्वेपि प्रामाण्याभावात् (।) किञ्च ।

यदा बाह्यग्रहाभावस्तदा रागादि हीयते । भावनाबलतो वृत्तेस्तदभावे विपर्ययात् ॥९६४॥

तत्त्वनिरूपणे हि रागादिदोषक्षयः । स च परः पुरुषार्थ इति प्रतिपादितं । ततस्तत्त्वं निरूप्यते । बाह्यार्थस्यानुभवो नास्ति । तथा हि । बाह्योऽर्थोनुभूयत इति कोर्थः । किमनुभूतिप्रवेशसद्भावादनुभूयत इति व्यपदेशोर्थाप्रवेशनादेव । तत इदमाह ।

यदि बुद्धिस्तदाकारा सास्त्याकारनिवेशिनी[1] ।
सा बाह्यादन्यतो वेति विचारमिदमर्हति ॥३३५॥

तदाकारा बुद्धिरिति कोर्थः । नीलाद्याकारा । नन्विदमिदानीम्विचार्यते । तदाकारेति कुतः । ततस्तदाकारा बुद्धिरिति परिज्ञानार्थं स पुनर्द्रष्टव्यः । तत्रापि दर्शने तदाकारतैवेत्यनवस्था । अथ निराकारेण दृश्यते । तदा तदेव दर्शनं किमाकारपरिकल्पनेन । अथ तदाकारेति तन्निरूपणाकारात्तद्दर्शनाकारेति । तदा तदेवोच्यते । तन्निरूपणन्तद्दर्शनमिति कोर्थः । अथ द्वयमपि दृश्यते । तथा सति स्वरूपेण द्वयं दृश्यते । ततः परस्परं ग्रहणं न वा कस्यचिदिति स्वसम्वेदनमेव द्वयमिति प्रतिपादितं । अथ बाह्यं विनाऽयमेव न भवति । एवन्तर्हि बुद्धिं विनाऽपरोक्षता न भवतीति प्राप्तम् । अथ दृश्यत एवापरोक्षता(।) तथा सति परं परिकल्पनीयं(।) तदाकारा बुद्धिरपि दृश्यत एव किमपरपरिकल्पः । यतः ।

दर्शनोपाधिरहितस्याग्रहात्तद्ग्रहे ग्रहात् ।
दर्शनं नीलनिर्भासं; नार्थो बाह्योस्ति केवलः ॥३३६॥

---

[1] B. विशेषिणी

यदेव दृश्यते तदेवाभ्युपगम्यते । तथा हि प्रतिभासात्तद्गतमेव नीलमवभासते नापरं । ततः प्रतिभासव्यतिरेकेण न प्रमाणं । ततो नाभ्युपगमः । अथ प्रतिभासत्तद्गतन्तन्न प्रतिभासते प्रतिभासस्यान्तरत्वान्नीलादेश्च बहिरवभासनात् । न व्यतिरिक्तस्य भावे तस्य प्रतिभासनं स्वरूपेणापरोक्षेण तस्य प्रतिभासनात् । तथा हि ।

व्यतिरिक्तस्य सद्भावे न नीलस्यापरोक्षता । स्वरूपेणापरोक्षत्त्वान्न तस्यान्याऽपरोक्षता ॥९६५॥

अथैव हि ग्राहकाकारः स्वरूपेणापरोक्षो न ग्राहकान्तरभावात्तथा तेन समनाकालोपि नीलादिकः । यथा च चक्षुरादिकाद् ग्राहकाकारः तथा तत्समानाकारोपि, तदन्वयव्यतिरेक-लक्षणत्वात्कार्यकारणभावस्य । न पूर्व्वापरसद्भावोऽर्थस्य प्रमाणतोऽवसीयते । प्रत्यक्षस्य पूर्व्वापरयोरप्रवृत्तेः । अथ पूर्व्वमप्यसौ नास्तीति कथं प्रतीयते । पश्चाद्वा ग्राहकाकारोपि कस्मान्न पूर्व्वं परिकल्प्यते बुद्धिर्व्वा सुखादयो वा । अथ नित्यत्वादात्मन एवमेवेति चेत् । अपरोक्षतापि तर्हि प्रागेवास्तीति किं न परिकल्प्यते । विरोधादिति चेत् । न ह्यप्रतीय-मानाऽपरोक्षता युक्ता । अर्थस्तद्व्यतिरिक्तोऽप्रतीयमानोपि युक्तः । व्यतिरिक्त इति केन प्रतिपन्नं । अत एव कदाचिद् भवेदिति सन्देहचोदना । अपरोक्षतापि कस्मान्नैवमिति चेत् । अपरोक्षत्वप्रसङ्गात् । नान्यस्यापरोक्षत्वान्मम परोक्षेति कल्पना स्यात् । शुक्लतादिवत् । शुक्लता यद्यपि एकस्य घटादेर्न भवति द्रव्यान्तरस्य भवत्येव । ततोऽपरोक्षताव्यतिरेकेण नापरो नीलादिः ।

ननु यदा पदार्थस्य शुक्लतापैति किमसावन्यत्र गच्छति । न (।) अपरोक्षतापि नापरगतान्यत्र गन्त्री । एवन्तर्हि तदव्यतिरेकादर्थस्यापि तदभावादभावः । अव्यतिरेक एव न निश्चित इति चेत् । अग्नेरपि तर्ह्यभावेऽग्निरूपाभावो न सिद्ध एव । तद्व्यतिरेकेणाग्ने-रभावादिति चेत् । नाव्यतिरेकस्यासिद्धत्वात् । तद्व्यतिरेकेणादर्शनादिति समान सर्व्वं । तस्मादसदेवापरोक्षताव्यतिरिक्ततं । अनुमानमपि नापरोक्षताव्यतिरेकं साधयति । कथं न साधयति । यदा परोक्षावस्थायामपि साधयति ततो नीलमास्त एव यत्पश्चात्प्रतिपत्स्ये । न तत्र पूर्व्वरूपानुसारेण प्रतिपत्तिभावात् । स्मरणन्तदनुभवानुसारि स चानुभवोऽपरोक्ष-रूपस्यैव । न च पृथगपरोक्षरूपतामवस्थाप्य नीलादिस्मरणविषयः। इह कथं प्रतिपत्तिरिति चेत् । नेहापि तथाभूतमेवाध्यारोप्यते । यदि पूर्व्विकामपरोक्षरूपतां परित्यजति । नीलरूप-तामपि तदव्यतिरेकात्परित्यजेदेव नहि विभागेन स्मरणम् । स्मरणमनुमानं न भवत्यधिकस्य प्रति-पत्तेरिति चेत् । नाधिकस्य प्रतिपत्तौ कारणाभावात् । कथन्तदधिकस्य प्रतिपत्तिरिति चेत् । नाभावात् । कथं प्रमाणम् । प्रथममेव व्याप्तिसिद्धेः । यदा धूममग्नेरुदयमासादयन्तं पश्यति परापरदेशाग्निसम्बन्धेन । तदैवमस्य प्रतिपत्तिः । यत्र यत्रायमुपनीयते तत्र धूमं जनयति । नैकदेशोऽन्यदेशसम्बद्धम् । ततो यद्यन्यत्रापि भवत्यग्निस्तत्रापि जनयत्येव । तेन धूमदे-शोऽग्नेः प्रतिपन्न एव । स च भावी धूमोग्निर्व्वा तद्रूप एवाध्यारोप्यते नान्यथा शक्यत्वात् । ततोऽधिकधूमदर्शनादधिकपावक प्रतिप्रत्तिः । यस्य तर्हि पूर्व्वकं पावकविषयमध्यारोपं विनैव झटिति धूमदर्शनात्प्रतिपत्तिस्तस्य कथम् । तस्यापि सामान्यप्रतिबन्धमन्तरेणाप्रतिपत्तेः। तथा हि(।)यदि नाम झटिति प्रतिपत्तिस्तथापि यदानुयुज्यते । यदि नामात्र धूमः कस्मादग्निः । एवमेव दृष्टत्वादिति । तेन वक्तव्यं (।) तच्च दर्शनं न परमार्थतोऽपि

तु दर्शनाध्यारोपयोरेकत्वाद्व्यवसायात् । न च दृश्यमानादिना व्यतिरेकेण विकल्पेत दर्शनादर्थी न प्रवर्त्तेत । दर्शनार्थिनो नोपदिशेत् । नहि दृश्यमानतामप्रतियन् दर्शनार्थी भवति । योस्ति स प्रतीयत इति चेत् । यदि दर्शनेन सम्बन्धो न गृहीतः कथमस्तित्वमात्रप्रतिपत्तेः प्रवर्त्तकः । तस्माद् दृश्यमानतामेव प्रतिपद्यमानः तदर्थी नान्यथा । नहि नीलादितामनवगच्छँस्तदर्थी दृष्टः । तस्मादनुमानमन्यद्वा विकल्पकं विज्ञानं दृश्यमानताव्यतिरेकेण न नीलादितामवगच्छति । कथन्तर्हि परोक्षविषयमनुमानं । पूर्व्वस्यापरोक्षत्वस्याध्यारोपात् । कथमतस्तत्राग्निरिति प्रतिपत्तिः । अध्यारोपस्य तथाभावात्पूर्व्वदृष्टमरीचिकाविषयजलवत् । यत्राध्यारोप्यते स परो वह्नेरिति चेत् । न(।) तस्य स्वरूपेणाप्रतिपत्तेः । तदेव तस्य रूपमिति चेत् । अपरोक्षमेव तदिति कथम्परोक्षता । स्वरूपप्रतिपत्तिरेव हि परोक्षता परेण प्रतिपत्तिरिति चेत् । सैवापरोक्षतेत्यपरिहारः । परेण प्रतिपत्तिरिति च प्रतिबन्धबलादध्यारोप एव । ततः परप्रतिपत्तिरिति मिथ्या । बाह्यस्य परोक्षस्य प्रतिपत्तिर्युक्तापि तस्य स्वयमपि पश्चाद्दर्शनादेकत्वाध्यारोपाविदन्तत्परोक्षमासीदिति परप्रतिपत्तौ चेत्तदपि नास्ति । इयं सा परप्रतिपत्तिः । प्रगासीत्परोक्षेति । तस्मादसत्परोक्षं नाम । तस्माद्दर्शनोपाधिरहितस्याग्रहणमेव । कथं व्यतिरेकगतिरर्थस्य । यदि नार्थोस्ति सम्वेदनव्यतिरिक्तः कुतो नीलपीतादिप्रतिभासभेदः । चक्षुरादिकादेव केशप्रतिभासवत् । ननूपघातबलात्केशादिप्रतिभासनं । उपघात इति कुतः । केशादिप्रतिभासनादिति चेत् । नीलादिप्रतिभासनादिति प्रकल्प्यताम् । नन्वेकरूपता स्यात्केशादिवदेव नानादेशेपि न नानानीलादिता यथा भ्रमति चक्षुषि भ्रमति तथा किम् नीलादिकं । यदि च चक्षुर्विज्ञानकारणमिष्यते । बाह्यं ततः किन्न नीलादिकम् । यथा रूपग्रहणे चक्षुः कारणम् । तथाऽवान्तरग्रहणे ततः परं । ततो बाह्यार्थसिद्धिः । सम्वित्प्रतिनियमादिति ।

अत्रोच्यते । (।)

कस्यचित्किञ्चिदेवान्तर्व्वासनायाः प्रबोधकं ।
ततो धियां विनियमो न बाह्यार्थव्यपेक्षया ॥३३७॥

उक्तमेतन्न बाह्यार्थः सिध्यति प्रत्यक्षतः । कार्यव्यतिरेकात्कल्प्यते । कार्यव्यतिरेके च वरं चक्षुरेव कल्पितं । अर्थान्तरकल्पनातो वरं दृष्टमेव चक्षुरादिकं तद्विशिष्टमिति कल्पना । तदपि परोपरोधादुच्यते । वरं समनन्तरप्रत्ययस्यैव विशेषकल्पना । शरीरमपि कारणञ्चेत् । न । शरीरप्रतिभासव्यतिरेकेण तस्याभावात् । तत्प्रतिभासे सतीति चेत् । तथापि विज्ञानादेव विज्ञानं समानकालता च शरीरप्रतिभासेन इत्यादि प्रतिभासस्येति न कारणता । तथा हि ।

यथा रागादिकल्पनां कालादिनियमः स्फुटः । प्रबोधकस्य नियमाद्विना वा तत्प्रबोधकैः ॥९६६॥
तथा नीलादिनियतप्रतिभाससमागमः ।

रागादयो हि प्रतिनियतदेशकालावस्थाभाविनः प्रबोधकप्रत्ययवशात् । न तु तेषामालम्बननियमो व्यभिचारात् । कान्यकुब्जादिचिन्ताप्रतिभासिनाञ्च नियमः प्रबोधके सत्यं यथा च । न च बाह्यस्यैव प्रबोधकत्वं चिन्ताप्रतिभासेनापि चिन्तान्तरवासनाप्रबोधात् । स्वसामर्थ्येन यथाभोगसम्भवे । न ह्याभोगस्य क्वचित्पक्षपातः । आभोगसमानत्वेपि कस्यचित् पटूरूपस्य

प्रतिभासादभ्यासादितो वा स्वप्नादिप्रत्ययानां च कः प्रतिनियमहेतुः। तदा जन्मान्तरादिदृष्टं बाह्यमेव नियमहेतुरिति चेत्। न। सर्व्वस्य दृष्टत्वात्तत्काले चाभावात्तत्कालनियमे को हेतुः।

देशादिनियतं बाह्यं प्रतिभासनियामकं। यदि तद्देशबाह्यस्याभावे स नियम. कुतः ॥९६७॥

यदि तत्र बाह्योऽर्थो न स्यात् तदा वा तत्कालदेशनियतप्रतिभासः कुतः अथ तत्काल-तादिकमन्तरेणापि नियमः पूर्व्वार्थदर्शनात्। किमिदानीमथन पूर्व्वप्रतिभासादेव नियमसम्भवात्। तथा हि।

अर्थशून्योऽवभासो हि माभदित्यर्थकल्पना। पूर्व्वार्थादेव नियमे प्रतिभासेन किं कृतम् ॥९६८॥

इदानीमत्रार्थमन्तरेण न प्रतिभासनन्तस्य युक्तम्। प्रतिभासस्य पूर्व्वमेव निरुद्धत्वात् न तत्प्रतिभासः। न ह्यविद्यमान इहेदानीं प्रतिभासत इति बाह्यार्थः कल्प्यते। यदि त्वविद्यमानोप्यर्थः पूर्व्वदेशकालदृष्ट इह प्रतिभाति। प्रतिभास एव पूर्व्वकालादिः प्रतिभासतां किमर्थकल्पनया। बाह्यार्थवादिभिरपि प्रतिभासस्याभ्युपगमात्। तथा तत्र बाह्यार्थ एव प्रतिभातीह त्वयोगान्न प्रतिभास इति चेत्। तत्र योग इति कुतः। सम्वादादिति चेत्। ननु सम्वादोप्यपरसम्वादात्किन्न युक्तः। ततः सम्वादादपरः सम्वाद इति सम्वादप्रतिभासप-रम्परैव युक्ता।

ननु यो हि जनित्वा प्रध्वंसते स मिथ्याप्रत्ययो यथा नेदं रजतमिति। अयन्तु स्तम्भादिः स्वपरिनिश्चितः कथम्विपर्यस्तः।

तदसत्।

वासनाया दृढत्वेन प्रध्वंसो नास्त्यनन्तरम्। यथा रागादिकल्पानां वासनाबलभाविनाम् ॥९६९॥

वासनाबलावलम्बन एव रागादिविकल्पः। तथा बाह्यरहितः। तथाप्यसौ न नष्टलोचनेपि झटिति विघटते। तथा स्वप्नव्याख्याप्रबन्धः कथंचिदपि न विघटते। वासना-दार्ढ्यतः। तथाहि(।) स एव पूर्वपाठक उत्थायोत्थाय पुनः पुनः स्वप्ने व्याख्यायते। तस्मान्न बाह्यार्थव्यपेक्षो नियमः। तथाहि।

स्वप्नदृष्टन्त्वयं किञ्चिज्जाग्रतो नानुवर्तते। अवस्था तादृशी तस्य बालकस्येव मूत्रणम् ॥९७०॥

बालकस्य मूत्रावस्था स्वप्नदृष्टा जाग्रदवस्थायामप्यनुर्वात्तनी न तरुणाद्यवस्थायां। प्रतिपादितश्चार्थक्रियाव्यभिचारः प्रागिति न पुनः प्रपञ्चः।

### (च) विज्ञानद्वैरूप्यम्—

तस्माद् द्विरूपमस्त्येकं यदेवमनुभूयते।<br>
स्मर्यते चोभयाकारस्यास्य संवेदनं फलं ॥ ३३८ ॥

द्विरूपमिति बोधाकारं नीलाकारञ्च व्यतिरेकस्यावेदनादेकं। अपोद्धा रपरिकल्पनया द्विरूपं। कुत एतत्। यस्मादेवमनु (भू) यतेस्मर्यते च। तत उभयाकारादपरस्य सम्वेद-नस्याभावादर्थस्य सम्वेदनं उभयाकारस्य न फलमित्युपसंहारः। नन्वर्थसम्वेदनतया प्रतीयते कथं स्वसम्वेदनं।

अत्रोच्यते ।

यदा निष्पन्नतद्भाव इष्टोनिष्टोपि वा परः ।
विज्ञप्तिहेतुर्विषयस्तस्याश्चानुभवस्तथा ॥ ३३९ ॥

तदा हेतोर्निष्पन्नतद्भावस्याऽभावादनुभवस्यैव सम्वेदनं नीलात्मत्त्वाद्यतस्तस्यास्तथैव नीलादित्वेनैवानुभव इति स्वसम्वेदनमेतत्परमार्थतो नार्थसम्वेदनम् । अर्थत्वेनानुभवेपि स्वप्नसम्वेदनवत् । यदि वाऽर्थसम्वेदनमेव फलम् । यतः ।

यदा सविषयं ज्ञानं ज्ञानाङ्शेर्थव्यवस्थितेः ।
तदा य आत्मानुभवः स एवार्थविनिश्चयः ॥ ३४० ॥

यः पुनरपरं बाह्यं न कल्पयति ज्ञानाङ्ग एव बाह्यतया तेनावसीयते । तदा य एवात्मनो ज्ञानाकारस्यानुभवः तथैव वासनानियमादर्थ इति निश्चयस्तदा निश्चयबलादर्थसम्वेदनं फलमिति व्यवस्थाप्यते । तदा विज्ञान वा दे प्यर्थसम्वेदनं फलं । तदा ग्राह्याकारः प्रमेयं । ग्राहकाकारः प्रमाणं तत्सम्वेदनफलं । अथवा स एवार्थ इति प्रतीयते । तस्य च सम्वेदनत्वात्सम्वेदनमेव फलम् । अपि च । बाह्यमर्थमभ्युपगच्छतामपि स्वसम्वेदनमेव फलं । यतः ।

यदीष्टाकार आत्मा स्यादन्यथा वानुभूयते ।
इष्टोऽनिष्टोपि वा तेन भवत्यर्थः प्रवेदितः ॥३४१॥

नहि सम्वेदनस्यान्यथात्वे वस्त्वन्यथेति (वक्तुं) शक्यम् । तस्मात्सम्वेदनानुसारेणैवार्थव्यवस्थितेः तदभिन्नयोगक्षेमत्वाद्बाह्यवेदनं स्वसम्वेदनमेव । तेनोपचारात् बाह्यवेदनमुच्यते । यतः । यदीष्टाकार आत्मास्य ज्ञानस्य अन्यथा चानुभूयतेर्थः । इष्टोनिष्टो वा । इष्टाकारेणानिष्टाकारेणापीष्टस्तदा तेन भवत्यर्थः प्रवेदितो मुख्यवृत्याऽन्यथा तूपचार एव । तस्मात्स्ववेदनमेव फलं बाह्येप्यर्थ इति दर्शयति ।

ननु सत्यत्वेर्थसम्वेदनमेव युक्तम् । तस्य भावादसति त्वगत्या स्वसम्वेदनं युक्तं ।
तदसत् ।

विद्यमाने पि बाह्येर्थे यथानुभव एव[1] सः ।
निश्चितात्मा स्वरूपेण नानेकात्मत्वदोषतः ॥३४२॥

नहि विज्ञानवादेपि स्वसम्वेदनमगत्याभ्युपगम्यतेऽपि तु तस्यैव सम्वित्तेः । अगत्यात्वङ्गीकरणे बाह्य एवार्थः किमनङ्गीकृतः । यतः ।

यदि बाह्यं न विद्येत कस्य सम्वेदनम्भवेत् ।
यद्यगत्या स्वरूपस्य बाह्यस्यैव न किम्मतं ॥३४३॥

सदृश्यगतिः । तस्मात्स्वरूपसम्वेदनमेव दृश्यत इति वक्तव्यं नागतिः । तत्र यदि बाह्येप्यर्थे स्वसम्वेदनमेव दृश्यते तदेव भवतु । अर्थसंवेदनन्तु न युक्तमिति परित्यज्यते । स्वरूपेण हि वित्तीनां भिन्नत्वात्प्रतिपुरुषं नानाकारवेदनं युक्तं । नत्वर्थस्य नानाकारवेदनं

[1] M. B. ०मेव

स्वरूपेणानेकात्मताप्रसङ्गात् । नानाप्रतिपत्त्यसम्वेद्यमानोप्येक एवार्थ इति बाह्यदर्शिमतम् । तत एकस्य नानारूपसम्वेदनमयुक्तम् । नानारूप एवार्थ इति चेत् । न ।

**अभ्युपायेपि भेदेन न स्यादनुभवो द्वयोः ॥**

एकस्मिन्नेवार्थे द्वयोरनुभव इति न स्यात् । स्वाकारपरिसमाप्तत्वात् । यद्याकारान्तरमपि तत्रैवानुप्रविश्य प्रतिभासेत तदा स्यादेकत्वगतिः (।) अथवा न स्यादनुभवो द्वयोरिति वस्त्वर्थः । अथवा भेदेनैकैकपर्यवसानेन न स्यादनुभवः सर्व्वस्यानेकाकारानुभवप्रसङ्गात् ।

**अदृष्टावरणान्नो चेन्न[1] नामार्थवशा गतिः ॥३४४॥**

यद्यदृष्टमावरणमिति न द्वयदर्शनं दृष्टेनैव तर्हि एकत्वप्रतिपत्तिर्वारितेति कुत एकत्वे प्रमाणं तिमिरवच्चादृष्टम्भवेत् । चन्द्रद्वयमेव तत्रैकदर्शनं द्वितीयदर्शनस्यादृष्टेन वारणादेषापि कल्पना भवेत् । ततस्तिमिरसमानत्वाददृष्टस्य नार्थवशा गतिः । अदृष्टेनैव बाह्यार्थशून्यं विज्ञानं जन्यत इति किन्नाभ्युपगम्यते । अथादृष्टमर्थयोग्यदेशावस्थितार्थप्रतिपत्तिवारणे कथं समर्थमिति वक्तव्यं ।

**तमनेकात्मकं भावमेकात्मत्वेन दर्शयत् ।**
**तददृष्टं कथन्नाम भवेदर्थस्य वेदकम् ॥३४५॥**

—इति संग्रह- (श्लोकः) ।

अपि च ।

अभ्यासबलभावित्वमिष्टानिष्टार्थसम्विदः । दृश्यते दृष्टसाध्यत्वं कथमत्रावगम्यते ॥१७२॥
तदेवादृष्टमितिचेत्सिद्धमेव समीहितं । वासनाबलसम्भूतं सर्वमेवेति सिद्धितः ॥१७३॥

ननु नार्थ इष्टानिष्टतयावभासते । अर्थाकार एव कल्पना एव तथा भवन्ति ।' अत्रोच्यते ।

**इष्टानिष्टावभासिन्यः कल्पना नाक्षधीर्यदि[2] ।**
**अरिष्टादावसन्धानं[3] द[4]ष्टन्तत्रापि चेतसां ॥३४६॥**

अरिष्टेन गृहीतानामक्षबुद्धिरप्यन्यथा दृष्टा । तस्माद् सदेतत् ।

**तस्मात्प्रमेये[5] बाह्येपि युक्तं स्वानुभावः फलं ।**
**यतः स्वभावोस्य यथा तथैवार्थविनिश्चयः ॥३४७॥**

अतो बाह्येप्यर्थे स्वसम्वेदनमेव फलम् । नार्थसम्वेदनं तस्य स्वसम्वेदनानुप्रवेशात् । अत्रापि फले विषयाकारतैव प्रमाणम् । यदाहाचार्यः ।

"यदा तु बाह्य एवार्थः प्रमेयस्तदा विषयाकारतैवास्य प्रमाणम् । तथाहि । ज्ञानं स्वसम्वेद्यमपि स्वरूपमनपेक्ष्यार्थाभासतैवास्य प्रमाणम् । यस्मात्सोर्थस्तेन मीयते । यथाह्यर्थस्याकारः शुभादित्वेन[6] प्रतिभाति निविशते तद्रूपः स विषयः प्रतीयते । यावदाकारभेदेन[7] प्रमाणप्रमेयत्वमुपचर्यते ।"

---

[1] M. ०वरणात् स्यात् चेन्न

[2] B. अर्थधीर्यदि

[3] अनिष्टादावसन्धानं—इति M. हे० पुस्तके ।

[4] इष्टं—इति हे. पुस्तके

[5] तस्मात्प्रमेयबाह्येपि—इति हे पुस्तके ।

[6] B. टि—सुखादित्वेन

[7] B. टि.— यावदन्तो ग्रन्थो दिग्नागीयः ।

नन्वव्यतिरेकाद् ग्राहकाकारोपि कस्मान्न प्रमाणं । अत्रोच्यते ।

**तदार्थाभासतैवास्य प्रमाणन्न तु सन्नपि ।**
**ग्राहकात्माऽपरार्थत्वाद् बाह्येष्वर्थेष्वपेक्ष्य[१]ते ॥ ३४८ ॥**

नहि तदनुरूपा बाह्यार्थस्थितिः । अपरार्थत्वात् । नहि स्वसम्वेदनं परार्थं व्यवस्थापयति । आकारव्यतिरे(के)ण सर्व्वत्र समानत्वात् ।

**यस्मा[२]द्यथा निविष्टो सावर्थात्मा प्रत्यये तथा ।**
**निश्चीयते निविष्टोसावेवमिति;**

आकारवशेन हि । अर्थ एवं नीलादिकः स्वाकारेण निविष्ट इति प्रत्ययः । ते (ना)-र्थाकार एवार्थकल्पनानिमित्तं ततः स एव प्रमाणं । एवन्तर्हि अर्थवेदनमेव फलं किमिदानीं स्वसम्वेदनेन ।

असदेतद्यतः(।) तदर्थकल्पनमात्मसम्वेदनानुरूपमेव । तदेवाह(।)

**आत्मसम्विदः[3] ॥ ३४९ ॥**

**इत्यर्थसम्वित् सैवेष्टा यतोर्थात्मा न दृश्यते ।**

यतोऽ(दृ)श्यमानन्न प्रत्यक्षस्य प्रमेयं । कथं हि परोक्षेऽर्थे प्रत्यक्षस्य वृत्तिः प्रत्यक्षस्य[४] च फलव्यवस्था प्रस्तुता तस्मात्स्वरूपप्रत्यक्षत्वादर्थस्यासम्वेदनात्स्वसम्वेदनं फलम् ।

**तस्या[५] बुद्धिनिवेश्यार्थः[६] साधनन्तस्य सा क्रिया ॥ ३४९ ॥**

तेन हि सा क्रियतेऽतस्तस्य सा फलं तत्क्रमेण तस्याः प्रथनात् । एवन्तर्हि बाह्येर्थे 'प्रमाणमाकारः सम्वेदनन्तु स्वरूपे फलं प्रवृत्तमिति विषयभेदः ।

तदसत् । यतः ।

**यथा निविशते सोऽर्थः तथा हि स प्रकाशते[७] ।**
**अर्थस्थितेस्तदात्मत्वात् स्वविदप्यर्थविन्मता[८](।) ॥ ३५० ॥**

स्वविदेवेयं परमार्थतः । व्यवहारतोऽर्थवित् । ततो व्यवहारापेक्षयाऽर्थ एव फलं । अर्थ एव प्रमाणमिति कुतो विषयभेदः परमार्थापेक्षयापि स्वरूपे द्वयमपि । तथापि कुतः । एतदेवाह ।

**तस्माद्विषयभेदोपि न;**

## (छ) अर्थसंवेदनफलम्—

स्वसम्वेदनं तर्हि बाह्येऽर्थे फलं(।) प्रमेये कस्मान्नोक्तमित्याह ।

---

[१] ष्वपेक्षते—इति हे. पुस्तके । [२] B. तस्मा

[3] B. टि—"फलत्वं । संवेदना नुरूपमेव फलमित्यर्थः"

[४] B. टि अनुमातो नापरोक्षो निश्चीयते तन्निरासाय" [५] M. तस्माद् ।

[६] एवेत्यधिकः पाठः स पुस्तके ।

[७] B. टि—"यथा निविशते सोऽर्थो यतः सा प्रथते तथा ।"

[८] पादव्यत्यासोऽत्र स. पुस्तके ।

स्वसंवेदनं फलम्(॥)

उक्तं स्वभावचिन्तायां तादात्म्यादर्थसम्विदः[1] ॥ ३५१ ॥

परमार्थापेक्षया स्वसम्वेदनमेतदर्थसम्वेदनमपि । यदि नाम तदर्थसम्वेदनमनिरूपित-सम्वेदनस्वरूपस्य निरूपणायान्तु स्वसम्वेदनमेव ।

ननु यदि स्वरूपेणार्थस्यानवभासनं ज्ञानमेव स्वेन रूपेण प्रतिभाति कथमर्थस्य प्रमेयता । तादृशत्वादर्थस्येति चेत् । तादृश इति कथं ज्ञायते । नानाकारा हि विज्ञप्तय इति चोक्तं ।

अत्रोच्यते ।

तथावभासमानस्य तादृशोन्यादृशोपि वा ।
ज्ञानस्य हेतुरर्थोपीत्यर्थस्येष्टा प्रमेयता ॥ ३५२ ॥

यद्यपि जलावभासि विज्ञानमुपजायते जलमन्तरेणैव तथापि मरीचिकाः समाश्रित्योदयवतः कथञ्चिदर्थहेतुतामाश्रित्यार्थालम्बनमुच्यते ।

ननु यदि हेतुत्वादेवालम्बनता वासनाहेतुकमेव युक्तं । न हि सा न हे तुः । दृष्टशक्तिश्च वासना तदाकारजनने । तथा च प्रतिपादितं भवतैव । यदि तु तदाकारता तथा भूतार्थमन्तरेण न भवेत् । युक्तमर्थसम्वेदनं । अन्यथा तु ।

यथाकथञ्चित्तस्यार्थरूपं युक्त्याव[2]भासिनः ।
अर्थग्रहः कथं; सत्यं न जानेहमपीदृशम् ॥ ३५३ ॥

सन्निहितमर्थमन्तरेणापि यदा तदाकारता तदा तस्य तावदर्थस्य न ग्रहणम् । अन्यदेशदृष्टस्य ग्रहणमिति चेत् । अन्यदेशेपि यदि तदा नास्ति कथं प्रतिभासः । यत्रास्ति[3] तत्र प्रतिभास इति चेत् । यदि क्वापि नास्ति क उपायः । प्रतिभासादेव ज्ञायते । अवश्यं क्वापीति[4] प्रतिभासोऽर्थमन्तरेण न दृष्ट इति प्रतिबन्धादेवं गतिः । एवं तर्हि स न दृष्टः कथं प्रतिभाति । सोपि जन्मान्तरादौ दृष्ट एवेति चेत् । न । नियमाभावात् अदृष्टोपि प्रतिभास इष्यते । एवन्तर्हि ।

अदृष्टोपि हि देशादावर्थोऽन्यत्रावभासते । यदि सर्व्वस्तदा सर्व्वः सर्व्वदर्शी प्रसक्तिमान् ॥९७४॥

अदृष्टस्यापि देशान्तरादौ व्यवस्थितस्य प्रतिभासने सर्व्वः सर्व्वदर्शी प्रसक्तः । अवस्थाविशेषमन्तरेण न प्रतिभाति । तिमिरादौ प्रतिभातीति चेत् । न । तिमिरस्य सर्व्वसाधारणत्वात्सर्व्वप्रतिभासनप्रसङ्गः । किञ्च । तिमिरं दर्शनविघातकृत् तदेव किन्दर्शनहेतुः[5] । दर्शनहेतुत्वे सकलदर्शनप्रसङ्गः । यदेव दृश्यते तस्यैव जनयतीति चेत् । अविद्यमानस्यैव तर्हि दृश्यते । तदेवाविद्यमानदर्शनं जनयतु अर्थमन्तरेण दर्शनन्न दृष्टमिति चेत् । अर्थयोग्यदेशावस्थानमन्तरेणापि न दृष्टं । अनेनैव व्यभिचार इति चेत् । समानमुभयस्यापि । स एवार्थ इति चेत् । नार्थत्वस्याभावात् । एवंभूत एवार्थ इति चेत् । सर्व्वं एवैवंभूतः । अलौ(कि)कत्वे सर्व्वमलौकिकं । नहि दर्शनव्यतिरेकेणापरो विशेष

---

[1] पादव्यत्यासोऽत्र स. पुस्तके । [2] B. मुक्ताव

[3] B. टि—"काले जन्यदेशेऽस्ति वस्तु तत्र काले भाति नार्थविरहिणि काले भातीति भावः"

[4] B. टि—"तिष्ठतीत्याकूतं" । [5] B टि—"अर्थस्य जनयति दर्शनं" ।

**इति प्रतिपादितम् (।) प्राप्तिरिति चेत्। तदपि दर्शनमेव। अनेन दर्शनादि व्याख्यातम्।**

यथैव प्रथमं ज्ञानं तस्य प्राप्तिमपेक्षते। तत्प्राप्त्यापि पुनः प्राप्तिरपेक्ष्येत्यनवस्थितिः ॥९७५॥
कस्यचित्तु यदीष्येत स्वत एवाप्तिरूपता। प्रथमस्यापि तद्भाव इति सर्व्वसमानता ॥९७६॥
प्राप्तेरथापि पूर्वेण प्राप्तिरूपेण सत्यता। अन्योन्याश्रयमित्येका सत्यर्थे नोभयस्य तत् ॥९७७॥
अर्थकारणशुद्धत्वात्तु ज्ञानस्यापि त सत्यता। तज्ज्ञानस्यापि सत्यत्वं तत्कारणविशुद्धितः ॥९७८॥
एवं परपरापेक्षादनवस्था प्रसज्यते। वासनाबलभावित्वं मृगतृष्णाजलेऽस्थितम् ॥९७९॥
ततःसकलमेवन्तदिति कल्प्यमनाकुलं। अनादिवासनासङ्गप्रतिबद्धप्रवृत्तयः ॥९८०॥
यस्य नीलादयस्तस्य न दोषो नाम दृश्यते।

**ननु वासनाप्रतिबन्धोऽपि स्वसम्वेदनज्ञानात्मनि कथं।**

स्वरूपात्प्रतिबद्धश्चेदपरः केन गृह्यते। स्वरूपमेव स यदि नाममात्रं कृतम्भवेत् ॥९८१॥

**यदि स्वरूपव्यतिरिच्यमानात्मा प्रतिबन्धो यत्र च स तदा पृथग्भूतग्रहणेन स्वसम्वेदनं। न चेत्पृथग्भावः सम्बन्धसम्बन्धिनावेव तर्हि न स्त इति न सम्बन्धग्रहणसम्भवः।**

**तदप्यसत्। यतः।**

वासनाप्रतिबन्धोय सुखेनैव प्रतीयते। स्मरणं पूर्व्वविज्ञानप्रतिबद्धं प्रतीयते ॥९८२॥

**स्मरणमुपजायमानमेवात्मनोऽनुभवप्रतिबन्धं प्रतिपादयति तदध्यवसायवशादेवमुच्यते। अस्मरणे तर्हि कथं वासनाप्रतिबद्धत्वप्रतीतिः। तथाहि।**

दृष्टमेतन्मयेत्येवं स्मरणं वेदने सति। न त्वस्मरणमात्मानं निवेदयति कस्यचित् ॥९८३॥

**स्मरन्नेव दृष्टमेतदिति निरूपयत्यन्यथा दृष्टत्वस्य निरूपयितुमशक्यत्वात्। अस्मरण-सम्वेदने तु न दर्शनानुसारित्वप्रतीतिः ततस्तद्वासनाप्रतिबद्धमिति कथं प्रतीतिः तत्रापि दृष्टमिति प्रतीतेः। स्मरणेन सहैकीकृत्य तस्यापि प्रतीतेरन्यथा व्यवहारायोगात्। स्मर्यमाणदृश्य मानयोरेकतया प्रतीतिः। ततः सकलं वासनाप्रतिबद्धमेव। अथ स्मर्यमाणदृश्यमानयोरे-कताप्रतिपत्तिर्भ्रान्ता। न। बाधकाभावात्।**

एतदेव स्मरामीति पूर्व्वदर्शनमत्र मे। न च बाधकमत्रास्ति तत्र स्मृत्या सहैकता ॥९८४॥

**अथ स्मरणाकारेण पूर्व्वरूपन्न गृह्यते। तथा सति पूर्व्वपरयोः कथम्भेदप्रतीतिरतो-ऽद्वैतमेव। तथासति सुतरां सम्वेदनात्मना। अपि च। बाह्यवस्तुनि कार्यकारणभाव-नियमस्य कर्त्तुमशक्यत्वात् तथाहि।**

बाह्यस्यादर्शनात्पूर्वं कथंम्विज्ञानकार्यता (।) विज्ञानस्य तु दृष्टत्वाद्युक्ता विज्ञानकार्यता ॥९८५॥

**तथा (।)**

देशकालाद्यवस्थातस्तत्कार्यस्यान्यथोदयात्। कार्यकारणभावस्य नियमो नोपपत्तिमान् ॥९८६॥

**सम्वेदनपक्षे तु सम्वेदनं पूर्व्वं सम्वेदनादेवोपजायते। यद्यपि नामाग्निमन्तरेण भवति धूमस्तथापि धूमवासनातो भाव इति नाहेतुको जनप्रतिभासश्च। मशकवर्त्तिमृगतृष्णिका-धूमजलवत्। बाह्यमेव वासनाबलाद् भवतीति चेत्। इष्यत एवैतद्बाह्यवासनाबलायातत्वा-न्नाममात्रमेव कृतं स्यात्तच्च लोकेनैव कस्तवात्र पुरुषकारः।**

**ननु वासनाकार्यत्वेन न प्रतिभाति कथम्वासनाकार्यता। अकस्माद्धूमादग्निं प्रतियतः किं बाधककार्यत्वं प्रतिभाति। पर्यालोचयतो भवतीति चेत्। वासनाकार्यत्वेपि समानं। जन्मान्तरादिवासनाप्रबोधस्यापि सम्भवात्। वृद्धस्य बालक्रीडास्वप्नसम्भववत्। ततश्च(।)**

जन्मान्तरादिदृष्टस्य प्रतिभास इतीरितं। वासनाबलभाव्ये वावभास इति निर्णयः ॥९८७॥
ततश्च पूर्व्वपूर्व्वस्य विज्ञानस्यावभासनं। सर्वत्र बाह्यं विज्ञानाद्बाह्यमेवोपपादितम् ॥९८८॥
अनादिवासनासङ्गविधेयीकृतचेतसाम्। विविधः प्रतिभासोयमेकत्र स्वप्नदर्शिनाम् ॥९८९॥
कार्यत्वात्सकलं कार्य वासनाबलसम्भवं। कुम्भाकारादिकार्यम्वा स्वप्नदर्शनकार्यवत् ॥ ९०॥
प्रधानमीश्वरः कर्म यदन्यदपि कल्प्यते। वासनासङ्गसम्मूढचेतः प्रस्यन्द एव सः ॥९९१॥
प्रधानानां प्रधानं तत् ईश्वराणां तथेश्वरं। सर्व्वस्य जगतः कर्त्री देवता वासना परा ॥९९२॥
असमञ्जसवृत्तस्य सहोद्वेगप्रवर्त्तिनः। अन्यथा जगतः कर्त्ता प्रेक्षापूर्व्वक्रियः कथम् ॥९९३॥
स्वातन्त्र्ये वर्त्तमानस्य शक्तस्य परिजानतः।
असमञ्जसवृत्तित्वं यदि कः केन शिक्ष्यताम् ॥९९४॥
उपदेशस्य दाता चेत्स एव स्वान्यजन्मनः। स्वयं कर्ता विरूपं यः तस्य का न्यायवादिता॥९९५॥
असमञ्जसभावाय विधाता चेत्समञ्जसं। प्रक्षालनादमेध्यस्य दूरमस्पर्शनम्वरम् ॥९९६॥
अशक्यमन्यथाकर्त्तुमत्र शक्तिः कथम्मता। वासनाबलतः सोपि तस्मादेवं प्रवर्त्तते ॥९९७॥
इति प्रधानेश्वरकर्त्तृवादनद्यः सदा शीघ्रवहा प्रवृत्ता (।)
विशन्त्य एवक्षयता प्रयांति तद्वासनामेयसमुद्रमेव ॥९९८॥
वासनैव वरं मूढाः सदुपायेन मेध्यतां (।) तत एव समस्तस्य वांछितस्य प्रसिद्धयः ॥९९९॥

**तस्मादर्थग्रहः कथमिति नाहं प्रष्टव्यस्तदभिप्रायपर्यन्तनयनार्थमेतवहन्तु पुनरीदृशम्भवतः सर्व्वथा समर्थयितुं शक्तः।**

अतिदुर्विहितं यत्तु कः समर्थयितुं क्षमः। अत्यन्तपूतिबीजस्य कर्षकः किं करिष्यति ॥१०००॥

## (ज) विज्ञप्तिमात्रतायां प्रमाणफलव्यवस्था—

**ननु यदि ग्राह्यग्राहकाकारता नास्ति कथन्तथाव्यवहारः। अयमपि भवतो व्यामोह एव (।) नहि ग्राह्यादिव्यवहारोपि सम्विवितः। संवित्स्वरूपे निमज्जनात्। तदात्मक एव व्यवहार इत्यर्थः। तथा हि।**

**अविभागोपि बुद्ध्यात्मविपर्यासितदर्शनैः।**
**ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥३५४॥**
**मन्त्राद्युपप्लुताक्षाणां यथा मृच्छकलादयः।**
**अन्यथैवावभासन्ते तद्रूपरहिता अपि ॥३५५॥**

**अविभागो बुद्ध्यात्मेति स्वसम्वेदनप्रसिद्धमेतत्। तथा च प्रतिपादितम्। विप(र्य)स्तदर्शनैस्तु ग्राह्यादिरूपेण गृह्यते। न। अपि तु लक्ष्यते। परेण सदभावेपि दृश्यत इति विपर्यासमारोप्य तथा व्यवहारः। दर्शनमेतदिदानीं मम, बाह्यं तु परेण दृष्टमासीदेव। एतत्पुनरसौ न विचारयति (।) परेण यद् दृष्टं तन्मया दृष्टमिति कथम्। नहि परोप्येवं जानाति। तस्यापि तदस्मत्सम्वेदनवदेवासाधारणम्। अथ सोपि मया दृष्टमित्यनुमानादेव**

जानाति। तथा सतीतरेतराश्रयदोषः। कार्यदर्शनभावादिति चेत्। नैकत्वप्रतिपत्त्यप्रसङ्गात्। नहि धूमादग्निर्ज्ञायमानो महानसस्थ एव ज्ञायते। अन्यत्वाद् धूमस्येति चेत्। रोमाञ्चादिकार्यस्यान्यत्वादपरः परस्य ग्राह्याकारः। किञ्च। सम्वेदनाद्रोमाञ्चादयो नार्थात्। दर्शनयोश्च न दर्शनेन मिश्रीभावप्रतिपत्तिरन्यथा नानुमानमपेक्ष्येत। नहि प्रत्यक्षेऽनुमानं प्रवर्त्तते।

ननु रूपमेव प्रत्यक्षं परदृश्यता तु तत्राप्रत्यक्षा ततोऽनुमानमिति चेत्। ननु परदृश्यता तत्रास्तीत्यत्रापि नैव प्रमाणम्। अत्र एव संदेह इति चेत्। एवन्तर्हि पीतरूपतापि नीलरूपतया दृश्यमाने किन्न सन्देहविषयः। पश्चादुपलप्स्यमानेऽग्नौ वह्निरूपतास्तीति कुत। पश्चादुपलम्भादेव। अत्र तु परदृश्यतायां पश्चादपि नोपलम्भः (।) ननु परदृश्यमानताऽनवगमे व्यवहार एव नास्ति(।) न(।) सादृश्यमात्रेण व्यवहारप्रसिद्धेः। एकत्वमन्तरेण तु व्यवहारो नेत्येतत्कुतः।

ननु यद्यनुमानं प्रवर्त्तते परोक्षे एकत्वेपि प्रवर्त्तते न चेत्सदृशेपि कथम्। सत्यमेतत्सदृशेपि कुतोऽनुमानं। केवलं दृश्यविकल्प्यार्थैकीकरणमात्रेण व्यवहारमात्रमेतत्। परमार्थतस्तु स्वरूपमात्रालम्बनमेवानुमानम्। परोक्षविषयता कथमिति चेत्। न।

ज्ञानं परोक्षविषयं कथमस्तु युक्तं, तत्रावभाति यदि कैव परोक्षता या।

मुक्त्वावभासनमथापि परोक्षतार्थस्तेन प्रतीतिरिरिति वाग्विधिरेष शुद्धः ॥१००१॥

ततः सम्वादनात्तस्य प्रतीतिरिति चेन्मतम्।

प्राप्तिरस्तीति तत्तत्र प्राप्तिकाले सदुच्यताम् ॥१००२॥

पूर्व्वन्तु तस्य सद्भावः केन मानेन गम्यताम्। तद्भावेन विना सैव प्रतिपन्नम्भवेत्तदा ॥१००३॥

भाविवस्त्वनुमाभावे कथमस्ति प्रतीतता। सर्व्वत्र भाविरूपस्य प्रतीतिरिति निश्चयः ॥१००४॥

द्वयोरपि प्रतीतिश्चेद्वर्त्तमानभविष्यतोः। एकरूपप्रतीतत्वं कथम्भाविभविष्यतोः ॥१००५॥

तस्मान्न परमार्थेन प्रतीतिरनुमानतः। परोक्षश्चेद् घटो नास्ति कथ पश्चात्प्रतीयते ॥१००६॥

तदैवोदययोगश्चेत्कथं स्यात्कारणम्विना। दृष्टत्वादेवमेवेति कोत्र पर्यनुयोगभाक् ॥१००७॥

दृष्टत्वापूर्व्वसद्भावः कस्मादस्य न कल्प्यते। न तथा दृश्यते तेन न तथा परिकल्प्यते ॥१००८॥

तथापि परिदृश्यस्य नानुमानन्तथैव तत्। अस्तीति ज्ञायतां केन परेणेत्यसदुत्तरं ॥१००९॥

यतः (।)

परोपि परविज्ञानमिति नैवावगच्छति। अनुमानेन तस्यापि ज्ञातावन्योन्यसंश्रयः ॥१०१०॥

परसाधारणास्तित्वे ज्ञातेस्तीति तदुच्यते। तदग्नित्वेनुमानस्य प्रतिबन्धात्प्रमाणता ॥१०११॥

तस्मात्प्रत्यक्षतोस्तित्वे ज्ञाते तत्रानुमा भवेत्। अनुमानेन चास्तित्वे ज्ञाते ध्यक्षस्य तद्ग्रहः ॥१०१२॥

अन्योन्यसंश्रयादेवमेकस्यापि न सम्भवः। अन्योन्यसंश्रय किञ्चिदन्यत्रापि न दृश्यते ॥१०१३॥

तस्मादनादितथाभूतानुमानपरम्पराप्रवृत्तमनुमानमाश्रित्य बहिरर्थकल्पनायां ग्राह्यग्राहकसम्वेदनकल्पनाप्रवृत्तेः ग्राह्यादिकल्पना परमार्थतः सम्वेदनमेवाविभागमिति स्थितं। कुत एष भवतः प्रबोध इति चेत्। मन्त्राद्युपकृतदर्शनानां मृच्छकलादीनां तद्रूपरहितानामपि सर्प्पादिरूपेण प्रतिभासनात्। ते हि परैरदृश्यमपि दृश्यतया व्यवहरन्ति। यावदेषामव्युत्पत्तिः। यदि तु यत्स्वरूपं यत्तथैव तत्प्रत्यक्षतो वेद्यते। न व्युत्पत्तिमपेक्षेरन्। प्रत्यक्षमपि व्युत्पत्तिम-

पेक्ष्य तथेति चेत् । नानुमानस्य सामर्थ्यदर्शनात् । प्रत्यक्षस्यैव सामर्थ्यमिति चेत् । नानुमानस्य प्रामाण्याप्रसङ्गात् । भवतु प्रत्यक्षमेव तदिति चेत् । तदेव तर्हि वासनाबलायातत्वमध्यक्षस्यापीति न प(र)मार्थः । अपि च (।) विपर्ययेप्यनुमानमस्त्येव तत्कथमनुमानद्वयम्भवेत् । उभयपक्षे भवत्विति चेत् । न (।) प्रतिपुरुषं भावव्यवस्थाप्रसङ्गात् । भवतु को दोष इति चेत् । तदेव स्वसम्वेदनमायातं । परस्परामिश्रणेनासाधारणत्वात् (।) तस्मात्परस्तथा न प्रतिपद्यते तथापि साधारणत्वेन प्रतीतिः । अथैतदेव कुतः परो न प्रतिपत्तिमानिति । अनुमानेनेति चेत् । विपर्ययेपि तर्हि प्रवर्त्ततामनुमानं । विपर्ययेनुमानमसदिति चेत । कथं । एकत्वेन प्रतिबन्धाग्रहणात् । सादृश्येप्यनुमानं कृतार्थमेव । इह तु पुनरदर्शनानुरूपा क्रिया दृश्यमाना नियमेनादर्शनमनुमापयति । एतच्च पर एवाभ्युपगच्छति ।

तथैवादर्शनात्तेषामनुपप्लुतचेतसाम्[1] ।
दूरे यथा वा मरुषु महानल्पोपि दृश्यते ॥३५६॥

यद्यसावर्थः परेणापि दृश्यत इति । एवं परस्याप्यभ्युपगमः । तथा महानेवायमिति प्रतिपत्त्या तदर्थितयोपसर्प्पणं साधारणमिति कृत्वा तस्मादन्यथानुमाने परित्यजत्येव तां (?) दृष्टमित्यनुमानं सकलं सकलजनप्रसिद्धं । पराभ्युपगमेन तु तत्त्वदर्शिनां । अथवा यदेव प्रतीयते यथा तादृशादर्थकल्पने कोऽवसरः । अनुमानमपि स्वाकारमात्रपर्यवसाने सति प्रत्यक्षमेव ।

ननु बाह्योप्यत्र दृश्यमानोऽदृश्यमानो वास्तीति व्यवहारिणाम्भवत्येव प्रतीतिः । भवतु सापि स्वात्मन्येव निमग्ना यावत्प्रत्यक्षाभिमता । स्वात्मनिमग्नेति नापरं प्रतीतिबहिर्भूतं वस्त्विति विन्नयः । किञ्च साधारणप्रतीतिरपि भावनाबलादेव यथा स्वप्ने । कथन्तर्हि मेयमानफलस्थितिः ।

अत्रोच्यते ।

[2]यथानुदर्शनं चेयं मेयमानफलस्थितिः ।
क्रियतेऽविद्यमानापि ग्राह्यग्राहकसंविदाम् ॥३५७॥

तदेव प्रतीयमानं वस्तु तत्रास्तीति प्रतीतिविषयतया ग्राह्यं । स्वसम्वेदनरूपं परानपेक्षमिति । ग्राहकं स्वयमेव तथाभावात्प्रतीतिरूपं सम्विदिति । विकल्पेनानुभवादुपजायमानेन व्यवस्थाप्यते व्यवहारतः । अनुदर्शनं दर्शनानुरूपो विकल्पः । अविद्यमानापि ।

अविद्यमानाप्तिके विषये ग्राह्यग्राहकसम्विदां ।

अथवाऽविद्या(म)नग्रहणेन साधारणादौ ग्राह्यादीनामिति । शेष उक्त एवान्यैः तस्मात्सम्विदेव परमार्थतो न त्रयम् ।

नन्वात्मपरिणाम एव सकल इति कस्मादविद्यमानता । यदि नाम तस्य तत्त्वादप्रच्युतस्य ते भेदपरिणामाः ।

तदाह ।

अन्यथैकस्य भावस्य नानारूपावभासिनः ।
सत्यं कथं स्युराकारास्तदेकत्वस्य हानितः ॥ ३५८ ॥

---

[1] चक्षुषाम्—इति हे. B । [2] यथार्थ—इति हे. ।

—यद्येकः कथन्नाना प्रकाशते । नाना चेत्प्रकाशते तदेकता हीयते । यतः ।

**[1]अन्यस्यान्यत्वहानेश्च; नाभेदो(ऽ)रूपदर्शनात् ।**
**[2]रूपाभेदं हि पश्यन्ती धीरभेदं व्यवस्यति ॥३५९॥**

अन्यस्याप्येतदेव तत्त्वं यदभेदप्रतिभासनं नाम । अन्यस्याप्यन्यथात्वं नास्त्येव । नेष्यत एवेति चेत् । एवन्तर्हि रूपभेदप्रतिभासने सति कथमभेदाभ्युपगमः । यदि नाम भवता नेष्यते भेदः स तु पुनरप्रतिभासमानेपि कथमभ्युपगन्तव्यः । रूपाभेददर्शने हि सत्यभ्युपगमः साधुः । यदि सर्व्वं एव ते भेदाः प्रकाशरूपाः सर्व्वेषां सत्यता । अथाप्रकाशरूपाः कथमप्रकाशाः प्रकाशादभिन्नाः । प्रकाशत्वे(?त्व आ)त्मवत्सर्व्व एव सत्या भवेयुः । आत्मवदेव । प्रकाशरूपतैव चात्मनो रूपं ततः सर्व्व एवात्मानः स्युः । ततः परिणामपक्षक्षयः । अथ बहुत्वं भ्रांतिः । तथा सति न किञ्चिदिति प्राप्तं सकलमेव शून्यम्भवेत् । भ्रान्तिरपि नामात्मव्यतिरेकेण नैवास्ति । किम्वा भ्रान्तिरिति नामकरणेन । अभावे भ्रान्तेः सर्व्वमेतन्न भविष्यतीति न तत्त्वं भेदः । ततोऽतत्त्वाभासनिमितत्वादभ्रान्तिरिति व्यवस्थाप्यते ।

नास्यास्ति भ्रान्तिता यावन्निवर्त्यत्वं न सिध्यति (।)
निवर्त्यत्वे च विज्ञाते भ्रान्तिरेवेति गम्यते ॥१०१४॥
भ्रान्तिनिश्चयमासाद्य प्रवर्त्तेत निवृत्तये । ततो निवृत्तिरित्येच्चक्रकं केन शाम्यतु ॥१०१५॥

तस्मात् ।

**भावा येन निरूप्यन्ते तद्रूपन्नास्ति तत्त्वतः ।**
**यस्मादेकमनेकञ्च[3]रूपं तेषान्न विद्यते ॥३६०॥**

एकं न विद्यतेऽनेकत्वेन प्रतिभासनात् । असम्वेदनञ्च न प्रतिभातीति सम्वेदनात्मना तेन भाव्यम् । स्वसम्वेदने चानेकत्वाप्रतीतेः । अथ तत्रान्तर्गतत्वात् प्रतीयन्ते तदन्तर्गतत्वं न प्रतीयत इति तदपि न शक्यम्वक्तुमित्युक्तं । अथवा यस्मादेकं चित्राकारमनेकञ्च न विद्यत एव । कथन्तर्हि भेदप्रतिभासः । न भेदः प्रतिभातीति प्रतिपादितं प्रतिपादयिष्यते च । अथवा सकलमेव भेदरूपमन्यथा च भावनाबलादवभासत इत्यसत्यं शक्यन्ते हि भावयतो विपरीतभावनया निवर्त्तयितुमित्यशक्यनिवर्तनता नास्तीति निश्चयावसत्यम् ।

ननु ।

**साधर्म्यदर्शनाल्लोके भ्रान्तिर्न्नामोपजायते ।**
**अतदात्मनि तादात्म्यव्यवसायेन नेह तत् ॥३६१॥**
**अदर्शनाज्जगत्यस्मिन्नेकस्यापि तदात्मनः ।**

अत्रोच्यते । न साधर्म्यदर्शनादेव भ्रान्तिः ।

**अस्तीयमपि यात्वन्तरुपप्लवसमुद्भवा ॥३६२॥**
**दोषोद्भवा प्रकृत्या सा विततप्र[4]तिभासिनी ।**
**अनपेक्षितसाधर्म्यदृगादिस्तैमिरादिवत् ॥३६३॥**

[1] अन्यस्या—इति हे. पुस्तके । [2] रूपाभेदेपि पश्यन्ती धीरभेदव्यवस्थितिः—हे. पुस्तके ।
[3] एकं वा—इति हे. पुस्तके । [4] B. वितथ

न खलु तिमिरतिरस्कृतदर्शनानां मशकमक्षिकादयो दर्शनान्तरबलादुपजायन्तेऽपित्वान्तरादेव तिमिरकारणात् ।

ननु तिमिरादप्युपजायमानं वस्तुबलादेव न भावनाबलात् । आन्तरकारणत्वमात्रन्तु विवक्षितं । सर्व्वस्यापि त्वान्तरं कारणं वासनैव । स्वप्नादिप्रत्ययवत् (।) सा वासना यथा कथञ्चित्प्रबोधवती स्वानुरूपप्रत्ययप्रसवहेतुः । तत्र च पूर्व्वपूर्व्वमेव दर्शनं साधर्म्यदर्शनं । आदौ किं दृष्टं येनेयं भ्रान्तिः । दर्शने कथं तस्य दर्शनमिति वक्तव्यम् । ततस्तु समानत्वादभ्रान्तिरेव सकला । अथान्यथा दर्शनं कथं सकला भ्रान्तिः । साधर्म्यदर्शनादिति । न । भ्रान्तिपरम्परैवेयं । नाभ्रान्तिरस्तीति प्रतिपादितं (।) तस्मादनादिरयमसद्वासनापरिकल्पसंसारः । कथं प्रमाणादिव्यवस्था स्वात्मनीति चेत् ।

अत्रोच्यते ।

> तत्र बुद्धेःपरिच्छेदो ग्रहकाकारसम्मतः ।
> तादात्म्यादात्मवित्तस्य स तस्या साधनं मतं[1] ॥ ३६४ ॥

तदेव साध्यं तदेव साधनं सैव सिद्धिः ।

> तत्रात्मविषये माने यथा रागादिवेदनम् ।
> इयं सर्व्वत्र संयोज्या मेयमानफलस्थितिः ॥३६५॥

अर्थादयो हि भावनाबशादुपजायमानाः स्वसम्वेदनरूपा इति प्रतिपादितं (।) सुखादिसम्वेदनञ्च प्रत्यक्षं प्रमाणं (।) तत्राव्यतिरिक्त (ा) एव प्रमाणप्रमेयप्रमितिव्यवस्था । यदुच्यते ।

"चतसृषु चैवम्विधासु तत्त्वं परिसमाप्यते (—) प्रमाता प्रमेयं प्रमाण प्रमितिरिति"[2] (।)

तदसत् (।) एकत्रैव सर्व्वपरिसमाप्तेः । ननु सुखादौ यदि नामाव्यतिरेकः । पीतादौ व्यतिरेक इति चेत् । न । इयमेव सर्वत्र योज्या मेयमानफलस्थितिः ।

यथा अर्थादिसम्वेदने तथा नीलादिसम्वेदनेपि । नीलाकारं अर्थाकारमिति वा भवतु कोऽनयोर्व्विशेषः । द्वयोरपि स्वरूपेण वेदनात् । ततो नीलसुखशरीरवेदनं स्वरूपेणैव सकलं न पररूपेण । स्वरूपेण चेत् । सर्व्वं स्वसम्वेदनमेव । ननु नीलादिसम्वेदनेनात्मभूतो ग्राहकाकारः सुखादिवत्तत्कथं ते दृष्टान्तः । सुखादीनां कथं स्वप्रकाशात्मकत्वात् आत्मवत् । केयं प्रकाशात्मता नाम । अपरोक्षरूपता यथैवं ।

> तत्राप्यनुभवात्मत्वात्ते योग्या (:) स्वात्मसंविदि ।
> इति सा योग्यता मानमात्मा मेयः फलं स्ववित् ॥३६६॥
>
> ग्राहकाकारसंख्याता परिच्छेदात्मतात्मनि ।
> सा योग्यतेति च प्रोक्तं प्रमाणं स्वात्मवेदनं[3] ॥३६७॥

[1] ततः—इति हे. पुस्तके । [2] वात्स्यायनीये न्यायभाष्ये १।१।१ (पृष्ठे १) स्वल्पभेदेन ।
[3] अयं पाठो हे. पुस्तके विद्यते परमत्र मूलं व्याख्या च न दृश्येते इति चिन्त्यमेतत् ।

**तेपि नीलादयोऽपरोक्षरूपत्वादनुभवात्मकाः। ततः सुखादिवदेव स्वसम्विदि योग्याः। नहि तेपि नीलादयः पररूपेणापरोक्षाः।**

**ननु चक्षुरादिबलान्नीलादीनामपरोक्षता। न(।) स्वरूपेणैवापरोक्षत्वात्। नहि यतः चक्षुः प्रसृतं ततोऽपरोक्षं बीजं चक्षुः प्रसृतमपि कदाचिन्नापरोक्षयति। अप्रसृतत्वेप्यपरोक्षत्वसम्भवात्। तथा हि।**

रागादिसम्भवे रूपमन्यथैवावभासते। चक्षुषः प्रसृतत्वेपि स्वरूपानवभा(स)नात् ॥१०१६॥

**यदि चक्षुरादिकस्याभिमुखीकरणेपि स्वरूपेण विषयस्यानवभासनं कथमसावपरोक्षः। स्वरूपावभासनमेवापरोक्षता। अथ भावनावशादयं दोषश्चक्षुषः (।) तदाह।**

यदि भावनया चक्षुरादिकस्यान्यथा गतिः। भावनाबलतः सर्व्वं नीलादेरवभासनं ॥१०१७॥

**भावना हि वासनाऽपरनामिका चक्षुराद्यायातप्रतिभासस्य हेतुः। तदा वासनाबलभाविनः एव नीलादिप्रतिभासाः।**

**नन्वन्यथा प्रतिभासनं वासनाहेतुः। स्वरूपप्रतिभासनन्तु वासनामन्तरेणेति चक्षुरादिप्रतिबद्धं न परस्परापेक्षया। सर्व्वेषामन्यत्वात्। ततोनेकप्रतिभासेन ज्ञायते किं स्वरूपमिति प्रतिभासः प्रमाणं न चेद्व्यभिचारी कुत आश्वासः। तस्मात्।**

प्रतिभासः समस्तोपि भावनाभावनिर्मितः। स्वरूपाभिमतादन्यप्रतिभासस्वरूपवत् ॥१०१८॥

**बाध्यबाधकभावस्तु प्रत्युक्त एव। तस्मात्स्वसम्वेदनमेव फलं बाह्येप्यर्थे, तदाकारः प्रमाणम्।**

**ननु साकारं विज्ञानमिति न युक्तं। तथा हि।**

यदि दर्पणवत्स्वच्छमाधानोपरागतः। तदावभासनं प्राप्तं चक्षुरादिर्न चेक्ष्यते ॥१०१९॥
यावत्सन्निहितं सर्व्वं दर्पणे तत् प्रकाशते। ततः सर्व्वस्य रूपादेरवभासः प्रसज्यते ॥१०२०॥
अथ दर्पणवच्चक्षुरवभासस्य कारणम्। तत्संक्रान्तस्य दृष्टिः स्यादस्थूले दर्पणादिवत् ॥१०२१॥
ततो न ज्ञायते रूपं कीदृक्किं परिमाणकम्। वर्णस्यापि विपर्यासः काचाभ्रपटलादिवत् ॥१०२२॥
गोलकादथ निष्क्रम्य रूपादिष्वनिपातिनः। ज्ञायन्ते निजरूपेषु ग्राहका महदादिषु ॥१०२३॥
विशिष्टं जायते रूपं प्रदीपालोकसङ्गमात्।
यदि स्वरूपसम्वित्तिः प्रदीपालोकसङ्गिवत् ॥१०२४॥
न स्यात्तत्रापि चान्यस्य व्यापारादनवस्थितिः।
अथ स्वरूपसम्वित्तिः तदा ते रश्मयः कथम् ॥१०२५॥
तस्मादर्थे स्थिते ज्ञानं तदाकारं प्रवर्त्तते। तस्मादुत्पादमात्राच्चेत्सर्व्वाकारं प्रसज्यते ॥१०२६॥
यत एव तदुत्पत्तिः तदाकारं भवेद्यदि। चक्षुराकारतापि स्याज्जायते वित्तितोपि यत् ॥१०२७॥

**अत्रोच्यते।**

**सर्व्वमेव तु[1] विज्ञानं विषयेभ्यः समुद्भवत्।**
**तदर्थस्या[2]पि हेतुत्वे कथं चिद्विषयाकृतिः ॥३६८॥**

---

[1] B. हि [2] B तदन्यस्या०

नहि यत एवोत्पद्यते तदाकारमेव भवति । तथा हि ।

**यथैवाहारकालादेर्हेतुत्वेऽपत्यजन्मनि ।**
**पित्रोस्तदेकस्याकारं धत्ते नान्यस्य कस्यचित् ॥२६९॥**

नहि पित्रोर्द्वयोरपि समानाकारतां धत्ते । तत उत्पद्यमानः स्वतः । अपि तु कस्यचिदेव । तस्मादर्थादेवार्थाकारमिति । तथाहि ।

दूरदेशस्थिताद्वृक्षात्तदाकारं हि जायते । विज्ञानं नेन्द्रियाकारमिति दृष्टमिदं सदा ॥१०२८॥

**तद्धेतुत्वेन तुल्येपि तदन्यैर्विषये मतम् ।**
**विषयत्त्वं तदंशेन तदभावे न तद्भवेत् ॥१७०॥**

न हेतुतया विषयोऽपि तु तदाकारविज्ञानहेतुतया । हेतुतया विषयत्वे चक्षुरादीनामपि विषयत्वं । तदाकारतया मरीचिकादिजलज्ञानस्यान्यदेशं जलमपि भवेत् विषयः । नह्याकारमन्तरेण बोधरूपं विज्ञानं सम्वेद्यमानमन्यथा वा तदाकारविषयव्यवस्थापने समर्थं प्रतीतेतरावस्थयोरयोगादिति प्रतिपादितम् । यदि तत्प्रतीयते किमपरेण व्यर्थकत्वात् । अथ न प्रतीयते तदापि अशक्तेरिति । न ह्यप्रतीयमानं प्रतीतिविषयः । प्रतीयमानञ्चेत्सैव तस्य तद्रूपताप्रतीतिः । व्यतिरिक्ता च क्रिया न युक्ततेति शतशः प्रतिपादितम् ।

ननु चाकारः प्रमाणं स्वसम्वेदनं फलमिति साकारसिद्धौ स्यात् (।) तदेव तु कथं सिध्यति । उक्तमत्र । अपि च ।

विषयज्ञानतज्ज्ञानविशेषाद् बुद्धिरूपता ।

विषये रूपादौ यज्ज्ञानन्तदर्थस्वाभासं, विषयज्ञाने तु यज्ज्ञानं तदर्थानुरूपज्ञानाभासं स्वाभासञ्च । अन्यथा यदि विषयज्ञानमर्थाकारमेव स्यात् । स्वाकारमेव वा विषयज्ञानमपि तदविशिष्टं स्यात् । विषये यत् ज्ञानं तदर्थस्वाभासमिति साध्यं । उत्तरो हेतुः । अन्यथेत्यादि बाधकं प्रमाणम् । कीदृशं मम ज्ञानमासीदिति यदा पर्यालोचयति तदाऽर्थप्रतिभासमेव स्मरणेन व्यवहरति नान्यथा । यश्च यथाधिमोक्षेण विषयीक्रियते तथा भवति यथा गौरित्यधिमोक्षेण विषयीक्रियमाणः शाबलेयः । तथाहि ।

एवम्भूतोऽवभासो न ज्ञानेऽर्थस्तु कीदृशः । इत्यर्थस्य परित्यागाज्ज्ञानस्यार्थाविनिश्चयः ॥१०२९॥

यदि केनचिन्नियुज्यते कथमसावर्थ इति भवता ज्ञातं तदाऽर्थप्रतिभासस्तादृशोऽर्थस्तत्रास्ति न वा, तादृशोऽन्यथा वेति न निश्चय इति प्रत्युत्तरयति । ततोर्थपरित्यागी प्रतिभास एव ज्ञानं । एकत्वे त्वर्थस्य तत्रैव निश्चयः तत्रैवानिश्चय इति कथं । निश्चयानिश्चययोर्विरोधात् । अर्थस्तु न प्रतिभासे निश्चयः । नावान्तरभेद इति तत एवंभूतः प्रतिभास इत्येतावत्तत्र प्रतिभासि । तदपरन्तु नेत्यर्थ एव स निश्चयोऽनिश्चयश्च । भागद्वयभावादिति । तदेतदुत्तरत्र वक्ष्यते । अपि च ।

**अनर्था[1]कारशंका स्यादव्यर्थवति चेतसि ।**
**अतीतार्थग्रहे सिद्धे द्विरूपत्वात्म[2]वेदने ॥२७१॥**

य आह । न ज्ञानं प्रतिभासते स्वसम्वेदनाभावात् । नापि स्मर्यतेऽर्थस्यैव सर्व्वत्र

[1] अनर्थाकार—इति हे. पुस्तके । [2] द्विरूपत्वात्म—इति हे. पुस्तके ।

स्मरणात्। तत्र यथार्थापत्त्या ज्ञानेऽर्थस्य परिकल्प्यते ज्ञानं तथा स्मरणानुपपत्त्यापि न सम्विदितं ज्ञानमस्ति न च तस्याकारता ततो द्विरूपं ज्ञानमिति प्रत्यक्षबाधः प्रतिज्ञायाः।

संदिग्धे हेतुवचनाद्व्यस्तो हेतोरनाश्रयः। दृष्टान्ते च प्रतिबन्धग्रहणे हेतुवृत्तितः ॥१०३०॥

न चैतदस्ति। सर्व्वत्रार्थाकारस्य विवादास्पदत्वात् इति चेत्। अयुक्तं (।) यतो यत्रार्थोस्ति तत्र नासौ ज्ञानस्याकार इति स्यादपि शंका। अनर्थवति तु चेतसि केशादौ पीताद्यवभासे च सिद्धमेव ह्याकारत्वं सम्वेदनञ्च। तत्र परोक्षं विज्ञानमित्येतदेव प्रत्यक्षबाधितं। ततस्तद्दृष्टान्तदृष्ट्या प्रतिबन्धग्रहणम्। ततश्च तस्य तथाभूतः प्रतिभास इति तत्त्वायातो निश्चयः कथमर्थे भवेत्। सर्व्वत्र च विज्ञाने एवमेव निश्चय इति साकारत्वसिद्धिः। स एव प्रतिभासत्वनिश्चयस्वभावो विषयज्ञाने तज्ज्ञानस्य स्वभावः। अथ कदाचित्तत्राप्यर्थ एवास्ति यदि न व्यक्तिर्जातिरेव भविष्यति।

### (झ) सामान्यस्य नित्यानित्यताप्रतिषेधः—

अत्रोच्यते।

> नीलाद्याभासभेदित्वान्नार्थो जातिरतद्वती।
> सा चानित्या न जातिः स्यान्नित्या वा जनिका कथम् ॥३७२॥

नाहं नीलादिरूपा जातिर्व्वर्णाद्याकारशून्यत्वात्। हेतुत्वेनानित्यत्वाच्च न सा जातिः। अथ नित्या न जनिका नित्यस्य जनकत्वाभावादिति प्रतिपादितं।

> नामादिकं निषिद्धं प्राक् नायमर्थधतां क्रमः।
> इच्छामात्रानुबन्धित्वादर्थशक्तिर्न सिध्यति ॥३७३॥

सकलमप्येतत्प्रागेव प्रतिपादितमिति न प्रपञ्च्यते।

## ( २ ) स्मृतिचिन्ता

### (क) नार्थाकारा स्मृतिः—

> स्मृतिश्चेदग्विधं ज्ञानं तस्याश्चानुभवाद्भवः।
> स चार्थाकाररहितः सेदानीन्तद्वती कथम् ॥३७४॥

अनुभवादुत्पद्यमाना स्मृतिरर्थमन्तरेण भवन्ती कथं नीलाद्याकारा। अथार्थादेव स्मृतिस्तदाकारा। तदाह।

> नार्थाद् भावस्तदाऽभावात् स्यात्तथानुभवेपि सः।

यद्यर्थात्साक्षात्स्मृतिस्तदा तथैवार्थेन भवितव्यं। न च तदस्ति। अथार्थाद्व्यवहितादपि भवति तदाकारा स्मृतिः अनुभवोपि तथैव भवेदिति यथा च तथा प्रतिपादितमेव। इहापि प्रतिपाद्यते।

> आकारः स च नार्थस्य स्पष्टाकारविवेकतः ॥३७५॥

स्पष्टाकारश्चार्थस्तदनुभवेन गृहीतः । स च यद्यर्थस्याकारस्तथाभूतेनैव तेन भाव्यम् । अथ स्मृत्या प्रतीयमानत्वात्तथा प्रतिभाति(।) एवं तर्हि अनुभवेन प्रतीयमानत्वा-त्स्पष्टतेति नार्थस्यासावाकारः(।)

**व्यतिरिक्तन्तदाकारं प्रतीयादपरस्तथा ।**

यद्यसावर्थः परोपि प्रतीयात् । अथात्मसम्बद्ध एवासौ न परस्य प्रतिभासते । आत्मसम्बद्ध इति कोर्थः । किमात्मकार्योऽथ तदात्मा । कार्यस्तदा परस्य प्रतिभात्येव । नहि कार्यत्वे साधारणत्वमपैति । अथ तदात्मा (।) तथा सति सम्वेदनात्मकत्वमेव । तादात्म्ये च नित्यमात्मनि सम्बद्ध एव नान्यथा । तथा च कथितमपि न प्रतीयात् । अथ प्रत्येति तदाऽन्यथापि प्रतीयात् । तथा हि (।) बाह्यं रूपादिकं कथितमपि प्रतीयते परेणाकथितमपि । अथ कथितं यत्प्रतीयते तदन्यदेव । एवन्तर्हि ।

**नित्यमात्मनि सम्बन्धे प्रतीयात्कथितं न च[1] ॥३७६॥**
**एकैकेनापि सम्बन्धे प्रतिसन्धिः[2] न युज्यते ।**

कीदृशः प्रतिसन्धिरित्याह ।

**एकार्थाभिनिवेशात्मा ;**

एकमिदमिति न प्रतीतिर्भवेत् । तस्य पृथक्त्वात् । कयोः प्रतिसन्धिरित्याह ।

**प्रवक्तृश्रोतृचेतसोः ॥ ३७७ ॥**

नानाभूतार्थग्रहणप्रवृत्तत्वात्तच्चेतसोः ।

**तदेकव्यवहारश्चेत् सादृश्यादतदाभयोः**
**भिन्नात्मार्थः कथं ग्राह्यस्तदा स्याद्धीरनर्थिका ॥३७८॥**

सादृश्येन हि य एकव्यवहारः स दृष्टयोरेव नान्यथा(।) न च परदृश्यदर्शनं कदाचि-दपि तत्थं(?तत्कथं) व्यवहार एकत्वेन । अत्र हि परस्परविविक्तार्थप्रतिभासनमेव । अथ सादृश्यम्वस्तुभूतं ततस्तदनुसारेणैकमेतदिति प्रतीयात् । एवन्तर्हि । अकथितेपि स्वप्रतीत्य-नुसारेण परस्थमपि प्रतीयात् । यदापि परो न कथयति । मयाप्येवं प्रतिपन्नमिति । तदात्वसत्त्यं कथयति । तदा कथं प्रतिपत्तिरर्थमन्तरेणैव । एवमेव दृश्यत इति चेत् । तदा तर्हि स्यादनर्थिका बुद्धिः । यथा परप्रतिभासमन्तरेणैव परप्रतिभासावसायिनी धीस्तथार्थप्रति-भासनमन्तरेण साकारा स्यादिति सिद्धमाकारवत्त्व ज्ञानस्य । यदि नाम पर्यालोचनया बाधक-प्रमाणबलाद्वा कस्यचित्साकारता ज्ञानस्य स्मृत्यादिकस्य । सर्व्वस्य तु कुतो भवतीत्याह ।

**तच्चानुभवविज्ञानमु[3]भयांशावलम्बिना ।**
**एकाकारविशेषेण तज्ज्ञानेनानुबध्यते ॥ ३७९ ॥**

अनुभवविज्ञानमस्मृतिरूपं नीलादिविषयं द्वितीयेन तद्विषयेण स्मरणरूपेणानुबध्यते अनुमीयते परामृश्यते । किम्भूतेनोभयांशावलम्बिना । नीलप्रतिभासं ज्ञानं ममासीदिति ।

---

[1] हे. पुस्तके—नित्यमात्मनीत्यर्द्धं दृश्यते, व्याख्यानमप्यस्यास्ति । भोटभाषान्तरे तु न दृश्यते,
[2] अनुसन्धानं—इत्यधिकः पाठः । [3] M. ०नुभवज्ञानेनोभयां०

**न तु यथाभूतं। तदर्थापत्त्या निश्चीयते परैः। केवलं (अर्थाहितं) तथा भूतमनुसरति कश्चित्। न चार्थापत्तिर्लौकिकस्य कस्यचिदुदयवती। नहि लोक एवं प्रत्येति(।) येनार्थो दृष्टस्तेन मम बुद्धिरपरास्तीति।**

नहि बुद्धेः स्वरूपस्य सार्थापत्तिर्निरूपिता। सुनिर्द्धार्यं हि तद्रूपं न निर्द्धारयितुं क्षमम् ॥१०३१॥

**न रूपाद्यवभासनव्यतिरेकेणापराकारां बुद्धिमर्थापत्त्याऽन्येन वा कश्चिन्निरूपयितुं क्षमः। बोधरूपतया निरूपणमिति चेत्। ननु तदेव बोधरूपं न ज्ञायते। नहि प्रत्ययभेदाद्धात्वर्थभेदः। न च प्रत्ययार्थस्य भेदः।**

केनोपज्ञ(?)श्च नार्थस्य भेदो नामोपगम्यते। अर्थाभेदे कथन्तेन तस्य व्याख्या प्रवर्त्तताम् ॥१०३२॥

**तस्मान्नीलादिव्यतिरेकेण बोधो बुद्धिरिति न निरूप्यते। तस्यव तु नीलादेः स्वभावभूतधर्मभेदो नैव सूच्यते। नीलस्य नीलविषया वा बुद्धिरिति(।) तेन नीलविषया बुद्धिर्ममासीदित्यनुसरणे तदाकारतानुसरणमेव। तथा हि।**

नीलान्न व्यतिरेकेण विषयि ज्ञानमीक्ष्यते। ज्ञानपृष्ठेन भेदस्तु कल्पनाशिल्पिनिर्मितः ॥१०३३॥

**यदि तर्हि नीलादेरेव स्वभावो भेदेन बुद्धिरिति निर्दिश्यते। नीलादिकमेव तर्हि केवलं न बुद्धिर्नाम। यथा न पटव्यतिरेकेण शुक्लत्वादिकं ततो बुद्धिरेव न परमार्थ इत्यायातं। इष्यते बाह्योऽर्थः पारमार्थिक इति।**

**तदेत(व)सत्। तथा हि।**

क्वचित्किञ्चित्समाश्रित्य कस्य चित्स्यान्निराक्रिया।
यत्प्रमाणप्रसिद्धं स्यात्तद्द्वारान्यनिराक्रिया ॥१०३४॥

**यदि प्रमाणप्रसिद्धोर्थस्तदा तद्व्यतिरेकेणापरा बुद्धिर्नास्तीति बुद्धिः परित्यज्यते। अथ बुद्धिः प्रमाणप्रसिद्धा तदार्थः। तत्र तावद्बुद्ध्याऽर्थस्य व्यवस्थापनमिति न बुद्धिरर्थवता परित्यक्तुं शक्या। बुद्धिमता तु स्वसम्वेदनसिद्धत्वान्न बुद्धिरर्थोपायसाध्या। ततोऽर्थमन्तरेणापि शक्याभ्युपगमना। ततो बुद्धिमङ्गीकृत्य तद्व्यतिरिक्तार्थपरित्यागः। अथार्थोपि स्वसम्वेदनसाध्यः(।) तथा सति सम्वेदनमेव तद्व्यतिरिक्तोर्थः। अर्थश्चापरिदृष्टोप्यस्तीति तस्यानुपलम्भात् परित्यागः। बुद्धिस्तु न तथेत्यपरित्याज्या। किञ्च।**

न शुक्लाद्यतिरेकेण द्रव्यमित्यभ्युपेष्यते। न बुद्धेरतिरेकेण तथार्थ इति मीयताम् ॥१०३५॥

**यथा हि।**

क्षणिकत्वं न नीलादिव्यतिरेकि कथञ्चन। तथापि क्षणिकत्वस्य नाभावः परिदीपितः ॥१०३६॥

**तस्मान्नीलाद्याकारैव बुद्धिस्तथावसीयमानत्वात्प्रत्ययान्तरेण तेन चोभयाङ्शपरित्यागान्नालम्ब्यत एव बुद्धिः तत्कथं न द्व्याकारा। अथवा बुद्धिरेकाकारविशेषणावलम्ब्यते द्वितीयेन ज्ञानेन। एकेनाकारेणावलम्ब्यत इत्यर्थः। किंभूतेनैकेनाकारेणेति तदाह।**

**"उभयाङ्शावलम्बिना।"**

**उभयाङ्शव्यापिना। तत एवोभयाङ्शकल्पना। परमार्थतस्तु तावाकारौ तदेकाकारानुप्रविष्टावेवेति। तेन व्याप्तौ भवतः। तौ पुनराकारौ बोधरूपता नीलाकारता च।**

पूर्व्वत्र व्याख्याने। एकाकारविशेषेण एकाकाराधिकेनेति ज्ञातव्यं। यदि नाम द्व्याकारतया व्यवस्थाप्यते तथापि कथं द्व्याकारं। अत्रोच्यते।

**अन्यथा ह्यतदाकारं[1] कथं ज्ञानेधिरोहति।**

यदि तदाकारमात्मानं स्वसम्वेदनेन नानुभवेत्। कथन्तदाकारतया ज्ञानं स्मरणेधिरोहेत्। अधिरोहणन्तदाकारताजनकं। तदधिरोहतीति कुतः। तथैव प्रतिपत्तेः।

**एकाकारोत्तरं ज्ञानं तथाह्युत्तरमुत्तरं ॥ ३८० ॥**

अवश्यमेतदुपगन्तव्यं। तथा हि उत्तरमुत्तरं। एकैकेनाकारेणाधिकमधिकं भवति नान्यथा। तथा हि। पूर्व्वकेण नीलं गृहीतं तदुत्तरेण नीलज्ञानं तदुत्तरेण नीलज्ञानज्ञानं। तदुत्तरेणापि तदधिकमिति निश्चिनोति। तदेतदन्यथा न स्यात्। एतदेवोदाहरणेन प्रतिपादयति।

**तस्यार्थरूपेणाकारो वान्याकारश्च[2] कश्चन[3]।**
**द्वितीयस्य तृतीयेन ज्ञानेन हि विभाव्यते[4] ॥ ३८१ ॥**

द्वितीयं ज्ञानं पूर्व्व विज्ञानद्व्याकारं स्वाकारञ्च विभाव्यते। तृतीयेन चतुर्थेन तदेवोभयमेकाकाराधिकमिति यावद् गणयितुं स्मर्त्तुम्वा शक्नोति। अथ ज्ञानं केवलमेव द्वितीये क्षणे न ज्ञायते। तत्तु ज्ञानमर्थेव्याप्रि(?पृ) तत्वात्तत्सम्बद्धमतस्तत्र स्मरणे सति तस्याप्यर्थस्य नान्तरीयकत्वात्स्मरणमित्यतोऽन्यथा ज्ञानं स्मर्त्तुमशक्यमिति तथा स्मर्यते। ततस्तद्व्यापृतत्वेन तदाकारमिति संकलनं भ्रान्त्या तदाकारताप्रतीतिः। अत्रोच्यते।

**अर्थकार्यतया ज्ञानस्मृतावर्थस्मृतेर्यदि।**
**भ्रान्त्या संकलनं; ज्योतिर्मनस्कारेपि सा भवेत् ॥ ३८२ ॥**

भ्रान्तिरिति सम्बन्धः। यद्यर्थस्य कार्यम्विज्ञानमथाप्यर्थे कार्य व्यापारो यस्येति ज्ञानस्मृतौ नियमेनार्थस्मरणं। अतस्तदेव गूढमतिसन्तानस्य तथा भवति प्रतिपत्तिः। एवन्तर्हि ज्योतिर्मनस्कारेपि तथा प्रतीतिः स्यात्। यथा विषयकार्यता विज्ञानस्य तथालोककार्यतापि मनस्कारकार्यतापि तेन द्वयसंकलनेनापि प्रतीयेत। नहि कार्यत्वे कश्चिद्विशेषः। अथ विषये व्यापृतत्वात्तत्संकलनं मनस्कारे तत्राव्याप्रि(?पृ)तत्वात्तदा तर्ह्यालोकेपि समान एव व्यापारो न ह्यालोकमपहाय रूपे व्याप्रियते।

तदसदेतत्। तस्माद्यथाऽऽलोकप्रतिभासमिति न भवति तथा रूपप्रतिभासमिति न स्यात्। अथालोको विषय एवान्तर्गतत्वाद्रूपप्रतिभासनिश्चयेनैव गतः। न (।) आलोकस्य प्रकाशकत्वेन विषयत्वाभावात्कथं तत्र व्यापारः। अथ प्रकाशकोप्यालोको रूपनिपतितत्वाद्रूपमेव सम्पद्यत इति विषयः। तथा सति ज्ञानमपि प्रकाशकं रूपनिपतितत्वाद्रूपमेवेति साकारालोकवत् विज्ञानमपि साकारं। यथा न रूपेण विनाऽऽलोको ग्रहीतुं शक्यः तथा विज्ञानमपि। नहि रूपादिकं प्रकाश्यम्विना विज्ञानम्ममास्तीति कश्चिज्जानाति। तस्माद्रूपाद्याकारमेव विज्ञानं कार्यतया तु तथा प्रतिपत्तौ।

---

[1] M. ह्यतथा रूपं [2] M. ०णाकाखात्मा०
[3] हे. पुस्तके–"तस्यानुरूपेणाकारो वान्याकारश्च कश्चन।" [4] विविच्यते–इति हे, पुस्तके।

**सर्व्वेषामपि कार्याणां कारणैः स्यात्तथा ग्रहः ।**
**कुलालादिविवेकेन न स्मर्येत घटस्ततः ॥३८३॥**

कुलालादिकार्योपि घटादिः स्वकारणविवेकेन न स्मर्येत । अथार्थकृतः कश्चिदतिशयो ज्ञाने विद्यते येन ज्ञानस्मरणेऽर्थोपि स्मर्यते । ज्ञानग्रहणे चार्थग्रहः । केवलस्य ज्ञानस्य न ग्रहणस्मरणे । घटादिकस्तु केवलोपि गृह्यते कुलालादिकश्च । तदपि स्वपक्षबाधनाय । तथा हि ।

**यस्मादतिशयाज्ज्ञानमर्थसंसर्गभाजनम् ।**
**सारूप्यात्तत्किमन्यत्स्याद् दृष्टेश्च यमलादिषु ॥३८४॥**

यदि तस्य विज्ञानस्य नार्थाकारता तदार्थग्रहणेनैव सह विज्ञानं गृह्यते स्मर्यते चेति कोयं नियमः । तदर्थान्तर्गतन्तु नियमेन तद्ग्रहणेनैव गृह्यत इति भवति नियमः । तस्मादर्थस्वरूपमेव विज्ञानमर्थग्रहणनान्तरीयकग्रहणं तत्स्मरणनान्तरीयकस्मरणञ्च । दृष्टश्च यमलकयोरेकग्रहणेन तदन्यप्रतिभासः सोयमिति स्मरणञ्च । श्यामवृक्षाकारतया च वृक्षग्रहणाभिमानः । यदि त्वाद्यं विज्ञानमनुभूय रूपं ग्राहकाकारमेव तथा द्वितीयमपि । तदाह ।

**आद्यानुभयरूपत्वे ह्येकरूपं व्यवस्थितं ।**
**द्वितीयं व्यतिरिच्येत न परामर्शचेतसा ॥३८५॥**

परामर्शचेतसा हि द्वितीयं प्रथमाद् व्यतिरेकेण न व्यवस्थाप्येत द्वितीयपरामर्शचेतसा यतः तदपि तदाद्यानुभयरूपत्वे सति एकरूप एव व्यवस्थितं भवेद् ग्राहकाकार एवेति यावत् । ततः कुतो विवेकावसायः । तस्माद्विषयाकारमेव विज्ञानं । तत एव ।

**अर्थसंकलनाश्लेषा धीर्द्वितीयावलम्बते ।**
**नीलादिरूपेण धियं भासमानां पुरस्ततः ॥३८६॥**

ततोर्थाकारत्वात् द्वितीया धीः पुरः पूर्व्विकान्धियमवलम्बतेऽर्थसंकलनमाश्लिष्यतीति अर्थसंकलनाश्लेषा । आश्लिष्यतीत्याश्लेषा । अर्थसंकलनेन चाश्लेषो यस्याः सा धीः द्वितीयावलम्बत इत्यर्थः । यदि तु तदाकारता न स्यात्केवलामप्यालम्बेत ।

ननु केवलामप्यवलम्बत एव तथा हि । न जाने को मया दृष्टस्तदेति ग्राहकमेव स्मरन्ति ।

तदप्यसत् ।

ग्राह्ये संशयतस्तत्र ग्राहकेप्यस्ति संशयः ।
सामान्येन ग्रह तत्र ग्राह्येप्येष नयः समः ।।१०३७।।

सामान्येन ग्राहकस्य स्मरणे ग्राह्यस्यापि समान एव न्यायः । तथाहि । कोपि मया दृष्ट इति दृश्यमानसामान्याकारेणैव स्मरणं । यदि च ग्राहकस्य स्वरूपमेव स्मर्यते ग्राह्यव्यापाररहितम् । तदा तदेव तस्य रूपं न ग्राह्यसन्निधानेऽन्यदासीत् । ततस्तु स्मर्यमाणस्यान्येन रूपेणाग्राहकेण कथं पश्चात्तथाभूतस्यैव ग्राहकता । अथ तत्त्वेन स्मरणे ग्राह्यसन्निविष्टमेव रूपं तदा कथं केवलस्य स्मरणं । तस्मात्तदारूढमेवास्य रूपं न शक्यविवेचनमिति । एकमेव रूपाद्यात्मना, यदि च न द्विरूपता विज्ञानस्य तदा नीलाकारमात्रमेव स्यान्नोत्तरोत्स-

**राणि। तदाहाचार्यः न चोत्तरोत्तराणि ज्ञानानि पूर्व्वपूर्व्वज्ञानविषयाभासानि स्युस्तस्याविषयत्वात्। यस्मात्।**

**अन्यथा ह्याद्यमेवैकं संयोज्येतार्थसम्भवात्।**
**ज्ञानं नादृष्टसम्बन्धं पूर्वार्थेनोत्तरोत्तरं ॥३८७॥**

**नहि उत्तरोत्तरस्य ज्ञानात्मनः पूर्व्वज्ञानविषयविषयता। अविषयश्च कथमालम्ब्यते। यदात्वर्थाकारता प्रथमस्य तदा द्वितीयस्यापि। तत उत्पन्नस्य तदर्थाकारसम्वेदनाकारता। तथा हि।**

तदर्थाकारविज्ञानाज्ज्ञानज्ञानोदये सति। तदाकारतया योगो दूरवृक्षाद्यथोदिते ॥१०३८॥

**अथ ज्ञानमन्यथा स्मर्त्तुमशक्यं। अर्थसहितमेव स्मर्यते। तदारूढतैव तद्व्यापृतता-लक्षणा तस्य स्वभाव इति। ततः सार्थकस्य स्मरणं। घटादीनान्तु पुनः केवलोपि स्वभावो न कुलालादिसहित एव। विषयस्तु विज्ञानसहित एवोपलभ्यते। तेन तथाभूतस्यैव स्मरणं। न तु घटादीनां।**

**तदप्यसत्। यतः।**

द्वयोर्विवेकग्रहणे साहित्यमिति युक्तिमत्। नीलाकारातिरेकेण न च ज्ञाननिरूपणं ॥१०३९॥
सुखादिरूपत्वेनेति न सिद्धमिदमेव वः ॥१०४०॥

**नहि सुखादि रूपं विज्ञानमिति प्रसिद्धिर्भवतां। सुखादीनाम्विषयत्वात्। यथा च न सुखादिव्यतिरेकेणापरं विज्ञानं तथा नीलादिव्यतिरेकेणापि। बहिर्देशत्वाप्रमेयतैव नीलादीनामिति चेत्। नाबहिरपि सुखादीनां प्रमेयत्वाभ्युपगमात्। न च तयोः सम्वेदने बहिरन्तरिति परमार्थतो युक्तं। न ग्राहकता सुखादीनां नीलादिषु। तदभावेपि तथैव प्रतिभासनात्। यच्च यदन्तरेणापि भवति न तत्कृतं भवति च नीलादि ग्रहणमन्तरेण सुखादिकमिति। ततः स्वरूपविशेषकृतमेव नीलादिग्रहणं तदभावेपि भावादिति प्रतिपादितं। तस्मान्न नीलाद्यपरोक्षतामन्तरेण नीलादिग्राहकनिरूपणमिति सिद्धमाकारद्वितयं। अनुभवनीलाद्याकारतया। अपि च भवतु ग्राहकाकारो परस्तथापि।**

**सकृत्सम्वेद्यमानस्य नियमेन धिया सह।**
**विषयस्य ततोऽन्यत्त्वं केनाकारेण सिध्यति ॥३८८॥**

**विषयस्य हि नीलादेर्धिया सह सकृदेव सम्वेदनं। धिया सह न पृथक्। ततः सम्वेदनादपरो विषय इति कथं। तथाभूतमेव सम्वेदनमिति स्यात् विवेचयितुमशक्यमिति प्रतिपादितं। भेदावभासनं भवतीति चेत्।**

**भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये।**

**तद्यथा चन्द्रद्वयदर्शनमेकमेकत्रैव चन्द्रमसि भेददर्शनमेवमात्मन्यपि विज्ञानस्य। ननु विषय एकत्रापि भेददर्शनं युक्तं विज्ञानाकारस्य भेदात्। तदात्मनि तु कथं। नहि तदेवान्यथा। कथं हि स्वरूपं तेनैव पररूपेण गम्यते तस्याप्रतिपत्तिप्रसङ्गात्।**

**न सदेतत्। यतः।**

यदि स्वरूपं प्रत्येतुमन्यथा नैव शक्यते। पररूपन्तु सुतरां तथापि न शक्यते ॥१०४१॥

यदि स्वरूपमन्यथा प्रत्येतुं न शक्यं पररूपन्तु स्वरूपेणापि प्रत्येतुं न शक्यमिति स्वरूपवत्पररूपमपि न शक्यमेवेति प्राप्तं। तस्मादयमर्थः। स्वसम्वेदने सति न भेदः प्रत्येतुं शक्यः स्वरूपस्य। यदि तु पुनरेकमेव चित्राकारं विज्ञानं स्याच्छक्यं स्वसम्वेदनेन प्रत्येतुमन्यथा ऽयोगात्। ततो द्विचन्द्रदर्शनस्यापि यद्येकता न स्यान्न तत्प्रत्येतुं शक्यं स्वपराभ्यामशक्यत्वादिति प्रतिपादितं। तस्मादुत्तरकालभाविना विकल्पेनान्वयव्यतिरेकाभ्यामिति द्वयभेदकल्पना न प्रत्यक्षा प्रतीतिः। अयमेवार्थो भेदश्च भ्रान्तविज्ञानैरित्यादिना दर्शितः। इन्दुद्वयाभिमतमेवाद्वयमेकविज्ञानान्तर्गतत्वात्। एवन्तर्हि नीलपीतयोरपि सहदृश्यमानयोरेकचित्राकारता ऽभ्युपगन्तव्या। एवमेतत्सम्वेदनरूपस्य चित्राकारस्य तत्राप्येकत्वात्। यदि तु भेदे इष्यते तदैवमभ्युपगन्तव्यं।

**संवित्तिनियमो नास्ति भिन्नयोर्नीलपीतयोः ॥३८९॥**

अयमेव भेदहेतुर्यदुत भिन्नयोगक्षेमता। इन्दुद्वयप्रतिभासस्य तु भिन्नयोगक्षेमत्वाभावादेकतैव।

ननु विरुद्धधर्माध्यासात्कथमेकत्वं। अयमेव हि भेदो विरुद्धधर्माध्यासो नाम यः परस्परपरिहारस्थितिलक्षणश्चात्र विरोधः।

नैतदस्ति।

नित्यत्वेतरयोरेव विरोधः स तथाविधः। प्रतीत्यनुप्रवेशेन द्वयोर्नास्ति विरोधिता ॥१०४२॥

एकप्रतीत्यनुप्रवेशादेव न तयोर्व्विरोधः। एतदेव तस्य रूपं यदविप्रयुक्तं नाम। न च तेनैव तद्विरुध्यते। तस्मादेकमेव तस्याकारमिति कल्पनयोच्यते। अन्वयव्यतिरेकाभ्यां। तमेवान्वयव्यतिरेकाभावं परमार्थतो नास्तीति दर्शयति।

**नार्थोऽसंवेदनः कश्चिदनर्थस्यापि[1] वेदनं।**
**दृष्टं सम्वेद्यमानन्तत्तयोर्नास्ति विवेकिता[2] ॥३९०॥**

अनन्वयव्यतिरेकित्वादेकमेव नीलसम्वेदनमन्योन्यव्यतिरेकेणादर्शनात्। तथा हि।

नार्थोऽसम्वेदनो दृष्टोह्यनर्थं न च वेदनं। सदाऽवियोगादेकन्तदर्थसम्वेदनं ततः ॥१०४३॥
भेदेन विनियोगार्थं भेदविद् भेदमिच्छति। स चेन्नास्ति ततो भेदाभेदयोःकैव भिन्नता ॥१०४४॥

तस्मादत्र भेद इति नाममात्रमेव परेण विधातव्यं। न परस्य काचित्क्षतिः। हेयोपादेयविभागश्चेत्तत्र नास्ति किमीदृशा भेदेन।

कथन्तर्हि नीलमानयेति पीतस्यानयनं न क्रियते। तदा तस्य पीतस्याप्रतिभासनमेव तेन नानीयते। यत्तु पुनरवियुक्तं नीलं तत्तु चोदितमेव। ज्ञाननिवेशि च विमुक्तं। न तदन्यथा नेतुं शक्यं। भेदव्यवहारस्त्वन्वयव्यतिरेकाभ्यामतात्त्विक एवेति प्रतिपादितं

**तस्मादर्थस्य दुर्व्वारं ज्ञानकालावभासिनः।**
**ज्ञानादव्यतिरेकित्वं ;**

अभिन्नयोगक्षेमत्वादेकत्वमर्थस्य ज्ञानेन दुर्व्वारं नहि वारयितुं शक्यमिति साकारं ज्ञानं

---

[1] M. नार्थंवापि [2] B विरोधिता

सिद्धं । एवन्तर्हि ज्ञानमेव केवलं दृश्यते नार्थः । तस्यापि दर्शने नीलाद्याकारद्वयसम्वेदनं तस्यापि ज्ञानकालावभासने पुनरर्थस्यादर्शनमित्याकारान्तराक्षेपेऽनवस्थानादसमञ्जसम्भवेत् ।

अत्र परिहारः ।

हेतुभेदानुमा भवेत् ॥३९१॥

नीलाकारं ज्ञानं दृष्टवतः केनचिदत्र हेतुना भवितव्यमिति तदनुरूपो हेतुरनुमीयते न तु साक्षादसौ प्रतीतिविषयः । पूर्व्वोक्तविरोधदोषात् । कथमत्यन्तापरिदृष्टस्यानुमानमपीति चेत् । तदाह ।

अभावादक्षबुद्धीनां सत्स्वप्यन्येषु हेतुषु ।

सामान्यतोदृष्टमनुमानं व्यतिरेकमात्रप्रवर्त्तितं । तथाहि । चक्षुरालोकमनस्कारेषु सत्स्वपि न भवति स्तम्भशून्याभिमतं स्तम्भाकारमक्षविज्ञानमन्यत्र झटित्येव भवति ततो ज्ञायतेऽन्येन केनचिदत्रवस्तुना भवितव्यं । यदभावादन्यत्राभावः । स तथाभूतोर्थः प्रमेयो बाह्यो दर्शनोपाधिराहित एव ज्ञायमानः । स तर्हि कथं प्रत्यक्षस्य विषयः । तदाकारस्य-प्रत्यक्षविषयत्वादन्यथा तन्निमित्तादुपचाराद्विषयता । एवं तर्हि बाह्य एवार्थः प्रमेयः । न सम्वेदनमात्रमिति । नात्र स्थितपक्षतामिति दर्शयति ।

नियमं यदि न ब्रूयात्प्रत्ययात्समनन्तरात् ॥३९२॥

किमाकारभेदजनकोऽन्योर्थः परिकल्पनीयोऽथ समनन्तरप्रत्ययविशेष एव कश्चित् । तत्रात्यन्तापरिदृष्टार्थकल्पना न साध्वी गत्यन्तराभावादेव परिकल्पना । यदा तु परिदृष्टपूर्व्व-दर्शनसामर्थ्यादेवायमाकार उपपन्नस्तदार्थकल्पनाविर्यर्थ्यं । दृष्टानुसारेण च कल्पना भवति नान्यथा । न ह्यदृष्टं कल्पयितुं शक्यं । दर्शनानुसारिण्या हि कल्पना दृष्टा इत्यन्य-थाकल्पनमशक्यं ।

ननु च बाह्योप्यर्थो दृष्ट एवाकारजनकः । यथा पिण्डाकारता वृक्षमन्तरेण न भवति । ननु तत्रापि वृक्ष एव जनक इति केन दृश्यते । न । तेनैव तस्य ज्ञानाकारत्वात् । अन्येन नरेण दृश्यत इत्यत्र विचारितः तनैव । पश्चाद् दृश्यत इति चेत् । यदि नाम तेन पश्चाद् दृश्यते पूर्व्वमस्तीति कुतः । पश्चाद्दर्शनादेवेति चेत् । यदि नाम पश्चादुपलभ्यते पश्चादेव भवतु । नाहि सोपलब्धिः पूर्व्वत्र व्याप्रियते । सोप्युपलब्धिज्ञानाकारस्यैव नार्थस्य । ततस्त-त्राप्यर्थोस्तीति पश्चादुपलब्ध्या निश्चयः । तत्रापि पश्चादित्यपर्यवसानादप्रतिपत्तिरेव । तस्मादर्थस्यादर्शनाद्वासनाप्रतिबद्धत्वस्य च प्रागेव साधितत्वात्समनन्तरप्रत्ययशक्तिरेव कल्पनीया नियमहेतुः सूक्ष्मेक्षिकाक्रमेण । यदि तु कश्चिदेवं न व्युत्पन्नस्तस्य हेतुभेदानुमानाद् बाह्यप्रमेयत्वं ।

ननु बाह्यार्थमन्तरेण कार्यकारणभावः कथं ज्ञाप्यज्ञापकभावश्च । तथाहि ।

बाह्यार्थमन्तरेण स्यात्कार्यकारणता विदाम् ।
तासाञ्च नियमाभावान्न कार्यन्न च कारणम् ॥१०४५॥

तथाहि ।

नीलावभासात्पीताभं ततो नीलावभासवत् । एवमन्योन्यहेतुत्वं कार्यकारणयोः कथं ॥१०४६॥

नीलावभासविज्ञानानन्तरं पीतावभासं यदा भवति विज्ञानं तदा पीतावभासव्यतिरेकेण पीतस्याभावान्नीलावभासमेव तस्य कारणन्न पीतं। न च तत्र नियमः। ततः पीतावभासादपि नीलावभासः। अन्योन्यहेतुना युक्तिविरुद्धः स्यात्। कथं हि कार्यकारणयोरन्योन्यहेतुता। बाह्यार्थत्वे तु नीलमेव तत्र कारणं। पीतप्रतिभासस्तु समनन्तरप्रत्यय एव। समनन्तरप्रत्ययश्चार्थसहकारिभेदाद्भिद्यमानो नैकतामाप्नोति। येनानियमो भवेत्। अथवा बोधरूपतायां समनन्तरप्रत्ययस्य व्यापारः। आकारे तु नीलादेरेव तत्र च नियमान्न दोषः यदि बोधरूपादन्यतोपि बोधरूपता नीलादन्यतोपि तदाकारता भवेदनियमः।

ननु शुक्लादपि शङ्खादेः पीताकारतोपलभ्यते अल्पादपि महाकारता ततोऽत्राप्यनियम एव।

नैतदस्ति। यतः।

भ्रान्तसन्ततिभावित्वात्तत्रेदमसमञ्जसं। अभ्रान्तप्रतिषेधे तु नियमान्नापरा गतिः ॥१०४७॥

भ्रान्तेर्यदसमञ्जसदर्शनं तदप्रामाणिकमेवेति न तेन व्यभिचारः। तथा बीजादंकुरस्य जन्मेष्यते न विपर्ययेण (।)

विज्ञानवादिनान्तु न बीजादिप्रतिभासादपरं बीजादिकं ततो बीजप्रतिभासादङ्कुरस्य ततोपि बीजप्रतिभासस्येति न नियमः। तथा च व्यवहारोच्छेदः। ज्ञाप्यज्ञापकभावश्च दूरोत्सारित एव। धूमादग्निरस्तीति साध्यते। परोक्षश्चानुमेयः। न च बाह्योग्निरग्निप्रतिभासश्च ज्ञानात्मकत्वादपरोक्ष एव। न च परप्रतिभासः साध्यते तत्र व्यभिचारात्। भाविनः स्वप्रतिभासस्यैवानुमानमिति चेत्। न(।) नियमाभावात्। तस्माद्बाह्यार्थवाद एव साधीयान्।

अत्रोच्यते।

**बीजादङ्कुरजन्माग्नेर्धूमात्सिद्धिरितीदृशी।**
**बाह्यार्थाश्रयणी यापि कारकज्ञापकस्थितिः ॥३९३॥**
**सापि तद्रूपनिर्भासास्तथानियतसङ्गमाः।**
**बुद्धीराश्रित्य कल्प्येत यदि किं वा विरुध्यते ॥३९४॥**

प्रतिभासेनैवात्र प्रयोजनं नार्थेन। अप्रतिभासमानस्य सतोप्यसदविशेषात्। तथाहि। उपलम्भः सत्तोच्यते। तथाहि।

अन्तरेणापि बाह्यार्थं प्रतिभासो न दुष्यति। विना तु प्रतिभासेन बाह्यं बाह्यं सदा भवेत् ॥१०४८॥

प्रतिभासो हि बाह्यमन्तरेण भवतीति प्रतिपादितं। प्रतिभासमन्तरेण बाह्यमसदेवानुपलब्धेः। ततो बीजप्रतिभासादङ्कुरप्रतिभास इति कार्यकारणभावे को विरोधः।

केवलेन तर्हि नाङ्कुरप्रतिभासेन भवितव्यं। केवलप्रतिभासे हि बीजप्रतिभासाभावे भावादहेतुकता स्यात्। बाह्यार्थवादिनान्तु नाहेतुकता। सुप्रतिभासमानस्यापि बीजस्यभावात्। तथा हि।

बाह्यस्याप्रतिभासेपि बाह्यता नावहीयते। विजानता तु नास्त्येव यदा न प्रतिभासनं ॥१०४९॥

**अथ परप्रतिभासस्तत्रास्ति ततो नाहेतुकता। न नियमाभावात्। न च परप्रतिभासात्स्वप्नप्रतिभासोदयः। तदपि समानं (।) यतः।**

यदि कस्यचिदप्येष नैवार्थः प्रतिभासते। तदस्तित्त्वे प्रमाणं किं येन तद्धेतुकोऽङ्कुरः ॥१०५०॥

**सर्व्वसामर्थ्योपाख्यालक्षणं हि निरुपाख्यं। पश्चाद्दर्शनादस्तीति चेत्। उक्तमुत्तरं। कार्यतो ज्ञायतेऽस्तीति चेत्**

कार्यकारणभावेहि सिद्धे सत्तास्य गम्यते। सिद्धायान्तस्य सत्तायां कार्यकारणता भवेत् ॥१०५१॥

**तत इतरेतराश्रयदोषादसिद्धिरेव। अर्थैकत्वारोपादसावपि दृष्ट एव।**

**ननु विज्ञानेप्यारोपः केन वार्यते। विज्ञानस्याभावात् कथमारोपो बाह्येपि समानमेतत्। बाह्यमप्यारोपादेवास्तीति व्यवह्रियते। तथा च प्रतिभासोपि सम्वृत्यास्त्येव। न ह्यनुमानकालभाविनो बाह्यस्यारोपादपरमस्तित्वं। एवञ्चासावारोपो यदि कश्चिदत्र भवेत् भवेदग्निर्दृश्यमान.। एवञ्च यदि कश्चिदत्र भवेत् भवेदेव प्रतिभासः। अन्यः सप्रतिभास इति चेत्। अन्योऽर्थ इति समानमेतत्। तत्राप्येकत्वं न परमार्थतः। विज्ञानवादेपि तैमिरिकद्वयद्विचन्द्रदर्शनवदेव च व्यवहारोऽन्यत्र च। तस्माद्विज्ञानवादेपि तद्रूपनियतप्रतिभाससङ्गमाद् बुद्धीराश्रित्य यदि कार्यकारणभाव को विरोधः। बाह्यार्थवादे तु विरोध प्रतिपादितं प्रमाणाभावात्। किञ्च।**

यदि बाह्य भवेन्नित्यं पश्चादेव प्रतीयतां। पूर्व्वं प्रतीतौ सर्व्वस्य सर्व्वाकारप्रतीतता ॥१०५२॥

**यदि बाह्यमग्न्यादिकं नित्यं तस्यैकाकारा प्रतीतिः प्रागेवेति किमर्थमनुमानात्प्रवर्त्तते। अथानुमानेन स्वरूपं न प्रतिपन्नमेव तथा सति कथमस्य सत्त्वप्रतीति.। पररूपेण प्रतीतिर्व्विज्ञानस्वरूपस्यापि समानैव। अन्यकल्पना दृश्यविकल्पार्थैकीकरणेन प्रवृत्ता तदध्यारोपयति। किन्तेनाध्यारोपितेन। अन्यथा तदभावे पश्चादर्थो विच्छिन्नोदयो भवेत्। कथन्तमन्तरेण विच्छिन्नस्य भावः। यद्यविच्छेदकल्पनया प्रयोजनं वासना मध्ये भविष्यति। तथापि विच्छेद एव वासनायाः। तद्रूपताऽभावादिति चेत्। अर्थेप्येवमभ्युपगम्यमानेन तद्रूपता (।) नहि दृष्टमदृष्टेन समानं शक्यं प्रत्येतुं। आरोपमात्रमेव तु केवलं। तद्विज्ञानवादिनामपि समानम्।**

**ननु विजातीयविज्ञानात्मिका वासना मध्यवर्तिनी कथन्तया तदविच्छिन्नं।**

यथा लाक्षावसेकस्य विजातीयान्तरोदये (।)
लाक्षाफलेनाविच्छेदो लोकस्याभिमतः तथा ॥१०५३॥

अन्तराले विजातीयविज्ञानचयसम्भवो (।)
तद्वा(वा)सनानुगमादेव न विच्छेदो भविष्यति ॥१०५४॥

**तथा लाक्षारसावसेकोऽन्तरालपातिषु बीजाङ्कुरपत्रनाडादिषु शक्तिविशेषं फलानुमेयमादधानो न विच्छिन्नं जनयतीति लोके व्यपदिश्यते। तथा पूर्व्वकोपि पावकप्रतिभासः परं पावकप्रतिभासमन्तरालपातिषु विजातीयप्रतिभासेषु स्वशक्तिमर्प्ययँस्तदारूढ इवाविच्छिन्नमेव फलं जनयतीति व्यपदिश्यतां अध्यवसीयतां वा। तेन स एव पूर्व्वकः प्रतिभासो जनयति पावकप्रतिभासं न धूमप्रतिभासः। तत्र यथा बाह्यार्थवादिनोऽग्निप्रतिभासात्पाश्चात् कल्पयन्ति पूर्व्वमग्निरासीदिति। तथा विज्ञानवादिनो वासनासीदिति नानयोर्विशेषः। धूमप्र-**

तिभासादपि धूमवासना परिकल्प्यते वासनायाश्च कारणत्वं प्रसाधितं न तु बाह्यस्य कारण-भाव उपपत्तिमान्। प्रतिपादितञ्चैतत्।

अनग्निजन्यो धूमः स्यात्तत्कार्यात्कारणे गतिः।
न स्यात् कारणतायां वा कुत एकान्ततो गतिः ॥ ३९५ ॥

यदि धूमवासनात एव प्रतिभासः स एव धूमः स एव कार्यकारणभावाभावः। न ह्यग्नेर्धूमस्तदा भवेत्। स्ववासनाप्रतिबद्धत्वात्। अथाग्निप्रतिभासोपि तद्वासनाप्रबोधानुगुणत्वेन धूमप्रतिभासकारणत्वात्कारणं। तथासति धूमोपि कारणमग्नेः। कारणतायाञ्च कुत एकान्ततो गतिर्व्यभिचारात्।

अत्रोच्यते।

तत्रापि धूमाभासा धीः प्रबोधपटुवासनाम्।
गमयेदग्निनिर्भासां धियमेव न पावकम् ॥३९६॥

धूमाभासा हि बुद्धिरग्निवासनाप्रतिबद्धा ततः सा वासनानुमीयते सा वासना प्रबोधाभिमुखत्वादग्निप्रतिभासं जनयतीति पावकप्रतिभासप्राप्त्या प्रमाणम्। तद्यथा बाह्यार्थवादिनामग्निरनुमितोऽग्निप्रतिभासमग्न्यन्तरम्वा तत एकसामग्र्यधीनाग्निप्राप्तिः। एवं वासनाधीनो धूमभाव्यग्निप्रतिभासौ। परोक्षेतरयोः पावकयोरेकत्वमेवेति चेत्। न(।) प्रमाणाभावात्। वासनाबलादेव एकत्वमिति। वासनैव परमार्थत एका न वस्त्विति प्रतिपादितं। अपि च बाह्येप्यर्थे नाग्निरनुमीयते। अपि तु भावी प्रतिभास एव। तदिर्थत्वात्प्राणिनां। न ह्यप्रतिभासमानेनाग्निना कस्यचित्प्रयोजनं। प्रतिभासान्वितायाञ्च भावी प्रतिभासो भवत्वनुमीयमानः किमग्न्यनुमानेन। कथम्भाविन्यनुमानमिति चेत्। एवमेव दृष्टत्वात्।

दृष्टत्वादेवमेवेति नायुक्तमिदमीक्ष्यते। बाह्ये त्वर्थे न सम्वादो न च दर्शनसम्भवः ॥१०५५॥

प्रतिभासेनैव भाविनाऽनुमीयमानेन सकलं समञ्जसं। बाह्ये तु स्वप्नस्यापि न सम्भवः। तथा हि।

तथा भाव्यर्थसम्वित्तिरनुमानात्सुनिश्चिता। वर्तमानार्थवित्तिस्तु नास्तीति प्रतिपादितं ॥१०५६॥

अन्यथा भाव्यर्थापेक्षया न कश्चित्प्रवर्त्तेत। अथ वर्त्तमानभाविनोरेकतामवसाय प्रवर्तते। तथा सति भाव्यर्थवित्तिरेवासौ न प्रवर्त्तमानवित्तिः (प्रकृष्टा चासौ वित्तिः)। प्राप्त्या हि वेदनसत्यतानुमीयते। ततो वर्त्तमानरूपस्याप्राप्तेर्भाविनश्च विपर्ययाद् भावि। विषयमेव प्रमाणं। वर्त्तमानभावस्तु सन्नपि तत्रासत्यः। प्रत्यक्षमपि भाविन्येव प्रमाणं। तथा च प्रतिपादितं।

ततो यदुक्तं भविष्यंश्चैषोऽर्थः न ज्ञानकालेस्तीति तन्निराकृतं। भविष्यता विना न भवतीति तत्संप्रयोगजं प्रत्यक्षं प्रमाणं (।) तत इदमपि प्रत्युक्तमनिमित्तं विद्यमानोपलम्भनत्वादिति तस्मात्प्रत्यक्षानुमानयोर्भाविविषयत्वात्तदन्वयव्यतिरेकानुविधानभावात्प्रमाणता। परमार्थतः सकलं स्वरूपविषयमेव। व्यवहारतोऽर्थविषयता। स च भाव्यर्थः प्राप्तिविषय इति तस्यैवार्थक्रि(या)कारित्वादर्थत्वं। यदि व्यवहारोऽङ्गीक्रियतेऽर्थविषयतैव प्राप्ता। स च वर्त्तमान एवार्थ इति किम्भाविविषयता प्रतिपाद्यते।

**अत्रोच्यते ।**

त्रिविधो व्यवहारोयमव्युत्पन्नादिभेदतः । तदाश्रयेण सकलमिदं युक्तमिवेक्ष्यते ॥१०५७॥

**अव्युत्पन्नानां व्यवहारो वर्त्तमानार्थविषयं प्रत्यक्षं । व्युत्पन्ना(नां) भाविविषयं अतिव्युत्पन्नानां प्रतिभासमात्रविषयमेव । तद्यद्यव्युत्पन्नजनापेक्षयाऽर्थविषयता वर्त्तमाने चार्थे सिद्धं साध्यते । एवमेव वयमप्यास्म । तस्माद्धूमप्रतिभासं विज्ञानमग्निवासनामेव गमयति । सा च वासना भाविप्रतिभासैकतया प्रतीयमाना तद्रूपप्रतिभासे प्रवर्त्तिकेति स एव भाविप्रतिभासो गम्यते भाव्यग्निवद् बा ह्या र्थ वा दि मते । ततः परमार्थतः प्रतिभास एव विषयः ।**

**ननु यदि पश्चादपि भ्रान्तः प्रतिभासो भवति न तत्रार्थित्वं ।**

अर्थ एवार्थिता लोके प्रतिभासे त्वनर्थिता ।
नहि स्वप्नसुखाद्यर्थो लौकिकः कश्चिदीप्स्यते ॥१०५८॥

**तदसत् । यतः**

वासनादाढर्चमासाद्य यदि नाप्रतिसन्धिमत् । तत्स्वप्नसुखं स्याद्वा तत्र का क्षतिरस्ति वः ॥१०५९॥

**यत्र वासनाविशेषत एवमविघटनं तत्स्वप्नसुखमेव न भवति । वि ज्ञा न वा दिनामपि स्वप्नेतरविभागोस्त्येव वासनाविशेषात् । यथा स्वप्न एव प्रबुद्धेतरविभागः । स्वप्नविशेष एव वा भवतु । तत्राप्यर्थिता भविष्यति अविदग्धानां कात्र वः क्षतिः । परमार्थतो विदग्धचूडोत्तमरत्नालंकाराणां तु मोक्षकामानां बालक्रीडावत् । अनभिमतमेव सकलं सुखमिति प्रवर्त्तनाभावासक्तिः सिद्धसाध्यतैव । तथा हि ।**

मोक्षकामाः क्षमावन्तो न समारम्भसुखार्थिनः । वृत्तिर्द्धर्मे ततस्तेषां तद्व्यावृत्तिप्रसिद्धये ॥१०६०॥

**बालक्रीडामिव सकलमेव संसारसुखार्थं धर्मसाधनमुत्पश्यतां मोक्षाक्षिप्तप्रेक्षावतां संसारव्यवहारविडम्बनाव्यावर्त्तनाय धर्मे प्रवर्त्तनं । ततः सांव्यवहारिकं प्रतिभासविषयमेव प्रमाणं । यदि तर्हि वासनाप्रतिबद्ध एव पावकादिप्रतिभासः स च सजातीयवासनाप्रतिबद्ध एव ततो धुमप्रतिभासात्तद्वासनैव गम्यतां कथमग्निवासनागतिः । यतः ।**

वासनाः खलु यद्रूपप्रतिभासप्रवर्तिताः । तद्रूपप्रतिभासस्य हेतुर्न्नान्यावभासने ॥१०६ ॥

**नाग्निवासना धूमप्रतिभासं जनयति । धूमवासनयैव तस्य जन्यत्वात् । ततो नान्यजन्यमन्यङ्गमयत्यजनकं ।**

**अत्रोच्यते ।**

**तद्योग्यवासनागर्भ एव धूमावभासिनीं ।**
**व्यनक्ति चित्तसन्तानो धियं धूमोऽग्नितस्ततः ॥३९७॥**

**चित्तादेव सकलसंसारप्रपञ्चोदयः । ततोऽग्निप्रतिभासजननयोग्यवासनासनाथचित्तसन्तानादग्निप्रतिभासः । स च सन्तानो धूमप्रतिभासं जनयति धूमवासनाप्रबोधकचित्तान्तरोपस्कारतः । ततो धूमवासना धूमाभासस्योपादानकारणमग्निवासनासहकारिणी । अग्निप्रतिभासस्यापि भाविनः पावकवासनोपादानकारणं धूमप्रतिभासः । प्रबोधकत्वात्सहकारिकारणं धूमवासना च । तत एकसामग्र्यधीनत्वाद् गम्यगमकभावः पावकतत्कार्यधूमयोरिति समञ्जसं ।**

नन्वेकसामग्र्यधीनत्वेन गमकत्वे समानकालयोरेव गम्यगमकभावोनागतस्य न गतिर्व्य-भिचारादिति ।

सदितरदेतत् । यतः ।

अनागतस्य गम्यत्वं सर्व्वत्रैवेति साधितं । धूमादग्निरपि प्राप्यो गम्यते तत्क्षणेन किं ।।१०६२।।

भाविन एव प्रमाणविषयता । यदि हि धूमादग्निस्तदैवास्तीति गम्यते । न तु पश्चाद् भविष्यति तदा प्रमाणं न किञ्चिद् भवेत्(।) नहि तत्कालभाविना तस्य वह्निना प्रयोजनं । भाविनः सन्देह एवेति चेत् । कथं प्रमाणं(।) अर्थदर्शनात्प्रमाणं(।) नहि प्रमाणेन प्रति(प)-त्तुरेव कालान्तरेर्थो दर्शनीयः ।

ननु तेन दृष्टेनाप्यर्थक्रिया न क्रियत इत्यनर्थ एवासौ । भाविनोऽर्थक्रियासम्भवात् असावप्युपचारादर्थक्रियाकारी । कारणे कार्योपचारात् । यद्येवं वि ज्ञा न वा दि नामपि तत्का-लवासनागम्यतास्त्येव । अर्थक्रियाकारित्वाभावात् किन्तयेति चेत् । अर्थेपि समानमेतत् । भाव्यर्थद्वारार्थक्रियाकारित्वात्तस्याप्यर्थकारितेति वासनामानपि समानमेतत् । अर्थोपि तत्काले वासनामात्रगम्य एव । अन्येन गम्यते चेत् वासनाप्यन्येन गम्यत एव । नहि वासनायामपि परस्य व्यवहारतो न गतिः । तस्मात्समानमनुमानं बह्यार्थविज्ञप्तिमात्रवादिनोः । तस्माद्वि-ज्ञ प्ति मा त्र मेव युक्तं ।

## (ख) परापेक्षया द्वैरूप्यम्

कथन्तर्हि बाह्येप्यर्थे आचार्येण द्विरूपता विज्ञानस्योक्ता वि ज्ञा न वा द एव युक्तः ।

अत्रोच्यते ।

**अस्त्येष विदुषाम्वादो बाह्यं त्वाश्रित्य वर्ण्यते ।**
**द्वैरूप्यं सहसंवित्तिनियमात्तच्च सिध्यति ।।३९८।।**

बाह्यार्थाभ्युपगमेन परापेक्षया द्विरूपता वर्ण्यते, विदुषान्तु वि ज्ञा न वा द एव । सम्विन्नियमो हि भिन्नयोर्न्न युक्त इति प्रतिपादितं । यदि च निराकारं भवेद्विज्ञानतदाका-रोऽन्य एव तदा ग्राहकाकारः पृथगेव गृह्येत कदाचित् । गृह्यत एव नीलव्यतिरेकेण पीते स एवाकारः । तदेव नीलं सुखाकारेण तदेव दुःखाकारेणेति चेत् । न ।

स एव ग्राहकाकारः पीताद्योपि स एव यः । पूर्व्वं दृष्ट इदं ज्ञानं प्रत्यक्षनुमाथ किं ।।१०६३।।

न ता(व)त् प्रत्यक्षं, पूर्व्वापरभावे प्रत्यक्षस्यावृत्तेः । तदभावेनानुमानमिति न प्रमाण-विषयः पौर्व्वापर्यं । कथन्तर्हि अन्वयव्यतिरेकग्रहणासमर्थत्वात् प्रत्यक्षस्य अन्यत्राप्यग्न्यादा-वनुमानं । न सामान्यविषयत्वादनुमानस्य एकपरामर्शविषयमेकमभिप्रेत्यानुमानं यथाव्यक्त्य-न्तरेण सह महानसेतरप्रदेशवर्त्तिनां एकत्वमारोप्य स एवाग्निरिति साध्यते । न । परमार्थत एकत्वमेव । एवमत्रापि स एव ग्राहकाकारस्तदेव च नीलमद्यापि तद्व्यतिरेकेणास्त इति सन्तानाभेदमभ्युपगम्य ग्राह्यग्राहकयोर्भेदः साध्यते बोधरूपनीलाकारयोर्व्वा । ततो वस्तुनि न भेदोऽपि तु प्रज्ञप्तिसति सामान्येन सन्ताने । परमार्थसत्वन्तु स्वलक्षणमपेक्ष्य सहोपलम्भ-नियम एव । ततोऽभेद एव परमार्थः । यदि च निराकारं विज्ञानं तदा तदेव शुद्धं सर्व्वदा भवेत् न पटुमन्दाविलादिरूपं । अन्यथापि च भवति । तथा हि ।

### (ग) विज्ञानस्य द्विरूपता

ज्ञानमिन्द्रियभेदेन पटुमन्दाविलादिकाम् ।
प्रतिभासभिदामर्थे बिभ्रदेकत्र दृश्यते ॥ ३९९ ॥

कथमेकत्रैवार्थे नानाकारता । यतः ।

अर्थस्याभिन्नरूपत्वादेकरूपं भवेन्मनः ।
सर्व्वं तदर्थमर्थाश्चेत्तस्य नास्ति तदामता ॥ ४०० ॥

यदि निराकारम्विज्ञानं तदार्थ एव ग्राह्यः प्रतिभाति चैकाकार एव ततः प्रतिभाति स चैकाकार एव ततः प्रतिभासस्य भेदो न स्यात् । नार्थस्य नानाकारतेति प्रतिपादितं ।

नन्वर्थाकारतायामपि नानाकारता कथन्तदेकाकारेणैव ज्ञानाकारेणापि भाव्यं । ततो नानाकारतादोषस्तदवस्थ एव । न दोषो यतः ।

अर्थाश्रयेणोद्भवतस्तद्रूपमनुकुर्व्वतः ।
तस्य केनचिदंशेन[1] परतोपि भिदा भवेत् ॥ ४०१ ॥

तदाकारतोदयप्रसङ्गेर्थादन्यतोपि तदाकारता यथा चन्द्राकारतायां तिमिरादिबलात् । द्व्याकारता ।

तथा ह्याश्रित्य पितरं तद्रूपोपि सुतः पितुः ।
भेदं केनचिदंशेन कुतश्चिदवलम्बते ॥ ४०२ ॥

नहि सुतः पितुः सदृश उत्पद्यमानो मातुर परमप्याकारं न धत्ते । इन्द्रियभेदेन भेदमेव दर्शयति ।

मयूरचन्द्रकाकारं नीललोहितभास्वरं[2] ।
संपश्यन्ति प्रदीपादेर्मण्डलं मन्दचक्षुषः ॥ ४०३ ॥

नीलाद्याकारभेदभिन्नं भास्वरं सपरिवेषं प्रदीपं पश्यन्ति तिमिरमन्दीकृतनयनशक्तयः । अथ तथाभूतमेव सत्यतः प्रदीपरूपं तदा ।

तस्य तद्बाह्यरूपत्वे का प्रसन्नेक्षणेऽक्षमा ।

प्रसन्नेक्षणोपि पश्येत् । यदि वा सोपि प्रसन्नेक्षण एव नोपहतेन्द्रियः । यतः ।

भूतञ्च पश्यँस्तद्दर्शी कथञ्चो[3]पहतेन्द्रियः ॥ ४०४ ॥

असत्यदर्शनाद्दर्शनमुपहतमुच्यते । सत्यदर्शनेप्युपघातकल्पनायां सकलस्तम्भादिदर्शिनोप्युपहतलोचनाः कल्पनीयाः । तथा हि न तावत्स्वरूपेण दर्शनशक्तेरुपघातः प्रत्यक्षतः प्रतीयते ततोऽनुमानात्कल्पनीयः । शक्तिश्च यथा कार्यदर्शनेन कल्प्यते । यथा कार्योपघातेनोपघातकल्पना तस्याः । कार्यं च दर्शनं । तच्च सत्यदर्शनमन्यद्वा । सत्यदर्शनेपि कल्पनेनानुपघातो नाम अथ सन्तमप्यन्यादृशं पश्यतीत्युपहतेन्द्रियः । तथा सति ।

शोधितं तिमिरेणास्य व्यक्तं चक्षुरतीन्द्रियं ।
पश्यतोन्याक्षदृश्येर्थे तदव्यक्तं कथं पुनः ॥ ४०५ ॥

---

[1] दर्शन—इति हे. पुस्तके । [2] B. भासुरं [3] कथम्वा

यो हि अन्यादृश्यमपि पश्यति स कथमन्यदृश्यमस्पष्टं पश्येत् । नह्येवं दृश्यते । यो हि सूक्ष्ममन्यादृश्यं पश्यति सोन्यदृश्यं परिस्फुटतरं पश्यतीति दृष्टं न चैवमतो न भूतदर्शीति युक्तं ।

नन्वभूतं दृश्यते चेति व्याहतं ।

दृश्यमानमभूतञ्चेत्कथम्भूतस्य भू(त)ता । न दृष्टिं विरहय्यान्यद् भूताभूतनिबन्धनं ॥१०६४॥

दृष्टमभूतमिति व्यवस्थायां भतमेव नाम नास्तीति प्राप्तम्विशेषाभावात् । न च दृष्टेऽनुपपन्नं नाम ।

तदसत् ।

येन रूपेण यद् दृश्यन्तत्तेनैवोपगम्यते । अन्यथा दृश्वमानन्तु गम्येत कथमन्यथा ॥१०६५॥

इन्द्रियविकारतिमिराद्यन्वयव्यतिरेकानुविधायितयोपलभ्यमानं तदपरकारणोपपादितजन्मकं सम्वेदनस्वभावाननुस्यूतमिति न युक्तं । तिमिरादिविकारानुविधानमेव च साध्यम् । तथापि बाह्यत्वाभ्युपगमे वचनमात्रकं । तथा हि ।

**आलोकाक्षमनस्कारादन्यस्यैकस्य गम्यते ।**
**शक्तिर्हेतुस्ततो नान्योऽहेतुश्च विषयः कथं ॥ ४०६ ॥**

आलोकादिव्यतिरिक्तस्य प्रदीपस्यैव परमुपलभ्यते शक्तिर्न मण्डलस्य ततो नापरस्य हेतुताभावाद्विषयता । नाहेतुर्व्विषय इति प्रतिपादितं । प्रतिभासनादेव विषय इति न युक्तं । प्रतिभासस्य भ्रान्तस्यापि सम्भवात् स्वरूपेण प्रतिभासमानं कथं भ्रान्तिमिति चेत् । स्वरूपेण प्रतिभासमानं स्वसम्वेदनन्न विषयः स्यात् । अन्यत्र प्रतिभासमानेन स्वसम्वेदनमिति चेत् । स्वेन रूपेण प्रतिभासमानं कथमन्यत्र प्रतिभातीति युक्तं । यत्र हि प्रतिभासते तस्यापि प्रतिभासनेऽन्यत्रानवस्था । स्वप्रतिभासने तद्वदेवान्यस्यापि स्वरूपप्रतिभासनात् स्वसम्वेदनमेव । परस्परप्रतिभासने नीलादीनामपि परस्परप्रतिभासनात्सम्वेदनतैव । नीलादीनामपि सम्वेदननिवेशिनां सम्वेदनस्वभावेनैवेति तद्रूपो हेतुरन्वयव्यतिरेकावधूतसामर्थ्यो विषयः । न चान्वयव्यतिरेकाभ्यां सामर्थ्यावधारणं मयूरचन्द्रकस्य । ततो नास्य विषयता । सम्वेदनासीनरूपव्यतिरेकेण व्यवस्थापनासम्भवात् । स्तम्भादीनान्तु जाग्रदुपलब्धानामन्येन ज्ञानान्तरेण दर्शनाद् व्यतिरेकव्यवस्था तत्कार्यभूदाहदर्शनाच्च । अत्रापि समानतिमिरोपप्लवैरुपलम्भ इति चेत् । न । तेषामपि समानत्वात् । नहि भ्रान्त्युपलब्धस्याग्नेर्भूमिभेददाहः कार्यमुपलभ्यते । ततो द्वयस्यापि भ्रान्तता । अथ सोग्निरदाहक एव । न । तथा प्रतीत्यभावात् । अतथाभूतस्य तथाप्रतीतिर्भ्रान्तिरेव । लोकव्यवहारापेक्षया भ्रान्ततेति चेत् । अर्थत्वमपि लोकव्यवहारापेक्षमेव । स्वरूपप्रतिभासनात्सर्व्व एव तथेति न विवेको युक्तः । तस्मादर्थक्रियाकार्यर्थोऽन्यो नेति न्यायः । सर्व्व एवार्थः किन्नेति चेत् । सर्व्वमेव सम्वेदनमिति किन्नेष्यते । सम्वेदनभावे च स्वसम्वेदनमेव सकलमिति कथमर्थता । परोक्षं सम्वेदनमिति चेत् । न । प्रमाणाभावात् । स्वसम्वेदनं कथमिति चेत् । न । दृष्टत्वात् । अन्येनापि सम्वेद्यमानं दश्यत इति चेत् । किमत्र प्रमाणं । भवतोपि किमिति चेत् । असम्वेदनमेवापरस्य ।

ननु प्रकाशकाभावे कथमप्रकाशस्य घटस्येव प्रकाशनमिति चेत् । न । प्रकाशतायाः

सिद्धत्वाभावात । प्रदीपवदेव । घटस्य कथमिति चेत् । समर्थकारेवस्थानात् । तत्र रूपमस्तीति कुतः । एकसामग्र्यधीनस्पर्शादिदर्शनादन्येन च निशाचरादिना । परमार्थतस्तु नैवमिति अस्मत्समीहितमेतत् । तस्मात्प्रदीपवत्स्वसम्वेदनमेव सकलं । तैमिरिकदृष्टाकारः । अपि च । यदि तस्य सामर्थ्यं चन्द्रकस्य चित्रपटवदेकदेशस्य प्रदीपरहितस्यापि दर्शनप्रसङ्गः । तथा हि ।

स एव यदि धीहेतुः किं प्रदीपमपेक्षते ।

विततरूपस्य तदेकदेशो विनाप्येकदेशान्तरेण गृह्यते । तथैव हेतुरिति चेत् । न । रूपान्तरापेक्षमेव नीलादि गृह्यते । एवमुभयस्य हेतुत्त्वं कल्प्यते ।

दीपमात्रेण सद्भावादुभयत्रापि[1] कारणं ॥४०७॥

तद्देशपिधानेपि दीपमात्रसद्भावाद् भवतीति नोभयकारणा तद्दृष्टिः । अथ तत्पिधातुमेवाशक्यमन्यथोदयादिति चेत् । तदैव तर्हि तस्योदय इति नाप्रकाशरूपता । दृष्टिस्तत्र व्याप्रियते तेनास्वसम्वेदनमित्यसङ्गतं । दृष्टेः समानकालतया तत्र व्यापाराभावात् । अन्वयव्यतिरेकाभ्यान्तु तद्रूपव्यापारे तदेव जनितं प्रदीपेन प्रभावदिति स्यात् । यथा वा प्रदीपो निजहेतुतः सप्रभः तथा चक्षुरपि पुरः परिस्फुरद्रूपसमन्वितमिति न दोषः । प्रदीपाद्व्यतिरिक्तैव प्रभेति चेत् । अस्तु व्यतिरेकः । किन्तु न प्रदीपप्रकाश्या प्रभा प्रदीपवदेवेति प्राप्तं । तस्माच्चक्षूरूपव्यतिरिक्तमपरमिह विज्ञानं प्रमाणाभावावसत् । तदेव तु द्वयं स्वरूपसम्वेदनाधिष्ठितं (।) सम्वेदनमिति तथाभूतसम्वेदनकारणमपरं परिकल्प्यतामिति सिद्धा द्विरूपा बुद्धिः । यदि चार्थ एव पुरोवर्त्ती साकारः स एव विज्ञानग्राह्यः तदार्थः स्वरूपेण गृह्यत इति ।

दूरासन्नादिभेदेन व्यक्ताव्यक्तं न युज्यते ।
तत्स्यादालोकभेदाच्चेत् तत्पिधानापिधानयोः ॥४०८॥
तुल्या दृष्टिरदृष्टिर्वा;

अर्थः खलु दर्शनविषयसीमानमनतिक्रम्य वर्त्तमानः स्वकारणपरम्परोपपादितान्यस्वभावपरित्यागानियतस्वभावसङ्गमात् स्वरूपत एवावभासेत । कथमस्य दूरासन्नादिदेशतायामपि प्रतिभासनभेदो येन व्यक्तेतरस्वभावताप्रसङ्गः । दृश्यते चासावतो न बाह्यमेवाकारवता स्वभावपरिग्रहेणावभासि । नहि नियताविकलरूपावभासने भेदभासनं तद्रूपभेदप्रसङ्गात् । प्रतिभासमानं हि पुरो रूपमर्थ एव तल्लक्षणत्वादर्थस्य । ततस्तद्भेदेऽर्थभेद एवाविकलः । न च भेदेऽर्थस्य व्यक्तादिव्यपदेशः । नार्थान्तरप्रतिभासनेऽन्यदव्यक्तं नाम । तस्य च तदेव रूपं तच्च व्यक्तमेव ।

तस्यैव तत्स्वरूपञ्चेत्पररूपं कथन्तथा । ताद्रूप्येण प्रतीतेश्चेद्रूपभेदे कथं नु सा ॥१०६६॥

अभेदेन प्रतीतौ हि प्रतीतेरस्तु भिन्नता । अभेदे ग्राह्यरूपस्य पुनर्भेदः कथं मतः ॥१०६७॥

तस्मादेव तर्हि दूरासन्नादिभेदादालोकस्यालोकनस्य वा भेदाद्व्यक्तेतरभेद इति न सङ्गतम् । स्वरूपप्रतिभासनेतरविकल्पानतिवृत्तेः । आलोकभेदेपि यदि स्वरूपेणावभासते कथमव्यक्तं नावभासते तथापि कथमिति न किञ्चिदेतत् । आलोकभेदे हि सोपरस्तत्र

---

[1] M. धीभावादुभयत्रापि

गृह्यतामर्थस्तु कथमव्यक्तादिरूपः। अथ दूरदेशव्यवधानान्मन्ददर्शनं। यदि दूरदेशव्यवहितन्तदापि हि तत्त्वान्न दृश्यत एव। अथापि हितं ततः परिस्फुटमेव दृश्यतामिति कुतो भेदः।

**सूक्ष्मांशस्तस्य कश्चन।**
**आलोकेन च मन्देन दृश्यतेऽतो भिदा यदि ॥४०९॥**

दूरदेशतया हि सूक्ष्मांश एव व्यवधीयते न स्थवीयानाकारः। सूक्ष्मस्तु व्यवहितो दूरदेशतया न दृश्यत एव।

नन्वसाववयव्येक एव महिम्नावस्थितः। ततः सकल एव परिदृष्ट इति कथमस्पष्टग्रहः। अथ न भवत्येकस्तदा सकलसूक्ष्मतेति प्रतीतिरेव न भवेत्। भवन्ती वा परिस्फुटपरमाणुरूपग्राहिणी स्यात्। तदेव दर्शयति।

**एकत्वेऽर्थस्य बाह्यस्य दृश्यादृश्यभिदा कुतः।**
**अनेकत्वेऽणुशो भिन्ने दृश्यादृश्यभिदा कुतः ॥४१०॥**

नन्वेकस्याप्यवयविनः सूक्ष्मावयवयोगात्तद्रहितग्रहणेऽपरिस्फुटाकारता (अ)न्यथान्यथाभावः।

तदसत्। यतः (।)

नीलं पीतं विना ग्राह्यं किं तदस्फुटमुच्यते। अन्यस्याग्रहणेन्यस्य स्वरूपग्रहणं स्फुटम् ॥१०६८॥

नन्वनेकत्वे तदन्यग्रहणे तदन्यस्याग्रहणमित्यपरिस्फुटता।

तदप्ययुक्तं। तत्रापि समानत्वात्। यदर्थग्रहणे परिस्फुटं तत्किमन्यरूपमर्थसम्वेदनस्य। यद्यर्थस्य तदन्याग्रहणेपि तदेवेति कथमपरिस्फुटता। अथ ततः सोत्पत्तिमती तदा तर्हि नार्थस्यासाविति कथमर्थग्रहः। तदापि सा तथा भवन्ती वस्तुन एव रूपमिति चेत्। वस्तुरूपतायां परेणापि तथैव दृश्येत। अदर्शने परेण प्रतिपत्तिरेव साऽसाधारणत्वादिति प्रतिपादितम्। तथा हि। प्रतीतिरेव मम व्यामलितरूपोदितेति जनः प्रतिपत्तिमानथोपचारादेवं प्रतीतिः। व्यामलितार्थदर्शनात्प्रतीतिरपि तथाभूता व्यपदिश्यते यथा दण्डसङ्गात्पुरुष एव दण्डव्यपदेशभाक्।

तदप्यसत्। यतः.

मम व्यामलितं चक्षुस्तद्वद्दर्शनसंगमात्। तत्कार्यदर्शनादेव व्यपदेशस्तथास्तु सः ॥१०६९॥
दृष्टेस्तु कार्यन्नास्त्यन्यत् न हि कार्यं तया स्थितिः[1]।
तथा समागमादेव यदि नीलापि सोच्यतां ॥१०७०॥
क्वत्यं ममेयं दृष्टिर्हि न कदाचित्त्वयेष्यते। तस्मादस्पष्टता दृष्टेः सर्व्वलोकप्रतीतितः ॥१०७१॥
निश्चयो हि न सर्व्वेषामकस्माद् भ्रान्त उच्यते।

नहि व्यवहारमस्खलितमादधानो व्यवसायोऽन्यथा संभाव्यते। ततः स्वयमर्थप्रतिभासेन बुद्धिभेदो युक्तः।

**मान्द्यपाटवभेदेन भासो बुद्धिभिदा यदि।**
**भिन्नेन्यस्मिन्नभिन्नस्य कुतो भेदेन भासनं ॥४११॥**

---

[1] B. न ह्यर्थं तस्याः कार्यतया स्थितिः

अपरः प्राह । आलोकस्य बाह्यस्यैव मान्द्यपाटवभेदाद्बुद्धिभेद एकस्मिन्नप्यर्थे न तु बुद्धिस्वभावभेदः स्वत इति नासावाकारश्चेतसः । तदनुपपन्नं । यतः ।

अर्थस्य प्रतिभासः स्याद्यदि भासा समन्वितः ।
अन्येन सहिताभासे न स्यान्मन्दावभासिता ॥१०७२॥

परस्परव्यावृत्तालोकरूपप्रतिभासे हि तयोरेव तथावभासनमिति नास्पष्टरूपप्रतिभासः । न खल्वन्यस्मिन् स्वरूपावभासवति तदपरः तथा भवति । भवत्येव कुसुम्भरागवस्त्रान्तरितवस्तुप्रतिभासवदिति चेत् । न । तत्रापि समानत्वात् । स्वरूपेण प्रतिभासनेन रक्ततावभासः । तदेव तस्य रूपमिति तथावभासनाभ्युपगमे तस्याप्यालोकमन्दतया तदेव रूपमिति सकलस्य तथावभासनात्कुतो बुद्धिभेदः । तस्मादालोकभेदेपि न भेदावभासः । अपि च ।

मन्दन्तदपि तेजः किमावृत्तेरिह सा न किं ।
तनुत्वात्तेजसोप्येतदस्त्यन्यत्राप्यतानवं ॥४१२॥

यदि तेजो दवीयसि देशे रजसाऽवृतमिति मन्दं तदाकाराद्देशमपि मन्दमेव तत्रापि रजसा तिरस्करणसम्भवात् । न खलु व्यापि नभस्वदुद्धूयमानमिह नास्ति(।) तदस्तित्वेपि तनुत्वाद्रजसोऽनावरणकारणता । दवीयसि तु देशे तदन्तरालापतनत्वे न रजसो भूयस्त्वं । स एव गोधाशशकन्यायः । तेजसोपि तत्र भूयस्त्वमेव । निकटे तु यथा रजसस्तानवन्तथा तेजसोपीति किमेवमुक्तेन ।

अत्यासन्ने च सुव्यक्तन्तेजस्तस्यात्परिस्फुटम्[1] ।

यदि रजसस्तनुत्वेनालोकस्यामन्दतायां स्फुटप्रतिभासस्तदात्यासन्नतायां रजसस्तनुतमत्वादतिपरिस्फुटम्भवेत् । तत्र शक्त्यभावादिन्द्रियस्येति चेत् । सर्व्वथाऽदर्शनमेव प्रसक्तमित्युक्तं ।

तत्राप्यदृष्टमाश्रित्य भवेद्रूपान्तरं यदि ॥४१३
अन्योन्यावरणात्तेषां स्यात्तेजोविहतिस्ततः ।

अदृष्टसङ्गतमचेतनं पदार्थमाश्रित्य रूपान्तरमेव तत्रोत्पन्नं तेन तत्तेज आवृतं विहितमिति न तदपरस्य दर्शनं । एवं सति सर्व्वेण तदेकमेव दृश्येत नापरं । तस्यावृतत्वादालोकस्य । द्वयमपि च दृश्यते निकटे तादावरणं नास्त्येव तस्य पृष्ठतस्स्थानात् । नैकदेशस्यैव दर्शनात् । नहि दूरदेशवर्त्तिना निकटदेशावस्थितस्य पृष्ठतस्तदुपलभ्यते रूपमपरिस्फुटाभिमतं । भ्रान्तिरसाविति चेत् । पदार्थतत्त्वदर्शनदर्शिनां कुतो भ्रान्तिसम्भवः । देशभ्रान्तिरस्त्येवादित्यस्य वृक्षशिरः संसृष्टतादर्शनवत् ।

तत्र देशेप्यसत्तत्र दृश्येत यदि वस्तु तत् । तत्र कालेप्यसत्तत्र किन्न दर्शनसङ्गतम् ॥१०७३॥
तत्काले ऽविद्यमानस्य यदि स्यात् दृष्टिरागतं ।
सर्व्वार्थदर्शिनः सर्व्वं इति तच्च न दृश्यते ॥१०७४॥
अदृष्टसङ्गमादेतद्यदि सर्व्वं समर्थ्यते । परेणापि ततः सर्व्वो दृष्टतो दर्शनोदयः ॥१०७५॥

यदाहि परदर्शनदूषणाय भवता किञ्चिदुच्यते । तदा परोपि सकलमेतद् भवतो

---

[1] M. तस्यादतिस्फुटम् च—हे. पुस्तके ।

दूषणं प्रतिभाति न समर्थनं । तथाभूतादृष्टसामर्थ्यादिवेति भवत एवायं दोष इति शक्त एव वक्तुं । यथा च विद्यमानवारणमदृष्टतः तथा ऽविद्यमानोपदर्शनमपि । ततो ऽविद्यमानमेव भवतो दूषणं प्रतिभाति । विद्यमानमपि न समर्थनं तथा प्राश्निकप्रपञ्चस्यापीति न कश्चित्सम्यग् वादी भवेत् ।

दृश्यते यद्यथा वस्तु तत्तथैवानुगम्यताम् । अस्फुटावरणन्तस्य पृष्ठतो नेति गम्यताम् ॥१०७६॥

कस्यचिदपि पृष्ठतस्तदावरणमिति पुरोवर्त्तिनावरणेन पिहितत्वादेकमेवास्फुटरूपमावरणं सर्व्वः पश्येत्तस्यानावरणे तु सकृदेव दूरदेशव्यवस्थितोपि स्फुटेतरलक्षणं द्वयमपि पश्येदिति प्राप्तं सकृत्तदेवेत्याह ।

**तत्रैकमेव दृश्येत तस्यानावरणे सकृत् ॥४१४॥**
**पश्येत्स्फुटास्फुटं रूपं;**

अथाप्युच्येत । एक एव दृश्यते परदर्शनस्यादृष्टेन वारणे सतीति चेत् । अत्रोच्यते । यदि तत् ।

**एको[ऽ]दृष्टेन वारणे(।)**

न दृश्यत इति वाक्यशेषः । तदयुक्तं ।

**अर्थानर्थौ न येन स्तस्तददृष्टं करोति किं ॥४१५॥**

अदृष्टं हि नामेदं धर्माधर्मलक्षणं । अकस्मादर्थानर्थोपनिपातेन गम्यते न प्रत्यक्षतः । तत्कथमनर्थेतरत्वाभावेपि दूरादर्शनस्यास्पष्टदर्शनस्य वा दृष्टकृतत्वं । एतदपि करोतीति चेत् । दत्तमत्रोत्तरं । सर्व्वमेव दूषणसमर्थनं न तत्त्वतो भवेदिति । साधूक्तमपि न भवताऽवगम्यते ऽदृष्टवशादिति ।

**तस्मात्संविद्यथाहेतु जायमानाऽर्थसंश्रयात् ।**
**प्रतिभासभिदां धत्ते शेषाः कुमतिदुर्न्नयाः ॥४१६॥**

किञ्च ।

(घ) अक्षणिकस्य न व्यक्तिः

**ज्ञानशब्दप्रदीपानां प्रत्यक्षस्येतरस्य वा ।**
**जनकत्वेन पूर्व्वेषां क्षणिकानां विनाशतः ॥४१७॥**
**व्यक्तिः कुतोऽसतां ज्ञानात्;**

नाविद्यमानस्य स्वरूपेण दर्शनं । हेतुत्वेन च ज्ञानात् पूर्व्वत्वं । पूर्व्वत्वे च क्षणिकतया न ज्ञानकालेस्तिता । अथ यदैवास्ति तदैव ग्रहणं हेतुभावमन्तरेणापि । समानकालतयैव वा हेतुतापि ।

तदसत् । ज्ञानस्य य उपकारको न भवति तस्य ।

**अन्यस्यानुपकारिणः ।**
**व्यक्तौ व्यज्येत सर्व्वोर्थः;**

न समानकालस्य हेतुता तथा ऽप्रतीतेः। असम्बद्धग्रहणे च सर्व्वमेव गृह्येत।

**तद्धेतोर्न्नियमो यदि ॥४१८॥**

न सर्व्वग्रहन्तद्धेतुनियतत्वाद् ग्राह्यग्राहकयोः। ईदृशो ग्राहकश्चक्षुषा नियमितो येन प्रतिनियतमेव गृह्णाति। ग्राह्यम्वा येन तेनैव गृह्यते। अथवोभयमपीति परः। तदयुक्तं। यतः।

**नैषापि कल्पना ज्ञाने;**

न प्रतिनियतग्रहणमनया कल्पनया। हेतुनियमो हि पदार्थानां स्वरूपे कार्यकारणे च। न तावत् स्वरूपे। स्वरूपप्रतिनियमे हि कारणतः स्वरूपमेव तयोस्तथाभूतं यदवभासते। ततः स्वरूपावभासनमेव प्रसक्तं तत्पूर्व्वकारणाधीनं न परस्पराधीनमिति न परस्परं ग्राह्यग्राहकभावः। समानकालोदयात्। यदधीना हि तयोर्ग्राह्यग्राहकता तस्यैव तौ ग्राह्यग्राहकाविति युक्तं।[1] न च संविदितस्वस्वरूपादपरा ग्राह्यग्राहकता। कथन्तर्हि ग्राहकोहं ग्राह्यं ममेदमिति प्रतीतिः। न। तदपरस्य सम्बन्धस्याप्रतिभासनात् कल्पनामात्रमेवानादिवासनाधीनमेतत्। तथा चोक्तं। "सव्यापारमिवाभातीति"। तस्मात्स्वरूपस्य स्वहेतुनियमान्न ग्राह्यग्राहकभावः। अथ कार्यकरणे स्वहेतुनियमः। तदापि यदि ताभ्यां प्रतिनियतस्य कार्यात्मनो जननं कथमिव ग्राह्यग्राहकभावः। सहकारिभाव एव भवेत्। न च तावता ग्राह्यग्राहकभावः। तस्मान्न हेतुतो ग्राह्यग्राहकभावः। अथवा नैषापि कल्पना ज्ञाने। यदा ज्ञानं ग्राह्यं ज्ञानान्तरस्य प्रत्यक्षस्यान्यस्य वा तदा किं द्वयोर्ज्ञानयोः समानकालता। हेतोश्च ग्राह्यग्राहकतोदयः। न च द्वयोः समानकालतेष्यते। समानकालतयाम्वा तदन्येनापि समानकालेन तदन्येनापीति अपर्यन्ततैव ज्ञानानाम्भवेत्। अर्थस्यापि तदा ग्रहणम्भवेत्। न चेष्यते। न च प्रथमं ग्राह्यमसत् पश्चाद् ग्राह्यं भवति तद्रूपस्याप्रतिपत्तिप्रसङ्गात्। ग्राह्यरूपमेव प्रागपीति चेत्। प्रागपि ग्रहणप्रसङ्गः। भवतु को दोष इति चेत्। न। प्रागपि ग्राहकप्रसङ्गात्। यदि च चक्षुरादिसामग्रीवशादुदयस्तस्य ज्ञानमेव ग्राह्याकारः स्यात् नार्थता। तथाप्यर्थत्वे ग्राहकाकारोपि भवेत्। अथार्थस्य प्राग्भावाद् ग्राहकस्य चान्यथाभावान्नैवं। न प्रागभावः परिगृह्यत इत्युक्तं। कल्पनायां सर्व्वकल्पनाप्रसङ्ग इति च। कथन्तर्ह्यर्थकल्पना। अन्य-(सौ त्रा न्ति क)दर्शनापेक्षयेति प्रतिपादितं। अत एवाह।

**ज्ञानन्त्वर्थावभासतः।**
**तं व्यनक्तीति कथ्येत तदभावेपि तत्कृतं ॥४१९॥**

तदाकारावभासनात् अविद्यमानोप्यर्थः प्रतिभातीति भवेद्व्यपदेशः। अन्येन दृश्यमानोर्थः स्वयञ्चानुमानतः प्रतीतोस्तीति व्यवस्थितावर्थस्य ततस्तदाकारज्ञानोत्पत्तौ स गृहीत इति युक्तं। तदभावे तूत्पन्नं भ्रान्तिज्ञानमिति व्यवस्था। न तु पुनः परमार्थतो ऽनुमानमस्ति।

प्रत्यक्षपूर्व्वकं सर्व्वमनुमानं प्रवर्त्तते। प्रत्यक्षस्यानुमानापेक्षा यद्यन्योन्यसमाश्रयः। न यावदनुमानं प्रमाणं तावन्न प्रत्यक्षं प्रमाणीभवति बाह्येऽर्थे। न च प्रत्यक्षस्य प्रामाण्यास-म्भवेऽनुमानन्तत्पूर्व्वकत्वादन्यथान्धपरम्परा भवेत्। तस्मात् परमार्थतः स्वरूपमेव सम्वेदनस्य

[1] स्फुटमस्फुटम्वा दूरासन्नवर्तिना च सर्व्वेण—इति पंक्तौ त्रुटितोंशोस्तत्रैव बहिःपंक्ति लभ्यते।

सम्विदितं नार्थः। तथाप्यभ्युपगम्योच्यते। नहि सर्व्वं तत्त्वत एव व्यवस्थाप्यते। ततः पूर्व्वमर्थे सति यदाकारं विज्ञानं जायते स ग्राह्यः।

**नाकारयति चान्योर्थोऽनुपकारात् सहोदितः।**

सहोदितोर्थात्मा स्वहेतोः तथैवोत्पन्न इति तदुपकाराभावात् ज्ञानस्य नासौ ग्राह्यस्तदाकारज्ञानाजननात्। ततः।

**व्यक्तोऽनाकारयन् ज्ञानं स्वाकारेण कथम्भवेत् ॥४२०॥**

परोक्षोर्थात्मा तदाकारज्ञानजनकतयावस्थितः स्वरूपेणाविदितस्वभाव इति तदाकारज्ञानसम्वेदनादेव तस्य वेदनमिति युक्तं। तेन व्यक्तत्वं। स्वरूपेण प्रतिभासने तु स्वहेतुसामर्थ्यान्न समानकालता विना परेण तस्य किञ्चिदिति तद्वेदनं। यदि परन्तदुपरोधमात्रादेव। भवतु ज्ञानादीनामसतां ज्ञानकाले स्वरूपेणावेदने ततस्तत्र सामर्थ्यात्तदाकारज्ञानकल्पनापि। यः पुनः स्थिरो वज्रोपलादिकोर्थस्तस्य स्वरूपवेदनं कथमनुपपन्नं।

तदपि यत्किञ्चिदेतत्। यतः।

**वज्रोपलादिरप्यर्थः स्थिरो योन्यानपेक्षणात्[1]।**
**सकृत्सर्वस्य जनयेत् ज्ञानानि जगतः स्वयम्[2] ॥४२१॥**

कालकलावता न व्यापी हि नित्यः स्थिर इति चोक्तः। यदि च तस्य स एव स्वभावस्तदा तदाकारसर्व्वस्वस्वीकारसम्वेदनेन सपर्यवसानः स परिगृहीत इति एकज्ञानकाल एव परिसमाप्त इति न नित्यता भवेत्। न तदैव परिसमाप्तं नित्यं नाम। सकलकालकलावलोकने च न कालदैर्घ्यं। युगपच्च ग्रीष्मादिकः कालः स्यात्। ज्ञानैकत्वेप्ययमेव दोषः।

ननु क्रमभाविकालकलानामक्रमेण कथं ग्रहणम्। अग्रहणे तर्हि न कालव्याप्तिरस्येति कथं नित्यता। तस्माद्यद्यसावेकस्तथैव सकृत् गृह्येत। अथापरकारणापेक्षया परापरसम्वेदनजनने क्रम इति।

तदप्ययुक्तमनपेक्षत्वात्। न ह्येकरूपं स्वकारणादुत्पन्नं तद्भावे ऽपरमपेक्षते। अथ पश्चादपरा दृश्यमानता भवति। या पश्चादेव विषयः। तदा तर्हि न नित्यत्वमित्याह।

**क्रमाद्भवन्ति तान्यस्य सहकार्युपकारतः।**
**आहुः प्रतिक्षणं भेदं स[3] दोषोत्रापि पूर्व्ववत् ॥४२२॥**

यदि सहकारिचक्षुराद्युपकारक्रमेण तानि विज्ञानानि क्रमभावीनि। तथा सति ज्ञानानां क्रमभावे तद्दृश्यतापि क्रमभाविनी। नहि दृश्यता ज्ञानमन्तरेण वस्तुनः स्वसम्वेदनप्रसङ्गात्। ज्ञानसमानकालभाविनी च दृश्यता न पूर्व्वापररूपा ज्ञानस्य तथाभावात्। ततो ज्ञानवदेव प्रतिक्षणं भेद इति। पूर्व्वपूर्व्वस्वसन्तानभाविकारणाधीनाऽन्यथा वा। ततः पूर्व्ववदत्रापि दोषः। अथ चक्षुरादिकारणोपनिपातमविच्छिन्नमेकमेव। ततस्तदविच्छेदादविच्छेदसम्भविनी ग्राह्यतैकैव ततो नित्यता वज्रोपलादेः।

नैतदस्ति।

---

[1] B. सोन्या० [2] M. समम् [3] B. स

वज्रोपलादौ विच्छेदमन्तरेण प्रमादयः । सर्व्वथा नेति केनायमविच्छेदः प्रतीयतां ॥१०७७॥

**यदाप्यविच्छेदस्तदापि पर्यवसानावधि प्रतीतिप्रसङ्ग इत्युक्तं । तस्माद्वज्रोपलादावपि समानमेव । तस्मादविद्यमानानां शब्दादीनां कारणभूतानां सम्वेदनासङ्गतेर्व्विषयाकारं विज्ञानमिति सिद्धं । आ चा र्ये णापि प्रतिपादितं ।**

"स्मृतेरुत्तरकालश्च नह्यसावविभाविते ।"

**तदाह** (।)

स्मृतेश्च द्विरूपतासिद्धेति ।

## ( ३ ) स्वसंवेदनचिन्ता

### (क) अर्थाकारं ज्ञानम्

**अथापि स्यात् । सम्वेद्यसम्वेदकरूपतया द्विरूपतया न विषयाकारतयेति ग्रन्थार्थः । तदयुक्तं ।**

विषयज्ञानतज्ज्ञानविशेषात्तु द्विरूपतें ॥१०७८॥ ति प्रकृतं

**तत्र च विषयाकारता प्रकृता साधयितुं । कथं पुनर्ज्जायते द्विरूपम्विज्ञानमिति प्रक्रमात् । तत्रापि द्व्याभासं हि विज्ञानं स्वाभासं विषयाभासञ्च । तत्र विषयतायामेव महत्यास्था । यतः ।**

**संवेदनस्य तादात्म्ये न विवादोस्ति कस्यचित् ।**
**तस्यार्थरूपताऽसिद्धा सापि सिध्यतिसंमृतेः ॥४२३॥**

**ननु च स्वसम्वेदनेपि विवाद एव ।**

**नैतदस्ति । सम्वेदनमात्राभिप्रायादेवमुच्यते । स्वसंवेदनन्तु साध्यमिति युक्तमेवैतत् । तथा च ।**

स्वसम्वेद्यता चेति पश्चात्सा साधयिष्यते ।

**ततः स्वसम्वेदनव्यतिरिक्तसम्वेदनात्मत्वेन विवाद इत्ययमत्रार्थः । तस्य त्वर्थाकारतायां विवादस्तदसिद्धेः । सापि तदाकारता सम्यक्स्मृतेर्व्विभागेन स्मृतेः सिध्यति ।**

**ननु निराकारतायामपि स्मृतिर्व्विभागवत्युपपन्नैव । तत्कथमनैकान्तिकाद्धेतोरर्थस्य सिद्धिः ।**

**नैतदस्ति । यतः ।**

परस्परस्य भेदेन स्मृतिरत्र विवक्षिता । स्पष्टभेदम्विना नासाविति हेतुत्वमुच्यते ॥१०७९॥

**भेदेनाननुभूतेस्मिन्नविभक्ते स्वगोचरैः ।**
**एवमेतन्न खल्वेवमिति सा स्यान्न भेदिनी ॥४२४॥**
**न चानुभवमात्रेण कश्चिद् भेदो विवेचकः ।**
**विवेकिनी न चास्पष्ट[1]भेदे धीर्यमलादिवत् ॥४२५॥**

[1] B ०स्पष्ट

**यदि तत्सम्वेदनं न प्रतिनियतस्पष्टनीलाकारो रागवशात् विभक्तमुपजायते। तदा न विवेकेन स्मर्य्येत। अथ कश्चित्सामग्रीविशेषाद् भेदोऽवश्यम्भावी तत एव भेदवती स्मृतिः। तदयुक्तं (।) यतो नानुभवमात्राद्विशेषः सामग्रीप्रभावोऽन्नीयमा(ना)त्मा स्मृतेर्न्निबन्धनं स्पष्टभेदाभावात्। न चास्पष्टभेदादेव विवेकिनी यमलकादिषु स्मृतिः। अथ विषयोपि तत्रानुभूत इति स्मर्यते। तदव्यभिचारादतः स्वयमभिन्नमपि तद्भेदादेव भेदेन स्मृतेर्व्विषयः। यमलकयोरपि यदा विलक्षणदण्डादियोगस्तदा भवत्येव विशेषोपलक्षणम्। यथैव विषयबलात् कल्प्यते ऽनुभवस्तथा स्मर्यमाणादपीति ततो विज्ञानस्मरणमिति व्यवहारः।**

**तदसत्।**

विषयाकारताभावे विषयस्मरणं कथं। अतीतस्य हि नार्थस्य स आकारः परीयते ॥१०८०॥
प्रत्युत्पन्ने हि तस्मिँस्तत्कथं स्मरणमुच्यते।
स्मरणस्य स आकारो यदि किं सम्विदा न वा ॥१०८१॥

**अनुभवादाकारवतः स्मृतिरुदयमासादयन्ती तदाकारेति युक्तं। तथाहि।**

स्मृतिरर्थाद्यदि भवेत् सर्व्वत्राप्यविशेषतः। दूरादित्वेपि वस्तूनां स्मृतेरुदयन्नेक्षते ॥१०८२॥
अनुभूतिमथाश्रित्य हेतुरस्ति स एव नः। अर्थाभावेप्यनुभवात् स्मृतेरुदयसम्भवात् ॥१०८३॥

**यदि साकारता ज्ञानस्य न भवेत्। कथन्तदाकारता स्मृतेः। तथाहि। विज्ञानं स्मरणप्रत्ययेनालम्ब्यमानन्नाकारव्यतिरिक्तमालम्ब्यते अतियोगयोगिनापि। यस्य यथाधिमुक्त्या विषयीकरणं तथैव तदिति मन्तव्यं। तस्मात् स्मृतेरुभयरूपता प्रसिध्यतीति युक्तं स्वसम्वेदनञ्च। तथा चाचार्यः। "स्वसम्वेद्यता च वा।" आह च (।)**

**द्वैरूप्यसाधनेनापि प्रायः सिद्धं स्ववेदनं।**
**स्वरूपभूताभासस्य तदा संवेदनेक्षणात् ॥४२६॥**

**ननु सर्व्वेणैव द्वैरूप्यसाधने न स्वसम्वेदनं प्रसिद्धं। किमुच्यते प्राय इति।**

**नैतदस्ति। मुख्यतो द्वैरूप्यसाधने द्वैरूप्यप्रसिद्धिरानुषङ्गिकी पुनः स्वसम्वेदनतापि। यतः स्वरूपभूत आभासस्तदा प्रतीयते। न च स्वसम्वेदनादन्यतः प्रतीतिः।**

**ननु स्वसम्वेदनमित्यात्मनो ग्राहकं ततश्च तदेव ग्राह्यं ग्राहकञ्चेति। न चैवमात्मकतायां दृष्टान्तः कश्चिदस्ति। येन ततः सिद्धिः। प्रदीपादिवत्प्रकाश्यप्रकाशकभाव इति चेत्। न(।)प्रदीपादीनामपरप्रकाशकनिरपेक्षत्वात् प्रकाश्यरूपता नास्त्येव। कुतः प्रकाश्यप्रकाशकतया दृष्टान्तता।**

ग्राह्यता तु यदा तेषां तदाक्षग्राहकं भवेत्। बुद्धचक्षयोर्न च स्वात्मवेदनं निश्चितं द्वयोः ॥१०८४॥

**तस्मात् स्वसम्वेदनन्नाम नास्त्येव।**

**ननु चात्मा ग्राहकरूपो ग्राह्यश्चेतीष्यते भवद्भिः**

**तदप्यसत्। यतः।**

**धर्मभेदेन तत्रापि शक्या ग्राह्यग्राहकरूपता। ग्राह्यत्वं द्रव्यरूपेण ग्राहकत्वं ततोन्यथा ॥१०८५॥**

**द्रव्यान्तरासाधारणेनात्मत्वेन ग्राहकता द्रव्यत्वेन तु साधारणेन ग्राह्यतेति युक्तं।**

**भवतस्तु सर्व्वमेतदसमञ्जसं। न च परप्रसिद्धिमात्रादेव दृष्टान्तः। स्वप्रतिपत्तावुपायत्वाभावात्।**

**तदेतदसत्।**

ग्राह्यग्राहकभावो हि नैवास्ति परमार्थतः। अपरप्रत्ययं रूपमतद्व्यावृत्तितस्तथा ॥१०८६॥

**यत्र हि परस्य प्रकाशकत्वं न प्रतीयते तदेवात्मानं प्रकाशयतीति व्यपदिश्यते। परप्रकाश्यव्यावृत्तत्वात्। यथा च प्रतिभासमानेदीपादौ न परस्य प्रकाशकता तथा प्रतिपादितमत एव प्रदीपस्य दृष्टान्तता।**

चक्षुषि व्यापृतेप्यर्थस्तामिस्रे न प्रतीयते। प्रदीपसन्निधेस्तस्य प्रत्ययात्तत्प्रकाश्यता ॥१०८७॥
दीपादयो नैवमिति ततः स्वात्मप्रकाशकाः। न चाक्षं ग्राहकं तत्र स्वरूपेण प्रकाशनात् ॥१०८८॥
सुखादयोपि नैवामी परसम्वेदनोदयाः। आत्मना तु सुखादीनां ग्राह्यत्वे बाह्यता भवेत् ॥१०८९॥
समवायसमावेशात्तदेव स्यात्स्ववेदनं। समवाय प्रमाणञ्च नेत्येतत्प्रतिपादितं ॥१०९०॥

**ननु ग्राह्यतयाभिमतानां रूपादीनां स्वसम्वेदनाभ्युपगमे रूपादिकमहमिति प्रत्ययो भवेत् आत्मनीव। तथाहं सुखमिति भवेत्।**

**नैतदस्ति। यस्मात्।**

गौरः श्यामोहमित्येवं प्रत्ययो दृश्यते न किं। तथापि ग्राह्यतास्त्येव रूपादीनां शरीरिणां ॥१०९१॥

**रूपादयो हि शरीरसमवायिनोहमिति प्रत्ययेन गृह्यन्ते। न च ते भवन्मते स्वसम्वेदनाः।**

**ननु रूपमहमिति न दृश्यते तेन ग्राह्यता न तु स्वसम्वेद्यता।**

**तदप्यसत्।**

तद्भावेपि न दृष्टस्य न तद्रूपनिबद्धता। गौरादयो न रूपत्वव्यतिरेकव्यवस्थिताः ॥१०९२॥

**यद्ययमहं प्रत्ययो न ग्राह्ये भवेत् रूपे गौरादौ न भवेत्। न च रूपमहमिति भवति। तस्मान्न ग्राह्यतानिबन्धनोहंप्रत्ययो नापि ग्राह्यताविरोधी। अथात्मसम्बन्धादुपचारादहं गौर इति प्रत्ययः। मम रूपमिति व्यतिरेकदर्शनात्।**

**ननु भेदाभावान्मम गौर इति न भवति। मम रूपमिति तु भवति किमत्र निबन्धनं (।) तस्मादयं प्रत्ययो निर्निबन्धन एव। ततोऽहमिति व्यावृत्तेर्न्न रूपादीनामस्वसम्वेदनताप्रसिद्धिः। न चाहं गौर इत्युपचरितवृत्तिरपरस्य मुख्यस्याभावात्। न च मम सुखादिकं ममेति प्रत्ययस्य किञ्चिदालम्बनं। भेदरूपमुपलब्धिगोचरः शिलापुत्रकस्य शरीरमिति यथा। तथा हि।**

शिलापुत्रकशब्दस्य दृश्यते ग्राववाच्यता। शरीरशब्दवाच्यत्वं तस्यैव पुनरीक्ष्यते ॥१०९३॥
तथा ममेति शब्दस्य शरीरं वाच्यतां गतं। पुनारूपादिशब्दस्य नापरं संप्रतीयते ॥१०९४॥

**सुतरामपि निरूप्यमाणमहमिति प्रत्ययस्यापरमालम्बनं शरीरगतरूपादेरपरं नोपलभ्यते। तेन मम सुखमिति शरीरसम्बन्ध एवानादिवासनापरिकल्पविशेषतो वा प्रत्ययः। यथा तर्हि शरीररूपादिषु भवत्यहंप्रत्ययः स्वसम्वेदनात्। तथा कुडयादिष्वपि भवेदहं कुडयमिति। यथा पुरोवर्त्तित्वं कुडयस्य शरीरापेक्षया तथा कुडयापेक्षया शरीरस्यापि स्यात्। न च भवति। तस्मान्न स्वसम्वेदनता कुडयादीनां।**

अत्रोच्यते ।

यथाऽस्ववेदनत्वेपि न कुड्यादावहंकृतिः । तथा स्ववेदनत्वेपि न कुड्यादावहंकृतिः ॥१०९५॥
यथा वा वासनासङ्गात् कुड्यादेरशरीरता । नियतादेव संस्कारात्तथाहंकारवर्ज्जनं ॥१०९६॥

यथा कुड्यशरीरयोः प्रतिनियतवासनासामर्थ्यात् परस्परं भेदस्तथाहंकारविषयतेतरभावोपि । तस्मादन्यग्राहकव्यापारविषयत्वायोगादेव स्वसम्वेदनता । अस्ति चात्र दृष्टान्तः । यस्य परोधिष्ठाता नास्ति तस्य स्वतंत्रतया प्रतीतिः । नास्ति च सम्वेदने कुड्यादीनां कश्चिदधिष्ठाता ततः स्वतन्त्रं सम्वेदनमिति सिद्धः स्वसम्वेदनभावः । चक्षुषस्तु ग्राहकत्वं न रूपादितया ग्राह्यत्वात् । न खलु कारकाद् व्यञ्जकस्य कश्चिद्विशेष इति । प्रतिपादयिष्यते च । तस्मात् व्यतिरिक्तापेक्षयाप्रकाशकाऽभावः कारकभाव एव । प्रकाश्यता तु स्वत एवेति युक्तं । तथैव दर्शनात्तथैव स्मरणादिति न्याय एषः । अपि च ।

अनित्यसङ्गमात् कुड्ये नाहङ्कारस्य सम्भवः । नित्यमेवानुबन्धेन शरीरे तस्य संयतिः ॥१०९७॥

तस्मादहंकारस्य नित्यानुबन्धः कारणमिति न कुड्यादौ भवत्यहंकार इति विभागः । न चाहङ्कारात् स्वसम्वेदनं । परानपेक्षवेदनस्य तथा स्थितेः । अथ ग्राहकाकारेण तस्य वेदनं ।

तदप्यसत् । यतः ।

चक्षुराद्यतिरेकेण तदाकाराप्रवेदनात् । ग्राह्यरूपाश्च ते सर्व्वे इष्यन्ते बाह्यवादिभिः ॥१०९८॥
न च तद्व्यतिरेकेण सुखादेरुपलम्भनं । तेनानपेक्षसन्धित्वात् सर्व्वमेव स्ववेदनम् ॥१०९९॥

न खलु शरीरेतरभूतरूपादिव्यतिरेकेणापरमुपलभ्यते यस्य ग्राहकता भवेत् । सुखादयोपि शरीरव्यतिरेकेण न विभाव्यन्ते । न च ते विभाव्यमाना अपि ग्राहकाः स्वरूपमात्रपर्यवसानात् । सुखादिके च ग्राह्यताया भेदेपि भेदो भवेत् । भवत्येवाभिलाषादिभेदेविरूपादित्वेन भासनादिति चेत् । न विरूपादिभेदेन प्रतिभासनेऽर्थरूपताऽभावात् । नहि परस्परविरोधि रूपमेकस्य युक्तं । ग्राहकापेक्षया न विरोध इत्यपि न वाच्यं । अपेक्षाया अयोगात् । नहि ग्राहकान्तरापेक्षया तदन्यद् भवति ग्राहकस्य कारणत्वप्रसङ्गात् । तेन विरूपादिरूपता विद्यमानैव प्रकाश्यते चेत् । यदि तर्हि विद्यमानैव प्रकाश्यते कथम्पश्चाद् बाध्यते पर्यालोचनेनेति यत्किञ्चिदेतत् । अथ सर्व्वमप्येतदुपन्यस्तं ग्राह्यमेव । ग्राहिका तु बुद्धिरपराऽर्थापत्त्या तदेव वेद्यते । तदपेक्षमस्वसम्वेदनं । ततः स्मरणादप्युत्तरकालन्तथाभूतैवाऽसौ प्रतीयते ।

तदप्ययुक्तं ।

नैव लोको विजानाति ग्राह्यरूपान्तरं विदं । अर्थापत्त्या तदाकारस्पष्टता वा प्रतीतितः ॥११००॥

न खलु रूपसुखादिव्यतिरिक्ताकारवती बुद्धिरर्थापत्त्या लोकेन व्यवहारवता प्रतीयते बुद्धिर्ममास्तीति । विभावितग्राह्याकारातिरेकि प्रतिनियताकारबुद्धिरूपं विकल्पजालमेव केवलमुपरि बंभ्रमीति लोकस्य । अथ मूर्त्तस्यैव पदार्थात्मनो देशादिनियमेन व्यवस्थितस्य प्रतिनियतरूपविभावनं । न तु बुद्धिरेवं रूपाप्रमेयप्रकाशनमात्रमेव तस्यारूपमिति न रूपादिवत्प्रतिनिय(त)रूपविभावनं ।

तदप्यसत् ।

अविभावितरूपाणामपि ग्राहकता यदि । विषाणस्य शशादीनामपि ग्राहकता न किं ॥११०१॥
तेषान्तथा ऽप्रतीतेश्चेद् बुद्धेरप्यप्रतीतता । बुद्धिर्ममास्तीति पुनर्न रूपादेः परात्मवित् ॥११०२॥

**रूपादिविशेष एव प्रकाशकान्तःप्रवेशी स्वभावभूतधर्मभेदमादाय तथा व्यपदिश्यते । रूपादिकं हि परोक्षापरोक्षसाधारणं । प्रकाशमानरूपता तु रूपविशेषतया सजातीयादपि रूपाद्व्यावृत्ता । ततो व्यावृत्तिभेदाद्धर्मभेदः । तेन रूपादेर्बुद्धिरिति व्यपदेशाध्यवसायवृत्तिः । तस्मात्सम्वेदनकाले स्मरणकाले च नापरा बुद्धिर्व्विभाव्यत इति सिद्धं स्ववेदनं रूपाद्याकारतयेति सिद्धान्तः ।**

**तेनेदमपि निराकृतं भवति ।**

ग्राह्यग्राहकयोरैक्ये तदेकस्य प्रतीतितः । नियमेनापरस्यापि प्रतीतिरथवान्यथा ॥११०३॥

**एकप्रतीत्या परस्यापि पराप्रतीत्या चापरस्यापीति प्राप्तम् । प्रतीयत एव हि रूपादिरूपता प्रकाशरूपता च कस्यामसन्देहः ।**

**यदप्युक्तं ।** ग्राहकमेव स्मरन्ति कोपि मया दृष्ट आसीत् **इति स्मरणात् ।**

**तदसद्यतः । तत्र विशेषे ग्राहकेपि सन्देह एव । सामान्ये तु ग्राहकेपि न सन्देहः । ममेति च देहसम्बन्धित्वन्दर्शयति लोकः । तस्यापि देहस्य स्वप्रकाशत्वमेव नापरप्रकार इति । एतच्चोक्तमेव । अथापि परस्याभिप्रायः ।**

सत्यमेतन्न रूपादिव्यतिरेकात्परापि धीः । तथापि न स्वसम्वित्तिस्तस्याग्रहणमन्यतः ॥११०४॥

**तदसत् । यतः ।**

**धियाऽतद्रूपया ज्ञाने निरुद्धेनुभवः कुतः ।**
**स्वञ्च रूपं न सा वेत्तीत्युत्सन्नोनुभवोथिनः[1] ॥४२७॥**

**यदि तदुत्तरकालभाविन्याऽपरया बुद्ध्याऽतदाकारयाऽर्थापत्त्यादिरूपया ज्ञानमिष्यते तदा तत्पूर्व्वकं वेदनं निरुद्धं । क्षणिका हि सा न बुद्ध्यन्तरकालमास्त इत्यभ्युपगमात् । ततो निरुद्धेऽपरसम्वेदनकाले पूर्वकेऽनुभवे कुतो नुभवः । स्वरूपस्यासम्वेदनाद् ग्राह्यस्य च स्वरूपाभावात् सकल एवोत्सीदेदनुभवः । न ह्यस्वरूपं शक्यमनुभवितुं । स्वरूपानुभवस्य सर्व्वत्रानुभवत्वात् । स्वरूपञ्चाविद्यमानस्य पूर्व्वानुभवस्य नास्तीति नानुभवः । पूर्व्वस्योत्तरानुभवेन स्वरूपस्य चानुभवो नेष्यते । न चेक्ष्यते । तस्य विषयाकाररहितत्वात् । विषयाकारत्वे वा स्वसम्वेदनानुपगमात् । अनवस्थाप्रसङ्गादिति प्रतिपादयिष्यते ।**

**अपि च । बुद्धिरन्येनानुभूयत इति न सदेतत् । यतः ।**

**बहिर्मुखञ्च तज्ज्ञानं भात्यर्थप्रतिभासवत् ।**
**बुद्धेश्च ग्राहिका बुद्धिर्नित्यमन्तर्मुखात्मनि ॥४२८॥**

**यदि बुद्धेर्ग्राहिका बुद्धिरपरा तदा बहिर्मुखावभासिनी भवेद्रूपादिबुद्धिवत् न ह्यन्येनान्यद् गृह्यमाणमबहिर्भावेन प्रत्येतुं शक्यं । बुद्धिरपि सर्व्वदान्तरत्वेनाभासते । अथवात्मीयतया बुद्धेरन्तर्भावावसानं ।**

---

[1] M. B. खिलः

स्मरणेनापि बुद्धेः स्याद् ग्रहणेन्तश्चकासनं ।

स्मरणेनापि यदात्मीया बुद्धिरालम्ब्यते तदापि बहिरवभासिनी न स्यात् । अथ सा कालभेदादेवमवभासतेऽत्रापि स्वरूपभेदादेवमिति किं नेष्यते । न च व्यतिरिक्ताकारतयाऽनवभासमानं ग्राहकादन्यदिति शक्यमवसातुं । तस्मादान्तरत्वे वानुभूयमाना बुद्धिः स्वसम्वेदनरूपैवेति युक्तं । समानदेशतया तथानुभव इति चेत् । न । समानदेशमपि स्वरूपभेदेनैव गृह्यते । संसर्गाविभागस्तु प्रत्याख्यात एव । तस्माद्यस्य बुद्धचन्तरेण बुद्धिर्गृह्यते तस्य सा बहिष्ठेनैवेति न्यायः । अपि च ।

**यो यस्य विषयाभासस्तं वेत्ति न तदित्यपि (।)**

यस्य हि विषयस्य योवभासः ज्ञानसन्निविष्टस्तम्विषयाभासि ज्ञानमर्थं न वेत्ति । स्वरूपभूतार्थाभासासम्वेदनात् । स्वसम्वेदनेन हि विषया(का)रानुभवे तत्त्वतः सोप्यर्थोनुभूतो भवेत् अयमेवार्थविग्रहः । पादपादेरिव पिण्डाकारग्रहः । अस्वसम्वेदने तु सर्व्वमसमञ्जसं संपन्नं ।

**प्राप्ता का सम्विदन्यास्ति ताद्रूप्यादिति चेन्मतं ॥४२६॥**

तद्रूपोत्पद्यते धीश्चेत्तदेवार्थस्य वेदनं । तद्रूपवेदनाभावे न भवेदर्थवेदनं ॥११०५॥

स्वसम्वेदनन्तु माभूदपरं । न हि तदभावे तन्न भवति । नहि स्वसम्वेदनाभावे नीलमनीलं तथा न बुद्धिरबुद्धिः । अन्यवेदने बुद्धिर्न्न स्वसम्वेदने । अर्थरूपता च स्ववेदनलक्षणं न स्वसम्वेदनं । आत्मनोपि बुद्धित्वप्रसङ्गात् । तस्मादात्मनि स्थिता तदाकारा स्वसम्वेदनमन्तरेणापि बुद्धिरेव । यदि तर्हि स्वसम्वेदनमन्तरेणापि पूर्वार्थाकारमात्रादन्यथा वा तदा(।)

**प्राप्तं सम्वेदनं सर्वसदृशानां परस्परं ।**

अस्वसम्वेदने हि तदाकारतामात्रमवशिष्यते । तदा चार्थबुद्धचोरविशेष एव तदाकारमात्रेण बुद्धित्वे तस्यापि तत्प्राप्तमतोऽर्थोप्यर्थान्तररूपो बुद्धिरेव बुद्धिलक्षणात् । अर्थत्वान्नेति चेत् । किमिदमर्थत्वं । अबुद्धित्वञ्चेत् । अबुद्धित्वेप्यर्थे सतीति एकस्याप्यप्रसिद्धिः । तस्मात् स्वसंवेदनतैव । यदि परं बुद्धित्वमिति न्यायः । अथात्मव्यवस्तितत्वं समवायसम्बन्धेनान्यथा वा ।

तदप्यसत् ।

आत्मस्वत्वेपि बुद्धित्वे प्रयत्नादेः परस्परं ।

सारूप्याद् बुद्धिता प्राप्ता आत्मस्थत्वस्य वित्कथम् ॥११०६॥

प्रयत्नादीनामपि परस्परं सरूपस्य सम्वेदनत्वप्रसङ्गः । केन वात्मस्थितत्वमवधार्यते बुद्धचन्तरेण ।

ननु बुद्धित्वमेव नावधार्यते । तत्कथं बुद्धचन्तरेणेत्युच्यते । आत्मस्थितत्वे द्वयोर्बुद्धचोः कथं परस्परेण ग्रहणं समानदेशतया भेदाभावात् । अथ भेदः प्रतीयते । तदात्मनोपि भेदप्रतीतिरिति त्रयमेतत्परं विभिन्नं । न ह्यात्मनोऽप्रतीतौ तत्रस्थता प्रतीयते । अप्रतीयमानश्चात्मा कथम्बुद्धचाकारतया बुद्धचा प्रतीयते (।) नहि बुद्धचा प्रतीयमाना रूपादयोपि आत्मस्थतया प्रतीतेर्विषयाः । अनात्मस्थत्वात्तेषामिति चेत् । ननु व्याप्यात्मा कथमतस्स्थ-

त्वमिति। तत्रासमवायादिति चेत्। कथमसमवायः। तत्राप्रतिपत्तेरिति चेत्। बुद्धिरपि तर्हि नैवात्मनि प्रतीयते तद्व्यतिरेकेणात्मनः प्रतीतेरभावात्। ननु प्रतीतिस्तावदियं क्रियारूपा विद्यते (।) तस्याः कर्त्रा ऽवश्यमेव भवितव्यं नाकर्तृका क्रियास्ति।

ननु यतोसावुपजायते चक्षुरादेः स एव कर्त्ता, तेषां करणत्वादिति चेत्। किमन्येन कर्त्रा परिकल्पितेन तेषामेव कर्त्तृत्वन्न चान्येन कर्त्रा विनाऽकरणत्वमेषां। यदि च शरीरमेव कर्त्तृ किमन्येन। शरीरान्तर्गता तर्हि बुद्धिरन्तर्म्मुखावभासिनी प्रतीयते। अत एव परबुद्धिरन्यथा न प्रतीयते। शरीरैकदेशभूतानामपि तर्हि केषाञ्चिद्बुद्धित्वं ततोऽस्वसम्वेदने रूपादिभिः समानता। ततः प्राप्तं सम्वेदनं सर्व्वसदृशानां परस्परमिति। तस्मात् स्ववेदनादेर्वान्यरूपव्यावृत्तिः।

बुद्धिः सरूपा तद्धिश्चेत् ;

न सर्व्वं सरूपमर्थवेदनं। अपि तु बुद्धित्वे सति बुद्धिगतं सारूप्यमर्थवेदनं। न वेदनमात्रं। नापि सारूप्यमात्रं। वेदनामात्रे वेदनमेव भवेन्नार्थवेदनं। सारूप्यमात्रेऽर्थानामपि परस्परं वेदनप्रसङ्ग इति।

तदेतदसत्। यतः।

नेदानीं चित्सरूपिका ॥ ४३० ॥

सरूपता यदि सम्वेदनलक्षणं तदार्थोपि सरूपः सम्वेदनं प्राप्त इत्यत्रोत्तरं बुद्धिरिति। तत्रोक्तमेव। परस्परवेदने तेषामपि बुद्धिता प्रसक्ता। सम्वेदनं प्रसक्तमिति येनोक्तं बुद्धित्वमपि तेषामिति तेनोक्तमेव। तत्र तद्वेदनं कथमुत्तरं विशेषाभावात्। यतः।

सम्वेदनं बुद्धिरिति नानयोर्भिन्नवाच्यता।

ततः परो विशेष एवाभिधातव्यः। स च सारूप्यादपरः।

ननु सरूपाणामर्थानां परस्परमग्राहकता दृश्यते (।) ग्राहकञ्च रूपं बुद्धिः। यद्येवं ग्राहकरूपं नादृश्यं बुद्धिः। ग्राहकरूपतायाः सादृश्यमात्रेण रूपादीनामपि ग्राहकत्वाद्बुद्धित्वप्रसङ्गः। अग्राहकत्वाच्चेत्। ननु ग्राहकत्वे व्यवस्थिते कस्यचिदग्राहकत्वमपरस्य तद्विपर्ययादवस्थाप्यते तदेव तु नावस्थितं।

अथ रूपादिव्यतिरिक्तं ग्राहकं। ननु रूपादिसरूपमस्वसम्वेदनं कथं रूपादिव्यतिरिक्तं। न च तत्कल्प(न)ायां प्रमाणं। ग्राह्यतान्यथार्थस्य नेति चेत्। यथा दृश्यते तथैवास्तीति किमपरेण। तस्मात् स्वरूपसम्वेदनमेव विशेषः। तथा च सति यतो विशेषाद्रूपादिकादर्थाद्व्यावृत्तता तदेव बुद्धित्वमिति न सारूप्याद्बुद्धित्वं। बुद्धित्वे स्वसम्वेदनलक्षणे यत्सारूप्यन्त द्वेदनमिति वे द न लक्षणमेव बुद्धित्वं न सारूप्यलक्षणं। किमर्थन्तर्हि सारूप्यमिष्यते प्रामाण्यं। तत्कृतनियतसम्वेदनहेतुरिति सारूप्यं[1] तदिष्यते। ततः सारूप्यन्नाम बुद्धित्वे सतीति बुद्धित्वस्य स्वसम्वेदनलक्षणस्य विशेष एव। न तदपरं सारूप्यं। बुद्धित्वमपि तर्हि सारूप्यविशेष एव न ततः परमिति प्राप्तम्। सत्यमेतत् तथापि स्वसम्वेदनमात्रानुबद्धं सारूप्यं न सारूप्यमात्रभावि स्वसम्वेदनम्बाह्यार्थवादिनः। अपि च।

---

[1] सारूप्य

**स्वयं सोनुभवस्तस्या न स सारूप्यकारणः ।**

नहि स्वसम्वेदनस्य सारूप्यं कारणं । स्वरूपञ्चेदपरप्रत्ययं साक्षादवगम्यते किमत्र सारूप्येण । यद्यपरेणास्य सारूप्यं तदेदं विदितमन्यदा नेति नेदमेवं विकल्प्यते । गतोदके कः खलु सेतुबन्ध इति हि न्यायः । किमिदानीं सारूप्येणेत्यपि न वाच्यं । यतः ।

**क्रियाकर्मव्यवस्थायास्तल्लोके स्यान्निबन्धनं ॥४३१॥**

व्यतिरिक्तविषयसम्वेदनरूपतानेन व्यवस्थाप्यते । सारूप्यतोऽन्यथा न भवतीति । नीलस्य कर्मणः सम्वित्तिः पीतस्यैवेति क्रियाकर्मप्रतिनियमार्थमिष्यते । न तावद्वाह्यार्थवादिनां नीलादिकं बाह्यं स्वसम्वेदनमतः सारूप्यभावाद्व्यवस्थाप्यते । अन्यथा लोके न बाह्यार्थ-नीलादिताव्यवस्था । यतः ।

**स्वभावभूततद्रूपसम्विदारोपविप्लवात् ।**
**नीलादेरनुभूताख्या नानुभूतेः परात्मनः ॥४३२॥**

स्वभावभूतं स्वसम्वेदनस्य यन्नीलादिरूपन्तस्य सम्विदं बाह्ये नीलादिके विप्लवेनाना-दिवासनाप्रवाहवाहिनारोप्य नीलादिकस्यानुभूताख्या । न तु ततः परात्मा नीलादिकः कथञ्चिदनुभवगोचरः । स्वसम्वेदनरूपानुभव एव तु तस्यानुभव उपचारात् । यतः ।

परसम्वेदनेप्यर्थस्तद्रूपोऽन्यो यदेक्ष्यते । मया विज्ञात एवायं व्यवहारः प्रवर्त्तते ॥११०७॥

तल्लक्षणापरवेदने हि विदितमेवायमस्माकमिति हि लोके व्यवहारोऽत एव लोक इत्याह । परमार्थतस्तु स्वसम्वेदनमेव केवलं ।

**धियो नीलादिरूपत्वे बाह्योर्थः किंप्रमाणकः ।**
**धियोऽनीलादिरूपत्वे स तस्यानुभवः कथं ॥४३३॥**

यदि सम्वेदनमेव नीलाकारमात्मप्रकाशकं बाह्योर्थः किं प्रमाणमादायविदितो भवेत् । नहि तत्र प्रत्यक्षं तस्य स्वसम्वेदनमात्र एव पर्यवसानात् । न च ततः परं नीलमाभासते नीलाकारद्वयाप्रवेदनात् । अथ तदर्थस्य रूपं तदा सम्वेदनमन्येन रूपेण विदितमविदितम्वा भवेत् । यद्यविदितं स तस्यानुभवः कथं । स्वरूपेणाज्ञातमस्य सम्वेदनमिति कथं संगच्छते । विदितञ्चेत् । तथापि समानकालमन्यथा वा वेद्यमानं कथम्वेदनमन्यस्य तदेवात्मीयं रूपमा-वेदितमाभ्यामिति कथं परस्परं सम्वेद्यसम्वेदकभावः । परोक्षत्वे तु नीलादेस्तद्रूपवेदना-त्तत्प्रज्ञप्तिरिति भवेद् व्यवहारोनेनेदमज्ञायीति । साक्षात्तु वेदनर्द्वयोः परस्परप्रतिबद्धं सम्वेदन-मिति । न प्रमाणं किञ्चित् । तस्मादसम्विदितं स्वयमन्येन सम्विदितेन ज्ञाप्यत इति वरमेतदेव ।

ननु न सम्वेदनात्मत्वं स्वसम्वेदनमात्रकमपि तु सारूप्ये सतीति युक्तं । न । सारूप्यमात्रात्सम्वेदनत्वासिद्धेः । स्वसम्वेदनत्वे सति चेत् । यद्येवं स्वसम्वेदनात्मत्वमेवास्तु किं सारूप्येण । यदि सारूप्यन्न स्यात्किन्न सम्वेदनं भवत्येवेति चेत् । किमिदानीं सारूप्येण । यदि सारूप्यमन्तरेणापि भवति । भवेदेव किन्तु तदप्यस्तीत्युच्यते सारूप्याद्वेदनमिति ।

नैतदस्ति । यतः ।

**यदा सम्वेदनात्मत्वं न सारूप्यनिबन्धनं ।**
**सिद्धन्तत्स्वत एवास्य किमर्थेनोपनीयते ॥४३४॥**

स्वरूपमेव तत्तस्य येन सम्वेदनात्मता ।

अपरमपि तत्स्वरूपं स्वत एव । ततः सारूप्यात्सम्वेदनमिति कः सम्बन्धो यदि तत्स्वरूपं न भवेत्(।) किं स्वसम्वेदनात्मता जाता सत्यप्यपगच्छेत् । तस्मात्सिद्धन्तत्स्वत एव रूपं किमपरेण । तदर्थसम्वेदनन्न भवेदित चेत् । नेदमपि युक्तं । यदि नामात्मीयं रूपमन्यसरूपम्वेत्ति तदेव वेत्तु । कथमर्थस्तेन सम्विदितो भवेत् । इति किमर्थेन सङ्गतमुपनीयते । अर्थस्य सम्वेदनमिति मीयते । नह्यर्थः स्वसम्वेदनेऽनुप्रवेशी येन सम्विदितो भवेदिति नार्थवेदनन्नाम । अपि च । यदि सारूप्यनिबन्धनं वेदनं तदा महाननर्थः । यतः ।

**सर्व्वात्मना हि सारूप्ये ज्ञानमज्ञानतां व्रजेत् ।**
**साम्ये केनचिदङ्शेन स्यात्सर्व्वं सर्व्ववेदनं[1] ॥४३५॥**

सर्व्वात्मना हि सारूप्यं सकलभेदापगमे स्यात् । तदा चार्थ एवासावपरार्थव्यक्तिवत् । कथन्त(ज्)ज्ञानं । ज्ञानत्वेनाधिकत्वेन सर्व्वात्मना साम्यम्भवेत् । अथ केनचिदंशेन भेदोपि तदा सर्वं सर्व्ववेदनं भवेत् सकलस्य केनचिदंशेन समानत्वानपगमात् । बोधाकारतां परित्यज्यान्ये न सर्व्वेण समानतया सम्वेदनमिति चेत् । सकलज्ञानसम्वेदनत्वप्रसङ्गः । यत उत्पद्यते तदेव सम्वेद्यमिति चेत् । यदि नाम तत उत्पद्यते तथाप्यसम्वेद्यमिति कुत एतत् । तद्रूपसम्वेदनाद् वेद्यं न तु तत उत्पत्तेः । न च यमलकयोः परस्परमुत्पाद्योत्पादकभावः । अथ चैकवेदने परस्यापि वेदनव्यवहारः । यदि च यत उत्पत्तिः सरूपता च तस्य वेदनं तदा ।

**यथा नीलादिरूपत्वान्नीलाद्यनुभवो मतः ।**
**तथाऽनुभवरूपत्वात्तुल्योप्यनुभवो[2] भवेत् ॥४३६॥**

बोधकरूपतया सम्वेदनेन समानता नीलादिरूपतयापि नीलादिना ततो नीलादिवेदनवदनुभववेदनमपि । अथ नीलादिकमप्युपधायकमस्तीति नीलाद्यनुभवः । अनुभवेनाप्युपधायकेन न भवितव्यमित्यपि कल्प्यते ।

तदप्यसत् । यतः ।

केशादिप्रतिभासानान्नोपधानस्य कल्पना । व्यतिरिक्तोपधानस्य कल्पनन्न च युक्तिमत् ॥११०८॥

नहि तैमिरिकोपलब्धे केशावभासे केशोपधानकल्पनायामादरः । तत्र पूर्व्वं दृष्टं केशादीति चेत् सर्वत्रायमेव प्रकारः परिकल्प्यताम् । यथा नीलाकारदर्शनान्नीलकल्पना तज्जातीयतया तथोपधानमन्तरेणापीति स्यात् । न च विरुद्धाव्यभिचारितात्वकल्पनायां प्रतिबन्धग्रहणाभावान्नित्यानुमेयत्वादर्थस्य । पूर्व्वदर्शनस्य च जनकत्वदर्शनान्न च क्वचिदर्थदर्शनं सर्व्वत्र विवादसम्भवात् । समनन्तरस्यार्थाकारतायां क उपधायकः । न । व्यवहितस्यापि लाक्षारसादेरुपधानस्य दर्शनादिति प्रतिपादितमसकृत् । अथापि स्यात् ।

**नानुभूतोनुभव इत्यर्थवत्तद्विनिश्चयः ।**
**तस्माददोष इति चेत् नार्थेप्यस्त्येष सर्व्वदा ॥४३७॥**

यदि नानुभवोऽनुभूत इति निश्चयो यथार्थोऽनुभूत इति लोकस्य । ततो निश्चयस्य

---

[1] M. न च सर्वात्मना साम्यमज्ञानत्वप्रसङ्गतः ।
न च केनचिदंशेन सर्वं सर्वस्य वेदनम् ॥४३५॥ [2] M. तस्याप्यनु०

दर्शनकारणस्य दर्शनादर्थानुभवोयं नानुभवस्येति गम्यतां । यदा त्वनुभवस्यापि स्यात् स्यादेव तथा निश्चयः ।

अत्रोच्यते ।

नहि कारणमित्येव कार्यस्य जनकं सदा। सहकारिणमासाद्य कारणं कारकं भवेत् ॥११०९॥

तदेव दर्शयति ।

"नार्थेप्यस्त्येष सर्व्वदा ।"

नह्यर्थेपि निश्चयो भवति क्वचिद् भाति दर्शनात् । अथवा सर्व्वदार्थे नास्त्येवायं निश्चयोऽनुभवात्मभूतस्यैवाकारस्य निश्चयविषयत्वात् । उपचारात्तथेति चेत् । न(।) उपचारकल्पनाऽयोगात् ।

न क्वचिद् दृश्यतेऽर्थात्मा केनचिन्मुख्यवृत्तितः । तदभावे कुतो जातमुपचारस्य कल्पनम्॥ ११११०॥

तस्मादयमर्थ इति निश्चयोऽनादिवासनाबलावलम्बी नानुभवमात्रजनितः । स्वप्ने च नास्ति दर्शनमर्थस्य तथापि भवत्यर्थं इति निश्चयः । तस्मादर्थानुभवेपि निश्चयाभावस्तदभावेपि भाव इति न निश्चयस्यैकान्तिकता । ततः कथन्तद्व्यवस्था ।

**कस्माद्वानुभवे नास्ति सति सत्तानिबन्धने ।**

अनुभवे हि सर्व्वमनुभवनिबन्धनमस्ति । तथापि न निश्चय इति कथमेतत् । कथञ्चिन्न भवति सहकारिवैकल्यादिति चेत् । न तर्हि निश्चयादनुभवव्यवस्था । अनुभूतेप्यभावादिति यत्किञ्चिदेतत् । अनुभवव्यवस्था तु तदाकारतयेति न बाधितोनुभवो भावस्य । नहि कारणान्तराभावनिबन्धनो निश्चयाभावोऽनुभवाभावं व्यवस्थापयितुं क्षमः । कारणान्तरमेव नास्तीति तथा गम्येत नत्वनुभवाभावः ।

**अपि चेदं यदाभाति दृश्यमाने सितादिके ॥४३८॥**
**पुंसां सिताद्यभिव्यक्तिरूपं संवेदनं स्फुटम् ।**
**तत्किं सिताद्यभिव्यक्तेः पररूपमथात्मनः ॥४३९॥**

नह्यर्थसद्भावमात्रकमेवार्थदर्शनमवश्यमर्थदर्शनेनार्थमात्रकादधिकेन भवितव्यम् । यदि तदधिकं प्रतिभासमानाद् बहिस्तदप्यर्थरूपमेव कथमर्थदर्शनं । तस्मादवभासमानेन तेन भवितव्यं। यच्च तदा भाति दृश्यमाने सितादिके । परिस्फुटं सम्वेदनं । तत्सिताद्यभिव्यक्तेः परं वा भवेदपर एवेति कल्पने यासौ सिताद्यभिव्यक्तिर्भवतोभिमता ।

**पररूपेऽप्रकाशायां व्यक्तौ व्यक्तं कथं सितं ।**

नह्यनभिव्यक्तेन कश्चिदभिव्यज्यते तदेव तदभिव्यक्तिरूपं कृतं सम्विदितं सैवाभिव्यक्तिरन्या तु परोक्षा चक्षुरादिसंस्थानीया भवतु न साभिव्यक्तिर्न च चक्षुरादिव्यतिरिक्तासौ प्रमाणेन प्रतीयते । चक्षुरादिमात्रत एव समीहितसिद्धेः ।

सैवाभिव्यक्तिरप्रत्यक्षा नापरेति चेत् । यदि नामाप्रत्यक्षाभिव्यक्तिरुत्पन्ना सैवो-

[१] T. रङ-ब्शिन् रिग्-प-ग्सल्-व नि । स्क्येस्-पऽि स्नङ-वऽदि गङ-यिन् ।—(स्वभाववेदनद्योतं किमिदमुत्पत्तिभासकं ) इत्यधिकः ।

त्यन्नास्तु कथमर्थः प्रकाशितः। नह्यस्योत्पत्तावन्यस्य किञ्चित्। अर्थोऽसाविति चेत्। अर्थ इति कः सम्बन्धः। अर्थं पश्यतीति चेत्। ननु दर्शनन्न प्रतीयते कथं पश्यतीति। अर्थस्य कर्मभावश्चेत्। केयं कर्मता नाम। यद्यर्थमात्रादधिका सा प्रतीयते। तस्यामप्यपरा प्रतीतिः। ततः कर्मता। सापि प्रतीयते। ततः पुनः कर्मतेति नानवस्थातो मुक्तिः। तस्मात्

**ज्ञानं व्यक्तिर्न सा व्यक्तेत्यव्यक्तमखिलं जगत् ॥४४०॥**

नह्यर्थस्य प्रदीपादिव प्रभास्वररूपमात्रोत्पत्तिरपि तु ज्ञानरूपा व्यक्तिः सा च यद्यप्रत्यक्षा तत्कथमर्थो व्यक्तः। स्वरूपेण व्यक्तश्चेत्। सर्व्वस्य व्यक्तताप्रसङ्गः। स्वविशेषादिति चेत् व्यर्थमन्यत् ज्ञानं। तथैव व्यक्तता चेत्। केनेदं प्रतीयते। व्यक्त्यन्तरेणेति चेत्। न (।) यतः।

**व्यक्तेर्व्यक्त्यन्तरव्यक्तावपि दोषप्रसङ्गतः।**

येन तदपि व्यक्त्यन्तरन्न प्रतीयत इति स्वरूपमेव पूर्व्वव्यक्तेर्व्यक्तं। तस्याप्यन्येन व्यक्तिर्न्न प्रतीयत इति व्यक्त्यन्तरानुगमादनवस्था। तस्मात्स्वरूपमेव प्रतीयमानमभिव्यक्तियुक्तमेव प्रतीयते। अन्यथाभिव्यक्तमेतदिति न स्यात्प्रतीतिः। यतः।

**दृष्ट्या चाज्ञातसम्बन्धं विशिनष्टि तया कथम् ॥४४१॥**

दृष्टोऽर्थ इति दृष्टिविशेषणता प्रतीयते। न च विशेषणाग्रहणे विशेषणविशिष्टविशेष्यग्रहः। ननु गौरिति विशेषणग्रहणादेव किं गोत्वमपरं दृश्यते। न। गोत्वस्यागोव्यावृत्तिरूपत्वात्। न च प्रतीतिरप्रतीतिव्यावृत्तिरूपा भवतेष्यते। तथा सत्यर्थस्य स्वसम्वेदनत्वप्रसङ्गः। व्यतिरिक्ता च भवता प्रतीतिरिष्यते। सा चाप्रतिपन्ना कथं प्रतीतेः इति व्यवहारनिबन्धनं। कथं तर्हि व्यतिरिक्तप्रतीत्यप्रतीतौ प्रतीत इति भवतोपि व्यवहारः। नहि भवतापि प्रतीतिरर्थश्च तद्व्यतिरिक्तः प्रतीयते इत्यभ्युपगम्यते। यथोपचारादेतद् भवति तथा प्रतिपादितमिति न दोषः। तस्माद् द्वयोरदर्शनान्न विशिष्टप्रतीतिः। अत्र च।

**यस्माद् द्वयोरेकगतौ न द्वितीयस्य दर्शनम्।**

नार्थप्रतीतिकाले दर्शनप्रतीतिर्न्न प्रतीतिकालेऽर्थस्येति कथं विशिष्टताप्रतीतिः। ततः कथमेतदिति युक्तमेतत्।

**द्वयोः संसृष्टयोर्दृष्टौ स्याद् दृष्टमिति निश्चयः ॥४४२॥**

दृष्टमिति हि निश्चयोपि संसृष्टनिश्चय एव ततस्तथाभूतानुभवादेवानेन भवितव्यं भवन्मत्येति न भवतोन्यो न्यायः (।) अस्माकन्तु प्रबलवासनापवनप्रेर्यमाणा मनोन्यत्रार्थपादपप्रतिपच्छायाऽन्यतो निश्चयपाण्डुपत्रप्रपात इति निश्चयमात्रकादेव तत्त्वव्यवस्थितयः। तेनार्थप्रत्ययो नास्ति। न च नायमर्थ इति। निश्चयप्रसवः तस्मादसन्मतं भवत इति न्यायः। अथ।

**सरूपं दर्शनं यस्य दृश्यतेन्येन चेतसा।**
**दृष्टाख्या तत्र चेत्; सिद्धं सारूप्येऽस्य स्ववेदनम् ॥४४३॥**

स्यादेतत् (।) नार्थसरूपात्मवेदनाद् दृष्टोऽर्थ इति व्यवसायोपि तु तथाभूतस्यैव सम्वेदनान्तरेण वेदनात्। यथा दण्डीति दण्डयुक्तस्य पुरुषस्य तद्व्यतिरिक्तेन तथाभूतस्य सम्वेदनेन

**परिग्रहे व्यवसायः। न विशेषणविशेष्यभूतार्थग्रहणं स्वसम्वेदनेन क्वचिदुपलब्धमित्यभिप्रायः। तदयम्भवतां स्वपक्षस्यैवोपघातः। तथा हि।**

विशेषणविशेष्यत्वं द्वयोर्न्न परमार्थतः। कदाचित्कस्यचित्कश्चिद्विशेष्यादितया मतः ॥१११॥

**न खलु पारमार्थिको विशेषणविशेष्यभावः। कदाचिद्विशेष्यस्यापि विशेषणत्वेन प्रतीतेः। ततो बुद्धिरेव सा तथाभूता प्रतीयते। सा च स्वसम्वेदनरूपैवेति सिद्धं स्वसम्वेदनं। यतः। सिद्धं सारूप्येऽस्य स्वरूपस्य वेदनं। अर्थस्तथाभतो नास्त्येव। बुद्धिरपि यदि न स्वसम्विदिता तदार्थ एव विशेषणविशेष्यभूतः प्रतीयत इति प्राप्तं।**

**अथात्मरूपन्नो वेत्ति पररूपस्य वित् कथम् ॥**

**यद्यात्मरूपं न वेत्ति पररूपमेव तर्हि वेत्ति। तस्य च न विशेषणविशेष्यभाव इति कथन्तद्विशिष्टताप्रतीतिः। अथ तद्रूपन्दर्शनमुत्पन्नं न तु स्वरूपसम्वेदनं। परेण पुनस्तद्रूपेण तस्य दर्शने सति दृष्टाख्या (।) नन्वदृष्टिविशेषणस्य प्रथमं ग्रहणे पुनरन्येन तद्विशेषणत्वस्य कथं प्रतीतिः। अथ पश्चात्प्रतीयते तेनायमदोष इति।**

**तदसम्यक् (।) यतः (।)**

तद्रूपवेदने तस्य पश्चादन्येन चेतसा। तद्रूपतैव तस्यास्तु न तु मेयविशिष्टता ॥११२॥

**मेयो हि दृष्टयविशिष्ट एव स्वप्रतीतिकाले विदितः। तदुत्तरकालन्तु तद्रूपवेदने तद्रूपतैवास्तु न तु तया तस्य स्वविशिष्टवेदनं।**

अन्यथा विदितं पूर्व्वमन्यथा वेद्यतेन्यदा। यदि कस्यात्र सत्यत्वमिति नेदं प्रतीयते ॥११३॥

**अथापि स्याद (।) यद्यपि प्रथममदर्शनं विशेषणस्य तथापि पश्चाद्दर्शने को विरोधः। तदप्यसत्। यतः।**

यद्यसंसृष्टयोर्दृष्टिर्व्विशेषणविशेष्ययोः। विशेषणविशेष्यत्वं तदा नैव प्रतीयते ॥११४॥

**नहि सदा केवलकेवलयोर्दर्शनमात्राद्विशेषणविशेष्यता शक्या प्रत्येतुं। अपि च।**

**सारूप्याद्वेदनाख्या च प्रागेव प्रतिपादिता[1] ॥४४४॥**

**नहि सारूप्यमात्रोदये तद्वेदनं। सरूपमेतदिति परेण वेदनमसम्भवि। तथा हि।**

**दृष्टयोरेव सारूप्यग्रहोर्थश्च न दृष्टवान्।**
**प्राक् कथन्दर्शनेनास्य[2] सारूप्यं सोध्यवस्यति ॥४४५॥**
**सारूप्यमपि नेच्छेद्यः तस्य नोभयदर्शनं।**
**तदार्थो ज्ञानमिति च ज्ञाते चेति गता कथा ॥४४६॥**

**नहि केवलदर्शने सारूप्यप्रतीतिः। अनेन सदृशमिति प्रतीतेः। अतीतानागतयोश्चार्थदर्शनयोरसहप्रतीतेश्च नैवं प्रतीतिः। तदध्याहारेपि ज्ञानमेव नार्थप्रतीतिः। पुनस्तत्राप्यस्वसम्वेदनेऽनवस्थादोष उक्त एव। यस्तु सारूप्यमपि नेच्छति तस्यार्थो न प्रतीयेत। तदारोपस्यासम्भवात्। पश्चा(द्) दर्शनमर्थविलक्षणेन रूपेण प्रतीयमानं न तद्रूपतया तदित्या-**

---

[1] M. B. वेदनेनास्य      [2] B. ज्ञानमिति ते ज्ञातेवेति

रोप्यते। तद्रूपतानभ्युपगमात्। स्वरूपेण च प्रतीयमानं पदार्थान्तरमेव ततः कोर्थः किम्विज्ञातं केनेति गता कथेयमति तूष्णीमासितव्यं। दृश्यते चेत्।

ननु चार्थतया समुपलभ्यन्ते स्तम्भादयः। नहि दृष्टेऽनुपपन्नन्नाम। दत्तमत्रोत्तरं। यदि दृष्टं स्वरूपेण दृष्टमिति तस्मात्पररूपं दृश्यमाने सितादिके यदाभाति तद्यदि स्याद् तदा व्यक्तं सितादिकं न स्यात्।

अथ स्वरूपं सा तर्हि स्वयमेव प्रकाशते।
यत्तस्यामप्रकाशायामर्थः स्यादप्रकाशितः ॥४४७॥

स्वरूपमेव यदि तदभिव्यक्तेर्ज्ञानरूपायास्तदा स्वयमेव तत्प्रकाशते परस्य प्रकाशकस्याभावात्। अथ न स्वरूपेण प्रकाशते तदा तद्रूपाप्रकाशनेऽर्थः स्यादप्रकाशितः। प्रतिभासमानरूपाप्रकाशने नार्थः प्रकाशते नाम। अत्र हि परोक्षस्यार्थः। यदेतद् ग्राह्यस्पष्टाकारप्रतिभासनमेतत् बुद्धेः परोक्षतायां प्रतिभासमानस्य परोक्षता ततः प्रतिभासमानस्पष्टरूपाप्रकाशनमेव। तथा सति। अनुमानज्ञानवदर्थः परोक्ष एव भवेत्। अनुमानेपि स्पष्टप्रतिभासपरोक्षतयैव परोक्षता। तस्याप्यनुमानज्ञानस्य यद्यस्पष्ट आकारो न प्रकाशेत तत्रापि नार्थप्रतिपत्तिर्भवेत्। तस्मादनात्मवेदने सर्व्वार्थादर्शनमेवेति स्थितमेतत् स्वसम्वेदनम्विज्ञानमिति।

एतेनात्मवित्पक्षे सर्व्वार्थादर्शनेन ये।
अप्रत्यक्षां धियं प्राहुस्तेपि निर्व्वर्णितोत्तरा[1] ॥४४८॥ इति।

न्यायः पूर्व्वक एवात्र यदि स्वाङ्गाप्रवेदनम्।
अवेदिका भवेद् बुद्धिरर्थस्य स्वस्य चात्मनः ॥१११५॥

नार्स्थस्य वेदिका प्रतिभासस्य परोक्षत्वात्, नात्मनोऽनभ्युपगमात्। किञ्च। सुखदुःखरागद्वेषादयः स्वसम्विदिता एवोपजायन्ते ते च बोधस्वभावा एव ततो बुद्धेरप्रत्यक्षता प्रत्यक्षबाधिता कथमभ्युपगमगोचरः। अथ न बुद्धिस्वभावास्तदसत्।

आश्रयालम्बनाभ्यासभेदाद् भिन्नप्रवृत्तयः।
सुखदुःखा[2]भिलाषादिभेदा बुद्धय एव ताः ॥४४९॥

आश्रयभेदस्तावत् चक्षुरादिजनितं परस्परविभिन्नमेव सुखं रूपादिविषयञ्च। तथाभ्यासात्समानचक्षुरादिविषयत्वे पटुतरादिता। आलम्बनादिजनितं च विज्ञानमेव न विषयादिकं। यदि विषयोपि विज्ञानसामग्रीत एवोदयमासादयेद्दत्त एतस्मै जलाञ्जलिः। ततोमीषां परोक्षताभ्युपगमे ऽध्यक्षबाधनं। यतः।

प्रत्यक्षास्तद्विविक्तश्च नान्यत्किञ्चिद्विभाव्यते।

यत्त(ज्)ज्ञानं ग्राहकस्याविभाव्यतायां प्रत्यक्षत्वमेव स्वसम्वेदनमुच्यत इत्यसकृदुक्तमेतत्। अथान्येन विज्ञानेन वेदनमेषामभ्युपगम्यते। तथा च सति।

यत्तज्ज्ञानं परोप्येनां[3] भुञ्जीतान्येन विद्यदि ॥४५०॥

अन्येन हि विज्ञानेन परसन्तानवर्तिनोपि सुखादयो वेद्यन्ते। ततः परसुखादिवेदनेपि

---

[1] B. प्रतिवर्ण्णिता　　[2] T. बदे-सदुग्-ऽदोद-प (=सुख-दुःखाभिलाषादि)—
[3] M. एतान्

सुखितादिकं भवेत् । नहि ग्राह्यतयाऽन्येन वेदने सम्वेदने स्वपरसुखयोः कश्चिद्विशेषः । आत्मीयसुखवेदने सुखितेति चेत् । न (।) परकीयस्याप्यालह्लादात्मकत्वात् । न परकीयो वह्निरदाहकञ्चन्दनम्वा परकीयमनालह्लादकं । अथ ।

मनस्विनो यथात्मं यमाह्लादयनि चन्दनं । परकीयस्य किन्तत्त्वं दहनात्मकमेव तत् ।।१११६।।
अमनस्विनि का वार्ता तस्यात्मीयः सुखोदयः । परस्य सुखसम्वित्तावेवमेव प्रकल्प्यतां ।।१११७।।
यदात्मीयमनुत्पन्नं तदास्य सुखिता न किं । स्वसुखेन सूखित्वञ्चेन्न स्वरूपाविभेदतः ।।१११८।।
दूरत्वात्तस्य रूपस्य वेदने कैव दूरता । असंस्पर्शादनेवञ्चेत् संस्पर्शे स्यात्स्ववदनं ।।१११९।।
सर्व्वात्मना हि संस्पर्शः स्वसम्वेदनलक्षणः । एकदेशेन संस्पर्शे न तत्स्यादन्यवेदनं ।।११२०।।

यदि सर्व्वात्मनात्मनि शरीरे चानुप्रवेशः सुखादेः स्वसम्वेदनमात्मशरीरं वा प्राप्तं । सम्विदिते साक्षादन्यथा वानुप्रवेशः । सर्व्वात्मना वेदकस्य स्वसम्वेदनमेव प्राप्तं । सम्वेदनस्यैवं लक्षणत्वात् । परसुखमपि यद्यनुप्रविशेत् भवेदेव स्वसंवेदनं अन्यथा तद्वेदनायोगात् । अथाननुप्रवेशेपि सुखवेदनमविभागान्न भवति । विभागस्य सम्भवात् को विभागः । तज्जा तत्प्रतिभासा सुखबुद्धिर्न्न यथाकथञ्चित् । परसुखवेदने तु न ततः परसुखादुत्पन्ना साक्षाल्लिङ्गत एवोत्पन्ना न विषयादसावनुमानेन परसुखसम्वेदनात् । तद्रूपप्रतिभासप्रत्यक्षतश्च आत्मसम्वेदनमिति विभागः । अत्राह ।

**तज्जा तत्प्रतिभासा वा यदि धीर्वेत्ति नापरा ।**
**आलम्बमानस्यान्यस्याप्यस्त्यवश्यमिदं द्वयम् ॥४५१॥**

अन्योपि परसुखमालम्बमानस्तत्स्वरूपमेव गृह्णाति ततस्तत्प्रतिभासिताऽभ्युपगमादेव प्रसिद्धाः । ततो लिङ्गदर्शनं चक्षुरादिसमानमिति तज्जत्वमेवापतितमर्थत इति द्वयमिति न विशेषः ।

**अथ नोत्पद्यते तस्मान्न च तत्प्रतिभासिनी ।**
**सा धीर्निर्विषया प्राप्ता ; सामान्यञ्च तदग्रहे ॥४५२॥**
**न गृह्यत इति प्रोक्तं ; न च तद्वस्तु किञ्चन ।**

अभ्युपगमः प्रमाणबलावलम्बी न भवति । तेनायमेव परमार्थः । लिङ्गादुत्पत्तिमासादयन्त्युपलभ्यते बुद्धिर्न्नार्थान्नापि तत्प्रतिभासिनी । एवन्तर्हि विषयलक्षणस्याभावान्न परसुखादिकं विषय इति न विषयाकारोसौ परसुखसम्वेदनावभासी सामान्यमवभासते । तत्रानुमानस्य सामान्यविषयत्वादिति चेत् (।) न । सामान्यस्य व्यक्त्यग्रहे ग्रहणाभावादिति प्रतिपादितम् । सामान्यस्य व्यक्त्यक्षराकारशून्यत्वादिति च । बुद्धिरपि तर्हि तदाकारशून्यैव । ततो बुद्ध्याकारोसौ न स्यादिति चेत् ।

तदसत् ।

उपधानानुरागो हि धियां नासम्भवी मतः । भावनाबलतो बुद्धिस्तदाकारेति लोकवित् ।।११२१।।

अत एवाह ।

**तस्मादर्थावभासोसौ नान्यस्तस्या धियस्ततः ॥४५३॥**
**सिद्धे प्रत्यक्षभावात्मविदौ ;**

बुद्धिस्वभावतायामाकारस्य प्रत्यक्षतात्मवेदनञ्च प्रसिद्धं। यदि नामानुमानं परसुखस्वभावे। तदन्यथाकारे तु स्वसम्वेदनमेव। तदपि परसुखस्यैव रूपमिति चेत्। न (।) परेणावेदनात्। परप्रत्ययेन बाध्यमानं कथन्तस्य रूपं। नहि तस्य व्यवधानादिसम्भवः। व्यवहितञ्च कथमात्मीयं सुखम्। तेन तत्सम्बन्धितया वेदनादिति चेत्। न (।) परस्य सम्बन्धिताप्रतीत्यभावात्।

परेणाविदितं रूपं तवास्तीति वदन्नसौ। राजशासनसोपानप्रक्रमेणोपरिस्थितः ॥११२२॥

न परोपि विचारयँस्तव सम्वेदनमेवम्भूतमस्तीति निश्चिनोति। ममैव प्रतीतिरेषा नास्य प्रतीतिरियमिति प्रतीतेः। अथ परोपि तदेव रूपमवगच्छति। तथापि न सुखभोगी, प्रत्यक्षेण हि सुखोपभोगात् नानुमानेन। अत्रोच्यते।

गृह्णाति तान् पुनः।[1]
नाध्यक्षमिति चेद् एष कुतो भेदः समर्थयोः ॥४५४॥

प्रत्यक्षं हि स्वरूपसाक्षात्करणमेवेति प्रतिपादितं। ततः समानाकारयोरेष एव भेदो न युक्तः (।) कारणभेदाद्भेद इति चेत्। स्वरूपगत एव तर्हि भेदो यदि नाम कारणमन्तरेणोपपत्तिरिति कारणभेदोऽभ्युपगम्यते। भेदस्तु स्वरूपगत एव युक्तः। साक्षात्करणन्तु स्वरूपं द्वयोरपीति न कारणभेदो युक्तः। दृश्यते चेत्। स्वरूपभेदोप्यभ्युपगम्यतां। ततः समानाकारता न युक्ता। अथ कारणभेदाद् बोधरूपताविशेषः। न स्पष्टाकारस्य बोधरूपताविशेषेपि प्रत्यक्षत्वात्।

अदृष्टैकार्थयोगादेः संविदो नियमो यदि।
सर्व्वथान्यो न गृह्णीयात् संविद्भेदोप्यपोदितः ॥४५५॥

अथापि स्याददृष्टवशादाकाराभेदेपि प्रत्यक्षेतरत्वनियमः। तथाक्षयोगादेकार्थसमवायतश्च। तथाहि। आत्मीयं सुखमात्मीयात्मसमवेतं परकीयन्तु न तथा। तेन परसुखवेदनेन सुखित्वं। यद्याकारभेदमन्तरेण साक्षात्करणसम्भवादपि प्रत्यक्षाप्रत्यक्षतालक्षणो नियमः। तदा प्रत्यक्षतायामपि प्रत्यक्षताऽप्रत्यक्षतानियम इति प्राप्तम्। तथा च सति किमर्थभेदादिपरिकल्पनया। अदृष्टयोगादेकमेव वस्तु तथान्यथा च भविष्यति सुखमेव दुःखादिकमिति। ततो न भेदो युक्तः। एतदप्यदृष्टभेदादेवेति चेत्। भवतु स्वसम्वेदनमाकारभेदोपि तथास्तु। तत एव सर्व्वथाऽन्यो न गृह्णीयात्। समानार्थतायामपि सम्विद्भेदोऽपोदित एव। चक्षुरादिकमपि स्पष्टभेदादेव परिकल्प्यते। तथाहि।

प्रथमं स्पष्टतादृष्टिरतः प्रत्यक्षतास्थितिः। न प्रत्यक्षान्मया दृष्टमस्पष्टमिदमीक्षितम् ॥११२३॥

स्पष्टतामेव लोकः प्रथमं प्रतिपत्त्या विषयीकुर्व्वाणः प्रत्यक्षतामवगच्छति। यतः। सत्यपि चक्षुरादिकारणत्वे यदि वैशद्यं प्रतिभासिताया नावगच्छति। किमपि मयाऽस्पष्टमेव दृष्टन्न प्रत्यक्षेयं प्रतिपत्तिरिति लोकस्येयमेकवाक्यता। अथेंद्रियजत्वे प्रत्यक्षता स्पष्टतायामिति वदेत्। तथाहि।

स्पष्टत्वाद् ग्रहणं सम्यक् इन्द्रियात्सन्निधानवित्।
नास्य द्वयस्यासद्भावाद् द्वयस्याप्तिः कथञ्चन ॥११२४॥

[1] M. तत् पुनः

यदेव खलु सन्निहितत्वेन स्पष्टतया च प्रतीतेः विषयः स एव प्रत्यक्षसम्मतो लोकस्य, न चेन्द्रियात् विना सन्निधानप्रतीतिः। तदङ्गविकलत्वादप्रत्यक्षता भवेत्।

तदेतदसत्। यतः।

न सन्निधानेतरते प्रत्यक्षेतरकारणम्। अन्यथा दूरदृष्टस्य गृध्रैर्नाध्यक्षता भवेत् ॥११२५॥

तथाहि। कश्चिद् दूरदर्शी पुरुषः। कश्चिदन्यथा। ततः किन्तयोः सम्वेदनस्य प्रत्यक्षेतरते। अथापि स्यात्तदेव तस्य विस्पष्टमदूरमिति गीयते।

दृष्टिशक्तिव्यपेक्षैव दूरादूरव्यवस्थितिः।

यो हि यत् स्पष्टतया द्रष्टुमलम्। तदेव तस्यादूरमिति चेत्। यद्येवं।

स्पष्टदृष्टस्य सर्वस्य यद्यदूरत्वमुच्यते। तदभावेस्य दूरत्वमिन्द्रियन्नास्य कारणम् ॥११२६॥

तस्मात्समानस्पष्टावभासयोरिन्द्रियमनोविज्ञानयोर्न्न प्रत्यक्षेतरताव्यवस्थितिरिति न्यायोपेतमेतत्। सर्व्वथा परसुखवेदनेपि साक्षात्करणेन सुखितो भवेत्। असाक्षात्करणे च साकारतया स्वसम्वेदनमेव।

## (ख) योगिनामनातुरता

येषाञ्च योगिनोन्यस्य प्रत्यक्षेण सुखादिकं।
विदन्ति तुल्यानुभवास्तद्वत्तेपि स्युरातुराः ॥४५६॥

येषां लोकायतमीमांसकानां योगिनः सन्ति कणादादीनां ते नियमेन प्रत्यक्षेण परसुखादिकं विदन्तीति (।) तेपि योगिनो रागादियोगिनो भवेयुः। शेषस्तु प्रपञ्चः कृत एव न पुनः क्रियते। अथ।

विषयेन्द्रियसम्पाताभावात्तेषां तदुद्भवं।
नोदेति दुःखमिति चेत्;

अथ यस्येन्द्रियविषयसन्निपाते सुखादिकमुदेति स एव सुखीत्यादिव्यपदेशमर्हति। न च योगिनस्त्र्यादिविषयसन्निकर्षात्सुखाद्युदयः ततस्तस्य न तथात्वं। तस्य हि तत्सुखादिकं यदिन्द्रियविषयजनितं।

तदप्यसत्। यतः।

न वै दुःखसमुद्भवः ॥४५७॥

दुःखासम्वेदनं किन्तु दुःखज्ञानसमुद्भवः[1]।
नहि दुःखाद्यसम्वेद्यं पीडानुग्रहकारणं[2] ॥४५८॥

यतः।

तथाहि। परस्परस्पर्शनेन्द्रियसङ्गमादुपजातं सुखं स्त्रीपुंसयोः किन्न साधारणं रोमाञ्चादिकमुपजनयति। तथा चेत्साधारणप्रतीतत्वैव भवेत्। तस्मात् सम्वेदने सति सुखिता

[1] M. दुःखस्य वेदनं

[2] T. स्दुग्-ब्स्ङल्-ल-सोग्स् म्योङ मिन्-पर्। ग्दुङ दङ फन्ऽदोग् ग्र्यु-म-यिन्।

नान्यथा। न चोदयमात्रं चक्षुरादिसंयोगो वा नास्तीति समानसुखता द्वयोरपि भवेदस्वसम्वेदने। तस्य तत्र भावना नास्तीति चेत्। न(।)भावनायाः सुखोदयमात्रे व्यापारस्तच्चोत्पन्नं सुखमिति तुल्यानुभवौ स्यातां। तव कथमयम्विभाग इति चेत्। आह।

भासमानं स्वरूपेण पीडा दुःखं स्वयं यदा।
न तदालम्बनं ज्ञानं न तदैवं प्रसज्यते ॥४५९॥

यस्य स्वसम्वेदनं सुखं स सुखी। यस्य तु सम्वेदनान्तरेण योगिनः परसुखाद्यालम्बनमात्रकं तस्य योगिनो न रागादियोगिता। तेन ते योगिनः तद्दुःखादिना नातुराः। अग्न्यादावनुभवे कथमातुरादितेति चेत्। योगिनान्तु तदभावात्। अन्येषां कथम्भवतीति चेत्। न। बाह्यादीनां तथैव सम्वेद्यत्वात्। सुखादिकन्तु यतस्व सम्वेदनेन करोति न तदन्येनेति न तुल्यानुभवाः सर्व्वे भवन्ति तद्विदः।

भिन्ने ज्ञानस्य सर्व्वस्य तेनालम्बनवेदने।
अर्थसारूप्यमालम्ब आत्मा वित्तिः स्वयं स्फुटः ॥४६०॥

तदाकाराधानसमर्थं सम्वेदनस्यालम्बनम्। आत्मरूपन्तु स्वप्रकाशं वेदन अतः सुखस्य स्वसम्वेदनमातुरीकरोति न तदाकारोपधानमात्रात्। को विशेषस्तयोरिति चेत्। न कश्चित्परमार्थतः। न हि सुखस्य तदाकारस्य च कश्चिद्विशेषः। केवलमात्मानमवष्टब्धं तेन मन्यमानो दुःख्यहमिति व्यवस्यति(।)योगी तु न तथेति न तथास्य सुखिता। तस्माद्विज्ञानं स्वसम्वेदनमेवान्यथा सुखादिविभागासम्भवः।

ननु च प्रज्ञादयोपि भावनाविशेषादेव। न च तेषां विलक्षणत्वं प्रतिमासमानादर्थात्। न चासावर्थः प्रज्ञादिस्वभावः। तत्र भावनाया अप्रवृत्तेः। नहि तत्रार्थस्य भावनाभिसंस्कारिकता। तस्मादर्थव्यतिरिक्ता परा प्रज्ञा न सा साकारा।

ननु प्रज्ञादयो न विज्ञानस्वभावास्ततस्तदनाकारतायामपि न विज्ञानमनाकारं। तदसत्।

तत्त्वप्रविचयः प्रज्ञा कथन्तत्त्वाग्रहेपि सा। अर्थग्रहेप्यनाकारा सा चेद्विज्ञानमप्यतः ॥११२७॥

यदि तदर्थविशेषग्राहिण्यपि प्रज्ञा निराकारा विज्ञान(म)प्यर्थग्राहि किन्न निराकारं। निराकारमस्तु तदपीति चेत्। न सदेतत् यतः।

प्रज्ञा नाम झटित्येव विशुद्धार्थविभासनं। तथानुमानमन्यस्य प्रज्ञात्वानुपपत्तितः ॥११२८॥

तच्च साकारमेवेति प्रतिपादितमेव प्रतिपादयिष्यते च। यदि च विज्ञानं स्वसंवेदनं नेष्यते। तदा न कदाचिदस्य प्रतिपत्तिरिति व्यवहाराभाव एव। तदाह।

अपि चाध्यक्षताऽभावे धियः स्याल्लिङ्गतो गतिः।
तच्चाक्षमर्थौ धीः पूर्व्वो मनस्कारोपि वा भवेत्[1] ॥४६१॥
कार्यकारणसामग्र्यामस्यां सम्बन्धि नापरं[2]।
सामर्थ्यादर्शनात्तत्र नेन्द्रियं व्यभिचारतः ॥४६२॥

---

[1] T. ग्शन्-यङ म्ङोन्-सुम्-मेद्-पस्-न। ब्लो नि र्तंग्स्-लस् र्तोग्स्-पर्ऽग्युर्। दे-यङ द्वङ्-पो दोन्-नम् ब्लो। यङ-न यिद्-ब्येद् सङ-मर् ऽग्युर्।

[2] M. सम्बन्धि नापराम्

**प्रत्यक्षताभावे परोक्षविषयमनुमानं प्रवर्तते। तच्च लिङ्गं तच्च लिङ्गमक्षादिकमेव मनस्कारपर्यन्तं। अन्यस्य सम्बन्धिताभावात्। अर्थापत्तिरपि सम्बन्धिदर्शनादेवान्यथा नोपपद्यत इति तस्यावृत्तेः। तत्र तावन्नेन्द्रियं व्यभिचारतः। अव्यभिचारि हि लिङ्गन्न चेन्द्रियमन्यथा नो घटते कारणत्वेनाभ्युपगमात्। समर्थता चादृष्टकार्यस्य न निश्चीयते। तथार्थः। तस्यापीन्द्रियवदेव व्यभिचारः।**

**तथार्थौ धीमनस्कारौ ज्ञानं तौ च न सिध्यतः।**

**धियोसिद्धत्वादलिङ्गता। साध्या हि सा। मनस्कारस्तु सैव पूर्व्वा धीः। सा चोदयकाले न सिद्धाऽन्यदा कथं सिध्येत्। यतः।**

**नाप्रसिद्धस्य लिङ्गत्वं ;**

**प्रसिद्धेन हि लिङ्गेन भवितव्यमन्यथा लिङ्गत्वे सर्व्वमेव लिङ्गमिति सर्व्वं सर्व्वस्य सिध्येत्। अथापि स्यादर्थस्तावद् व्यक्तः प्रत्यक्षप्रसिद्ध एव। अन्यथा यो नामास्तीति व्यवहारोपि न स्यादित्यन्धमूकं जगत्स्यात्। न च व्यक्तोऽर्थोऽर्थसत्तामात्रादन्यथा सर्व्वव्यक्ति-प्रसङ्गेन सर्व्वं(स्य)सर्व्वदर्शित्वप्रसङ्गः। तस्माद्यतो व्यक्तत्वमर्थस्य सा बुद्धिः। अत एवाह। न ह्यज्ञातेऽर्थे कश्चिद् बुद्धिमुपलभते। ज्ञाते त्वनुमानादवगच्छतीति।**

अपि चाध्यक्षताभावे धियः स्याल्लिङ्गतो गतिः।
तच्चाक्षमर्थो धीः पूर्वो मनकारोपि वा भवेत् ॥११२९॥

**अत्रोत्तरं।**

**व्यक्तिरर्थस्य चेन्मता ॥४६१॥**
**लिङ्गं ; सैव ननु ज्ञानं व्यक्तोर्थोनेन वर्णितः।**
**व्यक्तावननुभूतायां तद्व्यक्तत्वाविनिश्चयात् ॥४६४॥**

**यदि व्यक्तिर्लिङ्गमथापि व्यक्तोर्थः सर्व्वथा व्यक्तयनुभवे न प्रयोजनं। व्यक्त्यनु-भवपुरस्सरत्वाद्व्यक्तानुभवस्य एकदा स्वतन्त्रा व्यक्तिरनुमीयतेऽन्यदा विशेषणभूता। सर्व्वथा-नुभवेन भवितव्यं प्रत्यक्षतः। अनुमानेनानुभवेऽनवस्था। सा चार्थस्य व्यक्तिः प्रत्यक्षा बुद्धिरपि प्रत्यक्षैव। तस्मात्परोक्षतया व्यक्तेरर्थः परोक्ष एव भवेत्। ततो न लिङ्गम्। अथ कर्मतया प्रतिभाममानोऽर्थो ग्राह्यतापरनामिकया लिङ्गं नहि कर्मता क्रियामन्तरेण भवति। बुद्धिश्च क्रिया। तदाह**

सा बहिर्देशसम्बद्धा प्रत्यक्षमुपलक्ष्यते।

**अत्रोच्यते।**

क्रियाकृते विशेषे हि कर्मता नान्यथा क्वचित्।
क्रियाकृतो विशेषश्चेत् क्रियामात्रेनुमा भवेत् ॥११३०॥

**यदि कर्मता नाम क्रियाकृतो विशेषः क्रियामात्रमेवानुमीयताम्। न बुद्धिक्रियानुमानं। न चान्या काचित्क्रिया पदार्थरूपात्। तथा हि।**

कर्मस्था वा क्रियोच्येत कर्तृस्था वा परा न हि।
कर्त्तस्था कर्त्ततो नान्या कर्मस्था नास्ति कर्मतः ॥११३१॥

ततो न दर्शनं दृश्यमानादन्यतो वा परं। अथ ग्राह्यतयाऽर्थ एव वेद्यते बुद्धिस्तु ग्राहकतयैव। एवं हि प्रतीतिर्मया बुद्धया गृहीतोऽर्थ इति।

तदप्यसत्।

करणत्वं तदा बुद्धेः ग्रहणन्तु ततः परं। तदेवास्तु परा बुद्धिः किमर्थमुपकल्प्यते ॥११३२॥
दर्शनं परमार्थाच्चेत् गृह्येत द्वयरूपता।

**अथार्थस्यैव कश्चित्स विशेषो व्यक्तिरिष्यते।**

क्रियाकृतः तदा।

**नानुत्पादव्ययवतो विशेषोऽर्थस्य कश्चन ॥४६५॥**

नहि बुद्धया गृह्यमाणोऽर्थ उत्पत्तिमान् तदाङ्गीक्रियते। सिद्धोपस्थायी हि ग्राहकप्रत्ययः। यथास्तीति ग्रहणमात्रमेव बुद्धया क्रियते। न च गृह्यमाण एव विशिष्टो भवति। अन्यरूपग्रहणे भ्रान्तता भवेत्। तद्रूपग्रहणे च पूर्व्वापररूपताग्रहणप्रसङ्गः।

दीपादयो घटादीना स्वकालासङ्गतौ यथा। व्यञ्जकाज्ञानमप्येवं तुल्यन्तत्रापि चोदनं ॥११३३॥

यदि यथाविधोर्थः तथाभूत एव प्रदीपेनाभिव्यज्यते तेनापि सकलकालकलाव्यापकस्वभावव्यञ्जकेन भाव्यमन्यथा भ्रान्तिमात्रकं। अथ ग्रहणकालेऽन्यथाऽर्थ उत्पद्यते। तदा।

**तदिष्टौ वा प्रतिज्ञानं क्षणभङ्गः प्रसज्यते।**

यद्यसाववबोधरूपव्यावृत्त एवोत्पत्तिमान् स्वसम्वेदनमेव ज्ञानसमानकालतया क्षणिकमिति किमपरार्थपरिकल्पनया। ननु ग्राहकत्वेन बुद्धिः प्रतीयते ग्राह्यतयाऽर्थ इति प्रतिपादितं। सत्यं प्रतिपादित यद्यर्थो विचलितरूपो भवेत्। यदा तु तथाभूत एवोदयवान् तदा स एव तथा भूत उत्पत्तिमानिति ब्रुवन्नेव कथमर्थस्य ग्राह्यतां परो ब्रूयात्। मया बुद्धया गृहीत इति च व्यपदेशो न किञ्चित्प्रतीत्योत्पादमात्रादपरं प्रतिपादयति। तदाह। सर्व्व एव वस्तुसम्बन्धा जनस्यैवोपयोगविशेषवशात् कार्यकारणभावलेशविशेषतोन्यतया व्यवस्थाप्यन्तेऽवस्थाविशेषख्यापनार्थं। न तु व्यपदेशादेव वस्तुसिद्धिरन्यथापि तस्योपपत्तेः। तथा हि।

अर्थोयं पूर्वमप्यासीन्निजकारणभावतः। ततोस्य दृष्टिर्जातियमिदानीन्तत्र वस्तुनि ॥११३४॥
न प्रत्यक्षानुमानाभ्यामस्यार्थस्य प्रतीतता। तल्लोकव्यवहारोयं परमर्थपरंपरा ॥११३५॥

अपि चार्थस्य विशेष एव यदि कश्चिद् ग्राह्यता तदा।

**स च ज्ञातोऽथवाऽज्ञातो भवेज्ज्ञातस्य लिङ्गता ॥४६६॥**

**यदि ज्ञानेऽपरिच्छिन्ने ज्ञातोसाविति तत्कुतः॥**

ज्ञातत्वेन परिच्छित्तिर्यदि तद्रूपमेव तत्। अपार्थिकापरा बुद्धिस्तद्विशेषस्तथोच्यताम् ॥११३६॥

**ज्ञातत्वेनापरिच्छिन्नमपि तद् गमकं कथम् ॥४६६॥**

ज्ञातोर्थ इति जानानो ज्ञानमित्यवगच्छति। अर्थ इत्येव जानानस्तदर्थत्वस्य वेदिता ॥११३७॥
तद्रूपवेदनेर्थानां ताद्रूप्यस्य व्यवस्थितिः। शुक्लार्थवेदनेऽर्थस्य किं शौक्ल्यमपरं ततः ॥११३८॥

इत्युक्तमेवैतत्। अथ दृष्टिरपरैव तदा दृष्ट इति न परिच्छेदः। तदाह।

**अदृष्टदृष्टयोन्येन दृष्टादृष्टा न हि क्वचित्[1] ।**

यदि दृष्टादपरा दृष्टिरदृष्टा कथं दृष्टरूपपरिच्छेदः । अन्यथान्यदृष्टेपि दृष्टव्यवहारोऽन्येनायं दृष्ट इति यथा मया दृष्ट इत्यर्थदर्शनमात्रादर्थविशेषस्य दृष्टिस्तस्य दर्शनात् । तथा स विशेषोऽन्यदृष्टावपि नियतभावीति भवेदन्यदृष्टमेतदिति । अथैष एवासौ न भवति विशेषस्तेन परदृष्टविशेषादर्शनादात्मदृष्टदर्शनाच्च स्वदृष्ट इत्येव प्रतीतिः ।

तदप्यसत् । यतः ।

**विशेषः सोन्यदृष्टावप्यस्तीति स्यात्स्वधीगतिः ॥४६८॥**

यद्यपि विशेषा बहवस्तथापि तेषां स्वसम्वेदनत्वाभावात्तैरपि दृष्टैरेव भवितव्यम् । ततः स्वपरधीगतिः स्यात् । तस्मात् स्वसंवेदनेन भवितव्यं । दृष्टत्वेन । अथ सोप्यन्येन दृश्यते सम्वेदनेन तथा सति तत्रापि दृष्टतेत्यनवस्था । अथैकमेव दृष्टत्वन्तथा सति स विशेषोन्यदृष्टावापि स एव स्वधीगतिरेव स्यात् । यदा भावात्परस्य दृष्टत्वं परेण प्रतीयते तदात्मदृष्टत्वाभावेपि परदृष्टत्वदर्शनात् स्वधीगतिर्भवेत् । नहि तस्य दृष्टत्वस्य स्वपरापेक्षया विशेषः । अथ स्वयमपि दृष्टत्वमस्त्येव ततः स्वधीगतिः । न स्वदृष्टपरदृष्टयोर्विशेषाभावात् । स्वदृष्टत्वं स्वदृष्टिसम्बन्धप्रतीतौ ज्ञायते । तदप्रतीतौ तु स्वदृष्टमित्येव कुतः । तस्मात्स्वयंदृष्टेपि परेण दृष्टताप्रतीतौ स्वधीगतिर्भवेत् । अथ य एव दृष्टत्वं प्रतिपद्यते तस्य स्वधीगतिसम्भवेपि न दोषः । नह्यत्र काचित् क्षतिः । मा भूत् क्षतिस्तथापि वस्तुतत्वमेवं न भवतीति क्षतिरेव । तथा हि ।

प्रतीयते (ह्य)दृष्टत्वं ममान्यस्येति वा कुतः ।
न (हि) तत्र परापेक्षा केनचिद्विनिवार्यते ॥११३९॥
स्वसम्वेदनभावे तु विनिवार्या भवेदियं । स्वसम्वेदनमन्यस्य सम्वेद्यमिति साहसं ॥११४०॥

एतदेव स्व स म्वे द नं यदन्यागोचरत्वे सति प्रकाशनन्नाम ।

**तस्मादनुमितिर्बुद्धेः स्वधर्मनिरपेक्षिणः ।**
**केवलान्नार्थधर्मात्कः ; स्वधर्मः स्वधियो परः ॥४६९॥**
**यः प्रत्यक्षो धियो हेतुः । [2];**

बुद्ध्याश्रितेन हि केनचित् स्वबुद्धेरनुमानं । साधारणस्य हि विषयादिधर्मस्य साधारणानुमेयप्रतिपादनमेव । तस्मादात्मधर्मेणात्मबुद्धेरनुमापकेन भवितव्यम् । स्वधर्मश्च नापरो बुद्धेरस्ति । बुद्धिरेव यदि परं स्वधर्मः । सा चाप्रत्यक्षा कथमनुमापिका भवेत् । अथ सुखादयो बुद्धिसमानसामग्रीजन्मानः तैर्बुद्ध्यनुमानमात्मधर्मत्वात्तेषां । अत्राह ।

**तुल्यकारणजन्मनः (।)**
**तस्य भेदः कुतो बुद्धेर्व्यभिचार्यन्यजश्च सः ॥४७०॥**

यदि विषयेन्द्रियादिसामग्रीजनितं सुखादि सम्वेदनस्वभावमेव सकलमिति प्रतिपादितं । अथ दृष्टे विषये सुखमुत्पत्तिमदतः स्वबुद्ध्यनुमानं तदपि सुखं परस्य न भवतीति कुतः । परस्य सुखं परेण कथं प्रत्येतुं शक्यं ।

---

[1] M. अदृष्टा दृष्टयोऽन्येन द्रष्ट्रा दृष्टा० [2] M. प्रत्यक्षाधिगतो०

अस्वसम्वेदनत्वे हि विभागोयं कथम्भवेत् । भयादेरपि रोमाञ्च उपजायत एव हि ॥११४१॥

**यदि सुखादयः स्वसम्वेदनत्वेनावस्थिताः परसम्बन्धिनः तदा न प्रतीयन्त इति युक्तम् । अन्यथा तु परसम्बन्धितां को निवारयेत् । मम रोमाञ्चजनकास्ततो ममैवेति चेत् । एतदपि कुतः । न हि परयोषिन्न जनयति सुखं । सम्वेद्यमानो हि सुखाद्यात्मा जनयति रोमाञ्चादिकं स्वसम्बन्ध्यन्यथा वेति क्वेदमुपयोगि । स्वेन सुखेन रोमाञ्चादिजनने प्रसिद्धे स्वसम्बन्धिताप्रतीतिः । स्वसम्बन्धिताप्रतीतौ तेन जननमितीतरेतराश्रयदोषः । अपि च । बुद्ध्यन्वयव्यतिरेकानुविधायी तत्कारणानुविधायी वा बुद्धेरनुमापको भवेत् । तत्र ।**

**रूपादीन् पञ्च विषयानिन्द्रियाण्युपलम्भनम् ।**
**मुक्त्वा न कार्यमपरं तस्याः समुपलभ्यते ॥४७१॥**

**बुद्धिसमानसामग्रीजन्मान इन्द्रियादयो बुद्धिर्व्वोत्तरा ।**

**तत्रात्यक्षं द्वयं पंचस्वर्थेष्वेकोपि नेक्ष्यते ।**
**रूपदर्शनतो जातो योन्यथा व्यस्तसम्भवः ॥४७२॥**

**द्वयमत्यक्षमितीन्द्रियमुपलम्भनञ्च पञ्चस्वर्थेष्वेकोपि रूपादिषु तथाभूतो नेक्ष्यते यो रूपदर्शनादुपजातः । नहि रूपादयो रूपदर्शनतो जायन्ते कारणान्तरादुपजातत्वात् । रूपदर्शनजातत्वे तु तत्त्वमेव तेषान्न भवेत् । तथा हि ।**

रूपदर्शनमर्थाना सर्व्वेषामेव सम्भवत । प्रतिप्राणि विभिन्नं स्यात्तथार्थोपि तदुद्भवात् ॥११४२॥

**यथा रूपदर्शनं प्रतिप्राणि भिद्यते तथा रूपादयोपि । तयोर्यदि(।)**

सर्व्व एवोपलभ्येरन् तद्विशेषावधारणे । नानावभासितज्ज्ञानं प्रतिप्राणि प्रसक्तिमत् ॥११४३॥
प्रतिस्वमुपलम्भे तु ज्ञानतैव स्ववेदने ।

**यदि सर्व्व एव प्रतिप्राणि विभिन्नस्वभावा रूपादयः सर्व्वैरुपलभ्येरन्ननेकरूपाद्युपलम्भो युगपद् भवेत् । न चास्ति तथा । तदयन्तावदपक्ष एव । अथ स्वदर्शनजनितमेव रूपादिकमुपलभ्यते तथा सति परेणासम्वेदनादर्थतैव हीयेत स्वसम्वेदनाभ्युपगमे । अथ परेणोपलभ्यते तथा सति तज्जनितेन तस्यापरेण विशेषेण भवितव्यम् । सोपि परेणोपलभ्यते तस्याप्यपरेणेत्यनवस्था । तस्मात्स्ववेदनेनास्वसम्वेदनेन च यद्येवमप्रतीतं तल्लिङ्गमित्यतिसाहसम् । न खल्वप्रतीतस्य लिङ्गता । ततश्च लिङ्गलक्षणाभावादनुमानेन प्रतीयते बुद्धिरित्यसदेतत् । भवतु नामार्थस्यान्यस्य वा प्रतीतिस्तथा सति ।**

**यदेवमप्रतीतन्तल् लिंगमित्यतिसाहसम्[1] ।**
**विद्यमानेपि लिङ्गे तान्तेन सार्द्धमपश्यतः ॥४७३॥**
**कथं प्रतीतिर्लिङ्गं हि नादृष्टस्य प्रकाशकम् ॥**

**दृष्टस्यैवाग्नेः स्वप्रसवेन धूमादिनानुमानन्नान्यथा । न खलु दृष्टस्य प्राक् पावकस्य धूमोनुमापको दृष्टो दृष्टः ।**

**तत एवास्य लिङ्गात्प्राक् प्रसिद्धेरुपवर्णने ॥४७४॥**

---

[1] B. लिंगमित्यलौकिकं ।

**दृष्टान्तान्तरसाध्यत्वं तस्यापीत्यनवस्थितिः ।**

न ह्यनुमानं दृष्टान्तं प्रत्याचष्टे । तथा सत्यनुमानमेव न स्यात् प्रत्यक्षवत् । प्रत्यक्षस्य लक्षणान्तरमस्तीत्यननुमानत्वेऽस्यापि समानं । तस्मात्तदपि दृष्टान्तसाधकमनुमानं दृष्टान्तान्तरात्तदपि तदन्तरादित्यनवस्था नाम प्रतिपत्तिः । अथार्थापत्त्या तत्साधनं न कस्यचिदेवं प्रतीतिः । नह्यर्थ एव न घटते यदि प्रतीतिर्न्न स्यादिति कस्यचित्प्रतीतिः । प्रतीतोर्थो नोपपद्येत यदि प्रतीतिर्न्न स्यादिति चेत् । केयं प्रतीतता नाम । प्रतीत्या विषयीकृतत्वञ्चेत् । ननु प्रतीतेरप्रतीतौ तदेव प्रतीत्या विषयीकृतत्वं चिन्त्यम् । पुरोर्वात्तता चेत् । न पुरोर्वात्ततापि कथमप्रतीता प्रतीतिं साधयेत् । प्रतीता चेत् तत्राप्यपरा पुरोर्वात्ततेति तत्रानवस्थोक्तैव । तस्मात्पुरोर्वाततान्यो वा चतुःप्रकारप्रतीतिसिद्धौ न लिङ्गम् ।

**इत्यर्थस्य धियः सिद्धिः नार्थात्तस्याः कथञ्चन ॥४७५॥**

**तदप्रसिद्धावर्थस्य स्वयमेवाप्रसिद्धितः ।**

बुद्धेरर्थसिद्धिरबुद्धिकार्थसिद्धौ सर्व्वः सर्व्वदर्शी भवेत् । यदि बुद्धिरात्मानं वस्तुनि सव्यापारं पश्यति तदार्थः प्रतीत इति भवेदन्यथा न किञ्चित्प्रतिपन्नमिति स्यात् । स्वयमेव वा सर्व्वं प्रतीयेत । तस्मान्नार्थाद् बुद्धिप्रसिद्धिः । पूर्व्वोक्तदोषप्रसङ्गात् ।

**प्रत्यक्षाञ्च धियं दृष्ट्वा तस्याश्चेष्टाभिधादिकं ॥४७६॥**

**परचित्तानुमानञ्च न स्यादात्मन्यदर्शनात् ।**

**सम्बन्धस्य ;**

यदि प्रत्यक्षेणात्मनि बुद्धितत्सम्बन्धिनोः कथञ्चित्प्रतीतिस्तदा तत्सम्बद्धलिङ्गदर्शनात्परत्रापि बुद्धेरनुमानम्भवेत् अन्यथा न युक्तं। परेण दृष्टोर्थ इत्यनुमानञ्चेत् । स्वदृष्टस्य कुतः प्रतीतिः । अनुमानत एवेति चेत्( ) तत्राप्यपरो दृष्टान्त इत्यनवस्था । प्रत्यक्षेणैव प्रतीयत इति चेत् । ननु प्रत्यक्षमर्थं नीलादिकं प्रत्येति कथं दृष्टत्वं । स्वसम्बन्धितामपि प्रत्येतीति चेत् । स्वसम्बन्धिता तर्हि दृष्टत्वं तच्चेत्प्रतीयते आत्मनि तेन स्वसम्वेदनप्रतिपन्नः स्यात् । तस्य परेण प्रतिपत्तावनवस्था । तत्रापि दृष्टता तथैव प्रतीतिविषय इति । ततोर्थो दृष्टः । प्रतीतिदृष्टा प्रतीतिप्रतीतिरित्यादि यदा च प्रतीतिं प्रत्येति तदा न दृष्टतां प्रतीतिरेव दृश्या तदा भवेत् । तस्माद्विषयमात्रमेव प्रतीयते न दृष्टता नामेति नार्थापत्तेरुत्थानं । अपि च ।

नहि तस्य प्रत्यक्षता येन तत्रार्थस्य लिङ्गता(।) नहि स्मरणमेव प्रत्यक्षं । ततः(।)

**मनोबुद्धावर्थलिङ्गाप्रसिद्धितः ॥४७७॥**

कथमनुमानमित्युपस्कारः । अथ तत्राप्यर्थ एव जा त्यादिकः प्रतिभाति ततोनुमानं(।) दत्तमत्रोत्तरम् । न च प्रमाणन्तदिति कथमर्थः प्रतिभासेत । प्रतिभासमानो दृश्यते सत्योऽसत्यो वेति यदि परं विवाद इति चेत् । केयमसत्यता नाम । या विसम्वादिता । न(।) तद्रूपे विसम्वादाभावात् । तेन रूपेणावश्यमेव सत्येन भाव्यं । असत्यव्यवहारादसत्यमिति चेत् । कोयं व्यवहारः । प्रमाणं चेत् । प्रमाणेन प्रतिपन्नं कथमसत्यं । असत्यतयैव प्रतिपन्नञ्चेत् । न असत्यतायान्तद्रूपव्यतिरेकेणाप्रतीतेः । स्वरूपमात्रकमेव प्रतीयते न

परार्थक्रियेत्यपि न सङ्गतं । तथा सति स्वसम्वेदनप्रसङ्गात् । परेण वेद्यते चेत् । न(।) स्मरणस्य दृष्टतायामभिनिवेशात् पूर्व्वरूपता च नास्येति न प्रतीतिरस्य । अथैतदपि विषयीकरोति । न तर्हि स्मरणं । स्वसम्वेदनन्तु प्रत्यक्षमत्रेति युक्तं । तथा हि प्रतीतिर्मेयमेवमिति व्यवहारः । प्रमेयरहिता प्रतीतिरेवासत्यता । नालौकिकादित्वं तथा व्यवहाराभावात् । अपि च बुद्ध्यन्तरेणार्थापत्त्यान्येन वा ।

**प्रकाशिता कथं वा स्यात् बुद्धिर्बुद्ध्यन्तरेण वः ।**

बुद्धयो हि परस्परं प्रकाशिकाः कथं । यतः ।

**अप्रकाशात्मनोः सा स्याद् व्यङ्ग्यव्यञ्जकता कुतः ॥४७८॥**

न ह्यप्रकाशात्मनोः परस्परेणान्यथा वा व्यङ्ग्यव्यञ्जकताभावो युक्तः । प्रकाशेन हि प्रदीपप्रभात्मना पटादयोऽप्रकाशाः प्रकाश्यन्ते नान्यथा ।

**विषयस्य कथं व्यक्तिः ; प्रकाशे रूपसंक्रमात् ।**

प्रकाशे हि स्वयन्तदर्थस्य संक्रमात्प्रकाशनं तद्यथा प्रदीपप्रभादौ संक्रान्तस्य घटादेः प्रकाशनम् ।

**स च प्रकाशस्तद्रूपः स्वयमेव प्रकाशते ॥४७९॥**

यथा तर्हि घटस्यान्यद्रूपमन्यत्प्रभायास्तथान्यद्विज्ञानस्य रूपमन्यद्रूपादीनां ।

तदेतदसत् ।

भवत्येवन्तथाप्यस्य सम्विद्ग्राह्यप्रदीपवत् । नहि सम्वेदनाभावे द्योत्यद्योतकतागतिः ॥११४४॥

यद्यपि नामान्यभाविज्ञानविषययोस्तथापि प्रदीपवदेव स्वप्रकाशेन विज्ञानात्मना भवितव्यम् । अथ तद्वदेव विज्ञानान्तरग्राह्यता ।

तदसत् ।

यदि स्वस्माद्विभिन्नेन विज्ञानेनास्य वेदनम् । तत्सधर्मतयैवास्या बाह्यत्वमपि सम्विदः ॥११४५॥
अथास्य नास्ति बाह्यत्वं स्वसम्वेदनता न किम् ।
व्यतिरिक्तेन तस्यापि नालोकेन प्रकाशनम् ॥११४६॥

अत एवाह ।

**तथाभ्युपगमे बुद्धेः बुद्धौ बुद्धिः स्ववेदिका ।**
**सिद्धान्यथा तुल्यधर्मा विषयोपि धिया सह ॥४८०॥**

यदि प्रकाशायां स्वयं बुद्धौ बुद्धेः संक्रमात् प्रकाश्या बुद्धिर्बुद्ध्या स्ववेदिका तर्हि बुद्धिरन्यथा । बुद्धेरन्यप्रकाशतायां तुल्यधर्मत्वात्तत्सरूपतया विषयोपि प्रकाशको बुद्धेः स्यात् ।

**इति प्रकाशरूपा नः स्वयं धीः संप्रकाशते[1] ।**
**अन्योस्यां रूपसंक्रान्त्या प्रकाशः सन्प्रकाशते ॥४८१॥**

एवमेव प्रकाश्यप्रकाशकभावो रूपबुद्ध्योः यदुतैकं स्वप्रकाशमन्यस्य तद्रूपतयोत्पत्तिः ।

---

[1] B. स्वयं साधीः प्रकाशते:

## (ग) अर्थप्रकाशनं विज्ञानरूपेण

ननु भवतु स्वप्रकाशा बुद्धिरेकान्या तु प्रकाश्या सादृश्यसम्भवात्। यथा पितृरूपं गृह्णातीति। तदाह।

> **सादृश्येपि हि धीरन्या प्रकाश्या न तया मता।**
> **स्वयं प्रकाशनाद्; अर्थस्तद्रूपेण प्रकाशते[1] ॥४८२॥**

अप्रकाशस्य हि प्रकाशनमन्येन न प्रकाशस्यैव। साधर्म्यमात्रात्। अप्रकाशस्यापि न परमार्थतः प्रकाशः। कथमर्थः प्रकाशते। अर्थस्तद्रूपेण प्रकाश(क) रूपेण प्रकाशते नत्वन्येन प्रकाश्यते। बुद्ध्योश्च स्वप्रकाशकत्वं द्वयोरपि समानमतो न प्रकाश्यप्रकाशकभावः।

> **यथा प्रदीपयोर्दीपघटयोश्च तदाश्रयः।**
> **व्यङ्ग्यव्यञ्जकभावेन[2] व्यवहारः प्रतन्यते[3] ॥४८३॥**

नहि प्रदीपयोः सारूप्योत्पत्तिसम्भवेपि परस्परं प्रकाश्यप्रकाशकभावः।

दीपघटयोस्तर्हि कथम्। प्रदीपसामग्रीतो घटस्तद्रूप उत्पद्यतेऽतः सोपि स्वप्रकाश एव प्रकाश्यते नान्यथा। तथान्वयव्यतिरेकपरिकल्पितापोद्धारतस्तथा व्यवहारो न परमार्थत इत्यलं प्रसङ्गेन।

> **विषयेन्द्रियमात्रेण न दृष्टमिति निश्चयः।**
> **तस्माद्यतोयं तस्यापि वाच्यमन्यस्य दर्शनम् ॥४८४॥**

यदि विषयेन्द्रियमात्रत एव दृष्ट इति निश्चयो भवेत्। सकलमेव दृष्टमिति निश्चीयेत। दृष्टमेव दृष्टमिति निश्चीयेत (।) दृष्टमेव दृष्टं निश्चीयत इति चेत्। किमिदं दृष्टन्नाम। यत्र दर्शनमुत्पन्नं। किमिदं दर्शनमिति। तदेव पर्यनुयुक्तं यत्राभिमुखं चक्षुरादिकं। चक्षुरभिमुखमिति कथं प्रतीयते। तत्रापि दृष्टत्वेन व्यवहारः कथमित्यनवस्था। अथ दर्शनोत्पत्तिमात्रतो निश्चयः। नानुभूतत्वेन निश्चयात्। न चानुभवमात्रादननुभूत इति निश्चयः। नहि शुक्लताननुभवे शुक्ल इति निश्चयः। तस्माद्यदनुभवानुसारी निश्चयस्तथाभूतेनैवानुभवेन भवितव्यमिति निश्चयो युक्तः।

## (४) स्वसंवित्तिसिद्धिः

### (क) स्मृतेः स्वसंवित्तिः

> **स्मृतेरप्यात्मवित्सिद्धा ज्ञानस्या ; न्येन वेदने।**
> **दीर्घादिग्रहणं न स्याद् बहुमात्रनवस्थिते ॥४८५॥**

न केवलं विषयज्ञानत(ज्)ज्ञानविशेषात् स्वसम्वेदनं। स्मृतेरपि तत्सिध्यति। ननु स्मृतेरनुभवमात्रं सिध्यति न स्वसम्वेदनम्। अन्येनापि सम्वेदने स्मृतिर्युक्तैव। तदनुत्तरं। अन्येन वेदने ज्ञानस्य दीर्घादिग्रहणन्न स्यात्। बहुमात्रानवस्थानात्।

[1] M. ०प्रकाशमानाऽर्थः [2] M. व्यञ्जकभेदेन [3] B. प्रवर्त्तते

यथा ह्रस्वद्वयनिरन्तरप्रयोगे तदनवस्थाने नानवस्थितमवस्थितेन सहैकत्वेन प्रतीयत इति प्राक् प्रतिपादितम् । दीर्घप्लुतमात्रादेर्ग्रहणन्न स्यादेव । एकैकमात्राग्रहणे न दीर्घादिग्रहणं । नापि समुदायः प्रतीयते । पूर्व्वापरसङ्कलनेन प्रतीतिरिति चेत् । न (।) तस्यापि प्रतीतविषयत्वात् ।

ननु प्रतीत एव दीर्घादिलक्षणोर्थः न प्रतीतः । किन्तु दीर्घादिलक्षणोर्थो न प्रतीतः । ततः ह्रस्वद्वयमिव मात्राद्वये तदिति प्रतीयते । नापरो दीर्घः ।

ननु यस्यापि स्वसम्विदिता बुद्धिस्तस्यापि कथन्दीर्घादिग्रहणं । तदाकारैकबुद्धिसम्वेदने दीर्घवेदनव्यवस्था । अस्वसम्वेदनवादिनोपि तर्हि तदाकारैकबुद्धिवेदनमस्त्येव । केवलमन्यया बुद्ध्या । न चानयोरवस्थयोर्व्विशेषस्तथाहि ।

अन्येन वेद्यते वेद्यं वेद्यत्वाद्वेद्यग्राह्यवत् । ततो बुद्धिरपि प्राप्ता वेद्यत्वादन्यवेदिका ।।११४७।।

तदसत् । यत एवमपि स्यात् ।

अन्येन व्यज्यते व्यङ्ग्यं व्यङ्ग्यत्वाद् घटवस्तुवत् ।

ततोन्यद्योत्यता प्राप्ता प्रदीपस्यापि सांप्रतं ।।११४८।।

उक्तञ्चात्र किञ्चित् । यद्यन्यया बुद्ध्या पूर्व्विका बुद्धिर्वेद्येत । तदान्यतदाकार-बुद्ध्यवेदनाद्विषयस्य च तदाभावादवेदनमेवेति उत्सन्नोनुभवोर्थिन इति प्रतिपादितं । अथापि स्यादनवस्थानमेव नास्ति मात्राणां । ततो न दीर्घाद्यग्रहणम् ।

### (ख) स्फोटो-निरासः

तदप्यसत् । यत(:) ।

अवस्थितावक्रमायां सकृदाभासनान्मतौ ।
वर्णः स्यादक्रमो दीर्घः ;

न ह्यवस्थितमक्रमेण प्रतीयमानं दीर्घम्भवति कालक्रमेण प्रतीयमाने दीर्घमिति व्यवस्थानात् । क्रमोपि मात्राणामस्त्येव नान्त्यावस्थायां दीर्घ इत्यादिप्रतिपत्तिः । तदा च क्रमः प्रतीयमानो नान्यथैवासौ पूर्व्विकाया बुद्धेः । अथैकैवाऽसौ पूर्व्वापरभागग्राहिणी ।

तदप्यसत् । तथा हि ।

क्रमवानक्रमां कथं ॥४८६॥
उपकुर्यादसंश्लिष्यन् वर्णभागः परस्परं (।)

पूर्व्वापरो हि वर्णभागः परस्परमनवस्थायित्वेनासङ्गतः । कथमेकां बुद्धिमुपकुर्व्वीत । विषयग्रहणं हि बुद्धिर्व्विषयभेदे च बुद्धिभेदोपीति नैका बुद्धिरिति कथं क्रमप्रतीतिः । तथा चाह । नहि ।

अक्रमेण ग्रहादन्तक्रमवद्धीश्च नो भवेत्[1] ॥४८७॥

(कश्चिद्) अज्ञातेर्थे बुद्धिमुपलभते । ज्ञाते त्वनुमानादवगच्छति । यथा चासावर्थ-ज्ञानानुसारेण कल्प्यते तथा तद्भेदवत्यपि । तथाहि । लोको व्यपदिशतीदानीं मम बुद्धि-

---

[1] नास्ति B. पुस्तके, श्लोकार्द्धव्यत्यासः M. पुस्तके

त्पन्ना । अथैक एवासावर्थात्मा दीर्घादिकः प्रतीयते । दीर्घादिर्ह्येक एव प्रथममुत्पद्यते । ततो दीर्घस्यैकस्यैव प्रतिपत्तौ दीर्घा बुद्धिरप्येकैव ।

तदप्यसत्यं । यतः ।

**आन्त्यं पूर्व्वस्थितादूर्ध्वं बर्धमानो ध्वनिर्भवेत् ।**

कश्चि(द्) यद्येक एवासौ वर्णात्मा तदा प्रथमबुद्ध्यैव प्रतिपन्न इति कालक्षेपो न स्यात् । पूर्व्वभागाश्रवणे चांत्यबद्ध्यापि प्रतीयते दीर्घादिः । अथापरापरभागप्रतीत्या दीर्घादिप्रतिपत्तिः । तदा एको दीर्घ इति न स्यात् । अथ पूर्व्वोप्यनुवर्त्ततेऽपरस्यापि च प्रतिपत्तिः । तथा सति बर्द्धमानता ध्वनेः स्यात् । पूर्व्वस्यान्वयादपरस्य च सम्भवात् । अन्त्यावस्थायाञ्चासौ दीर्घ इति प्रत्ययः । तदा चाक्रमं ग्रहणमिति क्रमवदिति न स्यात् । पूर्व्वापेक्षया क्रम इति चेन्न । पूर्व्वापरबुद्ध्योरन्यत्त्वात् । अथ प्रथममुत्पन्ना बुद्धिरेकैवास्ते ।

तदप्ययुक्तम् ।

**धियः स्वयञ्च न स्थानं तदूर्ध्वविषयास्थितेः ॥४८८॥**

न ह्यनुपचितध्वनिरुपचितध्वनिकालमास्ते । तथा चेदपरः पुनरुपचय इति सैवानवस्था । अथ विषयानवस्थानेपि स्वयमेवावतिष्ठते तदापि ।

**स्थाने स्वयन्न नश्येन्सा पश्चादप्यविशेषतः ।**

यदि विषयग्रहणमन्तरेणापि तद्ग्रहणरूपा बुद्धिरवतिष्ठेत् न कदाचिन्नश्येत् । इत्यतिदीर्घता भवेत् । अथ विषयग्रहणाभावो विषयाभावे तदा न दीर्घग्राहिका भवेत् । भागमात्रस्य ग्रहणात् । अथैक एव वर्णात्माऽक्रम उत्पन्नः कालान्तरस्थायी । तदयुक्तं ।

**दोषोयं सकृदुत्पन्नाक्रमवर्णस्थितावपि ॥ ४८९ ॥**

यदि सकृदुत्पन्नः कियन्तमपि कालमास्ते सर्व्वदा तिष्ठेत् पश्चादप्यविशेषादिति । किञ्च ।

**सकृद्यत्नोद्भवाद्व्यर्थः स्याद्यत्नश्चोत्तरोत्तरः ।**

येनैव प्रयत्नेन प्रथमं रूपं निर्वर्त्तितं तेनैव परोपि भागस्तदव्यतिरेकादिति तस्मादपरस्य व्यर्थतैव ।

**व्यक्तावप्येष वर्णानां दोषः समनुषज्यते ॥४९०॥**

सकृद्यत्नेन सर्व्वस्य व्यक्तत्वाद्यत्नान्तरमनर्थकं । तस्मान्नैकबुद्ध्या दीर्घावयवानां ग्रहणम् । अनेकबुद्धिग्रहणमुपगन्तव्यम् ।

तदा च ।

**अनेकया तद्ग्रहणे या(ऽ)न्त्या धीः सानुभूयते ।**
**न दीर्घग्राहिका सा च तन्न स्याद्दीर्घधीस्मृतिः ॥४९१॥**

यदा नैकया बुद्ध्या दीर्घावयवानां ग्रहणं तदान्त्या बुद्धिर्बुद्ध्यन्तरेणानुभूयते । सा च न दीर्घग्राहिका ततः । कथं दीर्घधीस्मरणं । नाननुभूतस्मरणम् । अन्त्या च बुद्धिर्बुद्ध्यन्तरेणानुभूयते । पूर्व्वबुद्धिनान्तु व्यवहितत्वान्नानुभवः । अन्त्या च न दीर्घग्रहणव्यापृता

ततो दीर्घादिधीस्मरणमपि न भवेत् (।) अथापि स्यात् पृथक् पृथक् बुद्धीनां बुद्ध्यन्तरैर्ग्रहणं सर्व्वाः स्मर्यन्त इति दीर्घधीस्मृतिः।

तदप्ययुक्तं। यतः।

पृथक् पृथक् च बुद्धीनां संवित्तौ तु ध्वनिः श्रुतेः[1]।
अविच्छिन्नाभता न स्याद् घटनञ्च निराकृतम् ॥४६२॥

बुद्धिग्राहिकाभिर्बुद्धिभिः शब्दभागबुद्धीनां व्यवधानादविच्छेदप्रतीतिर्न्न स्यात्। न हि विच्छिन्नमविच्छिन्नं प्रत्येतुं शक्यं। संघटनेन प्रतीतिरिति चेत्। अत्राह।

"घटनञ्च निराकृतम्।

अन्यत्रापि समानन्तद्वर्ण्णयोर्वा सकृच्छ्रुति" रित्यादिना।

अपि च।

विच्छिन्नं शृण्वतोप्यस्य यद्यविच्छिन्नविभ्रमः।
ह्रस्वद्वयोच्चारणेपि स्यादविच्छिन्नविभ्रमः ॥४६३॥

ह्रस्वद्वयस्य निरन्तरमुच्चारणन्नास्तीति। विच्छेदादेकबुद्धेरभावः। यदि तु मात्राणामपि स एव विच्छेदस्तथाप्यविच्छेदाभिमानः। स तर्हि ह्रस्वद्वयोच्चारणेपि समानो न्याय इति कस्मान्न दृष्टः।

न चात्र विच्छेदप्रतीतिरपि तु विच्छेद एव। न तु विभ्रमः इत्ययमेव पक्षः क्षमः। किञ्च।

विच्छिन्ने दर्शने चाक्षादविच्छिन्नाधिरोपणं[2]।
नाक्षात्सर्वाक्षबुद्धीनां वितथत्वप्रसङ्गतः ॥४६४॥

यद्ययमविच्छेदप्रत्ययो विभ्रम एव तदाक्षजो वा भवेन्मानसो वा। यदीन्द्रियजः सर्व्वाक्षबुद्धीनां वितथत्वम्भवेत्। तथा हि।

सर्व्वान्त्योपि हि वर्णात्मा निमेषतुलितस्थितिः।
स च क्रमादनेकाणुसम्बन्धेन नितिष्ठति ॥४६५॥

एकाणवत्ययकालश्च कालोल्पीयान् क्षणो मतः।
बुद्धिश्च क्षणिका तस्मात्क्रमाद्वर्णान्प्रपद्यते ॥४६६॥

इति वर्णेषु[3] रूपादावविच्छिन्नावभासिनी।
विच्छिन्नाप्यन्यया बुद्धिः सर्व्वा स्याद्वितथार्थिका ॥४६७॥

क्रमेण हि सकलवर्ण्णप्रतिपत्तिः (।) क्षणिका बुद्धिरपरापरप्रबन्धवद्रूपेण वर्ण्णग्रहणात्। रूपादयोपि जन्मभाजः क्रमादेव। ततः तत्रापि यदिन्द्रियमलातचक्रवद् भ्रान्तं प्रत्ययं जनयेत् न क्वचिद् भ्रान्तता भवेत्। अथ मानसो विभ्रमः। तदान्यो दोषः। तथा हि।

घटनं यच्च भावानामन्यत्रेन्द्रियविभ्रमात्।
भेदालक्षणविभ्रान्तं स्मरणन्तद्विकल्पकं ॥४६८॥

---

[1] M. B. तद्ध्वनिश्रुतेः  [2] B. ०रोहणं  [3] M. इति वर्ण्णेषु

**तस्य स्पष्टावभासित्वं जल्पसंसर्गिणः कुतः।**

मानसो हि विप्लवः स्पष्टतामतिक्रम्य वर्तमान एव स्पष्टो भवतीत्यसत्यमेवैतत्।

स्पष्टाकारञ्च वर्णाद्याकारं विज्ञानमिष्यते (।) तत्कथमसौ मानसी भ्रान्तिरिति युक्तं। जल्पसंसर्गिणो हि न स्पष्टतासम्भवो न विकल्पानुबद्धस्य स्पष्टार्थविभासितेत्युक्तं। तथा।

**नाक्षग्राह्येऽस्ति शब्दानां योजनेति विवेचितम् ॥४९९॥**

अथ (।)

**विच्छिन्नं पश्यतोऽप्यक्षैर्घटयेद्यदि कल्पना।**
**अर्थस्य तत्सम्वित्तेश्च सततं भासमानयोः ॥५००॥**
**बाधकेऽसति सन्न्याये विच्छिन्न इति तत्कुतः।**

नाविच्छिन्नं प्रतिभासमानं विच्छिन्नमिति कल्पनीयं। न खलु प्रत्यक्षमन्यथा कल्पनामर्हति कल्पनाया एवासत्त्वकल्पनं युक्तं प्रत्यक्षबाधितत्वात्। तस्मादसदेतत्। अथ स्वसम्वेदनं नास्तीति बुद्धद्ध्यन्तरसम्वेदनाभ्युपगमो न च युगपद् बुद्धिसम्भवः। तेन बुद्ध्यन्तरेण व्यवधानाद्विच्छिन्नं दर्शनमिति। अत्राह।

**बुद्धीनां शक्तिनियमादिति चेत्स कुतो मतः ॥५०१॥**
**युगपद्बुद्ध्यदृष्टेश्च चेत् तदेवेदं विचार्यते।**

शक्तिनियमे हि बुद्धीनां युगपदसम्भवः। स एव तु शक्तिनियमः कुतोऽवसातव्यः। अथ युगपद्बुद्ध्यदर्शनाच्छक्तिनियमः। विच्छिन्नं तर्हि दर्शनं नास्त्यदर्शनस्य तत्रापि सम्भवात्। अथादर्शनं तत्र न प्रमाणं। युगपददर्शनं अपि तर्हि कथं प्रमाणम्।

विच्छिन्नबुद्ध्युत्पादस्य योऽभावस्याप्रसाधकः। स एवानुपलम्भः किं यौगपद्यस्य साधकः॥११४९॥

तत्र किमविच्छिन्नदर्शनाद्युगपदुत्पादः प्रत्ययानामथायौगपद्यदर्शनाद्विच्छिन्नदर्शनं कल्प्यतामिति विचार्यमेतत्।

ननु युगपद् बुद्ध्यदर्शनमस्त्येव। नहि निरपेक्ष्यभाविभूतरूपदर्शनमुपलभ्यते युगपत् क्रमेणैव दर्शनात्। आगमोऽप्यस्ति भवतः। तथाह्युक्तं (।) "अस्थानमनवकाशो यदपूर्व्वाचरमे द्वे चित्ते समुत्पद्येयातां।"

तदप्यसत्।

**तासां समानजातीये सामर्थ्यनियमो भवेत् ॥५०२॥**
**तथा हि सम्यक् लक्ष्यन्ते विकल्पाः क्रमभाविनः।**

बुद्धीनां हि शक्तिनियमः समानजातीयविज्ञानोत्पादनापेक्षया न सामान्येन। चक्षुरादिविज्ञानानि समानजातीयं चक्षुरादिविज्ञानमेव नोत्पादयन्ति न पुनः सकलमेव। तत्र यदि ग्राह्यग्राहकरूपं द्वयमुत्पादयेदसमानजातीये को विरोधः।

## ( ५ ) प्रत्यभिज्ञानिरासः

ननु विकल्पोपि स्पष्टावभासो प्रत्यभिज्ञानाख्यप्रत्यक्षप्रत्ययः परैरिष्यते । इष्यतां न तु तथा । तथाहि ।

**एतेन यः समक्षेर्थे प्रत्यभिज्ञानकल्पनां ॥५०३॥**
**स्पष्टावभासां प्रत्यक्षां कल्पयेत् सोपि वारितः ।**

इन्द्रियविज्ञानस्य पूर्व्वापररूपग्रहणसमर्थस्याभावात्कल्पने च स्पष्टावभासवती प्रत्यक्षमिति यो मन्यते प्रत्यक्षतया सोपि वारितः । तथाहि । न कल्पना स्पष्टावभासा तस्याः कुतः प्रत्यक्षता । न स्पष्टावभासित्वेपि प्रमाणता व्यभिचारात् । तथा हि ।

**केशगोलकदीपादावपि स्पष्टावभासनात् ॥५०४॥**
**प्रतीतभेदेप्यध्यक्षा धीः कथन्तादृशी भवेत् ।**

अध्यक्षस्य तत्र बाधितत्वादनध्यक्षता । केन बाध्यतेऽन्तरा विच्छेदेन । इहापि पूर्व्वापररूपाप्रतिभासनलक्षणो विच्छे(दो)स्त्येव ।

**तस्मान्न प्रत्यभिज्ञानाद्वर्णाद्येकत्वनिश्चयः ॥५०५॥**

प्रमाणत्वाभावादतो य आह ।

मात्राभेदेपि वर्णानामेकत्वं प्रत्यभिज्ञया । प्रतीयते ततः केन दीर्घादेरग्रहो भवेत् ॥११५०॥

तस्यापि वचनमात्रमेतन्न प्रमाणं प्रत्यभिज्ञेति प्रतिपादनात् । अपि च । न प्रत्यक्षमक्षजं प्रत्य(भि)ज्ञा । तथाहि ।

**पूर्व्वानुभूतस्मरणात्तद्धर्मारोपणाद् विना ।**
**स एवायमिति ज्ञानं नास्ति तच्चाक्षजे कुतः ॥५०६॥**

न पूर्व्वानुभवमन्तरेण स्मरणं न स्मरणमन्तरेण स एवायमित्येवं रूपं प्रत्यभिज्ञानं । पूर्व्वानुभूतैकत्वग्रहणरूपा हि प्र त्य भि ज्ञे दानीमनुभूयमानस्य । न च स्मरणमन्तरेण पूर्व्वरूपताग्रहः । न च स्मरणविषयोर्थः प्रत्यक्षगोचरोऽन्यथा सकलमेव पूर्व्वानुभूतं प्रत्यक्षमिति किमिदमक्षव्यापारेण । अथ कदाचित्पूर्व्वदृष्टं मृतनष्टमपि स्यादत इदानीमक्षव्यापारोपेक्ष्यते । यद्येवमक्षव्यापारस्तत्रैवास्तु किन्तद्देशगमनेन । योग्यदेशतां विना नाक्षं समर्थमिति चेत् । यद्येवं देशान्तरदृष्ट इह प्रत्यभिज्ञानाभावः । नहि देशान्तरसम्बन्धि रूपं योग्यदेशावस्थायि । उभयदेशसम्बन्ध्येकमेव तेन स एव योग्यदेशस्ततोयमदोषः । एवं तर्हि स्मरणमन्तरेणैव कस्मान्न तथा प्रतीयते । तत्सम्बन्धस्यापगमान्न प्रतीतिः । स्मरणेपि तर्हि कथं स एवायमिति स्यात् । व्यपगतस्यापि स्मरणमित्यदोषः । न प्रमाणम्प्रत्यभिज्ञा । सम्बन्धोपगतो न सम्बन्धीति चेत् । तस्य तर्हि पूर्व्वदेशकालसम्बन्धाभावे इदानीन्तनमेव रूपमिति भेद एव पूर्व्वापरयोः । अतः स एवायमिति प्रतीतिर्न्न भेदः ।

ननु सैव केन प्रतीतिरिति विचार्यमिदमेव । नहि प्रतीतिमात्रं प्रमाणमन्यथा किं

---

१ B. ०त्स निवारितः

प्रत्यक्षत्वसाधननिर्ब्बन्धेन। पूर्व्वकालादिसम्बन्धे चाप्रतीयमाने यदि नित्यत्वमुच्यते सर्व्वपदार्थानामेव नित्यता भवेत् तदोत्पत्तिमतामपि।

इदानीन्तनरूपेण प्रतीतावपि नित्यता। यदि तत्क्षणसम्भूते कस्मादिव न नित्यता ॥११५१॥

यद्यपि तस्य पूर्व्वता नोत्पन्ना तथाप्यस्त्येव। अनुत्पन्ना कथमस्ति विनष्टा कथमस्तीति समानं चोद्यम्। न च प्रागभावप्रध्वंसाभावयोर्व्विशेषः। अयमस्ति विशेषः प्रध्वस्तं स्मर्यते। प्रागभूतमपि सम्भवानुमानेन प्रतीयते। भावितया प्रतीयते न पूर्व्वतया।

ननु भाविता प्रतीयत इति भाविप्रत्यक्षं भविष्यतीत्यर्थः। तेन तदा नास्ति पश्चाद् भविष्यतीति। इहापि भूततया प्रतीयते प्रत्यक्षमभूदिति नेदानीमस्तीति(।) भवतु कथमिदानीमप्यस्ति। इदानीमपि प्रतीतेरिदानीमस्तीति। मध्ये तर्ह्यस्तीति कथं इदानीमेव दर्शनात्। नहि पूर्व्वमसदिदानीमुपलभ्यते। न तर्हि प्रत्यक्षमेतत् न चानुमानमपि तस्य पूर्व्वास्तितया सम्बन्धाग्रहणात्। निरन्तरदर्शने सम्बन्धग्रहणमिति चेत्। न(।)निरन्तरदर्शने प्रमाणाभावात्। नहि निरन्तरं मम दर्शनमिति स्मरणादपरं प्रमाणं। इयमेव प्रत्यभिज्ञेति चेत्। न। प्रमाणत्वस्य चिन्त्यत्वात्। अविसम्वादात्प्रमाणमिति चेत्। न नित्यतायामविसम्वादाभावात्। तस्मादयमविसम्वादोर्थक्रियामात्रे तादृशा च पदार्थेन तादृशी क्रियतेर्थक्रिया। न तेनैव। प्रमाणाभावात्। अन्यथा सर्व्वदार्थक्रियासम्बद्ध इति तदैवार्थक्रियानुभूयेत। अभावादर्थक्रियाया इति चेत्। कथमिदानीमर्थक्रियासम्बद्धेतरयोर्न भेदः। पश्चात्तत्रैवार्थक्रियानुभूयत इति न सङ्गतम्। अनवस्थाप्रसङ्गात्। यतः। तत्रापि परोऽर्थक्रियाऽविसम्वादोऽभ्युपगन्तव्यस्तत्राप्यपर इति न व्यवतिष्ठेत। तस्मादप्रमाणमेव प्रत्यभिज्ञेति स्थितमेतत्।

तस्माद्व्यवहितत्वान्मात्राग्रहणस्य नैरन्तर्याभावान्न दीर्घादिग्रहणं।

अथ युगपद्विज्ञानसम्भव इष्यते तदप्ययुक्तं। यतः।

**न चार्थज्ञानसम्वित्त्योर्युगपत्सम्भवो मतः।**
**लक्ष्यते प्रतिभासो वा[1]नार्थार्थज्ञानयोः पृथक् ॥५०७॥**

"युगपज्ज्ञानानुत्पत्तिर्मनसोलिङ्ग" मिति (न्या०सू०१।१।१६) वचनात्। न चार्थावभासि ज्ञानमर्थश्च केवलः प्रतिभासमान उपलभ्यते। स्वसम्विदितरूपतया बाह्य एव नीलादिप्रतिभास उपलभ्यते। नापरमपि तत्र। अर्थैकाकारतया तयोरनुपलक्षणं। यथा सुखतत्सम्वित्त्योः (।)

तदप्यसत् (।) यतः।

**न ह्यर्थाभासि च ज्ञानमर्थो बाह्यश्च केवलः।**
**एकाकारमतिग्राह्ये भेदाभावप्रसङ्गतः ॥५०८॥**

यदि सुखादीनान्तन्मतेश्चैकाकारता तदा तत्राप्यभेद एव। न भेदावभासमन्तरेण भेदः। सुखसम्वेदनमेव केवलमिति युक्तं तथा नीलादिकमिति च। तस्मात् सुखादिनीलादिव्यतिरिक्तमपरमिह जगति सम्वेदनं नास्तीति सुखादिवत् स्वसम्वेदनं नीलादिकमपीति युक्त एव निर्णयः।

---

[1] m. ०सौ द्वौ

अथ यदि नाम सम्वेदनपरमिह न लक्ष्यते परिस्फुटेन भेदेन । तथापि तदस्त्येव । यथाहि रूपादौ नियत आलोकः ।

तदप्यसत् । तथाहि ।

सूपलक्षेण भेदेन यौ संवित्तौ न लक्षितौ ।
अथार्थप्रत्ययौ पश्चात् स्मर्येते तौ पृथक् कथम् ॥५०९

आलोकोपि यदि किमपि भेदग्राहकमस्य नास्ति प्रमाणं नास्त्येव पृथक् । भेदोपलक्षणे हि सम्वेदनेन चिन्त्येत भेदः । न च तथा (।) तस्मान्न पृथक् सम्वेदनं नीलात् । आलोकस्तु कदाचित्केवल उपलभ्यते । रूपं वा कैश्चित् । ततश्च यथा केवलं रूपं केवल आलोकः सालोकं रूपं तथा केवलं विज्ञानं केवलोर्थः समंवेदनोर्थ इति स्यात् । प्रतिभासद्वयं भवेत ।

क्रमेणानुभवोत्पादेप्यर्थार्थमनसोरयं ।
प्रतिभासस्य नानात्वचोद्यदोषो दुरुद्धरः ॥५१०॥

यथा युगपत्सम्वेदनाभ्युपगमे अर्थार्थप्रतिभासद्वयप्रसङ्ग इति दुरुद्धरो दोषः । तथा क्रमेणापि । तथाहि (।)

अर्थसम्वेदनं तावत्तनोर्थाभासवेदनं (।)
नहि संवेदनं शुद्धं भवेदर्थस्य वेदनं ॥५११॥

अर्थवेदनं हि वेदनान्तरेण वेद्यमानमर्थवेदनरूपतयैव वेदितव्यम् । तथा द्विरर्थविभासनप्रसङ्गः । अन्यथा तदर्थस्य वेदनमिति कथं वेदनान्तरं वेदयेत् । तस्मादुत्तरकालमप्यर्थविभासेन भाव्यं । न चैवं । तथाहि ।

तथा हि नीलाद्याकार एक एकं च वेदनं ।
लक्ष्यते न तु नीलाभे वेदने वेदनं परं[1] ॥५१२॥

अत्र विचार्यते । किं युगपज्ज्ञानपक्ष एव दोषः किम्वा क्रमज्ञानपक्षे । यदि युगपत् । तदसत् । युगपन्न द्वयं सम्वेद्यते नीलाकारः सम्वेदनञ्च । तथा च प्रतिपादितं । अथ क्रमेण (।) तदापि न सम्वेदनमात्रं पश्चाल्लक्ष्यते । स्मरणेन सनीलस्यैवोपलक्षणात् । तदयमदोषः । न दोषः । अयमस्यार्थः । नीलाद्याकार एकः सम्वेदनेन । एकञ्च सम्वेदनं नीलाकारेण । न तु नीलाभे सम्वेदने सम्वेदनमपरमर्थव्यतिरिक्तं लक्षयामः । अथवा नीलाद्याकार एक एकञ्च सम्वेदनं सुखादिरूपं सम्वेदयामो नापरं सुखादिसम्वेदने ग्राहकं तत्राप्यपरमित्यनन्ताकारसम्वेदनानुभवः ।

इदानीं प्रकृतमेवानुबध्नाति ।

ज्ञानान्तरेणानुभवो भवेत्तत्रापि च स्मृतिः ।
दृष्टा ; तद्वेदनं केन तस्याप्यन्येन चेद् ; इमां ॥ ५१३ ॥
मालां ज्ञानविदां कोयं जनयत्यनुबन्धिनीम् ।

यदि ज्ञानस्य ज्ञानान्तरेणानुभवः । स कथं ज्ञातव्यः । तत्रापि स्मृतिर्दृष्टेति । तद्वेद-

[1] B. पृथक्

नन्तर्हि ज्ञानान्तरेणेति तत्रापि स्मृतिरेव प्रमाणम् । तदा चेमां मालां ज्ञानतद्वेदनानां को हेतुरनुबन्धवतीं जनयेत् ।

पूर्व्वा धीः सैव चेन्न स्यात् संचारो विषयान्तरे ॥५१४॥

पूर्व्वपूर्व्वा बुद्धिरेवोत्तरोत्तरया ग्राह्या न नीलादिको विषय इति तद्ग्रहणन्न स्यादेव। यतः।

तां ग्राह्यलक्षणप्राप्तामासन्नां जनिकां धियं ।
अगृहीत्वोत्तरं ज्ञानं गृह्णीयादपरं कथम् ॥५१५॥

यदि बुद्धिः स्वसम्वेदनरूपासत्यर्थं गृह्णीयात्ततो यथा सन्निहितस्यार्थस्य ग्रहणमिति विषयसंचारो भवेत् । यदा तु बुद्धिर्बुद्ध्यन्तरेण गृह्यते तदा तां ग्राह्यलक्षणप्राप्तां सतीमगृहीत्वोत्तरं ज्ञानं पूर्व्विकां बुद्धिं कथन्नीलादिकं गृह्णीयात् । नहि प्रत्यासन्नमात्मसम्बद्धत्वेन ग्राह्यं मुक्त्वा परग्रहणे सामर्थ्यप्रयोगः । अथ बाह्योर्थः सन्निहितः सविबन्धक इति विषयान्तरसञ्चारः ।

तदसत् । यतः ।

आत्मनि ज्ञानजनने स्वभावे नियताञ्च तां ।
को नामान्यो विबध्नीयाद्बहिरङ्गोऽन्तरङ्गिकाम्[1] ॥५१६॥
बाह्यः सन्निहितोऽप्यर्थः तां विबन्धन् हि न प्रभुः ।
धियं नानुभवेत् कश्चिदन्यथार्थस्य सन्निधौ ॥५१७॥

तथा च स्मरणन्न स्यात् । अथ विबन्धकाभावे भवेत् ।

तदसत्यं । यतः ।

न च सन्निहितार्थास्ति दशा काचिदतो धियः ।
उत्सन्नमूला स्मृतिरप्युत्सन्नेत्युज्ज्वलं मतम् ॥५१८॥

अर्थ इत्येव स्मर्येत नानुभूत इति । अथार्थापत्यानुभूतोऽर्थः स्वानुभवं कल्पयेत् ।

तदप्यसत् । अर्थानुभव एव यदा सन्ततो जातस्तद नार्थापत्तिरपि । अर्थापत्तिर्यदा स्मर्यते तदापरार्थापत्तिरिति सैवानवस्था । तस्मादनुभूतोऽनुभवः स्मर्यते नान्यथा । ततोऽर्थकृतव्याघातान्नानुभवो न च स्मरणं । न च सत्तामात्रकादर्थानुभवः । इन्द्रियसम्बन्धात् सोपि कुतो ज्ञातव्यः । अपरेन्द्रियसम्बन्धादित्यनवस्था ।

अतीतादिविकल्पानां येषां नार्थस्य सन्निधिः ।
सञ्चारकारणाभावादुत्सीदेदर्थचिन्तनं ॥५१९॥

अतीतादिविकल्पानां नेन्द्रियसम्बन्धोऽतः कथमनुभूतत्वनिश्चयः । ततोर्थचिन्ता न स्यात् । चिन्ताचिन्तानवस्था भवेत् । अथ तत्राप्यर्थ एव देशकालान्यथात्मको भवेत् । तदा तर्हि तेन सर्व्वदा व्याघातकृता भवितव्यं । तथा च संचारो न भवेदेव । तेनैवापकृतत्वात् । इन्द्रियविज्ञाने हि सन्निहित एवार्थो व्याघातकारी । ततः कदाचित् बुद्धितद्वेदनानां प्रबन्धविच्छेदो भवेत् कदाचिदन्यथा । चिन्तासन्ताने तु व्यवहितोऽप्यर्थो विषयत्वात्सर्व्वदा व्याघातकारीति

[1] B पुस्तके नास्तीयं कारिका

तत्रार्थ एव वेद्येत न सम्वेदनमिति सम्वेदनस्मरणन्न स्यात्। अथ न व्याघातकारी तथा सति चिन्ताचिन्तादिसन्तानवेदनमेवार्थचिन्तनमुत्सीदेदेव। अथापि स्यात्। शक्तिरस्ति का चिद्यात्मनि ज्ञानं जनयति (।)तस्याः क्षये क्रमेणोपजाते विषयान्तरे भवेत्सञ्चार इति।

तदप्ययुक्तं। यतः।

आत्मनि ज्ञानजनने शक्तिसंक्षयतः शनैः।
विषयान्तरसंचारो यदि; सैवार्थधीः कुतः ॥५२०॥

यदि शक्तिविकलापूर्व्वबुद्धिर्बुद्धिग्रहणंप्रति शक्तिविरहे साप्यर्थधीर्व्विषयान्तरसञ्चारवतीत्वेनाभिमता न भवेत्। तस्मात्।

[1]शक्तिक्षये पूर्वधियः;

नार्थान्तरसञ्चारः। यतः।

नहि धीः प्राग्धिया विना।

किं कारणं।

अन्यार्थासक्तिविगुणे ज्ञाने ज्ञानोदयागतेः ॥५२१॥

(आलयविज्ञानम्-)

यदि तु पूर्व्वबुद्धेः कारणत्वं न स्यादर्थान्तरासक्तिवैगुण्येप्युदयो भवेत् बुद्ध्यन्तरस्य। नह्यकारणस्य वैगुण्यमवैगुण्यम्वा व्याघातमितरद्वा विदधीत। त मात् पूर्व्वबुद्धिः कारणमेव। तदशक्तत्वादर्थधीरपि न स्यादेवेति सुतरां विषयान्तरसञ्चाराभावः। आलयविज्ञानम्। यस्य तर्हि। आलयविज्ञानं सकलप्रवृत्तिविज्ञानजनकम् (।) तस्य पूर्व्वविज्ञानकारणत्वं नास्ति (।) तत एव सकृदालयविज्ञानात् प्रवृत्तिविज्ञानोदयात्। ततोस्माकमपि न तत्कारणं।) पूर्व्वप्रवृत्तिविज्ञानकारणत्वे तु तदन्वयव्यतिरेकानुविधायि कार्यमिति न स्यादालयविज्ञानस्य कारणत्वं। अत्रोच्यते।

सकृद्विजातीयजातावप्येकेन पटीयसा।
चित्तेनाहितवैगुण्यादालयाज्ञान्यसम्भवः ॥५२२॥

यस्याप्यालयविज्ञानं कारणन्तस्यापि। यतः। कदाचित् सकृद्विजातीयविज्ञानोदयेपि पुनरालयाज्ञान्यसम्भव एकेन पटीयसा पूर्व्वकप्रवृत्तिज्ञानेनार्थान्तरासक्तिविगुणाहितवैगुण्यादतः (।) स एव तत्रापि समनन्तरप्रत्ययः। तत एव तर्हि विगुणाद्विज्ञानोदयानुदयौ किमालयविज्ञानेन। आस्तामियमालयविज्ञानचिन्ता। वासनाधारतया वा परिकल्पितन्तदिति न दोषः। यदि तु पूर्व्वविज्ञानस्य कारणता नेष्यते तदा।

नापेक्षेतान्यथा साम्यं मनोवृत्तेर्मनोन्तरं।

पूर्व्विकाया हि मनोवृत्तेर्मनोन्तरं साम्यमपेक्षेत यदि सा कारणमकारणस्यापेक्षणीयतायोगात्। तस्मादपेक्षत्वात्कारणमेवासाविति युक्तिमानेव निर्णयः।

---

[1] T.सूङर्-ग्यि बूलो नि नुस्-सद्-न। दोन्-ल ऽफो-व मि-ऽग्युर्-ते। (=पूर्वधीशक्तिनाशे हि नार्थे संक्रमणं भवेत्)

अपि च ।

**मनोज्ञानक्रमोत्पत्तिरप्यपेक्षा प्रसाधनी ॥५२३॥**

मनोविज्ञानस्य हि समनन्तरप्रत्ययमात्रमेव हेतुः । तस्याहेतुतायामहेतुकत्वात् युगपदुदयो भवेत् । तस्मात्पूर्व्वविज्ञानकारणमेवोत्तरं विज्ञानमिति पूर्व्वविज्ञानशक्त्यभावे न किञ्चिद् भवेत् ।

**एकत्वान्मनसोन्यस्मिन्सक्तस्यान्या(ऽ)गतेर्यदि ।**
**ज्ञानान्तरस्यानुदयो न कदाचित्सहोदयात् ॥५२४॥**

यद्येकत्वं मनसस्तस्य चैकत्र गतेरन्यत्रागतिरिति पूर्व्वकं विज्ञानमकारणमेव ।

तदप्ययुक्तं । यतस्तदपि मनःपूर्व्वकं विज्ञानमेव न तदपरं प्रमाणप्रसिद्धं । युगपद्विज्ञानानुदयेन हि तत्साध्यते स च पूर्व्वविज्ञानान्यासक्तिविगुणत्वादेव सहोदयश्च कदाचिदुपलब्धः ।

**समवृत्तौ च तुल्यत्वात्सर्व्वदान्यागतिर्भवेत् ।**

यस्य तु मनस एकत्वकृतो विज्ञानान्तरानुदयस्तस्य समवृत्तौ चान्यदा च सर्व्वदानुदयः । स्यात् ।

अस्माकन्तु समवृत्तावुदयोऽन्यदा चानुदय इति नहि किञ्चिद्व्याहतं ।

नन्वन्तरेण मनः कथं क्रमः । विज्ञानवैगुण्यादिति प्रतिपादितं ।

**जन्म चात्ममनोयोगमात्रजानां सकृद् भवेत् ॥५२५॥**

न हि तत्र विषयान्तरगतिरस्ति । यतः क्रमो भवेत् । सुखादिबुद्धीनामात्ममनःसंयोगमात्रत्वात् इति प्रतिपादितं ।

अथैकत्वान्मनस एकैव बुद्धिक्रिया भवेत् ।

तदसत् । यतः ।

**एकैव चेत्क्रियैकः[1] स्यात्किन्दीपोनेकदर्शनः ।**

यथैव प्रदीप एकोप्यनेकदर्शनजनकः । तथा मनोपि । तथानेकद्रष्ट्वशाद त्राप्यनेकग्राह्यवशादिति समानम् । न च मनसः कारणत्वं विज्ञानस्यैव वासनानियमात् । तथात्वं मनसस्तु नित्यत्वात् ।

**क्रमेणापि न शक्तं स्यात्पश्चादप्यविशेषतः[2] ॥५२६॥**

नहि नित्यस्य विशेषाधानं । कुतश्चिद्विशेषस्य तत्वान्यथाभ्यासयोगात् । यतः ।

तदात्मा न विशेषः स्यादन्यश्चेत्तस्य किम्भवेत् । तत्सम्बन्धेपि तस्यासौ नैव स्यादेकरूपता ॥११५२॥

**अनेन देह पुरुषावुक्तौ संस्कारतो यदि ।**
**नियमः स कुतः पश्चाद् बुद्धेश्चेदस्तु सम्मतं[2] ॥५२७॥**

---

[1] B. क्रियैकस्मात् [2] T. ऽदि-लुस् सृक्येस्-बु ब्शद्-प यिन् । गल्-ते ऽदु-ब्येद्-लस्ङेस्-न । दे-फ्यिस् गङ-लस् ब्लो-ञिद्-लस् । शे-न यिन् मोद् ऽदोद्-प ञिद् ।

अनेन देहपुरुषावुक्तौ। योपि मन्यते देहपुरुषयोरेकत्वादेकैव क्रिया। तदप्यनेनैव गतं। "किं दीपोनेकदर्शनः"।

क्रमेणापि न शक्तिरविशेषादिति। अथ विशेषः। तदा विज्ञानमेव शक्त्यतिशयसमन्वितं तत्क्रमकारणमिति वृथा देहपुरुषयोः कारणत्वोपगमः। "संस्कारतो यदि (।) नियमः स कुतः पश्चात् बुद्धेश्चेदस्तु सम्मतं।" संस्कारोपि स्थित एव। ततो न नियमः। अथ पश्चादुत्पत्तिमान् स कुतः। ज्ञानजो ज्ञानहेतुश्च संस्कार इति बुद्धेरेव संस्कारः। यद्येवं सम्मतमेवैतदस्माकं बुद्धिजनितः संस्कारो वासनापरनामा ततो नियमः पूर्व्वबुद्धेरेवान्यत्र प्रमाणाभावात्। नहि बुद्धिमन्तरेणान्या वासना नाम। अथापि स्यात् (।) ज्ञानान्तरजननमेव केवलं न ग्राह्यता तेन जनिकापि पूर्व्विका बुद्धिरग्राह्यतो विषयान्तरसञ्चारः।

तदसत्यं। यतः (।)

**न ग्राह्यतान्या जननाज्जननं ग्राह्यलक्षणं।**

ग्राह्ये हि पदार्थे ज्ञानजननमेव ग्राह्यलक्षणम्।

यतः (।)

**अग्राह्यं नहि तेजोस्ति ; न च सौक्ष्म्याद्यनंशके[1] ॥५२८॥**

नालोकः कथञ्चिद्विज्ञानं जनयत्यग्राह्यतया। ग्राह्यं हि सकलमेव दृष्टं। अथालोकः सावयवत्वात्परभागादिना जनकोपि न ग्राह्यः। नानङ्गस्य विज्ञानस्याङ्गाभावात्। आलोको हि साङ्ग इति तथा युक्तः।

**ग्राह्यताशक्तिहानिः स्यान्नान्यस्य जननात्मनः।**

तदयुक्तं। यतः

**ग्राह्यताया न खल्वन्यज्जननं ग्राह्यलक्षणे ॥५२९॥**
**साक्षान्नह्यन्यथा बुद्धेः रूपादिरुपकारकः।**

पारम्पर्येण हि ग्राह्यमप्यग्राह्यतया भवेदुपकारकं बुद्धेः। साक्षात्तु नान्यथेति जनिका ग्राह्यैव बुद्धिः।

**ग्राह्यतालक्षणादन्यस्तद्भावनियमोस्य कः ॥५३०॥**
**बुद्धेरपि तदस्तीति सापि तत्त्वे व्यवस्थितेति।**

—इति अन्तरश्लोकः।

तस्मान्नाग्राह्या बुद्धिः। यस्मात्।

**ग्राह्योपादानसंवित्ती चेतसो ग्राह्यलक्षणम् ॥५३१॥**

चेतसो हि ग्राहिणी विज्ञाने तदुपादानभावः। सम्वेदनता च ग्राह्यता नापरमत्र सूक्ष्मतादिकमिति नाग्राह्यता। यद्युपादानभाव एव ग्राह्यता स चोपादानभावः स्वबुद्धेरेव। अन्यथा परबुद्धेरपि सम्वेदनप्रसङ्गः। परचित्ताग्रहणन्त्वनुपादानभावात्। रूपस्य चाग्रहणं दूरसूक्ष्मादिभावादिन्द्रियस्य ग्राहिविज्ञानानुपादानादिति विषयविभागः। यदि तु बुद्धेरप्यग्राह्यता सापि चक्षुरादिवदेव ग्राह्या न भवेत्। अथार्थापत्त्या प्रतीयते बुद्धिस्तेन स्मरणम्।

---

[1] ०द्यनंशके—इति हे. पुस्तके।

**तदयुक्तं । सर्व्वदात्वापत्तेरसम्भवात् ।**

यदा स्तम्भघटादीनां सत्वरं गणयेदयं । प्रपञ्चमतिबाहुल्यं नार्थापत्युदयस्ततः ॥११५३॥

**नहि त्वरितं गणयतोस्यार्थापत्तेरुदयः । अथार्थापत्तिरपि तत्र व्यापारवती न व्यापाराप्रतीतेः ।**

न चार्थापत्तिसद्भावो वेद्यते व्यवहारिभिः । अर्थादर्थविदोवेयं जायेतोभयतोथवा ॥११५४॥
न तावदर्थादर्थाद्धि सर्व्वधीप्रतिपद् भवेत् । अर्थवित्तेरपि ममेत्येवं नैवार्थधीर्गति(:) ॥११५५॥
उभयस्मादपि गतिर्न्नात एव प्रसिध्यति । स्ववेदनादेव तस्मादात्मसम्वेदनस्थितिः ॥११५६॥

**अर्थादेव यदि सम्वेदनं गम्यते सम्वेदनमात्रं गम्येत नात्मसम्वेदनम् । अथार्थसम्वेदनात् ।**

**ननु तदेवार्थसम्वेदनमर्थापत्त्यावगम्यते । तत एव कथमर्थापत्तिरितरेतराश्रयदोषात् । यतो दृष्टोऽर्थोऽन्यथा नोपपद्यते इत्यदृष्टार्थपरिकल्पनमर्थापत्तिः । न चार्थसम्वेदनं दृष्टमिति कुतोर्थापत्तिः । न चोभयस्य दर्शनमत एव न ह्येकस्य दर्शनमुभयदर्शनं तस्मात्स्वसम्वेदनमेव वेदनमन्यथासिद्धेः । अतः परेण बुद्ध्यन्तरेण प्रत्यक्षात्मना वेद्यत इत्युपगतं । तत्र सकलपूर्व्वबुद्धिग्रहणे न विषयान्तरसंचारः । यद्युपादानतया बुद्धेर्व्वेदनमसूक्ष्मादितया च रूपादेः । तदा योगिनां परबुद्धिसूक्ष्मादिरूपादिवेदनं कथं । न दोष एष । यतः ।**

**रूपादेः चेतसश्चैवमविशुद्धधियं प्रति ।**
**ग्राह्यलक्षणचिन्तेयमचिन्त्या योगिनाङ्गतिः ॥५३०॥**

**दूरसूक्ष्मादिपरचित्तवेदनं हि कथं योगिनामिति न चिन्त्यत एवेदानीमेतत् । अर्व्वाग्दर्शनापेक्षया ग्राह्यलक्षणमिदमुक्तमस्माभिः । परिशुद्धबुद्धिसन्ततयस्तु योगीश्वराः कथमिति किमनेन चिन्तितेनेत्यास्तामेतत् । यथा चेदन्तथा चिन्तितमेव लेशतः । नन्वात्मीया बुद्धिर्यदि गृह्यते सर्वं गृह्येतेति कुत एतत् । न गृह्यत इति तु विषयान्तरसञ्चारादेव गम्यते । तदपि न युक्तिमत् । यतः ।**

**तत्र सूक्ष्मादिभावेन ग्राह्यमग्राह्यतां व्रजेत् ।**
**रूपादिबुद्धेः किं जातं पश्चाद्यत् प्राङ् न विद्यते ॥५३३॥**

**न खलु तस्याः सूक्ष्मदूरादिभावो यः प्राङ नासीत् । असम्भवेपि विशेषस्य यदि ग्रहणविभागस्य तर्हि न सहेतुक इति न विभागवान्भवेत् ।**

**सति स्वधीग्रहे तस्मात् यैवानन्तरहेतुता[१] ।**
**चेतसो ग्राह्यता सैव ततो नार्थान्तरे गतिः ॥५३४॥**

**—इति (अन्तरश्लोकः)**

## ( ६ ) हेतुसामग्रीवादः

**ननु हेतुतैव ग्राह्यतेति न युक्तमेतत् अनेकशक्तित्वाद् भावानां । ततोन्या ग्राह्यशक्तिर्यापगता विषयान्तरसंचारकालेऽअन्या च जननमात्रशक्तिर्यत्प्रभावादुत्तरज्ञानोदयोर्थविषयः ।**

---

[१] M. सैवानन्तर०

अनेकशक्तिता च भावानामनेककार्यजननादेवावधार्यते । अन्यथा नानेककार्यप्रसवः(।) तदपि यत् किञ्चिद्यतः ।

नानैकशक्त्यभावेऽपि भावो नानैककार्यकृत् ।
प्रकृत्यैवेति गदितं;

प्रकृतिरेषा भावानां कारणपराधीनजन्मनां पर्यनुयोगमर्हति (।) कथमेतदिति । स्वकारणादुदयमासादयतां प्रतिनियमेन कस्तस्य निषेद्धा । अन्यथा सापि शक्तिरीदृशी कुतः(।) इति न पर्यनुयोगान्मुक्तिः । स्वकारणाच्चेत् तत्किमिदानीमनया प्रकृत्यैव परिसमाप्तिरस्तु किमर्थान्तरकल्पनया । ननु स्वकारणाधीना शक्तिरियमिति लोकस्य प्रतीतिः । अस्तीयं प्रतीतिर्न्न व्यतिरिक्तशक्तिप्रतीतिः । स्वभावभूतधर्मभेदारोपमात्रेण प्रतीतेः । कथमेतदिति चेत् । शक्तावप्यपरशक्तिप्रत्ययदर्शनात् । तथा हि ।

शक्तियोगात्पदार्थश्चेत् कारणं कार्यजन्मनि ।

शक्तेरपि कुतः शक्तिरिति किन्न विकल्प्यते ॥११५७॥

तस्मात्कल्पनामात्रमेव शक्तिरन्यापोहेन व्यवस्थाप्यमानत्वात् ।

ननु शक्तिमन्तरेण नानाभूता भावा एकतः कथम्भवन्ति । शक्तिभेदे सति भवन्तीति युक्तं । अत्राह ।

नानैकस्मान्न चेद्भवेत् ॥५३५॥

न किञ्चिदेकमेकस्मात्सामग्र्याः कार्यसम्भवः[1] ।
एकं स्यादपि सामग्र्योरित्युक्तं तदनेककृत् ॥५३६॥

सामग्रीसम्भवे हि प्रायशः कार्याणां सम्भवः किञ्चिदेकमेकस्मादुत्पत्तिमत् । तथानेकमनेकस्मादनेकञ्चैकस्मात् । यादृश्येव यस्य सामग्री तत एव तदेकमनेकम्वा भवेत् । एष प्रायशः प्रपञ्चः । तथाहि । स्वकारणादेवम्भूतमनेकमेकम्वा भवति । येनैकमनेकम्वा कार्यं जनयति । न शक्तिभेदः क्वचिदुपयुज्यते । शक्तयोपि तत उपकारभागिन्यः तस्य ता इति व्यपदेशवत्यः । न ह्यन्यथा शक्तयः । पदार्थान्तरभूता हि तदाभाः स्युः । पदार्थान्तरत्वे च तथा दर्शनप्रसङ्गः । अथवा न किञ्चिदस्ति यदेकमेकस्मात्सामग्र्या एवानेककार्योदयः । कथन्तर्ह्यनेकमेकस्मादित्युच्यते । सामग्रीद्वयान्तर्भूतमेकमनेकं कार्यं जनयतीति तथा व्यपदेशः । यदा प्रदीप एक एवानेकस्य दर्शनस्य जनकः । अनेकपुरुषानेकसमनन्तरसामग्रीसङ्गतत्वात् । यथा चैकस्यानेकशक्तियोगस्तथानेककार्ययोगोपि तस्मादनेककार्यत्वमनेकशक्तितान्विनापि । एवन्तर्हि यथैकमनेककार्यं तथैकापि बुद्धिः स्वविषयां च बुद्धिं परार्थविषयाञ्च जनयिष्यति (।) तत्र कदाचिद्बुद्धिविषया बुद्धिः कदाचिदर्थविषयेति विषयान्तरसंचारः । न विशेषाभावादुभयं सर्व्वदा जनयेत् । जन(य)त्येवेति चेत् । तन्न यतः । तदा ।

अर्थे पूर्व्वञ्च विज्ञानं गृह्णीयाद्यदि धीः परा ।
पूर्व्वापरार्थभासित्वाच्चिन्तादावेकचेतसि ॥५३७॥

---

[1] M. सर्वसम्भवः

**अभिलापद्वयं नेष्टं स्याद् दृष्टक्रममक्रमं[1]।**
**द्विर्द्विरेकश्च भासेत भासनादात्मतद्विदोः[2] ॥५३८॥**

**यदि वा द्वयं पूर्व्वबुद्धिग्राहि रूपाद्यर्थग्राहि चोत्पत्तिमत्तदा पूर्व्वबुद्ध्यर्थस्य परस्य चार्थस्य प्रतिभासनादभिलापद्वयं यत् क्रमवदुपलभ्यते तदक्रमं प्रतिभासेत् । नहि बुद्धिरर्थग्रहण-रूपतां विना प्रतिभासते । तद्रूपत्वात्तस्याः । अर्थग्रहणप्रतिभासे चार्थ एव प्रतिभासित इति पूर्व्वापराभिलापद्वयं प्रतिभासेत । तथैकमेव द्विद्विरवभासेत । अर्थस्यात्मनस्तद्बुद्धेश्च प्रतिभासनात् । पूर्व्वन्तावत्स्वयं प्रतिभाति पश्चात्तद्बुद्धिप्रतिभासने ततो द्विप्रतिभासनं । अथार्थप्रतिभासानन्तरं बुद्धिर्न्न गृह्यते । न बुद्धिः प्रत्यक्षेण स्वेन परेण वा गृह्यते । अर्थापत्त्यापि तर्हि यदि प्रतिभासते । तदापि भासनमात्मतद्विदोरिति स एव प्रसङ्गः । अथ कालान्तरेर्थापत्तिर्न्न हि तत्सन्तताने‌कार्थग्रहणक्रमकाले कश्चिदर्थापत्तिमनुभवति ।**

**नैतदस्ति ।**

सामर्थ्यात्प्रतिपत्तिश्चेत्सर्व्वदा स्यान्न वान्यदा ।
ततोर्थापत्तिसम्वित्तौ शतकृत्वो हि भासनं ॥११५८॥

**अथ यदा स्वबुद्धीः संकलयति तदा कालान्तरेऽर्थापत्त्युदयः ।**

तदापि न तदा किञ्चित् दृष्टमस्ति यतो भवेत् । अर्थापत्तिरतीतत्वादर्थापत्तिकृतस्तदा ॥११५९॥

**अतीतमर्थदर्शनं कथं ततोऽर्थापत्तिसम्भवः । कालान्तरेपि स्मर्यमाणादर्थापत्तिरिति चेत् । स्मरणस्यैवार्थापत्त्यावगमो नानुभवस्य । तत्रापि स्यादभिलापद्वयम् त्रिरवभासनञ्च । अथाननुभूतं न स्मर्यते ततोनुभवगतिरिति चेत् । तन्न ।**

अनुभूतं मयेत्येव स्मरणस्य प्रवर्त्तने । बुद्धिरासीन्ममेत्येवमर्थापत्तेरसम्भवः ॥११६०॥

**यदा स्मरामि पूर्व्वसम्वेदनस्येति स्मरणमेव प्रथमम्बुद्धौ प्रवर्त्तते । तदा न पूर्व्वमर्थापत्तिर्न्नापि पश्चाद्भिति कुतः स्मरणसम्भवः । यदाप्यर्थस्य स्मरणं तदापि स्मरणस्यानुभवस्य चानुमानमिति स्मरणानुभवार्थाकारयोर्युगपत्प्रतिभासप्रसङ्गः । तथा च स्मरणकालेपि स्पष्टार्थाकारवेदनप्रसङ्गः । अथास्पष्टाकारद्वयवेदनं तदपि न दृष्टमेवेत्यपरिहारः । अथ यस्य यदेष्यते तदा तस्यार्थापत्तिर्यतः स्मरामि ततोनुभूतं यतः स्मरणं ततोनुभव इति वा । एवन्तर्हि यतोनुभवस्ततोनुभव इति स्यात् वाच्यो युक्तिः । तथा यतः स्मरणन्ततः स्मरणमिति महत्प्रमाणकौशलं । इच्छा वानुभूते जायते । न चानुभवः कदाचिदनुभूत इति कथमिच्छयार्थापत्तिरुदियात् । तस्मादसदेव बुद्ध्यन्तरेण बुद्धिवेदनम् ।**

**अथ (।)**

**विषयान्तरसञ्चारे यद्यन्त्यं नानुभूयते ।**
**परानुभूतिवत्सर्व्वाननुभूतिः प्रसज्यते ॥५३९॥**

**विषयान्तरसञ्चरणकाले हि यद्यन्त्यं विषयान्तरसंचारकालात्पूर्व्वविज्ञानं विज्ञान-प्रबन्धस्य । तदा सर्वाननुभूतिः परानुभूतवद् भवेत् । अननुभूतानुभवस्यानुभूतत्वाभावात्प-**

---

[1] M. पूर्वं० अभिलाप० इति श्लोकार्धयोःस्थानब्यत्ययः [2] M. ०तद्वियोः

रानुभूतवत् । ततोऽन्यानानुभवात्तत्पूर्व्वकाननुभूतिर्यावदादिभतस्यापि यथा परानुभवेपि तदनुभवस्यान्येना(न)नुभूतत्वादन्येनाननुभवः तथा स्वयमनुभूतेपि तत्त् पुनरर्थस्य स्वरूपं परापेक्षयापि तथेति कथमनुभवः ।

ननु परानुभवे स्वयमननुभवात्परस्यानुभवो यथा व्यवस्थाप्यते तथा परेणाननुभवे स्वस्यानुभव इति व्यवस्थाप्यतां ।

तदसत् । व्यवस्थाप्यता यदि प्रमाणमस्ति । यथा तु परेणानुभूतं नात्मप्रत्यक्षं न च परस्येति व्यवस्थापयितुं शक्यम् । तथात्मप्रत्यक्षाभिमतमपि नात्मनः परस्येति वा व्यवस्थापनामर्हति ।

नन्वर्थः स्वरूपेण प्रतीयते तत्कथमप्रत्यक्षता । नह्यन्यस्मिन्नप्रतीयमानेऽन्यदप्रतीतं नाम ।

सत्यं प्रतीयते । स्वयमेव प्रतीयतां । आत्मना प्रतीयते सोपि स्वयमेव प्रतीयतां । ततः स्वसम्वेदनमेव । अथात्मा कर्तृतया प्रतीयते (।) न (।) शरीरव्यतिरेकेणात्माभावात् । शरीरस्य कर्तृता चेत् । न । शरीरस्यापि कर्मत्वात् । यस्मादसत्स्वसम्वेदनं शरीरादीनां । स्वसम्वेदनत्वे वाऽविवाद एव । बुद्धेरसम्वेदनमिति चेत् । आत्मनः स्वसम्वेदने तेनार्थानुभवे तावता पर्याप्तमिति व्यर्थिका बुद्धिः । तत एवाह ।

> अत्मानुभूतं प्रत्यक्षं नानुभूतं परैर्यदि ।
> आत्मानुभूतिः सा सिद्धा कुतो येनैवमुच्यते ॥ ५४० ॥

आत्मनोनुभूतिरस्तीति कुतः । अन्येनानभूतौ परात्मासौ न भवतीति कुतः । स्वसम्वेदनेनानुभवे स्वसम्वेदनसिद्धिरेवेत्यविवाद एव । तस्मादस्वसम्वेदने सर्व्वाननुभूतिप्रसङ्गः ।

ननु चक्षुरादिकेनाननुभूतेपि चक्षुरादिनानुभूतमिति भवति व्यवहारः । तथात्मसम्वेदनाननुभवेपि किन्नेष्यते ।

अत्रोच्यते ।

> व्यक्तिहेत्वप्रसिद्धिः स्यान्न व्यक्तेर्व्यक्ति[1]मिच्छतः ।
> व्यक्त्यसिद्धावपि व्यक्तं यदि व्यक्तमिदं जगत् ॥५४१॥

व्यक्तिहेतवो हि चक्षुरादयस्तेषामसिद्धावपि नाव्यक्ततार्थस्य व्यक्तिव्यक्तत्वात् । अस्मच्चक्षुर्व्यक्तमिति कथमस्मत्सम्वेदनजनकत्वादस्मच्चक्षुरिति व्यपदेशः । सम्वेदनस्य तु स्वसम्वेदनादेवास्मत्त्वं । तस्यापि सम्वेदनस्यास्वसम्वेदनेनात्मसम्बन्धित्वेन किञ्चित्प्रतिपन्नमिति स्वरूपमात्रेण व्यक्तत्वे सकलं व्यक्तं जगज्जायेतेत्यतिप्रसंगः ।

ननु यत्र व्यक्तिरुत्पन्ना तद्व्यक्तमिति कथमतिप्रसङ्गः ।

व्यक्तेरुदयमात्रेण व्यक्तं यदि तदाखिलं(।)अस्य व्यक्तिरितीदन्तु न सम्बन्धविनाकृतं ॥११६१॥
तस्मात्स्वरूपमात्रेण सर्व्वस्य व्यक्तता भवेत् । अथ तद्रूप एवार्थः स्वसम्वेदनमुच्यतां ॥११६२॥

(इति) प्रमाणवर्तिकालङ्कारे प्रत्यक्षपरिच्छेदो द्वितीयः[2] ॥२॥

---

[1] B व्यक्त [2] T. प्रमाणवार्तिकभाष्ये प्रत्यक्षपरिच्छेदः तृतीयः ।

# ३. परार्थानुमानपरिच्छेदः

## §१. दिग्नागीयं परार्थानुमान-लक्षणम्

### १. स्वदृष्टग्रहणफलम्

स्वार्थनमानानन्तरं परार्थानुमानमुच्यते। स्वार्थानुमानपूर्व्वकत्वात्परार्थानुमानस्य। तत्र परार्थानुमानन्तु स्वदृष्टार्थप्रकाशनम्। स्वेन दृष्टं स्वदृष्टम्वादिप्रतिवादिभ्यां प्रतिपाद्य प्रतिपादकाभ्यां स्वदृष्टस्येत्यर्थः। यदि प्राश्निकास्तेषामपि तेषामधिकारात्। विप्रतिपत्ति-निरासस्तु सामर्थ्यादेव प्रसिद्धः। प्रकाश्यतेऽनेन स्वप्रतीतोर्थः परं प्रति। तच्च कायवाग्वि-ज्ञप्तिरूपं। तत्र स्वदृष्टोऽर्थस्त्रिरूपं लिङ्गम्।

ननु त्रिरूपं लिङ्गमिति च कुतः। स्वदृष्टार्थग्रहणस्य सर्व्वार्थप्रतिपादनसम्भवात्। ततोनुमेयस्य परोक्षरूपस्य सकलस्य प्रकाशनं परं प्रत्यनुमानं परार्थमिति प्राप्तम्।

अत्रोच्यते।

त्रिरूपं लिङ्गमुत्सृज्य नान्यस्यास्ति प्रकाशनं। न शक्यं प्रतिपत्तु तदन्येनेत्यप्रकाशनम् ॥१॥

प्रकाशितो ह्यसावुच्यते यत्र परस्य संप्रतिपत्तिः। अत एव प्रकर्षाभिधायी प्रशब्दः। प्रमाणप्रतिपन्ने च परस्य संप्रतिपत्तिः। यदि चानुमेयमपि प्रमाणप्रतिपन्नं तदाऽविवाद[1] एव त्रिरूपलिङ्गं प्रकाशनद्वारेण तु विवादास्पदीभूतानुमेयप्रतिपत्तिरिति न वचनस्य व्यर्थता। ततोनुमानमुदेतीति तदप्यनुमानमुपचारात्। यद्यनुमानोत्पादनाद्वचनमनुमानं प्रत्यक्षोत्पादना-त्प्रत्यक्षमपि परार्थं[2] भवेत्। नेदं चतुरस्रं।

यथा गृहीतसम्बन्धस्मरणे वचनात्सति। अनुमानोदयस्तद्वन्न प्रत्यक्षोदयः क्वचित् ॥२॥
त्रिरूपलिङ्गस्मरणे नियमेनानुमोदयः। स्वप्रतीतार्थमात्रस्य वचनेध्यक्षविन्न तु ॥३॥

न वचनमात्रादध्यक्षं परस्योदेति।

ननु पश्य मृगो धावतीति दृश्यते दर्शनोदयः। न। तत्राप्यनुमानस्यानन्तरत्वात्। तथा हि(।)

तदर्थोन्मुखतायां स पश्येत्येवं नियुज्यते। मया प्रतीति(?त)मेतच्च सामर्थ्यात्प्रतिपादितं ॥४॥

अभिमुखीभव मृगदर्शन इति नियोगवचनमेतत्। अभिमुखीभावश्च यथा मम तथा तवापि। तत एवमभिमुखीभवने हेतूनां व्यापार इति स्मरन् प्रवर्तत इत्यनुमानमेव। ततो-नुमानात्प्रत्यक्षसम्भवमालोच्य प्रवर्त्तते। एवन्तर्हि प्रत्यक्षविषये प्रवर्तते सम्भवानुमानं स्वभाव-हेतुः। कार्यहेतुर्न वचनात्प्रकाशते[3] साक्षात्(।)तथाहि।

धूमादत्राग्निरस्तीति वचनेन प्रकाश्यते। प्रतिबन्धमात्रं धूमस्तु प्रत्यक्षेण प्रकाशितः ॥५॥

---

[1] B. तदविवाद। [2] B. वचनमपि परार्थम्प्रत्यक्ष०। [3] B. प्रकाश्यते

ततः त्रिरूपलिङ्गाख्यानं परार्थानुमानमिति **प्रमाणसमुच्चयवृत्तिर्व्विरुध्यते।** नेदमुपपन्नं। यतः(।)

स्मरणार्थं वचः सर्व्वं ततः तत्र प्रमाभिधा। प्रत्यक्षेण प्रतीते तु व्यर्थता वचसः सदा ॥६॥

उक्तमेतद् (।)

"विदुषां वाच्यो हेतुरेव हि केवलः।"

तथा प्रतिबन्धोपि केवल इत्यपि द्रष्टव्यम्। अथवा तत्रापि भ्रान्तिव्युदासार्थं धूमोयमिति परवचनमपेक्ष्यत[1] एव। तथाहि(।)

ममायं निश्चयाद्धूमः प्रतिपत्तिमिहागतः। कस्माद् भ्रान्तिस्तवात्रापि परेणैवं प्रबोध्यते ॥७॥

अयमर्थो वचसः। न तत्र प्रत्यक्ष दृष्टोर्थोऽन्यस्मै वचनेन ख्याप्यतेऽपि[2] त्वनुमानमेव तत्परार्थं तत्कारणत्वात्[3]। धूम एवायन्नान्यथा द्रष्टव्यं यः प्राग् धूम उपलब्धस्ततोन्यथा न भवत्ययं। सामर्थ्यादिदमुक्तम्भवति तल्लक्षणत्वात्। तस्मादनुमानवृत्तमेवे शब्देन ख्याप्यते। न कदाचित् प्रत्यक्षे शब्दस्य व्यापारः। अत्यन्ताभ्यासात्तु नानुमानप्रपञ्चनमिति लोकस्यान्यथा प्रतिभाति। तस्माद्वचनमनुमानकारणतामेव स्वीकर्त्तुमलं। स्वभावानुमानमेव तर्हि वचनं। तत्कारणत्वान्न कारणानुमानमत्र धूम इति। स्वभावानुमानत्वाद्वचनस्य।

तदसत्। स्वार्थानुमानेपि हि धूमरूपे स्वभावहेतुः प्रती[4]तोऽन्तराले। तत्रापि न भ्रान्तिनिवृत्तिरस्ति स्वभावहेतोर्व्विरहाद्विवेक्तुः। अत्राह।

विरोधः क इवात्रास्ति कार्यहेतुर्न हीयते। व्यवधानेपि नैवासौ विजह्यात्कार्यहेतुताम्[5] ॥८॥

स्वार्थानुमाने कार्यहेतुरस्त्येवेति एतावति विवक्षिते व्यवधानोपदर्शनं क्वोपयोगि। परार्थानुमाने तु कार्यहेतुरेव न सम्भवति। साक्षात्स्वभावहेतौ धूमादिवचनस्य व्यापारात्। ततोस्त्यनुमानेन परार्थमनुमानं।

नैतदस्ति।

यथासम्भवमाश्रित्य परार्थस्यानुमानता। उक्ता शास्त्रकृता सा तु मा भूदन्यत्र का क्षतिः ॥९॥

अथवा यत्र भ्रान्तिर्न्नास्ति तत्र स्वार्थानुमानेऽव्यवहित एव कार्यहेतुः। परार्थानुमानेपि सैव गतिरिति साक्षादेवास्त्यनुमानस्य शब्दादुदयः। भ्रान्त्या विना किं वचनेनेति चेति। प्रतिबन्धप्रदर्शनायेति न दोषः। त्रिरूपलिङ्गाख्यानन्तु यथासम्भवमिति संप्रत्येवोक्तं। किञ्च।

वचसो न प्रमाणत्वमनुमा त्वविनाकृतं। एतावदेवाभिप्रेतं न तु सर्व्वं वचस्तथा ॥१०॥

य आह। कथं प्रत्यक्षानुमानयोरेव प्रामाण्यम्वचनस्यापि व्यवहारहेतुत्वान्न वचनमन्तरेण परिपूर्णो लोकव्यवहारः।

---

[1] B. पेक्षत। [2] B. स्वभावानुमानकारणत्वात्—बहिः [3] B. द्रष्टव्यः।
[4] B. पतितो [5] B. बहिः—बौद्धशंकिते प्रथमपादद्वयेन द्वितीयाभ्यां सिद्धान्तयति। एतेन स्वर्थानुमानं समर्थितं।

अत्रोच्यते ।

प्रत्यक्षमनुमानञ्च वचनञ्च विना न किं । व्यवहारोस्ति लोकस्य किन्तस्यास्ति प्रमाणता ॥११॥

परिदृष्टपूर्व्वमर्थं स्मृत्वापि प्रत्यक्षादिकमन्तरेण किन्न प्रवर्तते । किमिदानीं स्मरणमपि प्रमाणं । अथ तदप्रमाणमेव । वचनमपि तथार्थं न प्रमाणमिति समानं । यत्र तु प्रमाणन्तत्रानुमानकारणत्वेनैव नान्यथा । एतावन्मात्रमत्र विवक्षितं न तु सर्व्वं वचनं सर्व्वानुमानकारणं वचनस्यानुमानत्वमेव न स्वातन्त्र्येण प्रमाणत्वं । सर्व्वानुमानत्वप्रदिपादनन्तु नोपयोगि । तस्मात् त्रिरूपलिङ्गाख्यानमेव वचनं ।

वेदवचनस्य तर्हि कथं प्रमाणता । तत्रापि प्रत्यक्षानुमानार्थकथनादेव प्रमाणता । द्वादश मासा इत्यादौ । अन्यत्राप्रमाणतैव यथा पुरुषवचसि । अपौरुषेयत्वादेव प्रमाणतेति चेत् । न (।) अप्रत्ययत्वात् । न हि वचनमात्रात्कस्यचित् संप्रत्ययः । यदि प्रत्यक्षवद्वेदः किं न सर्व्वः प्रत्येति । क्षणिकत्वाद्यनुमानादपि न सर्व्वः प्रत्येति । भ्रान्त्या चेत् । अत्रापि भ्रान्तिः । तज्जातीयानुमानेन सप्रत्ययस्थानेन निवर्त्यतेऽनुमाने । वेदे तु न तज्जातीयवचनत्वेनेत्यसमानमेतत्

अन्वयप्रतिबद्धत्वेऽनुमानस्य प्रमाणता । वेदे तु नान्वयो दृष्ट इति पूर्व्व विचारितं ॥१२॥

अथवा । अयमर्थः । वचनं त्रिरूपलिङ्गाख्यानरूपमेव परार्थानुमानं । न वेदवचनं । तस्य त्रैरूप्याभावात् । तस्य हि सत्यत्वान्वयो न दृष्टो न पक्षधर्मत्वं । तथा हि । अपौरुषेयत्वेनासत्यत्वाद् व्याख्या(?) तं[1] सत्यत्वेन तु नास्त्यन्वयः । अथ द्वादश मासा इत्यन्वयः । अत्रोच्यते ।

अग्निहोत्रादिवाक्यस्य न वेदत्वं विनिश्चितं । पौरुषेयत्वमप्यस्य सम्भवेत्केनचित् कृतेः ॥१३॥

कदाचिदपौरुषेयमध्ये केनचिदेतत् पातितं भवेत् । श्रूयते च क्वचिच्छाखान्तरे कृतत्वं । स्मरणे सति तथा व्यवहार इति चेत् । न (।) अप्रत्ययत्वात् । अन्यत्रापि प्रसङ्गात् । एतच्च सकलं प्रतिपादितमेव प्रागिति न प्रपञ्चितमिहेत्यास्तां ।

यदि त्रिरूपं लिङ्गमेव स्वदृष्टशब्देनोच्यते । त्रिरूपलिङ्गाख्यानं परार्थमनुमानमिति वक्तव्यं । किं स्वदृष्टार्थग्रहणेन । नान्यार्थत्वात् । तथा हि ।

**परस्य प्रतिपाद्यत्वाद्दृष्टोपि स्वयं परैः ।**
**दृष्टः साधनमित्येके तत् क्षेपायात्मदृग्वचः ॥१॥**

नहि परार्थानुमाने स्वप्रतिपत्यधिकारः(।)परस्यैव प्रतिपाद्यत्वात् । परस्य चेत्तत्प्रसिद्धं लिङ्गं परः प्रतिपद्यत एव । वादिप्रतिपत्त्या विना कथं परः प्रतिपत्तिमानिति न वाच्यं ।

न वादिप्रतिपत्तावप्यपरः प्रतिपद्यते । स्वप्रतीतिम्विना सा चेत् सैवास्त्वत्रापरेण किं ॥१४॥

न तावदसौ वादिनोऽत्र प्रतिपत्तिरिति संप्रत्येति । अपि तु मया एवमेव प्रतिपन्नमिति स्वप्रत्ययात् । अनेन तु ज्ञात्वा प्रकाशितमन्यथा वेति किमनेन विचारेणातिरिच्यमानप्रपञ्चेन । अतोभिप्रायात् स्वयमप्रतीतमपि परैः प्रतीतमिष्यते लिङ्गम् । तस्याभिप्रायस्य प्रतिक्षेपार्थं

---

[1] B. व्यावृत्तं

स्वदृष्टवचनं। यद्येवं स्वेनैव दृष्टमिति परदृष्टव्यवच्छेदादनर्थान्तरमापतितं। न(।) उभयदृष्ट-प्रतिपादनार्थत्वात्। यथावस्थितलक्षणमेतत्। तेन च विप्रतिपत्तिरपि निराकृता। अत[1]दर्थमेवेति स्यात् न(।) यदर्थश्चायमारम्भः स च शब्दसमुच्चित इति युक्तं। न हि स्वयमप्रतीतं परस्य प्रतीतमिति शक्यं वक्तुं।

## २. अनुमाने नागमप्रामाण्यम्

ननु परस्य प्रतीतं तदस्तु। परेण तु प्रतिपन्नमिति परिज्ञानं नोपयोगि। स्वप्रतीतिमात्रकेण परस्य परिसमाप्तार्थत्वात्। कथन्तर्हि स्वयमज्ञातस्योपन्यासः। परप्रसिद्ध्या चेत्। परस्य प्रसिद्धमिति तदेतद्दुर्घयातं। ततः स्वयमप्रतीतेः कथमेतत्। नहि परस्य प्रतीतिमर्व्वाग्दर्शी प्रत्यक्षयति। अनुमानमपि स्वप्रतीतिमपेक्षते। तेन परप्रतीतमिति निश्चितं स्वप्रतीतमपि। अथागमात्परेण प्रतिपन्नं स्वयमपि तत् प्रतिपन्नमेव। किन्तु तस्यागमस्य वादिनाऽनभ्युपगमान्न स्वप्रतिपन्नमिति व्यपदेशः। तेनागमात् (यत्)परेण प्रतिपन्नं न स्वयन्तदपि साधनमेव। अत्रोच्यते।

अनुमाविषये नेष्टं परीक्षितपरिग्रहात्।<br>वाचः प्रामाण्यमस्मिन् हि नानुमानं प्रवर्त्तते ॥२॥

स आगमः प्रमाणमप्रमाणम्वा। प्रमाणञ्चेदुभयसिद्धत्वं। अन्यप्रमाणदृष्टवत्। अप्रमाणत्वे न कस्य चिदपि। अभ्युपगमात्परस्यैव सिद्धमिति चेत्। न (।)अनुमानविषयेऽभ्युपगमेनागमः प्रमाणम्। परीक्षितस्याभ्युपगमात्। प्रत्यक्षानुमानाविषये च प्रमाणं न तद्विषये। सर्वत्र प्रामाण्ये किमनुमानेन वचनमात्रेणार्थसिद्धेः। तथा हि। अचेतना(:) सुखादय उत्पत्तेरनित्यत्वाद्वा रूपादिवदिति सांख्यस्य परप्रसिद्धमभिमतं। न स्वयं सांख्यस्य उत्पत्तिमत्त्वमनित्यत्वम्वा प्रसिद्धं। तत्र च यदि वचनप्रामाण्यात्प्रसिद्धिः सांख्यवचनमपि प्रमाणमेवेति तत एवाचेतनत्वं बुद्धिसुखादीनां प्रसिद्धं किमनुमानेन। अथानित्यत्वादिसाधनं बौद्धं वचस्तदा तेन बुद्ध्यादेः सचेतनत्वं सिद्धमिति नानुमानेन विपर्ययप्रसिद्धिरिति व्यर्थकमेवानुमानं।

अथानुमानस्यापि प्रामाण्यात्तद्विपर्ययस्य सिद्धिस्तथा सति न प्रमाणमित्याह।

बाधनायागमस्योक्तेः साधनस्य परं प्रति।<br>सोऽप्रमाणन्तदा(ऽ)सिद्धं तत्सिद्धमखिलन्ततः ॥३॥

यदैवानुमानेन विपर्ययसाधनारम्भस्तदा तद्वचनमप्रमाणमेव। परीक्षाक्षमत्वात्। अभ्युपगमस्य (अपि) शिथिलीभावात्। अभ्युगमकृतप्रमाणभावे हि स आगमस्तस्य शैथिल्ये तस्य प्रामाण्यमपि तथा भवेत्। ततस्तत्प्रसिद्धहेतुशैथिल्यात्साध्यसिद्धेरपि शैथिल्यं। न खलु तदधीनसर्व्वात्मकं तन्नानुवर्त्ततेऽतदधीनत्वप्रसङ्गात्। हेतुसिद्धौ प्रमाणं न चेतनत्वस्येति चेत्। न (।) क्वचिद् व्यभिचारदर्शनेन सर्व्वत्रानाश्वासप्रसङ्गात्।

---

[1] B अथ त०।

**अथ प्रमाणसम्वादी स वचनैकदेशस्तदा तर्हि स हेतुरुभयवादिप्रसिद्धिमध्यासीत् । अथ प्रमाणप्रसिद्धमपि प्रमाणवृत्तानभिज्ञत्वात्परप्रसिद्धमेव सांख्यस्य ।**

**तदप्ययुक्तं । एवं हि स सांख्यः स्वकौपीनमेव विवृणुयात् तथापि को दोषः ।**

स्वसिद्धेन हि लिङ्गेन तेनासौ प्रतिपादितः । नान्यत्राज्ञानमात्रेण सर्वत्राज्ञानमर्हति ॥१५॥

**नहि हेतुं साधयितुमशक्त इति साध्यसाधनेपि तस्याशक्तिः । न तावत्तद्धेतोः(स्व)-प्रतिपन्नसाध्यः स्वसिद्धहेतुसद्भावात् । अथासौ निर्मुखयितुं शक्य इति प्रौढवादी ।**

**तदप्ययुक्तं । सिद्धो हि हेतुः साध्यं साधयितुं किमपरेण(।) तथाहि ।**

तवतावत्प्रसिद्धोयमस्मत्सिद्धया तु को गुणः । सर्व्वो मयैव व्यापारः कर्त्तव्य इति को विधिः ॥१६॥

**साध्यवद्धेतुरपि मयैव साधयितव्य इति किमियं राजाज्ञा । नहि सर्व्वाज्ञः प्रतिपादयितुं शक्यः । अथ स्वनिश्चयवदन्येषां निश्चयोत्पादनेच्छया साधनमुच्यत इति न्यायावयुक्तमेतत् ।**

**तदपि न सम्यक् । तथा हि ।**

निश्चयोत्पादमात्रेण परस्यात्र प्रयोजनं । स्वनिश्चयवदित्येतद्विशेषणमनर्थक ॥१७॥

**निश्चयमात्रेण हि परस्यार्थिता न तु तत्रापरेणानुपयोगिना विशेषणेन । न ह्यनुपयोगि विशेषणं प्रेक्षावताभ्युपगम्यते ।**

**अत्रोच्यते ।**

प्रतिपत्तिं न जानाति यः परस्य विवेकतः । प्रतिपन्नमनेनेति कथमस्य मतिर्भवेत् ॥१८॥

**न मयायम्वञ्चितः संप्रतिपत्तिरेवास्येति स्वयमप्रतियतः कथं प्रतीतिः । अथापि स्यात् (।) किमनेन प्रतिपत्तिमात्रकं परस्य भवतु तावता चरितार्थं वादिवचनमिति क इवात्र दोषः । एवन्तर्हि इदमपि भवेदुत्तरं ।**

विप्रलभ्यापि यत्किञ्चिन्मया त्वं प्रतिबोधितः । मम प्रतीत्या भवतः किमत्रान्यत्प्रयोजनम् ॥१९॥

**यं कञ्चित्साधनाभासं प्रपञ्चेनाभिधाय मया त्वं प्रतिपादित इति यदा ब्रवीति तदा तस्य किमुत्तरम्वक्तव्यं । तत्र दूषणं वक्तव्यमिति चेत् । न(।)दूषणेन वादिनो प्रतिपत्तिर्व्विधातव्या । स च वादी तदेदमुत्तरं दद्यान्मम प्रतिपत्त्या किम्भवतः प्रयोजनमिति प्रमाण्येवमप्रतिपत्तिरिति चेत् ब्रूयात् । परस्मै तर्हि दूषणन्न निवेदनीयम् । अप्रतिपत्तिर्ममात्रेत्येतावदेव वक्तव्यम् । न सोपपत्तिकाऽप्रतिपत्तिरिति दर्शनार्थं दूषणमपि वक्तव्यमेव । एवन्तर्हि ।**

परेण यदि वक्तव्यं दूषणं सोपपत्तिकं । वादिनापि हि वक्तव्यं साधनं सोपपत्तिकं ॥२०॥

**यथा ममात्रैवं प्रतिपत्त्यभाव इति सोपपत्तिकं प्रतिवादिना कथयितव्यं । तथा वादिनापि सोपपत्तिकं साधनमन्यथा यथा ममात्राप्रतिपत्तिस्तथा परस्यापि कदाचिदिति शङ्का नापगच्छेत् । नहि परार्थवृत्तिः परार्थप्रसिद्धिनिःश्रयमकृत्वा परितोषभागी । न च विजिगीषुतामात्रेण पण्डिताः प्रवर्त्तन्ते शास्त्राणि वा तदर्थानि तत्त्वावतारार्थत्वात् । तस्मात् स्वपप्रतिपन्न एवं भवत्यनेन प्रतिपन्नमेतत् अप्रतिपन्नं[1] त्वस्यासत्यवचनमेव स्वप्रतिपत्तिमन्तरेण**

[1] B. अप्रतिपत्तिप्रतिपादनं ।

तु यदि परो नाभ्युपगच्छेत् न प्रतिपादयिता वादी स्यात्। को हि भङ्गमात्मन इच्छेत्। स्वप्रतीते तु प्रमाणेनानभ्युपगमेपि प्रतीयतेऽसत्यवादिता परस्य।

अथ स्वप्रतीतेपि परेण प्रतिपन्नमिति कथं प्रतिपत्तिः। यदि नाम प्रतिवादिनो प्रतीतिः प्राश्निकाः प्रत्येष्यन्ति। प्राश्निकैः प्रतिपन्नं तेन यदि न प्रतीयते तदा तस्य सामग्री नास्ति न वादिनो दोषः।

नान्धाय दुग्धाकथने प्रतिपादकताक्षयः। चक्षुर्न्न वादिना देयं केनचित्प्रतिवादिने ॥२१॥

सितं दुग्धमिति कथने यदि न प्रत्येति चक्षुर्वैकल्यात् प्रतिवादिन एवान्धस्य दोषः। कथमत्र दोषः प्रतिपादयितुः। प्राश्निकैः प्रतिपन्नं भवतु तावता चरितार्थम्वादिवचनम्। अथाप्युच्येत।

परार्थकारिणामेतत्करुणाकृष्टचेतसां। प्राश्निकप्रतिपन्मात्राद् दूष्यत्वं संगतं कथम् ॥२२॥

नहि स्वपरितोषमात्रकं परार्थकारिणामभिमतं (।) परव्यामोहव्यावर्त्तनं तु तेषामर्थोऽभिमतः। तत्र (प्रतिवादि) प्रतिपादनाया बद्धपरिकरः प्राश्निकमात्रप्रतिपादनेन परितुष्यतीति क्वास्थाः क्व निपतिताः। क्व प्रतिवादिप्रतिपादनायारम्भः क्वप्राश्निकमात्रप्रतिपादनेन परिसमाप्तिः। किञ्च।

तत्पक्षपातोपहतः प्राश्निको विवदेद्यदि। तत्रापि च पुनर्मृग्यं वादिना प्राश्निकान्तरम् ॥२३॥
प्राश्निकान्तरसञ्चारे प्राश्निके प्रतिवादिनि। अनवस्था ततो वादी कस्या स्यात्प्रतिपादकः॥२४॥
अथ प्राश्निकलोकस्य वादिन्यप्यनुरक्तता। तथापि पक्षपातान्न प्राश्निकत्वं परिस्फुटम् ॥२५॥

अत्रोच्यते।

परार्थकारी नामायं किमयोग्येप्यसौ तथा। अतिक्रम्य(न्) न सामर्थ्यमकृतावकृपात्मकः ॥२६॥
करुणावानपि योग्ये विधातुमर्थं विभवति[1]।

अयोग्ये हि शक्तिर्व्याघातो न करुणायाः। न ह्यसावकारुणिक इति प्रतीतिः। प्राश्निकानान्तु पक्षपातित्वे प्रतिवादितैवेत्यवश्यं प्राश्निकान्तरापेक्षणम्। न च सर्व एव विप्रवदन्ते प्रयोजनाभावात् परस्परापेक्षतो वा। अथ तेषामपि परस्परं वादिप्रतिवादिता। एवं सति सकलव्यवहारोच्छेदः। न च दृश्यते। तस्मा(त्) प्राश्निकप्रतिबोधनमेव वादपरिसमाप्तिः। इदं पुनरकृपत्वमेव यदग्रहणादिविधानेन पराजयः परेषाम्। तस्मात्स्वप्रतिपत्तिं प्राश्निकादिभ्यो निवेद्य प्रतिपादनशक्तिरात्मसात्कर्त्तव्या। तस्मादागमसिद्धमेव न। परसिद्धं।

ननु सोप्यागमो यदा परेण प्रमाण्येनाभ्युपगतः तदा तत्सिद्धपक्षधर्मतः स्वयमसौ प्रतिपद्यत एव। न बाधितैकदेशस्य तथाभ्युपगमायोगात्। अत एवाह।

**तदागमवतः सिद्धं यदि कस्य क आग(म)ः।**
**बाध्यमानः प्रमाणेन स सिद्धः कथमागमः ॥४॥**

यद्यप्रमाणमनभ्युपगतश्च परेण तदा कस्य क आगमः। यद्यनभ्युप(ग)मेपि तदागमवत्ता सा द्वयस्यापीत्युभयसिद्धिरेव। अथानभ्युपगमान्नैवं न कस्यचिदपि तदागमवत्तेति

[1] B. प्रभवति

न कस्यचित्सिद्धं । आगमोप्यसौ नैव भवति प्रमाणेन बाधनादागमाभासः स भवेत् । प्रमाणाभासतः प्रतिपत्तौ व्यामूढ एवासाविति न व्यामोहनिवर्तनं परस्य तेनेति न वादी भवेत् । प्रमाणाभासतामजानानः परो न व्यामूढः कथं । न च न जानाति । तथाहि ।

तद्विरुद्धाभ्युपगमस्तेनैव च कथम्भवेत् ।
तदन्योपगमे तस्य त्यागाङ्गस्याप्रमाणता ॥५॥

यदैवासौ तद्विरुद्धमभ्युपगच्छति तदैव तदागमस्यासत्यतामपि प्रतिबुध्यते तन्नान्तरीयकत्वाद्विरुद्धाभ्युपगमस्य । मूढत्वाददोष इति चेत् । न मूढतायामप्रतिपादकत्वमित्युक्तं । व्यामोहमाधायासावपसारित इति सिद्धं वादिनः कार्यं । न । विषादिदानस्यापि प्रसङ्गात् । वाग्मितया व्यामोहनं वादित्वमिति चेत् । न (।) परिशुद्धवस्तु परिस्फुटप्रत्यायनस्य वाग्मित्वात् । तथा हि ।

समासव्यासरूपेण प्रमोपेतस्य वस्तुनः । प्रकाशनेन वाग्मित्वमिष्यते तत्त्ववेदिभिः ॥२७॥

जिगीषुणापसारयितव्य एव यथाकथञ्चित्पर इति चेत् । न (।) यथाकथञ्चिदपसारणेनोपहासास्पदताप्राप्तेः । यदा तर्हि परिशुद्धवस्तुवचनेनापि[1] परव्यामोहस्तथा कथम्वादितोदिता । प्राश्निकप्रतिपादनेन पर्याप्तत्वात् (।) नान्धस्यादर्शने सवितुरप्रकाशकता । तथाहि ।

प्रतिपादयितुर्दोषो भवेदप्रतिपादने । योग्योपि न विजानीयाद्यद्यर्थं वचनात्ततः ॥२८॥

यदि परिस्फुटवचनादपि न प्रत्येति कास्य प्रतिवादित्वे श्रद्धा । सिद्धमात्रिकापाठकोपाध्यायशालाप्रवेश एव तस्य[2] युक्तः । अथापि स्यान्न विदग्धेष्वेवंभूत[3]साधनोपन्यासः । अविदग्धप्रतिवादिनं प्रत्युपन्यासात् । यतः सोपि दूषणमसम्बद्धमेव वद्यात् । तथा हि । मूल्ये मूल्ये तथाभूत एव पुटिकाबन्धः । तदिदं तौतोपाख्यानमायातं । ममानेन भिक्षापात्रे मद्यपानं कृतं मया त्वस्य[4] मूत्रपानं कर्तव्यम् । अपि च ।

नाचैतन्यं स्वयं सांख्यो नित्यत्वादवगच्छति । ततः स्ववित्तौ सांख्यस्य प्रमाणमपरं भवेत् ॥२९॥

नहि स्वयं साध्यं परप्रसिद्धसाधनादवगन्तुं युक्तं । ततः स्वसिद्धेन साधनेनास्य तदर्थसाधनकारिणा भाव्यं[5] । अस्त्येव तदिति चेत् । एवं तर्हि ।

तत्किन्न साधनं प्रोक्तं[6] स्वप्रतीतिर्यदुद्भवा ।

तदेव स्वप्रसिद्धिनिमित्तं साधनं किन्नोपन्यस्तम् । किमपरेणाकाशचर्वणप्रयासेन । नहि परिस्फुटस्वरूपे सम्भवति हेतौ कष्टकल्पनाप्रयासः साधीयान् । आगमात् सांख्यस्य तत्सिद्धमिति न स्वप्रतीतसाधनोपन्यासः ।

ननु स आगमः परस्यापि साधक एव । न । परं प्रत्यप्रमाणत्वात् । अप्रमाणात् स्वयमपि कथं प्रतीतिः तं प्रति प्रमाणत्वात् । यदि प्रमाणं किन्न सर्व्वस्य । अभ्युपगमा-

---

[1] B. प्रतिपादनेन ।
[2] B. विध ।
[3] B. भवितव्यं ।
[4] B. अस्य ।
[5] B. तस्या ।
[6] M. तत्कस्मात् साधनं नोक्तं

भावात्। सांख्यस्यापि कथमस्मादभ्युपगमः। तेन परीक्षितत्वात्[1]। यद्येवं परस्यापि स्यात्। यतः।

**युक्त्या यथागमो ग्राह्यो ग्राहिकास्यापि[2] सा न किं ॥६॥**

यथा युक्त्या परीक्षित आगमः सांख्यस्य प्रमाणतयाभिमतः। बौद्धस्यापि किमसौ न युक्तिः। तेनानभ्युपगमादिति चेत्। एवन्तर्हि अनित्यत्त्वादचेतना इत्यपि युक्तिं कथमभ्युपगच्छेत्। न्यायप्राप्तमवश्यमभ्युपगन्तव्यमिति समानं शास्त्रोपगमेपि। तथा चोभयसिद्धे सम्भवति साधके[3] कः साधनान्तरोपन्यासप्रयासमात्मनो विदधीत। योगिगम्योयमर्थः तेन परः साधनेन येन केन चि[4]त्प्रत्याय्यः।

ननु योगिगम्यमेतदिति परोपि स्वसाध्ये वक्तुं समर्थ एव। न च तद्योगिनि न प्रमाणमिति शक्यं। तथा हि।

**प्राकृतस्य सतः प्राग् यैः प्रतिपत्त्यक्षसम्भवौ।**
**साधनैः साधनान्यर्थशक्तिज्ञानेस्य तान्यलं ॥७॥**

नहि योगी कश्चित् स्वभावसिद्ध आस्ते प्रमाणाभावात्। तथा च प्रत्यपादि प्राक्। अनित्त्येप्यप्रमाणतेति। तस्मात् प्राकृतस्य सतः पश्चादुपायानुष्ठानाद् योगिता न स्वस्तिसाधनेन। तथा च। यैः साधनैः तत्साधनोपायप्रतिपत्तिस्तदपायानुष्ठानादक्षसम्भवः तदर्थप्रतिपत्तिरूपं प्रत्यक्षमेव (उक्त) अथवा। तादृक् प्रतिपत्तिसाधनमुक्तं। तानि तत्साधनान्यर्थस्योपायभूतस्य तदक्षसाधनस्य शक्तेः। सामर्थ्यस्य ज्ञाने समर्थान्येव। तद्योगिप्रतिपन्नार्थोपगमे ततः किमसत्साधनोपन्यासेन। यथा सौगतैर्योगिसाधनमुक्तं तथा परैरपि वक्तुं युक्तं। अथ योगिसम्भवद्वारेणापि न तत्साधनमुपादातुं शक्यं। तदाऽवचनमेवात्र प्राप्तं। यतः।

**विच्छिन्नानुगमा ये च सामान्येनाप्यगोचराः।**
**साध्यसाधनचिन्तास्ति न तेष्वर्थेषु काचन ॥८॥**

योह्यर्थः साधनेनानुगन्तुं शक्यः सामान्येनैव सामान्यविशेषेण वा। तत्र साध्यसाधनचिन्ता क्रियेत। तत्र सामान्येन चिन्ता। योगी तावत्सम्भवत्यस्माकमिति। तेन दृष्टोयमर्थ इतीदमपि(सं)भवति। अथवायमेवार्थः सम्भवतीति विशेषेण। ये तु पुनः सर्व्वथाऽननुगमेन सामान्येनापि विषयीकर्तुमशक्यास्तथाभूतेषु वस्तुषु न काचित्साध्यसाधनाधिकरणा चिन्ता। आस्तान्तावत्प्रमाणचिन्ता। आगमैकसमधिगम्योप्यसौ नार्थः ततस्तत्र प्रमाणमवतारयन् प्रमाणविषयानभिज्ञतामेवात्मनो दुरात्मा प्रकाशयति।

अथ यावदसौ न व्युत्पत्तिमान् तावत्साधनाभासतां न जानाति। ततस्तदभिप्रायात्साधनमेव। यदा तु साधनमेतन्न भवतीति प्रतिबुध्यते तदा साधनन्न भविष्यतीति क इवात्र दोषः।

तदप्यसद्यतः।

---

[1] B. अनभ्युपगमात्
[2] M. परस्यापि च
[3] B. साधने।
[4] B. सम्भवैः–हे. पुस्तके च

**पुंसामभिप्रायवशात्तत्त्वातत्त्वव्यवस्थितौ ।**
**लुप्तौ हेतुतदाभासौ तस्य वस्तु[1]समाश्रयात् ॥९॥**

पुरुषाभिप्रायमात्रं हि हेतावप्यहेतुतान्दद्यादहेतावपि हेतुतामिति हेतुतदाभासव्यवस्था न वास्तवी भवेत् । भवन्ती वा पुंसामभिप्रायमपहस्तयति । तस्मान्न परोपगतं साधनं । अपि चापरीक्षितादागमाज्ज्ञानमात्रमेवोत्पत्तिमन्न वस्तुनिश्चयः । न च ज्ञानमात्राद्वस्तु सिध्यति । यतः ।

**सन्नर्थो ज्ञानसापेक्षो नासन् ज्ञानेन साधकः ।**
**सतापि वस्तुसंश्लिष्टा(ऽ)सङ्गत्या[2] सदृशी गतिः ॥१०॥**

सन्नेवार्थोऽन्यस्य साधको नासन् । असतः सिद्धिरित्यहेतुकता । असति ज्ञानमस्ति ततः सिद्धिरिति चेत् । तदसत्त्वे तस्य तज्ज्ञानमिति कुतः । ज्ञानमेव साक्षात्साधकमिति चेत् । न (।) प्रत्यक्षत्वप्रसङ्गात् । अतो नासति ज्ञानात्सिद्धिः ।

नन्वस्ति तावज्ज्ञानमात्रादपि गतिर्यथा कथञ्चिदारोपितार्थात् । न । सवस्तुकस्यारोपस्य वस्तुद्वारेणैव गतिः । यदि तु गतिरप्यसौ वस्तुभूतं लिङ्गम्विना तदा गत्याभास एवासौ । हेत्वाभासादुदयात् ।

नाधूमे धूमसम्वित्तेर्गतिः सत्यास्ति पावके । विपरीतः समारोपो नहि साध्यस्य साधकः ।२९।।

अपि च । स्वार्थानुमानपरिच्छेदे निर्णीतमेतत् । लिङ्गत्रयमेवार्थस्य साधकं नापरं । ततश्च ।

**लिङ्गं स्वभावः कार्यं वा दृश्यादर्शनमेव वा ।**
**सम्बद्धं वस्तुतः सिद्धं तदसिद्धं किमात्मनः ॥११॥**

यदि साध्यस्वभावं वस्तुतः प्रसिद्धं प्रमाणप्रसिद्धत्वात् तदा किमात्मनः सांख्यस्याप्रसिद्धं । प्रमाप्रसिद्धिरुभयस्यापि प्रमाणस्य साधारणत्वात् । अथ प्रमाणन्नास्ति तदा ।

**परेणाप्यन्यतो गन्तुमयुक्तं ;**

यथैव हि सांख्यः प्रतिपादयत्यनित्यत्वादिको हेतुस्तव सिद्धस्ततः प्रतिपद्यस्वेति । तथा परोपि तव प्रसिद्धमेतत्प्रमाणात्सिद्धादेव हेतोर्यथा तव प्रतिपत्तिस्तथान्यस्यापि प्रेक्षावतः । अन्यथा सांख्यस्य प्रेक्षापूर्वकारितैव न स्यात् । नह्यहमेवैको विदग्धः परस्तु न तथेति सचेतनप्रतीतिः । तस्मान्न परोपगममात्रेण साधनप्रयोगो विद्वत्सु युक्तः । कथन्तर्हि पूर्व्वाचार्यैर्भवता च परप्रसिद्धसाधनैः साध्यसिद्धिः समीहिता ।

तदसत् । यतः ।

**परकल्पितैः ।**
**प्रसङ्गे[3] द्वयसम्बन्धादेकाभावेन्यहानये ॥१२॥**

प्रसङ्ग साधनं तत् (।) न तु ततः साध्यनिश्चयः । नहि परोपगति मात्रकात्साध्यनिश्चयः । किमर्थस्तर्हि तदेकस्य प्रसक्तस्याभावेऽन्या भावसाधनार्थं । नहि साध्याभावे

[1] B. M. वस्त्व०   [2] M. वस्त्वसंश्लिष्टा०   [3] M. प्रसङ्गो—हे.

साधनसम्भवः । इदञ्च तत्प्रसङ्गसाधनं । देशकालावस्थाविशेषनियतैक(व्यक्ति)संसर्गव्यवच्छिन्नस्वभावान्तरविरहादनेकवृत्तेरेकस्य न देशादिविशेषवताऽन्येन योगः । तथाऽभेदात्सर्व्वरागोऽवयवरागेपीत्यादि । यतस्तथाभूतस्वभावस्य विरोधाद्भिन्नदेशादियोगेन ।

### (१) कालनिरासः—

नन्वेकमपि व्यापित्वादनेकदेशादियोगि यदि को विरोधः । न (।) अनेककालयोगस्य द्रष्टुमशक्यत्वात् । नहि पूर्व्वापरकालव्यापिता प्रत्यक्षत उपलभ्यते । पूर्व्वापरभावस्य कल्पनाविषयत्वात् । यस्यातीतं दर्शनं स पूर्व्वकालो यस्यानागतं स उत्तरकालः । न च तत्कालदृश्यपदार्थव्यतिरेकेणापरः कालः ।

ननु कालाभावात्कथं पूर्व्वापरव्यवहारः । तथा दिगभावात् । कालेपि सति कथं पूर्व्वापरव्यवहारः । नहि कालसङ्गत इत्येव पूर्व्वादिव्यवहारविषयो वर्त्तमानेपि प्रसङ्गात् । कालभेदादिति चेत् । तथाहि ।

पूर्व्वकालादियोगी यः स पूर्व्वाद्यपदेशभाक् । पूर्व्वापरत्वं तस्यापि स्वरूपादेव नान्यतः ।।३०।।

पूर्वकालभावी पूर्व्वः । तथा परकालभावी पर इत्यादि । काल एव कथं पूर्व्व इति चेत् । स्वरूपत एव कालस्य पूर्व्वादित्वं । तथा दिशः ।

तदेतदसत्यं । यतः ।

नित्यताव्यापिता या हि पूर्व्वादित्व कथन्तयोः । सहचारितथात्वाच्चेदन्योन्याश्रयता भवेत् ।।३१।।

सहचारिणां हि रागादीनां पूर्व्वादित्वाद्व्यापिनोरपि दिक्कालयोस्तथात्वमिति का व्याहृतिः । न खलु सहचारिणा कश्चिन्न व्यपदिश्यते । मञ्चाः क्रोशन्तीति यथा । तथात्रापि गतः स काल इति व्यपदेशः । तदत्रेतरेतराश्रयदोषस्त्वरितं भवन्तमनुधावति ।

सहचारिणां (तु) पुर्व्वत्वं पूर्व्वकालसमागमात् । कालस्य पूर्व्वादित्वञ्च सहचार्यवियोगतः ।।३२।।
प्रागप्रसिद्धावेकस्य कथमन्यतरस्थितिः । सहभावे द्वयोर्न्न स्यादन्यान्यकृतपूर्व्वता ।।३३।।

न यावत्कालस्य पूर्व्वादित्वं न तावत्सहचारिणामित्यप्रसिद्धिः समीहितस्य । अथ द्वयोरपि समानकालापूर्व्वादिता (।) तथा सति समानकालयोः[1] परस्परव्यापाराप्रतिपत्तेर्न्न परस्परकृतत्वमिति स्वहेतुसमुत्थः स स्वभाव इति पदार्थानामेव स पूर्व्वादिताभाव इति व्यर्थिका कालपरिकल्पना । तथाहि । यदतीतं वस्तु तत्पूर्व्वमुच्यते । यदनागतं तत्परं यत्सत्तद्वर्त्तमानं ।

ननु(च) कालाभावादेतदेव कथं । कालसद्भावेपि कथमित्येतदपि प्रतिपादितमेवेति नोत्तरं । किञ्च ।

हेतुभावादभावाच्च कार्यं सदसदित्यतः । पूर्व्वापरव्यवस्थापि किमदृष्टस्य कल्पना ।।३४।।

पूर्व्वापरमध्यभावो हि सदसद्व्यवस्थया । सा च कारणभावाभावाभ्यां । तदपि कारणं स्वकारणादेव भावाभाववदिति नादृष्टस्य कल्पना युक्तिमती ।

---

[1] B कालः

**अथ चिरक्षिप्रादिरूपपरिच्छेदहेतुरनादिनिधनः काल इष्यते। तदपि यत्किञ्चित्। यतः।**

अनादिनिधनात्कालात्कथं क्षिप्रादिबुद्धयः। चिरक्षिप्रादिबुद्धिनां ग्राह्यः कालो यदीष्यते ॥३५॥

**यद्येता बुद्धयः कालस्वरूपोपग्राहिण्यस्तदा स एवानादिनिधनतया व्यापितया च गृह्यतामन्येन चिरादित्वेन तथाभूतस्य ग्रहणासम्भवात्।**

यदेव गृह्यते रूपं तदेवार्थस्य युक्तिभाक्। नैवान्येन प्रकारेण पदार्थस्थितिरिष्यते ॥३६॥
चिरक्षिप्रादिरूपाणां परस्परविभेदतः। कालस्यापि प्रसक्तोयमिति व्याप्येकते कथम् ॥३७॥
चिरकालः पदार्थोयमिति स्थितिविवेकतः। चिराचिरादिभेदानां कालरूपानुगामिता ॥३८॥

**चिरक्षिप्रादयो हि कालरूपानुगमनेन[1] प्रतीयन्ते। न पदार्थरूपानुप्रवेशेनेति व्यापिकालव्यवस्थितिः। तथाहि। योयेनानुगतः प्रतीयते स तद्योगी तद्यथा शावलेयः प्रतीयमानो गोरूपेण तद्योगीति कालस्यापि तथा व्यवस्था। एवं तर्हि(।)**

चिरक्षिप्रादिभेदानां कालरूपानुयायिनां। कालत्वं नाम सामान्यमिति कालो न सिध्यति ॥३९॥

**कालत्वं नाम सामान्यमिति कालो न सिध्यति।**

**द्रव्यपदार्थमध्ये हि काल इष्यते न सामान्यं तस्य पदार्थान्तरत्वात्। न च चिरादिरूपव्यतिरिक्तो वेद्यते कालः। काल इति (तु) संज्ञामात्रं तेषामेव लाघवार्थं केनचिन्निवेशितं।**

चिरादयोपि नैवामी क्रियातोव्यतिरेकिणः। चिरं कृतमितीत्थं हि क्रियारूपप्रवेशतः ॥४०॥

**चिरं करोतीति हि क्रियासामानाधिकरण्येन प्रतीतेः क्रियारूपानुपातिन एव तत्त्वतश्चिरादयः।**

## (२) क्रियानिरासः—

**न च क्रियापि कर्मकर्तृपदार्थ व्यतिरिक्ता। तथाहि।**

देवदत्तः करोतीति न कारः कर्तृतः परः। प्रतीयते प्रमाणेन तदेकत्वप्रतीतितः ॥४१॥

**नहि कर्मकरः करोति कटमिति कटकर्मकरविशेषव्यतिरिक्ता क्रियोपलभ्यते प्रत्यक्षतः। तदभावादनुमानतोपीत्यसत्त्वमेव क्रियायाः। तथाहि।**

भिद्यमानान्न भेदोन्यो बाधतो[2] नापरा गतिः। अनादिवासनाभेदात्प्रत्यया एव भेदिनः ॥४२॥

**अन्वयव्यतिरेकाभ्यां हि भेदमुपरचय्यानादिवासनासनाथीकृतसन्तानशिथिलीकृतपदार्थतत्त्वाभिनिवेशो हि पृथग्जनो जानाति भेदविपर्ययेपि भेदमिति विपर्यासमात्रकमेवेदं क्रियाभेदाध्यवसानं। यतः।**

देवदत्तात्क्रियाऽभिन्ना यदि न स्यात्तथाऽपरः। अन्यस्यापि क्रियायोगात्क्रियान्येतिविकल्प्यते॥४३॥

**एतच्च प्रागेव प्रतिपादितं। न चान्वयव्यतिरेकयोः प्रत्यक्षगम्यताग्यत्रानादिवासनाजनितमानसप्रत्ययगम्यत्वात्[3]।**

---

[1] B ०गमेन। [2] B. बाधतो। T. गन्तृतः [3] T. प्रथमाह्निकं (समाप्तम्)

**अथ क्रिया नामेयमसत्त्वभूता तेन न प्रत्यक्षत उपलभ्यते। ननु यदि नामासत्त्वभूता तथापि लिङ्गादियोगो मा भूत्। पदार्थव्यतिरिक्तत्वे तु प्रत्यक्षत उपलम्भको विरोधः। ततः कल्पितक्रियाविशेष एव चिरक्षिप्रादयो न तात्त्विकाः।**

**कथमेवमित्याद्यर्थवत्। तथा हि।**

कथमित्थं तथेत्येते पदार्थव्यतिरेकिणः। भवेयुर्व्यतिरेकस्य विकल्पाः साधका यदि ॥४४॥

**यदि यो य एव विकल्प उदयवान् तदर्थरूपः स एव पदार्थः कल्पनाविषयः पारमार्थिकः तदैवमादयोपि पदार्थाः स्युः चेत्क्वान्तर्भाव्यंताम्। नहि कालादयस्तन्निबन्धनमिष्यन्ते। नापि प्रतीयन्ते। अथ ते क्रियाविशेषा एव तथा सति चिरादयोपीति व्यर्थकः कालादिकल्पना-प्रयासः।**

**तस्मात्पूर्व्वापरकालभूतपदार्थग्रहणाभावात्प्रत्यक्षेणाग्रहणमेव व्यापिनः।**

## (३) सामान्यनिरासः—

**अथ कालव्याप्तेरग्रहणेपि देशव्याप्तिग्रहणमविरोधीति मतिः। न (।) तत्रापि तदा-धारव्यतिरेकेण सामान्यादेरनुपलम्भात्। तथाभूतस्वभावस्य विरोधाद्भिन्नदेशादियोगेन। न हि तत्रानुप्रविष्टमन्यत्रापि तदा[1] भवति भेदाभावेन सर्व्वानुप्रवेश एकपिण्डता स्यात्। न हि तदाधाराननुप्रवेशे तदनुप्रविष्टानुप्रवेशः।**

**अथ समानमेतद् द्वयमिति धीरुदेति ततः सामान्यं भिन्नाभिन्नं। अत्रोच्यते।**

धियः समानाकारत्वे कथमर्थसमानता। न ह्यन्यत्र समानत्वे तत्समानः परो भवेत् ॥४५॥

अर्थे समानाकारश्चेत् स्याद्भेदेन[2] वेद्यताम्। अदृ(श्य)मानमर्थेषु कथमर्थेषु कल्प्यताम् ॥४६॥

**अनुगताकारा धीरुदयमासादयतीति कोस्य भाषितस्यार्थः। नहि वचनमविवेचितार्थमेव यथाकथञ्चित् प्रतीयमानार्थमर्थस्य सत्यतां विदधाति। विवेचनञ्च समानकारा धीरिति शब्दस्यार्थस्य प्रकारद्वित्वेन। कदाचित् स्वरूपसमानत्वात्समानाकारार्थाकारसमानत्वाद्वा प्रकारान्तरासम्भवात्। स्वरूपसमानाकारत्वे स्वरूपमेव तद्भवेत् नार्थः समानाकारयोगीति सामान्यमर्थः। स च बुद्ध्याकारः स्वलक्षणमेव न तत् सामान्यं। बुद्ध्यन्तरस्य तदभावा-दर्थगतत्वाभावाच्च।**

**अथार्थाकार एव समान इति तदाकारा धीरिति वचः। तदप्यसत्यं। आकारद्वय-प्रतिभासनप्रसङ्गात्। प्रतिभासत एव तदाकारद्वयमिति चेत्। न(।) यतः।**

स्वदृष्टौ पक्षपातेन वचो नात्र[3] प्रतीतितः। अर्थः सिध्येत्समस्तस्य ध्वनेः सर्व्वत्र वृत्तितः ॥४७॥

**ततः समानाकारा धीरिति व्याकुलेयं धीर्धियः। अतो न सामान्यं।**

**अथ सास्नादिमत्त्वेन समानाकारता तदव्यतिरिक्तलक्षणं सामान्यं देशकालविनियत-व्यक्त्यन्तरेण युक्तमिति न दोषः। असदेतत्। यतः।**

---

[1] B. तथा [2] B. अर्थाद्भेदेन। [3] B मात्र

आकृतेरपि नैकत्वं प्रत्यक्षेण तथाऽग्रहात् । एकत्वादेकविज्ञाने सर्व्वव्यक्तिग्रहो भवेत् ॥४८॥

**एकत्वादाकृतेरेकाकृतिग्रहणेपि सर्व्वाकृतिमदर्थपरिग्रहप्रसङ्गः । अथ गृह्यत एवाकृतिराकृतिमतस्तु ग्रहणासम्भवः तद्भेदात् । नहि भिन्नं ग्रहीतुं शक्यमन्यत्तु तादात्म्यादेव गृह्यते ।**

**तदप्यसत् ।**

तदात्मना हि तादात्म्यं न तु तादात्म्यमुच्यते । पारम्पर्येण तदात्म्येऽभेद एव प्रसज्यते ॥४९॥

**तदात्मा नामा[1]कृत्यन्तरेणाकृत्यन्तरस्य तादात्म्यं । तदाकृत्यन्तरमाकृतिमता तदात्मकमिति तदात्मकाकृतिमद्ग्रहणं । यदि[2] चाकृतिमतस्तदभिन्नस्य न ग्रहणं आकृत्यन्तरग्रहणेपि तदन्तरग्रहणन्न भवेत् न ह्यभेदो ग्रहणनिबन्धनमाकृतिमदग्रहणात् ।**

**अथ तद्भेदादाकृत्यन्तरमेव तन्न भवति । एवन्तह्याकृत्यभेदादाकृतिमदन्तरमपि न[3] भवेत् ।**

**एतेन** भाष्यकारवचनं निरस्तं । **न ह्येकत्रोत्सन्ना सर्व्वत्रोत्सन्ना भवति । व्यक्त्यन्तरन्नो[4]पलभ्यते । न ह्याकृत्यभेदात्तदभिन्नं व्यक्त्यन्तरं भवत्याकृत्यन्तरवदेव ।**

**अथाकृतिमदन्तरमेव भवति काष्ण्र्यादिभेदात् । नाकृत्यन्तरं(।)तदसत् ।**

काष्ण्र्यादि व्यतिरिक्तञ्चेत्तद्भेदाद्भेदिता कुतः । तत्संसर्गेण भेदश्चेत् आकृतेरप्यसौ न किं ॥५०॥

**यदि कृष्णत्वादिकमन्यदेवाकृतिमतः कथन्तद्भेदाद्भेदः । न ह्यन्यद्भिन्नमन्यद्भिनत्ति । कारणत्वेन भिनत्त्येवं चेत् । न । कारणत्वाभावात् । नहि गुणा एव द्रव्यस्य कारणं तदेकयोगक्षेमतयोदयात् । कारणत्वे वा तस्मादपरो भिन्न उदेति तस्याप्यपरेण संसर्गिणा भेदकेन भवितव्यं । न च कारणमेव संसर्गि । अन्यथाऽग्निरपि धूमस्य संसर्गी भवेत् । नैवमदृष्टेरिति चेत् । संसर्गिणोपि तर्हि कारणत्वं न दृष्टमिति न कारणत्वं कल्पनीयं ।**

अभेदपक्षे भेदश्चेत् आकृतेरपि भिन्नता । भिन्नादभिन्नं भिन्नं हि नान्यथा भिन्नता भवेत्[5] ॥५१॥

**आकृतिमतो(ऽ)भिन्नं काष्ण्र्यादिकं ततो भिन्नादभिन्नं यत्तदपि भिन्नमित्याकृतिमतो भेदः । आकृतेरपि तर्हि तदभेदाद्भेदप्रसङ्गः । आकृतिरपि नाकृतिमतो भिद्यते । ततश्च भिन्नादभिन्ना भिन्ना भवत्याकृतिमदन्तरादाकृतेश्च । आकृतिरभिन्नैव चेत् । न ह्याकृतेर्गुणभूताया गुणेन कृष्णत्वादिना संसर्गः । गुणानां परस्परमसमवायात् । गुणवति समवायस्तु गुणानामिति समयः । न युक्तमेतत् ।**

भेदे वक्तुमिदं युक्तं अभेदेनाविभागतः । इदमत्र न चेद हि कल्पना भिन्नभाविनी ॥५२॥
भेदस्तर्हि भवत्वेतद्बालक्रीडनकम्भवेत् । भेदपक्षं परित्यज्य पक्षान्तरसमाश्रयात् ॥५३॥
तत्रापि दोषस्य दृशा पुनः पूर्व्वसमाश्रयात्

**तस्मान्न सामान्यमाकृति लक्षणमपि ।**

**एतेन प्रधानलक्षणमपि प्रत्युक्तं । तस्याप्यन्वये सकलतदवस्थाग्रहात् सर्व्वस्य सर्व्वदर्शित्वप्रसङ्गः । तदवस्थानां प्रधानरूपादतत्त्वान्तरत्वात् ।**

---

[1] B तदात्मना [2] B यदि नामाकृ० [3] B मेव तन्न
[4] B रस्थो० [5] B. क्वचित

**अथ परमार्थतः सर्व्वमेव प्रतिभासितं भ्रान्त्या त्वप्रतिभास इति विभ्रमः। तदप्ययुक्तं। यतः।**

सर्व्वस्याप्रतिभासः किं प्रतिभासेपि वा भ्रमः। प्रमाणमत्र नास्त्येव केवला कल्पनैव तु ॥५४॥
कारणे शक्तिरूपेण सर्व्वेषामेव या स्थितिः। ततः प्रधानन्तत्सर्व्वजगतामुदयोदयः ॥५५॥
तदेव यदि सामान्य व्यापि नित्यतया स्थितेः। व्यक्तिर्व्यक्तिर्दृश्यमानापरस्परविभेदतः ॥५६॥

**इदमत्र विरुद्धं। यदुच्यते।**

गुणानां सुमहद्रूपं न दृष्टिपथमृच्छति। यत्तु दृष्टिपथप्राप्तं तन्मायेव सुतुच्छकं ॥५७॥

**यतः।**

कार्यद्वारेण यत्कल्प्यं तस्य तुच्छतया ननु। तस्यापि तुच्छता हेतौ तद्रूपस्यैव सम्भवात् ॥५८॥
अथान्यदेव सत्कार्यवादः सम्प्रति हीयते। यच्च नैवेक्ष्यते वस्तु तदेवापारमार्थिकं ॥५९॥*

**तस्मात्प्रधानलक्षणमपि न सामान्यं।**

**अथापि स्याद्यद्यपि न सामान्यं कालभेदभिन्नव्यक्तिव्यापि गृह्यते। पूर्व्वापरभावे प्रत्यक्षस्या(प्र)वृत्तेः। समानकालभिन्नदेशव्यक्तिव्यापि तु गृह्यत एव।**

**तदप्यसत्। यस्मात्।**

भिन्नकालभवव्यक्तिव्याप्तेरग्रहणे सति। न सामान्योपयोगोस्ति व्यवहारस्तथा न हि ॥६०॥

**श्वेतच्छागमालभेतेति पूर्व्वदृष्टालम्भनस्य तदेवेदमिति जात्यन्वयादालम्बनार्थं तद्व्यवहारार्थिभिः सामान्यमिष्यते (।) युगपद् दृष्टयोश्च न तद्व्यवहारोपयोगिता। द्वयोरपि पूर्व्वानुसारेण तज्जातितया प्रतीतेः। न च पूर्व्वापरयोरपि पूर्व्वोत्तरव्यक्तिस्पष्टेतराकारव्यतिरेकावपरं सामान्यमीक्ष्यते। तथ समानकालयोरपि स्पष्टद्वयाकारात्। कथन्तर्हि समानावेताविति प्रत्ययः। अयं प्रत्ययः पूर्व्वोत्तरकालभाविनोरपि समानः। तथा हि।**

तत्र नास्ति समाना (?समा)कारः प्रत्यक्षेण समीक्षितः।
समानकालव्यक्तीनामपि नेक्षणमक्षतः।

**साम(ा)न्यस्येति वाक्यशेषः। न समानाकारता पूर्व्वापरव्यक्तिवत्समानकालानामपि निरूप्यते व्यतिरेकिणी। प्रत्यय एवायं केवलः प्रतीयमानस्यादृष्टेः। नहि प्रतीयमानाकारविनाकृतः प्रत्ययः प्रत्येति किञ्चित्।**

प्रत्ययः समानाकारः स निरालम्बनोदयः (।)
तद्ग्राह्याप्रतिभासित्वात् पूर्वोत्तरविशे(ष)वत् ॥६१॥

**यः समानाकारः स सकलो[1] निरालम्बनः प्रत्ययः। तत्र ग्राह्याप्रतिभासात्। तद्यथा भिन्नकालव्यक्तिसामान्यालम्बनाभिमतः अप्रतिभासमानसामान्याकारश्च समानकालव्यक्तिसामान्यविषयोपि प्रत्यय इति स्वभावहेतुः।**

**अथ स प्रत्ययः समानतामन्तरेण सर्व्वस्य विलक्षणत्वात् कथमुदयी। तदपि यत्किञ्चित्।**

---

[1] B. सर्वो

प्रत्ययो यदि नामायं क्वचिदेव प्रवर्त्तते । नियमो हेतुमात्रत्वे सामान्ये तु गतिः कथं ॥६२॥

**नाहेतुको नियम इति हेतुरेव परिकल्पनामर्हति[1] । सामान्यस्य तु किमायातं । अथवा तदन्यव्यावृत्तिमात्रमेवास्तु सामान्यमिति न क्षतिः । सा चारूपेति प्रतिपादितं । अपि च ।**

आरोपितो य आकारो वासनाबीजबोधतः । तावन्मात्रेण पर्याप्तं जातिरन्या वृथा न किम् ॥६३॥

**व्यवहारमात्रमविचारिततत्त्वयापि जात्या सम्पद्यत एव किमपरः परत्र[2] प्रयास आस्थीयते ।**

धर्माधर्मप्रसिध्यर्थं जातिश्चेत्पारमार्थिकी । धर्मसाधनता तस्याः केन मानेन मीयताम् ॥६४॥

**धर्मादिसाधनत्वं हि जातेः स्वरूपेण प्रसिद्धादपि[3] न विवेकेन गम्यते जात्यन्तरादभेदात् । न च तथाऽप्रसिद्धा सती कार्योपयोगिनीति व्यर्थ एव जातिग्रहः ।**

**अथवा तथाभूतप्रत्ययविशेषोपलक्षितव्यक्तीनामेव धर्मादिसाधनत्वमिति तदेव सामान्यं**

**अथ यदि सामान्यं नित्यं व्यापि न भवेत्समानाकार एव व्यापी न भवेत् प्रत्ययः । तदयुक्तं ।**

कारणन्तस्य किमपि प्रत्ययस्येति गम्यते । प्रमेयाकारसद्भावात्प्रमेयपरिकल्पना ॥६५॥

**न च समानाकारप्रमेयानुभवः । तथा च प्राक् प्रतिपादितं । तस्मात् प्रत्यक्षतोऽननुभवादभाव एव सामान्यस्य । दृश्यमानस्यापि रूपस्य तदपरसाधारणत्वेनाननुभवात् (अ)सामान्यं ।**

**नन्वेकव्यक्तिनिष्ठत्वात्सामान्यस्य धर्मिणोऽभावाद् भवतो धर्मिणोऽसिद्धत्वादाश्रयासिद्धता ।**

**न सदेतत् ।**

प्रसङ्गसाधनमिदं नाश्रयासिद्धता ततः । यद्येवं स्यादिदमपि न चोभयमितीष्टितः ॥६६॥

**यद्येवमेकव्यक्तिनिष्टत्वं तदा न देशविशेषवतान्येन योगः । न चोभयमिति स्यात् ।**

**ननु यद्यन्येनयोग एकव्यक्तिनिष्ठत्वं न स्यात् सिद्धसाध्यता नैकस्यां व्यक्तौ स्थितिः सर्व्वव्यक्तिव्यापित्वात् । नैकस्यामेव व्यक्तौ स्थितं सामान्यमिष्यते । नैष दोषः ।**

साधारणत्वे तस्य स्याद्व्यापितावित्तिरक्षतः । नहि तद्रूपमन्येन रूपेण ग्राह्यमभ्रमं ॥६७॥

**यदि व्यापि सामान्यं व्यापितयैवाध्यक्षणे प्रमाणेन गृह्येत । न खलु विपरीतग्रहणं प्रमाणम् । यदि च व्यापिता प्रतीयते सकलव्यक्तिप्रतीतिरेव भवेत् । व्याप्यग्रहणे व्यापकताया अप्रतीतेः । न च प्रतीयते ततो न तथारूपं । तेन सामान्यमेव नास्तीत्युभयधर्मनिवृत्तिः । यद्ययं स्थितपक्षः स्याद्भवेद्धर्म्यसिद्धिदोषः परस्परविरोधप्रकटनपरमेवैतत् । न वयमेवम्भूतमर्थं प्रतिपत्तुं क्षमाः । एवम्भूतस्यापरस्यादर्शनात् । अनुमानञ्च न दृष्टान्तम्विनावतरति ।**

**अथ सामान्यमन्यथानुपपत्त्या प्रतीयमानं सकलापरपदार्थविलक्षणमेव न तस्यान्य-**

---

[1] B. परिकल्पनामत्रार्हति [2] B. पुनरत्र [3] प्रतीतावपि

धर्मविरोधेन विरोध उद्भावनीयः । न ह्यन्यधर्मोन्यस्य युक्तः । नहि मूर्त्तपदार्थधर्मा अमूर्त्ते सामान्ये योजनीयाः । नैतदस्ति । यतः ।

अमूर्तेन्त्यविशेषेपि व्यापिता नेष्यते परैः। तद्वदव्यापिता प्राप्ता सामान्यस्यापि गृह्यताम् ॥६८॥

येपि खल्वमूर्तिसङ्गता अन्त्या विशेषास्तेपि प्रतिनियताधिष्ठाना न व्यापिनः । तथा सामान्यमपि नामूर्त्तत्वावव्यापितामतिक्रामेत् ।

अथ सविशेषोऽमूर्त्तत्वेप्यव्यापी तत्त्वादेव । न तर्हि मूर्त्तेतरस्वभावकृतोयं विभागः । सामान्यविशेषभाव एव तर्हि व्यापितेतरत्वे निबन्धनम्भवतु को दोष इति चेत् । नन्वसिद्धिरेव ।

ननु सामान्यं सिद्धमेव त्वयापि धर्मितयोपादानात् । नैतदस्ति । यतः ।

व्यापिताऽग्रहणे सामान्यग्रहणं[1] कथमुच्यतां । स्वरूपेण ग्रहस्तस्य यदि साम्यं ततः कथम् ॥६९॥

गृह्यत इति वाक्यशेषः (।) स्वरूपेण हि गृह्यमाणं सामान्यं व्यपितयेतरथा वा गृह्येत ।

व्यापिताग्रहणञ्चेत् न प्रत्यक्षस्येयती गतिः । यदशेषव्यक्तिव्यापिसामान्येऽस्य प्रवर्त्तनं ॥७०॥

अथ व्यक्तयो न गृह्यन्ते । तथा तर्हि सामान्यमेकव्यक्तिसमन्वितं गृह्यमाणं कथं व्यापितया गृहीतं । एकव्यक्तिविशेषणत्वे तद्व्यक्तिविशेषणं विशेषवदसामान्यं भवेत् । अथ पर्यायान्तरेण व्यक्त्यन्तरविशेषणताग्रहणमपि । तथा सति तदेवेदं सामान्यमिति कथं गतिः । तदेवेदमिति प्रतीतिर्नाध्यक्षेति विचारितं । तस्मादसिद्धमेव सामान्यरूपत्वं कथं व्यापितासाधनं । तस्मात् ।

नामूर्त्तत्वान्न सामान्याद्व्यापितासाधनं क्वचित् ।
प्रत्यक्षेण च नो दृष्टिररित सामान्यशून्यता ॥७१॥

यदि सामान्यमसिद्धं कथम्भवता सामान्यविषयमव्यापित्वं साध्यते । धर्मित्वेन सामान्यस्योपादाने तत्र धर्मस्य कस्यचित्साधनं नान्यथा ।

न सदेतत् । यतः । उक्तमेतत् । प्रसङ्गसाधनमेतत् । न त्वयं मौलो हेतुः । यदि त्वया सामान्यं व्याप्यभ्युपगम्यते प्रमाणेन तत्प्रतिपत्तव्यं । प्रत्यक्षस्य तदादिना[2] प्रमाणनिबन्धनत्वादभ्युपगमस्य । देशकालावच्छिन्नैकव्यक्तिसंसर्गाव्यवच्छिन्नस्वभावान्तरविरहतया च प्रतीयमानं कथं व्यापि तदिति अभ्युपगन्तुं युक्त । प्रत्यक्षेण चानेकवस्तुग्रहणेन तद्व्यतिरिक्तं अन्यथा वा प्रतीयत इति नाप्रतीयमानाभ्युपगमो युक्तः । आकृतिरेव सामान्यमुपलभ्यमानेति चेत् । न (।) आकृतेर्व्यापित्वाभावात् । व्यापित्वेनोपलम्भे सकलव्यक्त्युपलम्भः स्यात् । तथा च देशकालभिन्नसकलव्यक्तिप्रतीतिप्रसङ्गः । एकव्यक्तिनिष्ठत्वे चाकृतेर(व्य)यापिता साधने धर्म्यसिद्धिरपि परिहृतैव । कथन्तर्हि प्रसङ्गसाधनमेतत् । परेणाकृतिरेवसामान्यमभ्युपगतं अन्येनान्यविति प्रसङ्ग(ा)साधनता ।

अथवा व्यापित्वात् नैकव्यक्तिनिष्ठतयोपलम्भः स्यादिति प्रसङ्गार्थः । विपर्ययस्तु मौलो हेतुः । प्रसङ्गस्तु मौलस्य हेतोर्व्याप्तिसाधनार्थ एव । अन्ये तु विरहादिति मौलो हेतुः । प्रसङ्गस्तत्प्रतीयमान एव । मौलनिष्ठताञ्च दर्शयितुमेवमुपन्यासः । विरहादिति च हेतुः

[1] B. ग्रहः [2] B. प्रत्यक्षतदादिना

**प्रसज्य प्रतिषेधरूपः। स चाभावेपि सामान्यस्य सिद्ध एव। न ह्यभावे हेतौ वस्तुरूपो धर्म्यभ्युपगम्यते।**

तदभावाच्च तन्नेति वचना(द)पि तद्गतेः।

**तदसदेव।**

सामान्यं यदि धर्मि स्यात्तत्राव्यापित्वसाधनं। अभावमात्रके हेतौ क्व किङ्केन प्रसाध्यताम् ॥७२॥

**विरहमात्रकस्य हेतुत्वे तस्य केनचिदसम्बन्धात्कथं साध्यसाधनं। अथ व्यक्त्यन्तर-संसर्गविरहस्तदापि कस्यासाविति निरूप्यमेव। तस्मान्नियमेन परोक्तेन सामान्येन बुद्धिस्थेन भवितव्यम्। न च पक्षधर्मोपसंहारमन्तरेण हेतुः समर्थः साध्यसाधनाय।**

**अथान्यापोहलक्षणं सामान्यं सिद्धं सौगतानां तथासति परस्येष्टमेव। पराभ्युप-गतस्य तेनापि दूषयितुमभिप्रेतत्वात्। अपि चान्यापोहलक्षणस्य सामान्यस्य व्यापितेष्यत एव। तथाहि। व्यावृत्त्यापि समानता।**

अस्त्येव वस्तु नान्वेति प्रवृत्त्यादिप्रसङ्गतः ॥७३॥

**अथ सामान्यस्याविद्यमानस्यापि विरहलक्षणो हेतुरस्त्येवेति।**

**तदप्यसत्। अविद्यमानस्य हेतुत्वायोगात् अविद्यमाने साध्ये योग एवेति चेत्। न। प्रतिबन्धे सत्येकाभावोन्याभावं गमयेत्। प्रतिबन्धश्चान्वयेन गृह्यते। अतस्तत्साम-र्थ्याद्यत्र व्यापको नास्ति तत्र व्याप्याभाव इति विपक्षेऽभावमात्रमादर्श्यते। न स मौलो हेतुः।**

**अथ व्यापकतानुपलब्धिरपि प्रतिनियतवस्तुविषयाभावसाधनायोपादीयते। तथा सति नात्र शिंशपेति न्यायादन्येन धर्मिणा भवितव्यं प्रमाणप्रसिद्धेन। अथात्रापि भावाभावसाधारणं धर्मीत्युपादीयते।**

**तदप्ययुक्तं। भावाभावसाधारणस्यापरस्याभावात्। विकल्पप्रतिभास एवोभयधर्मः साधारण इति चेत्। एवं तर्हि (।)**

तस्मिन्भावानुपादाने साध्येऽस्यानुपलम्भनं।

**अन्य एव हेतुरिति यत्किञ्चिदेतत्। तस्मान्नात्र मौलो हेतुः। सामान्यस्य धर्मिणः सिद्धेरभावात्।**

**रूपादय एव सामान्यमिति पक्षे नेदं प्रसङ्गसाधनं। प्रत्यक्षेण तेषामव्यापिताप्रतीतेः। तस्मादुभयवादिसिद्ध एव हेतुर्न त्वन्यतरस्य प्रतिवादिन एव।**

## ३. "अर्थ"ग्रहणफलम्

**ननु य उभयसिद्धः सोऽर्थ एव किमर्थमर्थग्रहणं। नैतदस्ति। यतः।**

कल्पनानामात्रतः सिद्धो यथैकस्योभयोरपि। कल्पना हि न नामैता नियतोदयसङ्गमाः ॥७४॥

**तत उभयसिद्धत्वेपि पक्षसपक्षान्यतरत्वादेरर्थत्वाभावादहेतुत्वं यतः।**

**तदर्थग्रहणं शब्दकल्पनारोपितात्मनाम्।**
**अलिङ्गत्वप्रसिध्यर्थमर्थादर्थप्रसिद्धितः ॥१३॥**

यदर्थग्रहणं स्वदृष्टग्रहणविशेष्यं तच्छब्दकल्पनामात्रघटितात्मनामहेतुताप्रतिपादनार्थं। अर्थस्यैव गमकत्वसम्भवात्[1]।

नन्वसिद्धविरुद्धानैकान्तिकलक्षण एव हेतुरप्रतिपन्नार्थप्रतिपादने[2]। यदि चास्य त्रैरूप्यमस्ति कथमहेतुरथ त्रैरूप्याभावस्तदा स्वार्थानुमानलक्षणादेव निवृत्तिः किमर्थग्रहणेन। त्रिरूपलिङ्गाख्यानं हि परार्थानुमानं। न। स्वार्थानुमानेपि कल्पनारोपितं त्रैरूप्यं प्राप्तमेव हेतुलक्षणम्। कथन्ततो निवृत्तिः। नात्र तर्हि तदर्थग्रहणं कर्त्तव्यं[3]। स्वार्थानुमान एव कर्त्तव्यताप्राप्तेः।

अत्रोच्यते[4]। स्वनिश्चयवदन्येषामिति वचनादत्र कृतं तत्रापि भविष्यतीत्यदोषः। तत्रैव कस्मान्नेति चेत्। तत्र वा क्रियतामत्रवेति को विरोधः। अस्ति चात्र प्रयोजनं। तथाहि(।)

कल्पनादि कृतं हेतु स्वार्थे कश्चिन्न कल्पयेत्। आत्मानमेव किं कश्चिद्विसम्वादयतीहितात् ॥७५॥

किञ्च। परार्थ एव यत्नः परः कार्य इति चात्रैव महान् यत्नो विधेयो महात्मनेत्यर्थग्रहणमत्र। परमार्थतस्तु कल्पनारोपितो हेतुरनैकान्तिक एव। तथाहि।

**कल्पनागमयोः कर्त्तुरिच्छामात्रानुरोधतः।**
**वस्तुनश्चान्यथाभावात्[5] तत्कृता व्यभिचारिणः ॥१४॥**

न खलु कल्पनासमारोपितस्य साध्यवस्तुप्रतिबन्धः। वासनामात्रप्रवर्त्तितत्वात्। यद्येवमप्रतिबन्धादेव न हेतुः। न। प्रतिबन्धस्यात एवाक्षेपात्। नहि साक्षात्प्रतिबन्धप्रतिपादनमस्ति। ततोर्थग्रहणं। न हि पक्षसपक्षान्तरत्वं नित्यानित्ययोरेकत्र नियतं यो यः पक्षीक्रियते तदपेक्षया तत्र तत्र सञ्चारात्। न चेदृशी वस्तुसिद्धिर्विवक्षान्तरेन्यस्य साधनात्।

## § २. पक्षचिन्ता

### १. हेतुपक्षवचनमसाधनम्

#### (१) हेतुवचनं असाधनम्

ननु पक्षः साध्य एव तदपेक्षयान्यस्य सपक्षत्वात्। तत्र पक्षसपक्षान्यतरत्वं नाम धर्मस्तद्विपक्षाद् व्यावर्त्तते। ततः कथन्न हेतुः। नहि पक्षसपक्षनियतो धर्मः साध्यव्यभिचारी।

तदसद्यतः।

न पक्षस्य सपक्षस्य भावस्य नियमः क्वचित्। न पक्षोनित्यना मात्रमपरस्यापि सम्भवात् ॥७६॥

यद्ययमर्थः पक्षसपक्षान्यतरत्वादिति शब्दघटानित्यता सामान्याव्यभिचरितधर्मयोगा-

---

[1] T. अर्थाभ्यां गम० [2] T. प्रतिपादनेन न भवति

[3] T. कथं ततो निवृत्तिर्नात्र तर्हि तद्ग्रहणं कर्त्तव्यम्।

[4] T. स्वनिश्चयवदन्यस्य वचनमपि साधनमिष्यते ऽयुक्तवादिनस्त इति प्रतिपादितं भवति। स्वनिश्चयवदिति यावद् वचनमपि साधनमिति न लभ्यते भाषान्तरे, मध्ये चतुर्दशी कारिकाऽपि लुप्ता। [5] B. कल्पिता—इत्यपि पाठस्तत्रैव।

विति। तदा स धर्मः कृतकत्वादिलक्षण एव। अव्यभिचरितस्य साधर्म्यस्यान्यतर शब्देन प्रतिपादनात्। न त्व व्यभिचारी[१] धर्मः कृतकत्वादिलक्षण एव। एवं च सति (स) हेतुरर्थ एव न कल्पितः। अथ पक्षीकृतेतरत्वेन विवक्षितत्वात्।

तदसत्। यद्यपि नामानित्यतया पक्षत्वविवक्षा तथापि न तावताऽनित्यता सिध्यति। नित्यतया विवक्षितत्वे तदैवापगमात्। वास्तवञ्चेदनित्यतया पक्षत्वं प्रसिध्येत् सिद्धमेव साधितं भवेत्। तस्मान्न कल्पितो धर्मः साधनं।

स च स्वसिद्धोऽर्थः साधनं। त्रिरूपमेव लिङ्गमतस्त्रिरूपलिङ्गाख्यानं परार्थमनुमानं। ततो यैः पक्षवचनमपि साधनमिष्यतेऽयुक्तवादिनस्त इति प्रतिपादितं भवति। तस्यासिद्धत्वात्। साधनं हि साध्यं साधयेत्। न साध्यमेव (वाध्यं साधनात्)[२]। वचनं साधनमिति चेत्। न। वचनस्य साक्षादसाधनत्वात्। साध्याप्रतिबन्धात्। न वचनस्यार्थे प्रतिबन्धः। तस्मात्।

**अर्थादर्थगतेः शक्तिः पक्षहेत्वभिधानयोः।**
**नार्थे तेन तयोर्नास्ति स्वतः साधनसंस्थितिः ॥१५॥**

अनित्यः शब्दः कृतकत्वादिति त्रिरूपं कृतकत्वमेवानित्यतां गमयति। तस्य तत्राव्यभिचारात्। न पक्षवचनं हेतुवचनं वा। अन्यथा नित्यः शब्दः प्रमेयत्वादिति साध्यसिद्धिर्भवेत्। अत्रापि हेतुपक्षवचनमस्ति। तदर्थस्य तत्राप्रतिबन्धादहेतुरिति चेत्। अर्थादेव तर्हि अर्थस्य गतिः प्रतिबन्धात्। न वचनं साक्षात्साधनमिति प्राप्तं। वचनस्यार्थमन्तरेणापि भावात्। यत्र च हेतुवचनमसाधन। तत्र पक्षवचनस्यासाधनत्वमनुक्तसिद्धमेव। अथ साध्यवचनं साध्यार्थप्रतिपादनात्साधनं। न। हेतुवैयर्थ्यप्रसङ्गात्। अथ प्रतिज्ञामात्रं न साधनमिति हेतुरुपादीयते। कथमसाधनं साधनं। सहितं साधनमिति चेत्। कथमनुपयोगि साहित्यं विदध्यात्। नानुपयोगिना कश्चित् साहित्यं वाञ्छति। तस्मान्न वचनं साधनं।

अपि च।

## (२) पक्षवचनं असाधनम्

**तत् पक्षवचनं वक्तुरभिप्रायनिवेदने।**
**प्रमाणं संशयोत्पत्तेः ततः साक्षान्न साधनम् ॥ १६ ॥**

नहि संशय हेतुरेव तत्र हेतुः। अर्थाप्रतिबद्धत्वेन च संशयहेतुत्वं। अन्यथा हेतूपादानमनर्थकं[३]। यथा तर्हि वचनं साध्यार्थासाधनं। तथा साधनार्थोपि नैव तस्मात्प्रतिपत्तव्यः तत्रापि नैव तस्य प्रतिबन्धः। प्रतिबन्धे वा साध्येपि कः प्रतिबन्धः प्रतिबन्धस्य।

सत्यमेतत्। साधनार्थमपि नैव वचनं प्रतिपादयति। तत्राभिप्रायनिवेदने प्रमाणत्वादतः साक्षान्न साधनं। साधनेपि प्रमाणमेव वचनेन आक्षिप्यते। साध्येपि प्रमाणमाक्षिप्यतामिति चेत। न। तदानीमेव तत्र प्रमाणसद्भावात्। पूर्ववृत्तं हि प्रमाणमाक्षिप्यते

---

[१] B. स चाव्यभिचारी　　[२] T. कोष्टकस्यः पाठोः न भाषान्तरे
[३] B. ०मेवानर्थकं

**वचनेन तत्र विस्मरणसम्भवात्। वर्त्तमाने तु प्रमाणं प्रत्यक्षमेव किन्तत्र वचनेन। नहि प्रत्यक्षेऽर्थे परोपदेशो गरीयान्। यस्माद्वचनमसाधनं। पारम्पर्येण तर्हि साधनं पक्षस्य वचनं यथा साधनस्य। एतदप्यसत्।**

**साध्यस्यैवाभिधानेन पारम्पर्येण नाप्यलं।**
**शक्त(स्य) सूचकं हेतुवचोऽशक्तमपि स्वयम् ॥ १७ ॥**

यथा साधनवचनं साधनं तथा पक्षवचनमपि भवेत्। यदि शक्तस्य सूचकं भवेत्प्रमाणसिद्धस्य। असिद्धस्य तु सूचनं कथं साधनं। नहि स्वयमशक्तमशक्तमाश्रित्य शक्तिमत्। तथाहि (।)

न पतन्तमाश्रित्य पतत् स्थिरीभवति क्वचित्। तथा(ऽ)सिद्धमसिद्धेन न तेनैव प्रसाध्यते ॥७७॥

साध्यस्य पक्षवचनेनासिद्धतयाभिधानात्कथं साधनं पक्षवचनं। हेतुवचनन्तु स्वयमशक्तमपि शक्तस्य वाचकमिति साधनमुक्तं।

प्रनिबद्धस्य साध्येर्थे साधनस्याभिधानतः। वचनं साधनं प्रोक्तं साधनं तत्स्वतो न तु ॥७८॥

ततो यदुक्तं परार्थञ्चानुमानञ्चेति व्याहतं। तथाहि प्रतिपाद्यापेक्षया स्वार्थमेव। प्रतिपादकापेक्षया त्वनुवादमात्रकं। तन्निराकृतं। यतः। अनुमानन्तदनुमानकारणत्वेनोपचारत उक्तं। न स्वतः। ततः प्रतिपाद्यपेक्षया तत्स्वार्थमिति यत्किञ्चनवादितैव। तस्य हि त्रिरूपमेव लिङ्गं प्रतिपादकत्वात्स्वार्थं। न वचनं। ततोर्थस्याप्रतिपत्तेः। स्मरणेन तस्याप्युपकारकत्वात् प्रतिपादकमेवेति चेत्। न(।)अर्थवादमात्रकस्य वचनेन विधानात्। तत उभयापेक्षयापि वचनमनुवाद एव। परार्थता तस्य प्रतिपादकापेक्षया न प्रतिपादकस्य तेन कश्चिदुपकारः। अनुमानकारणत्वेन त्वनुमानन्तत्प्रतिपाद्यापेक्षयैव।

नन्वर्थापेक्षया परार्थमन्यपेक्षयानुमानमिति प्राप्तम्। तत्कथमेतत्। ननु गुण एव हि दोषतयाध्यारोप्यते। येनैव तस्य प्रतिपादकस्य तदनुमानन्न भवति प्रतिपाद्यस्य वात एव तत् प्रतिपादकस्य परार्थमन्यथा स्वार्थमपि भवेत्। स्वयमपि तेन तस्यार्थकरणात्। उपचारे च प्रयोजनमुक्तं। वचनस्यान्येन प्रकारेणार्थसाधनाभावात्। ननु स्मरणेपि वचनं प्रमाणमप्रमाणम्वा(।)प्रमाणञ्चेत् किन्नार्थे। अ(था)प्रमाणं कथं ततः स्मरणम्। अत एवान्यथा। ततः प्रमाणमेव भवेन्न स्मरणं। स्मरणे च तत्कारकं न ज्ञापकमिति प्रमाणस्वभावः[1]। स्मरणमेव ततः कथं। अर्थे प्रतिबन्धाभावात्। धमो हि पावके प्रतिबद्ध इति जनयति स्मरणं। तद्यदि शब्दोपि प्रतिबद्धस्तथा स्मरणं जनयेत्।

तथाहि यद्यत्स्मरणं तदस्ति प्रतिबन्धतः[2]। यथास्ति धूमात्स्मरणं परोक्षे कृष्णवर्त्मनि ॥७९॥

तदसत्। न स्मरणमात्रकं प्रतिबद्धत्वादिति प्रतिबन्धः। स्मरणञ्च भविष्यत्यप्रतिबद्धत्वाच्चेति। कोनयोर्व्विरोधः। तथाहि।

आभोगदपि दृष्टेर्थे स्मरणं किन्न जायते। यतः कुतश्चिदर्थाद्वा प्रायेण सहचारिणः ॥८०॥

**अथ निश्चितरूपं स्मरणं सम्बद्धादेव नान्यतः।**

---

[1] B प्रमाणत्वाभावः [2] B प्रतिबद्धतः

तद्युक्तं। न ह्यसति प्रतिबन्धे तस्य निश्चयस्तत्र किन्तु शब्दान्निश्चितरूपं स्मरणमित्य-सिद्धमतो न सम्बन्धसिद्धिः। तथाहि। सम्बन्धमनालोचयतः संदेह एव भवति। शब्दाच्च सन्देह उपजायमान उपलभ्यत एव। कथन्तर्हि निश्चय(:)। एवमे(वै)तत्। यथाहाय-मिति। न प्रमाणादेव तन्निश्चयात्। यतः। पूर्व्वप्रवृत्तप्रमाणपर्यालोचनादेव निश्चयो न वचनमात्रात्। प्रमाणे तर्हि निश्चयो (न) वचनात्। तथापि वचनं प्रमाणमेव। अत्रोच्यते।

एतदिष्यत एवात्र प्रमाणे तत्स्वतो[1] नहि। अस्मिन्नर्थे प्रसिद्धेपि न काचिन्नः क्षतिर्यतः ॥८१॥

अर्थे हि वचनमप्रमा। प्रमाणे तु ·प्रमाणमिति नैव किञ्चित् क्षीयते न च प्रमाणमपि वचनात्सिध्यति तस्य स्वसम्वेदनेन सिद्धेः। स्मरणमात्रमेव तत्र भवति। निश्चयस्तु स्वसम्वेदनादेव। किं न वचनमात्रेण[2]। भवत्येवाभोगमात्रादपि[3] स्मरण-दर्शनात्। अथ यदाभोगतो न भवति तदा वचनं प्रमाणमिति चेत्। न सवेतत। यतः।

मिथ्यास्मरणमप्यर्थे वचनाज्जातमीक्ष्यते। वचनस्य विशेषो न सत्यासत्यतयेक्ष्यते ॥८२॥
ईक्षणेर्थेनुमानन्तत्स्वार्थमेव तदा भवेत्। आभोगादपि जायन्ते मिथ्या स्मरणवृत्तयः ॥८३॥

तस्मात्पूर्व्वप्रमाणस्वरूपावधारणमत्यन्तपर्यालोचनत एव कुतश्चित् लिङ्गादिति न वचनं प्रमाणं। प्रमाणेनाप्यर्थेनाप्याभोग इति। अनुमानमेव परोक्षेऽर्थे प्रमाणं तद्द्वारेण वचनं।

ननु प्रमाणं प्रतिबन्धग्राहीदानीमतीतमिति कथं प्रतिबन्धनिश्चयः। स्मरणमिदा-नीम्न च तत्प्रमाणं। तेन प्रमाणेन जनितत्वात् प्रमाणमेव। ततश्च।

प्रमाणात्स्मरणं जातमुपचारात्प्रमा न किं। अप्रमाणात्तु यज्जातमप्रमाणन्तदिष्यते[3] ॥८४॥

ननु प्रमाणादेतत्स्मरणमिति स्मृतिरेवात्रापि निबन्धनं। तदपि स्मरणमन्यतः स्मर-णात्परिशुद्धिभागिति कुतो निश्चयो जायतां।

दृढं स्मरणमेतच्चेन्मिथ्या दार्ढ्यंन्न किम्मतं। अर्थप्राप्तेर्न्न मिथ्या चेत् सिद्धोपस्थानमेव तत् ॥८५॥

अत्राप्युच्यते। उक्तमेवादावेतत्। "स्वरूपस्य स्वतो गति(:)। प्रामाण्यम्व्यव-हारेण।" (प्र० वा० १।४) व्यवहारश्चार्थप्राप्तिलक्षण एवोपलभ्यते नान्य उपयोगी।

ननु स्वत एव किञ्चिद् दृढं स्मरणं ततोयं प्रमाणदिति निश्चयो न व्यवहारादिति चेत्।

तदसत्। यतः।

अभ्यासादेव दृढता सास्ति प्राप्तिसमाश्रयात्। अन्यदभ्यस्तमन्यत्र दृढता नैव जायते ॥८६॥

यद्ययमर्थप्राप्तिलक्षणो व्यवहारो नाभविष्यदभ्यस्तस्तत्कथं प्राप्त्युपयोगिदार्ढ्यम्भवेत्। अन्यदभ्यस्तमन्यत्र दार्ढ्यमिति स एव व्यवहारोच्छेदो लोकस्य स्यात्। तस्मादेतावती गतिः संसारिणामिति सांव्यवहारिकं प्रमाणम(वि)चलितमिति न दोषः। तस्माद्वचनमनुमान-कारणत्वादनुमानमिति स्थितमेतत्।

नन्वाचार्यस्य पक्षवचनमभिमतमेव। यदाह।

"स्वनिश्चयवदन्येषां निश्चयोत्पादनेच्छया पक्षधर्मत्वसम्बन्धसाध्योक्तेरन्यवर्जनं[4]" ॥८७॥

---

[1] B. प्रमार्थे ततः [2] B. वचनमन्तरेण [3] B. मात्रादेव
[3] B. ०व्यताम् [4] प्रमाणसमुच्चये

नैतदस्ति । यतः ।

हेत्वर्थविषयत्वेन तदशक्तोक्तिरीरिता ।

यदाह । (अस्माकन्तु । )

तत्रानुमेयनिर्देशो हेत्वर्थविषयो मतः ।

अस्माकन्तु योनुमेयनिर्द्देशः स हेत्वर्थविषयत्वेन न साधनत्वेन(।) अतः साक्षात्साधनत्व-प्रतिक्षेपात् तस्य साध्यस्योक्तेरशक्तता कथिता[1] । कथन्तर्हि पक्षधर्मत्वं[2] सम्बन्धसाध्योक्ति-निर्द्देशाभ्युपगमः । नास्यायमर्थः । पक्षधर्मश्च सम्बन्धश्च साध्योक्तिश्चेति । अपि तु सम्बन्धोक्तिसङ्गता साध्योक्तिः सम्ब धसाध्योक्तिः । यत्कृतकं तदनित्यमिति व्याप्त्यन्तर्गता साध्योक्तिर्न प्रतिज्ञारूपेण । अवश्यं हि साधने व्यापकत्वं साध्यस्योपदर्शनीयं । अतोऽवय-वद्वयमेव दर्शनीयं । सम्बन्धेन रूपद्वयाक्षेपादेव त्रिरूपता हेतोः । तस्मादनित्यः शब्द इति नादावन्तेवा दर्शनीयम् । रूपद्वयमात्रकादेव साध्यस्य सिद्धेः ।

शक्तिस्तस्यापि चेद्धेतुवचनस्य प्रवर्तनात् ॥१८॥
तत्संशयेन जिज्ञासोर्भवेत्प्रकरणाश्रयः ।
विपक्षोपगमेप्येतत्तुल्यमित्यनवस्थितिः ॥१९॥

## ( ३ ) न्यायोक्तलक्षणे दोषाः

(क) प्रतिज्ञानिगमनयोरनुचितः—

अथापि स्याद्(।) यदि पक्षवचनाभावे हेतुवचनमतर्कितमुद्गुरपातायमानमसम्बद्ध-मिति न प्रवर्त्तते[3] । ततो हेतुवचनप्रवृत्तेः तदपि साधनमेवेति न । संशयजिज्ञासा प्रकरण तदवबोध इच्छानामपि[4] साधनत्वप्राप्तौ दशावयवता वाक्यस्य स्यात् । इदमत्र सन्दिग्धं भवतः । इदमेव जिज्ञासितं । इदमेव भवता[5] प्रस्तुतं । इदं मयावगतं । अत्र ममेच्छेति (।) एवं कूर्च्चशोभामारच(य)ता दशावयवं वाक्यं प्रयोक्तव्यं । तथा विपक्षोपगमेपि साधनं प्रवर्त्तते । ततस्तस्यापि साधनत्वप्रसङ्गस्तेन सह विपक्षस्य । अथ साध्यनिश्चयमात्रं संदेहादिप्रतिपादनमन्तरेणापि भवतीति न तैः शब्दप्रपञ्चमात्रोपयोगिभिः कश्चिदर्थगतोर्थस्ततः संशयादिपरित्यागः(।) तदनुवादस्याकिञ्चत्करत्वात्[5] । यद्येवं प्रतिज्ञावचनमप्यनुवादमात्र-मेव वादिनो नान्तरङ्गता तस्य ।

अन्तरङ्गं तु सामर्थ्यं त्रिषु रूपेषु संस्थितं ।
तत्र स्मृतिसमाधानं तद्वचस्येव संस्थितं ॥२०॥

त्रिरूपादेव तावत्स्वार्थानुमाने सोर्थः साध्यः प्रतीयते । नहि स्वार्थानुमाने साध्यार्थः प्रथममायाति[6] हेतोस्तेनाध्यवसितेन भवितव्यं । ततः स्वनिश्चयवदेव न प्रथमं साध्योपा-दानम् । पश्चाद्रूपादानमिति चेत् । पश्चादपि नोपादानं स्वार्थानुमानवदेव । परस्यापि

---

[1] B ०क्तिरशक्ता [2] B ०धर्म [3] B. ०बोधेच्छाना
[4] B. भवतः [5] B. ०स्याविवादित्वात [6] B. ०भाति ।

**यदा त्रिरूपादुपजायते प्रतीतिस्तदा तस्याः स्वार्थानुमानात्को विशेषः। तस्मात् प्रतिज्ञा निगमनयोरनुक्तिरेव। उपनयोपि न (व)क्तव्यः। दृष्टसामर्थ्यदर्शनपरत्वात्। न च तस्य तत्र सत्तामात्रादपरं सामर्थ्यं (।) तच्च सत्तामात्रं शब्दे पक्षधर्म(त्वा)देव गतं।**

**अथापि स्याद्(।) "आगमः प्रतिज्ञा। हेतुरनुमानं। प्रत्यक्षं दृष्टान्तः। उपनय उपमानं। सर्व्वप्रमाणव्यापारविषयप्रदर्शनपरं निगमनं"।**

**तदेतदसत् यतः।**

अनुमानात्प्रसिद्धिश्चेत्प्रमाणैरत्र किं परैः। नानुमानात्प्रसिद्धिश्चेत्प्रमाणैरत्र किम्परैः[1] ॥८८॥

**हेतुसामर्थ्यादेव यद्यसावर्थः प्रतीयते किमपरप्रमाणव्यापारेण। किमत्र कुर्मो यत्सर्व्वप्रमाणव्यापारो न खलु हेतुपरतन्त्रः कारकग्रामः। तथा भवन्पर्यनुयोगभागी किमयमेवं भवतीति। सत्यमेतद्यद्येवं स्यात्। न खलु प्रतिज्ञा प्रमाणन्ततः संशयोत्पत्तेरिति प्रतिपादनात्।**

**(ख) उपनयन(उपमान)निरासः—**

**उपमानं प्रमाणं (।) न खलु "तथा चायमि"त्युपमानमन्तरेण हेतोः साध्यसिद्धिः। नेवमस्ति। यतः।**

पक्षधर्मत्वमेवेदं उपमानेन दर्श्यते। तथा च कृतकः शब्द इत्येवमुपदर्शितः ॥८९॥

**सामान्येन हि प्रतिबन्धग्रहणे कथम्विशेषाधार(ताऽ)नित्यतादिप्रसिद्धिः। विशेषाधारतया कृतकत्वादेः प्रसिद्धेः। सैव च विशेषाधारता। तथा चायमित्युपमानप्रसिद्ध्या कुतश्चायमिति पक्षधर्मतया प्रदर्श्यते। उपमानं प्रमाणमपरं प्रसक्तमिति चेत्। न (।) अनुमानान्तर्गतत्वात्। गोसादृश्यादयं स गवय इतिविशेषसम्बन्धसाधनं शब्दस्योपमानविषयादपरो[2] न भवतीत्यनुमानमेव तत्र प्रमाणं। नानुमानमपरमुपमानवादिभिरपीष्यते। कृतकत्वेन सादृश्यं तस्य विषय इति चेत्। न। कृत(क)त्वद्वयव्यतिरेकेण सादृश्याभावात्। न दण्डाधारद्वयव्यतिरेकेणापरन्दण्डित्वसादृश्यं।**

सादृश्यं यदि नास्त्यत्र व्यतिरेके गतिः कथं। सदृशोयमिति प्राप्तमन्यकारणकल्पनं ॥९०॥

**तदसत्।**

कारणं कल्प्यते कार्याद् दृष्टिसम्बन्धतो यदि। कारणेन तदा प्राप्तं कारणस्यापि दर्शनम् ॥९१॥

**अपि च।**

यदि सादृश्यमत्रास्ति कस्मान्न प्रतिभासते। सूक्ष्मत्वादिति चेत् तत्त्वमदृष्टे कल्प्यतां कथं ॥९२॥
भावरूपातिरेकेण विकल्पेपि न भासते। निजाभासविविक्तस्य व्यवस्थेति महाद्भुतम् ॥९३॥
अनादिवासनासङ्गि कल्पनारोपितात्मकं। सादृश्यन्न परीक्षायां तत्त्वमस्येति नास्ति तत् ॥९४॥
वस्तुसम्बन्धतोनेन व्यवहारश्च सिध्यति। अर्थक्रिया कुतोर्थश्च सदृशादेव नेक्ष्यते ॥९५॥
अवान्तरविशेषश्चेत तत्रापि न किमीक्ष्यते।

---

[1] T. द्वितीयमाह्निकं (समाप्तम्) [2] B. ०षयः। स चानुमानविषयादपरो

**न खलु सदृशाभिमतादेवार्थक्रियावाप्तिर्येन[1] तदर्थक्रियाकारि सादृश्यम्भवेत्। महिष्या-दितोपि क्षीराद्यर्थक्रियावाप्तेः। अथावान्तरभेदस्तत्र विद्यते। तेन विसदृशी विसदृशाश्च तु सैवार्थक्रिया। यद्येवमवान्तरभेदो गवामपि परस्परतोस्त्येव। ततः सादृश्यानुरूपार्थक्रिया नास्त्येवेति न सम्वादः। किञ्च। विलक्षणप्रत्ययोत्पत्तेरपरत्र वैलक्षण्यमप्यस्तीति प्राप्तं।**

[1] B. क्रियास्ति येन

**सादृश्याभावमात्रेण तदिति चेत्। सादृश्यमपि वैलक्षण्याभावमात्रेणेति प्राप्तं। सादृश्यमेव[1] वैलक्षण्याभाव इति चेन्न कथम्भावोऽभावः। वैलक्षण्याभावमेव सादृश्यमिति किन्न भवति। वैलक्षण्यञ्चोभयवादिप्रसिद्धं। न। (तद्) अभावमात्रेण सादृश्यव्यवहारपरिसमाप्तेरनर्थ-कमपरं सादृश्यपरिकल्पनं तस्मान्नोपमानमपरं प्रमाणं।**

**(ग) प्रतिज्ञा (आगम) निरासः—**

**अथ प्रतिज्ञार्थ आगमसिद्ध इति प्रतिज्ञा आगम उच्यते। एवमपि किन्न[2] प्रतिज्ञायाः प्रयोजनं। तथा हि।**

आगमादेव सिद्धोयं यद्यर्थः किं प्रतिज्ञया। आगमान्न प्रसिद्धोयं यद्यर्थः किं (प्र)तिज्ञया ॥९६॥
अनागम प्रमाणेन किमर्थो न प्रसाध्यते। न प्रतिज्ञानमात्रेण सागमार्थत्वसाधनं ॥९७॥
अथाप्यत्यन्तमभ्यासात्प्रतिज्ञा हेतुमात्रतः। प्रतीतिसिद्धिस्तत्रास्ति प्रतिज्ञापदमर्थवत् ॥९८॥
तदापि पञ्चावयवमभ्यस्तत्वात्कुतो वचः। प्रतिज्ञापि तदा नासौ[3] पञ्च[4]धर्मत्वदर्शनात् ॥९९॥

**कथन्तर्हीदमुक्तमस्माकं तु पक्षनिर्देशो यः स न साधनत्वेनापि तु हेत्वर्थविषयत्वेनेति। एतदेवाह।**

**अख्यापिते हि विषये हेतुवृत्तेरसम्भवात्।**
**विषयख्यापनादेव सामर्थ्यमिति चेन्मतं ॥२१॥**

**कृतकत्वादित्येतावन्मात्रकादनित्य इत्युक्तेन ज्ञायते कस्यानित्यता साध्या। ततः स शब्दोऽनित्य इति प्रतिज्ञापदमुपादेयं। तदिदानीं हेतुविषयत्वेन नोपादीयतामन्यथा वा। सर्व्वथास्यां बाह्यव्यवस्थायामख्यापिते विषये हेतुवृत्तेरसम्भवात्। अवश्यम्विषयः ख्यापयि-तव्यः। ततः साध्यसिद्धेः प्रागवश्यं भावः प्रतिज्ञायाः साधनस्य साधनतान्यथा साधनत्वस्या-भावात्। प्रमाणफलोपन्यास इति चेत्। निर्देशे प्रमाणफलं प्रतिज्ञा पक्ष इति न नामान्तरकरणात्परिहारः। स चायं न्यायः शूलं चक्रमित्याहेति। अतो विषयख्यापनादेव तस्य शक्तता[5] सिद्धा। उक्तमत्र। संशयादीनामपि साधनत्वप्रसङ्गः।**

विषयादर्शनञ्चेदं व्याप्तिपूर्व्वकवाचकं। अन्यथा वा विधीयेत तदिदं द्वयमप्यसत् ॥१००॥

**विषयः प्रतिज्ञया निदर्शनीय इत्यत्र विचार्यते। किम्व्याप्तिपूर्व्वकप्रयोगे। अथ हेतोः पञ्चम्या निर्देशे।**

**किञ्चातः।**

---

[1] B. मेव [2] B. किम् [3] B. प्रयोक्तव्या।
[4] B. हेतोः विदुषामित्यादि। [5] M. सिद्धो चेत्तस्य शक्तता

**व्याप्तिपूर्व्वं[1] विनाप्यस्मात्कृतकः शब्द ईदृशः ।**
**सर्व्वेऽनित्या इति प्रोक्तेऽप्यर्थात्तन्नाशधीर्भवेत् ॥२२॥**

यत्कृतकं तत्सर्व्वमनित्यमिति सर्वोपसंहारेण व्याप्तिदर्शने तद्व्याप्तं कृतकत्वं तत्रोपदर्शितं। तथाभूतमेवेत्यनित्यता शब्दस्येति ज्ञायत एव किं प्रतिज्ञापादेन विषयोपदर्शनार्थेनेत्यन्यथैव[2] विषयस्य प्रसिद्धेः । अथ प्रतिज्ञा(पद)मन्तरेण कथम्विरुद्धहेतुनिश्चयः । नैष दोषः ।

प्रतिवादी विरुद्धस्य परिज्ञाता भवेदिति । प्रतिज्ञा क्रियते नैव स्वबधाय किमुद्यमः ॥१०१॥

यदि प्रतिज्ञापदानुपादानं कथं विरुद्धोयं हेतुरिति ज्ञायते परेणेति कस्यायं पर्यनुयोगः वादिन इति चेत् । न सम्यगेतत् । भद्रमेवापतितं मा ज्ञासीत्प्रतिवादी किं मया तस्य सौकर्यं करणीयं (।) व्याप्तिपूर्व्वके प्रयोगे शास्त्रकारेण कर्त्तव्यतयाभिहिते विहितो विरुद्धस्यासम्भवाद्वादिनो महानुपकार इति च शास्त्रकारस्यापि न दोषः । न ह्यसौ वादिबधाय शास्त्रकृत् । प्रतिवादिनोनुग्रहः कर्त्तव्यं एवेति चेत् । कः प्रद्वेषोऽन्यत्रेति यत्किञ्चिदेतत् । यदि नित्यः शब्दः कृतकत्वात् । यत्कृतकन्तदनित्यमिति । अत्र विरुद्धहेतुचोदनं । तदा न कश्चिदनुन्मत्तस्तदैव नित्यत्वं प्रतिज्ञायानित्यत्वेन व्याप्तिमुपदर्शयेत् । अथ नित्यत्वेन व्याप्तिमुपदर्शयेत्तदा व्याप्तिविपर्ययादेव विरुद्धत्वप्रतीतिः । अपि च । यस्य प्रतिज्ञापदप्रयोगस्तदपेक्षया विरुद्धाभिधानं । नित्यः शब्दः कृतकत्वादिति चावसरे । अथ प्रतिज्ञापदमन्तरेणावृष्टमुद्गरपातायमानं साधनवाक्यमुद्वेगाय भवेत् । अतस्तदुपादानं । यतः प्रकरणार्थनिवेदनाय[3] प्रतिज्ञा ।

अत्रोच्यते । प्रस्तावमन्तरेण प्रतिज्ञावचनमप्यवृष्टमुद्गरायत एव । प्रतिवादिना प्रस्तावः कृत इति चेत् । कृतं प्रतिज्ञापदेनेत्यलं प्रसङ्गेन ।

## २. प्रतिज्ञा न साधनावयवः

ननु प्रतिज्ञापदमन्तरेण साधनन्यूनता भवेत् । तथा चाह । **हीनमन्यतमेनाप्यवयवेन** प्रतिज्ञादीनां **न्यूनं**[4] ।

साधनावयवत्वे हि सिद्धे तन्न्यूनता भवेत् । साधनावयवत्वञ्च प्रतिज्ञाया निराकृतं ।.१०२॥

साधनावयवेन न्यूनं साधनं न्यूनं भवेत् । प्रतिज्ञायाश्च न साधनावयवत्वं । यतः ।

**अनुक्तावपि पक्षस्य सिद्धेरप्रतिबन्धतः ।**
**त्रिष्वन्यतमरूपस्यैवानुक्तिर्न्यूनतोदिता ॥२३॥**

नहि तदसम्बद्धं तदवयवः । नापि तेन न्यूनं न्यूनं । अनुपयोगिनापि न्यूनत्वेनानुपयोगिनामनङ्गन्तत्त्वाबन्यूनतैव न भवेत् । अथानुपयोग्यभावेपि न न्यूनं । प्रतिज्ञापदेनापि तथा सत्यसता समानमित्यचोद्यं । यदि च प्रतिज्ञासाधने सत्युपगम्यते[5] तदा **साध्यनिर्देशः प्रतिज्ञेति**[6] प्रतिज्ञालक्षणमतिव्याप्ति भवेत् । साध्यमसिद्धमपि साधनं भवतीत्य-

---

[1] M. उक्तमत्र विना० [2] B. ०र्थेनान्यथैव [3] B. निवेद०
[4] न्यायसूत्रं [5] B. साधनमुच्यते [6] B. न्यायसूत्रं

सिद्धहेत्वभिधानमपि प्रतिज्ञा भवेत्। यस्य तु न प्रतिज्ञासाधनन्तस्य साध्यनिर्द्देश इत्यपि प्रतिज्ञालक्षणेन हेत्वाभासस्य प्रतिज्ञात्वमसाधनभूतस्य साध्यनिर्द्देशस्य प्रतिज्ञात्वात् ।

अतः ।

**साध्योक्तिम्वा प्रतिज्ञां स वदन्दोषैर्न्न युज्यते।**
**साधनाधिकृतेरेव हेत्वाभासाप्रसङ्गतः ॥२४॥**

न खलु साधनमसाधनं भवति । ततः साधनत्वात्तत्राप्रसङ्गः । साधनत्वेन हेत्वाभासस्याधिकृतत्वात् । साध्यनिर्द्देशत्वाभावात् । प्रतिज्ञालक्षणस्याभावात् । साधनाभासनिर्द्देशो न प्रतिज्ञा ।

ननु साध्यनिर्द्देशः प्रतिज्ञा न साधननिर्द्देश इति कुतः। साधनाभासस्य प्रतिज्ञात्वप्रसङ्गः ।

अत्रोच्यते । साध्यनिर्द्देश इत्यत्र यदि साध्यत्वेन निर्द्देशः साध्यनिर्द्देशस्तदा न भवति साधनाभासः प्रतिज्ञासाध्यत्वेनानिर्द्देशात् । किन्तु निर्द्देश्यमनिर्द्दिष्टम्भवेत् । साध्यत्वेन निर्द्देश इति न ज्ञायते कस्य निर्द्देशः ।

अथ साधनमर्हति यः तस्य निर्द्देशः । तदापि कथं निर्द्देश इति प्रकारानिर्द्देशात् । साधनत्वेन साध्यत्वेन वेति विशेषाभावात् । साधनाभासस्यापि स्यात्प्रतिज्ञात्वं । कथञ्च साधनत्वेन साध्यत्वेन च निर्द्देश इति वक्तव्यं। पञ्चम्या परया (वा)ऽप्रथमया निर्द्देशः स साधनत्वेन । प्रथमया साध्यत्वेन । कुत एतत् । तथा शब्दार्थप्रसिद्धेः । यद्येवं साध्यनिर्द्देश इति प्रतिज्ञालक्षणन्न विधातव्यं। साध्यतया निर्द्देश एव प्रतिज्ञेति लोके प्रसिद्धः शब्दार्थः। पक्षस्य तु लक्षणम्विप्रतिपत्तिनिरासार्थमिति वक्ष्यामः। तस्मात्साध्यनिर्द्देश एव प्रतिज्ञेति लक्षणवैयर्थ्यात्साध्यनिर्द्देशः प्रतिज्ञैवेति साधनाभासस्यापि प्रसङ्गः ।

ननु भवत्पक्षेपि साध्यनिर्द्देशः प्रतिज्ञैवेति कथं न हेत्वाभासः प्रतिज्ञा। नन्वसाधनभूतो यः साध्यनिर्द्देश इति परिहृतमेतत् ।

ननु साधनभूतोपि स्यात्कदाचिदिति कः संदेहनिवृत्तिहेतुः। विजातीयत्वमेवेति ब्रूमः ।

तथाहि ।

**अविशेषोक्तिरप्येकजातीये संशयावहा ।**
**अन्यथा सर्व्वसाध्योक्तेः प्रतिज्ञात्वं प्रसज्यते ॥२५॥**

अयन्तावदिदं चोद्यचञ्चुश्चोदयितव्यः। क्रियते घट इति साध्यनिर्द्देशः प्रतिज्ञा प्रसक्ता। ज्ञापकहेत्वधिकारात्तु तदपेक्षः साध्यनिर्द्देश एव प्रतिज्ञा। यद्येवमसाधनभूतः साध्यनिर्द्देशः प्रतिज्ञेति साधनाभासो न प्रतिज्ञेति सिद्धमेतत् ।

**सिद्धोक्तेः साधनत्वाच्चेत्परस्यापि न दुष्यति ।**
**इदानीं साध्यनिर्द्देशः साधनावयवः कथं ॥२६॥**

ननु परोप्येतद् ब्रूयात्। साधनभूतः साध्यनिर्देशः प्रतिज्ञा। साधनाभासस्तु न साधनमसिद्धत्वादसाधनत्वान्न प्रतिज्ञा प्रतिज्ञायाः साधनत्वात्। यद्यसिद्धत्वेन साधनाभासो न साधनं प्रतिज्ञाप्यसिद्धार्था कथं साधनं। असिद्धत्वेनैव साधनत्वं प्रतिज्ञायाः। यदि

सिद्धार्था स्याद्विषयोपदर्शनत्वमेव न भवेत्। यद्येवं साधनाभासोपि प्रतिज्ञात्वेन साधनमनिवारितमेव। भवतु प्रतिज्ञात्वेन साधनं क इवात्र दोष इति चेत्। हेतो(:) असिद्धत्वदोषो न स्यात्।[१] हेत्वाभासरूपा प्रतिज्ञा साध्यरूपायाः प्रतिज्ञाया न साधनं[3] ततो दोष एवेति चेत्। साधनत्वे कथन्न साधनं। स्वार्थापेक्षया साधनं चेत्। नार्थसहितस्य साधन(त्वा)त्। न च स एव तस्य साधनं। स च[४] शब्दगडुमात्रस्य साधनत्वं। सर्व्वत्राभिधेयस्य साधनत्वात्। अभिप्रायनिवेदने तु प्रमाणतोक्तैव।

अथार्थ एव साधनं। सर्व्वा तर्हि प्रतिज्ञा बहिरर्थप्रत्यायनसमर्थेति तत एव साध्यप्रसिद्धिः स्यात्। तस्मात् साक्षात्पारम्पर्येण च ततः सिद्धेरनुत्पत्तेर्न्न प्रतिज्ञा साधनं।

अन्यः[५] पुनराह। प्रतिज्ञा साधनं साभासत्वेनोक्तेः। साभासत्वस्य साधनत्वेन सह दर्शनात्।

दूषणवाद्याह। प्रत्यक्षेणानेकान्तः। वचनात्मकत्वेन विशेषणाददोष इति परिहारः। दूषणेनानेकान्त इति चेत्। अदूषणत्वे सतीति परिहारः।

तदेतत्सकलमसत्। तथाहि।

**साभासोक्त्याद्युपेक्षपरिहारविडम्बना।**
**असम्बद्धा तथा ह्येष न न्याय इति सूचितम्[६] ॥२७॥**

न खल्वदर्शनमात्रेण विपक्षे[७] हेतोर्गमकत्वं(।) न चास्ति नैकपरिहारो[८] यथाकथञ्चिद्विशेषणेन विपक्षविरुद्धेन तत्परिहारात्। एतच्चोक्तं प्राक् (।) अध्ययनमध्ययनान्तरपूर्व्वकमिति भारताध्ययनेनानेकान्तपरिचोदने वेदेन विशेषणादिति परिहार उक्तेः। कः पुनर्व्वेदे विशेषः। यद्यन्यथाध्येतुं न शक्यते न भवत्येव परिहारः। नहि विशेषणमविरुद्धं विपक्षेणास्माद्धेतुं व्यावर्त्त(यि)तुमलं। अन्यथाऽनेकत्वे सतीति को वक्तुं न शक्नुयात्। तस्मादसदेतदुपक्षेपपरिहारादिकमिति पूर्व्वकमेव दूषणं प्रतिज्ञायाः साधनत्वस्य।

## ३. पक्षलक्षणकरणे प्रयोजनम्

यदि तर्हि प्रतिज्ञाया नावश्यं निर्देशः किमर्थं (तर्हि) पक्षलक्षणं। हेतुसामर्थ्याद् गम्यमान एव साध्यार्थः स च पक्षो भवत्य(न्य)था वा किमनेन विचारेण। यथा प्रतीयते तथा भविष्यति।

सत्यमेतत्।

**गम्यार्थत्वेपि साध्योक्तेरसंमोहाय लक्षणम्।**
**तद्यतुर्ल्लक्षणं रूपनिपातेषु स्वयं पदैः ॥२८॥**
**असिद्धासाधनार्थोक्तवाद्यभ्युपगमग्रहः।**

---

[१] B. पुस्तके नास्ति　[२] B. प्रतिज्ञया न साधनं
[३] B. दोष एवेति　[४] B. न च　[५] B. न्यायमुख-टीकाकारः
[६] B. वर्णितं　[७] B. न　[८] B. न चानैकान्तिकपरिहारो

लक्षणं हि नाम सकलमेव व्यामोहध्वस्तये[1] प्रकाशनीयमपरमपि च वचः। तत्र च साध्येतरविपर्ययविषया महतामपि महत्यो विप्रतिपत्तयोऽनपनीयमानाश्च महान्तमनर्थपथप्रस्थाननयमुपनयन्ति[2]। न खल्वनिराकृतो दोषसमागमः श्रेयसे। तथा हि। परार्थाश्चक्षुरादय इति परत्वमात्रमसाध्यमपि साध्यमित्याहुः। साध्यमप्यात्मार्थमसाध्यं। सिद्धमपि शास्त्रात्साध्यमाहुः शास्त्रप्रामाण्यवादिनः। **साध्यनिर्देशः प्रतिज्ञे**त्यनेन लक्षणेन साधनत्वेन निर्दिष्टस्यापि पक्षत्वं प्राप्तमिति च विप्रतिपत्तिः **शास्त्र**कारे(णे)ष्टमसाध्यमपि। अनभ्युपगमेपि साध्यं ततस्तन्निराकरणाय चतुर्भिः स्वरूपनिपात इष्टः स्वयं पदैः असिद्ध(:) असाधन अर्थोक्तवाद्य[3]भ्युपगमग्रहो वेदितव्यः। असिद्ध एव साध्यः। एवमन्यदपि। ततोऽवधारणादेतद्विपर्ययनिरासो वेदितव्यः। (तत्र न्यायो) यदि शास्त्रादेव प्रमाणभूतादसावर्थः प्रसिद्धः किं पुनः प्रमाणेनापरेण साध्यते। परं प्रति प्रमाणन्न शास्त्रमिति तदर्थमिति चेत्। आत्मनः कथं प्रमाणं। अभ्युपगमादेवेति चेत्। परोप्यभ्युपगमयितव्यः। तथा यदि तत्साध्यं किमिति साधनत्वेन निर्देशः। अर्थोक्तस्य त्वसाध्यत्वे वाक्यार्थज्ञतैव न स्यादन्यत्र च सिद्धसाध्यता। प्रकरणसामर्थ्यशब्दान्तरसन्निधानेभ्यः शब्दार्थनिश्चयात्। अप्रकरणज्ञः पुनर्न्न विवक्षितमर्थं प्रत्येतीति कस्तेन सह व्यवहारमार्गावतारः। तथा च प्रवाद उदीरितोर्थः पशुनापि गृह्यते कस्तत्र सामर्थ्यातिशयः। अत एवाह।

**अनुक्तोपीच्छया व्याप्तः साध्य आत्मार्थवन्मतः ॥ २९ ॥**

तद्यथा संघातानां परार्थ्ये साध्ये आत्मार्थत्वन्तदनुक्तमपीच्छया व्याप्तं साध्यमिति तत्प्रदर्शनार्थमिष्टग्रहणं। इच्छया व्याप्तन्तदित्येव कुत इति चेत्। प्रकरणात्। प्रकरणानुरूपा हि वाञ्छा भवत्यन्यथाऽप्रेक्षावत्वप्रसङ्गात्। तथा हि। अन्यत्प्रकृतमन्यच्च साध्यते। यदि वाद्यसौ न भवत्येव दोषोऽयमेव तस्याञ्च सो[4] भवेत्। यद्यसावात्मनैव ब्रूयादप्रस्तुताभिधानद्वारेणात्मनो दोष एव तेनोद्भावितः स्यात्। भवतु तस्य दोषः। प्रतिवादिनोपि न भूतदोषोद्भावनमिति भवेदेव दोषः (न।) यद्यर्थप्रतिपादनेन दोषाभावात्। यदाह।

"आत्मा परश्चेत्सोऽसिद्ध" इति।

## ( १ ) "स्वयं" शब्दप्रयोजनम्

यद्यात्मा परः स दृष्टान्तेन सिद्धः। यदि तु परमात्रसाधनं तदा न प्रस्तुतसाधनं। सिद्धसाधनं वा। एवञ्च वदतः कः प्रतिवादिनो दोषः। यदि तर्हीष्टग्रहणमिच्छया व्याप्तस्यानुक्तस्यापि साध्यत्वप्रतिपादनार्थं। तथा निष्टनिवृत्त्यर्थमपि[5] व्यवच्छेदफलं वाक्यं यतः। न चानिष्टन्नाम किञ्चित्। कस्यचित्केनचिदिष्टत्वात्। अत इष्टग्रहणम्वादिन इष्ट इति प्रतिपादनार्थं। तत्र स्वयमित्यर्थो लभ्यत एव। शास्त्रकारेष्टमपि यदि तस्येष्टमिष्टमेव तदिति न तन्निवृत्तिः। अनिष्टत्वे निवृत्तिरिति चेत्। न। इष्टग्रहणेनैव निवृत्तेः। यथा प्रतिवादिप्राश्निकानामिष्टन्न साध्यमितीष्टग्रहणेन साध्यते। तथा शास्त्र-

---

[1] B. व्यस्तेय० [2] B. ०मुपजनयन्ति [3] B. ०रसिद्धासाधनार्थोक्तवाद्य०
[4] B. तस्याञ्जसो [5] B ०मिति

कारेष्टस्यापि निवृत्तिस्तत एव स्वयंग्रहणेन सर्व्वस्यान्येष्टस्य[1] निवृत्तिरिति किं शास्त्रमात्रमेव प्रयोजनमुक्तमाचार्येण(।) स्वयमिति शास्त्रानपेक्षमभ्युपगमन्दर्शयतीति ।

अत्र परिहारः ।

**सर्व्वान्येष्टनिवृत्तावप्याशंकास्थानवारणं ।**
**वृत्तौ स्वयं श्रुतेः प्राह[2] कृता चैषा तदर्थिका ॥३०॥**

यद्यपि नामेष्टग्रहणेनैव वाद्यपेक्षया सर्व्वान्येष्टनिराकरणं तथापि शास्त्रकारेष्टे भवत्येव साध्यताशंका । शास्त्रकारेष्टं हि भवत्यवश्यं वादिनापीति कस्यचिदस्ति मतिः । अन्यथा न शास्त्रविरुद्धो हेतुर्गमक इति । तत आशंकास्थानवारणार्थं स्वयं ग्रहणं । अत एव स्वयं ग्रहणस्य शास्त्रनिवृत्तिरेव प्रयोजनमुक्तं (।) यत एषा स्वयं श्रुतिः शास्त्रेष्टनिवृत्तये कृता । अन्येष्टनिवृत्तिस्त्वयत्नत एव सिद्धा । तस्मादिष्टग्रहणस्यैतदेव प्रयोजनं । अनुक्तमपीच्छया व्याप्तं साध्यं । परार्था इत्यसंहतपरार्थत्वं साध्यमिष्टग्रहणात् ।

### (२) "विशेष" शब्दप्रयोजनम्

ननु स विशेषो धर्मधर्मिणोर्न्न साध्यः साध्यत्वे विशेषता कथं । न साध्यविशेषयोरेकता । उक्तञ्चाचार्येण "धर्मविशेषविपर्ययसाधनाद्धि विरुद्ध" इत्यादि । तदाह ।

**विशेषः तद्व्यपेक्षातः कथितो धर्मधर्मिणोः ।**

स एव वाञ्छया विषयीकृतः साध्यो विशेष उक्तः । परव्यपेक्षया । उक्तमेव साध्यमिति । सुकुमारप्रज्ञः परः । तथाहि ।

"परार्थाश्चक्षुरादय" इति

## ४. आत्मवाद-चिन्ता

परेणोक्ते दूषणवाद्याह ।

आत्मा न सिद्धो दृष्टान्ते तदर्थत्वं न सिध्यति। साध्यं तन्नेति चेत्तर्हि स विशेषोस्तु तस्य वः ॥१०३॥

नात्मार्थत्वं साध्यमस्माकं परार्थत्वमात्रस्य साधनात् । यदि न साध्यं तस्यैव स विशेष इति भवतु विशेषविरुद्ध इति साध्यतामेव कस्मान्न प्रतिपादयति । न परापेक्षया परिहारा भिप्रायात् । तावन्मात्रेण परनिराकरणे कः स्वपक्षसाधनप्रयासं विदधीत । कथमिदानीमनुक्त[3]मपि साध्यं । उक्तत्वादुक्तमेव साध्यमन्यथातिप्रसङ्गात् । अनुक्तत्वाविशेषात् सर्व्वमेव साध्यं । न च दृष्टान्ते सर्व्वमुपदर्शयितुं शक्यं । तथा च विपर्ययसाधनात्सर्व्व एव न हेतुर्भवेत् । अत्राह ।

**अनुक्तावपि वाञ्छाया भवेत्प्रकरणाद्गतिः ॥ ३१ ॥**
**अनन्वयो हि दृष्टान्ते दोषस्तस्य यथोदितः ।**
**आत्मा परश्चेत्सोऽसिद्ध इति तत्रेष्टघातकृत्[4] ॥ ३२ ॥**

[1] B ०स्यानिष्टस्य [2]. M. ०श्रुतेनाह [3]. B. मयुक्तं [4]. M. ०घातवत्

यद्यपि नामेदमेवानेनोक्तं तथापि प्रकरणादयमत्रार्थो द्रष्टव्यः । न खलु सकलं वचनं प्रकरणनिरपेक्षमर्थप्रत्यायनसमर्थं ।

तस्माद्विचार्यं कैम्पर्यमार्यमर्यादया स्थितिः । वाक्यार्थनिश्चयं कर्त्तु प्रवर्त्तन्ते जगद्गताः ॥९८॥

इयमेव सकलविदग्धजनव्यवस्थितिः । अत्र च परार्थाश्चक्षुरादय इति । आत्मार्था इति वाक्यार्थः । अतश्चानन्वयोपि तदपेक्षया दृष्टान्तस्य तस्य साध्यत्वात् । आचार्येणापि तथैव दर्शितः । "आत्मपरश्चेत्सोऽसिद्धः;" इति दृष्टान्तेन सिद्ध इति द्रष्टव्यं । ततस्तस्येष्टस्य विपर्ययसिद्धचाऽस्यमिष्टविघातकृत् ।

ननु कथमेतत् ज्ञायते प्राकरणिक एव साध्य(आत्मा)इति । तदाह ।

**साधनं यद्विवादे न न्यस्तं तच्चेन्न साध्यते ।**
**किं साध्यमन्यथानिष्टम्भवेद्वैफल्यमेव वा ॥३३॥**

यदि यत्र विवादस्तदेव न साध्यते आत्मार्थत्वं यत आत्मनि सिद्धः[1] । तदान्यसाधनमप्यसम्बद्धमिति न कि(ञ्चि)त्साध्यं । तथा चोभयपक्षसाधनमपेक्ष्यानिष्टम्वा विरुद्धसाधनात् तत्परित्यागे वा साधन वैफल्यम् (।) सिद्धसाधनताप्राप्तेः ।

अथात्माऽसाध्योपि सिध्यति साधने परत्वमात्रस्यापि । न चासाध्यविषयोऽनन्वयदोषः प्रतिवादिनोद्भावयितव्यः । साध्यापेक्षत्वादनन्वयादिदोषस्य[2] ।

नैतदस्ति । यस्मात् । यद्यस्मिन्[3] साध्यमानेप्यसाध्यं सिध्येदिष्टं सर्व्वसिद्धिस्तथा स्यात् । प्रत्यासत्तेस्तारतम्यं विना हि सिध्येत् किंचिन्नान्यत्(एत)त्कुतः स्यात् । यदि साध्यमानेन्यस्मिन्नन्यत्सिध्यति तदेष्टवद्विपर्ययोपि सिध्येत् । तथा[4] च सर्व्व एव हेतुर्व्विरुद्धो दृष्टान्तश्च साध्यविकलः स्यात् । परस्परविरुद्धस्य सकलधर्मकलापस्य क्वचिदनन्वयात् । इष्टत्वात्तदेव साध्यं सिध्यति नान्यदिति चेत् । न । इच्छावशेन हेतुव्यापारविभागायोगात् । तदा च परस्य विपर्ययस्येष्टत्वाद् द्विपर्ययसिद्धिरनिवार्या । इच्छाया विशेषाभावात् । न च प्रतिबन्धविशेषोस्ति येन वाद्यभिमतस्य सिद्धिर्न्न प्रतिवादिनः । विवक्षितधर्मानन्वयदोष इति चेत् । यद्येवं न कश्चिदिष्टविघातकृद्विरुद्धो भवेत् । उक्तेन सर्व्वत्रानन्वय[5] सद्भावात् । उक्तेनानन्वये साध्यविपर्ययसाधनादेव विरुद्धः । विशेषविरुद्धस्त्वनुक्तापेक्षयैवान्यथाभावात् ।

**सद्वितीयप्रयोगेषु निरन्वयविरुद्धते ।**
**एतेन कथिते साध्यं; सामान्येनाथ सम्मतं ॥३४॥**
**तदेवार्थान्तराभावाद्देहानाप्तौ न सिध्यति ।**
**वाच्यं शून्यं प्रलपतां तदेतज्जाड्यचिन्तितम्[6] ॥३५॥**

## ( १ ) चार्वाकमतनिरासः

(स)द्वितीयसाधनाय प्रयोगेषु निरन्वयदोषो विरुद्धता वानेनैव न्यायेन प्रतिपादिता । यथा विभक्त[7]चैतन्यशरीरलक्षणपुरुषघटान्यतरसद्वितीयो घटः । अनुत्पन(?न्न)त्वात्[8] ।

---

[1] B. आत्मसिद्धिः [2] B. साध्यापेक्षया नन्वयं दोषस्य [3] B. परार्थत्वमात्रे साध्ये
[4] B. तदा [5] B. सर्वत्रान्वय [6] B. वलिगतं—इति हे. [7] भिव्यक्त [8] अनत्पल

**कुड्यवत् इति चार्वाका आहुः । आविर्भूतचैतन्यविशिष्टः कायः पुरुषः । नान्य आत्मादिः परलोकी । तत्र (च) प्रत्यक्षाविषयत्वादनुमानमेव साधनमिति हेतुमाहुः । अभिप्रायः न पुरुषस्तथाभूतः साधयितुं शक्यः । शृङ्गग्राहिकया दृष्टान्ते(ऽ)सिद्धत्वादिति सामान्येनान्यतरसद्वितीयत्वं साध्यते(।) उपायाः साध्यसाधकाः ।**

**अत्रोच्यते ।**

सामान्यम्वा विशेषो वा यः स वा साध्यतामिह। विवक्षितेन साध्येन भाव्यमित्येकनिश्चयः ॥९९॥

**तात्पर्यार्थः । तथा हि पुरुष एव शब्दे नोपात्तस्तदपेक्षया वाऽनन्वय इति पूर्व्वको न्यायः । अथ सिध्यति केवलं । न तु तत्साध्यं । तदाप्यतिप्रसङ्ग इति प्रतिपादितं ।**

**ननु नात्र विशेषाक्षेपः । तदसत् । यतो देहस्यासिद्धौ व्यक्त्यभावात्कुतः सामान्यं । नहि गोव्यक्त्यभावे सामान्यं । व्यक्तिविनाशेऽपि सामान्यं न विनश्यति नित्यत्वात् व्यञ्जकाभावान्न व्यवहारगोचरः । व्यक्तिसम्भवे पुनस्तथा भावाच्चेत् । न(।) अत्र सम्भवाभावात् । नहि तथाभूतः पुरुषः प्रमाणमन्तरेण सम्भवी । यथा वा व्यक्त्यभावे सामान्यं न व्यवहारगोचरस्तथान्यतरसामान्यमपि । प्रमाणादत एव सिद्धिरिति चेत् । न(।) इतरेतराश्रयदोषप्रसङ्गात् । प्रमाणेऽनुमाने सति सामान्यं सामान्येनुमानं । न ह्यसिद्धस्य सामान्याकारत्वमिति । तस्मादन्यतरत्वादिति यथा न हेतुः तथा साध्यमस्ति[1] । तथाहि । पक्षसपक्षान्यतरत्वादिति पक्षत्वमेव शब्देन पक्षसपक्षान्यतरत्वं द्वयोः शब्देऽविरोधाभावात् । विकल्पविषयत्वादन्यतरशब्दस्य । न च नियतधर्मसम्भवेऽपरोपक्षेपः । न चोपक्षेपमन्तरेणापरस्यान्यतरश्रुतेरवतारः । तस्मादसदेतत् ।**

**अपि च यदि तथाभूतपुरुषस्यैवात्र न प्रतिपादनं तदा पुरुषघटान्यतरसद्वितीयो घट इत्येवोक्तम्भवेत् । किमर्थमुभयत्र घट एवोपात्तः । तत्रायमभिप्रायः साधनवादिनः । यदि धर्मो घट उपादीयेत । स घटेन सद्वितीय इति सिद्धसाधनं स्यात् । सामान्येनापि सद्वितीयत्वेऽयमेव दोष इति प्रतिपादितं । तदनाक्षेपे किं साधनफलमनिष्टम्वा । तस्मादुभयत्र घटजातेः प्रतिपादनं सामर्थ्यात् पुरुषेणैव सद्वितीय(त्व)प्रतिपत्तिर्भवेदित्यर्थः । तथा च नियमेन पुरुष एवात्राभिधातुमिष्ट इति व्यर्थमन्यतरग्रहणं । तदयं स्ववचनविरोधः माता वन्ध्येति वचनवत् । तथाहि ।**

सामान्यान्नियम. प्राप्तौ विकल्पोन्यतरोक्तितः । नियमश्च विकल्पश्च द्वयमेकत्र दुर्लभं ॥१००॥

**स ह्युभयत्र[2] घटोपादानाद् घटजातेः स्वेन सद्वितीय(त्वा)योगात् । सामर्थ्यात्पुरुष एव साध्यः । कथमन्यतरोक्तिस्तद्विपर्ययप्रतिपत्तये । न (।) अन्यतरोक्तेरन्वयार्थत्वात् । न कुड्यस्य पुरुषेणान्वयोस्ति । नन्वन्येनान्वये कथमन्यस्य पुरुषस्य सिद्धिः । सामर्थ्यादिति चेत् । कस्येदं सामर्थ्यं(।) किं हेतोरथ वचनस्य । न तावद्धेतोर्घ्नानुत्पलत्वं पुरुषसद्वितीयत्वे प्रतिबद्धं । अनैकान्तिकत्वात् । तथाहि । परलोकिपुरुषघटान्यतरसद्वितीयो घट इत्यपि साधनात् । भवतु विवक्षान्तरेऽन्यस्यापि साधनमिति चेत् । न । विवक्षापेक्षया साधनत्वासम्भवादिति प्रतिपादितं ।**

---

[1] B. मपि ।

[2] B यद्युभयत्र

अथ वचनसामर्थ्यात्तदेतद्विलक्षेक्षितं । न च वचनसामर्थ्यादर्थाः सिध्यन्ति तत्र प्रतिबन्धाभावात् । तथा हि । पीनो दिवा न भुङक्ते चेत्येवमादि उक्तिसम्भवे नक्तं भुजिरवश्यं न मिथ्योक्तेरपि सम्भवात् । यदि तथाभूतः पुरुषः प्रमाणप्रापितसन्ततः[1] स्यात् घटवद् । तदा प्रमाणमूलविवक्षाप्रयुक्तं वचनं परार्थानुमानं भवेत् । स्वदृष्टार्थ[2]-प्रकाशनस्य परार्थानुमानत्वात् । अनेनैव प्रमाणेन सिद्ध इति चेत् । न(।) इतरेतराश्रय-दोषादिति प्रतिपादितं । प्रमाणे सति साधनं साधने सति प्रमाणमिति ।

## (२) अनित्यताविचारः

ननु नाशेपि साध्ये समानो न्यायः । तथाहि । किं शब्दगतमनित्यत्वं साध्यमथ घटगतं । यदि शब्दगतं न तत्सपक्षोऽथ घटगतं न तच्छब्द इति विरोधः । तथा कृतकत्व-मपि । अथैतद्विकल्पसमं साधर्म्येपि विशेषोक्तिः विकल्पसमं(।) तथा सति पुरुषेपीति समानं ।

अत्र परिहारः ।

**तुल्यं नाशोपि चेच्छब्दघटभेदेन कल्पने ।**
**न सिद्धेन विनाशेन तद्वतः साधनाद् ध्वनेः ॥३६॥**
**तथार्थान्तरभावे स्यात्तद्वान् कुम्भोपि ;**

यथा पुरुषो न सिद्धो वाक्यसामर्थ्याप्रापितः । तथाऽनित्यत्वन्न सिद्धमिति नास्त्येतत् तथा(।) यथा पक्षसपक्षान्यतरत्वं तथा कृतकत्वमित्यपि । घटे ह्यनित्यता प्रागभावप्रध्वं-साभावमध्यस्थता स्वभावाप्रसिद्धा । यदि नाम प्रसिद्धा सान्यैव । ततः शब्दः कथमनित्यः । न खलु सैवानित्यता शब्दे तत्सदृशी भविष्यति ।

सादृश्यं सिध्यति कथमन्येनान्वयसम्भवे । तथा चेत्पुरुषोपि स्यात्सिद्धिभागुत्तरं वृथा ॥१०१॥

तदसत् ।

अन्यत्व एव सादृश्यमन्यथाभाक्कथम्भवेत् । एकत्वे हि न सादृश्यं प्रतियोगिव्यपेक्षणात् ॥१०२॥

तथाहि । यादृश्यनित्यता घटे प्रागभावप्रध्वंसाभावोपलक्षिता । शब्देपि तथैव प्रागभावादिसम्भवात् । उच्चरितप्रध्वंसिनो हि वर्णा इति न विवादः । तथा घटोपि धर्मी यदि तद्वान् कुडचसादृश्याद् भवेत् स्यादिदं साधनं । न च पुरुषसद्वितीयत्वसादृश्यं कुडयधर्मिघटयोः[3] ।

नन्वात्रपि यदि नामानित्यतासामान्यं वचनोपात्तमैदंपर्या(या)र्थस्तु विशेष एव शब्दग-तस्तेन च नान्वय इति कथन्तत्सिद्धिः ।

अत्र ब्रूमः ।

**अनित्यता ।**
**विशिष्टा ध्वनिनान्वेति नो चेत् नायोगवारणात् ॥३७॥**
**द्विविधो हि व्यवच्छेदो वियोगापरयोगयोः ।**
**व्यवच्छेदादयोगे तु वार्ये नानन्वयागमः[4] ॥३८॥**

---

[1] B. सतः [2] B. स्व [1] B. धर्म [2] नान्येना—इति हे, भोटभाषान्तरे च ।

यद्यपि नामानित्यता विशिष्टा नान्वेति । अन्विता विशिष्टा भविष्यति । समुदायो हि साध्यः । स चेत्प्रागेव प्रसिद्धः किमर्थं साधनं । तस्मात् केवलेनान्वये शब्दे सिध्यद-नित्यत्वं समुदायतां विशिष्टाञ्चात्मनः प्रकटयति ।

ननु केवलेनान्वये विशिष्टा नित्यता कथं सिध्येत् । अन्येनान्वये ऽन्यसाधनेति प्रसङ्गः । तथा च सर्व्वो हेतुर्व्विरुद्धो दृष्टान्तश्च साध्यविकलः स्यात् । उक्तधर्मानन्वय एष दोषो नान्यत्रेति चेत् । न । साध्यत्वाविशेषात् । अदोषे चेष्टविघातः कस्यचिदपि न स्यादिति सर्व्वः स्वाभिमतं साधयेत् । न । अयोगव्यवच्छेदेन विशेषणात् । अयोगान्ययोगव्यवच्छेदेन हि द्विविधं विशेषणं । न ह्यत्रं क्रियते शब्द एवानित्य इति । अपि तु शब्दोपि । सदृशत्वा-दनित्यतायाः । न च पुरुषसाधने तथा संभवति । नहि घटसद्वितीयत्वं कुड्यघटयोः समानं । अन्यतरसद्वितीयत्वं समानमिति चेत् । न । तेनाप्यभावात् । अन्यतरसद्वितीयत्वेन हि सादृश्यमेवं भवति यदि नियमस्याभावः । अत्र[1] च नियम एव घटेनैवं सद्वितीयत्वं कुड्यस्य तथा भूतपुरुषेणैव घटस्येति पराभिप्रायः ।

ननु प्रतिनियमेप्यन्यतरश्रुतिः प्रयुज्यत एव । तत्कथन्नियमेन्यतरत्वाभावः । ततो न विकल्पैकप्रतिनियमयोर्विरोधः । तथाहि । देवदत्तयज्ञदत्तयोरन्यतरो भोजनीय इति नियमत एकत्रैव भोजनं व्यवतिष्ठते । तथात्रापि पुरुषेण सद्वितीयत्वनियमः । नात्र वचनप्रापितो नियमः । काकतालीयन्यायेन नियमसम्भवात् । स च प्रत्यक्षेणोपलभ्यते । न चात्र पुरुषघटान्यतरसद्वितीयत्वोक्तौ पुरुषनियमः प्रत्यक्षसिद्धः । भोजनं हि वस्तुसामर्थ्यादेकनियतं न वचनसामर्थ्यात् । स्वरुच्या प्रेष्यस्य प्रवर्तनात् भोक्तुर्द्दातुर्व्वा । यदि ह्यसावुक्तो न भोजयेन्न तु भुञ्जीत भवाननियमो व्यवतिष्ठेत । अत्रापि साधनसामर्थ्यप्रापितो नियम इति चेत् । न । विपर्ययेपि सम्भवादिति प्रतिपादितं । एतेनेदमपि निराकृतं ।

"विशेषेनुगमाभावः सामान्ये सिद्धसाध्यता ।"

यद्यनित्यतासामान्यं साध्यते । तस्य क्वचिद्विद्युदादौ सिद्धत्वात् सिद्धसाध्यता । अथ शब्दविशिष्टमनित्यत्वं तदा तस्य घटेऽभावादन्वयाभावः । यतः । सामान्यमेव शब्दे (ऽ) सिद्धत्वात्साध्यते । तदाह ।

## ( ३ ) सामान्यनिरासः

सामान्यमेव तत्साध्यं न च सिद्धप्रसाधनं ।
विशिष्टं धर्मिणा तच्च न निरन्वयदोषवत्[2] ॥२६॥

यद्याधारविशेषानपेक्षमनित्यत्वं साध्यं स्यात्सिद्धसाधनं । शब्दे तु साध्यते सामान्यमतो न सिद्धसाध्यता ।

ननु शब्दे साध्यते सामान्यञ्चेति व्याहतं । शब्दविशिष्टत्वमेव विशेषः । यदि च सामान्यं कथं विशेषः । विशेषश्चेत्कथं सामान्यं ।

नैतदस्ति ।

[1] B. तत्र [2] B. दोषभाक्

सामान्येनान्वये सिद्धे पक्षधर्मत्वयोगतः । विशेषनिष्टता तस्य सम्बन्धग्रहणात्मना[1] ॥१०३॥

नहि शब्दविशिष्टेनान्वयप्रदर्शने शब्दविशिष्टत्वसिद्धिः । केवलेनाप्यन्वयदर्शने तद्वि-शिष्टत्वसिद्धिः । सादृश्येनैकत्वस्य विवक्षितत्वात् तद्वदेवेति[2] प्रतिपादयता हि परं धूमोग्नि-नान्तरीयको दर्शनीयः । स तथाग्निना व्याप्तः सिद्धो यत्रैवोपनीयते तत्रैवाग्निबुद्धिं जनयति । सम्बन्धस्य तथैव ग्रहणात् । यद्देशो हि पावकः तद्देशमेव धूमं जनयत्यपरापर देशसञ्चारणे-(न) सम्बन्धप्रतीतेः ।

ननु सामान्येन प्रतीतौ कथम्विशेषप्रतीतिः । सामान्यस्य विशेषमन्तरेणाभावादिति प्रतीतेरदोषः । नहि देशकालावस्थाप्रतिनियमप्रतिपत्त्या कस्यचिद्व्यवहारसिद्धिः । एतच्च प्रामाण्यनिरूपणे प्रागेव प्रत्यपादीति नावर्त्तनीयं पुनः । तस्माद् धर्मिविशिष्टसामान्यप्रसाधनात् न सिद्धसाध्यता नानन्वयदोषः ।[3]

ननु साध्येन सह सामान्यं प्रत्येतव्यं(।)साध्यञ्चानुमानसामर्थ्यात् प्रत्येष्यते । न च तत् बहिर्व्याप्तिमात्रेण प्रसिध्यनि । न ह्येवं व्याप्तिरादर्श्यते । सर्व्वोऽपेक्षः[4] कृतकोऽनित्य इति । ततः । अन्तर्व्याप्तेरप्रसिद्धिर्व्बहिश्चेद् व्याप्तिस्तस्यां साध्यसिद्धिर्न्न जातु । अन्य-व्याप्त्यान्यस्य सिद्धिर्यदि स्यात् सर्व्वस्य स्यात् सर्व्वसिद्धिप्रसङ्गः ।

तदपि यत्किञ्चित् । तथाहि ।

उक्तमेतत यतो धर्मिसाहित्याद् व्याप्तिरीयते ।
यो यः प्रदेश एवं स्यात् स स साध्याविनाकृतः ॥१०४॥

अग्निमानयं प्रदेशो धूमवत्त्वान्महानसप्रदेशवत् । तथाभूतप्रत्ययसामर्थ्यात् पूर्व्वमेव गृहीत इत्युच्यते । अन्यथा (हि)यदि साध्योपि स्वभावः परिगृहीतः किमनुमाने पूर्व्वधूमप्रतीता-वेवास्यापि धूमस्य प्रतीतेरग्निप्रतीतिः । न चाविद्यमानं भावि शक्यं प्रत्येतुं । तस्मा(त्त) द्रूपप्रत्ययसम्भवादेव प्रतीतमिति व्यवहारमात्र(त)उच्यते । व्यवहारमात्रेण ग्रहणेन परमार्थ-ग्रहणमिति कथन्न विसम्वादः । तथाभूतार्थक्रियाकारिण्येव स परामर्श इति (अवि)सम्वादः[5] । कोयं नियम इति चेत् । कार्यकारणभावस्य नियतत्वात् ।

ननु स एव नियमः कथं ग्राह्यः । अस्मादेव व्यवहारात् । व्यवहारेण सकलमेव सम्वादकमनादिना ज्ञायते न परमार्थ इति प्रतिपादितं । तस्मात् सामान्येन प्रतिबन्धग्रहणे तस्य विशेषमन्तरेणाभावात् विशेषप्रतिपत्तिः । एवमेव सकलो व्यवहारः ।

**एतेन धर्मिधर्माभ्यां विशिष्टौ धर्मधर्मिणौ ।**
**प्रत्याख्यातौनिराकुर्व्वन् धर्मिण्येवमसाधनात् ॥४०॥**

अनित्यः शब्द इति प्रतिज्ञायां यद्यनित्यः शब्दः साध्यः शब्दविशिष्टमनित्यत्वं शब्दे साध्यमिति प्राप्तं । अनित्यत्वविशिष्टो वा शब्द इति ततस्तद्विपर्ययसाधनाद्विरुद्धः । यथायं हेतुः शब्देऽनित्यत्वं(प्र)साधयति । तथा शब्दविशिष्टानित्यत्वाभावमपीति विरुद्ध इति य आह सोप्यनेनेष्टसाध्यवचनेन निराकृतः । नहि शब्देऽनित्यशब्दत्वं प्रसाध्यतेऽनित्यतामात्रस्य

---

[1] B. ०त्परा । [2] B. तदेवेति । [3] B. ऽनन्वय दोषः,
[4] B. सर्वोऽपक्षः [5] T. तृतीयमाह्निकं (समाप्तम)

प्रसाधनात् । अनित्यतामात्रसाधने कथं समुदायसाधनमिति चेत् । न । तथैव समुदायस्य साधनात् । धर्मिणा सह समुदायसाधनात् । नहि धर्मिण्यपरः शब्दानित्यत्वसमुदायः शब्दे साध्यः । ततस्तस्य निराकरणेपि न दोषः । अनित्यतामात्रनिराकरणे हि दोषः । कथं समुदायविपर्यासनमिति चेत् । द्वयोरेकाभावे समुदायस्य निराकरणात् । नैकशेषत्वे समुदायसम्भवः । तस्मात् केवल एव धर्मो धर्मिणि साध्यः । तथैव समुदायसाधनात् । एकत्र द्वितीयसाधने समुदायसम्पत्तेः । कथं तर्हि धर्मधर्मितत्समुदायविशेषनिराकरणभेदः । तद्द्वारेण निराकरणात् । यद्द्वारेण हि समुदायो निराक्रियते तेन व्यपदिश्यते । परमार्थतः समुदायनिराकरणमेव । अनित्यः शब्दः । शब्दानित्यत्ववान् वा शब्द इति समुदायनिराकरणञ्चेत् । नैवं प्रतिज्ञा(याः)ऽसंभवात् । अनित्यः शब्द इति तु प्रतिज्ञायां न समुदायसाधनत्वप्रतीतिरपरत्र धर्मिणि । तस्मादन्यथासमुदाय[1]साधनासम्भवात् । केवलधर्म्यादि[2] निराकरणेनैव समुदायनिराकरणम् ।

न तु शब्देऽनित्यशब्दत्वनिराकरणात् । एवं साध्यस्यानभिप्रेतत्वात् । अनभिप्रेतनिराकणे न दोषः ।

**समुदायापवादो हि न धर्मिणि विरुध्यते ।**
**साधनं यतस्तथा[3]नेष्टं साध्यो धर्मात्र केवलः ॥४१॥**

—इति संग्रहः ।

## ५. स्वयंशब्दग्रहणफलम्

यदि तर्हीष्टग्रहणमनभिप्रेतसाध्यनिराकरणेप्यदोषप्रतिपादनपरं तत्र यथा शब्दनिविष्टा[4]नित्यताबाधने धर्मिणि न दोषस्तथा अकाशगुणत्वविशिष्टानित्यत्वबाधनेप्यदोष एव ।

सत्यमेतत् । तथापि विप्रतिपत्तिनिराकरणार्थं स्वयं ग्रहणम् । तथा हि ।

**एकस्य धर्मिणः शास्त्रे नानाधर्मास्थितावपि ।**
**साध्यः स्यादात्मनैवेष्ट इत्युपात्ता स्वयं श्रुतिः ॥४२॥**

भवत्वेव शास्त्रदृष्टं साध्यं तत्प्रबाधने च हेतुप्रतिज्ञयोर्दोष इत्येके । तथा हि । **न्यायभाष्ये** । "आगमः प्रतिज्ञा ।" आगमार्थनिर्देशादागम इत्युच्यते नान्यथेति **(न्याय-)वार्तिकं** । अन्यथाऽऽगमस्य प्रमाणत्वात् प्रतिज्ञायाश्च सन्देहसाधनात् कथमेकत्वं । स एवागमार्थः परं प्रति निर्दिश्यमानः प्रतिज्ञार्थः । तस्मादागमः प्रतिज्ञा तदर्थबाधने हेतोर्दोषः शास्त्रार्थबाधनात् । न ( च ) शास्त्रविरुद्धो हेतुः साध्यसाधकः । प्रतिज्ञादोषश्च । अनित्यत्वमप्याकाशगुणत्वैकार्थसमवायसम्भवि साध्यं यथाऽन्येन हेतुना केनचित्तत्राकाशगुणत्वं शास्त्रेण वा साध्यं तथाभूतमनित्यत्वं प्रतिज्ञार्थः । तस्य च तेन निराकरणे प्रतिज्ञादोषः । तथाहि ।

---

[1] B तस्मान्न समुदाय
[2] धर्म्मादि
[3] साध्यं यतस्तथा—इति हे.
[4] B विशिष्टा

## ( १ ) क्षणिकोऽनाश्रयः

क्षणानन्तरनाशित्वे वृथाकासगुणात्मता । कालान्तरेण नाशेपि वृथाकाशगुणात्मता ॥१०५॥

**यदि तस्य शब्दात्मनः क्षणानन्तरमहेतुत्वान्नाशः किमाकाशगुणत्वेन । आश्रयो हि नाम स्थितिहेतुः । न च क्षणिकस्य स्थितिः । क्षणमेकन्तु स्वकारणादेव । अथ कालान्तरस्थायी स स्वकारणादुपजातस्तथापि[1] कारणवशादेव स्थास्यतीति किमाश्रयेण । अथाश्रयवशात्कालान्तरस्थानं नन्वविनाशादेव स्थास्यति किमाश्रयेण । न च शब्दस्य गुरुत्वं येनाश्रयमन्तरेण पातसम्भवः । न चाकाशस्य धारणस्वभावभाक्त्वं न खलु गुरूणामाकाशेन धारणं ।**

गुरुत्वात्पतने नास्ति व्योम्नः सन्धारणात्मता । लघवो न पतन्त्येव धारकः किङ्करिष्यति ॥१०६॥
वायुना पहृतौ शब्दस्तेनासौ धार्यतां पतन् । विनाश एव तस्य स्यात् यस्याकाशमबाधकं[2] ॥१०७॥
स्वभावो हि (स) तस्येत्थमपेक्ष्यैव विनश्यति ।
यावद् विनाशको नास्ति स्थानादन्या न तद्गतिः ॥१०८॥
इत्याश्रयम्विनैवास्य स्थानमित्येव निश्चयः ।
यदि क्षणस्थितेर्न्नास्ति नापि कालान्तरस्थितेः ॥१०९॥
नित्यानामपि नैवास्नि साश्रयत्वमनर्थकं । सत्यमेतत्तथाप्येष स्वभावः सहजस्सदा[3] ॥११०॥
नहि पर्यनुयोज्योसाविति स्यादपि कल्पना ।

**तस्मादनित्यस्य पदार्थात्मनो नाश्रय इत्यनित्यत्वस्य साधक आश्रयत्वस्य[4] बाधक इति हेतुदोषः । प्रतिज्ञादोषश्चेति ।**

## ( २ ) गुणा अनाश्रयाः

**अत्रोच्यते ।**

> **शास्त्राभ्युपगमादेव सर्व्वादानात् प्रबाधने ।**
> **तत्रैकस्यापि दोषः स्याद् यदि हेतुप्रतिज्ञयोः ॥४३॥**
> **शब्दनाशे प्रसाध्ये स्याद् गन्धे भूगुणताक्षतेः ।**
> **हेतुर्व्विरुद्धोऽप्रकृतेर्नो चेदन्यत्र सा समा ॥४४॥**

**यदि शास्त्रमभ्युपगतमित्येव शास्त्रबाधने दोषः प्रतिज्ञाहेत्वोस्तदा शब्दाकाशगुणत्वबाधनवद् गन्धे पृथिवीगुणत्वविपर्यासनेपि । ततो यथा तत्परिपठिततद्धर्माकाशगुणत्व संसर्गसम्भवि तदनित्यत्वं साध्यं तथा तच्छास्त्रकारेष्टगन्धधर्म्यन्तरसङ्गतपृथिवीगुणत्वसङ्गतशास्त्रप्रतिपादितत्वमपि । तद्बाधनेपि तच्छास्त्रसम्बन्धत्वमयुक्तमिति स्यादेव प्रतिज्ञादोषः । अप्रकरणापन्नत्वाद् गन्धस्य कथमित्यपि न वाच्यं । आकाशगुणत्वस्यापि न प्रकरणापन्नतेत्यपि नोभयत्र विशेषः ।**

**अथात्र धर्मी प्रकृतस्तत्र शास्त्रार्थबाधनं ।**

---

[1] B. तदापि [2] B. धारकं [3] B. स्तथा [4] B. साश्रयत्वस्य

धर्म्यन्तरेपि प्रकृत.[1] शास्त्रार्थोपगमान्न किं ।

यदि नामात्र धर्मी प्रकृतः स तु तद्धर्माधारतयैव । अथ शास्त्रद्वारेण धर्मान्तराधारतयापि । एवन्तर्हि तदेकशास्त्रपरिपठितधर्म्यन्तरगतधर्मसङ्गतत्वमपीति समानो दोषः । अथापि स्यात् । तद्धर्माधारो धर्मी प्रकृत इति धर्मान्तरमपि साध्यपक्षनिक्षिप्तमेव वादिनोपि तथेष्टत्वात् । तदाह ।

**अथ वादीष्टतां ब्रूयाद् धर्मिधर्मादिसाधनैः ॥४५॥**

आकाशगुणत्वमपि वादिन इष्टमेव । उपात्तसाध्यधर्मिधर्मित्वादनित्यवत् । तथा साध्य समुदायैकदेशविशेषत्वादित्यादि । तदाह् । न साध्यसमुदायैकदेशविशेष इत्येवाप्रकरणेच्छा भवति । तथाहि

**कैश्चित्प्रकरणैरिच्छा भवेत् सा गम्यते च तैः ।**
**बलात्तवेच्छेयमिति व्यक्तमीश्वरचेष्टितं ॥४६॥**

न साध्यसमुदायैकदेशविशेषत्वमात्रकमिच्छां प्रवर्त्तयति । प्रवर्त्तने वा सदेच्छासाधनप्रवृत्त्योरविरामप्रसङ्गः । अथ साध्यसमुदायैकदेशविशेषत्वेन नेष्टत्वादिति मतिस्तथा सति तदेवेष्टत्वं साध्यं तदेव साधनमिति प्रतिज्ञार्थ एव साधनं । तस्माद् यत्र प्रकरणं तत्रैवेच्छान्यथातिप्रसङ्गः । तस्माद्विवादास्पद एवेच्छा प्रवर्त्तते नाकाशगुणत्वे ।

ननु प्रकरणादिच्छा भवति प्रकरणञ्च तस्या(:) कारणं । तत्कथङ्कारणात् कार्यसिद्धिः । अप्रतिबद्धं कारणं कार्यं गमयतीति चेत् । कथन्तथावगन्तव्यं । वचनस्य तत्कार्यस्य दृष्टेः । वचनादेव तर्हि गतिः कार्यान्न प्रकरणादिति कथं तैरेव गम्यत इत्युच्यते ।

अत्रोच्यते ।

सामर्थ्यं वचनाद् गम्यं तस्यैवेति ततो गति.। इच्छाया नियतत्वेन प्रकरणाद् गतिरुच्यते ॥१११॥

वचनाद्धीच्छामात्रस्य गतिः प्रकरणञ्च कारणत्वादिच्छाया न गमकं(।) ततो वचनाद् गता[2] प्रतिबद्धसामर्थ्यं प्रकरणमेवेच्छायाः प्रतिनियमस्य गमकमिति तैरेवेत्युच्यते । अप्र(क)रणा(द)पि तु तवेयमेवेच्छेति नात्र कश्चिन्न्यायः । ततः(।)

**वदन्न कार्यलिङ्गान्तां व्यभिचारेण बाध्यते ।**
**अनान्तरीयके चार्थे बाधितेन्यस्य का क्षतिः ॥४७॥**

इच्छाया हि कार्यं कारणम्वा गमकं । प्रकरणञ्च कारणं नाकाशगुणत्वङ्गमयति । तत्र तदभावात् । वचनं कार्यं तदपि नाकाशगुणत्वस्य । तथापि तवेयमिच्छेति । अकार्यलिङ्गमिच्छाम्वदन् व्यभिचारेण बाध्यते । नहि साध्यसमुदायैकदेशविशेषत्वादि(क)मिच्छायाः कार्यम् । नाप्यप्रतिबद्धसामर्थ्यं कारणं नान्तरीयक(त्व)बाधने च व्यापकाभावात् साध्यस्याभाव इति भवेत् साध्यसाधनदोषः । न चाकाशगुणत्वं नान्तरीयकमनान्तरीयके च बाधिते साध्यस्य ततोन्यस्य का क्षतिः ।

---

[1] B. प्रकृतिः　　[2] B. वचनगता

# § ३. शब्दाप्रामाण्यचिन्ता

## १. शास्त्रविरोधो निर्बलोऽनुमाने

ननु शास्त्रमभ्युपगम्यैव वादः प्रवर्त्तते। ततः स्वशास्त्रव्यवस्थितस्य तदर्थबाधने नियमेन दोषः। न(।) उक्तोत्तरत्वात्। गन्धे पृथिवीगुणत्वविपर्यासनेपि दोष इति।

**उक्तश्च नागमापेक्षमनुमानं स्वगोचरे।**
**सिद्धं तेन सुसिद्धन्तन्न तदा शास्त्रमीक्ष्यते[1] ॥४८॥**

अनुमानं हि स्वविषये[2] प्रतिबन्धबलमवलम्बमानं शास्त्रमपेक्षते। प्रत्यक्षवत् प्रमाणत्वात्। यत्किमपि दृश्यते तत्किमागमापेक्षं सकलं तथानुमानमपि किमागममपेक्षते। तथास्मदादिप्रत्यक्षं नियमेनागमापेक्षमागमबाधितत्वेन भ्रान्तिरेव। न खलु दिव्यचक्षुषां बचनमस्मदादिप्रत्यक्षेण बाध्यते न तैमिरिकदर्शनमितरदर्शनं बाधते।

सत्यमेतत्। यदि दिव्यचक्षुरखिलो वचसां कर्त्ता भवेदुचितमेव वचः। सत्त्वेपि कस्यचिदियं स तथेति नास्मद्विनिश्चय इदं स्फुटयति। परस्परवचनविरोधितया हि सर्व्वत्र एवागमकृतः सर्व्ववेदिन इति न गम्यन्ते। मा भूवन् सर्व्ववेदिनः तथापि (न) भवतोपि परिह्रीयन्ते(।) एवन्तर्हि सर्व्वागमविरोध एव परिहर्त्तव्यः स च न शक्यत एव(।) ततो न भवेदेवानुमानोत्थानं।

अथ स्वागम[3]विषयशास्त्रविरोधपरिहार एव विधातव्यः। एवन्तर्हि सोप्यभ्युपगमः[4] परीक्ष्य कर्त्तव्यः। परीक्षाकाले चानुमानमप्रमाणं शास्त्रविरोधापरिहारात्। नास्त्येव तदा शास्त्राभ्युपगमः किं परिहारेणेति चेत्। एवन्तर्हि सिद्धं तेन सुसिद्धमेव साध्यं। नहि सिद्धं पश्चादसिद्धं भवति। तद्विरुद्धशास्त्राभ्युपगमादसिद्धमेवेति चेत्। स एव तर्हि सकलशास्त्रविरोधपरिहारः। अभ्युपगतापेक्षया भवति नान्यथेति चेत्। अभ्युपगमोपि कस्मान्न सर्व्वत्रेति। परीक्षाक्षम एवेति चेत्। एवन्तर्हि प्रमाणमेव परीक्षा सैव च तेन बाध्यत इति स्वबधाय कृत्योत्थापनप्रकार एषः। तस्माच्छास्त्रमेव प्रमाणविरुद्धत्वात्तदा नापेक्षते। ततो न तद्बाधकं।

यदि तर्हि शास्त्रं तदा नापेक्ष्यते वादत्याग एव प्राप्तः।

**वादत्यागस्तदा स्याच्चेन्न तदानभ्युपायतः।**
**उपायो ह्यभ्युपायेऽयमनङ्गं स तदापि सन् ॥४९॥**

नहि शास्त्रमनाश्रित्य न वादस्तदानभ्युपगमात्। परीक्षैवोपायोऽभ्युपगमस्य। अपरीक्ष्य चेदभ्युपगतस्तदा सन्नपि तदा प्रमाणबाधितत्वादनङ्गमेव। न ह्यपरीक्षाक्षमं शास्त्रं तदा बाधकं। कदा तर्हि शास्त्रमभ्युपगतमङ्गं वा साधनस्य[5]।

अत्रोच्यते।

---

[1] ०मीक्षते—इति हे. [2] B. स्वसाध्ये [3] B. स्वोपगम
[4] B. सोप्युपगमः [5] B. बाधनस्य

तथा विशुद्धे विषयद्वये शास्त्रपरिग्रहं ।
चिकीर्षोः स हि कालः स्यात्तदा शास्त्रेण बाधनम् ॥५०॥

तथेत्यनुमानेन प्रत्यक्षेण च विषयद्वयस्य प्रत्यक्षपरोक्षस्य विशुद्धतायां यदि तावता न परितोषस्तदा शास्त्रपरिग्रहचिकीर्षायां स हि कालः स्यादुभ्युप[1]गमस्य । तदैव शास्त्रेण बाधनं ।

यतः ।

तद्विरोधेन चिन्तायास्तत्सिद्धार्थेष्वयोगतः ।
तृतीयस्थानसंक्रान्तौ न्याय्यः शास्त्रपरिग्रहः ॥५१॥

नहि परीक्ष्ये शास्त्राभ्युपगमे तद्विरोधेन चिन्ता तच्छास्त्रप्रसिद्धेर्थे युक्ता । तथा हि ।

परीक्षितं तद् यदि शास्त्रमुच्चैः प्रतिज्ञया तत्कथमस्य वाच्यम्
परीक्षणन्तस्य पुनर्न्न कार्यम्परीक्षणञ्चेन्न परीक्षितं तत् ॥११२॥

तस्मात् परीक्ष्य प्रत्यक्षानुमानाभ्यां तदविषयं तृतीयस्थानसंक्रान्तिनिमित्तं शास्त्राभ्युपगम इति नानुमानविषयस्य शास्त्रम्बाधकं ।

अथापि स्याद् (अ) विचार्य यस्य शास्त्राभ्युपगमस्तस्य शास्त्रं बाधकमिति भवेत् प्रतिज्ञादोषः ।

नैतदस्ति । यतः ।

तत्रापि साध्यधर्मस्य सम्बद्धस्यैव[2]बाधनं ।
परिहार्यं न चान्येषामनवस्थाप्रसङ्गतः ॥५२॥

यदि शास्त्रमभ्युपगतमित्येव तदर्थबाधनं परिहर्त्तव्यं । गन्धे पृथिवीगुणविपर्यासनेपि दोषः स्यात् । तस्मात साध्यधर्मसम्बद्धस्यैव बाधनं परिहार्यं नान्येषामसम्बद्धानामिति स्थितमेतत् ।

ननु शास्त्रमनभ्युपगम्यापि वादे वैतण्डिकः स्यात् । अनाश्रितशास्त्रकस्य नास्तिकत्वात् । ननु प्रमाणसिद्धमभ्युपगच्छतः का नास्तिकता । तथा प्रमाणबाधितमनभ्युपयतः । तृतीयस्थाने यः शास्त्रं नाभ्युपगच्छति नास्तिकः । तृतीयादन्यत्र तु किं शास्त्रेण (तथा) हि ।

केनेयं सर्व्वचिन्तासु शास्त्रं ग्राह्यमिति स्थितिः ।
कृतेदानीमसिद्धान्तैर्ग्राह्यो धूमेन नानलः ॥५३॥

यदि सिद्धान्तमभ्युगम्यैव सर्व्वप्रमाणप्रवर्त्तनं पावकोपि लोके गोपालकादिना धूमतो न प्रतिपत्तव्यः ।

अथापि स्यात् परलोकोपयोगी योऽर्थः स एव शास्त्राभ्युपगमपुरःसरो नान्य इति ।

तदसत् ।

अनभ्युपगते शास्त्रे यदि तस्य विनिश्चयः (।) प्रमाणतस्तदा शास्त्रं क्वोपयोगि पुरःसरं ॥११३॥

यदि नाभ्युपगम्यते शास्त्रेण बाधा शङ्क्यते । अभ्युपगमे तु ज्ञायते शास्त्रबाधा । तेन तन्न साध्यत एव । न प्रमाणप्रसिद्धस्यानिच्छतो भावात् । शास्त्रन्तु तदा परित्यज्यते ।

---

[1] त्रुटितः पाठोधः सन्निवेशितः ।　　　[2] M.T. नान्तरीयकबाधनं—इति हे.,

आत्मीयं कथं परित्यागार्हमिति चेत्। न। सम्बन्धाभावात्। सगुणत्वेन तस्य तत्। तथाहि।

## (१) विषमग्रहः शास्त्रम्

**रिक्तस्य जन्तोर्जातस्य गुणदोषमपश्यतः।**
**विलब्धा बत केनामी सिद्धान्तविषमग्रहाः ॥५४॥**

यदि न्यायबाधितोपि सिद्धान्तः परित्यक्तुमशक्यस्तदा नासौ सिद्धान्तः। सिद्धान्तव्याजेन विषमग्रहो बालानां ततो मोचयितुमशक्यत्वात्।

सम्बन्धात्सहजातेश्च[१] परित्यक्तुन्न शक्यते। रिक्तस्य जन्तोर्जातस्य तद्योगः सहजः कथम् ॥११४॥
गुणदोषविवेकोपि प्रमाणं त्यजतः कुतः।

तस्मान्न शास्त्राभ्युपगमपूर्व्वकमनुमानं।

ननु शास्त्रविरोधि कथमनुमानं निश्चायकं तस्माच्छास्त्रविरोधः परिहर्त्तव्यः तदनुकूलनिदर्शनेन।

तदसत्। यतः।

**यदि साधन एकत्र सर्वं शास्त्रं निदर्शने।**
**दर्शयेत् साधनं स्यादित्येषा लोकोत्तरा स्थितिः ॥५५॥**

शास्त्रविरोधो हि परिहर्त्तुमशक्य एव। शास्त्राणामेव परस्परविरोधात्। सर्व्वेषां प्रमाणत्वमप्रमाणत्वम्वा। न तावत्प्रमा(ण)त्वे सर्व्वविरोधपरिहारः परस्परविरुद्धत्वात्। नाप्यप्रमाणत्वे सकलजनवचसां विरोधस्य सदा भावात्। न ह्यपरिमितो विरोधः शक्यपरिहारः। एवञ्च साधनं भवतीति लोकातिक्रान्तोयं मार्गः[२]।

ननु यदि तद्धर्मिधर्म एव बाध्यते उक्तेपि कः समाश्वासः। नहि बाधकस्य साधकत्वसम्भवः। नेदमपि युक्तं। एवं हि साधनमेव किञ्चिन्न स्यात्। एवं हि साधयता नियमतः परं बाधितव्यम्।

अपि च।

**असम्बद्धस्य धर्मस्य किमसिद्धौ न सिध्यति।**
**हेतुस्तत्साधनायोक्तः किं दुष्टस्तत्र सिध्यति ॥५६॥**

असम्बद्धस्य हि धर्मस्य यदि बाधनं परिहर्त्तव्यं न हेतुरेव स्यात्। यदि चान्यो बाध्यते कस्मादन्यन्न सिध्यति। एकोपि हि धूमः पावकशीतस्पर्शयोर्भावाभावयोः साधक उपलब्धः। विरोधात् साधनमविरुद्धमिति चेत्। आकाशगुणत्वेपि समानो विरोधः।

अथ भवतु स हेतुः साधको भावाभावयोः। प्रतिपाद्यस्य तु कथं शास्त्रविरुद्धार्थप्रतिपत्तिः। ततः शास्त्रार्थानुगमोपि दृष्टान्ते दर्शनीयः। न हि तद्धर्मानुपनये हेतुतः साध्यप्रतिपत्तिः[३]।

---

[१] B. ०जादेव [२] B. व्यवहारः [३] B. ०सिद्धिः

नैतदस्ति । यतः ।

**धर्मानुपनीयैव दृष्टान्ते धर्मिणोऽखलान् ।**
**वाग्धूमादेर्जनोन्वेति चैतन्यदहनादिकं ॥५७॥**

आस्तां तावच्छास्त्रप्रसिद्धोऽसम्बन्धो धर्मस्तद्धर्मिधर्मस्यापि कस्यचिद् दृष्टान्तेनुपनये वाग्धूमादिकाद्धेतोरयं लोकश्चैतन्यदहनादिकं प्रत्येति नहि तदपरो धर्मो बाधित इति पावकाप्रसिद्धिः[1] ।

न च न प्रत्येति प्रतिपाद्यः । अपि चानिच्छतोपि प्रतिपाद्यस्य ।

**स्वभावं कारणम्वार्थोऽव्यभिचारेण साधयन् ।**
**कस्यचिद् वादबाधायां स्वभावान्न निवर्त्तते ॥५८॥**

न खलु स्वकारणायत्तः स्वभावः पदार्थानां पुरुषेच्छया व्यावर्त्तते(।)अव्यभिचारश्च हेतोः साध्यसाधने निमित्तं स चास्ति किन्न साधकः(।)

अथ भवत्वसौ साधकः स तु प्रतिपाद्यः कथं प्रतिपद्यते । तदाह । स्वभावं ।

**प्रपद्यमानश्चान्यस्तं नान्तरीयकमीप्सितैः ।**
**साध्यार्थैर्हेतुना तेन कथमप्रतिपादितः ॥५९॥**

कारणं हि कार्यजननाय प्रवृत्तमप्रतिबद्धसामर्थ्यादितरन्निवारयितुं शक्यम् । ज्ञापकन्तु प्रतिबन्धबलात् प्रतीतिमुपजनयत् प्रतिपन्नरूपत्रयस्य न तेनैव निवारयितुं शक्यम् ।

दह्यमानो हि पुरुषः पावकेन विनेच्छया । दाहदुःखं तिरःकुर्याद् यदि हेतोर्न निश्चयः ॥११५॥

न हि तदव्यभिचारितां प्रतिपद्यमान एव तन्न प्रतीयात् । विशेषणविशिष्टविशेष्यप्रतिपत्ते[2]र्व्विशेषप्रतीतिनान्तरीयकत्वात् । सर्व्वमस्ति किन्तु वाद्ययुक्तकारी भवेत् ।

अत्रोच्यते ।

**उक्तोनुक्तोपि चेद्धेतुर्व्विरुद्धो[3] वादिनोत्र किं ।**
**नहि तस्योक्तिदोषेण स जातः शास्त्रबाधनः ॥६०॥**

वचनगुणदोषौ हि परार्थेऽनुमानेऽधिक्रियेते नार्थस्य । न वक्त्रात्र किञ्चिद्दोषजातमकारि । शास्त्रं बाधितमिति चेत् । न । हेतुरेव शास्त्रस्य बाधकोनुक्तोपि । एवम्भूतमेव हेतुं कस्मादुपादत्त इति चेत् । अन्यस्यासम्भवात् । नहि कश्चिदनित्यत्वसाधकः सम्भवति य आकाशगुणत्वादिकं न बाधते । तूष्णीमेव कस्मान्नास्त इति चेत् । न(।) असाधनाङ्गवचनस्य[4] सुतरामेव निग्रहस्थानत्वात् । अवश्यं हि प्रतिवाद्यवबोधयितव्यः । तस्मादत्र न वादिनो दोषः ।

**बाधकस्याभिधानाच्चेत् दोषो यदि वदेन्न सः ।**
**किन्न बाधेत सोऽकुर्व्वन्नयुक्तं केन दुष्यति ॥६१॥**

—इत्यन्तरश्लोकः ।

---

[1] B. पावकस्याप्रतिपत्तिः

[2] B. प्रतीते [3] M. विरोद्धा [4] वादन्याये पृष्ठे १ ।

एवं तर्हि हेत्वाभासवचनेपि न दोषः। हेत्वाभासोपि स्वयमेव तथाभूत इति किम्वादिनो दोषः। न ह्यसावपि तदुक्तदोषेणैव दुष्यति स्वयमेव दोषात्।

उक्तोनुक्तोपि चेद्धेतुरसिद्धो वादिनोत्र किं। नहि तस्योक्तिदोषेण तस्यासिद्धविरुद्धते ॥११६॥

तदसत्।

**अन्येषु हेत्वाभासेषु स्वेष्टस्यैवाप्रसाधनात्।**
**दुष्येद् व्यर्थाभिधानेन नात्र तस्य प्रसाधनात् ॥६२॥**

अत्र साध्यसाधनाय साधने वक्तव्ये तदसाधनस्य वचने दोषः। व्यर्थकत्वादभिधानस्य। सार्थकाभिधानाधिकारे व्यर्थकवचनं हि व्यर्थं। अत्र तु साध्यसाधनाददोषः। अवचन एवात्र दोष इति। अत्राप्याकाशगुणत्वस्यावचने दोष इति चेत्। न। साधकस्यापि सम्भवात् वादीष्टसाध्ये ऽवचनं दोषो युक्तः। न त्वत्र शास्त्रार्थाकाशगुणत्वाबाधकस्य सम्भवः। अतो नावचनं दोषः।

ननु यदि हेतुः शास्त्रार्थं बाधतेऽनित्यत्वमपि कथं साधयेत्। तेनैवानैकान्तिकत्वात्। अत्रोच्यते।

**यदि किञ्चत् क्वचिच्छा(स्)त्रे न युक्तं प्रतिषिध्यते।**
**ब्रुवाणो युक्तमप्यन्यदिति राजकुलस्थितिः ॥६३॥**

नहि सकलशास्त्रार्थविरोधः। क्वचिदेव शास्त्रे तस्य भावात्। सम्बन्धभावाभावाभ्यां साधनमसाधनञ्चेति क इवात्र विरोधः। अयुक्तस्य प्रतिषेधे युक्तस्यापि प्रतिषेध इति राजशासनमेतत्।

अपि च।

**सर्व्वानर्थान् समीकृत्य वक्तुं शक्यं न साधनं।**
**सर्व्वत्र तेनोत्सन्नेयं[1] साध्यसाधनसंस्थितिः ॥६४॥**

सर्व्वार्थाविरोधेन न किञ्चित्साधनं शक्यं वक्तुं। प्रकृतसाध्यसम्बन्धमात्रमेवापेक्ष्यते। अन्यथाऽसम्भवात्। शास्त्रार्थाविरोध एव कर्त्तव्य इति चेत्। न(।) अविशेषादपरस्यापि प्राप्तेः। अथ शास्त्रस्यापि विरोधः परिहर्त्तव्यः (।) तथा सति साधनमेव किञ्चिन्न स्यादित्युत्सीदेत् साध्यसाधनभावः सर्व्वत्र। शास्त्रं तर्हि कस्मादङ्गीकृतमिति चेत्। एतदेवात्रोपपादयितव्यमभिप्रेतं। न प्रथमं शास्त्राभ्युपगमः कर्त्तव्यः। कृते सति प्रमाणविरोधे पश्चादपि वरं परित्यागः। परेषां पुनर्मतं शास्त्राभ्युपगमः प्रतिज्ञा। ततः शास्त्रमभ्युपगम्य न विरोधयितव्यं। अभ्युपगमसिद्धान्ते सति वादविधानवृत्तेः।

यदि तर्ह्याकाशगुणत्वबाधनेपि न हेतुदोषः कथम्विरुद्धाव्यभिचारी साधनदोषः। तत्रापि साधनान्तरप्रसिद्धार्थविरोधतो दोषः। इहापि शास्त्रप्रसिद्धार्थविरोध एव दोषः।

न सदेतत्। यतः।

**विरुद्धयोरेकधर्मिण्ययोगादस्तु बाधनं।**
**विरुद्धैकान्तिकेनात्र तद्वदस्ति विरोधिता ॥६५॥**

---

[1]. M. सुच्छन्नेयं

विरुद्धाव्यभिचारिणोरिह[1] परस्परविरुद्धार्थाव्यभिचारिता द्वयोरपि समानबलैव। द्वयोरप्यागमाश्रितत्वात्। वस्तुबलप्रवृत्तन्त्वनुमानं शास्त्रञ्च न तथाभूतं। ततस्तयो(र्) न परस्परबाधनं विरुद्धाव्यभिचारिवत्। न च द्वयोरपि साधनं विरुद्धयोरेकत्र धर्मिण्ययोगात्। शास्त्रस्य तु विरुद्धानुमानापेक्षया प्रमाणत्वाभावात्। तदर्थो बाध्यत एव न बाधको विरुद्धाव्यभिचारिवत्। शास्त्रस्य च प्रमाणबलाननुगृहीतस्य प्रतिषिद्धमेव प्रामाण्यं। तस्मान्न विरुद्धाव्यभिचारिपक्षोपक्षेपपक्षः क्षमः।

अथापि शास्त्रमतीन्द्रियार्थदर्शिना प्रवर्त्तितं कथन्तस्यानुमानेन बाधा। ततस्तेन प्रतिबद्धमप्रमाणमेवानुमानमपि। ततस्तुल्यबलत्वाद् विरुद्धाव्यभिचारिवदत्रापि दोष एवेति चेत्।

तदसत्। यतः।

शास्त्रेण बाधनं स्याच्चेदनुमाने विरोधिनि। प्रमाणं निखिलन्नष्टमागमः परिशिष्यते ॥११८॥

यदि सकलमनुमानं शास्त्रेण बाध्यते। तदा नानुमानेन शास्त्रार्थः साध्यते परं प्रतीति कथमागमः प्रतिज्ञा भवेत्। नहि किञ्चिदनुमानमन्यद्वा प्रमाणं यन्न शास्त्रेण[2] बाध्यते। अनित्यनित्यताद्यनुमानस्यापरापरशास्त्रेण बाधनात्। अस्त्यग्निरित्यादिकमपि शून्यताशास्त्रेण बाध्यते। अथ तदप्रमाणं कथमप्रमाणमनुमानस्य बाधकं। अनुमानेन बाधितमप्रमाणं न सर्व्वमिति चेत्। ननु तदेवानुमानं शास्त्रेण बाधितमप्रमाणमिति भवतः पक्षः। ततो न भवतः पक्षपरित्यागो युक्तः। अथ परीक्षितं प्रमाणन्तेन बाधनं।

नन्वनुमानमेव परीक्षा ततः कथं शास्त्रेण तेन बाधिता परीक्षा शास्त्रस्य प्रामाण्यहेतुः। न खलु तत्रासम्भवि तत् सम्भावयति। तस्मादनुमानमेव प्रत्यक्षपूर्व्वकं दृढमूलत्वात् प्रमाणं तेन बाधितं शास्त्रं न प्रमाणमेवेति न तत्प्रतिपक्ष इति न विरुद्धाव्यभिचारिवदत्रापि दोषः। तेनाकाशगुणत्वाभावेन सहानित्यत्वसाधनात्[3] साधनमेव न तु दोषवत्। विरुद्धाव्यभिचारी तु नित्यत्वं तदभावञ्च साधयन्नहेतुरेवासम्भवात्तदभावतद्भावयोरेकत्र। आकाशगुणत्वाभावस्य त्वनित्यत्वेन न विरोध इति कुतो दोष एकत्र धर्मिणि साधने।

अबाध्यबाधकत्वेपि तयोः शास्त्रार्थविप्लवात्।
असम्बन्धेपि बाधा चेत् स्यात् सर्व्वं सर्व्वबाधनम्[4] ॥९६॥

गन्धेपि पृथिवीगुणत्वविपर्यासनात्। अन्येन तेन च प्रकृतेन हेतुनेति।

सम्बन्धस्तेन तत्रैव बाधनादस्ति चेदसत्।
हेतोः सर्व्वस्य चिन्त्यत्वात् स्वसाध्ये गुणदोषयोः ॥९७॥

यदि नाम तत्र धर्मिणि तस्याकाशगुणत्वस्य सद्भाव इति सम्बन्धस्तथापि न तत्साध्यमप्रकृतत्वादप्रकरणेपि न बाधनं दोषः। सर्व्वस्य हेतोः स्वसाध्यापेक्षया दोषस्य चिन्तयि(तु)मभिसमीहितत्वात्।

तस्य स्वसाध्यानुपरोधेपि तदपरासम्बन्धबाधने यदि दोषः शास्त्रपीडालक्षणः। तदान्येनापि हेतुनान्यत्रापि धर्मिणि समैव दोषकारिणी पीडेति प्रतिपादयन्नाह।

---

[1] B. रिणोर्हि  [2] B. ०त्रागमेन  [3] B. साधनं  [4] बाधकं—इति हे.

**नान्तरीयकतासाध्ये सम्बन्धः सेह नेक्षते[1] ।**
**केवलं शास्त्रपीडेह[2] दोषः सान्यकृते समा ॥६८॥**

व्यापकस्य हि साध्यस्याभावसाधनं परिहर्त्तव्यं। यः **साध्यसाधन**नान्तरीयकस्तद्वाधने हि तदभावे व्याप्यस्यापि निवृत्तेः। न चाकाशगुणत्वस्य साध्यनान्तरीयकता। ततस्तदभावेपि न साध्योपरोधः। अपि च।

**शास्त्राभ्युपगमात् साध्यः शास्त्रदृष्टोखिलो यदि ।**
**प्रतिज्ञासिद्धदृष्टान्त[3]हेतुवादः प्रसज्यते ॥६९॥**

**प्रमाणसमुच्च(य)**स्य व्याख्याता प्राह। शास्त्राभ्युपगमात्साध्यता सकलस्य शास्त्रदृष्टस्यान्यथा शास्त्राभ्युपगमस्य व्यर्थता। नहि तदर्थासाध्यतायां शास्त्रोपगमः क्वचि[4]दुपयोगी। अभ्युपगमम्वार्हति। स्वातन्त्रेण[5] प्रमाणेन न किञ्चित्। तस्मादुपगम्य शास्त्रं तदर्थः साधनीयः। ततस्तद्विरोधे दोष एव।

अत्रोच्यते। असिद्धहेतुदृष्टान्तयोः प्रतिज्ञात्वं भवेन्निर्द्देशस्य। तयोरपि शास्त्रार्थत्वस्य कदाचिद्भावात्। भवतु को दोष इति चेत्। प्रतिज्ञैव सकला प्राप्ता ततो सिद्धतादिदोषो न वक्तव्यः।

ननु यः शास्त्रार्थो न भवति स हेतुर्व्वक्तव्यस्तत्रासिद्धतादिदोषः सावकाशः। न (।) तस्यापि स्वमुखेनाभ्युपगमात्। अथ स्वमुखेनाभ्युपगतं न प्रतिज्ञा परमुखेनाभ्युपगतं नितरामेव। परस्यापि **वैशेषिकादेः**। साध्यनिर्द्देशः प्रतिज्ञेति असिद्धसाधननिर्द्दशोपि भवेत्। तस्यापि यदि नामानिर्द्दिष्टः शास्त्रार्थः प्रतिज्ञा न भवेत् निर्द्दिष्टस्तु भवत्येव। तथा हि **भाष्य**[6] उक्तमागमः प्रतिज्ञा। न तु[7] प्रतिज्ञा या स आगमः। नन्वा[8]गमः प्रतिज्ञैव। न (।) आगमार्थनिर्द्देशादागमः प्रतिज्ञानस्वरूपतः। ततः साध्यनिर्द्देशः प्रतिज्ञेति स्यात् प्रतिज्ञाऽसिद्धहेत्वादिस्तस्याप्यागमार्थत्वात् (।)

सत्यमेतत्। सकल एव शास्त्रार्थः साध्यः। तथापि। न साधनत्वेनोक्तस्य प्रतिज्ञात्वं साध्यत्वेनानीप्सितत्वात् **न्यायमुखप्रकरणे**। तत्र तु स्वयं साध्यत्वेनेप्सितः पक्षो विरुद्धार्थोनिराकृत" इति पाठात्। न च साधनत्वेन निर्द्दिष्टस्ये[9]प्सिततमत्वं साध्यता च कर्मणः। न च साधनत्वेनेष्टं कर्म्म। तद्यथा ओदनं पयसा भुङ्क्त इति पयः। **प्रमाणसमुच्चये** च स्वरूपेणैवेति अवधारणात्। **नैयायिकस्य** च साध्यनिर्द्देशः प्रतिज्ञेति साध्यत्वेनैवेति भावप्रधानत्व[10]स्यावधारणात् न साधननिर्द्देशः प्रतिज्ञा। अत्रोच्यते।

**उक्तयोः साधनत्वेन नो चेदीप्सितवादतः[11] ।**
**न्यायप्राप्तं न साध्यत्वं वचनाद् विनिवर्त्तते ॥७०॥**

शास्त्राभ्युपगमादिति न्याय एष यदि तत्कथं न्यायप्राप्तस्य वचनेन निवर्त्तनं। न्याय-

---

[1] नेक्ष्यते—इति हे.  [2] M. पीडेति  [3] दृष्टान्ते—इति हे.
[4] B कश्चिदु  [5] B स्वातन्त्र्येण  [6] न्यायभाष्ये
[7] B न तु  [8] B नत्व।  [9] B साधननि०
[10] B प्रधानस्य  [11] T. बाधतः—इति हे,

सूचकं हि वचनं (न) न्यायमेव विरुणद्धि। अथ वचनसंसूचितोपि न्यायः साधक एव। साधनत्वेन[1] निर्द्दिष्टस्यासाध्यत्वस्य।

नैतदस्ति।

विरुद्धाव्यभिचारि स्याद् द्वयमेतत्तथा सति। शास्त्राभ्युपगमादेतदीप्सितादि वचस्तथा ॥११८॥

यदि ईप्सितवचनादि न्यायेनासाध्यत्वं साधनस्य साध्यते। तथा शास्त्राभ्युपगमादित्यनेन साध्यत्वं (।) तथा सत्येकत्र परस्परविरुद्धार्थसाधनादे तौ शंस(? संश)सं जनयेतां। तथा च। शास्त्राभ्युपगमादिति न साधक इति कुतः शास्त्रदृष्टस्यासाधनत्वेनेष्टस्यापि साध्यता।

अथ शास्त्राभ्युपगमादिति न न्यायः। तथा सतीप्सितम्वादिना साध्यं न साधनत्वेनेष्टं (।) अत्राह

अनीप्सितमसाध्यश्चेद्वादिना[2]न्योप्यनीप्सितः।
धर्मोऽसाध्यस्तदाऽसाध्यं बाधमानं विरोधि किम् ॥७१॥

## (२) शब्दस्याकाशगुणत्वनिरासः

नह्याकाशगुणत्वमपि वादिनेप्सितमतो न साध्यं। प्रकृतपरित्यागेन हि कः प्रेक्षावान् अप्रकृतमीप्सिततमं कुर्यात्।

ननु शास्त्रमभ्युपगम्य तदर्थविरोधे स्वयमुक्तेन हेतुनाऽवश्यमेव दोषदुष्टः। न। प्रतिवादीष्टस्य स्वयञ्च साधनात्। न दुष्ट इति प्रतिपादितमेतत्। अथ प्रमाणविरोधोपि यद्याकाशगुणता शब्दस्य न स्यादुत्पत्तिस्थान एव श्रूयेत। आकाशगुणत्वे तु तद्योगादन्यत्रापि श्रुतिः। नैतदस्ति। तत्रैव तस्य ग्रहणात् रूपवत्। दूरस्थितेन कस्माद् गृह्यते। रूपस्यापि तर्हि तदाकाशगुणत्वप्राप्तिः। अपि च। तदाकाशमेकमनेकमिति वा स्यात् (इति)। यद्येकं योजनसहस्रादपि तद्गुणस्य श्रुतिः स्यात्। अनेकत्वे वदनदेश एव। तस्मान्नाकाशगुणत्वस्य शब्दे कुतश्चित् प्रतीतिः।

नन्वाकाशगुणत्वमन्तरेणावस्थानमेव न स्यात्। अवश्यं हि पदार्थेन स्थितिमत(ा)भाव्यं। तत्र रूपस्पर्शरसगन्धानां पृथिव्यादिमहाभूतचतुष्टयमाश्रयः। शब्दस्य त्वाकाशमनाश्रि[3]तत्वायोगात्। पृथिव्यादीनामपि तर्हि आकाशाश्रितत्वमेव तत एव हेतोः। न(।) गुणत्वाभावात्। तदेवागुणत्वमाश्रितत्वेन सिध्यति। गुणत्वञ्च शब्दस्याश्रितत्वे पृथिव्यादीनां गुणाश्रितत्वादगुणत्वञ्चेत्। तदेव न सिध्यत्याश्रयस्याकाशस्य सम्भवे। आकाशाश्रितं हि रूपादि पृथिव्यादि च भवेत्। पृथिव्यादे[4] रूपादेश्चाकाशासमवायित्वात्। पृथिवीसमवेतं हि रूपादिकं। कोयं **समवायो** नाम। एकलोलीभावेनावस्थानमिति चेत्। न तर्हि शब्दस्याकाशगुणत्वं तेन सहैकलोलीभावेनाप्रतिपत्तेः। गन्धस्य च पृथिव्या अथाकाश उपलभ्यमानत्वात्तदाश्रितः शब्दस्तदेव च तस्य स्थानं। तूलकादेरपि तर्हि तत्रोपलभ्यमानत्वादाकाशाश्रितत्वं तेन धारणात्। स्वयमेव लभ्य(?घु)त्वादवस्थानमिति चेत्। शब्द-

---

[1] B साधकत्वेन [2] B ०दिनो [3] B. ०काशानाश्रित [4] B. व्यादि

**स्यापि तथा स्यादित्यनाकाशगुणत्वं। अथ तूलकादेः पृथिव्यपि स्थानमाकाशे तु स्थानमाकाशकृतं वायुना सन्धारित्वात्। शब्दस्याप्येवमिति नाकाशगुणता। तथाहि।**

वायुना प्रेर्यमाणस्य शब्दस्यान्यत्र न श्रुतिः। वायुरेवाश्रयस्तस्य केयमन्यस्य कल्पना ॥११९॥

**यथा हि। वायुना धार्यमाणस्य तूलकादेर्न्न वायुगुणता तथा शब्दस्यापि।**

यथा च प्रेर्यते तूलमाकाशे मातरिश्वना। तथा शब्दोपि किं वायोः प्रतीपं शब्दवित्क्वचित् ॥१२०॥

**अथ शब्दः प्रेरयितुमशक्य एव मातरिश्वना गुणेन संयोगाभावात्। तूलकस्य तु पृथिवीत्वान्न विरोधः। अन्यथाच्छायातपादिरपि प्रेर्येत[1]। कथन्तस्य प्रेरणं द्रव्यस्यैव तदाश्रितस्य प्रेरणात् (।)**

संयुक्तसमवायेन वायुना प्रेर्यते यदि। नैषापि कल्पना शब्दे प्रेरणं वियदः कुतः[2] १२१॥
अथापि प्रेर्यते व्योम तथा सति न निष्क्रियं। व्यापिनः प्रेरणा चास्य सम्भवत्यतिदुर्घटम् ॥१२२॥

**अपि च।**

संयुक्तसमवायेन यदि प्रेरणमिष्यते। समवायेन किन्नास्ति समवेतस्य वायुना ॥१२३॥

**वायुगुणतैव शब्दस्यास्तु[3] तद्द्वारेण तस्य देशान्तरगमनात्। वायोः स्पर्श एव गुण इति चेत्। नैकगुणत्वमेव द्र(व्य)स्येति नियमः। रूपरसगन्धस्पर्शवती पृथिवीत्यादि परसिद्धान्तात्। दृष्टश्च गुणस्यापि गन्धस्य वायुना प्रेरणं। तत्रापि संयुक्तपृथिवी समवायादेव प्रेरणमिति चेत्। न। तदुपलम्भे पृथिव्युपलम्भाभावात्। तत उत्पन्नस्य केवलस्य वायुना प्रेरणे को विरोधः। गुणस्य निष्क्रियत्वादिति चेत्। तदेव निष्क्रियत्वं केवलप्रेरणायां न सिध्यति। सक्रियत्वमपि सहितप्रेरणायामसिद्धमिति चेत्। न। सहितप्रेरणाया असिद्धेः। गुणस्य सक्रियत्वं कथमिति चेत्। अयमपरोस्यय दोषस्तु।**

यद्ययुक्तं क्वचिच्छास्त्रे गुणत्वादि निषिध्यते(।) युक्तमप्यत्र नेष्येत तदेतद्राजशासनं ॥१२४॥
किञ्च न प्रेरणं नाम निजस्थानविनाशिनाम्। सक्रियत्वं न नामास्ति पदार्थस्य विनाशिनः।१२५॥
देशान्तरे तत्सदृशक्षणोत्पत्तिगुणेन किं। जलकल्लोलगमनः परैः शब्दो न किं मतः ॥१२६॥

**अपि च।**

न गुणव्यतिरेकेण गुणवान् मानसङ्गतः। स्पर्शादिव्यतिरेकेण किमन्यदुपलभ्यते ॥१२७॥

**यदि च गन्धः संयुक्तसमवायेन वायुना भुवा सहाकृष्यते। शब्दोपि पृथिव्यादिगुण एव। ततः पृथिव्यादिना सहैवाकृष्यतां किमाकाशकल्पनया।**

## (३) आकाशस्य भूतत्वनिरासः

**अपि च पृथिव्यादयो धारणादिकर्म्मणा परिकल्प्यतां नाम आकाशन्तु कथं। अवकाशदानादाकाशमपीति चेत्। किमिदमवकाशदादन्नाम। अवस्थितेरव्याघातः (।) पृथिव्यादयः परस्परदेशावस्थितिविघातकृतः। ततोऽवस्थानस्य दात्रापरेण केनचिन्महाभूतान्तरेण भवितव्यं। तदाकाशं।**

---

[1] B. प्रेर्यतां  [2] T. चतुर्थमाह्निकं (समाप्तम्)  [3] B. ०स्ति

**तदपि यत्किञ्चित् । तथाहि ।**

नावस्थितेर्व्विघातोस्ति यदि भूतान्तरस्थितिः । परस्परस्याभावेपि न विघातोस्त्यवस्थितेः ॥१२८॥
महाभूतान्तराभावे महाभूतान्तरस्थितिः । महाभूतान्तराभावमात्रमाकाशमुच्यताम् ॥१२९॥

**ननु महाभूतान्तरस्य वाय्वादेः क्वावस्थानं यदि नाकाशं । नन्वाकाशस्यापि क्वावस्थानं यदि महाभूतान्तरं म भवेदित्यनवस्था । अथाकाशमनाधारस्वभावमाधारश्चान्यस्येति चेत् । वायुरवि तर्ह्यनाधारस्वभावोन्यस्य चाधार इति अर्थान्तरपरिकल्पना न साध्वी । अपि च ।**

लोष्ठस्य कथमाधारो नाकाशं पततःक्वचित् । वायौ गतिमति व्योम्नः कथमाधारतागतिः ॥१३०॥
वायोर्गत्यविबन्धश्चेदाकाशान्नेदमुत्तरं । गतेर्व्विबन्धाभावोहि विबन्धकविनाकृतः ॥१३१॥

**अथ ।**

आकाशं व्यापि नित्यञ्च धार्यतेन्येन तत्कथं । तेनानाधारता तस्य परं प्रति तु धारकं ॥१३२॥
व्यापित्वमात्मनोप्यंतत्तदवस्थमरूपि च । तस्यैवाधारभावः किं परं प्रति न कल्प्यते ॥१३३॥
यस्यात्मा नास्ति तादृक्षस्तस्याकाशेन का क्रिया ।
दिशोपि व्यापिताकाशकृत्यं ताभिः प्रकल्यताम् ॥१३४॥
परस्परव्यापितायामेकत्वं व्यापिनां न किम् ।

**नन्वाकाश आलोक इति व्यवहारो नात्मादिषु कथमेकता । (ननु) यदि व्यवहारोनुरुध्यते यथाव्यवहारस्तथा पदार्थकल्पना तदनुरूपैव युक्ता । छिद्रमेवाकाशम् । अच्छिद्रकारकाभावे च तद्व्यवहारः । यदा चाच्छिद्रकारिणो भावस्तदाकाशं क्व गतवत् । नहि पाश्वापि(द)श(?स)रणमुच्यते[1] व्योम्नस्तदभावे च तत्र चान्यत्र वा क्व गतमाकाशं[2] । विनष्टञ्चेत् । साध्वी नित्यता । तत्रैवास्तु इति चेत् । अच्छिद्रमाकाशमिति च व्याहतं । तत्रा[3]प्यस्त्यवान्यथा तस्य पदार्थस्य स्थितिरेव न स्यात् । अथ केयं स्थितिः । किं धार्यमाणता । अथाविहन्यमानता । यदि धार्यता । तदसत् । नाकाशेन घटादयो धार्यन्तेऽपि तु भुवा । (अथ) अनुपघातः । तदप्यसत्यं । यतः ।**

उपघातो यतस्तस्य तस्याभावेन तस्य सः । आकाशान्नोपघातस्तु व्यक्तमाकाशचर्व्वणम् ॥१३५॥
तस्मादभावो भूतानां चतुर्ण्णां व्योम कथ्यते । तदन्यत्र महाभूते व्यवहारोस्ति न प्रमा ॥१३६॥

## (३) दिङ्निरासः

**अनेन दिगपि व्याख्याता । तस्या अपि व्यापितायां नावकाशदानादिकं । तथाहि ।**
व्यापित्वेन प्रतीच्यादिप्रत्ययो नेतरत्वतः । गतिर्न्नास्त्यपरा तस्यास्तदभावप्रसङ्गतः ॥१३७॥

**यदि व्यापित्वं दिशः । सैव पूर्व्वा ततोन्यत्र व्यवस्थितस्य कथं परा । अथ तत्रोभयरूपता तथा सत्युभयप्रत्ययप्रसङ्गः ।**

**अथ प्रतिनियतव्यञ्जकाभावात् काप्यवस्था दिशोभिव्यज्यतेनैकावस्थायाः । थाय पितृपुत्रादिरूपस्य स्वरूपस्यापि पित्रादित्वाभिव्यक्तिः पुत्रादित्वापेक्षया[4] ।**

---

[1] B ०मुपलभ्यते　[2] B वाभावात्　[3] B अत्रा०
[4] B. रूपस्य पुरुषस्य पुत्रादित्वाभिव्यक्तिः पित्रादित्वापेक्षया

तदप्यसद्यतः ।

अवस्थाया दिशो व्यक्तिर्न्नियताया यतोन्यतः । तत एव हि भावानामवस्था पूर्व्वतादिवत् ॥१३८॥

यत एव पूर्व्वापरदेशव्यवस्थितपुरुषापेक्षया (इ)त(र)स्य परादिता दिग्भागस्य तत एव भावानामेव सेति किन्नाभ्युपेयते । पूर्व्वदेशावस्थितत्वात् पुरुषादीनां पूर्व्वता देशस्य देशान्तरापेक्षया तस्यापि पुनरादित्याद्यपेक्षयेति किमन्यदिक्परिकल्पनेन । आदित्यादिना दिगभिव्यज्यते । तेन चादित्यस्य पूर्व्वतादिता । तदिदमितरेतराश्रयदोषः । तावन्मात्रेण च व्यवहारः प्रसिद्धः किमन्यापेक्षापरिकल्पनाप्रयासेन ।

नन्वपेक्षामन्तरेणापि ऋज्वेतदि(ति)भवति व्यवहारात् पदार्थान्तरमेव दिक् ।

तदप्यसत्यं । यतः ।

अपेक्षाभेदतस्तत्राप्यस्ति दर्शनमृज्विति । अत्यन्ताभ्यासतोन्येन विना पश्चात्तथा गतिः ।.१३९॥

तथा हि तव प्रगुणमेतदिति लोक उपलभ्यते व्यवहारः । ततोत्यन्ताभ्यासात् पश्चात्तद-नुसरणेनापेक्षां विनापि । कुत एतत्(।) तदन्वयव्यतिरेकानुविधानादन्यत्रापि निमित्त नैमित्ति-कभावगतिः । तथाहि ।

समुद्रमध्यमध्यास्य जायते विभ्रमो नृणां । ग्रहनक्षत्रदृष्ट्या तु दिग्विभागविनिश्चयः[१] ॥१४०॥

न नक्षत्रादिसम्बन्धमात्राद्दिगपरेक्ष्यते । स्वरूपाप्रतिभासे हि कथन्त(द्ग)तिरुच्यते ॥१४१॥

तथाहि । पूर्व्वादिगिति भास्करोदयसङ्गम एव मनसि निलीयते ।

नन्वादित्यस्यान्यथा दर्शनेपि दिग्व्यामोहवाहिमानसानां सैव पुर्व्वोपलक्षिता दिक् प्रति-भाति नादित्योदयवशेन । तथा ह्यादित्योदयोपि पश्चिमदिगवलम्ब्यवभासते ।

अत्राप्युच्यते ।

अभ्रान्तमानसासङ्गी यत्रास्तमय ईक्षितः । स्वभ्यस्ता सैव दिक् तत्र ग्रामारामादिलक्षिता ॥१४२॥

य एवारामग्रामादि(र्)उत्तरादिदिगुपलक्षणमादित्योदयाद्यपेक्षया प्राक्तनावस्थायां सातत्येनोपलब्धः तदभ्यासापराम्ना[२]दित्योदयोनुरुध्यतेऽपि तु तदुपलक्षिता सैव दिगिति दृढवास-नासङ्गमाद् व्यवहारः । तस्मात् (।)

अनादिवासनासङ्गसम्मुखीभूतचेतसां । प्रमेयविरहादेते प्रत्यया एव केवलाः ॥१४३॥

न खल्वत्यन्तमवधानदानतात्पर्यपर्यासितपर्याकुलमानसोपि दिगादीनां निजं रूपमवधा-रयति । अनवधारिततद्रूप एव (तु) लोकः परामर्शविरहाद् गतानुगतिकन्यायापकृतमानसतया तथा व्यवहरतीति किमत्र कुर्म्मः ।

अनादित्वात्तु सत्यत्वे नास्ति ह्यस्यापि[३] सत्यता ।

ईश्वरादिविकल्प(ा)नामप्यनादि(न्त)तो न किम् ॥१४४॥

---

[१] B विनिर्णयः

[२] त्रुटिपूर्त्तिरिवायं पाठो बहिःपंक्ति निवेशितः—आत्मन आदित्यस्य त्यागात्

[३] B. कस्यापि

तस्मादसद्व्यवस्थेयं दिगादीनां व्यवस्थितिः। व्यवहारमात्रमेवेदं शास्त्राभ्यासादुपागतम् ॥१४५॥
न शास्त्राणामनादित्वे सर्व्वेसामेव सत्यता। परस्परविरोधेन बाध्यबादकभावतः ॥१४६॥

**तस्मात्पदार्थानामेव परस्परापेक्षया पूर्व्वः पर इत्यादि नामव्यवहारार्थमुपरचयन्ति स्म वृद्धाः। अनादित्वाद्वा संस्कारस्य पूर्व्वव्यवहार एव प्रबोधमुपगतस्तथा व्यवहारयतः[1]।**

## (४) कालनिरासः

**स एव च स्वभावो भेदेन निर्दिश्यमानः कालाद्याख्यां भजति। तथाहि। आसीदस्ति भविष्यतीति प्रत्ययेभ्यः देवदत्तादेरतीतानानागतकालव्यवस्थानं। आसीत्सकाल इत्यादितश्च कालस्यापि कालान्तरेवस्थानं प्रसक्तमित्यनवस्था। अथ स्वरू(पे)णैव कालः पूर्व्वो न कालान्तरापेक्षया। तथा दिगपीति। स्वभावभूतधर्मभेदेन तथा व्यपदेश ऐन्द्री दिक् पूर्व्वेति। एवन्तर्हि (।) पदार्थानामपि वृक्षादीनां स्वयमेव पूर्व्वता नापरकालादिपूर्व्वत्वापेक्षया। अथ कालादेः स्वतो न पूर्व्वादिताऽपि तु तत्संसर्गिपदार्थापेक्षया। तथाहि।**

राजानो ये चिरातीता(स्) तत्संसर्गव्यपेक्षया।
　　　　कालोप्यसौ चिरातीत इति तत्र व्यवस्थितिः ॥१४७॥

**अत्रोच्यते।**

अतीत भावसंसर्गात्कालस्यातीतता यदि। भावस्य तदतीतत्वं तत्कालापेक्षयाऽपतेत् ॥१४८॥
अन्योन्यसंश्रयत्वेन न स्यादन्यतरस्थितिः। यौगपद्यादतीतत्वं यदि स्यादनवस्थितिः ॥१४९॥
न परस्परहेतुत्वं युगपद्भाविनोर्द्वयोः। तयोरथ परस्माच्चेत्तस्यापीत्यनवस्थितिः ॥१५०॥

**अन्यच्च। यद्याकाशगुणः शब्दः। वायुगुणः स्पर्शः। तेजोगुणो रूपं। अब्गुणो रसः। पृथिवीगुणो गन्धः। कलगुणः क इति वक्तव्यमेव। तथात्मादेः। अथ कालस्य महत्वादिकं तदात्मादीनामपि। ततः प्रातिस्विकः कश्चिद् वक्तव्यः। अथ पदार्थानां प्रतिबन्धाभ्यनुज्ञे। ते(च)कारणवशादेवान्वयव्यतिरेकतः। तस्यापि स्वकारणादित्यनादिः काल[2] परंपरा। अपि च।**

नित्यस्य व्यापिनः शक्तिः प्रतिबन्धाभ्यनुज्ञयोः।
　　　　यद्यात्मनोपि सा प्राप्ता नेष्टादन्यस्य भिन्नता ॥१५१॥

**तथाहि। कालो दिगात्माकाशमिति समानमेतन्नित्यादितया। ततः।**

समानदेशकालत्वे निर्व्यापारत्वयोगतः। अनेन कृतमन्येन नेति वैधर्म्यवित् कथम् ॥१५२॥

**तस्मादसन्नेवाकाशादिवादः। तस्मादाकाशगुणत्वं शब्दस्य न प्रमाणसङ्गतं। अपि च**

आकाशवायुप्रभवो हि शब्दः कथं न वायोर्गुण उक्त एषः।
　　　　आकाश एव श्रुतिरस्य तेन व्योम्नो गुणत्वं प्रतिपन्न एषः ॥१५३॥
ज्वालादिराकाशगतो न दृष्टः किन्तद्गुणत्वं कथितन्न तस्य।
　　　　अन्योपि तस्याश्रय इत्ययुक्तं ध्वनेरपि स्यात् पटहादिरन्यः ॥१५४॥

---

[1] B. व्यवहारयति　　[2] B. कारण०

यदि यो यत्रस्थतया प्रतीयते स तद्गुणः ज्वालादिकमपि किन्नाकाशगुणः। तस्यान्योपि कुड्यकाष्ठादिक आश्रय इति तत्रस्थतया प्रतीयमानो नाकाशगुणः।

तदसत्। उभयस्थत्वे भवतूभयगुणः। ध्वनेरपि पटहशङ्खादयः किं नाश्रयः। देशान्तरे श्रूयमाणत्वादिति चेत्। आलोकादेरपि समानमेतत्। आश्रयेपि मण्यादौ तस्योपलंभादिति चेत्। क्वथ्यमानद्रव्यशब्देपि समानमेतत्। तस्मान्नाकाशगुणत्वं शब्दस्य। तत्रस्थतोपलब्धेरपि तत्रस्थालोकवत्। न चाकाशस्य स्थापकत्वमप्रतिघत्वात्। आकाशमरूप्यनिदर्शनमप्रतिघं। आलोके सत्याकाशं प्रज्ञायते यत्रालोक एव तत्राकाशप्रज्ञप्तेः प्रज्ञप्तिमदाकाशं। तस्मादाकाशगुणः शब्द इति न सुभाषितं। तस्मान्नाकाशगुणत्वबाधने कश्चिद्दोषः।

## २. अन्यथा 'स्वयं' शब्दोऽनर्थकः

अपि च।

**पक्षलक्षणबाह्यार्थः स्वयं शब्दोप्यनर्थकः।**

स्वयं शब्दो हि शास्त्रकारेष्टस्य शास्त्राभ्युपगमात् साध्यताप्राप्तिरिति तन्निवृत्यर्थ एव। नान्यदस्य प्रयोजनं। यदि पुनस्तस्यापि साध्यता। व्यर्थतैव तस्य स्यात्। तथा सति पक्षलक्षणासङ्गतत्वात्।

**शास्त्रेष्विच्छाप्रवृत्त्यर्थो यदि शङ्का कुतो न्वियं ॥७२॥**
**सोऽनिषिद्धः प्रमाणेन गृह्णन् केन निवार्यते।**
**निषिद्धश्चेत् प्रमाणेन वाचा केन प्रवर्त्त्यते ॥७३॥**
**पूर्व्वमप्येष सिद्धान्तं स्वेच्छयैव गृहीतवान्।**
**कथञ्चिदन्यं न[1] पुनर्ग्रहीतुं लभते न किं ॥७४॥**

यदि प्रेक्षापूर्व्वकारी प्रपत्ता परीक्षैव[2] तस्य निमित्तं शास्त्राभ्युपगमस्य। ततः कथं शास्त्रेष्विच्छाप्रवृत्त्यर्थं स्वयं-ग्रहणं (।) न च सर्व्वमेव शास्त्रं परीक्षाक्षमं ततः प्रमाणबाधिता परिशुद्धेन प्रवृत्तेरेवेति कुत इच्छाप्रवर्त्तनस्य सम्भवः। यतः।

नेच्छामात्रात् प्रवर्त्तन्ते प्रेक्षापूर्व्वक्रियाकृतः। विमृश्यकारिता पुंसां सुधियां प्रथमं पदम् ॥१५५॥
अप्रेक्षापूर्व्वकारी चेत्तस्येच्छैव निबन्धनं। प्रथमोपगमस्तस्य तावन्मात्रप्रवर्त्तितः ॥१५६॥
ततस्तद्वद्द्वितीयोपि तृतीयोपि भविष्यति।
तदर्थमेषा शिक्षा चेत् नेच्छेत्येव स शिक्ष्यताम्[3] ॥१५७॥

यदि शास्त्रमिच्छया ग्रहीतव्यमित्ययमेव न्यायः। स्ववचनेन कथ्यते पूर्व्ववदिदमपि त्वयेच्छयैव ग्राह्यं तदा "परीक्ष्य युक्तं ग्रहणं नेच्छामात्रमत्र त्राण"मिति न्यायदर्शनं युक्तमिच्छाप्रवर्त्तनविरोधि। तस्मात् स्वयं ग्रहणमयुक्तमेव यदि शास्त्रदृष्टं साध्यं। एवन्तर्हि स्वयमिष्टार्थसाधनेपि शास्त्रार्थं परित्यज्य यदि प्रमाणबाधा न तत्र प्रवर्त्तेत कश्चित्। अबाधनं चेदिच्छया स्वयमेव प्रवर्त्तते। किं स्वयं-ग्रहणेन।

---

[1] B स, M. किंचिदन्यं स [2] B परीक्षेव [3] B शिक्षतां

परिहारः ।

**इष्टेर्विप्रतिपत्तीनामत्राकार्षीत् स्वयं श्रुतिम् ।**
**इष्टाक्षतिमसाध्यत्वमनवस्थाञ्च दर्शयन् ॥७५॥**

विप्रतिपत्तिनिराकरणार्थं सकलमेव शास्त्रं ततोऽत्रापि शास्त्रदृष्टं साध्यमिति विप्रतिपत्तिनिराकरणम् । केन न्यायेनेति चेत् । इष्टाक्षत्यसाध्यतानवस्थादर्शनेन । नहि शास्त्रदृष्टबाधनेपीष्टस्य क्षतिः । अनान्तरीयकतयापि न साध्यं । अनान्तरीयकत्वेपि तत्साधनेऽनवस्थाप्रसङ्ग इति न्यायः स्वयं-ग्रहणेन दर्श्यते ।

तस्मादसदेतत् ।

**समयाहितभेदस्य परिहारेण धर्मिणः ।**
**प्रसिद्धस्य गृहीत्यर्थं[3] जगादान्यः स्वयं श्रुतिं ॥७६॥**

शास्त्रेण रचितो भेद आकाशगुणत्वलक्षणो यस्य धर्मिणस्तत्परिहारेण स्वयमेव प्रसिद्धो न शास्त्रकारेण साधितो यो धर्मी तस्य परिग्रहो यथा स्यादिति स्वयं-ग्रहणं । तथाहि । स्वयमेव यो धर्मी व्यवस्थितो नान्येन व्यवस्थापितः स धर्मी भवति नान्य इत्यर्थादुपपन्नमेतत् ।

तदसत् । यतः ।

**विचारप्रस्तुतेरेव प्रसिद्धः सिद्ध आश्रयः ।**
**स्वेच्छाकल्पितभेदेषु पदार्थेष्वविवादतः ॥७७॥**

विचारो हि नित्यानित्यादिरूपतया[1] क्वचिद् धर्मिणि क्रियमाणः सिद्धरूपे क्रियते । यस्य तु यदेव रूपं साधयितव्यं । तत्र तदेव तावद् विचार्यतां, असिद्धे धर्मिणि साधनासम्भवात् ।
अथ शब्दरूपं सिद्धमेव । तदेव तर्हि धर्मित्वेनोपादातव्यं । किमसिद्धविशेषणोपादानेन । अथ तथा भूत(एवेच्छा)वादिनोऽनित्यतां साधयितुं ।

असदेतत् । यतः ।

श्रोतुस्तत्रानभिप्रायात्तस्मात्तस्याप्रसिद्धितः । आकाशगुणयुक्तस्य साध्यस्य वचनं वृथा ॥१५८॥

नहि प्रेक्षापूर्व्वकारिणामनर्थिका वचनानां वृत्तिः । न तावत् प्रतिवादिनामाकाश[2]-गणत्वविशेषणमनित्यत्वमभिप्रेतं । नाप्यनभिप्रेतमेव प्रतिज्ञामात्रात् सिध्यति । एवं हि अनाकाशगुणः शब्दो(ऽ)नित्यः कृतकत्वादित्यपि सिध्येदन्यो वा यथेप्सितोर्थः । अथैवमेव वादिनोभिरुचितं । तथा सति तथाभूतो विवेकरहितोभिरुचिमात्रप्रेरितः केन निवार्यताम् ।

तस्मादसदेतत् ।

**असाध्यतामथ प्राह सिद्धादेशेन धर्मिणः ।**
**स्वरूपेणैव निर्देश्य इत्यनेनैव तद्गतम् ॥७८॥**

यतः ।

**सिद्धसाधनरूपेण निर्देशस्य हि सम्भवे ।**
**साध्यत्वेनैव निर्देश्य इतीदं फलवद् भवेत् ॥७९॥**

---

[1] B. नित्यनित्यतया [2] B. वादिनाकाश० [3] B. गृहीत्यर्थी—इति हे.

**अथैवं व्याख्यायेत। न स्वरूपेण धर्मी साध्यः। स्वयमेव सिद्धो भवतीति वचनात्। अन्यथा स्वयम्वचनेन तस्य विशेषणं किमर्थजातं जनयतीति। तथा हि। न तावद्धर्मिणः सिद्ध(ता)मात्रप्रतिपादनार्थं वचनं विचारप्रस्तावत एव प्रसिद्धत्वात्। तस्मात् प्रसिद्ध एव भवति न साध्य इति। अस्य साध्यत्वनिषेधार्थं स्वयम्वचनं। ततः साध्यता न धर्मिण इत्युक्तं(।)**

**तदप्ययुक्तं। यतः।**

प्रेक्षावान्नास्त्यसौ कश्चिद्यः सिद्धमपि साधयेत्। तं तदा प्रतिपन्नेव साध्यतां गमयेत् कथम्॥१५९॥

**एवन्तर्हि स्वरूपेणैवेति वचनमनर्थकं। विचारप्रस्तुतेरेवासिद्धस्य साध्यत्वात्। न खल्वसिद्धं विवादास्पदीभवति। तथा।**

सन्दिग्धे हेतुवचनाद् व्यस्तो हेतोरनाश्रयः।

**तथा विचारस्यापि। तथा सिद्धोपि।**

**अत्रोच्यते। स्वरूपग्रहणं हि न सिद्धनिवृत्त्यर्थं साधनत्वेन निर्दिष्टस्यासिद्धस्य निराकरणार्थत्वात्। अत एव स्वरूपेणैवेति।**

अवधारणमेवैकं फलवत् प्रतिपादितं।

**अन्यथा द्वयमपि प्रतिपादनीयं भेदेन। किमर्थन्तर्हि सिद्धसाधनरूपेणेत्युक्तं। सिद्धरूपेण धर्मिणोऽसिद्धस्य। तथा धर्मस्य साधनरूपेणेति व्याख्यातव्यं। स च सिद्धरूपेण निर्देशो धर्मिणः केवलस्य यथा समवायिकारणमात्मा। तथा आकाशगुणः शब्दो(ऽ)नित्य इति धर्मिविशेषणत्वेन। अथ यत्र धर्मिविशेषणं तत्राकाशगुणः शब्दोऽनित्य इति वचनात्। कथमवगतमनित्यत्वं नाकाशगुणत्वमिति। किमनित्यो यः शब्दः स आकाशगुणोऽथाकाशगुणो यः सोऽनित्य इति। तदेतदपि प्रकरणादवगन्तव्यं। शब्दस्य साधारणत्वेपि च तथा च प्रतिपादितं। कथन्तर्हि श्रावणः शब्द इति स्वरूपग्रहणस्य व्यवच्छेद्यं दर्शितं। अवधारणार्थत्वे हि तदयुक्तं।**

**सत्यमेतत्। तथापि तदन्यार्थं कृतमन्यार्थमपि भवतीत्यभ्युपगम्य तदुक्तम्। अथापि कुर्यात् साध्यं तथापि स्वरूपग्रहणस्य व्यावर्तकत्वाददोषः। निराकृतस्य कथं प्राप्तिस्तत्र विवाददर्शनात्। तच्च पश्चात् प्रतिपादयिष्यामः।**

**अनुमानस्य सामान्यविषयत्वं च वर्णितं।**
**इहैवं न ह्यनुक्तेपि किञ्चित्पक्षे विरुध्यते॥८०॥**

**सामान्यविषयमनुमानमिति प्रतिपादितमाचार्येण। न च धर्मी सिद्धः तदन्यो वा साध्यमानः सामान्यं। ततः स्वयं-ग्रहणेन यदि नाम न धर्मी साध्यत्वे (न) परिहृतस्तथापि न दोषः। स्वलक्षणत्वेनैव परिहारात्।**

**अपि च।**

**कुर्याच्चेद्धर्मिणं साध्यं ततः किं तन्न शक्यते।**
**कस्माद्धेत्वन्वयाभावान्नु दोषस्तयोरयम्[1]॥८१॥**

[1] M. नन दोषस्तयोरयम

उत्तरावयवापेक्षो न दोषः पक्ष इष्यते ।
तथा हेत्वादिदोषोपि पक्षदोषः प्रसज्यते ॥८२॥
सर्वैः पक्षस्य बाधातस्तस्मात्तन्मात्रलिङ्गिनः[1] ।
पक्षदोषा मता नान्ये प्रत्यक्षादिविरोधवत् ॥८३॥

ननु (।)

"साध्यत्वेनेप्सितः पक्षो विरुद्धार्थानिराकृत" इति पक्षलक्षणं । तत्र यदि धर्मिणमेव साध्यं कुर्यात् को दोषः । अथ धर्मी साधयितुमशक्यः स्वलक्षणस्यासाध्यत्वात् । धर्मिसत्तायां हि (साध्यायां) स्वलक्षणस्य साधनं भवेत् । हेतोर्विशेषेणान्वयाभावात् । हेतोरेव तर्हि तत्र (।)शक्तिरदृष्टान्तत्वात् । ततोन्यस्य दोषोन्यस्य दोष इति न युक्तं ।

अथ पक्षस्याप्यसौ दोष एवासिद्ध्यर्हत्वात् । एवन्तर्हि सर्व्वो हेतुदोषः पक्षदोषो भवेत् । तद्दोषेण पक्षस्यैवासिद्ध्यर्हत्त्वात् । अथ यत्र पक्षे हेतुरन्यः साधकः संभवति यथाऽनित्यः शब्द इति तत्र हेतुदोषश्चाक्षुषत्वादित्यादौ तथाहि । न पक्षस्यासाधनार्हतादोषोऽन्येन हेतुना साधनात् । यत्र तु कश्चिदपि न हेतुः स पक्षस्य दोषः । सम्भवी हि स्वाभिप्रायः (। स) पक्षवचनेन निदर्शनीयः । स यथा प्रमाणबाधायान्न सम्भवति तथा स्वलक्षणत्वेपि । ततः पक्षदोष एवायमिति न्यायः ।

अत्रोच्यते ।

असम्भवित्वं पक्षस्य किमिदं हेत्वपेक्षया । अथ स्वगतमेवास्य तदेतद्[2] द्वयमप्यसत् ॥१६०॥
हेतुसङ्गात् स दोषश्चेद्धेतोरेव सदोषता । स्वगतस्तु न दोषोयं दर्शनेनास्य साधनात् ॥१६१॥

यदि स्वभावत एवासिद्ध्यर्हता प्रत्यक्षतोपि[3] न सिध्येत् । अनुमानान्न सिध्यतीति चेत् । अनुमानस्यैव तर्हि स दोषः । अत एव सिद्धोपि धर्मी यदि साध्यः क्रियेत् । तत्रापि हेतुदोष एव । हेतोस्तत्राप्यनन्वयात् (।) सिद्धसाध्यतादोषस्त्वनुमानेन सिद्धे स च पक्षदोष एव । प्रत्यक्षसिद्धे तु स्वलक्षणे हेतुदोषोन्वयाभावात् । तत्राप्यात्मन एव प्रत्यक्षसिद्धे तूभयोस्तु सिद्धसाध्यतालक्षणः पक्षदोष एव ।

तस्मात् स्वयमनुमानेन सिद्धः परंप्रति पक्षः । आगमसिद्धस्त्वपक्ष एव प्रत्यक्षसिद्धवत् ।

ननु प्रत्यक्षासिद्धे स्वलक्षणे हेतुदोषादपक्षता । आगम सिद्धे तु कथं सामान्यमागमस्य विषयः(।) सामान्येन चान्वयोस्त्येव तत्कथं पक्षदोषः । नन्वेतदेवोक्तं हेतुदोषात् पक्षदोषः । किन्न तर्हि तन्मात्रभावित्वात् । अत्र च तन्मात्रभावित्वमस्ति । तथाहि(।)

यद्यागमेन सिद्धोयं हेतुना किं प्रयोजनं । आगमेन प्रसिद्धे तु कथमागमसिद्धता ॥१६२॥

अथ परं प्रत्यसिद्धोपि स्वयमागमात् सिद्धः ।

तदप्यसत् । यतः ।

यद्यागमस्य प्रामाण्यं परंप्रत्यपि सिद्धता । अथागमस्याप्रामाण्यं द्वयं प्रत्यप्यसिद्धता ॥१६३॥

तस्मात् स्वयमनुमानसिद्ध एव पक्षः ।

---

[1] T. सङ्गिनः—इति हे०, B [2] B तदिदं [3] B पक्षतोपि

ननु प्रत्यक्षसिद्धोप्यग्निः स्वयं परंप्रति किं न पक्षः। न। तेन रूपेणापक्षत्वात्। सामान्यरूपेण ह्यसौ पक्षो न विशेषपक्षे [ ? रूपे ]ण। अन्येन तु स्वरूपेण तस्य न प्रत्यक्षसिद्धता[१]। तस्मात् प्रत्यक्षसिद्धेऽनुमानमेव नास्तीति स्थितमेतत्। यद्येवमयं स गड्डुप्रवेशे-(ऽ)क्षिनिर्गमः। यदि प्रत्यक्षसिद्धे नानुमानं तदा तदसिद्धे सुतरामेव। प्रत्यक्षपूर्व्वकत्वादनुमानस्य। तथानुमानविषयेपि न प्रत्यक्षमिति कथं प्रत्यक्षबाधितः पक्षः। बाधनञ्च नाम नार्थस्य ध्वंसनं अपि तु नास्तीति ज्ञापनं। तत्र यावान् कश्चित् प्रतिषेधः स सर्व्वोनुपलब्धेरित्यनुपलब्धिबाधनादनुमानबाधनमेव। तथा चोक्तं। तस्याभावविषयत्वविरोधात्।

तत्रो[२]च्यते। यदुक्तं प्रत्यक्षपूर्व्वकमनुमानमिति। तत्र न सामान्यविषये प्रत्यक्षपूर्व्वकं अपि तु यत्र सामान्येग्नित्वादौ साध्ये तद् व्यक्तिविषयं न प्रत्यक्षं तत्रानुमानं न प्रवर्त्तते। तद्व्यक्तिप्रवृत्तप्रत्यक्षपूर्व्वकत्वादनुमानस्य। सामान्ये तु यदि प्रत्यक्षवृत्तिः किं तत्रानुमानेन। तदेव स्वलक्षणमनुमानेन साध्यमानं सामान्यरूपतां भजेत[३]। स्वलक्षणमेव सामान्यं विशेषेणाप्रतीयमानं। तदयमेवार्थः प्रत्यक्षविषयेनुमानमनुमानेन प्रतीयमानं प्रत्यक्षमेव न भवतीति। ततः। तत् (प्रत्यक्षेण) प्रतिपन्नमग्निर्हि महानसादौ प्रत्यक्षप्रतिपन्न एव (।) प्रत्यक्षबाधितः पक्ष इत्यत्रायमेवार्थः। तद्विपर्ययव्यक्तौ प्रत्यक्षस्य प्रवृत्तत्वात्। यत्र च न व्यक्तिस्तत्र तत्सामान्यमसम्भव्येव व्यक्तिव्यङ्ग्यत्वात् सामान्यस्य। अपि चाश्रावणः शब्द इति स्वलक्षणप्रतिषेध एव पक्ष इति प्रतिपादयिष्यते। प्रतिषेधनिराकरणे च यद्विषयस्य प्रतिषेधस्तेनैव निराकरणं गम्येत[४] तदविरुद्धत्वादन्यस्य।

ननु प्रत्यक्षं कथमनुमानेन निराकर्त्तुमाशक्यते। अनुमानशब्दा विषयत्वात्तस्य। अत एव निराकारको सम्बन्धा[५]भिधायीति निराक्रियते। अथवा दृश्यविकल्प्यार्थयोरेकाध्यवसायाददोषः। तस्मान्न सिद्धस्य धर्मिणः साध्यतया पक्षदोषः। तत्र हेतोरेव दुष्टत्वात्। न च हेतुदोषेण दोषो यः स पक्षदोषो हेतुदोषतया तस्य हेतुलक्षणेनैव निराकरणात्। न च हेतुलक्षणेन निराकृतं पक्षलक्षणेनापि निराकर्त्तव्यं। व्यर्थत्वादविषयत्वाच्च।

**हेत्वादिलक्षणैर्बाध्यं मुक्त्वा पक्षस्य लक्षणं।**
**उच्यते परिहारार्थमव्याप्तिव्यतिरेकयोः ॥८४॥**

हेतुदृष्टान्तलक्षणेन निराकृतं दोषं मुक्त्वाऽन्यदोषपरिहाराय पक्षलक्षणमुच्यते। यतः सकलमेव लक्षणमव्याप्तिव्यतिरेकयोः परिहाराय। न चान्येन लक्षणेन यः परिहृतो दोषस्तदपरिहारेपि लक्षणस्याव्याप्त्यतिव्याप्तिता भवेत्। (एं तावदेव लक्षणमस्तु किमन्येन(।) यदर्थं तत्कृतं तस्यान्येन परिहारादनर्थकं स्वयं-ग्रहणं। केन (तर्हि) तदव्याप्तिव्यतिरेकयोर्निराकरणं।

अत्र ब्रूमः।

**स्वयं निपातरूपाख्या व्यतिरेकस्य बाधिकाः।**
**सहानिराकृतेनेष्टश्रुतिरव्याप्तिबाधनी ॥ ८५ ॥**

---

[१] B. प्रत्यक्षता [२] B. अत्रो
[३] B. भजते [४] B. नान्येन [५] B. सम्बद्धा

एतावतैव परिपूर्णं लक्षणं किमन्येन । स्वयमिति यदि न क्रियेत शास्त्रकारेष्टस्यापि साध्यताप्रसङ्गः । निपातस्याकरणे साधनत्वेन निर्दिष्टस्यासिद्धस्य (।) स्वरूपेणेत्यकरणे सिद्धस्य धर्मिणः । अपरस्तु दोषो नास्त्येव तदर्थं स्वयं-ग्रहणं । अनर्थकमदोषपरिहारार्थत्वात् । किमर्थन्तर्ह्यनिराकृतग्रहणं(।) निराकृतमपि यदि कश्चित् साध्यं कुर्यात्तत्रापि हेतुदोष एव भविष्यति । तेनैव निराकरणादिति चेत् । न । सहानिराकृतेन व्यतिरेकस्य बाधनादिति भावः । न ह्यनिराकृतपदमन्तरेण व्यतिरेको बाधितुं शक्यः । हेतुलक्षणेनैव तस्य दोषस्य बाधनादिति चेत् । न । पक्षमात्रभावित्वात्तस्येत्यदोषः । स हेतोः । यदीष्टोपि निराकृतो न पक्षः किमर्थन्तर्हीष्टग्रहणमित्याह । "इष्टश्रुतिरव्याप्तिबाधिनी" । नहि निराकृतमेव व्याप्तमिष्यते । अनिराकृतस्यापि व्याप्तिविषयस्य संभवात् । अथवा । "इष्टश्रुतिरव्याप्तिबाधनीति" वचनाद् व्याप्त्यर्था ततो निराकृतमपि व्याप्येत । तदाह । "सहानिराकृतेन" (।) यदि निराकृतपदं न क्रियेत भवेत्तस्यापि व्याप्तिरिष्टग्रहणात् सहत्वनिराकृतपदे न कुतः सम्भवः । तस्माद् यदि शास्त्रदृष्टोप्यर्थः साध्यस्तदेतावतैव लक्षणेन स्वयं शब्दरहितेन गतं किमपरेण । तत्र (।)

सा(ध्या)भ्युपगमः पक्षलक्षणं तेष्वपक्षता ।
निराकृते बाधनतः शेषेऽलक्षणवृत्तितः ॥ ८६ ॥

इदमत्रार्थस्य तत्त्वं (।) साध्यस्याभ्युपगमः पक्ष इत्यर्थः । निराकृतादीनामप्यभ्युपगम इति तेषामपि पक्षता भवेत् । तन्निराकृते बाधनात् । शेषे च(।)सिद्धादौ लक्षणस्यैवाप्रवर्त्तनादिति लक्षणमिष्ट एव प्रवर्त्तते नान्यत्रेति ।

तदेतदसत् । किमनेन प्रतिपादितेन विधेयं किमत्रेति विधेयप्रतिपादनञ्चेत् । तन्न(।) विधेयस्य प्रागेव प्रतिपादनात् ।

"असिद्धासाधनार्थोक्तवाद्यभ्युपगमग्रह" इति तस्यैवोपसंहार इत्यपि न पुष्टम् । यस्य ह्ययमर्थोत्रेति प्रतिपादनं तत्र किमुपसंहारेण ।

## (वार्त्तिकलक्षणम्)—

अपरे पुनराहुः । वार्त्तिककारस्यैवेयं स्वयं पक्षलक्षणस्य कृतिः । तथाहि । "सूत्राणामनुपपत्तिचोदना तत्परिहारो विशेषाभिधानं चेति वार्त्तिकलक्षणं" (।)तदेतद्विशेषाभिधानं ।

तदप्यसत् । साध्याभ्युपगम इति साधनत्वेनेष्टस्य शास्त्रकारेष्टस्य च प्राप्तिरनिवारितैव ।

अथ साध्यत्वेनेति ख्यायते । न च साध्यत्वेनेष्टिः साधनत्वेनेष्टस्य ।

तदप्यसत् । साध्यत्वेनापि तदिष्टमेव । अथ साध्यत्वेनैवाभ्युपगम इत्यवधार्यते । तदा साधनत्वेनाभ्युपगतस्य निवृत्त्यर्थमेतदिति । नानुक्तोपीच्छयाव्याप्तः साध्यः स्यात् । अथ साध्यत्वेनाभ्युपगमः पक्ष एव । तथा सति साधनत्वेनोपगतस्यापि साध्यत्वेनाभ्युपगमे भवेत्पक्षता । नहि तदानीमुभयासंभवो न ह्ययमेकासंज्ञाधिकारः शास्त्रकारेष्टस्यापि प्राप्नोति । तत्राप्यभ्युपगमात् । अथ प्रत्यासत्तेर्व्वादिन एवाभ्युपगमः ।

तदप्यसत् । शास्त्रकारेष्टस्यापि वादिनाभ्युपगतत्वात्[1] । किञ्च व्याप्तेर्न्यायादिति किन्नाभ्युपगम्यते । बुद्धिकृतप्रत्यासत्तिश्च शास्त्रकारेष्टेपि भवतीति । अनैकान्तिकताप्रत्यासत्तेर्निर कृतेपि च साध्याभ्युपगमे प्राप्तिः ।

ननु निराकृते बाधनतः साध्याभ्युपगमाभावात् साधनमर्हति साध्य इति ।

तद(प्य)सत् । एवं हि "साध्यनिर्देशः प्रतिज्ञे"त्यपि निरवद्यं भवेत् । लक्षणानुसारी च कथमर्हानर्हविवेकवित् । तस्मादसदेतत् । एवन्तर्हि **न्यायमुख**पक्षलक्षणमेतत् ।

"साध्यत्वेनेप्सितः पक्षो विरुद्धार्थानिराकृत" इति ।

अत्र ह्येवमुच्यते[2] । यदि "स्वयन्निपातरूपाख्याव्यतिरेकस्य बाधिका" । **न्यायमुखे**नेदमस्तीति कथं व्यतिरेकबाधेत्याह । "साध्याभ्युपगम" इत्यादि । तत्रापि निराकृते बाधनतः शेषेऽलक्षणवृत्तितो न दोषः । ईप्सित इति भूतकालाभिधायी निष्ठाप्रत्यय एव साध्यतयैवेष्यमाणे न (प्र)वर्त्तते । तत एव तस्य निराकरणमिति न दोषः । यद्येवमत्रापीष्टग्रहणात् साधनत्वेनोपन्यस्य निराकरणमिति निपातवचनमनर्थकं ।

सत्यमेतत् ।

**स्वयमिष्टाभिधानेन गतार्थेप्यवधारणे ।**
**कृत्यान्तेनाभिसम्बन्धादुक्तं कालान्तरच्छिदे ॥८७॥**

स्वयमिष्ट इति कालान्तरेष्टव्यवच्छेदः स्याद् यदि कृत्यान्तेन प्रधानेन सम्बन्धो न स्यात् । स चास्ति ततः ।

कालान्तरेच्छाविषयीकृतस्यापि स्यात् पक्षता ।

यदेवं **न्यायमुखे**पि तन्निपातवचनं तन्निवृत्तये कर्त्तव्यं । अत्रोच्यते ।

**इहानङ्गमिषेर्निष्ठा तेनेप्सितपदे पुनः ।**
**अङ्गमेव तया[ऽ]सिद्धहेत्वादि प्रतिषिध्यते ॥८८॥**

इह **प्रमाणसमुच्चये** प्रधानता कृत्यान्तस्य निर्देश्यः पक्षः (।) किं भूतः (।) इष्टः । ततः कालान्तरानुरोधः । तद्यथा आगतो देवदत्तो द्रष्टव्य इति । तेनावधारणं कालान्तरेष्टव्यवच्छेदार्थं ।

"इहानङ्गमिषेर्निष्टा तेनेप्सितपदे पुनः अङ्गमेवेति" ।

व्यस्तसम्बन्धः । ईप्सितपदेऽनङ्गं प्रधानम् । इह पुनरङ्गमेवेति व्याख्यातव्यं ।

अथवा इह **प्रमाणसमुच्चये**ऽनङ्गन्न[3] भवति भूतकालप्रतिपादने । ईप्सितपदे पुनर्न्यायमुखेऽनङ्गमेव[4] । तया निष्टयाऽऽसिद्धहेत्वादि प्रतिषिध्यते । ततस्तत्र निपातावचनं । तस्मान्न धर्मिणः साध्यता । प्रतिक्षेपार्थं स्वयं-ग्रहणम् । नापि शास्त्रेष्विच्छाप्रवृत्त्यर्थं पूर्वोक्तन्यायात् ।

---

[1] B ०भ्युपगमात्
[2] B क्वेदमुच्यते
[3] B. ऽङ्गन्न
[4] B. ऽङ्गमेव

**अवाचकत्वाद्मयुक्तं तेनेष्टं स्वयमात्मना ।**
**अनपेक्ष्याखिलं शास्त्रं तदभीष्टस्य[1] साध्यता ॥ ८६ ॥**

स्वयं शास्त्रे यत्र क्वचित् स्तोतव्यं । स्वयं प्रसिद्ध एव धर्मीति च स्वयं ग्रहणस्यावाचकत्वादयुक्तं तेनेष्टं नान्येन व्याख्यात्रा स्वयमात्मना । तस्माद"नपेक्ष्य शास्त्रमखिलं तदभीष्टस्य साध्यता" ।

**तेनानभीष्टसंसृष्टस्येष्टस्यापि हि बाधने ।**
**यथा साध्यमबाधातः पक्षहेतू न दुष्यतः ॥ ९० ॥**

तेन शास्त्रकारेष्टसंसृष्टस्य बाधनेपि केवलसाधने साध्यमतिक्रम्य बाधनात् पक्षहेत्वोरदोषः । अन्यथापि दोषेऽदूषणोद्भावनमेव ।

ननु **शास्त्रकारेष्ट**बाधने किं तेन साधितेन प्रौढताहानेः । उक्तमत्र । "यदि किञ्चिदित्या"दि । अपि च ।

सर्व्वनाशे समुत्पन्ने किञ्चिदासादितं वरं । घटस्य कूपे पतने न रज्जू क्षेपमर्हति ॥१६४॥

तस्मात् ।

"स्वयं निपातरूपाख्याव्यतिरेकस्य बाधिकाः । सहानिराकृतेनेति" व्याख्यातं ।

## ३. "सहानिराकृत"-ग्रहणफलम्

तत्रानिराकृतपदमवशिष्टन्तद् व्याचष्टे ।

**अनिषिद्धः प्रमाणाभ्यां स चोपगम इष्यते ।**

कोत्र न्यायः[2]

**संदिग्धे हेतुवचनात् ;**

एकेन प्रमाणेन साधिते विपर्यये तदभावे प्रमाणस्य हेतोरनाश्रयः । तदाह ।

**व्यस्तो हेतोरनाश्रयः ॥६१॥**

ननु यदि हेतुरस्ति साधकः कस्मान्न पक्षः । अथ न तदा हेतोरेव स दोषो भविष्यति किमनिराकृतवचनं ।

सत्यमेतत्(।) तथापि पक्षदोषेण प्रथममेव निराकरणे हेतुदोषानपेक्षमेव यथा स्यादिति पक्षदोष एवायं तन्मात्रभावात्[3] । नहि प्रत्यक्षानुमानाभ्यां निराकृते कश्चित् साधनमपेक्ष्यते । तथा सति अनाश्वास एवेति तत्रापि साधके कः समाश्वासः । तस्मात् सन्दिग्धो हेतोर्व्विषयः । साधकबाधकप्रमाणाभावमात्रं चात्र संदेहेन लक्ष्यते । न सन्देहसम्मुखीभाव एव(।)असंमुखीभूतसन्देहोप्यनुमानादेकस्मादग्निमवगच्छत्येव । अथवा यत्र सन्देह उत्पादयितुं शक्यः तत्र हेतुविषयत्वं । न स्वरूपतद्विपर्ययाभ्यां साधकबाधकाभ्यां निश्चिते ।

---

[1] M. तद्वादीष्टस्य

[2] T. पंचमयाह्निकं (समाप्तम्) ।

[3] B. तन्मात्रभावित्वात

## ४. चतुर्विधा बाधा

यदि प्रमाणाभ्यामनिषिद्धे हेतुवचनविषयता। द्विविधैव तर्हि बाधा। कथमाचार्यश्चातुर्विध्यन्दर्शयति स्म।

अत्रोच्यते।

**अनुमानस्य भेदेन सा बाधोक्ता चतुर्व्विधा।**

अनुमानबाधैव त्रिविधा दर्शिता। प्रत्यक्षबाधा चतुर्थीति। चतुर्व्विधबाधोपदर्शनं न द्विविधबाधाया बाधकं। एवन्तर्ह्यागमप्रसिद्धिबाधनमपि लिङ्गत एवान्यथानुमानभेदत्वाभावः।[१]

### (१) शास्त्रबाधाऽकिंचित्करी

एवमेतत्। यतः।

**तत्राभ्युपायः कार्याङ्गं स्वभावाङ्गं जगत्स्थितिः॥ ९२॥**

आप्तवचनं कार्यप्रतिरूपकं स्वभावप्रतिरूपकं प्रसिद्धिः। कथं न मुख्यमेतल्लिङ्गमित्याह।

**आत्मापरोधाभिमते भूतनिश्चययुक्तवाक्।**
**आप्तः स्ववचनं शास्त्रं चैवमुक्तं समन्ततः[२]॥ ९३॥**

न खलु कश्चित्प्रमाणप्रसिद्ध आप्तः परस्य सकलमनोदोषरहितस्य ज्ञातुमशक्यत्वाद-सर्व्वदर्शिना (।) व्यवहारसङ्करेण च निश्चेतुमशक्यत्वादनुमानतः। तस्मादगत्याभ्युपगत आप्ततयाऽप्तः परमार्थतस्तु नेति। स्ववचनेन सहोक्तिः साम्यदृष्टये कृता। यतः।

**यथात्मनोऽप्रमाणत्वे वचनं न प्रवर्त्तते।**
**शास्त्रदृष्टे[३] तथा नार्थे विचारस्तदनाश्रये॥ ९४॥**

यद्यात्मनः प्रमाणत्वं नोपेयाद् वचनाप्रवर्त्तनमेव प्रसक्तं। यथा सर्व्वं मिथ्या ब्रवीमीति। यदि सर्वमेव मिथ्या वक्तव्यं मयेति भवतोभ्युपगमः। तदयं भाषितस्यार्थो न मद्वचनात्प्रत्येयं। न मद्वचनात्किञ्चित् कर्त्तव्यमेवं तर्हि[४] किमात्मा परिक्लेशितो वयं (?) चावचनेप्यस्यार्थस्य सिद्धत्वात्। यदपि दुर्वैदग्ध्यावधूतधियोऽधीतं तदप्यवधूतमेव।

**यथा सर्व्वं मिथ्या पब्रवीमीति नैतदेव निषिध्यते।**
**तस्य मिथ्याभिधाने हि प्रक्रान्तोर्थो न सिध्यती॥ ९५॥ ति**

यतः।

कालत्रयनिषेधेपि न(चै)तत् सङ्गतं वचः। अप्रामाण्ये हि वचसः प्रख्यात्या[५]पनयो भवेत्॥१६५॥

यद्येवं प्रतिपद्येत सर्वमुक्तं मृषा स्ववचनविरोधादयुक्तिरेव[६]। प्रवर्त्तयता वचनमात्मा

[१] B ०नुमानत्वाभावात्
[२] समं सामा—इत्यपि, सामा(न्या)त्—इत्यपि बहिः पंक्ति। समत्वतः—इति है० T. M. B
[३] शास्त्रसिद्धे—इति है०
[४] B एवञ्च
[५] प्रक्षाल्या
[६] B मुक्तिरेव

प्रमाणतां गतोभ्युपगतः। ततः कथं तस्याप्रामाण्यप्रतिपादनं। पश्चात्तापाविति चेत् तथापि विरोध एव। अवचनमेव वरं किमायासेन। अपर्यालोच्य कृतमिति चेत्। नन्वयमेव दोषः। पर्यालोचनमेव न्यायः। अथ वर्त्तमानानागतनिषेध इदं ब्रवीमि मिथ्या तदापि[1] किमनेनोक्तेन। भाविनि तु श्रोतैव नास्ति किमर्थं वचनं। चारणचर्चरीवचनवददोष इति चेत्। न। वादप्रस्तावात्। वस्तुनिर्णयो हि वादस्यार्थः।

तस्मादसदेतत्। तथा शास्त्रप्रसिद्धेर्थे तदनभ्युपगमे विचारस्येति साम्यमेव शास्त्रस्ववचनयोः।

तत्प्रस्तावाश्रयत्वे हि शास्त्रं बाधकमित्यमुम् (।)
वक्तुमर्थं स्ववाचास्य सहोक्तिः साम्यदृष्टये ॥९५॥

यदि शास्त्रानभ्युपगमः कथन्तदर्थविचारः। यदि शास्त्रमन्तरेण विचारो न प्रवर्त्तते धर्मिण एवाभावात् (।) तदा शास्त्रं बाधकमन्यथा नेति प्रतिपादयितुं सहोक्तिमन्तरेण (तु) शास्त्रं स्ववचनादतिरिक्तसामर्थ्यं परेषामभिमतमिति। तथैव स्यात्।

उदाहरणमप्यत्र सदृशं तेन दर्शितं[2]।
प्रमाणानामभावे हि शास्त्रवाचोरयोगतः ॥९६॥

अत एव साम्यप्रदर्शनार्थं सदृशमुदाहरणमाह। प्रमाणप्रतिक्षेपे शास्त्रवचनयोरभावात्। प्रमाणप्रतिषेधे शास्त्रमपि नैव भवतः प्रमाणमिति किमभ्युपगम इति परस्परविरोधमात्रमेव स्यात्।

स्ववाग्विरोधे विस्पष्टमुदाहरणमागमे।
दिग्मात्रदर्शनन्तत्र प्रेत्यधर्मोसुखप्रदः ॥९७॥

ननु सन्ति प्रमाणानीति कथमयं शास्त्रविरोधः। नहि प्रमाणन्धर्म्मि शास्त्रादेव भवति। यदि तु प्रमाणं किञ्चिन्न स्यात् कुतो धर्म्यादिसिद्धिरिति स्ववचनविरोधः।

अथ सिद्धं किञ्चिदभ्युपगम्यते। यत एव तस्य सिद्धिस्तदेव तस्य प्रमाणम्भवेत्। प्रमाणत एव प्रमेयसिद्धेः। प्रमाणमन्तरेण तु न किञ्चिज्ज्ञायत इति वक्तव्यं। तस्मान्नायं शास्त्रविरोधः। शास्त्रमभ्युपगम्य यदि ब्रूयात् स्यादेवेति न दोषः। शास्त्रमभ्युपगतमिति कथं ज्ञातव्यं।

सत्यमेतत्। अत एव न शास्त्रविरोधे स्पष्टमिदं उदाहरणं। अपि तु दिङमात्रदर्शनं। **वार्त्तिककारः** स्पष्टमाह। "प्रेत्यासुखप्रदोधर्मं" इति। अवश्यमेवम्विधे विषये शास्त्रमभ्युपगन्तव्यमिति। शास्त्रविरोधे स्पष्टमेतदेवोदाहरणम्। तस्मादत्र स्ववचनवत् परस्परविरोधः।

एवन्तर्हि यत्र प्रमाणसिद्धो धर्मी तत्र शास्त्रमभ्युपगम्यमानं बाधकमेव प्रमाणत्वात्। शास्त्रप्रसिद्धे तु धर्मिणि तदभ्युपगतं तदुपरोधादेव तद्बाधकं भवेत्।

अत्राह।

शास्त्रिणोप्यतदालम्बे विरुद्धोक्तौ तु वस्तुनि।
न बाधा प्रतिबन्धः स्यात् तुल्यकक्ष्य[3]तया द्वयोः[4] ॥९८॥

---

[1] B. तथापि [2] M. B. वर्णितं [3] तुल्यशक्तितया—हे. [4] B तुल्यकक्षतया तयोः

नहि शास्त्रस्ववचनयोरभ्युपगमोपनीतप्रामाण्यादपरो विशेष एकस्यापि। ततस्तुल्य-शक्तित्वाद् द्वयोरपि प्रतिबन्ध एव न बाध्यबाधकभावः।

यथा स्ववाचि तच्चास्य तदा स्ववचनात्मकं।
तयोः प्रमाणं[1] यस्यास्ति तत् स्यादन्यस्य बाधकं ॥९९॥

प्रतिज्ञामनुमानम्वा प्रतिज्ञापेतयक्तिका।
तुल्यकक्ष्यां[2] यथार्थम्वा बाधेत कथमन्यथा ॥१००॥

प्रामाण्यमागमानाञ्च प्रागेव विनिवारितं।
अभ्युपेतविचारेषु[3] तस्माद्दोषोयमिष्यते ॥१०१॥

—इत्यन्तरश्लोकाः

तस्माद् विषयभेदस्य दर्शनाय पृथक्कृतः।
अनुमानाबहिर्भूतोप्यभ्युपायः प्रबाधनात् ॥१०२॥

अत एव बाधनाभ्युपगमात् आगमोऽनुमानाबहिर्भूतोपि पृथक्कृतोनुमानात्। विषय-भेदप्रदर्शनार्थमनुमानम्बाधकमेव[4]। शास्त्रन्तु प्रतिबन्धकं। अभ्युपगतं च तत्प्रतिबन्धकं नान्यथा।

अन्यथातिप्रसङ्गः स्याद् व्यर्थता वा पृथक्कृतेः।
भेदो वाङ्मात्रवचने प्रतिबन्धः स्ववाच्यपि ॥१०३॥

यदि तु प्रयोजनमन्तरेणापि स्ववचनशास्त्रवचनयोरनुमानात् पृथक्करणं। व्यर्थत्वाद् वक्तुरकौशलमेव भवेत्। स्ववचनोपगमविरोधयोस्तर्हि कथं पृथक्करणं परस्परं न्या य मु खे। यदि विरुद्धार्थवादिनां[5] स्ववचनेन बाध्यते। यथा सर्व्वमुक्तं मृषेति। पूर्व्वाभ्युपगमेन वा। यथौ लू क्य स्या नित्यः शब्द इति साधयतः विषयभेदाभावेपि हि पृथगुदाहरणमनर्थकं।

सत्यमभेद एव, तथापि पूर्व्वेण प्रतिष्ठापितमुत्तरं प्रतिहन्तीत्यभ्युपगमविरोधः। तदेव तु वाक्यं स्वार्थं प्रतिहन्तीति स्ववचनविरोधः।

## ( क ) अभ्युपगमाच्छास्त्रं प्रमाणम्—

तेनाभ्युपगमाच्छास्त्रं प्रमाणं सर्व्ववस्तुषु।
बाधकं ;

एवेति चेत् (।)

यदि नेच्छेत्स बाधकं किं पुनर्भवेत् ॥१०४॥

स्ववाग्विरोधोऽभेदः स्यात् स्ववाक्छास्त्रविरोधयोः।

यदि ह्यसौ नेच्छेत् किन्तद्बाधकं[6] भवेत्। यदि वा[7] तदिच्छायामपि बाधकं। न हीच्छाऽप्रमाणस्य[8] प्रामाण्यं जनयति। अभ्युपगतं पूर्वं पश्चादन्यथा न वक्तव्यं। करणे को

---

[1] B प्रामाण्यं
[2] B M. तुल्यकक्षा
[3] M. अभ्युपाय०
[4] B नुमानबाधकमेव
[5] B वाचिना
[6] B किम्पुनर्बाध०
[7] B यदि न कथं
[8] B ऽप्रमाणे

विरोधः (।) स्ववचनविरोध एव। एवन्तर्हि स्ववाग्विरोधेऽभ्युपगम्यमाने स्ववाक्छास्त्र-विरोधयोरभेद एव प्राप्तो न शास्त्रबाधवैलक्षण्यं।

## पुरुषेच्छा कृता चास्य परिपूर्णा प्रमाणता (१०५)

पुरुषेच्छा कृता चेत् प्रमाणता शास्त्रस्य। वचनस्यापि स्वस्य सा परिपूर्ण्णा(।)- ततो न विशेषः स्ववचनाच्छास्त्रस्य। अथ शास्त्रं स्वार्थसाधनायाभ्युपगतमिति प्रमाणं स्ववचनन्तु परार्थन्ततो न नितरां। परार्थे हि न महान् प्रयत्न इति।

तदसत्। यतः।

परीक्षितं यदि भवेत्प्रमाणं तत्र बाधकं। परीक्षा न प्रवृत्ता चेत् स्ववाचो न विशिष्यते ॥१६६॥

यदि परीक्षितमभ्युपगतं तदा तदर्थप्रमाणत एव सिद्ध इति प्रमाणबाधैव। अथ न परीक्षितं वचनमात्रमेव तदिति न विशेषः स्ववचनादागमस्य।

## ( ख ) परोक्षप्रसिद्धयोरर्थयोः निष्प्रयोजनं शास्त्रम्

तस्मात् प्रसिद्धेष्वर्थेषु शास्त्रत्यागेपि न क्षतिः।
परोक्षेष्वागमानिष्टौ न चिन्तैव प्रवर्तते ॥१०६॥

प्रमाणेन प्रसिद्धे धर्मिणि विचारस्याप्रतिबन्धाच्छास्त्रं परित्यजतोपि न काचित् क्षतिः। केवलमभ्युपगमविरोधः। अभ्युपगम्य विरोधात्[1] नासौ शास्त्रविरोधस्य परिस्फुटो विषयः। शास्त्रप्रसिद्धे तु धर्मिणि शास्त्रपरित्यागासम्भवात्। स एव शास्त्रविरोधस्य स्पष्टो विषयः। आगमानिष्टौ हि तत्र चिन्तानवतार एव। एवं तर्हि तच्छास्त्रं प्रतिष्ठापयन् धर्मिणं प्रतिष्ठापयति ततस्तद्बाधकं। तत्तर्हि शास्त्रमप्रमाणकं कथं धर्मिणं प्रतिष्ठापयति प्रामाण्येनाभ्युपगमात्। स्वोपगम एव तर्हि प्रामाण्यमाद(ध)त् धर्मिणं प्रतिष्ठापयति। धर्मान्तरञ्च स एव प्रतिव-हतीति न भिद्यते स्ववचनविरोधाच्छास्त्रविरोधः।

विरोधोद्भावनप्राया परीक्षाप्यत्र तद्यथा।
अधर्ममूलं रागादि स्नानञ्चाधर्मशोधनं[2] ॥१०७॥

तथा चाह।

चित्तमन्तर्गतं दुष्टं तीर्थस्नानैर्न शुध्यति। शतशोपि हि तद्धौतं सुराभाण्डमिवाशुचि ॥१६७॥

तथा पुनराह।

गङ्गाद्वारे[3] कुशावर्त्ते विल्वकी[4] नीलपर्वते। स्नात्वा कणखले तीर्थे सम्भवेन्न पु(न)र्भवः ॥१६८॥

## (ग) प्रसिद्धिबाधाऽयुक्ता—

यदि तर्हि न किञ्चिद् बाध्यते विरोधमात्रकमेव किमर्थन्तर्हि तदभ्युपगम-विरोध इत्याह।

---

[1] B अभ्युपगमविरोधनात्
[2] M. B नाशनं—इति हे०
[3] T. स्वद्वारे
[4] B. विल्वके

**शास्त्रं यत्सिद्धया युक्त्या स्ववाचा च न बाध्यते ।**
**दृष्टेऽदृष्टेपि तद् ग्राह्यमिति चिन्ता प्रवर्त्तते[1] ॥१०८॥**

प्रमाणस्ववचनाविरुद्धं शास्त्रं दृष्टादृष्टयोरभ्युपगन्तव्यमन्यथाभ्युपगमेऽप्रेक्षापूर्व्वकारी भवेत्(।) प्रसिद्धिनिराकृतोपि न पक्षः । तत्र प्रसिद्धिः स्वभावलिङ्गम् न त्वाप्तवचनं । नाथ तथा भावमन्तरेण प्रवर्त्तते कुतस्तथाभ्युपगतः । अभ्युपगमकृतो हि तत्र प्रतिबन्धो न तु प्रमाणप्रसिद्ध इति न मुख्यः कार्यहेतुः । तत्र प्रसिद्धेरपि यदि वास्तवः प्रतिबन्धस्तदा मुख्य एव स्वभावहेतुः । (तथा) अभ्युपगमकृतस्तदाप्तवचनवदभ्युपगमविरोध एव तत्कथं बाधान्तरमेतत् । अथाप्तवाधैवेयं यतो वक्ष्यति । "आप्तोत्राक्षतवाग् जन" इति । प्रत्यक्षार्थानुमानाप्तप्रसिद्धेनेति च प्रसिद्धशब्दः प्रत्येकमभिसम्बध्यते । ततस्त्रिविधैव बाधा ।

तदसत् ।

"अनुमानस्य भेदेन सा बाधोक्ता चतुर्व्विधो" इति वचनात् । आ चा र्ये णापि यत्रापी-त्यादिवचनेन पृथगुदाहरणप्रदर्शनेन चातुर्व्विध्यमुपदर्शितं न समर्थितं स्यात् ।

अत्रोच्यते ।

सर्व्वलोकविरोधोयं पूर्व्वकः पुनरात्मना । स्वभावकार्यरूपेण प्रसङ्गोयं कृतोथवा ॥१६९॥

सर्व्वलोकप्रसिद्धेन प्रबाधनं प्रसिद्धिबाधा । केवलात्मप्रसिद्धेन बाधेतरा ।

अथवा स्वभावहेतुरूपेण कार्यरूपेण च प्रसङ्गसाधनद्वयोपदर्शनपरमेतत् । तथाहि(।) द्वयमेव वादिना कर्त्तव्यं मुख्यसाधनं प्रसङ्गसाधनञ्च । नापरः प्रकारो वादिवचना-नामिति दर्शनार्थं ।

अथवा ।

व्यवहारिणानुगन्तव्याः शब्दार्थाः सर्व्वदैव यत् ।
न तु शास्त्रमतस्तस्मादस्याभेदात् पृथक्कृतिः ॥१७०॥

अमुख्यत्वेपि प्रसिद्धिविरोधस्य शास्त्रादवश्याभ्युपगन्तव्यत्वात् पृथक्करणम् ।

ननु शास्त्रस्ववचनयोर्न कश्चिद्भेद इति स्ववचनबाधैव शास्त्रबाधा । ततोन्यं प्रति-पादयता शास्त्रप्रसिद्धे धर्मिणि विवादमारचयतावश्यमेव स्ववचनशास्त्रवचनयोः प्रमाणताभ्युप-गन्तव्या । तत्कथं नावश्यमभ्युपगमः ।

तद(प्य)सत् । पराभ्युपगमेनोक्तत्वात् । परेषां हि वादिनामभ्युपगमोऽवश्यं वादविधाने शास्त्रमभ्युपगन्तव्यं । धर्म्यन्तरधर्मविवादेपि तत इदं प्रतिपादयितुमुच्यते(।) तेनावश्यं शास्त्र-मभ्युपगन्तव्यमिति ।

अथवा विवक्षितविषयाप्रसिद्धिः परमार्थविषये शास्त्रमिति पृथगुपादानं । तत्र हि माता च बन्ध्या चेति न विवक्षितार्थबाधा । ततः (।)

बाह्येतरतया भेदो विषयस्य विवक्षितः । शास्त्रप्रसिद्धे[3]र्ब्बाधस्य विभाग इति भिन्नता ॥१७१॥

गतं प्रासङ्गिकं । प्रकृतं प्रारभ्यते । केयं प्रसिद्धिर्न्नाम । यदि तावल्लोकप्रसिद्धि-

---

[1] M. प्रवर्त्यते    [2] B. ०त्मनः    [3] B. प्रसिद्धचो

व्याप्त्यै[1]कदेशेन वा सर्वा परिगृह्यते । तदा नित्यत्वादयोपि सकललोकप्रसिद्धास्ततस्तद्बाधने प्रमाणेन लोकप्रसिद्धिबाधा भवेदन्येषाञ्च प्रमाणविरुद्धानां । न चान्योर्थः प्रसिद्धिशब्दवाच्यः । तथाऽशुचिनरशिरः कपालमित्यादयः । अथ शास्त्रपरिपठितस्य बाधनमयुक्तं(।) तथा सति नित्यात्मादीनामपि बाधने दोषः स्यात् ।

अत्रोच्यते ।

प्रसिद्धिरिष्टशब्दाभिधेयत्वं यदकम्पितं[2] । प्रसिद्धिर्व्यवहारो हि तज्जातत्वात्तथोच्यते ॥१७२॥

प्रकृष्टा सिद्धिः प्रसिद्धिः । तज्जातमिष्टशब्दाभिधेयत्वमचलितत्वात् प्रकृष्टसिद्धिरूपं नित्यत्वादिकन्तु चलत्येव । शास्त्रेण तु तस्य निश्चलीकरणमशक्यं ।

प्रमाणसिद्धं शास्त्रेण नापनेतुं हि[3] शक्यते । बाधितत्वात् प्रमाणेन प्रामाण्यविनिवृत्तितः ॥१७३॥

इष्टशब्दाभिधेयत्वस्य तु न तथा चलनमनुमानस्य बाधकस्याभावात् । तथा च प्रतिपादयिष्यते । इष्टशब्दाभिधेयत्वस्य हि पुरुषेच्छानुरोधिनोऽर्थेषु नानुमानस्य बाधकस्यावतारः ।

### (घ) आप्त-लक्षणम्—

अत एवाह ।

अर्थेष्वप्रतिषिद्धत्वात् पुरुषेच्छानुरोधिनः ।
इष्टशब्दाभिधेयत्वस्याप्तोत्राक्षतवाग् जनः ॥१०६॥

इष्टशब्दाभिधेयत्वं हि सामान्यरूपं गोत्वादिकल्पितं । न शक्यं प्रतिषेद्धुं । इच्छामात्रपरिकल्पितो हि न शक्यो विकल्पितार्थपरितोषः । न खलु सुसम्विदितं शक्यं निषेद्धुम् । तथा चवेमपि ।

## (२) शब्दार्थसंबधः सांकेतिकः

ननु प्रमाणसिद्धमेव वस्तु बाधकं । अथात्रोच्यते । स्वसम्वेद(न)मेव प्रमाणं तेन वाच्यत्वस्य शब्दं प्रत्युपादानोपादेयभावलक्षणस्य सिद्धत्वात् । यद्येवं प्रत्यक्ष(सिद्ध)मेव(ा)-वाच्यत्वं ततः प्रत्यक्षबाधित एव पक्षः । कार्यकारणभाव एव प्रत्यक्षप्रसिद्धो नापरो वाच्यवाचकभाव इति चेत् । न । तावन्मात्रमेव वाच्यवाचकभावः । तत्कथमन्यथाभ्युपगमः ।

अत्रोच्यते ।

बाच्यत्वमत्र सामान्यं भाविभूततया स्थितं । व्यापिव्यक्तेस्ततस्तस्य कुतः प्रत्यक्षतो गतिः ॥१७२॥

### ( सामान्य-निरास )—

केवलं व्यवहारस्य तथाभूतस्य भावतः । अनादिवासनाभावात् तदस्तीति प्रतीयते ॥१७३॥

तथा च वक्ष्यते "सोपीष्टो व्यवहारभाक्" । अन्यापोहलक्षणं हि सामान्यं वाच्यमिष्टस्य ध्वनेः । तच्च न प्रतिषेद्धं शक्यं वासनाप्रतिनियमेन तथाभूतप्रत्ययोदयात् । सा च वासनेच्छामात्रकृतसङ्केतनियमेन प्रबोधिता नियतं सामान्यमवस्थापयति । तथाहि ।

---

[1] B. व्याप्त्यै  [2] B. कल्पितं  [3] B. नापतेश्च

ब्राह्मणादित्वमव्यक्तं[1] व्यक्त्या नियतमिच्छया। संकेतवृत्तिशब्देन तदन्यविनिवृत्तितः ।। ७४।।

न खलु द्विजत्वादिजातयोऽनियतवर्णसंस्थानात्मतया व्यक्त्या व्यक्तुं शक्याः। ततस्ता व्यक्तिनियताचारोपलक्षितव्यक्ति नियतसंकेतबलादेवाभिव्यक्तिभाजः।

ननु न केनचिदत्रेदानीं कृतः संकेतोनादिस्वभावसिद्धवाच्यवाचकभावसम्भवात्। न (।) उपदेशस्यैव संकेतत्वात्। अपि च। ब्राह्मणो न ब्राह्मण इति कारणमेतत्। यत्तु तस्यादृष्टहेतुत्वं तदत्र साध्यमन्यथा चण्डालादिजातीनामासाञ्च कः परस्परतो विभागः। एतेन गोत्वादिजातिरपि प्रत्युक्ता। तासामपि (न) गर्दभादिजातिभ्यो विशेषः। उपलक्ष्य प्रवर्तनञ्चेत्।

वाहदोहादिसामर्थ्यमात्रेणात्र प्रयोजनं। तेनोपलक्ष्यमाणत्वं न नामात्र न संगतं ।।१७५।।

तथाऽजादिजातीनामपि तदेकशब्दगोचरत्वमेव लक्षणम्। तस्माद् विकल्प्य[2] विषयत्वमेव जातिरतः प्रसिद्धिमात्रप्रापितात्मभावत्वात् स धर्मो व्यवहारजः। प्रसिद्धिशब्देनोक्तः(।)

उक्तः प्रसिद्धिशब्देन धर्मस्तद्व्यवहारजः।

न केवलमय(मे)व धर्मः प्रसाधकप्रसिद्धिलक्षणप्रमाणशब्देनोक्तः। अपि तु।

प्रत्यक्षादिमिता मानश्रुत्यारोपेण सूचिता(ः) ॥११०॥

प्रत्यक्षादिप्रमाणमिता अप्यर्थान्तरस्य पक्षाभासाख्यस्य बाधकाः। तस्मादिष्टशब्दाभिधेयत्वस्य गोत्वादौ(?दे)र शक्यनिषेधत्वात्तेनैव प्रतिषेधबाधनं। नहि व्यवहारार्थं शब्दमुपनिबध्य विरचितो वैद्यादिव्यपदेशविषयः सर्व्वाविरोध्यनुन्मत्तेन प्रतिषेध्यः प्रसिद्धः। एतदेवाह।

तदाश्रयभुवामिच्छावर्त्तित्वादनिषेधिनां।
कृतानामकृता(ना)ञ्च[3] योग्यम्विश्वं स्वभावतः ॥१११॥

स्वभावत एव योग्यं तदाश्रयभुवां व्यवहारजातानां योग्यं गोत्वादीनां विश्वं। कृतानामकृतानाञ्च स्वयं व्युत्पादयिष्यमाणानां योग्यमेव विश्वस्य सर्व्वत्राप्रतिकूलत्वात्। अप्रातिकूल्यमेव योग्यता (।) ततः।

अर्थमात्रानुरोधिन्या भविन्या भूतयापि वा।
बाध्यते प्रतिरुन्धानः शब्दयोग्यतया तया ॥११२॥

न खलु भाविनी भूता वा योग्यता प्रतिषेधेन निवर्त्तयितुं शक्या[4] शब्दस्य "अग्निहोत्रं जुहुयात्स्वर्गकाम" इत्यादेः श्वमांसभक्षणादौ। अर्थमात्रानुरोधित्वात्। तत्राप्यर्थेऽप्रतिकूलता योग्यता। न हि कश्चिदर्थः प्रतिकूलः सं[5]केतकरणे दृष्ट उपदेशप्रतिपन्नो वा। मात्रशब्दोऽविशेषपरिग्रहार्थः। तद्यथा ब्राह्मणमात्रं भोजयेति। भोजनमात्रमिच्छति। न विशेषपरिग्रहं करोति। या च योग्यताऽर्थमात्रानुरोधिनी न तत्र कश्चित् प्रतिषेधे न्यायः।

---

[1] B. ०दिकम [2] B. विकल्प [3] B. कृतानां वा—इति हे०
[4] B. शक्यते [5] B. ०कलसंकेत

**अतः प्रतिषेद्धा तयैव योग्यतया बाध्यते। नहि योग्यताया निषेध्यत्वं प्रत्यक्षसिद्धं। यदि परमनुमानमवतरेत्। तच्च दृष्टान्ताभावादसम्भवीति प्रतिपादयिष्यते।**

**नन्वाचार्यैः शाब्दप्रसिद्धेनेत्याह। न योग्यतया बाधनं। न ह्मीष्टशब्दाभिधेयत्वं योग्यता। न च तथा प्रसिद्धता। योग्यता हि प्रसिद्धेः कारणन्न तु प्रसिद्धिरेव।**

**अत्रोच्यते।**

**तद्योग्यताबलादेव वस्तुतो घटतो ध्वनिः।**
**सर्व्वास्यामप्रतीतेपि तस्मिंस्तत्सिद्धता ततः ॥११३॥**

**आचार्यस्याप्ययमेवाभिप्रायो योग्यतैव शाब्दप्रसिद्धवचनेन प्रतिपाद्यते न निर्वृत्ता वाच्यता। योग्यता चेच्छामात्रानुरोधिनी। सा चाप्रतिकूलता संकेते।**

इच्छामात्रेण वृत्तिर्हि ध्वनेः सर्व्वत्र वस्तुनि। तन्मात्रवृत्तिर्यः शब्द. स कथं क्वापि वर्त्ततां ॥१७६॥
नहि वस्तु स्वरूपेण प्रवर्त्तयति वाचकं। अप्रातिकूल्यं संकेते योग्यतेत्यभिधीयते ॥१७७॥
इच्छया निर्मितिर्यैव सार्थमात्रानुरोधिता। अर्थमात्रेप्यनाकांक्षा संकेतेच्छा कथम्भवेत् ॥१७८॥
चक्रशब्दाभिधेयत्वप्रतिषेधो यदा घटे। प्रसिद्धिसाधनन्तत्रेत्यभिप्रेतं दिशानया ॥१७९॥

**—इत्यन्तरश्लोकाः।**

**नन्वप्रातिकूल्यं योग्यता सा कथं भाविनी भूता वा। अत्रोच्यते।**

अर्थस्य भाविभूतत्वाद् योग्यतापि तथा विधा। स्वरूपव्यतिरिक्ता हि योग्यता नाम नेक्ष्यते ॥१८०॥

**तत्र योर्थो येन शब्देना(भि)धातुमिष्टः स तेन शब्देनाभिधातुं योग्यस्तद्यथा वृक्षशब्देन नहि कस्यचित् क्वापि प्रतिकूलता।**

**ननु दृष्टान्त एव न सिद्धस्तत्रापि प्रतिक्षेपसंभवात्।**

**नैतदस्ति। प्रवृत्ते वाच्यवाचकभावव्यवहारे कस्य प्रतिक्षेपः। यतः प्रवर्त्तमाना दृश्यन्ते तदर्थप्रतिपत्त्या। अयमेव खलु वाच्यवाचकभावः (।) तथा चोक्तं।**

यस्मिन्नुच्चरिते शब्दे यदा योर्थः प्रतीयते। तमाहुरर्थं शब्दस्य नान्यदर्थस्य लक्षणमि ॥१८१॥ ति

**एवं तर्हि प्रत्यक्षबाधित एव प्रतिज्ञार्थः किं प्रसिद्धिबाधया।**

**अत्रोच्यते। नैतावन्मात्रमत्र प्रतिपाद्यं अपि तु।**

सर्व्वे शब्दाः क्वचिद्देशे काले वा वाचका मताः। न्यायेनानेन न ह्यत्र प्रत्यक्षस्य प्रवर्त्तनम् ॥१८२॥

**उक्तमेतत्। यदपि चन्द्रशब्दाभिधेयत्वं यदा घटे प्रतिषिध्यते तदा(पि) प्रसिद्धिबाधनमिति। यदिदानीं ममायन्तच्छब्दाभिधेयत्वेन न प्रतिभातीत्युच्यते सिद्धसाधनं। अथान्यस्य न प्रतिभासते[1] न चेदानीं वा। न च योग्यः। तदा नास्त्येतदिच्छामात्रेण वृत्तेः। किमिति न सम्भाव्यते देशकालनरान्तरे(ण) शब्दार्थानामन्यथा वाच्यवाचकभावदृष्टेः कुतो नियमः। अनेन न्यायेन सर्व्वं सर्व्ववाच्यमिष्टमिति न दोषः।**

खादेच्छ्वमांसमित्येष येनार्थः प्रतिषिध्यते। प्रतीतिबाधितत्वेन स योग्यत्वेन बाध्यते ॥१८३॥

[1] B. भास्यति

यदीदानीं तथार्थोयं[1] मांसादिः प्रतिभासते ।
इत्युच्यते तदाध्यक्षबाधा स्यात् अन्यथा कुतः ॥१८४॥

**न ह्यत्र प्रत्यक्षबाधा । प्रतीतिबाधात्र केवलं । सापि संकेतवशादेव योग्यतया । योग्यता च श्वमांसादावपि ।**

## (३) वेद्बाधा

**ननु य एव संकेतपरतंत्रा लौकिकाः शब्दास्तेष्वेवायमनियमः । ये तु वैदिकाः स्वाभाविकार्थसम्बन्धास्तेषु कथमनियमः । व्यवहारार्थञ्च संकेतो दृष्टविषय एवमुक्तोऽतीन्द्रिये तु प्रतिपत्त्यभावात् कथं संकेतयितुं समर्थः । आगमैकशरणत्वात् प्रतिपत्तेरितरेतराश्रयदोषप्रसङ्गः । न चान्यथा संकेतस्तदागमानुसारिणो युक्तः ।**

**अत्रोच्यते ।**

ननु वेदोपि केनायं सिद्धः स्वाभाविकार्थभाक् । तत्र संकेतयेदज्ञो ज्ञानी द्वेषदयादिलः ॥१८५॥

**यथैवेच्छया एकेन कृतः संकेतोऽग्न्यादीनान्दहनादिषु तथा श्वादिष्वपि । न स्वाभाविकोयमर्थ इति प्रसिध्यति लोकानुसारेण तदर्थव्यवस्थानात् । लोके च(।)**

देशकालादिभेदेन नानाभूतार्थदर्शनं । न चापि देशकालादिव्याप्यर्थं इह निश्चयः ॥१८६॥

**तत्र कश्चिदज्ञ एव देशकालादिषु संकेतयेदुपदिशेद्वा । उपदेशपारंपर्यमात्रे चान्धपरंपरा । ततोन्यथा संकेतस्तदधिमुक्तापक्षेपणाय[2] । अथवातीन्द्रियदर्श्येव पूर्व्वार्थावग्रह(विसंवाद)कृतपरिहारायेति न विरोधः । अथवा ।**

नैव प्रत्यक्षमत्रापि निरूपणसमागमे । चन्द्रशब्दात्प्रतीतिर्न्नो राशिनोनुमितिम्विना ॥१८७॥

**नहि शब्दादर्थप्रतीतिः प्रत्यक्षा भवितुं युक्ता । यथा वेदबाधाद्द । प्रत्यक्षो हि वेदवचनादर्थे प्रत्ययः । यदि तावदेवमुच्यते । प्रत्यक्षः प्रत्ययः स्वसम्वेदनरूपत्वादिति, समयोस्य बाध्यते । ज्ञानान्तरालम्बनतया वा । अप्रत्यक्षा बुद्धिरिति स्थितेः । अभ्युपगमे वान्यत्राप्युच्यतां प्रत्यक्षो धूमादग्नौ प्रत्यय इति । अथानुमानरूपाभावात् स भवेदेकस्माद् धूमादग्निं प्रतियतोपि । अथ तत्र पूर्व्वानुसन्धानमासीदत्रापि संकेतकाले । अन्यथा व्याख्याननुसारिणोपि व्याख्यैव च संकेत इति । अथ व्याख्या न भवति स्वेच्छाकृतसंकेतरूपा ततोयमदोषः ।**

**नैतदस्ति । प्रतिपादितमन्यथापि द्वेषादितो व्याख्याकरणम् । छान्दसत्वाद्वर्ण्णलोपनिरुक्तादिना समर्थना शिष्टप्रयोगतो व्याख्येति चेत् । तथा(।)**

व्याख्यापरंपरायाते भवेदन्धपरंपरा । नाध्यक्षता ततस्तस्य नानुमेत्यतिदुष्टता ॥१८८॥

**तस्माच्चन्द्रः शशीति नात्रापि प्रत्यक्षता । तथा च प्रत्यपादि । तद्भावाभावयोर्दर्शनादर्शनस्मृत्यपेक्षे हि शब्दलिङ्गे स्वविषयं प्रतिपादयत इति । तत्र यो चन्द्रः शशी शब्दादि-**

---

[1] B. तथा [2] B. ०क्तावक्षेपणाय

त्याह । स नैवमाह । प्रतीतिरेव नास्तीति । एवं हि सति प्रतीतिबाधा स्यात् । प्रतीतिश्च प्रत्यक्षा यदि नाम प्रतीतिस्तथाप्यसत्त्येयमिन्दुद्वयप्रतीतिवत् । तस्य प्रतीतिबाधा दर्श्यते (।)

पूर्व्वपूर्व्वानुसन्धानात्प्रतीतेरनुमानता[1] । अनुमाबाधनञ्चात इष्टं शास्त्रकृतामिदं ॥१८९॥
संकेतकाले सम्बन्धप्रतीतेरनुमा ततः ।

स्वभावाङ्गं जगत्स्थितिरिति सिद्धं[2] ।

नन्वनुमानमेतदिति युक्तं स्वभावहेतुस्तु कथं । शब्दाच्च पूर्व्वदर्शनसहायादुत्पन्ना प्रतीति[3]रनुमानरूपा बाधिका । न च शब्दोर्थस्य स्वभावः ।

कार्यकारणभावो हि वाच्यवाचकयोर्यदि । तदा शब्दात् प्रतीतिः स्यात् अनुमानं तथा सति ॥१९०॥

अनुमानात्प्रतीतिरिति सम्बन्धसहायता । स च सम्बन्ध उपादानोपादेयभावोर्थशब्दयोः । शब्दश्च परमार्थतः ताल्वादिव्यापारमात्रजन्यो न वाच्यार्थजन्यः । तत इच्छया हस्तमुद्रादिवदत्र कार्यकारणभावो नान्यथा । न हीच्छापरिकल्पितः कार्यकारणभावो वास्तवो रज्जूकीलसम्बन्धवत् । न च तथा प्रतीतिरवश्यम्भाविनी । तेन नानुमानमेतन्मुख्यं । कथन्तर्हि स्वभावहेतुः (।) योर्थ उपादानभूतः संकेतेन प्रकाश्यते । क्रियते चेच्छया तथाभूतः स परमार्थतः कारणभतः । तदर्थविवक्षामन्तरेणापि भावात् (।) अन्यविवक्षायामविवक्षायाञ्च । न च यमन्तरेण यस्य भावस्तत्तस्य कारणं । तस्मात् ।

उपादानतयेष्टत्वमात्रादेवास्य वाच्यता (।)
तन्मात्रभावितां प्राप्तः स्वभावो वाच्यता भवेत् ॥१९१॥

उपादानतया व्यवस्थानमात्रमेव वाच्यता । तत उपादानतया व्यवहरणमेव प्रसिद्धिः । व्यवहारप्रसिद्धत्वादुपादानत्वस्यापि प्रसिद्धिता । ततोऽवाच्यत्वमुपादानत्वेन प्रतिभासने न बाध्यते । यो हि यस्योपादानकार्यत्वेनाप्रतिभासी स यदि परमवाच्यस्ततः शब्दात्तस्याप्रतिभासनात् । यद्यसावर्थ इच्छायामपि नोपादानकार्यप्रत्ययप्रतिभासी भवेदवाच्यः ।

ननु नैव प्रतिभासते नहि बाह्यार्थस्योपादानता । तमन्तरेणापि भावादित्युक्तमेतत् । न । इच्छायां सत्यां प्रतिभासनात् । यदा ह्यर्थदर्शने सति तद्विवक्षया प्रयोगो विनाश्य[4]त्यन्ताभ्यासात्तदा किन्न प्रतिभाति तस्योपादानभावः । अथ ततो बाह्यार्थाप्रतिभासनात् प्रतिपत्तुरेवमुच्यते । तथा सत्यनुमानमपि न बाह्यार्थविषयन्तत्राप्रतिभासनादेव अथ ततोपि विकल्पात्तदध्यवसायेन वस्तुन्येवमुच्यते । तथा सति[5] वाच्यत्वेप्येवमेव । बाह्यार्थप्राप्तिस्तु सर्व्वदा भवत्यप्रमाणत्वात् परमार्थतः प्रतीतेः । न वा प्रमाणत्वे वाच्यवाचक(भावा)भावः । एवम्भूततयैव वाच्यवाचकभावप्रसिद्धेः । तस्मात् ।

उपादानतया योर्थः स्थितिभाग् वाच्य एव स । स चोपादानतेच्छाजा प्रतिरोद्धु न शक्यते ॥१९२॥
तादृक् प्रसिद्धिविषयः सर्व्वोर्थो वाच्य उच्यते । तत इच्छापराधीनवृत्तेर्न नियमो ध्वनेः ॥१९३॥

—इति संग्रहः ।

ततो योग्यतैवाचार्यस्य प्रसिद्धशब्देनाभिमता ।

---

[1] B. ०मानतः [2] B. स्थितं [3] B. धी
[4] B. विनाप्य [5] B भतयैव

**एतदेव कुत इति चेत् । अत्रोच्यते ।**

असाधारणता तेन शब्देन प्रतिपादिता । सा न स्याद्यदि योग्यत्वाद् वाच्यन्नाखिलमिष्यते ॥१९४॥

**एत एवाह ।**

**आसाधारणता न स्यात् बाधाहेतोरिहान्यथा ।**

**यदि नाचार्यस्य योग्यतायामभिप्रायः कथम्बाधकमनुमानमसाधारणहेतुः सत्वस्याचन्द्र-शब्दवाच्ये घटादिके प्रसिद्धत्वात् । यदा तु योग्यतायां सकलमेव तद्वाच्यतया[1] भवेत् । क्वचिदचन्द्रेऽसिद्धेः ।** आह **चाचार्यः । यत्राप्यसाधारणत्वादनुमानाभावे शब्दप्रसिद्धेन विरुद्धे-नार्थेनापोद्यते न स पक्ष इति । यत्र विषये प्रतिपक्षभूतस्यानुमानस्यासाधारणता तत एव तदभावः । अभावे शाब्दप्रसिद्धमनुमानं बाधकं न स पक्षः । अशक्यनिषेधतामस्य दर्शयन्ने-वमाह प्रतिप्रमाणतया निश्चयं वा । नहि प्रमाणमन्तरेण निषेधः । नापि निश्चायके सत्यनिश्चयः । अत्र च (।)**

उत्तरं पूर्व्वसहितं पूर्व्वमुत्तरसंहितं (।) परपूर्व्वार्थसद्भावे तदेतद् व्यापृतं द्वयम् ॥१९५॥

**यदा तावत् प्रधानता शाब्दप्रसिद्धस्य पूर्व्वस्यावयवस्य विशेषणता तदा प्रतिप्रमाणाभावे निश्चयः । यदा तु परावयवस्य विशेषणत्वं पूर्व्वस्य प्रधानता तदाऽशक्यनिषेधता ।**

**ननु यदि नामानुमानस्यासाधारणता तथापि कथमशक्यनिषेधता । नानुमानमेव प्रमाणं प्रत्यक्षस्यापि भावात् ।**

**अत्र परिहारः ।**

**तन्निषेधोनुमानात् स्याच्छब्दार्थेऽनक्षवृत्तितः ॥११४॥**

**ननु (।)**

शाब्दप्रसिद्धं यद्रूपं तत्प्रत्यक्षमतोनुमा । नास्त्यसाधारणत्वस्य व्यर्थकं वचनं न किम् ॥१९६॥

**न । शब्दार्थेऽक्षाप्रवृत्तेः । नहि शब्दार्थः साक्षात् कर्तुं शक्यः । योग्यता हि शब्दार्थतया निश्चिता शाब्दप्रसिद्धस्यार्थस्य व्यवहारकारित्वे यदि नाम प्रतिभासते तथापि ततो न व्यवहर्त्तव्यमिति योग्यतानिषेधः । शब्दसम्बन्धिता वा प्रतिभासमानस्य । सम्बन्धश्च न प्रत्यक्षगोचरः । शब्दस्य श्रोत्रविज्ञाने प्रतिभासः । तदर्थस्य तु विकल्पे चक्षुर्व्विज्ञाने वा । न चानयोः परस्परविषयसांकर्यम् ।**

**नन्वग्निधूमयोरपि स्वविषयविज्ञानप्रतिभासनात् कथमेतत् । तथा गन्धगन्धवदादीनां । भवतु तत्राप्येष दोषः । तथापि नैतत् समर्थितं भवति । इन्द्रियविज्ञानेन तु तेषां ग्रहणं ततो न दोषः । अत्र तु स्वसम्वेदनेन ज्ञानस्वलक्षणस्य ग्रहणं न वाचकत्वस्य । व्यापी च सम्बन्धो न प्रत्यक्षप्रतिभासी । न च सम्वादी शाब्दो व्यवहारः । ततो न प्रत्यक्षगोचरः । वस्तुविषयत्वात् प्रत्यक्षस्य । ततोनुमानगोचर एवायं ।**

**नन्वनुमानान्तरं बाधकं भविष्यति हेत्वन्तरोत्पन्नं । यदि नाम सत्त्वादित्यसाधारणो हेतुः अन्यो हेतुः स्यादित्याह ।**

---

[1] B तदा

**असाधारणता तत्र हेतूनां यत्र नान्वयि ।**
**सत्त्वमित्यभ्युदाहारो हेतोरेवं कुतो[1] मतः ॥११५॥**

यत्र हि सत्त्वमशेषवस्तुव्यापकमसाधारणीक्रियते तत्रान्यत्राव्यापके वराके का वार्त्ता। न हि बलवत्प्रतिपक्षनिरासमसमर्थस्तदपरत्र क्षमते तदर्थी। अत एव सहेतुकं पक्षमुपदिशतिस्म। अचन्द्रः शशी सत्त्वादिति। अन्यथा पक्षाभासोपन्यासप्रस्तावे कः प्रसङ्गो हेतुपन्यासस्य। अन्यथाऽश्रावणः शब्दो नित्यो घट इत्यपि हेतूपन्यासप्रसङ्गः। अथ प्रमाणबाधिते हेतोरसम्भवोत्रापि तथा स्यादिति यत्किञ्चिदेतत्।

ननूक्तमशक्यनिषेधतामस्य दर्शयति स्मेति अश्रावण इत्यत्रापि प्रसङ्गात्।

अत्रोच्यते।

शाब्दप्रसिद्धमेतद्धि न मुख्यं मानमुच्यते। प्रतिपक्षविनाभावोऽत इत्यत्रानवद्यता ॥१९७॥

अत्र संभवति बाधकं न तु प्रत्यक्षानुमानयोः। तेनात्र परिहरता निःप्रतिपक्षतानुमानस्य कथितेति वक्ष्यते।

कथन्तर्हि प्रतिपक्षासम्भवः। नहि सर्व्वस्य वाच्यता।

तदाह।[2]

**संकेतसंश्रयाः शब्दाः स चेच्छामात्रसंश्रयः।**
**नासिद्धिः शब्दसिद्धानामिति शाब्दप्रसिद्ध[3]वाक् ॥११६॥**

प्रसिद्धमेव सर्व्वं शाब्दं रूपं इच्छामात्रप्रवर्तितसंकेतशब्दमात्रभावात्। न हि शब्दः क्वापि न प्रवर्त्तयितुं शक्यः। एतदर्थमेव शाब्दप्रसिद्धेनेत्यादि वचनं। अन्यथाऽसाधारणता न प्रतिपदायितुं शक्येत्युक्तमेतत्।

नन्वनुमानाभावे शाब्दप्रसिद्धमबाधितमबाधितत्वभावे चानुमानाभाव इतीतरेतराश्रयदोषः।

नेच्छामात्रप्रवृत्तत्वं स्वत एव न सिध्यति। शाब्दसिद्धस्य सत्त्वस्य स्वत एव (।) प्रमाणता ॥१९८॥

न हीच्छामात्रानुरोधि शाब्दप्रसिद्धं प्रतिपक्षाभावप्रतीक्षणमन्यतोपेक्ष्यते। स्वत एव तस्य बलवत्वात्। प्रतिषेधकस्य च सत्त्वस्य स्वत एवाप्रतिबद्धत्वेनासाधनत्वात्।

ननु सत्त्वमवाच्यमेव प्रतीयते। ततोऽवाच्यतया व्याप्तत्वात् कस्मान्न प्रतिषेधकं(।) न(। इ)च्छामात्रप्रवर्त्तितस्य[4] निषेद्धुमशक्यत्वादित्युक्तं। यदि त्ववाच्यं सत्त्वं सत्त्वशब्देनैव कथमुच्यते। तस्मादसाधारणत्वात् अनुमानस्याबाधितशाब्दप्रसिद्धता बाधिकैव। यदि तु बाध्येपि बाधकत्वाशंका तथा सति न बाध्यबाधकभावः क्वचिदित्यप्रतिपत्तिकं जगद् भवेत्। तस्माच्छाब्दप्रसिद्धमेव बाधकं न तत्प्रतिपक्षः। ततश्च।

**अनुमानप्रसाध्येषु[5] विरुद्धाव्यभिचारिणः।**
**अभावं दर्शयत्येवं प्रतीतेरनुमा स्वतः ॥११७॥**

---

[1] B. फलो [2] T. षष्ठमाह्निकं (समाप्तम्)।
[3] B प्रसिद्धि [4] B प्रवृत्तस्य [5] M. ०प्रसाध्येषु

शाब्दप्रसिद्धवचनेन न प्रतिपक्षेण दर्शयति । यथेदमप्रतिपक्षमनुमानं तथान्यदपि । तदपि प्रतिपक्षसम्भावनायामप्रमाणत्वात् न बाधकं भवेत् । शाब्दप्रसिद्धवदेव । ततस्तस्याप्यसाधारणत्वात् प्रतिपक्षस्य साधनता । यथाऽग्निरत्र धूमात् । नाग्निरत्र सत्त्वात् । अग्निरहितप्रदेशवत् ।

नन्विच्छामात्रप्रवर्त्तितवाचकत्वाद् घटेपि चन्द्रत्वमिति न दृष्टान्तोस्ति । अत्र त्वनग्निः[1] प्रदेशो विद्यत एव । नैतदस्ति ।

शाब्दप्रसिद्धबाधायामसाधारणता भवेत् । सत्वस्यात्रापि कार्येण हेतुना बाधनं[2] न किम् ॥१९९॥
सधूमे हि प्रदेशेग्निरनुमानेन साधितः । प्रतिषेधस्य किम्वन्हेर्न्न (हि) साधक इष्यते ॥२००॥
विपक्षाद्बाधनाशङ्का प्रागेव विनिवारिता । तस्मात् प्रमाणे सर्व्वत्र प्रतियोगी न विद्यते ॥२०१॥

ततोनुमाने विरुद्धाव्यभिचारिणामसम्भवः । अन्यथा प्रमाणस्य बाधनसम्भवे सर्व्वत्रानाश्वासः । यत्र न दृश्यते तत्राश्वास इति चेत् । न(।) अनुपलम्भमात्रस्य प्रमाणाभावात् । सम्भवेपि बाधकस्योत्प्रेक्षयितुमशक्यत्वादनुपलब्धिलक्षणप्राप्तत्वाद्(।) अनेनैकत्वसंख्याविवक्षा प्रत्युक्ता । सोपि ह्यनुपलम्भमेव सूचयति प्रतिबन्धं वा । यद्यनुपलम्भं सूचयेत् तदप्रमाणमिति न किञ्चित् । अथ प्रतिबन्धं ततो न विरुद्धाव्यभिचारिसम्भवः । न हि प्रतिबन्धवानपरस्तत्र सम्भवति एकस्य भावाभावत्वाभावात् । तस्माद् वस्तुबलप्रवृत्तानुमाने विरुद्धाव्यभिचारिणोऽभावः ।

ननु यद्यसाधारणत्वादनुमानाभाव इत्यनेन विरुद्धाव्यभिचारिणो(ऽ)भावसूचनानुमाने तदानुमान एव किमिदं नोच्यते । यत्राप्यसाधारणत्वादनुमानाभावे कार्यहेतुस्वभावहेतुप्रसिद्धेन विरुद्धेनार्थेनापोद्यते तेन स पक्ष इति । एवं प्रत्यक्षेपि वाच्यं ।

न किञ्चिदेतत् । यतः । एतेनैव प्रत्यक्षानुमाने व्याख्याते ।

य आह । न वस्तु प्रत्यक्षेस्ति । प्रत्ययत्वात् केशमशकाकारतैमिरिकप्रत्य(य) वत् । तस्यैवमुत्तरं ।

प्रतिबन्धप्रसिद्धेन वस्तुनाऽभावबाधनं । प्रतिबन्धस्य भावे हि वस्तु सर्व्वत्र विद्यते ॥२०२॥

यदि प्रतिबन्धरहिते प्रत्यये वस्तु संदिग्धमन्यथा वेत्युच्यते । सिद्धमेव साधितं भवेत् । अथ विपर्यये तदा सर्व्वत्र वस्त्वस्तीत्यसाधारणता प्रतिपक्षस्य ।

ननु प्रत्यक्षे नानुमानम्बाधकं अन्यद्वा संभवति । तस्य साक्षाद्दर्शितत्वात्[3] । साक्षाद् दृष्टञ्च कथन्नास्तित्वेन शक्यं प्रतिपत्तुं । न हि तदैव तस्यैव दर्शनादर्शनयोः सम्भवः । ननु[4] हेत्वन्तरेणाभावसाधनं नानुपलम्भेन ।

न सदेतत् । यतः ।

साक्षात्कृतेन बाधास्ति प्रत्यये[5] क्वापि कस्यचित् ।
तथा सति प्रमाणं स्यात् सर्व्वमेवाविशेषतः ॥२०३॥

---

[1] B त्वनग्निप्रदे [2] B बाधकं [3] B. ०र्दाशित्वात्
[4] B. तक्ष [5] B. प्रत्यक्षे

नहि भ्रान्तप्रत्ययेपि साक्षात्कृतकेशादिरूपे बाधकमस्ति। ततो न साक्षात्कृतिमात्रेण प्रमाणम्।

अनेनाबाधितत्वमपि प्रत्युक्तं। नहि साक्षात्करणमिवाबाधितत्वमपि स्वरूपेणातिव्यापि। अविसम्वादिन्यबाधितत्वे सति प्रमाणमिति चेत्। सोयं हरीतकीं प्राप्य देवता विरेचयतीति[1] न्यायः। यद्यविसम्वादनमस्ति किमबाधयाऽविसम्वादेनैव प्रमाणत्वात्। अथाबाधितत्वमर्थक्रियाविषयं परिगृह्यते तथा सत्यविम्वाद एवासाविति न दोषः। स चाविसम्वादो न प्रतिभासमाने। अप्रतिभासमानञ्च गम्यं प्रतिबन्धात् प्रतिभासमानरूपस्य। स च प्रतिबन्धरूपोऽनुमानेपि समान इति। तत्र प्रतिपक्षसम्भवे द्वयोरपि। न वा क्वापीति समानं। तस्मान्न साक्षात्करणेन प्रत्यक्षमपि प्रमाणम्।

अत एवाह।

अर्थस्यासम्भवेऽभावात् प्रत्यक्षेपि प्रमाणता। प्रतिबद्धस्वभावस्य तद्धेतुत्वे समं द्वयं ॥२०४॥

प्रतिबन्ध एव हि प्रमाणत्वे निबन्धनं।

ननु च तत्रैव प्रत्यक्षेऽप्रतिपक्षत्वप्रतिपादनायानुमानाभाव इति कस्मान्नोक्तं यद्येतावत् प्रयोजनं। क्रमप्राप्तस्य व्यतिक्रमे प्रयोजनाभावात्।

नैतदस्ति साधु। यतः।

शब्दासिद्धस्य मानत्वं प्रतिघातविनाकृतं। निवेदयितुमत्रोक्ता प्रतिमान[2]निराक्रिया(।) ॥२०५॥

यदि तत्र प्रत्यक्षेऽनुमाने वा प्रतिबन्धकमाननिराकरणमुच्यते। शाब्दप्रसिद्धानुमानस्य सामर्थ्यमप्रतिहतमप्रतिपादितं भवेत्। तत एतदर्थं प्रथमप्राप्तोल्लंघनं। अपि च।

अप्रगाढानुमानेपि यत्राप्रत्यनुमानता। तत्र प्रौढानुमानेसौ दूरादेव निराकृता ॥२०६॥

यत्र हि शाब्द(प्रसिद्ध)मप्रौढमप्यनुमानमप्रतिपक्षमसाधारणीकरणकारणं। तत्र प्रौढतरम(प्रति)यत्नसिद्धमेवाप्रतिपक्षतया।

ननु सकलमेव योग्यमिष्टशब्दाभिधानतायै। अप्रातिकूल्यमेव योग्यतेति न्यायादिति। अत्र वस्तुबलप्रवृत्तमेवानुमानं। तथा प्रत्यक्षेणोपलम्भात्। न (।) आनुकूल्यस्याप्यभावात्। यथैव तस्य प्रतिकूलता न प्रतीयते तथानुकूलतापि प्रत्यक्षतोऽन्यतो वा(।)ततः कथमेतत् वस्तुबलप्रवृत्तं (।) शाब्दप्रसिद्धमनुमानं तत्र यदीच्छामात्रायातो धर्मो न बाध्यते वास्तवः। तत्र किं प्रतिबन्धबलायातो भविष्यतीत्येतदेवात्र प्रतिपाद्यं प्रयोजनं।

ननु(।)

इच्छामात्रपराधीनोऽवश्यमेव न बाध्यते। तस्य सन्निहितत्वेन सदैव प्रतिपत्तितः ॥२०७॥
यस्तु वस्तुबलायातः स न स्यादपि कुत्र चित्। कारणानां हि कार्येषु नियतत्वन्न विद्यते ॥२०८॥
ततो बाधकशङ्का स्यात् प्रमाणे वस्तुभाविनि। ततस्तत्रैव युक्तेयं बाधकस्य निराक्रिया ॥२०९॥
दण्डायूपस्य यो न्यायः परिहार उदीरितः। स नास्ति प्रथमोल्लंघेन तस्यातिक्रमकमः ॥२१०॥

अत्रोच्यते।

---

[1] B. ०यन्तीति [2] B. प्रतिघात

अवस्तुवृत्तिव्यवहारमात्रात् प्रसिद्धसम्बन्धतयानुमानं ।
न बाधितं यत्र परस्य बाधा भविष्यतीत्यत्र कथं विमर्शः ॥२११॥
अर्थोयमेवं प्रतिपद्यमानो न न्यायधर्मा[1]नुगतत्वहीनः ।
इच्छापराधीनविधेश्च दृष्टस्त्यागोपि तत्त्यागकृतावतारः ॥२१२॥
सुखोपनीतस्य समीहितस्य त्यागोपि तत्तस्य विधान एव ।
न वस्तुवृत्तं पुनरेवमस्ति धराधरः कम्पयितु(न्न) शक्यः ॥२१३॥
इति सकलमशंकं कापथावृत्तिजातं यदि परममुनीनां वृत्तमेतन्न वाज्ञा[2] ।
कथमिह दुरितानां दर्शनं नास्तिकानामुपहतनयनानां स्पष्टभावानदृष्टेः ॥२१४॥

**तस्मादत्रैव बाधकाभावप्रतिपादनमिति युक्तमेतत् ।**

## ( ४ ) संज्ञासंज्ञिसंबंध-चिन्ता

**अथवा ब्रुवतो लोकस्यानुमाऽभाव उच्यते ।**
**किन्तेन भिन्नविषया प्रतीतिरनुमानतः ॥११८॥**

**यत्रापीत्यादिना(।) यत्राप्यसाधारणत्वादनुमा नास्ति साधिकेति सम्बन्धः। न हि चन्द्रशब्दवाच्यत्वेनुमानं वस्तुबलभाविभावकम्। यदि तर्हि साधकमनुमानं नास्तिकेन विपर्ययस्याभावस्य साधनं। अभावे शाब्दप्रसिद्धे(न) विरुद्धेनापोद्यत इति। अनेनानुमाननिषेधेन नैतद् वस्तुबलभाव्यनुमानमिति प्रतिपादितं। यदि त्वेतदप्यनुमानमनुमानप्रतिषेधो विरोधिनिर्वर्त्तितः स्यात्। नत्वनुमानत्वमस्य नेष्टमेव। "स्वभावाङ्गं जगत्स्थितिरिति" वचनात्। तथा हि शब्दप्रसिद्धमेव केवलमत्र वाचकं न वस्तुबलप्रवृत्तमनुमानं। नहि वाच्ययत्वमत्र प्रत्यक्षतो ग्रहीतुं शक्यं तत्र वस्तुमात्रस्य प्रतिभासनात्। अथापि स्याद् यद्यविकल्पकत्वात् वस्तुमात्रं प्रतिभाति न वाच्यवाचकभावः। कार्यकारणभावोपि तर्हि नैव प्रतिभाति। तत्र यथा कार्यकारणभावः तथा वाच्यवाचकभावोपि।**

**सत्यमेतत्। तथापि कार्यकारणभावः सर्व्वविषयो न वाचकभावः। तथा हि।**

वाच्यवाचकभावोयं देशकालनरान्तरे। व्यभिचारी ततस्तस्य कार्यकारणता न हि ॥२१५॥

**कार्यकारणभावो हि यद्यपि परमार्थतो प्रत्यक्षप्रमाणसिद्धस्तथापि सकलजगदविज्ञानप्रसिद्धिवशात् प्रत्यक्षवत् प्रतिभाति। तथा हि।**

दृष्टमेतन्मया पूर्व्वं धूमः पावककारणः। स एवायमिति ज्ञानमन्यथादेयभाक् कथम् ॥२१६॥

**यदि नाम पूर्व्वं न विकल्पितं मया पूर्व्वं तथापि मया दृष्टमेव। सविकल्पकन्तर्हि प्रत्यक्षमापतितमिति चेत्। न। प्रागविकल्पनादविकल्पयतैव तदा मया दृष्टमिति प्रतीतेः। न च कालान्तरभावी विकल्पः। प्राग्भाविनः प्रत्यक्षस्य सविकल्पतानिबन्धनं तेन सह सम्बन्धाभावात्। न तूत्तरकालभाविनो विकल्पस्य निर्व्विषयत्वे कथं तेनाविकल्पकता व्यवस्थाप्यते। न चातीतविषयं प्रत्यक्षं तेन कथमविकल्पकताव्यवस्था। न(।) अनुपलब्धेरतीतविषयत्वाव्याघातात्। तथा हि। अतीतस्य वर्त्तमानस्य च प्रतिपत्तृप्रत्यक्षनिवृत्तिलक्षणानुपलब्धेरभाव-**

---

[1] B. वर्त्मा [2] B. बाध्यं

**व्यवहारसाधनी। एवमेव सकलो लोकस्य व्यवहारः। अन्यथा व्यवहारो न स्यादिति न तिष्ठेन्न च प्रतिष्ठेत् कश्चिदिति प्राप्तं।**

**तस्मात्।**

अमूढस्मृतिसंस्कारः प्रतिपत्ता यदा भवेत्। अतीतवर्त्तमानस्य प्रत्यक्षस्य निवर्त्तने ॥२१७॥
अभावव्यवहारस्य तदा तेन प्रवर्त्तनं। सर्व्वस्य जगतः सिद्धमिदं वस्त्वविगानतः ॥२१८॥

**वाच्यवाचकभावस्तु मया प्रत्यक्षेण गृहीत इति नैवं कस्यचित्प्रतीतिः। तथा हि।**

शब्दार्थौ दर्शनादेव गृह्येते वाच्यवाचकौ। नोपदेशम्विना सोपि नोपदेशस्तयेक्ष्यते ॥२१९॥

**न खलु शब्दार्थोपलम्भमात्रकादनुपदेशादिदं वाच्यवाचकमित्युल्लेखः कस्यचित्। उपदेशोपि यद्यन्यथा कश्चिद् ब्रूयात् परित्यजेदेवान्यथा व्याख्याविकल्पो न स्यात्। न हि कार्यकारणभावोऽन्यथा नेतुं शक्यः।**

**ननु "प्रत्यक्षं संज्ञाकर्मेति" वैशेषिका आचक्षते। तथा हि। यज्ञदत्तोयमिति वस्तुश्रुतीक्षणे संकेतकाले प्रत्यक्षादेवमेवावगच्छति। संकेतकरणकाले हि यदा पुरोर्वात्तिदेवदत्तादिनामचिकीर्षाविषयीकृतं वस्तु पुरः पश्यन्ति जन्तवः। श्रुतिगोचरचारि च शब्दरूपं यज्ञदत्त इत्यादिकन्तदा भवत्यस्य संज्ञेयमिति व्यवहारकारी निश्चयः। न च भिन्नजातीयप्रत्यक्षप्रत्ययग्राह्यो न भवति प्रतिबन्धे निश्चितः। तथा हि।**

स्मरणानुभवौ स्यातां नान्यथा परिनिश्चितौ। परस्परेण सम्बद्धौ विजातीयतया स्थितौ[1] ॥२२०॥

**सज्ञासंज्ञिसम्बन्धोन प्रत्यक्षः।**

**तदेतदसत्। यतः।**

संज्ञासंज्ञावतोर्योगो यदि प्रत्यक्षनिश्चितः। न स्यादेवान्यथा भावः कालान्तरपरिग्रहे ॥२१९॥

**यदि प्रत्यक्षप्रमाणसिद्धः संज्ञासंज्ञिसम्बन्धः। कथं देशकालनरान्तरेन्यथा भवति। नहि प्रत्यक्षगृहीतमन्यथा भवति नीलादिकमन्यो वा वस्तुसम्बन्धः। तथोपदेशान्वयी दृश्यत एवायं संज्ञासंज्ञिसम्बन्धप्रत्ययः। तथा हि।**

एवन्तावदयम्व्क्ति[2]नामास्येदमिति स्फुटम्। नामैवास्येदमिति तु न जानेतिपरिस्फुटं ॥२२०॥
कदाचिदन्यकालेयमन्यदेव करिष्यति। अपरापरवाञ्छास्य केन नाम निषिध्यतां ॥२२१॥
वृत्तम्ममाप्येतदेव न वाञ्छावारणं क्वचित्।
कस्यचित्केनचिच्छक्यं कदाचिद् ब्रह्मणापि तत् ॥२२२॥

**नन्वा"भ्यन्तरन्तस्थमविवृद्धं त्रिपूरुषानुगं नाम कुर्यादनरे[3] प्रतिष्ठितमि"ति न्यायात् कथन्नेच्छावारणं। न। तल्लक्षणयोगिनामनेकत्वे कथं वारणं। अयमपि चोपदेश एव। न चायमुल्लंघ्यमान उपदेशो न दृष्टः। तस्मान्न प्रत्यक्षं संज्ञाकर्म। ततो न कार्यकारणभाववद् वाच्यवाचकभाव इति न वस्तुबलप्रवृत्तं शाब्दप्रसिद्धमनुमानं।**

**तेनानुमानाद्वस्तूनां सदसत्तानुरोधिनः।**
**भिन्नस्यातद्वशाद्[4] वृत्तिस्तदिच्छाजेति सूचितं ॥११६॥**

---

[1] B स्थिते: [2] B. ०म्व्यक्ति [3] B. ०दनरि [4] B. M. तद्वशा

**इच्छामात्रप्रवर्त्तितमेवैतच्छाब्दप्रसिद्धमनुमानं, न वस्तुबलभावि ततो वस्तु न गमयति।**

अग्निहोत्रादिशब्दस्य यथार्थोयं प्रकल्पितः ।

तथान्योपि श्वमांसादिरिच्छया परिकल्प्यतां ॥२२३॥

**कोहीच्छापरिकल्पनाभाक् स्वभावेषु भावेषु नियमः[1] । अथादृष्टविरोधादकल्पना न ह्यन्यार्थपरिकल्पनायामदृष्टनिरूढिः ।**

समीहितफलावाप्तिर्न्न हि कल्पनया क्वचित् । अन्यथा नामतः सर्व्वः सर्व्वमेव प्रसाधयेत् ॥२२४॥

**सत्यमेतद् वयमप्येवं प्रतिज्ञासिष्महि भवानेव त्वस्यानर्थ[2]पथप्रस्थान(स्य)महासामर्थ्यः (?)प्रवर्त्तयिता । तथा हि ।**

यद्यर्थस्य परीक्ष्येत निश्चयाय परंपरा । उपदेशस्य सैव स्यादनर्थान्धिपरंपरा ॥२२५॥

अतीन्द्रियदृशः सन्ति यद्यर्थस्यास्य वेदकाः । तथा सत्यवतारस्स्यात् परस्परविरोधिनाम् ॥२२६॥

**नह्यन्योतीन्द्रियदर्शी लब्धावकाशः कर्क्कशो भवतः । तस्मादयमपि केनचिदर्थः**

**कल्पित एव । न च तत एव संप्रत्यय इत्यन्योपि परिकल्पनीयः । स्वयं जानानेन तदपरिज्ञानं कथं कल्पनीय(?यम्) इति चेत् । स एव ज्ञास्यते किन्तव चिन्तया । न[3] मामविचार्य विसम्वादयेदपि ततश्चिन्तेति[4] चेत् । परित्यज्यतान्तर्ह्युपदेशमात्रप्रत्याशा ।**

**प्रकृतिप्रत्ययानुगमेन कल्पनेति चेत् । ननु सोपि प्रकृतिप्रत्ययार्थ उपदेशादेव सिद्धस्ततः सोपि प्रयोगदर्शनात् (एव) समर्थनीयः । प्रयोगोपि प्रकृतिप्रत्ययार्थादिसम्बन्धपरम्परेतरे-तराश्रयणे धर्मस्तथा न स्यादिति चेत् । उक्तमत्र । किञ्च । धर्म एवम्भवतीत्ययमपि उपदेश एवेति यत्किञ्चिदेतत् ।**

**ननु चन्द्रः शशी सत्त्वात् प्रसिद्धवाच्यवत् । ततः कथमवस्तुबलप्रवृत्तमेतदनुमानं । उक्तमत्र । अपि च ।**

**चन्द्रतां शशिनोऽनिच्छन् कां प्रतीतिं स वाञ्छति ।**
**इति तं प्रत्यदृष्टान्तं तदसाधारणं मतं ॥१२०॥**

**सकलप्रतीतिप्रतिक्षेपकारिणंप्रत्यदृष्टान्तत्वात् । उक्तमसाधारणत्वादनुमानाभाव इति(।)स हि शशिनः (स)कलजगतः प्रसिद्धिमागतस्य चन्द्रशब्दाभिधेयतया तत्त्वमनिच्छन्-त्यामपि प्रतीतिं नेच्छतीति प्रसिद्धमेवैतत् । ततः तं प्रत्यदृष्टान्तमनुमानं सत्त्वादित्यादिकं । तत्र च सर्व्वहेतूनामसाधारणतेत्युक्तमेव । ततश्चाचन्द्रः शशी सत्त्वादिति कोर्थः । चन्द्रः शशी न सत्त्वादिति हेतोः । नानेन चन्द्रत्वं साधयितुं शक्यं । केन तर्हि साध्यते असाविति तञ्च कथम्बाधकं शाब्दप्रसिद्धेनावस्तु बलभाविनेत्यभिप्रायः ।**

**ननु चन्द्रस्यैकत्वादसाधारणता तत्कथमेतल्लभ्यं सकलप्रतीतिप्रतिक्षेपवादिनंप्रत्येत-दनुमानमसाधारमभिप्रेतं ।**

**न किञ्चिदेतत् । यतः ।**

---

[1] B. भावनियमः
[2] B. तस्यानर्थ
[3] B. स
[4] B. चिन्तयेति

नोदाहरणमेवैकमधि[1]कृत्येदमुच्यते ।
लक्षणत्वात्तथाऽवृक्षो धात्रीत्युक्तौ[2] च बाधनात् ॥१२१॥

अवृक्षः शिंशपा सत्त्वादित्यत्र न परिहार एकत्वाद् वृक्षस्य (इति) । न चैकमुदाहरण-मभिसन्धाय लक्षणं प्रवर्त्तते[3] ।

ननु कोयं न्यायः । एकमुदाहरणमभिसन्धाय लक्षणं न प्रवर्त्तते । न खलु तदुदाहरणञ्च साधनीयं । अथान्यदप्युदाहरणमन्तर्भाव्य (लक्षणं) कर्त्तव्यमेवं हि लक्षणकृतः शास्त्रप्रयाससाध्यमिति न प्रतिपत्तृपरिक्लेशः । यत्र तर्हि नोदाहरणमन्यदस्ति तत्र किमप्रवर्त्तनं लक्षणस्य दृश्यते (च) । अकुटिलिकाया इत्यादि । तथा(।)

मेरुमन्दरमैनाककैलाशोशीरकादयः । एकैकरूपाः सन्त्येव ततो नैकाप्युदाहृतिः ॥२३१॥

अत्रोच्यते ।

विधेयं लक्षणं तद्धि यदव्याप्त्या[4] विना कृतं । अतिव्याप्त्या च तेनेदमव्यापि स्यात् परोक्तितः ।२३२॥

तथाहि । न वक्षः शिंशपा सत्त्वादित्यत्रापि प्रतीतिबाधा वक्तव्या सा कथं परोदितन्यायादवतरेत् । नहि वृक्ष एकः प्लक्षादेरपि भावात् । अथ साधारणतयाऽनुमानमस्त्येव तेन बाधा भविष्यतीति चेत् । अत्राह ।

अत्रापि लोके दृष्टत्वात्कर्पूररजतादिषु ।
समयाद् वर्त्तमानस्य काऽसाधारणताभिधा ॥१२२॥

चन्द्रशब्दाभिधानमपि कर्पूरादिषु दृष्टमेव । ततः कथमेकता चन्द्रमसः । न च समयमात्रवृत्तयः शब्दाः क्वापि न प्रवर्त्तन्ते । ततस्त(त्रा)प्यनुमानबाधैव । तदियं प्रतीतिबाधा नाम नास्त्येवेत्यापतितं ।

अथ रजतादिषु चन्द्रशब्दवाच्यत्वं नैव प्रसिद्धिभाक् केवलं यथाकथञ्चिद् गन्धयुक्त्यादिवादिभिः कल्पितं न वस्तुवृत्तं तत् ।

तदसत् ।

यदि तस्य क्वचित्सिध्येत् सिद्धं वस्तुबलेन तत् ।
प्रतीतिसिद्धोपगमेऽशशिन्यप्यनिवारणात्[5] ॥१२३॥

अस्यायमर्थः । यदि (क)र्पूरादौ न परमार्थतः प्रसिद्धं तैरेव कल्पितं गन्धयुक्त्यादिवादिभिः । चन्द्रे तर्हि वस्तुसिद्धं तत्तत्कथं प्रसिद्धिबाधोदाहरणं ।

अथ प्रतीतिसिद्धमेव तत्तेन प्रतीतिबाधेति चेत् ।

प्रतीतिसिद्धोपगमे[6] शशिन्यप्यनिवारणमेव कर्पूरादौ । नहि तत्रापि न प्रतीतिस्ततोनुमानबाधनमेव न प्रतीतिबाधनं । अथ कर्पूरादौ ह्लादादिना निमित्तेन प्रवर्त्तते तेन न तदुदाहरणं ततो साधारणं ।

---

[1] B. ०मेवैतदधि० M.० मेवेद० [2] M. वृक्षोऽधात्री [3] B. प्रवर्त्यते
[4] B. तदव्याप्त्या [5] M. ०निवारणम् [6] B. बाधोपगमे

अत्रोच्यते ।

**तस्य वस्तुनि सिद्धस्य शशिन्यप्यनिवारणं ।**
**तद्वस्त्वभावे शशिनि वारणेपि न दुष्यति ॥१२४॥**

यदि कर्प्पूरादौ निमित्तप्रयुक्तं चन्द्रशब्दाभिधानं शशिन्यपि तस्य निमित्तस्य भावाद-वार्यमेव । अथ तद्वत्स्वभावान्निवारणं तदा शशिनि वारणेपि न दोषः । वस्तुप्रतिबद्धं वस्त्वभावेन भवतीति नाप्रसिद्धमेतत् ।

**तस्मादवस्तुनियतसंकेतध्वनिभाविनाम्[1] ।**
**योग्याः पदार्था धर्माणामिच्छाया अनिरोधनात् ॥१२५॥**

अवस्तुनियतसंकेत(मात्र) भाविनां धर्माणां योग्याः सर्व्वपदार्था इति तद्योग्यताबाधने दोषः प्रतीति बाधालक्षणः ।

ननु निमित्तप्रयुक्तः[2] शब्दः सकल एव । डवित्थादिशब्दानामपि किञ्चिन्निमित्तं सामान्यविशेषरूपमेव न प्रसिद्धिमात्रकमेव ।

तदेतदसत् । न प्रवृत्तिनिमित्तमुपादाय शब्दस्तन्निमित्तवति प्रवर्त्तत इति प्रमाणं (।) निमित्तेपि निमित्तान्तरापेक्षायामन(व)स्था[3] । तथा हि ।

"यदि तस्य क्वचित् सिध्येत् सिद्धं वस्तुबलेन तत्" । निमित्तवतीति वाक्यशेषः । **अप्रतीतिसिद्धोपगमे शशिन्यप्यनिवारणात् ।** प्रतीतिमात्रसिद्धशब्दार्थोपगमेऽशशि[4]-न्यप्यनिवारणं । न हि यत्र क्वचित्प्रवर्त्तमानो वाच्यवाच(क)भावः प्रतिनियम[5]मर्हति । प्रतिनियमे प्रमाणाभावात् । तत्र यथा निमित्ते निमित्तमन्तरेणैव प्रवर्त्तते तथा निमित्तवत्यपि । नहि निमित्तेपीच्छातोन्यथावृत्तिः ।

अथ स्वभावादेव तत्र वर्त्ततेऽन्यत्रापि स्वभावः केन (नि)वारणीयः । अथ तेन सह परमार्थतः सम्बन्धोस्तीति तत्रैव प्रवर्त्तते जात्यादौ । एतत्कथं ज्ञातव्यमिच्छामात्रेण वर्त्तमानः शब्दो दृष्टः (।) स कथमन्यत्रान्यथा वर्त्तेत । वर्त्तमानो दृष्टस्तेन वर्त्तत इति व्यपदिश्यते[6] । न(।)इच्छामात्रवृत्तेरपि सम्भवात् । न हीच्छामात्रवृत्तेरन्यस्य च विशेषं पश्यामः । इच्छया अनुपलब्धिरिति चेत् । सेयमु[7]पलब्धिरतीतेच्छायामपि (सं)भवति । नह्यनुपलब्धिः सर्व्वस्य बाधिकेच्छायाः(।) वर्त्तमानसन्निहितविशेषस्यैव बाधिका न सर्व्वस्य । तस्माद् यदि कस्य-(चिद्)प्यत्रासीदिच्छा वृद्धस्य चिरातीतस्य तदुपदेशादिदानीन्त(ना)नां व्यवहारः किमत्र विरुद्धं । तस्मान्निमित्तवन्निमित्तवत्यपि प्रवर्त्ततां किमनर्थकनिमित्तपरिकल्पनया ।

अन्यः पुनराह । न निमित्ते प्रथमं प्रवर्त्तते पश्चान्निमित्तावति क्रमेणवृत्तेरद-र्शनात् । अथ निमित्ते क्वापि दृष्टः पदार्थत्वं गोत्वमिति । न तस्य शब्दान्तरत्वात् । तस्य हि वाचकत्वं यस्य यत्र प्रयोगः । प्रयोगबलायाता सकलस्य बाध्यबाधकभाव-सिद्धिरन्वयव्यतिरेककल्पनायां (हि) द्रव्यवृत्तिरेव भावप्रत्ययान्तः शब्दः । भावप्रत्ययापगमे द्रव्यवृत्तित्वात् । अथ द्रव्यवृत्तेर्भावप्रत्यये सति कथन्निमित्तमात्रवाचकभावः । यदा तु

[1] M. ०बलभाविनाम् [2] B प्रश(?स)क्तः [3] B पेक्षानवस्थानात्
[4] मे शशि [5] ० वा नियम [6] B इत्युच्यते [7] B ०मनु

निमित्तमात्रे वर्त्तते तदा भावप्रत्ययः तमेवार्थं व्यनक्तीति युक्तं। नहि भावप्रत्ययमन्तरेण द्रव्यभाववाच्यता द्वयोर्गोशब्दयोर्व्विवेकेन प्रतीयते(।) ततो भावप्रत्ययाद् विवेकः ।

नैतदस्ति। नहि स्वार्थिक एव सकलः प्रत्ययः। तत्र द्रव्यवृत्तेरेव प्रत्यये कृते निमित्तस्य तद्विशेषणस्य प्रतीतिरिति न किञ्चिद् विरुध्यते। न च प्रकृतिप्रत्ययार्थविभागः पारमार्थिकः समुदाया एव वाचकाः प्रयोगतः प्रतीयन्ते। प्रकृतिप्रत्ययादि[1]विभागस्तु बालव्युत्पत्तये यथाकथञ्चिदेव प्रकल्पितोऽन्यथा बालस्य मुखेन व्युत्पादयितुमशक्यत्वात्। तस्मान्न निमित्तमुपादाय निमित्तवति वर्त्तत इति प्रमाणमत्र किञ्चित्।

अपरः प्राह। निमित्तवत्येव शब्दः प्रवर्त्तते निमित्तं त्वनभिधीयमानमेव व्यवच्छेदकमसम्भवि तन्निमित्तत्वात्।

तदेतदसत्। यतः।

"यदि तस्य क्वचित्सिध्येत् सिद्धं वस्तुबलेन तत्।

प्रतीतिसिद्धोपगमे शशिन्यप्यनिवारणात्" ॥२३३॥

यदि तस्य क्वचिन्निमित्ते सिध्येत् सिद्धं वस्तुबलेन तत्। निमित्तमप्रतिपादयता शब्देन कथन्तद्व्यवच्छिन्ने प्रवर्त्तनं। तद्व्यवच्छेदे[2] चेदवबोधस्तदपि बुद्धावारूढं कथमवाच्यं निमित्तवतोपि शब्दात् प्रतिपत्ति[3]रिति वाच्यत्वं सा निमित्तेपि समाना।

अथ प्राधान्येन द्रव्यमेव प्रतिपाद्यते गुणस्तु माधुर्यादिर्न्न प्रतीयमानोपि वाच्यो नान्तरीयकतया प्रतीतेः।

न विवक्षा विनाभावी प्रधानगुणतानयः। यदु(द्)दिश्य प्रवृत्तिः स्यात्तस्य प्राधान्यसङ्गतिः ॥२३४॥

तत्र कदाचिन्माधुर्य्यमेव प्रधानं कदाचिद् द्रव्यमिति लोकव्यवस्था (।) लोकव्यवस्थया च वाच्यवाचकभावः। तथा हि।

मधुरेणार्थिभावश्चेत् गुडं भक्षय सर्व्वदा। यद्यर्थो व्याध्यभावेन तत्कृत्यै मधु भक्षय ॥२३५॥

यदा लोलुपजातीयः कश्चिद् भक्षकस्तदर्थं गुडोपदेशो माधुर्यं प्रतिपादयति। यदा तु प्रभावविशेषात् श्लेष्मनिवृत्तये प्रतिपादयति मध्वादिकन्तदा द्रव्यमात्रप्रतिपादकं प्रधानं तस्माद् द्वयमेव प्रतीयते। प्रधानगुणभावस्तु कदाचित् कथञ्चित् कस्यचिदिति विभागः। तत्र द्वय(म)प्रतीतौ नापरन्निमित्तमिति प्रसिद्धमात्रकमवशिष्यते।

अथापि स्यादुपलक्षणं निमित्तं न तस्य वाच्यता। यथा कतरद् देवदत्त(स्य) धाम (।) यत्र काक इति न काकस्यापि गृहवचनवाच्यता। यथा न वाच्यता तथा तदभावेपि देवदत्तगृहमेव तेन तस्य नोपादेयता। तथा ब्राह्मणादिशब्दानामपि मनुष्यत्वादिपरिचोदनायां न च काकेनासाधूपलक्ष्यते तस्यानित्यत्वात् (।) प्रेक्षापूर्व्वकारी हि काकेनोपलक्षितमन्यद् (एव) देवकुलादिकं निमित्तीकरोति। अन्यथा व्यवहाराभावः।

कथन्तर्हि अवाच्यभूतः काक उपलक्षणं (।) प्रत्यक्षसिद्धत्वादत एव काकशब्देनैवास्य प्रतिपादनं (।) न त्वेवं जात्यादिनिमित्तानामपि परवाचक(त्व)प्रतिपादनं। तस्मादवा-

---

[1] B. प्रत्ययार्थं [2] B. ०व्यवच्छिन्ने [3] B. प्रतीति

ध्यमपि व्यवच्छेदकम्भवति यत् पृथक् प्रतिपाद्यते । यत्तु तत एव शब्दात् प्रतीयते तद् वाच्यमेव (।) शब्देन बुद्धावाहितस्य वाच्यत्वव्यपदेशात् । तत्र प्रतीतिरेव शब्दान्न वाच्यतेति चेत् । "प्रतीतिसिद्धोपगमे शशिन्यनिवारणाद्"वाच्यतायाः । निमित्तवन्निमित्तवत्यपि ता(ऽ)भावः स्यादित्यतः[१] । प्रतीतित[२] एव वाच्यत्वे निमित्तेपि समानं ।

ननु तैलं दीयतामिति पात्रं प्रतीयमानमपि न वाच्यं तैलशब्दस्य । न तस्य सर्व्वदा प्रतीत्यभावात् । स्वयमानीते(पि) पात्रे तैलदानस्यार्थितासंभवात् । तस्मादनभिधीयमानस्य शब्दान्तराप्रतिपादितस्य नोपलक्षणत्वसम्भवः । लक्षितेन हि किञ्चिल्लक्षयितुं शक्यते । अलक्षितेन लक्षणेऽतिप्रसङ्गः । अथ प्रथममुपलक्षणात् । ततः पुनरत्यन्ताभ्यासात् स शब्दस्तद्व्यवच्छिन्न एव प्रवर्त्तते विनापि तदा निमित्तप्रतीतिं । एवन्तर्हि श्वमांसेपि प्रवर्त्ततामग्निहोत्रादिशब्दस्तन्निमित्तस्य काकवत् तत्र वृत्तत्वात् । अन्यथा कथं न वस्त्वर्थेषु गोशब्दः प्रवर्त्तते । तत्र तस्य प्रसिद्धत्वादिति चेत् । श्वमांसेनापि[3] कालदेशान्तरे प्रतीतिर्न्नास्तीति कुत एतत् । तस्माद् वाच्यवाचकभावो नामानियत एवेच्छारचितं संकेतबलावलम्बनत्वादिति न काचित्क्षतिर्व्वेदस्यापौरुषेयत्वेपि दुष्टतायाः । सर्व्वत्र योग्यताया अनिवारणात् ।

**तां योग्यतां निरुन्धानं, संकेतप्रतिषेधजा ।**
**प्रतिहन्ति प्रतीताख्या योग्यता विषयाऽनुमा ॥१२६॥**
**शब्दानामर्थनियमः संकेतानुविधायिनां ।**
**नेत्यनेनोक्तमत्रैषां प्रतिषेधो विरुध्यते ॥१२७॥**

यो हि श्वमांसादिकं नाग्निहोत्रादिशब्दार्थं इत्याह । तस्य योग्यताविषयानुमा प्रतिरोधिनी । यतः । शब्दानामभिधेयनियमः संकेतमात्रप्रवृत्तीनां नास्तीति कोयन्नियम एकेनैवाभिधेयेन भवितव्यमिति । तत्र य आह । प्रतीतिबाधितं श्वमांसभक्षणकल्पनमिति स पर्यनुयुज्यते । पौरुषेयो वेद इति प्रतीतिबाधितमिदमपि । यतः । ऋग्गिरावृचश्चक्रुः सामानि सामगिराविति प्रतीतेः । अथ करोतिः स्मरणे वर्त्तते न निर्वर्त्तन एव । तथा हि संस्कारेपि दृश्यते । पृष्ठं कुरु पादौ कुर्व्विति(।) न(।) अत्रान्यथाऽसम्भवादेवं प्रतीतिः । अथ प्रामाण्यमन्यथा न भवेदिति कल्पना । सर्व्वागमानामप्यपौरुषेयताप्रसङ्गः । तत्कल्पनानिमित्तसद्भावात् । अत एव सौगतः ।

**नैमित्तिक्याः श्रुतेरर्थमर्थम्वा पारमार्थिकं ।**
**शब्दानां प्रतिरुन्धानो न वाच्यस्तेन[४] वार्य्यतः ॥१२८॥**

नैमित्तिकी श्रुतिर्न्न काचिदस्तीति यदि वदेन्न तस्य दोषः परमार्थतः सम्बन्धबलेन नेत्यपि यदि प्रतिब्रूयात् न वाच्य[५] एवासौ । यस्तु सांकेतिकमपि मीमांसकादिर्न्नेत्याह । स एवोच्यते । ततः प्रसिद्धिबाधनमयुक्तं ।

**तस्माद् विषयभेदस्य दर्शनाय पृथक्कृता ।**
**अनुमानाबहिर्भूता प्रतीतिरपि पूर्व्ववत् ॥१२९॥**

---

[१] B ०दित्यर्थः [२] प्रतीत० [३] मांसेपि
[४] B. बाध्य [५] B. बाध्य

यथा शास्त्रं स्ववचनञ्च प्रस्तावाश्रयत्वेनाभ्युपगतम्बाधकं भवति । नान्यथा । प्रतिज्ञातस्यार्थस्य बाधनात् । न सर्व्वथा विपर्ययस्य बाधनमेव । द्वयोस्तुल्यकक्षत्वात् । तथा प्रतीतिरपि न पारमार्थिकार्थस्य बाधिकाऽपि तु प्रतीतिमात्रकप्रसिद्धस्य प्रतिक्षेपस्य बाधिकेति परमार्थः ।

**सिद्धयोः पृथगाख्याने दर्शयँश्च प्रयोजनम् ।**
**एते सहेतुके प्राह नानुमाध्यक्षबाधने ॥१३०॥**

तत्राचार्येणेदमुक्तं । स्वरूपेणैव निर्द्देश्यः स्वयमिष्टो(ऽ)निराकृतः पक्षः । यदि प्रत्यक्षानुमानागमप्रसिद्धेन । तद्यथा । अश्रावणः शब्दो नित्यो घट इति । न सन्ति प्रमाणानि प्रमेयार्थानीति प्रतिज्ञामात्रेण । यत्राप्यसाधारणत्वादनुमानाभावे शाब्दप्रसिद्धेन विरुद्धेना-(र्थेना)पोद्यते न स पक्ष इति । अनुमाध्यक्षबाधने । मुक्त्वागमप्रसिद्धिबाधने सहेतुके प्राह । प्रतिज्ञामात्रेण शाब्दप्रसिद्धेनेति । अन्यथा यदि विषयभेदोपदर्शनन्नाभिमतमभविष्यदाचार्यस्य सहेतुकत्वमनयोरेव न ब्रूयात् । तस्मादयमेवाभिप्रायः प्रधानभूतस्य **सकलन्यायवादिनां न्यायपरमेश्वरस्य** ।

न खलु प्रयोजनविवेकपरमनसः परिपुष्टेतरप्रयोजनवचसः सम्भवन्ति वचस्विनः । तथा हि ।

अन्तर्व्विन्ध्यनिवासिसान्द्रविततध्वान्तोद्धत[1]ध्वंसिधीर् ।
अत्युच्चैरुदयाद्रिसन्ततसतप्रेङ्ख[2]न्मयूखोत्करः ॥२३६॥
आचार्यो न विमार्गगः प्रतिहतो नान्यैरपूर्व्वोरविर् ।
न्नास्तव्यस्तगभस्तिहस्तविफलप्रारम्भसम्भावितः ॥२३७॥

तस्माद् विषयभेद एवात्र युक्तः । परिशिष्टन्तु प्रागेवोक्तं ।

## ५. प्रत्यक्षबाधा

**तत्राप्यध्यक्षबाधायां नानारूपतया ध्वनेः ।**
**प्रसिद्धस्य श्रुतौ रूपं यदेव प्रतिभासते ॥१३१॥**
**अद्वयं शबलाभासस्यादृष्टेर्बुद्धिजन्मनः ।**

अध्यक्षबाधायामपि वक्तव्यमस्त्येव । यदि नाम गम्यमानत्वादाचार्येण नोक्तं । तत्रापि च वक्तव्यं । अश्रावणः शब्द इति न सम्बन्धस्य प्रतिषेधः । किन्तर्हि (।) यद्रूपं श्रुतौ प्रतिभासते । अद्वयं शबलाया बुद्धेरननुभावात् । नहि जातिसम्ब(न्ध)ादीनां शब्दप्रतिभाससहचरितः प्रतिभासः । अप्रतिभासमानञ्च कथं प्रत्यक्षमप्रत्यक्षप्रतिक्षेपे च कथं प्रत्यक्षबाधा । तदेतत्प्रतिपादयिष्यते । तस्मात् प्रतिभासिन एव रूपस्य प्रतिक्षेपे दोषः प्रत्यक्षबाधालक्षणः ।

**तदर्थार्थोक्तिरस्यैव क्षेपेध्यक्षेण बाधनं ॥१३२॥**

तदर्थमेवाचार्येण ।

---

[1] B ०द्धव . [2] B वचः प्रेङ्खे

"प्रत्यक्षार्थानुमानाप्तप्रसिद्धेन निराकृत(ः।)" इत्यर्थस्य ग्रहणं तस्यैव रूपस्यार्थत्वात् । तज्जा[1]त्याविकमर्थः । प्रत्यक्षे प्रतिभाससामर्थ्याभावात् ।

## § ४. सामान्य-चिन्ता

यत्र त्वप्रतिभासनं न तत्प्रत्यक्षमिति न प्रत्यक्षबाधितस्तत्प्रतिक्षेपः ।

एतदेवाह ।

### १. सामान्यं व्यावृत्तिलक्षणम्

**तदेव रूपं तत्रार्थः शेषं व्यावृत्तिलक्षणं ।**
**अवस्तुरूपं[2] सामान्यमतस्तन्नाक्षगोचरः ॥१३३॥**
**तेन सामान्यधर्माणामप्रत्यक्षत्वसिद्धितः ।**
**प्रतिक्षेपेप्यबाधेति श्रावणोक्त्या प्रकाशितम् ॥१३४॥**

परिस्फुरत्पुरोवर्त्तिरूपेण प्रतिभासमानमेवार्थः । सामान्यसम्बन्धादयस्तु तथाभूत-रूपव्यावृत्तितः परिकल्पिता नार्थरूपाः । विजातीयरूपविलक्षणत्वस्यैव[3] दर्शनात् । सामान्यस्य चापरस्य द्वितीयरूपवदप्रतिभासनात् । ननु ।

विलक्षणत्वं नामेदं सजातीनां परस्परं । विजातीयसजातीनां व्यवहारस्ततः कथम् ॥२३८॥
गवामेव यथान्यस्मादगोव्यावृत्तिदर्शनं ।
गवाश्वानान्तथान्यस्माद् गोरश्वाच्च विलक्षणात् ॥२३९॥
ततो व्यावृत्तिमात्रेण नासां कार्यं प्रसिध्यति । वस्तुरूपन्तु सामान्यं विभागेन व्यवस्थितेः ॥२४०॥
प्रवर्त्तयत्यसांकर्यं व्यवहारन्तदर्थिनां । स्वरूपेण प्रतीतस्य न सांकर्यस्य सम्भवः[4] ॥२४१॥

### (१) सामान्यनिरासः

तदेतदसत् । यतः ।

सामान्यादिस्वरूपेण यदि जातु प्रतीयते । स्वरूपेण प्रतीतस्य न सांकर्यं प्रसक्तिमत् ॥२४२॥
स्वरूपाप्रतिभासेपि यद्यसांकार्यसम्भवः । समर्थकारदृष्टानामसांकर्यं प्रतीयतां ॥२४३॥
व्यक्तिव्यङ्ग्यं हि सामान्यं व्यक्तिरूपमलक्षितं ।
व्यञ्जकं न विभागेन व्यवहारस्ततः कथम् ॥२४४॥

न यावद् व्यक्तीनां सजातीयविजातीयानामसांकर्यन्तावन्न सामान्यमसांकर्येण प्रतीयते । यावच्च सामान्यस्यासंकरप्रतीतिकं न तावत् व्यक्त्यसंकरप्रतीतिरितीतरेतराश्रयत्वादप्रतीतिरेव सामान्यस्य ।

अथ सामान्यमेव प्रथमं प्रतीयते नागृहीतविशेषणाविशेष्य[5]बुद्धिरिति ।

---

[1] B न जा  [2] M. अवस्तुभूतं  [3] B. विलक्षणस्यैव
[4] T. सप्तममाह्निकं (समाप्तम्)  [5] B. विशेष्ये

तदसत् । सामान्यमपि कदाचिद् विशेष्यमेव परस्परं विशेषणविशेष्यभावात् । सामान्यस्य च सर्व्वदा विशेषणत्वे व्यक्तिसन्देहेपि कस्मान्न प्रतीतिः । तद्विशेषणं यद्व्यवच्छेदकं तच्च व्यवच्छेदकं यत्सन्देहव्यावर्त्तनसमर्थं । तथा हि ।

नैव व्यावर्त्ततेर्थात्मा विद्यमानः स्वरूपतः । अविद्यमानरूपस्तु दैवेनैव निवर्त्तितः ॥२४५॥
विशेषणसहस्रेपि न पूर्व्वस्य निवर्त्तनं ।
व्यक्तिनिर्द्धारणत् तस्मात् सामान्यस्य विनिश्चयः ॥२४६॥

अयं स गौरिति निश्चयो रूपनिर्द्धारणमात्रकादेव (प्र)वर्त्तते ।

समानता हि सामान्यव्यक्तीनाञ्च समानता । संस्थानशक्तिभेदेन तस्माज्जातिरनर्थिका ॥२४३॥

ककुदादिसंस्थानं वाहादिशक्तिश्च यदि सामान्यनिश्चयहेतुस्तदेव सामान्यं तच्चाव्यतिरिक्तमेव ताभ्यः[1] । अवान्तरभेदे कथन्तत्सामान्यं(।) सामान्यवादिनोपि कथं व्यक्तिः । विलक्षणैरेवेति चेत् किन्न कर्क्कादिभिः । तेषामसामर्थ्याच्चेत् । एषाम्विलक्षणत्वे कथं सामर्थ्यं परस्परतः । वस्तु स्वभावैरुत्तरम्वाच्यमिति चेत् । न । पादप्रसारणमात्रमेतत्[2] त्राणं । अन्यथा सामान्यमन्तरेणैव वर्णसंस्थानमात्रेणासांकर्यव्यवहारमात्रसिद्धेर्न्न वक्तव्यमेतत् । सामान्यमन्तरेण कथमिति । अत्र वस्तुस्वभावैरुत्तरम्वाच्यमिति परिहारस्य काकैरभक्षणात् । न च ककुदादिसंस्थानस्य सांकर्यमन्यत्रा[3]दर्शनात् । यत्र तु ब्राह्मणादौ संस्थानादिसांकर्यं । तत्र विटसमयमात्रं शरणं सदाचारमात्रमद्यपादीनां[4] । तस्मात् सुदूरमपि गत्वा तदन्यव्यावृत्तिरेव हेतुः सामान्यविभागेनापरमिति व्यर्थकमपरं । अपि च ।

ब्रह्महत्यादिदानादिपापपुण्यव्यवस्थितिः । शास्त्रादेव ततो माननिरूपणमनर्थकं ॥२४४॥

इत्युक्तमेतत् । नेह सामान्यधर्माणां पापपुण्यजनकत्वादीनां प्रतिक्षेपेप्यबाधा तत्प्रक्षेपकृतः(।) एतच्छ्रावणशब्देन प्रकाशितं । इन्द्रियविज्ञाने तेषामप्रतिभासनान्न चानुमानबाधेति । यदि तत्र तद्रूपबाधने दोष इत्येतत् प्रतिपाद्यं शब्दस्वलक्षणं नास्तीत्येव कस्मान्नोक्तं(।) किन्तद्वितान्तेन सम्बन्धिनिमित्तेन शब्देनोक्तेः[5] । एवन्तु वचने(न) सम्बन्धनिराकरणमेवात्राभिप्रेतं । स चान्वयव्यतिरेकसमाधिगम्य एव तत्कथमियं प्रत्यक्षबाधोदाहृतिः[6] । अनेनापि शब्देन विवक्षाबशादभिप्रेतोर्थ उच्यत एवेति न दोषः(।) वाचकेन कस्मान्नोच्यत इति चेत् । न । यतः ।

**सर्व्वथाऽवाच्यरूपत्वात् सिद्ध्या तस्य समाश्रयात् ।**
**बाधनात् तद्बलेनोक्तः श्रावणेनाक्षगोचरः ॥१३५॥**

नहि शब्दस्वलक्षणशब्दोपि वाचकः स्वलक्षणस्य । सर्व्वशब्दानां सामान्यविषयत्वात् । अथ स्वलक्षणशब्दः सामान्यवृत्तिरपि स्वलक्षणमेवोपलक्षयति तदध्यवसायतः । एवन्तर्हि श्रावणशब्दोपि श्रवणेन्द्रियग्राह्यतोपलक्षितं रूपं स्वलक्षणमेवाह । तल्लक्षणत्वात् स्वलक्षणस्य । न हीन्द्रियग्राह्यत्वा(द)परमपि सामान्यं प्रसिद्धं प्रयोजनमप्यस्त्येव प्रमाण-

---

[1] B. तेभ्यः [2] B. प्रसारणमेतत् [3] B. मत्रा [4] B. मात्रममद्यपानादिना
[5] B. ०नोक्ति [6] B. चतुष्कोणबंधनीस्थाः पंक्तयो भाषान्तरे त्यक्तप्रायाः, तत्र(T) केवलं अस्ति—"यदि सामान्यमेव अगृहीतविशेषणविशेष्याप्रत्यक्षबाधोदाहृतिरुच्यते ।"

**प्रसिद्धत्वप्रतिपादनं। सिद्ध्या प्रमाणेन तस्य बाधकत्वस्य समाश्रयादाश्रयणात्। तद्बलेनैव बाधनात्। प्रमाणप्रसिद्धो ह्यर्थः परस्याप्रमाणप्रसिद्धस्य बाधकः (।) स हि विरुद्धतया प्रतीयमानः परस्याभावं प्रबोधयति (।) तदभावप्रतिपादनमेव बाधकत्वं न बाध्यबाधकभावः। ततः प्रमाणमिदमनेन प्रमाणेन प्रसिद्धं शब्दस्वलक्षणमिति। सपरिकरप्रतिपादनं हि परिस्फुटप्रतिपत्तिकमिति प्रयोजनं। अनुमानविरोधेपि नित्यो घट इति। पदार्थानां सतामेवाभिव्यक्ति पश्यतोनुपलक्षिततत्त्वस्य सांख्यस्य नित्यताभ्युपगमः। सोनुमानबाधितः।**

कारणानां न सामर्थ्यमेवं सति तदा[1] भवेत्। ततः कारणभावेन विना पर्येषणं बृथा ॥२४५॥

**कारणाभिमतपर्येषणं हि कारणत्वमन्तरेण बृथा भवेत्। कर्त्तव्यस्य तेन कस्यचिदभावात्। व्यक्तिः क्रियत इति चेत्। ननु व्यक्तिरपि पदार्थस्वभावा पदार्थस्य नित्यत्वे व्यक्तेरपि नित्यत्वात् सदा स्थितैवेति न किञ्चित् कर्त्तव्यम्। अथ व्यक्तिः क्रियते न पदार्थभिन्ना तर्हि सा पदार्थतो विरुद्धधर्माध्यासात्। अभेदे पदार्थस्यापि कार्यताप्रसङ्गः।**

न च प्रमाण मृत्पिण्डे घटादेरस्ति साधकम्।
कार्यत्वादस्ति तत्रेति सत्त्वे कार्यस्य का क्रिया ॥२५०॥
व्यक्तिः सत्त्वं विना नास्ति व्यक्तिभावे च सम्भवेत्।
प्रदीपादेरिव व्यक्तिः सर्व्वस्मादिति चेन्मतिः ॥२५१॥
कुलालादेरिवोत्पत्तिः सर्व्वस्मान्न किमिष्यते। परमाणुशोपि मृत्पिण्डनयनेऽन्यन्न दृश्यते ॥२५२॥
तदस्ति तत्रादृष्टञ्चेत् खरशृङ्गेपि तद्भवेत्।
पश्चात्तस्य न दृष्टिश्चेत् पश्चाद् दृष्टस्तदा भवेत् ॥२५३॥

**यदि पश्चादुपलभ्यते घटः पश्चादेव भवतु व्यक्तिवत्। पूर्व्वन्तु कथं सद्भावः। व्यक्तिरन्यथा न युक्तेति चेत्। अयमपरोस्तु दोषो न त्वनुपलभ्यमस्तीति शक्यम्वक्तुं।**

**नन्वनुपलब्धिरुपलब्धेरभावः तत उपलब्धिरेव नास्ति कथमभावो भावस्य। यद्येवं शशविषाणादीनामभावो न सिध्येत्। ततोऽसदकरणादिति[2] हेतुर्न्न स्यात्। ततः शशविषाणार्थिनोप्युपादानोपादानम्भवेत्। यतः।**

तदस्ति तत्र तेनास्य तत्कारणतया ग्रहः। तदुत्पत्त्या विना भूतं नास्ति तच्चेदसन्मतम् ॥२५४॥
तदुत्पादनशक्तत्वमस्तित्वादेव गम्यते। अन्यथा च गतौ तस्य तस्यास्तित्वं न गम्यते ॥२५५॥
अथ यस्माद् यदुत्पन्नन्तत्तत्रास्तीति गम्यते।
उत्पत्तेः प्रागविज्ञातं तस्यास्तद् गम्यता कथम् ॥२५६॥
सत्त्वेन नहि सम्बन्धस्तथोत्पत्तिः प्रसिध्यति।
यथा च कारणात् कार्यन्तत्सत्त्वादपि तद्भवेत् ॥२५७॥
यत्पूर्व्वकं हि यत्कार्यन्तत्तस्येति व्यवस्थिते.। तत्सत्त्वपूर्व्वकं कार्यन्तत्तस्यैव कथम्भवेत् ॥२५८॥
इतरस्येव चेच्छक्तेः सर्व्वकार्यसमुद्भवात्। शक्तेरेव हि शक्तिः स्यादभेदे च कथम्भवेत् ॥२५९॥
व्यक्तेश्चेक्छक्तितो जातिर्व्यक्तिः किं शक्तितः परा।
परा चेन्नास्त्यजन्या स्यात् संती चेज्जन्यते कथम् ॥२६०॥

---

[1] T. सदा [2] सांख्यकारिका

व्यक्तिश्च बुद्धिः साप्यस्ति ततस्तस्या न जन्यता ।

अथ सम्वेदनं व्यक्तिस्तस्याजन्यस्य का जनिः ॥२६१॥

तस्मान्न व्यक्तिकार्यत्वं कारकाणां प्रमान्वितम् । घटे सन्तमसस्थे तु प्रमाणमनुमानवित् ॥२६२॥

मृत्पिण्डादौ तु नैवास्ति घटादीना प्रमाणवित् ।

सर्व्वमेव ततोऽनित्यं व्यक्तिवत् कृतकत्वतः ॥२६३॥

ततोयं नित्यतापक्षः कुतोनुमितिबाधितः । प्रत्यक्षार्थानुमानाप्तप्रसिद्धेन स्वधर्मिणी ॥२६४॥ति

**स्वधर्मिवचनन्तर्हि किमर्थम् । तथा हि ।**

प्रमाणबाधितः पक्षो नेति युक्तमिदं मतम् । परत्र तत्र वा धर्मिण्येतत् क्वात्रोपयोगवत्[1] ॥२६५॥

**नहि परधर्मिणि बाधितमबाधितम्भवति । सर्व्वथा बाधितं साधयितुमशक्यमिति हेतुविषयत्वाभावादपक्ष इति न्यायः ।**

**अत्रोच्यते ।**

**सर्व्वत्र वादिनो धर्मो यः स्वसाध्यतयेप्सितः ।**
**तद्धर्मवति बाधा स्यान्नान्यधर्मेण धर्मिणि ॥१३६॥**

**सर्व्वत्रैव धर्मिणि तस्य धर्मस्य सम्भवेपि स्वपरमतेन । तथापि यः स्वयम्वादिना धर्मः साधयितुमिष्टस्तद्धर्मवति धर्मिणि बाध्यमाने यदि बाधा भवेत्तदा दोषो न त्वन्यधर्मविशिष्टे धर्मिणि बाध्यमान इति स्वधर्मिवचनम् ।**

**अन्यथास्योपरोधः को बाधितेन्यत्र धर्मिणि ।**

**अयमत्र न्यायः । तद्धर्मवत्येव धर्मिणि बाध्यमाने बाधा नान्यधर्मवति क्षतिरिति ।**

**गतार्थे लक्षणे नास्मिन् (स्व)धर्मिवचनं पुनः ॥१३७॥**

**बाधायां धर्मिणोपि स्यात् बाधेत्यस्य प्रसिद्धये ।**
**आश्रयस्य विरोधेन तदाश्रितविरोधनात् ॥१३८॥**

**स्वरूपेणैव निर्देश्यः स्वयमिति लक्षणादेव सिद्धेः । स्वधर्मयुक्त एव च धर्मी वादिना स्वयमिष्टः । तथा सति तस्यैव तदनुरूपबाधने नैव दोषप्रसङ्गो नान्यस्य सम्भवः ।**

**नैतदस्ति । धर्मिणोपि बाधायां यथा स्यादाश्रयविरोधद्वारेण तद्धर्मस्याप्यभावप्रसङ्गतः ।**

**अन्यथैवम्विधो धर्मः साध्य इत्यभिधानतः ।**
**तद्बाधामेव मन्येत स्वधर्मि वचनन्ततः[2] ॥१३९॥**

**एवम्विधो धर्म इति प्रकृतधर्मिविशिष्टः । तस्यैव बाधने दोषः स्यान्न धर्मिणोपि बाधनं दोषवन्मन्यते ।**

**नन्वेतदप्यर्थसिद्धं सत्त्वं केचित्तु धर्मिणः ।**
**केवलस्योपरोधेपि दोषवत्तामुपागताः ॥१४०॥**

**तद्धर्मबाधनञ्चेद् दोषवद्धर्मिद्वारेण वा भवतु साक्षाद्वा(।) सर्व्वथा साध्यधर्मबाधनं दोषवत् ।**

---

[1] B. तत्कुत्रो [2]. M. ग्रहणं ततः

## (२) व्योमादिरसद्

सत्यमेतत्। तथापि विप्रतिपत्तिनिषेधार्थमेतत्। तथा हि। केचित् केवलधर्मिबाधनेपि दोष एवेति कथयन्ति।

यथा परैरनुत्पाद्या पूर्व्वरूपन्न खादिकं।
सकृच्छब्दाद्यहेतुत्वादित्युक्ते प्राह दूषकः ॥१४१॥
तद्वद् वस्तुस्वभावोऽसन् धर्मी व्योमादिरित्यपि।
नैवमिष्टस्य साध्यस्य बाधा काचन विद्यते ॥१४२॥

वादी प्राह। परैः सहकारिभिः खादिकमनुत्पाद्यापूर्व्वरूपन्न भवति शब्दादेः कार्यस्य सकृदजननात्। यद्यनुत्पाद्य रूपं भवेत् सकृदेव स्वकार्यं शब्दादिकं कुर्यात्।

अत्र प्रतिवाद्याह। अथैवायमनुत्पाद्या पूर्व्वरूपताऽभावं साधयति व्योमादीनां तथा व्योमादिधर्मिणोपि वस्तुत्वाभावं साधयति। न धर्मिबाधनं केवलं दोषवत्। न ह्येवं वादिनो दोषः (।) तेन हि वस्तुभूतमाकाशादिकं न भवतीत्येतदेव साधयितुमिष्टं। ततोऽवस्तुभूताकाशधर्मिण्यनुत्पाद्यापूर्व्वरूपमाकाशादिकं न भवति सकृदहेतुत्वादिति न दोषः। विकल्पपरिनिष्ठिते धर्मिणि साध्यसाधनाद् वस्तुभूतस्तु धर्मी न तस्य। तेन तस्य केवलस्य बाधायामपि न दोष इति स्वधर्मिवचनं। नहि परधर्मिणि बाध्यमाने स धर्मो न सिध्यति। ततः साध्यधर्मि[1]सिद्धेरव्याघाताददोषः।

अथवानुत्पाद्यापूर्व्वरूपन्न भवति सकृदहेतुत्वात्। अस्यायमर्थः। अनित्यमाकाशं(।) तत्र परः। नित्यमाकाशं धर्मिबाधितम्भवति। बाध्यतान्तथाप्यनित्यमाकाशन्धर्मि भविष्यति। अवश्यं हि हेतुना साध्यविपर्ययो बाधितव्यः। नित्यो हि धर्मी न प्रकृतसाध्यधर्माकार[2]स्ततस्तद्बाधने क इव दोषः। यद्यसौ धर्मस्तद्बाधनेन सिध्येत् स्यादेव[3] दोषः।

तथा ह्यनित्यमाकाशं स्वरभेदस्य सम्भवात। श्लेष्मादिनोपघातो हि गलबन्धस्य संभवो ॥२६६॥

गलबिले ह्याकाश उपहते स्वरभेदस्य सम्भवः। तथा हि संकटविपुल(त्)ादिकं विवराणां दृष्टमतादवस्थ्यं चानित्यता। अथ यदार्थान्तरभाव एव तत्राकाशन्तु तदेव विपुलतादि कस्मात् पूर्व्ववन्नोपलक्ष्यते। अवष्टब्धत्वादिति चेत्। अवष्टम्भः कथन्नित्यस्येति यत्किञ्चिदेतत्। अपि च। पटाद्यवयवी नोत्पन्न एव केवलं तन्तौ तन्त्वन्तरसञ्चारमात्रं[4]। कस्मादाकर्षणे न पृथग्भाव इति चेत्। गलविलस्याप्याकर्षणे शरीरस्य कस्मान्न पृथग्भाव इति यत्किञ्चिदेतत्। तस्मादनित्यमाकाशमवस्तु वा (परमत)बौद्धमतमित्येकान्त एषः। अथवा सप्रतिघपदार्थासंसृष्टमालोकादिकमेवाकाशमन्यासंसृष्टपदार्थान्तरमनित्यमाकाशमिति स्थित(:)पक्षः। तथाभूतस्य धर्मिणः साध्यधर्मविशिष्टता साध्यते। ततस्तदन्यधर्मिबाधने न दोष एव। यतः।

द्वयस्यापि हि साध्यत्वे साध्यधर्मोपरोधि यत्।
बाधनं धर्मिणस्तत्र बाधेत्येतेन वर्ण्णितम् ॥१४३॥

---

[1] B. धर्मिणि [2] B. धर्माधार [3] स्यादेष [4] मात्रक

यद्यपि नाम साध्यधर्मि धर्मि[1]समुदायसाधनन्तथापि यत्र धर्मिणि बाध्यमाने स प्रकृतो धर्म उपरुध्यत एव तत्र दोष इत्यनेन स्वधर्मिवचनेन कथितं। न तु तदसम्बद्धपरपरिकल्पित-(धर्मि)बाधने। यतः।

**तथैव धर्मिणोऽप्यत्र साध्यत्वात् केवलस्य न।**

धर्मी हि स्वरूपेण सिद्ध एवाप्रसिद्धस्य धर्मिणः साध्यधर्मसाधने उपयोगाभावात्। तेन विशिष्टतया तस्य साधनमभिमतं न स्वरूपतः। ततः केवलबाधने न दोष एव।

ननु येन रूपेण धर्मी तदाधारतया समीहितस्तद्रूपबाधने नियमे न दोषः। न वस्तुरूपस्य नित्यरूपस्य वाऽकाशस्यासमीहितत्वात्। अपि च।

धर्मिणः साध्यसाधर्म्यादन्यद्रूपं भवेद् यदि। हेतोर्वा तन्निषेद्धारः के वयं वस्तुचिन्तकाः॥२६७॥

न खलु वस्तुबलायातं किञ्चित् क्वचित् प्रवर्त्तमानं केनचिद्वस्तुचिन्ताभियोगिना निषेद्धुं शक्यम्। प्रमा(ण)प्रतिपन्नवस्त्वनुयायित्वात् प्रमाणिकस्य।

**यद्येवमत्र बाधा स्यात् नान्यानुत्पाद्यशक्तिकः॥१४४॥**
**सकृच्छब्दाद्यहेतुत्वात् सुखादिरिति पूर्ववत्।**

सुखदुःखमोहात्मकं हि प्रधानं शब्दादिव्यक्तपदार्थहेतुरिष्यते। ततः सकृद्हेतुत्वाद-वस्तु सत् सुखादिकं भवेत्। प्रधानरूपस्य नित्यत्वस्य बाधने स्यादेवावस्तुता।

तदसत्। यतः।

**विरोधिता भवेदत्र हेतुरैकान्तिको यदि॥१४५॥**
**क्रमक्रियाऽनित्यतयोरविरोधाद् विपक्षतः।**
**व्यावृत्तेः संशयादेष शेषवद्भेद इष्यते॥१४६॥**

अत्र क्रमक्रियाहेतुरक्रमप्रतिषेधेन। क्रमक्रियायाश्चानित्यतया विरोधाभावात्। ततो ऽनित्यताऽभावन्न गमयतीति कथं धर्मिबाधा। तद्बाधया च धर्मस्य बाधा भवेत्। तस्मात् स्वधर्मिवचनं।

## २. धर्मिस्वरूपनिरासः

**स्वयमिष्टो यतो धर्मः साध्यस्तस्मात्तदाश्रयः।**
**बाध्यो न केवलो नान्यसंश्रयो वेति सूचितम्॥१४७॥**

नहि केवलधर्मिबाधने वादीष्टसाध्यबाधनम्। तदन्याधारधर्मिबाधने वा। तस्मात् साध्यधर्मोपयोगिध(र्मि)मबाधने दोषः। तस्मात्।

**स्वयंश्रुत्यान्यधर्माणां बाधाऽबाधेति कथ्यते।**
**तथा स्वधर्मिणान्यस्य धर्मिणोपीति कथ्यते॥१४८॥**

अत एवाह। यो हि धर्मी धर्मविशिष्टस्तत्र यदि साध्यधर्मविरुद्धेन प्रत्यक्षानुमानागम-प्रसिद्धेन न बाध्यते स पक्षोऽन्यथा तदाभास इति पूर्व्वोक्त एवार्थ इति।

---

[1] B. धर्म

## § ५. पक्षदोषाः

### १. हेतुनिरपेक्षः पक्षदोषः

नन्वपरोपि (स) पक्षाभासः अप्रसिद्धविशेष्यः अप्रसिद्धोभयः अप्रसिद्धविशेषण इति। अप्रसिद्धविशेष्यः तद्यथा विभुरात्मा। अप्रसिद्धविशेषणः सांख्यं प्रति विनाशी शब्द इति। अप्रसिद्धोभयः। समवायिकारणमात्मा। तत्कथमेषामनुपन्यासः (।)

न सदेतत् (।) यतः।

पक्षदोषो न युक्तोयमुत्तरावयवस्थितेः। पक्षोपन्यासमात्रेण तद्दोषत्वव्यवस्थितेः ॥२६८॥

यत्र विभुरात्मेति। यदि कश्चिद् विभुत्वयुक्तमात्मानं साध्यं कुर्यात् कः पक्षदोषः। धर्म्यभावेन हेतोराश्रयासिद्धत्वादिति चेत्। हेतोस्तर्हि दोषो न साध्यस्य तदन्वयव्यतिरेकानुविधानात्। तथा विनाशी शब्द इति क्व विशेषणमसिद्धं। यदि शब्दे तदयमदोषः। यद्योऽस्त एव साध्यतेऽन्यथा कः साध्यतार्थः। अथ विपर्ययसिध्याऽसिद्ध उच्यते। यदि नाम मूढस्य (विपर्यय) सिद्धिस्तथापि न तावता पक्षदोषः। यदि च प्रमाणेन विपर्ययसिद्धिस्तदा तत्प्रमाणबाधित एव पक्ष इति स एव दोषो मानविरुद्धतालक्षणो न तु दोषान्तरं। अथ दृष्टान्तेन सिद्धस्तदा साध्यविकलो दृष्टान्त इति तस्यैव दोषो न पक्षस्य। अप्रसिद्धोभयस्य तू भयथा दोष इति सर्व्वेमी हेतुदोषा एव। अथ हेतुदोषादेव पक्षदोषो (यं) यतः सर्व्वथा पक्ष एव न सिध्यति। तथा च सर्व्वे हेत्वादिदोषाः पक्षदोषा भवेयुः। न स कश्चिद्धेतुदोषो यो न पक्षोपरोधी। यतः।

> सर्व्वसाधनदोषेण पक्ष एवोपरुध्यते।
> तथापि पक्षदोषत्वं प्रतिज्ञामात्रसंज्ञिनः[1] ॥१४९॥

नहि तदुपरोधमात्रकादेव तस्य पक्षस्य दोषः। साधनदोषस्यापि पक्षदोषताप्रसङ्गात्। अथ साधनदोषस्तदुपरोध्यपि न पक्षदोषस्तदसदत्र न्यायाभावात्। अथ पक्षस्वरूपं तत्कालञ्चातिक्रम्य पक्षव्यतिरिक्तसाधनकालस्वरूपोपनिपातित्वात् पक्षस्य न दोषोऽपि तु हेतोरेवानन्वयादिको दोषः।

तदप्यसत्। समानत्वादनन्वस्य। अनन्वयो ह्यसम्बन्धः स (च) द्विष्टत्वादुभयस्यापि। अथापि स्यादाश्रयासिद्धता हि साध्यापेक्षा पक्षदोषो न साधनापेक्षा। साधनापेक्षा तु साधनदोष एव। उक्तमत्र। यदि द्वयमपि परस्परापेक्षं साधयेत् कथं स पक्षदोषः। न चायं नियमः। सिद्धे धर्मिणि साध्यसम्बन्धमात्रसङ्गम एव साधनीय इति। स्वरूपेणैव निर्द्देश्य इति वचनात। कथन्तर्हि उक्तमसिद्धे धर्मिणि साधनासम्भवात्। आश्रयासिद्धत्वेन हेतोरेव तत्रासम्भव इत्यभिप्रायः। तस्मादसिद्धधर्मिधर्मसमवायोपि पक्ष एव। तस्माद्धेतुनिरपेक्ष एव दोषः पक्ष इति। ततः।

> उत्तरावयवापेक्षो यो दोषः सोनुबध्यते।
> तेनेत्युक्तमतोऽपक्षदोषोऽसिद्धाश्रयादिकः ॥१५०॥

---

[1] M. ०मात्रभाविनः

**उक्तमेतत् ।**

उत्तरावयवापेक्षो न दोषः पक्ष इष्यते । तथा हेत्वादिदोषोपि पक्षदोषः प्रसज्यते ॥२६९॥
सर्व्वैः पक्षस्य बाधातः तस्मात्तन्मात्रसङ्गिनः (।)
पक्षदोषा मता नान्ये प्रत्यक्षादिविरोधवत् ॥२७०॥

**तस्मादसिद्धाश्रयादिकः पक्षदोषो नेति न्यायः ।**

**नन्वश्रावणः शब्दो नित्यो घट इति नानुमानं प्रमाणं । अचन्द्रः शशीति धर्मस्वरूपविपरीतवत् विधानेनोपदर्शिता । न धर्मिधर्म[1] विशेषधर्मिरूपबाधा । न चोदाहरणमप्रदर्शितं सुज्ञानं । तत्किमत्र कारणमिति न विद्मः । अत्रोच्यते ।**

**धर्मिधर्मविशेषाणां स्वरूपस्य च धर्मिणः ।**
**बाधासाध्याङ्गभूतानामनेनैवोपदर्शिता ॥१५१॥**

**अनेनैव चोदाहरणेन धर्मस्वरूपनिराकरणप्रदर्शनपरेण सर्व्वेषामेव स्वरूपविशेषाणामुपदर्शिता बाधा । कथमन्येनान्यस्य दर्शनमिति चेत् । साध्यत्वाविशेषात् । तत्र प्रतिव्यक्ति नोदाहरणं शक्यमुपदर्शयितुं न च तदुपदर्शने प्रयोजनं । एकोदाहरणप्रदर्शनेनैव तद्धर्मणः सुज्ञानत्वात् । उपलक्षणमात्रकं ह्युदाहरणं ।**

## २. अवयविनिरासः

**ननु विशेषः कथन्धर्मधर्मिणोस्तद्धर्मा[2] । न । उक्तापेक्षया तस्य विशेषत्वं । साध्यन्तदेवान्यथा साधनवैफल्यं ।**

**तत्रोदाहृति दिङ्मात्रमुच्यतेर्थस्य दृष्टये ।**
**द्रव्यलक्षणयुक्तोन्यः संयोगेर्थोस्ति दृष्टिभाक् ॥१५२॥**
**अदृश्यस्याविशिष्टस्य[3] प्रतिज्ञा निष्प्रयोजना ।**

**एतान्युदाहरणानि नान्योऽवयव्यवयवेभ्यस्तुलानतिविशेषाग्रहणात् । नान्येवयवा अवयविनः वा अप्रत्यक्षत्वप्रसङ्गात् । नास्ति द्रव्यं गुणद्रव्याणां द्रव्याद्रव्यत्वप्रसङ्गात् । धर्मिस्वरूपनिराकरणेन पाश्चात्यमेकं । धर्मिधर्मविशेषनिराकरणेन न चोदाहरणद्वयं यथाक्रममाद्यं ।**

यद्रूपव्यतिरिक्तं यत्तत्तथैवो(प)लभ्यते । तद्रूपानुपलम्भे च व्यतिरेको न सिध्यति ॥२७१॥

**नहि व्यतिरेकेणानुपलभ्यमानं व्यतिरेकेण प्रत्यक्षं भवति । अव्यतिरेकेणोपलभ्यते व्यतिरिक्तञ्चोपगम्यते ऽत एष विरोधः ।[4]**

## ३. द्रव्यगुणसामान्यनिरासः

यदि त्ववयवा नान्ये प्रत्यक्षत्वमवारितं । प्रत्यक्षोवयवी यत्र तद्रूपास्तेपि तादृशाः ॥२७२॥

---

[1] B. धर्मधर्मि
[2] B. स्तद्धर्मः
[3] M. अदृश्यस्य विशिष्टस्य
[4] B. गम्यत इति तत एव विरोधः

अन्यथावयवानामवयवि (प्रत्यक्षत्त्वेप्य) प्रत्यक्षतायामन्यतैव न स्यात्। अथवा नान्येऽवयवा अवयविनस्तस्या प्रत्यक्षत्वप्रसङ्गात्। अन्यत्वे हि तेषामप्रत्यक्षतायामवयविनोप्यप्रत्यक्षताप्रसङ्गात्। न ह्यप्रत्यक्षा (वयवो) वयवी प्रत्यक्षो भवितुं युक्तः प्रथमावयविवदेव।

अथ स्थूलोवयवी प्रत्यक्षो नान्य इति मतिः। एकस्य स्थूलता विरुद्धेति प्रतिपादितम् (।) अतो ऽवयवसमाहारमात्रमवयवी नापरस्तस्मान्नान्येऽवयवा इति स्थितं।

तथा नास्ति द्रव्यमिति गुणव्यतिरिक्तमिति सम्बन्धः। गुणद्रव्याणां द्रव्याद्रव्यत्वप्रसङ्गादिति। गुणस्य वा द्रव्यत्वं द्रव्यस्य वा गुणत्वमित्यर्थः। तथा हि व्यतिरेके सति परस्परव्यावृत्तत्वाद्रूपं सत्तयाधिष्ठितं द्रव्यस्य ग्राह्यं गुणानामपि तथैवेति न्यायः। ततो द्वयोः परस्परपरिहारेण स्थिततयोरेको गुणोऽन्यद् द्रव्यमिति कुतो विवेकः। अपरस्परपरिहारेपि कुतो विवेकः। अथ गुणस्य द्रव्यत्वं (? गुणत्वं) द्रव्यस्य द्रव्यत्वमिति विवेक इति मतिः।

तदप्ययुक्तं।

स्वरूपव्यतिरेकेण गुणत्वादिर्न्न विद्यते। गुणत्वस्यान्यतायाञ्च सत्ता तत्रापि विद्यते ॥२७३॥
ततो द्रव्याविशेषः स प्राक् प्रसङ्गोऽनिवारितः। सत्त्वे समस्तं स्याद् द्रव्यं व्यतिरेकेतरत्वयोः ॥२७४॥

परस्परपरिहारेण (अव) स्थितत्वे न द्रव्येतरत्वयो[1]र्व्विवेक इति सिद्धमेवैतत्। व्यतिरेके तु द्रव्यत्वयोगाद् द्रव्यं गुणत्वयोगाद् गुण इति स्याद् विवेकाशङ्का। तदपि न सम्यक्। परस्परपरिहारेण स्थितयो रूपरसयोरिव कुतो द्रव्येतरता। गुणत्वादियोगादिति चेत्। न। गुणव्यक्त्या व्यज्यमाने गुणत्वं नान्यथा। समानाकारतामात्रं गुणत्वं द्रव्यत्वञ्च। तस्य विशेषस्तद्विजातीयव्यक्तिव्यक्तत्वं नाम। विजातीयव्यक्तित्वञ्च विजात्या[2]ध्यासितत्वमितरेतराश्रयदोषः।

अथ जातीनां स्वत एव विलक्षणत्वं परस्परत इत्युच्यते। तत्रापि विजात्यध्यासितत्वमेव व्यावृत्तिकारणं। स्वरूपेण व्यावृत्तत्वे व्यक्तीनामपि तथेति व्यर्थिका परा जातिः। गुण इति समानाकारप्रत्यया[3]निबन्धनत्वात्। गुणत्वादेर्गुणत्वमिति चेत्। किमिदानीमन्तर्गडुना सामान्येन। सामान्याकारप्रत्ययनिबन्धनत्वस्य प्रतिनियमेनैव प्रसिद्धत्वात् स्वकप्रयोजनस्य। तथा च न द्रव्याद्रव्ययोः स्वरूपतो विशेषः कश्चित्। तस्माद् द्रव्यास्तित्वे द्रव्याद्रव्ययोरविशेष एव। नास्तित्वे तु भवति विशेष इति युक्तं। सम्वृतिसद् द्रव्यं ततोन्ये गुणा इति। उभयस्वरूपविशेषनिराकरणमुखेनोदाहरणं। तद्यथा। सर्व्वम्वाक्यमनृतार्थम् (।)

अनृतार्थम्वचः सर्व्वमिति वाक्यानृतत्वयोः। तत्स्वरूपविशेषस्य क्षेपे दोषो विवक्षिते ॥२७५॥

वाक्यत्वमनृतत्वञ्च सामान्येन यदा निराकर्त्तुमभिप्रेतं तदोभयस्वरूपनिराकरणं यदा तु वाक्यस्य धर्मिणो धर्मोनित्यत्वञ्चानृताभिधेयत्वं तदोभयविशेषनिराकरणं। सर्व्वस्य वाक्य(स्य) विशेषस्यानृताभिधेयत्वस्य च निराकरणात्। प्रामाण्यं हि वचनसामर्थ्यादतस्तेन वाक्यत्वानृताभिधेयत्वाभावनिराकरणं (।) धर्मिविशेषश्चात्र कश्चिदनित्यत्वादिको द्रष्टव्यः (।) यदि ह्यनित्यत्वं

---

[1] B द्रव्येतरयो [2] B विजात्य [3] B प्रत्यय

न साध्यते व्यर्थकमेव वक्तृप्रामाण्याङ्गीकरणं। यदि नित्यता स्यान्न वक्ता किञ्चित् क्रियेतेति व्यर्थ एव वक्ता स्यादतः स्ववचनविरुद्धमेतत्।

यदि नित्यम्भवेद् वाक्यं वक्तुर्व्यर्थत्वमापतेत्।
अवाक्यरूपोपकृतौ सिद्धोपस्थायिता पतेत ॥२७६॥

वक्तुर्हि वाक्यस्वरूपमनुपकुर्व्वाणस्य न वाक्योपकारिता। अतत्कृतोपकारे न तस्य किञ्चिदित्यनुपकारी न वाक्येन वक्ता पेक्ष्यते। अपेक्ष्यते च। तस्मादनित्यता तस्य साधनीया। ततस्तद्विशेषनिराकरणमुखेनायं पक्षाभास इति कथितं। तत्र **वार्तिककार** उदाहरणदिग्मात्रमेव निदर्शयति। अनया दिशा शेषोदाहरणव्याख्याप्रतिपत्त्यर्थं नावयव्यन्यत्व-मात्रं साध्यते। अपि तु द्रव्यलक्षणयोगेन "क्रियावद् गुणवत् समवायिकारणं द्रव्यमि"ति तथा दृष्टिभाक्त्वेन।

अन्यत्वमात्रन्तु यद्यवयविनः साध्यते। तदा सम्वृतिसन्मात्रं तत्सिद्धमेव। परमार्थ-सन्तोवयवा सम्वृतिसन्नवयवीति सिद्धसाधनमन्यत्वमात्रे साध्ये।

## ४. गुरुत्वाधोगत्योरभावः

**दृष्टो ह्यवयवी कार्यं दृष्ट्या[१]ऽदृश्येष्वसम्भवि।**
**अविशिष्टस्य चान्यस्य साधने सिद्धसाधनं ॥१५३॥**

अवयवपरमाण्वादिव्यतिरेकमात्रतया प्रसिद्ध एव भ्रान्तबुद्ध्याकारः। तस्यैव साधने नियमेनैव सिद्धसाध्यता। दृष्ट एव च नाति[२]दूरवर्तिपरस्परसामीप्यव्यवस्थितानां संसक्त-केशविषयैकघनाकारः प्रत्ययः। ततो न तावन्मात्रेण विज्ञानाकारव्यतिरिक्तावयवि प्रसिद्धिः(।) अतो द्रव्यलक्षणयोग एव तत्र साधनीयः। तत्र च गुरुत्वं गुणोऽधोगतिश्च क्रिया। तयोश्च समवायिकारणत्वमिति लक्षणयोगे विज्ञानाकारव्यतिरेकसिद्धिः। तथा च।

**गुरुत्वाधोगती स्यातां यद्यसौ[३] स्यात्तुलानतिः ॥१५४॥**

अवश्यं हि गुरुत्वप्रयुक्ताधोगमने[४] तदाकृष्यमाणस्य तुलाशिरसोपि नतिः। न चासा-वस्ति। अवयवाधिका ततोसौ न द्रव्यलक्षणयुक्त इत्याह।

**तन्निर्गुणक्रियस्तस्मात् समवायि न कारणम्।**

ययोर्गुणक्रिययोरसौ समवायिकारणं तदभावेन न तथा भवतीत्युपसंहारः।

**तत एव न दृश्योसावदृष्टेः कार्यरूपयोः ॥१५५॥**

दृश्यत्वमपि तस्य नास्त्येव। तस्य हि दृयीगतिरुपचारतो मुख्यतश्च। न तावदु-पचारतः। तत्कार्यस्य गौरवादेरदृष्टेः। नाप्युपचा(रेत)रतो रूपस्यावयवव्यतिरेकेणादृष्टे-र्व्विज्ञानाकारस्य स्थूलतयो(प)लम्भात्। त धिकस्य चादर्शनात्।

**तद्बाधाभ्यविशेषस्य नान्तरीयकभाविनः।**

---

[१] B. दृष्टा [२] B. चानति [३] यद्यस्य—इति है. [४] B ०गमनेन

अन्य विशेषस्योक्तान्यतामात्रापेक्षया द्रव्यलक्षणयोगेन तस्य साध्यत्वं नान्तरीयकत्वेन (।) अन्यथाऽन्यत्वमात्रस्यासाध्यत्वात् । तथा हि ।

गुरुत्वाधोगतित्यागे प्रतिभासोस्य केवलः । प्रतिभासश्च विज्ञानाव्यतिरेकेप्यदुर्घटः ॥२७७॥

तिमिरविपरीतीकृतदर्शनशक्तिनयनानामपि केशदंशमशकमक्षिकादयो सदधिमोक्षपक्षनिक्षिप्ताः प्रत्यक्षेक्षिता इवावभासन्ते (।) न च ते तदवभासादेवासन्तो न भवन्ति । अत्र ।

**आसूक्ष्माद् द्रव्यमालायास्तोल्यत्वादंशुपातवत् ॥१५६॥**
**द्रव्यान्तरगुरुत्वस्य गतिर्नेत्यपरोब्रवीत् ।**

सूक्ष्मद्व्यणुकादिप्रतिद्रव्यमालायास्तुलामानसङ्गमादनेकद्रव्यमध्यमध्यासीनं द्रव्यान्तरगुरुत्वं न शक्यमु(प)लक्षयितुमिति तुलानतिविशेषाग्रहणं । द्वयोर्हि हेमपिण्डयोः संयोगे यद्यप्यवयव्यन्तरमुत्पन्नं गुणक्रियावत् । तथापि द्व्यणुकावान्तरद्रव्यमालापि तत्रास्त एव । ततस्तदनन्तरगुरुत्वमध्यपाति न लक्ष्यते । कर्पासभारमध्य शतितदङ्शुपातगुरुत्वमिव । न चालक्ष्यमाणमपि तस्य गुरुत्वमधोगमनञ्च नास्ति ततस्तन्निर्गुणक्रियस्तस्मादित्यसिद्धमेतत् ।

तदसत् । यतः

नोपलक्ष्यं गुरुत्वं चेत् कुतस्तस्याधिकं गतिः । इयमेव हि तद्वित्तिप्रत्याशा तत्कृतिः कथं ॥२७८॥

गुरुत्वाधोगतिविशेषमन्तरेण प्रतिभासमात्रमेव सिध्यति । न च तेन सिद्धेन सिद्धसाध्यताव्यतिक्रमः । अपि च ।

**तस्य क्रमेण संयुक्ते पांशुराशौ सकृद् युते ॥१५७॥**
**भेदः स्याद् गौरवे तस्मात् पृथक् सह च तोलिते ।**

क्रमेण संयुक्ते हि पांशुराशौ गुरुत्वयुक्तानेकाव(यव)विभारसद्भावान्महद्गौरवं । सकृद् युते त्वेक एवावयवीति न महद्गौरवमतो भेदप्रसक्तिः । न चोपलम्भो भेदस्य । अनेकांशुनिचयनिपाते तूपलक्ष्यते । ततोऽसौ न दृष्टान्तः ।

अथ पूर्व्वसकलावयवि(वि)नाशे पर्यन्तवर्त्येक एवावयवी । ततोनेकावयविनामभावे समानमेव गौरवमक्रमेणान्यथा च संयुक्ते पांशुराशाविति न दोषः । तथा सति द्रव्यमालातोल्य(त) इति न युक्तं स्यात् । अन्त्यस्य तु गौरवानुमापलक्षणं[1] न युक्तम्(।)

अथवा यावदारम्भकयोर्गुरुत्वं पृथग्भूतयो(रवयवयो)रवयविनोपि तदारब्धस्य तावदेव । ततो न भवति तुलानतिविशेषः । एवन्तर्हि सर्व्वावयविनाशे सत्यवयविन उत्पत्तिरिति । परमाणूनामपि विनाश इति नित्याः परमाणव इति विरोधः सिद्धान्तस्य ।

अथ विभागेन विनाशः परमाणूनां तु न विभागोऽनवयवत्वादिति चेत् । न(।) अनवय(व)त्वस्यायोगात् । अवश्यं हि पूर्व्वापरदिग्भागेन भाव्यं मूर्तिमतां । तस्मान्नावयविनाश इति युक्तं ।

अथापि स्याद् भवतु परमाणूनां विनाश इति(न) का(चित्) नः क्षतिः । एवन्तर्हि ।

**क्रमेण माषकादीनां[2] संख्यासाम्यञ्च युज्यते ॥१५८॥**

---

[1] B· गौरवानुपलक्षण [2] M. सुवर्णमाषकादीनां

पञ्चमाषकः पिण्डो न स्यादेकत्वा(द)वयविनो माषकावयविनां विनष्टत्वात् । एकमेव सुवर्णमित्यादि भवेत् । अनेकगौरवसम्भवे हि पञ्चेत्यादिसंख्यासम्भवः । एकत्वेत्वेकसंख्यैवेकत्वादवयविनः ।

अथैकत्वेपि गौरवस्य तथा व्यपदेशस्तथा सति न परमार्थः संख्या । तस्मादवयवानामविनाशे तद्गता संख्योपपद्यते माषकादिसाम्यनिबन्धनं । ततोनेकद्रव्यसम्भवे क्रमेणावयविनामुत्पत्तेर्गौरवस्य नियमेन विशेषतः ।

अथ शरिश(?सर्ष)पादुत्तरोत्तरं सकलमेव नोपलक्ष्यत एकानुपलक्षणवत् सर्व्वेषामविशेषात् ।

नैतदस्ति ।

एकस्यानुपलक्षत्वेप्यंशोर्न्नानुपलक्ष्यता । तदंशुनिचयस्यापि ततो नेदं समञ्जसं ।।२७९।।

न ह्येनामुपलक्षणे[1]तत्संहातस्यापि । एकां(शु)गौरवानुपलक्षणेपि भारगौरवोपलक्षणात् । अंशनिचयश्च कर्पासभारव्यपदेशभागी । किञ्च ।

सर्षपादामहाराशेरुत्तरोत्तरवृत्ति[2]मत् ।
गुरुत्वं[3] कार्यमालाया यदि नैवोपलक्ष्यते ॥१५९॥
आसर्षपाद् गुरुत्वन्तद्दुरणक्षतमनल्पकं[4] ।
तोल्यन्तत्कारणङ्कार्यगौरवानुपलक्षणात् ॥१६०॥

रक्तिका चतुर्भागः[5] सर्षपः । तस्मात् सर्षपात् प्रभृत्या महाराशे उत्तरोत्तरकार्यमाला निबन्धनं बृद्धिमद् गौरवं नोपलभ्यते । आसर्षपात् गुरुत्वमपचयवत् पूर्व्वपूर्व्वं सुतरामेव नोपलभ्यत इति प्राप्तं । अतः कार्यगौरवानुपलक्षणात् कारणमेव तोल्यं पारिशेष्यात्तस्येति न्यायः परिस्फुट एव । गौरवविशेषोपयोगितयोपलभ्यमेव तोल्यन्नान्यत् । उत्तरोत्तरस्य(हि) कार्यस्य गौरवानुपलक्षणे तद्गौरवं कारणस्यापि । तौलत्वे[6] तत्कारणस्य । तस्यापि तत्कारणस्येति । एवं यावत्कारणं परमाणवस्तोल्यास्तेषाम् परस्य (कारणभूतस्य)ा व्यवस्याभावात् । तथा हि ।

पर्यन्तावयविध्वंसे गुरुत्वन्तु तयोरपि । पुनस्तदेव पश्यामो भूयो ध्वंसे तयोरपि ॥२८०॥
ततोनुमानतो विद्मो गुरुत्वं परमाणुषु । ततो नावयवि द्रव्यं द्रव्यलक्षणयुक्तिमत् ॥२८१॥

अपि च । अंशोर्गौरवानुपलक्षणेपि भार[7] एव तस्य दृष्टत्वात् । नत्वयवी दृश्यः । केवलं कार्यदर्शनादेव तस्य सत्ता व्यवस्थाप्यते ।

तच्च सकलमसत् । यतः ।

न च दृष्टोड्शुवत्[8] सोर्थो न च तत्कार्यमीक्ष्यते ।
गुरुत्वागतिवत् सर्व्वतत्तुलानु[9]पलक्षणात् ॥१६१॥

---

[1] B. नह्यकानुपलक्षणे [2] B. बुद्धिमत्—इति हे., T. च, [3] M. गौरवं
[4] M. दुर्लक्षत० [5] B. चतुर्थ भागः [6] B. तौल्यत्व
[7] B. भाव [8] M. नन्वोंदृष्टों० [9] M. तद्गुणा०

**माषकादेरनाधिक्यमनतिः सोपलक्षणं ।**
**यथा स्वमक्षेणादृष्टे रूपादावधिकाधिके ॥१६२॥**

प्रत्यक्षानुमानाभ्यामप्रतीतं कथमस्तीति गम्य(ता)म् ।

ननु गुरुत्वागतावपि प्रकारान्तरेणापि गतेः सम्भवात् कथमसत् । न (।)अन्यस्यापि रूपादेरनुपलक्षणत्वात् । माषकादेरवयविनो नाधिक(मपर)मवयवेभ्यः[1] । कथन्न तर्हि तुलानतिविशेषाग्रहणादित्याचार्येण प्रतिनियम उक्तः । न(।)उपलक्षणत्वात् सा नतिः । केवलोच्यमानाप्यपरस्यापि निर्दशिका । कथं सर्व्वमेव नोपलक्ष्यत इति ज्ञातव्यं किमत्र ज्ञातव्यं । यथायथं चक्षुरादिना रूपादेरधिकाधिकस्यानवगमात् । नहि रूपरसादीनामवयवेभ्यो विशेषगतिरवयविसम्भवेपि । तस्माद् गुणक्रियावद् दृश्यावयव्यभाव एवेति धर्मविशेषबाधद्वारेण पक्षदोषः । अयञ्च पक्षः । अभ्युपगमस्ववचनअनु[2]मानप्रतीतिबाधितः ।

**अभ्युपायः स्ववागादिबाधायाः सम्भवेन तु ।**
**उदाहरणमप्यन्यादृशा गम्यं यथोक्तया ॥१६३॥**

रूपबाधादिवत् । अवयविबाधकन्यायोपदर्शनमतोन्यदप्याचार्यनिर्दशितमुदाहरणमवगन्तव्यं । तच्च प्रागुपर्दाशतमेव ।

## ५. नैयायिकपक्षलक्षणे दोषः

### ( १ ) "साध्य" ग्रहणं निरर्थकम्

ननु **साध्यनिर्देशः** पक्ष प्रतिज्ञेत्येतत्पक्षलक्षणं **नैयायिकानां**[3] अस्य को दोषः । असिद्धहेतुदृष्टान्तस्यापि तत्त्वप्रसङ्गः ।

ननु साध्यत इति साध्यं । असिद्धहेतुदृष्टान्तौ तु साधयिष्येते । तत्कथन्तयोः प्रतिज्ञात्वप्रसङ्गः ।

सत्यमेतत् । यदि वर्त्तमानसाध्यनिर्देश इति लभ्येत ।

**त्रिकालविषयत्वात्तु कृत्यानामतथात्मकं ।**
**तथा परं प्रतिन्यस्तं साध्यन्नेष्टं तदापि तत् ॥१६४॥**

त्रिकालविषयो हि सर्व्व एव कृत्यप्रत्ययाः । ततो भाविसाध्यत्वमपि प्रतिज्ञा स्यात् । कथं साध्यस्य भावित्वं तदाऽतथात्मकत्वेन निर्देशात् । साध्यमपि तत् तदा साधनत्वेन निर्दिष्टं । तेन तदाऽसाध्यं (।) न चासिद्धं साधनं साध्यं प्रति[4] । ततस्तस्य पश्चात् साधनत्वं[5] ततः पश्चात्तनसाध्यतयैव तस्य निर्देशः प्रतिज्ञा ।

ननु यथा साध्यशब्दः कारकापेक्षया साध्यन्न प्रतिपादयति क्रियते घट इति तथा साधनत्वेन निर्दिष्टमपि न प्रत्याययिष्यतीति । कुतोसिद्धसाधनस्य प्रतिज्ञात्वप्रसङ्गः ।

सत्यमेतद् यदि निबन्धनमत्र प्रत्यायनाधिकारो न स्यात् ।

---

[1] B. अष्टममाह्निकं (समाप्तम्) [2] B स्ववचनानु [3] B नैयायिकादीनामपि
[4] B साधनं परं प्रति [5] B साध्यत्वं

प्रत्यायनाधिकारे तु सर्व्वासिद्धावरोधिनी ।
तस्मात् साध्यश्रुतिर्नेष्टम्विशेषमवलम्बते ॥१६५॥

प्रत्यायनाधिकारेण निवर्त्यकारकापेक्षया साध्यमपरसर्व्वसाध्यसंग्रहकारिकैव साध्यश्रुतिः । अतो न साध्यान्तरव्यवच्छेदसमर्था । कारकसाध्यव्यवच्छेदस्तु ज्ञापकहेत्वधिकारात् । न च सहेतुकं किञ्चिद् भवतीत्यहेतुकेनापि भवितव्यं । सर्व्वस्य सर्व्वत्र भावप्रसङ्गात् । न चासाध(न)त्वेन निर्दिष्टं साध्यम्पक्ष इति निबन्धनमस्ति । ततः साध्यश्रुतिर्नेष्टम्विशेषमवलम्बितुमलं । कारकसाध्यव्यावृत्तिस्तु प्रत्यायनाधिकारादिति न तया साम्यं ।

तेनाप्रसिद्धसन्दिग्ध[1]हेतूदाहरण कृतं ।
अन्यथा शशशृङ्गादौ सर्व्वासिद्धेपि साध्यता ॥१६६॥

तथा चासिद्धदृष्टान्तहेतुवादः प्रसज्यत इति ।

अनित्यः शब्दः कृतकत्वात घटवदिति सांख्यं प्रति । चाक्षुषत्वादाकाशवदिति वा । यदि तु प्रकरणानपेक्षा भवेत् प्रतिलक्षणकृतस्तथा शशशृङ्गादावपि साध्यताप्रसङ्गः ।

अथापि स्याद्(।)अत्रापि "साध्यनिर्द्देशः प्रतिज्ञे"ति न सर्व्वस्य प्रत्यायनाधिकारेपि साध्यस्य प्रतिज्ञात्वमपि तु साध्यमिति कर्मणि कृत्यप्रत्ययविधानात् । कर्म च "कर्त्तुरीप्सिततमं" कर्मे ? (पाणिनिः·····)ति विशिष्टमेव यत्र प्रकर्षः । न च साधनत्वेन निर्द्दिष्टं करणत्वादीप्सिततमं । अन्यथा पयसौदनं भुंक्ते इति न पयसः करणत्वेन विवक्षितस्य कर्मत्वं भोजनक्रिययाऽप्यमानस्यापि । तथेप्सितं । नेप्सिष्यमाणङ्कर्म । अपि च । पञ्चस्ववयवेषु लक्ष्यतया प्रकृतेष्ववयवान्तरलक्षणविषयपरिहारेण प्रतिज्ञालक्षणं व्यवतिष्ठत इत्यसाधनभूतसाध्यनिर्द्देशः प्रतिज्ञेति प्रतीयते । तथा चतुर्व्विधं "सर्व्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसिद्धान्त" (न्यायसूत्रे) प्रक्रमे लक्षणविधानादभ्युपगमसिद्धान्तलक्षणः साध्यनिर्द्देशः प्रतिज्ञेति प्रतीतेर्न्नातिप्रसङ्ग इति न दोषः ।

तदेतत्सकलमसत् । यतः ।

सर्व्वस्य चाप्रसिद्धत्वं[2] कथञ्चित् तेन न क्षमाः ।
कर्मादिभेदोपक्षेपपरिहाराविवेचने ॥१६७॥

प्रागसिद्धस्वरूपत्वात् [3]साध्योवयव इत्यसत् ।
तुल्यसिद्धान्तता ते हि[4] येनोपगमलक्षणाः ॥१६८॥

न खलु सिद्धान्तो सिद्धहेतुदृष्टान्तव्यवच्छेदकृत् । सर्व्वस्यासिद्धस्य अभ्युपगमात् । शास्त्रदृष्टस्य ह्यभ्युपगतस्याभ्युपगमसिद्धान्तत्वात् । तस्य च हेतुत्वेनाभ्युपगमेपि साध्यताभ्युपगमोऽवश्यंभावी नासिद्धस्य हेतुतेति(।)त्रिकालविषयत्वन्तु कृत्यप्रत्ययानां प्रतिपादितमभ्युपगमशब्दोपि त्रिकालविषयप्रत्यय एव कृत्यग्रहणस्योपलक्षणार्थत्वात् । ततः सकलस्य सिद्धान्तता तुल्या (।) ततो(न) सिद्धान्तोपक्रमः परिहारः ।

---

[1] T. M प्रसिद्ध दृष्टान्त—इति हे., च ।
[2] ०प्रसिद्धत्वात्—हे, T. B.
[3] M. ०स्वभावत्वात्
[4] B. ०तो हि

अथ साधनस्य साध्यस्य च लक्षणे प्रकृते साधनलक्षणपरिहारेण **साध्यनिर्देशः प्रतिज्ञे**[1]ति साध्य एव प्रतिज्ञा न साधननिर्देशः।

तदप्यसत्। सर्व्वेषामसिद्धत्वादवयवलक्षणानामर्थस्यासिद्धत्वात् प्राग्लक्षणाभिधानात्। ततः साध्यनिर्देशः प्रतिज्ञेति सर्व्वस्य साध्यस्य निर्देश इति स्यात्। तद्विनिर्मुक्तस्य च साधनत्वं। अथवा साधनत्वेन निर्मुक्तस्य साध्यनिर्देशस्य प्रतिज्ञात्वमिति क इमं विवेकं विधातुमलं। सन्देह एव तर्हीति चेत्। न (।) अत्रोत्तरस्य[2] वक्ष्यमाणत्वात्।

ननु साध्यमिति कर्मणि कृत्यप्रत्ययः। कर्म च कर्त्तुरीप्सिततमं न च साधनत्वेनोपायतयाभीष्टस्येप्सिततमत्वं। तत्कथन्तस्य साध्यता।

नतदस्ति। साधनस्यैवोपायतया साध्यत्वेनेप्सिततमत्वात्। न चातिशयप्रत्ययः तत्राङ्गीकृतः। योगविभागस्य कैश्चिदभ्युपगमादपरैरातिशायिकस्य[3] प्रत्याख्यातत्वात्। न च भूतप्रत्ययस्तत्र तन्त्रमेकवचनम्वाकरिष्यति कटौ कटानिति चेष्टत्वात्। अभ्युपगमसिद्धान्तता चास्त्येव। तस्मात् साध्यनिर्देशः प्रतिज्ञेत्यसदेतत्। अत्र च धर्मी धर्मः समुदायो वा साध्यो भवेत्।

तत्र धर्मे साध्येन साधर्म्यं हेतुर्धर्मिण्यनर्थकः।

यदि धर्मः साध्यः तस्य निर्देशः प्रतिज्ञेत्यनित्यत्वमिति भवेत् प्रतिज्ञा। तथा साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरण( न्याय सूत्र।...) मिति दृष्टान्तलक्षणं विरुध्यते। नहि साध्यधर्मस्यानित्यत्वस्यौत्पत्तिमत्वादिधर्मो विद्यते येन तद्धर्मभावित्वं स्यात् घटादेः। धर्मिणस्तु सिद्धत्वात् **"साध्यसाधनं"** हेतु (न्या० सू०...)रिति न सङ्गतं। अथोभयं साध्यमुभयपक्षभावी दोषः।

ननु समुदायः साध्यः। न समुदायः सिद्धो नापि तद्धर्म उत्पत्तिमत्वं न भवति।

अत्रोच्यते।

**समुदायस्य साध्यत्वेप्यन्योन्यस्य विशेषणं।**
**साध्यं द्वयं तदा(ऽ)सिद्धं हेतुदृष्टान्तलक्षणम् ॥१६९॥**

"उदाहरणसाधर्म्यात् साध्यसाधनं हेतु"रिति[4] हेतुलक्षणं। "साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरण"[5]मित्युदाहरणलक्षणं। तदेतत् समुदायसाध्यत्वे विघटेत। तथा हि समुदायस्य समुदायिव्यतिरेकेणाभावात् तदेव द्वयं साध्यं भवेत्। न च साध्यधर्मविशिष्टधर्मिधर्मेणोत्पत्तिमत्वादिनोदाहरणस्य सधर्म्यमस्ति। तथाविधे धर्मिण्यसिद्धो हेतुः परस्येति न हेतुलक्षणं नाप्य नित्यताविशिष्टेन धर्मिणोदाहरणस्य घटादेः साधर्म्यमस्तीति न दृष्टान्तलक्षणमिति न सिध्यति हेतुदृष्टान्तलक्षणं। असम्भवात् समुदायस्य साध्यशब्दो धर्मिवृत्तिर्भविष्यति। समुदायेषु हि प्रवृत्ता शब्दाअवयवेष्वपि वर्तन्त इति न्यायात्।

तदप्यसत्।

---

[1] न्यायसूत्रे (।...) [2] न तत्रोत्तरस्य [3] B. ०शायनिकस्य
[4] न्याय सूत्रे [5] न्याय सूत्रे....

असंभवात् साध्यशब्दो धर्मिवृत्तिर्यदीष्यते ।
शास्त्रेणालं यथायोगं लोक एव[1] प्रवर्त्तताम् ॥१७०॥

किं हि तदा लक्षणवचनेन । यथा दुर्व्विहितलक्षणमसम्भवाद् अर्थस्यान्यथा व्याचष्टे तथाहेत्वादिस्वरूपमप्यन्यथा परिकल्पयिष्यति । यथा स गमकस्तथा दृष्टान्तलक्षणमपि व्यर्थकं शास्त्रं ।

ननु

"पक्षधर्मस्तदङशेन व्याप्तो हेतुरि"ति भवद्भिरप्युपचारात् पक्षशब्दो धर्मिवृत्तिरिष्ट एव । तथा च पक्षो धर्मी, अवयवे समुदायोपचारात् । अत्रापि (हि) स एव दोषः ।

नेदमस्ति । यतः ।

जिज्ञासितविशेषस्य धर्मिणः पक्षरूपता । तस्य धर्मो यदा हेतुः कथमत्रोपचारता ॥२८२॥

य एव हि जिज्ञासितसाध्यधर्मलक्षणविशेषो धर्मी पक्षस्तस्य मुख्यस्यैव पक्षस्य ग्रहणं (।) तस्य धर्मो हेतुस्ततो न दोषः ।

ननु समुदायस्यासिद्धत्वे कथन्तस्य धर्म इति सिध्यति । नेदमपि युक्तं, यस्मात् ।

समुदायप्रसिद्धिश्चेत् कथम्पक्षो भवेदसौ । सन्दिग्धे साध्यधर्मे हि धर्मिमात्रस्य पक्षता ॥२८३॥

यदाहि । समुदायः प्रसिद्धस्तदास्या जिज्ञासितविशेषत्वादपक्षतैव । तथा चाह । तत्र तु स्वयं साध्यत्वेनेप्सितः पक्ष इति । सिद्धश्चेत् कथं साध्यत्वेनेप्सितः । तस्मात् पक्षधर्म इति कोर्थः । सन्दिग्धसाध्यधर्मधर्मिधर्म इति । तदात्र कथं समुदायासिद्धौ तद्धर्मता न सिध्यति । कथन्तर्हि अवयवे समुदायोपचारादित्युक्तं ।

अत्रोच्यते ।

चोद्यस्य परिहारार्थमुपचारप्रवर्त्तनं । धर्मिधर्म इति प्रोक्ते लक्षणातिप्रसङ्गिता ॥२८४॥

तत्र हि चोदयन्ति पक्षधर्म इति न सदेतत् । नहि हेतुस्वरूपनिरूपणकाले पक्षस्य सम्भवः । प्रदेशादिधर्मिमात्रे(ण) हेतुमुपलभ्य व्याप्तिस्मरणे पश्चान्नित्यत(त्व)ादिसाध्यधर्मबुद्धिः । प्राक्तु तद्बुद्धेरभावाद् धर्मिमात्रमेव सम्विदितमवशिष्यते सन्दिग्धः साध्यधर्म इति चेत् । न ।

नियमाभावात् ।

ननु सन्दिग्धे हेतुः प्रवर्त्तते कथन्न नियमः । न(।) सिद्धप्रतिक्षिप्तमात्रस्य निराचिकीर्षितत्वात्(।) निश्चिते निराकृते च हेतुः प्रवर्त्तते प्रयोजनाभावादशक्तेश्च । तस्माद् धर्मिधर्म इत्येव वाच्यम् ।

अत्रोच्यते । धर्मिधर्म इति वचने दृष्टान्तधर्मिधर्मस्यापि हेतुत्वे चाक्षुषत्वमपि हेतुः स्यात् । अतः पक्षभूतो धर्मी गृह्यतेति पक्षग्रहणं । कथन्धर्म्येव पक्षो भवेदित्याह । अवयवे समुदायोपचारात् । यद्यपि हेतुग्रहणकाले समुदायो न भवति बद्धिस्थस्तथापि पश्चाद् भविष्यति ।

---

[1] स्वयमेव—इति प्राक् लिखित्वा पश्चात् शोभितोयं पाठः ।

ननु यः पश्चाद् भविष्यति स कथं प्रथमे सन्निहितः। अत एवोपचारो[1]न्यथा मुख्यता। **बुद्धया व्यारोप उपचारः।** कथमसन्निहिते बुद्धिरिति चेत्। किम्मनोरथेपि दारिद्र्यं। न ह्यस्य सूत्रस्य शाटकं वयेति न दृश्यते। तत्र हि यदि शाटको न वातव्यः। यदि वातव्यो न शाटकः। शाटकश्च वातव्यश्चेति व्याहतं। तत्रायमभिप्रायो वक्तुः। यः शाटको भविष्यति स वातव्यः। अत्रापि किं प्रयोजनमिति चेत्। अस्ति प्रयोजनं सूत्रमित्युक्ते शाटकपटकादेरपि प्रसङ्गः। तस्मादन्यनिरासार्थमेवं वचनं। एवमत्रापि यः पक्षो भविष्यति यत्र साध्यसिद्धिर्भाविनी तस्य धर्म इति न दृष्टान्तर्धर्मिधर्मप्रसङ्गः। ततोयमर्थः। सन्दिग्धसाध्यधर्मधर्मिधर्म इति। कथन्तर्हि तदङ्गशस्तद्धर्मो वक्त्रभिप्रायवशात्। न तदेकदेशः पक्षशब्देन समुदायावचनादिति वचनं।

तदसत्।

अन्यदोषः कथन्नाम परत्रोपनिपात्यते।

व्याख्यातुरेव दोषो दुरात्मनः। न खल्वन्येन **कर्कटिका भक्ष्यतेऽन्यस्य नासाच्छेदक्रिया।** साध्यधर्मधर्मिसमुदायः पक्षः। तत्र यदि तदङ्गशेन व्याप्त इति सामान्येनाख्यायते। तदा धर्म्यपि तदङ्गश एव तेन व्याप्त इति न साध्यधर्मव्याप्ततालक्षणम्भवेत्। अत आह। तदङ्गशस्तद्धर्मः। अंशशब्दस्य सामान्यवचनत्वेपि धर्म एवांशो गृह्यते। वक्त्रभिप्रायात्। पक्षधर्मस्यान्येन धर्मिणा व्याप्त्यसिद्धेः। न तदेकदेश इत्यस्यार्थो नैकदेशमात्रं। पक्षशब्देन समुदायावचनात्। पक्षशब्देन हि धर्मी सन्दिग्धसाध्यधर्मविशिष्ट उच्यते। तेन समुदायवाचको न पक्षशब्दः। समुदायार्थप्रतीतिस्तु सामर्थ्यात्(।)तस्य धर्मिणोंशः सामर्थ्याद् धर्म एव। नहि स एव तस्य धर्मः।

यदि तु पक्षशब्देन समुदाय उच्यते। समानप्रधानभावावयवः। तदा तदङ्गशेन व्याप्त इति धर्मिलक्षणेनाङ्गशेन व्याप्त इत्यपि स्यात्। अनिष्टञ्चेदमिति। तेनैवं व्याख्यायते। तस्मान्न क्वचिदस्माभिरसम्भवाद् अन्यशब्दोन्यत्र परिकल्पितः। अपि च। मतानुज्ञा नामेदं **निग्रहस्थानं। स्वपक्षे दोषमनु(द्)धृत्य परपक्षे दोषतोदनं[2] मतानुज्ञा[3]।** अथवास्माकं प्रयोजनमस्ति उपचारयोग्यधर्मिपरिग्रहः। भवतु नेदमिति नोपचारो युक्तः। न च मुख्यसम्भवे, उपचारकल्पनायोगः(।) अपि च "साध्यनिर्द्देशः प्रतिज्ञे"त्यत्र पूर्व्वावधारणं वा स्यात् परावधारणम्वा। साध्यनिर्द्देश एव प्रतिज्ञा न साधननिर्द्देशः। अथवा साध्यनिर्द्देशः प्रतिज्ञैव नान्यथा। तत्र।

पूर्व्वावधारणं व्यर्थमनिष्टमितरत्र तु। यदि पूर्व्वावधारणं व्यर्थता भवेत्। तन्निवर्त्यस्य साधननिर्द्देशस्य हेतुलक्षणेन दृष्टान्तलक्षणेन च प्रतिज्ञात्वस्य विशेषविहितेन बाधनात्। प्रकल्प्यापवादविषयमुत्सर्गस्य (प्र)वृत्तेः। उत्तरावधारणे तु साध्यहेतूदाहरणनिर्द्देशस्यापि प्रतिज्ञात्वमित्यनिष्टं।

ननु साध्यस्यैव निर्द्देशः प्रतिज्ञा न सिद्धस्येत्यवधारणे को दोषः। नहि तस्य साधनादिभिराक्षेपः।

---

[1] B. ०पचारता [2] B ०षमसमञ्जसं [3] न्यायसूत्रे

अत्रेदमुच्यते ।

**साधनाख्यानसामर्थ्यात् तदर्थे साध्यता मता[1] ।**

साधनं हि सर्व्वमसिद्धसाधनायोपादीयते(।)सिद्धे किं साधनेनेति। साधनस्य लक्षणाख्यानसामर्थ्यादेवासिद्धार्थे साध्यभावगतैव । न प्रसङ्गः सिद्धस्येति न तन्निवृत्त्यर्थमवधारणं ।

**हेत्वादिलक्षणै[2] र्व्याप्तेरनाशङ्क्यश्च साधनं ॥१७१॥**

स्यादेतत् (।) साध्यत्वेनैव निर्द्देशः प्रतिज्ञेति शब्दव्यापारापेक्षयाऽसिद्ध(स्य)साधनत्वेन निर्दिष्टस्य निराकरणार्थं पूर्व्वावधारणम्। नहि तत्र न साधनसामर्थ्यं । अत्राह। "हेत्वादिलक्षणैर्व्याप्तेरनाशङ्क्यं" साधनत्वेन निर्दिष्टं । यथैव हि शब्दव्यारापेक्षयाऽसिद्धस्य साधनत्वेन निर्दिष्टस्य प्रतिक्षेपः साध्यत्वेनैव निर्द्देश इति । तथा "उदाहरणसाधर्म्यात् साध्यसाधनं हेतु"[3]रित्यादिना हेत्वादिलक्षणेन साध्यसाधनं हेतुरिति साध्यसाधनत्वभङ्ग्या हेतुरेव । तथा दृष्टान्त एवेति शक्यम्व्याख्यातुमिति हेतु(आदि)लक्षणैर्व्याप्तिः ।

## ६. प्रतिज्ञालक्षणे दोषः

**पूर्व्वावधारणे तेन प्रतिज्ञालक्षणाभिधा ।**
**व्यर्था व्याप्तिफला सोक्तिः सामर्थ्याद् गम्यते ततः ॥१७२॥**

पूर्व्वावधारणे व्यर्थतायां पारिशेष्यादुत्तरावधारणं तस्य च व्याप्तेः फलं । तथाहि । साध्यनिर्द्देशः प्रतिज्ञैवेति । अन्यलक्षणेनापि यदि व्याप्तिस्तथापि प्रतिज्ञैव नाप्रतिज्ञेत्ययोगव्यवच्छेदफलं वाक्यमिति साधनत्वेनापि निर्दिष्टस्य साध्यस्य निर्द्देशः प्रतिज्ञैवेति वाक्यार्थः । अन्यथा व्यर्थता ।

ननु स्वयमेवोच्यते ।

"तथा चासिद्धदृष्टान्तहेतुवादः प्रसज्यते इति हेत्वादिलक्षणव्याप्त्या परेण परिहाराभिधाने प्रागसिद्धस्वरूपत्वादिपरिहारः । तथा सर्व्वस्य चाप्रसिद्धत्वादित्यादिकः । नैषोपि दोषः (।)

परस्परविरोधेन प्रसङ्गस्योपपादनं (।) कृतमेवमनेनैव न तु स्वेष्टप्रसाधनं ॥२८५॥

परस्परविरोधप्रदर्शनमात्रमेवैतन्न त्वनेन हेतुना साध्यार्थप्रसिद्धिः। परपक्षनिराकरणमात्रस्यैवेष्टत्वात् । तस्मादुत्तरावधारणमेवैतत् । तथा चायोगव्यवच्छेदाद् यावती काचिदप्राप्तिः प्रतिज्ञात्वस्य सर्व्वासौ निराक्रियते। प्रतिज्ञैव नाप्रतिज्ञेति। साधनत्वेन यदप्रतिज्ञात्वं तदपि निवर्त्यते ।

निराकृतन्तावत्प्रतिज्ञालक्षणं । प्रतिज्ञाभासलक्षणमिदानीं निराकर्त्तुमाह ।

हेतुप्रतिज्ञाव्याघाते प्रतिज्ञादोष इत्यसत् । स हि दृष्टान्त एवोक्तो वैधर्म्यणासुशिक्षितैः ॥२८६॥

यदाह परः। प्रतिज्ञाहेत्वोर्विरोधो नाम प्रतिज्ञादोषः[4] । यथा नित्यः शब्दः

[1] B. गता [2] M. वचनै—हे. [3] नायसूत्रे
[4] B ०विरोधाः प्रतिज्ञाविरोधः

सर्व्वस्यानित्यत्वादिति । नित्यः शब्द इति प्रतिज्ञा सर्व्वस्यानित्यत्वादिति हेतुः । यदि सर्व्वमनित्यं कथं शब्दो नित्यः । शब्देन विना सर्व्वत्वाभावात् । अथ शब्दस्या(प्य)नित्यत्वं कथं नित्यः शब्द इति ।

अत्राह । नायं प्रतिज्ञादोषः । यतः ।

**विरुद्धतेष्टासम्बन्धोऽनुपकारसहास्थिती ।**
**एवं सर्व्वाङ्गदोषाणां प्रतिज्ञादोषता भवेत् ॥१७३॥**

विरोधे सति प्रतिज्ञाहेत्वोर्विरोधो नाम प्रतिज्ञादोषः । स च विरोध इष्टासम्बन्धः । स चेष्टासम्बन्धोनुपकारकः । सहास्थितिश्च । यदि तावद्धेतुस्तमर्थं नोपकरोति दुष्टत्वात् साध्यविरोधी तदा सर्व्वाङ्गदोषाणामेव प्रतिज्ञादोषत्वस्य प्रसङ्गः ।

नहि कश्चिदपि हेत्वाद्यङ्गदोषः साध्यानुपकारलक्षणेन विरोधेन विरोधी । ततः सर्व्वस्य लिङ्गदोषस्य प्रतिज्ञाद्दोषत्वप्रसङ्गः । न च भवति । यतः ।

**पक्षदोषः परापेक्षो नेति च प्रतिपादितं ।**

परमपेक्ष्यापि यदि पक्षदोषः तदा साधनदोष एव कश्चिन्न स्यात् । प्रतिज्ञार्थोपरोधेन प्रतिज्ञादोषत्वेन्तर्भावादपृथग्वचनमेव साधनदोषाणां भवेत् । को हि अमूढचेतन एकत्रान्तर्भूतं पृथग् ब्रूयात् । तस्मादसन्नेवंभूतः पक्षदोषः । अथ सहास्थितिस्वभावो विरोधः । तदा ।

**इष्टासम्भव्यसिद्धश्च,**

इष्टे पक्षे यद्यसम्भवी हेतुस्तदासावसिद्ध इत्यसि(द्ध) तयैव निराकृतः स्यान्न प्रतिज्ञाविरोधः । अथ तेन प्रतिज्ञातस्य[1] निराकरणं तथा सति येन प्रमाणेन स साध्यते तत्प्रमाणनिराकृतः प्रतिज्ञादोष इति न विरोधो नाम । किञ्च ।

**स एव (स्यात्) निराकृतः ॥१७४॥**

**अनित्यत्वसहेतुत्वे शब्द एवं प्रकीर्त्तयेत् ।**

यद्यनित्यत्वेन सहेतुत्वे एवं शब्दे प्रकीर्तयेत् ।

यावता ।

**दृष्टान्ताख्यानतोन्यत् किमत्रास्त्यर्थानुदर्शनम् ॥१७५॥**

नैतदाख्यानं हेतोः । अपि तु वैधर्म्यदृष्टान्तस्य । नित्यः शब्दः । सर्व्वस्यानित्यत्वात् । अत्राप्येवं वक्तव्यं । अनित्यस्य सर्व्वत्वात् । अशिक्षितत्वात्त्वेवमभिधानं । तथा चोक्तं ।

स हि दृष्टान्त एवोक्तो वैधर्म्येणासुशिक्षितैः ।

नहि दृष्टान्ताख्यानादपरमर्थमत्र पश्यामः ।

एतदेव कुत इति चेत् । यतः । एवं हि हेतुरयम्भवेत् । यदि शब्द एवानित्यत्वं प्रतिपादयेत् न चेदं युक्तं । यतः ।

---

[1] B. प्रतिज्ञार्थस्य

## ७. सामान्यचिन्ता

**विशेषे भिन्नमाख्याय सामान्यस्यानुवर्त्तने ।**
**न तद्व्याप्तिः फलं वा किं सामान्यस्यानुवर्त्तने[1] ॥१७६॥**

सर्व्व एव हि प्रयोगाः शाब्दन्यायानुगत्या प्रतीयन्ते । शाब्दश्च न्यायः । विधिर्निषेधो नियमः (च) । विधिरपि बाधको बाध्यश्च । तथा नियमोपि । तत्र बाध्यबाधकभावः सामान्यविशेषविधानयोः । तत्र कदाचित्प्रथमं बाध्यं कदाचिद् बाधकं । सर्व्वथा विशेषो बाधको बाध्यं सामान्यविधानमिति व्यवस्था । एवमेव व्यवहारस्य दृष्टत्वात् । अत्र च नित्यः शब्द इति विशेषे शब्दे भिन्नस्य विशेषस्य विधानं नित्यत्वस्य । अनित्यत्वस्य च सामान्ये धर्मिणि विधानमिति बाध्यबाधकभावो युक्तः । यथा तक्रं कौण्डिन्याय ब्राह्मणेभ्यो दधि दीयतामिति दधिदानं सामान्येन वृत्तं तक्रदानेन विशेषविहितेन बाध्यते । प्रकल्प्यापवादविषयमुत्सर्गोभिनिवशत इति । तस्मात् सामान्यानुवर्त्तनेन[2] तस्य विशेष(स्य) व्याप्तिः । न च सामान्यानुवर्त्तनस्य फलमेतद् वचनसामर्थ्यात् । वचनस्य सावकाशत्वात् ।

यदि त्वयमर्थोभिप्रेतस्तदा नित्यः शब्दोऽनित्यत्वादिति ब्रूयात् । भवेद् विशेषयोरन्यत्राकृतार्थयोरेकविषयोपनिपातस्तथा च सति विरोधश्च मूढत्वादेवमपि स्यादिति चेत् । न कश्चिदेवं सम्भवी । नहि तत्रैव नित्यत्वम्विधाय पुनरनित्यत्वविधायी तदैव मूढः सम्भवति । यस्य च वाक्यार्थव्युत्पत्तिरपि नास्ति न तस्य वादेधिकारः ।

अथ प्रतिज्ञाहेतुविरोधोदाहरणं यथाकथञ्चित् कल्पनीयं । यदि कश्चिदेवं ब्रूयात् तदा "प्रतिज्ञाहेत्वोर्व्विरोधात् प्रतिज्ञाविरोधो दोष"[3] इति । तदेष्यत एव । प्रयोगस्तु नित्यः शब्दोऽनित्यत्वादिति । एवं हि नियमाच्छब्द एवानित्यत्वं भवेत् । ततो नित्यत्वनिराकरणे विरोधः । अत एवाह ।

**स्यान्निराकरणं शब्दः[4] स्थितेनैवेत्यतो ब्रवीत् ।**

**आचार्य** आह(।) स्यादत्र प्रतिज्ञार्थस्य निराकरणं हेतुना । यदि शब्दः स्थितः स्यात् । शब्दस्थितेनैव निराकरणम्भवेत् । सहानवस्थानात् विरोधिनोरन्यत्र च प्रतिपादनमेतदिति न निराकरणमेतदिति । तस्य[5] वैधर्म्यदृष्टान्तोपदर्शनमेवैतत् । हेतुरिदानीं नास्तीति चेदाह ।

यत्र साध्यविपक्षस्य वर्ण्यते व्यभिचारिता । पञ्चम्या तत्र दृष्टान्तो हेतुस्तूपनयान्मतः ॥२८७॥

यदनित्यन्तत्सर्व्वमसर्व्वश्च शब्द इति कथमेतद् गम्यत इति चेदाह ।

**विरुद्धविषयेन्यस्मिन् वदन्नाहान्यतां श्रुतेः ॥१७७॥**
**सा च भेदाप्रतिक्षेपात् सामान्यानां न युज्यते[6] ।**

नित्यत्वविरुद्धमनित्यत्वं शब्दादन्यस्मिन्विषये प्रतिपादयन्नेवान्यतां शब्दस्याह । सर्व्वमनित्यत्वेन व्याप्तं शब्दश्चानित्यत्वात्ततोन्य इत्यसर्व्वत्वं तदास्य हेतो[7]रन्यत्वप्रतिपादनात् । सा चान्यताऽसिद्धो हेतुः शब्दस्यापि सर्व्वत्वादित्याह ।

---

[1] B. सामान्येनानुवर्त्तने—हे० [2] B. ०नुवर्ण्णनेन [3] न्यायसूत्रे
[4] M. शब्दे [5] B. तस्माद् [6] M. विद्यते—हे [7] B हेतु

सा च भेदाप्रतिक्षेपात् सामान्यानां न युज्यते।

नहि भेदं प्रत्याख्याय सामान्यस्यात्मलाभो भेदानामेवावान्तरभेदप्रत्याख्यानविषये नियतत्वात्।

अथापि स्यात् (।) सर्व्वशब्देन समुदाय उच्यते। न च शब्द एकदेशः समुदायः।

तदसत्। एवं हि प्रत्येकमपोद्धारे न कश्चित् सर्व्वः स्यात्। वृक्षो न शिंशपैवेति दृश्यते भेदप्रतिक्षेपः। तदसत्।

**वृक्षो न शिंशपैवेति यथा प्रकरणे क्वचित् ॥१७८॥**

**सर्व्वश्रुतेरेकवृत्तिर्न्निषेधः स्यान्न तावता[1] ।**

**सो सर्व्वः सर्व्वभेदानामतत्त्वे तदसम्भवात् ॥१७९॥**

अथ विवक्षातः शब्द एवैको सर्व्वः। तथा सति शब्दपर्यायोऽसर्व्वशब्द इति प्रतिज्ञार्थैकदेशासिद्धता भवेत्। अनित्यः शब्दोध्वनित्वादित्यादिवत्।

ननु शब्दस्य ध्वनित्वं कथमसिद्धं। नहि स्वरूपाभावे कश्चित् सम्भवति। न स्वरूपेण धर्मित्वेनासिद्धो हेतुत्वेनासिद्धत्वाद[2]सिद्ध उच्यते। हेतुत्वं हि भेदे सति भवति नान्यथा। कुतः। ज्ञाप्यज्ञापकयोर्भेदस्यावश्यम्भावित्वात्। नहि शब्दः शब्देन ज्ञाप्यतेऽसिद्धत्वाज्ज्ञाप्यस्य। न चासिद्धमसिद्धेन साध्यते। अथ सिद्धः शब्दस्तथापि न साध्यते। न हि सिद्धं सिद्धेन साध्यते।

ननु साध्यसाधनयोरेकत्वं नेष्यते। धर्मिसाधनयो(ः पुन)रभेदे को विरोधः। अस्ति विरोधः। शब्दत्वादनित्य इत्युक्ते न समुदायः साध्यः स्यात्।

ननु सामर्थ्याच्छब्द एवानित्य इति न समुदायत्वव्याघातः। नहि शब्दत्वादनित्य इति वचनेऽन्यत्रानित्यता प्रतीयते। केवला वा। न हि धूमत्वादग्निमान् धूमो न भवति (।) भवति तत्र सामान्यविशेषभावेन भेदभावात्[3]। इहापि यद्येवं क्रियते नित्यः शब्दत्वादयं गोशब्दवदिति तदा भवत्येव हेतुः। इह पुनः सर्व्वः शब्दोऽनित्यः शब्दत्वादिति न सामान्यविशेषभावः।

ननु किं शब्दत्वस्य धर्मित्वे साधनत्वं विरुध्यते। यदि प्रतिबन्धः। कथं न साधनत्वं। अथापि नास्ति तथासत्यनैकान्तिकत्वमेव। अतश्च नासिद्धता नाम दोषः। असाधारणत्वेनानैकान्तिकत्वात्। तस्माद् धर्मिणो हेतुभाविनो नैकान्तिकतैव दोषः। नासिद्धता।

अथ पुनर्न्निर्दिश्यमानतायोगो न सिद्ध इत्यासिद्ध उच्यते। नहि किञ्चिद् भिन्नमस्ति यत्पुनः प्रतिपाद्यं। तत्र शब्दो नित्यः शब्दत्वादनित्य इति वा वक्तव्यं।

ननूभयं। नैतदस्ति।

अनित्यः शब्द इत्युक्ते हेत्वन्तरमपेक्ष्यते। तन्निरासाय शब्दत्वादित्येतत् पुनरुच्यते ॥२८८॥

शब्दत्वान्नाशितेत्यत्र धर्म्यन्तरनिराकृतौ। शब्दशब्दप्रयोगस्य पुनः सामर्थ्यसङ्गतिः ॥२८९॥

---

[1] M. चेयता [2] B न स्वरूपेण धर्मित्वेनासिद्धत्वाद [3] B भेदात्

यदि शब्दत्वादनित्य इत्युच्येत धर्म्मन्तरापेक्षा स्यात्। अनित्यः शब्द इति च हेत्वन्तरापेक्षा(।) तन्निराकरणायोभयत्रोपादानमिति न दोषः।

अत्रोच्यते।

यदि शब्दत्वसामर्थ्यं हेत्वन्तरमनर्थकं। अथासामर्थ्यमस्यास्ति पुनरुक्तेन तेन किं ॥२९०॥

तस्मात् पुनर्निर्देशे यद् विवक्षितं तदत्र नास्तीति असिद्धतैव दोषः।

अनन्वयदोष एव कस्मादत्र नोच्यते। भवतु समुच्चयेनासावपि दोषोऽनियतकथायां। नियतकथयान्तु पराजितपराजयाभा(वा)त् पर्यनुयोज्यापेक्षणाच्च न युक्त(ः। तस्मादयुक्त) एव धर्मी स्वधर्मसाधने। न (।) शक्तश्चेदविवादप्रसङ्गः तथा च हेतुवैयर्थ्यं स्यात्। तेन।

**ज्ञाप्यज्ञापकयोर्भेदाद् धर्मिणो हेतुभाविनः।**
**असिद्धेर्ज्ञापकत्वस्य धर्म्यसिद्धिः स्वसाधने ॥१८०॥**

ज्ञाप्यज्ञापकयोर्हि भेदो दृष्टस्तदभावे हेतुत्वमसिद्धं। न हि प्रकाशतया प्रदीपः प्रकाशयन् तद्रूपाप्रतिपत्तौ स्वार्थक्रियानिर्वर्त्तनसमर्थः। भेदे च ज्ञापको ज्ञाप्यज्ञापनं विधत्ते। न चात्र भेदो धर्मिरूपात्। ततो ज्ञापकत्वासिद्धेरसिद्धः। अन्वयासिद्धेरपि ज्ञापकत्वासिद्धिरिति चेत्। न। भेदे सत्यन्वयचिन्ता स्यादत्र तु भेद एव नास्तीति तावता दोषवत्त्वे कोन्वयचिन्तायां व्यापारः। तस्माद् धर्मी स्वसाधनेऽसिद्धः।

ननु दीपादयः स्वसाधने सिद्धा एव। सत्यं। सिद्धा न तु परोक्षमपरोक्षाः साधयन्तीति विषमउपन्यासः। नहि (प्र)दीपदर्शने स्वरूपे विवादः। अत्र तु शब्ददर्शनेप्यनित्यतायां विवाद एव। यदित्वविवादः। प्रत्यक्षसिद्धतैव शब्दत्ववदेव भवेत्।

**धर्मधर्मिविवेकस्य　　सर्व्वभावेष्वसिद्धितः।**
**सर्व्वत्र दोषस्तुल्यश्चेन्न सम्वृत्या विशेषतः ॥१८१॥**

ननु कृतकत्वशब्दत्वयोरपि प्रदीपवदेव प्रत्यक्षसिद्धत्वं। अथ धर्मभेदकल्पनेन भेदात् साध्यसाधनाभावः[1]। प्रदीपेपि समानमेतत्। तत्रापि प्रदीपस्य स्वरूपमिति कल्पनाभेदोस्त्येव। न (।) सम्वृत्या भेदात्। प्रदीपस्य स्वरूपमित्यत्रापि यथा भेदकल्पना तथा न साधनं। स व्यापारनिर्व्यापा(रा)वस्थायां प्रदीपव्यपदेशः। स्वरूपमिति तु स्वरूपमात्रमेव। तत्रार्थक्रियाकारित्वात् स्वरूपं। स्वरूपादर्थक्रियेति। प्रदीपस्तु धर्मी। निर्व्यापारस्य तु स्वरूपमेव नास्ति। विवक्षितार्थ(क्रिया)या भावादव्यापारतेति न युक्तं। अतिप्रसङ्गात्। न चैवम्वचने(न) कश्चिदर्थस्सिध्यति। भेदकल्पना चेत्। न सामान्यविशेष(ा)भावेनापि तत्सिद्धेः। तस्मान्न धर्मी स्वरूपस्य साधनं। भेदाभावात्। कृतकत्वानित्यत्वशब्दानां तु व्यावृत्तिकृतोऽस्त्येव भेदः। तथा हि।

एकस्यार्थस्वभावस्य प्रत्यक्षस्य सतः स्वयं।
कोन्यो न दृष्टो भागः स्याद् यः प्रमाणैः परीक्ष्यते ॥२९१॥

एको ह्यर्थात्मा स प्रत्यक्षेण साक्षात्कृतस्ततः किमपरमस्य परीक्ष्यं।

---

[1] B. ०साधनभावः

**ननु धर्मिमात्रं प्रत्यक्षसिद्धं नानित्यत्वादि को धर्म इति चेत्। न(।) अनित्यत्वेन सहैकत्वात्। न ह्यनित्यत्वं नाम तस्मादपरं।**

अनित्यत्वपरत्वे हि शब्दधर्मिग्रहः कथं। कालान्तरव्यापितयेतरथा चेदसद् द्वयं ॥२९२॥
कालान्तरव्यापि यदि नित्यत्वेन परिग्रहः।
प्रमान्तरसहस्रेपि नानित्यत्व ग्रहस्तथा। प्रत्यक्षप्रतिपन्ने हि प्रमाणान्तरतः कथं ॥२९३॥

**निराक्रिया स्यात्। प्रत्यक्षमूलं सर्व्वं प्रमाणान्तरं। कर्कटकसधर्माणो हि जनक-भक्षा राजपुत्रा एव न प्रमाणभूताः प्रत्ययाः। प्रत्यक्षञ्च प्रमाणं प्रधानं सर्व्वप्रमाणानां। तत्किं महाकाल एव डाकिनीभिर्भक्ष्यते।**

**अथ प्रत्यक्षेण न नित्यत्वं नानित्यत्वं प्रतीयते। स्वरूपमात्रकन्तेन मीयते सर्व्व-वस्तुनः। नित्यत्वमनित्यत्वं वा पाश्चात्यप्रमाणावलम्बनं।**

**नन्वनित्यत्वं स्वभावभूतं कथमगृहीतं नाम। नित्यत्वं हि विततकालकला(व्या)पित्वं विपर्ययेणानित्यत्वं।**

नित्यत्वग्रहणं तत्र भावस्य व्यापिताग्रहे। सा चेन्न गृह्यते प्राप्तमनित्यत्वस्य वेदनं ॥२९४॥

**यदैव भावानां कालान्तरव्यापिता न प्रतीयते। तदैवानित्यताप्रतीतिः परिस्फुटा। सा व्यापितैव[1] न प्रतीयते। नत्वनित्यत्वमिति चेत्। किमिदमनित्यत्वं नाम। तस्यैवो पाधिभूतं नामान्तरं[2]। तदैव तदस्त्यथ वा पश्चात्। तदैव तदस्तीति चेत्। कस्मादध्य-क्षेण न प्रतीयते। अप्रतीयमानं कथन्तदात्मभूतन्तत्। तादात्म्येन प्रतीयमानं हि तदात्मभूतं सम्बन्धितया हि प्रतीयमानं तदवश्यमेव भवेत्। अप्रतीयमानं तु तत्समानमयुक्तं[3] तथापि पश्चात्तत्सम्बन्धितया प्रतीयत इति चेत्।**

उपलब्धिलक्षणाप्तं यन्न प्रत्यक्षेण मीयते। तदा तदस्तीति कथमभावो[4] नान्यथा गतिः ॥२९५॥

**यत्रोपलब्धिलक्षणप्राप्तेनोपलम्भस्तदेवासदिति व्यवस्थाप्यते। नापरः प्रकारोऽ-भावसाधने। तथा चोक्तं।**

**"सिद्धं प्रमाणैर्व्वदतामर्थादेव विपर्ययादि"ति। अथ भ्रान्तिरसौ तेनानुपलम्भेप्यदोषः।**

सर्व्वत्र धर्मिग्रहणे यदि भ्रान्तिः प्रवर्त्तते। धर्मिप्रमाणाभावे हि प्रमाणमनुमा कथं ॥२९६॥
असिद्धधर्मिसम्बन्धः कथं हेतुः प्रसिद्धिभाक्। प्रत्यक्षमनुमानञ्च प्रमाणं न भवेद् यदा ॥२९७॥
तदा प्रमेयसिद्धिः स्यादिति विज्ञप्तिमात्रकं। यदा प्रत्यक्षतो भाविभूतरूपापरिग्रहस्: (॥) २९८॥
तदा प्रत्यक्षतः सिद्धधर्मिसम्बन्धसम्भवे। हेतोरनुमितेः सिद्धिर्भाविभूतस्य वस्तुनः ॥२९९॥
तदाध्यक्षेतरार्थस्य प्रसिद्धिः सनिबन्धना

**यदि तु भाविभूतरूपयोरेकतेष्यते। तदा प्रत्यक्षप्रमाणसिद्धेरनुमानवैयर्थ्यं[5]। भ्रान्तिसद्भावे सर्व्वापहारिलोप एवेति न किञ्चिद्भवेत्। तस्मादनित्यत्व(न्नित्यत्वं) वा प्रत्यक्षसिद्धमेव। अथ न प्रत्यक्षसिद्धता धर्मत्वात्। धर्मिमात्रमेव हि प्रत्यक्षसिद्धमन्यथानुमानाभावात्। सर्व्वधर्मप्रसिद्धेः प्रत्यक्ष(त) एव।**

---

[1] B. सैव [2] B. धर्मान्तरं [3] B. तु तत्सम्बन्धितया न युक्तं
[4] B. ०मभावे [5] B. ०मानमनर्थकं

तदसत् यतः ।

प्रत्यक्षतो हि धर्मस्य प्रसिद्धौ धर्मिसिद्धता । न शुद्धधर्मिमात्रस्य प्रत्यक्षमपि साधनं ।।३००।।

न खलु धर्मविनाकृतः क्वचिद्धर्मी प्रसिद्धिभाक् । शब्दत्वेन पदार्थत्वेन चावश्यं परिग्रहात् । ततो यथा शब्दत्वादि ग्रहणन्तथा नित्यत्वादेरपि न तत्र कश्चिद्विशेषः ।

ननु कस्यचिद् व्यभिचारिणो धर्मस्य यदि न प्रत्यक्षेण क इवात्र दोषः । तद्यथा स्थाणुपुरुषत्वयोः ।

स्थाणुत्वं पुरुषत्वञ्च विना द्रष्टुं हि शक्यते। ऊर्ध्वतामात्रकं व्यापीतरत्वान्न विनार्थधीः ।।३०१।।

नहि व्यापीतरत्त्वं परित्यज्य ग्रहीतुं शक्यं । तदेव तस्य रूपं तच्चेन्न गृहीतमगृहीतमेव तत् ।

ननु दीर्घं दीर्घत्वेना परिगृह्यमाणमपि दृश्यत एव । न तत्रावयवस्यैव दृष्टेः(।)तस्य च न सा दीर्घता । अवयविनो हि सा दीर्घता । स चानुमानगम्य[1]स्तथाहि ।

चलत्येकत्र चलति समस्तमिति गम्यते । तदेकमिति त्वेनेदमेकत्वमनुमानतः ।।३०२।।

एकस्मिन्नाकृष्यमाणे ऽवयवे सर्व्वावयवसमाहार एवाकृष्यमाण उपलभ्यते तदन्येन सहैकमिति । न च तदनुमानं । परस्परसम्बन्ध एव तथानुमीयते नैकत्वं । न चासावनुमानविषयः । प्रत्यक्षाप्रवर्त्तने[2] हि (न) परप्रमाणविषयो भवेत् । न खलु तदेव दृष्टमदृष्टञ्च घटते । तस्मात् कालव्याप्यव्यापि वा तत् प्रत्यक्षेणैव गृह्यते । नासावनुमानविषयः । तत्र यद्यस्य तेन रूपेण न प्रत्यक्षविषयता न तस्य तद् रूपं । न खलु नीलत्वेन विषयीकृतमध्यक्षतः पीतादिकं । कालान्तराव्यापितया गृहीतं तथैव तदिति मन्तव्यं । अन्यथा सकलकालकलाकलापसंकलने तदेव सकलं परिसमाप्तमिति तदैव सकलकालकर्त्तव्यार्थक्रियाप्रसङ्गः । कालकलानां भाविभूतानामग्रहणेन तथेति चेत् । तद्ग्रहणे तद्व्यापितापि न गृह्यत एवेति तत्कालमात्रसम्बन्धितैव[3] गृह्यत इति प्राप्तं । तथा च विद्युदादिवदनित्य एव[4] ।

ननु विदुदादीनां विनाशे सत्यनित्यता न तत्कालसम्बन्धिता मात्रेण । ननु विनाशकस्य कस्यचिदभावात् कथम्विनाशः । मेघावष्टम्भादेव विनाश इति चेत् । इहापि समानासमानजातीयावष्टम्भ इति किन्नेष्यते । तस्माद् विद्युदोप्युत्तरकालानुपलम्भ एव विनाशः । स च सर्व्वपदार्थानामिति न नित्यता ग्रहीतुं शक्या ।

## (१) स्मृतिर्न प्रमाणम्

ननूत्तरकालमपि घटादीनां ग्रहणे कथमग्रहणमुच्यते । न(।) तस्यैवाग्रहणात् । न खलु पूर्व्वकालोपि गृह्यते । किं पुनस्तत्कालभावाभावः (।) न खलु कश्चिन्मुहूर्त्तदिवसमासादिकः कालः प्रत्यक्षप्रमाणप्रसिद्धो रूपादिपदार्थव्यतिरेकी । न प्रथमदिवसे मासप्रतीतिर्न्न प्रथमयामे दिवसादिप्रतीतिः । न द्वितीये तदा पूर्व्वस्योत्तरस्य चाप्रतीतेः

---

[1] B. सा चानुमानगम्या [2] B. प्रत्यक्षावर्त्तन

[3] B. ०तयैव T. नवममाह्निकं (समाप्तम)

**स्मरणेन प्रत्येष्यते (एव) कालो दिवसादिरिति चेत् । न (।) स्मरणस्याप्रमाणत्वात् । न हि स्मरणमपूर्व्वार्थविधायि ।**

प्रत्यक्षपूर्व्वकं स्मार्त्तन्नाप्रत्यक्षार्थगोचरं । प्रत्यक्षेण च मासादेर्न कालस्य परिग्रहः ॥३०३॥
तत्समहाररूपत्वं कालस्य यदि भण्यते । समाहारग्रहेनास्ति प्रमाणमिति साधितं ॥३०४॥
अनेकाध्यक्षसिद्धत्वान्नासिद्धिरिति[1] चेन्मतं । अनेकाध्यक्षसिद्धिः किं केनचिच्छक्यसाधना ॥३०५॥
स्मरणस्याप्रमाणत्वं प्रागेव प्रतिपादितं । सांवृतं स्मरणायातं न तु तत्पारमार्थिकं ॥३०६॥
कालस्य सांवृतत्वे च तद्व्याप्तिः सांवृती स्फुटं । तस्मादनित्यताभावस्वभाव इति गम्यतां ॥३०७॥
यदि स्वभाव एवासौ भेदः स्यात् सांवृतः कथं । संवृतिर्निरुपादाना न साध्यं न च साधनम् ॥३०८॥
सम्बन्धसम्भवादेव साध्यसाधनयोः स्थितिः । नहि सम्बन्धसद्भावन्विरहे साध्यसाधने ॥३०९॥

**अत्रोच्यते ।**

व्यावृत्तमेकतोनेकमेकरूपेण कल्पना । विषयीकुरुते तेन धर्मिधर्मव्यवस्थितिः ॥३१०॥
व्यावृत्तिः सर्व्वभावानां सजातीयेतरार्थतः । प्रत्यक्षप्रत्ययग्राह्या कल्पनामात्रतोन्वयः ॥३११॥
सविकल्पमध्यक्षमक्षव्यापरतो यदि । पूर्व्वापरत्वेनाध्यक्षं सहभावेपि नान्वयः ॥३१२॥
येन प्रथमतो दृष्टमेकमेव तदन्वये[2] । न तस्य भासतेऽशेषव्यक्तिभासप्रसङ्गतः ॥३१३॥
दूरतादितया व्यक्तेरभासनमिति स्थितौ । व्यक्त्यग्रहे न तद्व्यापि सामान्यग्रहणं भवेत् ॥३१४॥

**पूर्व्वव्यक्तिग्रहणसंस्काराद् व्यक्त्यन्तरे तथा ग्रहणमिति चेत् । नैतदस्ति यतः ।**

संस्कारस्मरणे[3] हेतुः तद्वस्तुग्रहणाहितः । व्यक्तिग्रहणसंस्कारात् कथमर्थान्तरे विदः ॥११५॥

**व्यक्तिग्रहणकृतो हि संस्कारस्तत्रैव स्मरणविज्ञानहेतुर्नापूर्व्वार्थदर्शनस्य । न च पूर्व्वार्थदर्शनस्य नाप्यदृष्टस्मरणस्य । अर्थान्तरञ्च सामान्यं व्यक्तिभ्यस्तत्कथमदृष्टस्य तस्य स्मरणमपि । न च पूर्व्वापरार्थस्मरणदर्शनात् स्पष्टेतराकारव्यक्तिरूपमन्तरेणापरं विभावयामः । दर्शने हि द्वयोः परिस्फुटाकारव्यतिरेकेण नापराकारप्रतीतिः । व्यक्तिद्वयमेव हि तत्र प्रतिभासते । समानाकारप्रत्ययसम्भवात् प्रतिभासत इति चेत् । तदसत्यं ।**

प्रतिभासोनुमानेन साध्य इत्यभिभाषितं । कुड्यादिप्रतिभासः किमनुमानेन साध्यते ॥३१६॥

**यदि प्रतिभासः प्राग्भावी विस्मृतस्तदा तत्स्मरणायानुमानमुच्येत अन्यो वा यत्नः क्रियेत न (तु) प्रतिभासनकाल एव । न हि कुड्यादिप्रतिभासोनुमानेन साध्यः कुड्यादयो वा । न हि यतः कुड्याकारः प्रतिभासस्ततः कुड्यमस्ति प्रतिभासते वेति लोकप्रतीतिः (।) अपि तु पररूपविविक्तेन[4] स्वेन रूपेण । यतः पश्यामीति ततोस्ति प्रतिभासते वा । न च व्यक्तिरूपविवेकिना रूपेण सामान्यावभासनं । न खलु सामान्यस्य वर्ण्णसंस्थानान्तर-(त्व)मुपलक्षयामः । वर्ण्णसंस्थानबाह्यमेव सामान्यस्य रूपमिति चेत् । न तर्हि सामान्यमस्ति वर्ण्णसंस्थानबाह्यस्य बाह्यस्याभावात् । व्यापितैव तस्य रूपमिति चेत् । यर्त्तर्हि वर्ण्णसंस्थाने नासमानमसमानमेव तत् । नहि व्यापिता वर्ण्णसंस्थानवती । वर्ण्णसंस्थानस्यैव व्यापितेति चेत् । यदि व्यापिता व्यापितयैव प्रतीयेत । कालान्तरे प्रतीयत एवेति चेत् । न । व्यक्तिसत्त्वासत्त्वयोर्व्विशेषाभावात् । विनष्टेपि पूर्व्वविशेषे तथैव प्रतीतेः । न चावि-**

---

[1] B नासिद्धमिति [2] B न्वयः [3] B स्फरणे [4] B विवेकेन

नाशः पूर्व्वस्य । तत्रोपलब्धेः कथम्विनाश इति चेत् । यदि नष्टं कथं पूर्व्वत्र नोपलभ्यते परेण (ते)न वा(।) व्यापिताया अभावादिति चेत् । उपलभ्यत एव तद् रूपं देशव्याप्तिमात्रक-मेवाप्रतीतं तिरोधानात् । किमिदं तिरोधानम्(।)अदृश्यात्मता । कथन्दृश्यस्यादृश्यात्मता । देशान्तरे दृश्यात्मतैवातीतौ न पदार्थ इति चेत् । दृश्यात्मताव्यतिरेकेण न पदार्थ इति निर्णीतमेतत् । किञ्च देशान्तरे दृश्यमानताविनाशे व्यापितैव विनष्टा भवेत् । तथा च । न नित्यं सामान्यं । तथा च व्यक्तिरूपमेव न सामान्यमित्यायातं । व्यक्तिव्यतिरिक्तस्य समानाकारस्य प्रत्ययमात्रत्वेनावस्तुत्वात् । प्रत्ययस्तर्हि समाना एत इति कथम् । वर्ण्णसं-स्थानक्रियाकृतेन समानत्वेन समानत्वादेवमित्यदोषः । राष्ट्रकूटादिसमानतावत् ।

अपि च । य एवमाह । समानकारप्रत्ययनिबन्धनं सामान्यमिति । एकार्थ-क्रियाकृतः समान[1]प्रत्ययो भविष्यति, तदेककारणकृतो वा । न समानरूपकृतो ब्राह्मणादि-समानतावत् ।

## (२) ब्राह्मणादिजातिसामान्यं विनाऽपि पुण्यपापव्यवस्था

ननु ब्राह्मणादिजातिमन्तरेण कथं पुण्यपापव्यवस्था । जातिसद्भावेपि कथं । नहि जातिर्हन्यते । नापि पिवति मद्यं । न च पुण्यपापव्यवस्था आगमादन्यतः प्रमाणादस्ति । स एवागमः कथं प्रतिपादयेदिति । न हि ब्राह्मणो न हन्तव्य इति जातिमन्तरेण शक्यं प्रति-पादयितुं प्रतिव्यक्तिप्रतिपादनासम्भवात् । उपदेशात् समानाकारपरामर्षा(?र्शा)द्वेति न दोषः । समानपरामर्षश्चानादिवासनोपदेशादेव । न तद्व्यतिरेकेणापरमत्र प्रमाणप्रसिद्धं । अपि च ।

समानप्रत्ययो व्यक्तिव्यतिरिक्तशरीरवत् । अथान्यथेति ज्ञातव्यमन्यथान्धविचेष्टितं ।।३१७।।
विशेषव्यतिरिक्तात्मवेदनन्न प्रसिद्धिभाक् । तदन्यथा तु सम्वित्तो न प्रमेयास्तिता सती ।।३१८।।

यदि व्यक्तिव्यतिरिक्ताकारसङ्गतः समानप्रत्ययः । स तथा न सिद्ध इति कथं ततः प्रसिद्धिः सामान्यस्य । अथ प्रत्ययमात्रं तदा न सिध्यति सामान्यं । नहि प्रत्ययमात्रा-दर्थविशेषसिद्धिः । यदाकारः प्रत्ययः स एव ततः सिध्यति अन्यथातिप्रसङ्गः । भिन्नाभिन्नं सामान्यमिति चेत् । न । परस्परविरोधात् । तथा हि ।

भिन्नादन्यदभिन्नञ्चेत् भिन्नतास्य पुनः कथं । भेदावभासने भिन्नमभेदोस्य कथं पुनः ।।३१९।।
केनचिद् भेद इष्टश्चेत् सामान्यं स्यात्तदेव हि । अनन्यता पुनस्तस्य न स्यादत्यन्तभेदतः(।) ।।३२०।।
अन्येनाभेद इष्टश्चेद् भिन्नाभिन्नन्न तत्तदा । तेनैवाभेदितायान्तु तत्पुनः स्यात् सहस्रधा ।।३२१।।
ततोपकृष्यमाणन्तन्न स्यादेव क्षयं गतं । भिन्नाभिन्नं यदि भवेद् दृश्यादृश्यं प्रसज्यते ।।३२२।।
दृष्टादृष्टं भवेदेकमिति जातं महाद्भुतं । दृश्यादृश्यतया वस्तु सदसत्त्वप्रसिद्धितः ।।३२३।।

(तथाहि ।)

एकत्वं प्राप्तमेवं हि मृतस्याप्यमृतात्मता । तस्मात् कल्पितरूपत्वं सामान्यस्येति गृह्यतां ।।३२४।।
ततो व्यावृत्तिभेदेन भिन्नत्वं धर्मधर्मिणोः । स यत्र नास्ति तत्रैव प्रतिज्ञार्थैकदेशता ।।३२५।।

---

[1] B. सामान्य

## (३) संवृतिसत् सामान्यम्

**परमार्थविचारेषु तथाभूताऽप्रसिद्धितः।**
**तत्त्वान्यत्त्वं पदार्थेषु साम्वृतेषु निषेध्यते ॥१८२॥**

**सम्वृति सत् सामान्यं व्यक्तितो भिन्नमेवान्वयव्यतिरेकाभ्यां विभावनात्। तच्च वर्णादिरूपमेव। तथाहि।**

यदि व्यक्त्यतिरेकेण न वर्णादिव्यवस्थित। व्यक्त्यन्तरगतन्न स्यादिति भेदव्यवस्थितिः ॥३२६॥
व्यावृत्तमनुवृत्तञ्च नाभिन्नमिति युक्तिमत्। ततः कल्पनयासिद्धभेदता धर्मधर्मिणोः ॥३२७॥
अक्षतस्तु न भेदस्य ग्रहणन्तेम तत्त्वतः। प्रत्यक्षतश्च सिद्धस्य पारमार्थिकता यतः ॥३२८॥
प्रत्यक्षपूर्व्वकं यत्रानुमानञ्च प्रवर्त्तते। ततः साधनरूपस्य संवृतिस्थितभावना ॥३२९॥
तत्त्वेन तु न तस्य स्तस्तत्त्वान्यत्त्वे प्रमान्विते। कल्पनामात्रतो भेदे तत्त्वतो व्यक्तिरूपता ॥३३०॥
तेन प्रत्यक्षतः सिद्धा व्यक्तिरेव प्रतीयताम्।
प्रत्यक्षपूर्व्व (कत्वा) च्चानुमानतो व्यक्तिसाधनं ॥३३१॥
तस्मात् परन्तु सामान्यं यदि सिद्धयेन्न भेदवित्।
ततो न भेदे वृत्तिः स्यात् भेदानामसमाप्तितः ॥३३२॥

**तथाहि। यदि सामान्यं प्रतीयते तदा भेदानुल्लेखे भेदेन स्यादेव वृत्तिः। नानिरूपिते कश्चित् प्रवर्त्तते। अथ व्यक्तिदर्शनपुरःसरसामान्यग्रहणे तत्सम्बन्धग्रहणमिति। यत्र सामान्यं तत्र व्यक्त्या भवितव्यमिति भेदे वृत्तिः। तदेव भेदं प्रतियतः[1] कथं भवति। ततः सामान्यादनुमानप्रतीतिर्व्यक्तिप्रतिपत्तिरिति प्राप्तं। तथा चानुमितानुमानतो व्यक्तिप्रतीतिरिति पुनस्तत्रापि सामान्यप्रतीतिः। ततोपि सामान्यादपर (ा) व्यक्तिसामान्यप्रतीतिरित्यनवस्था। अथाप्यन्ते व्यक्तिं प्रत्येति तथा सति विशेषाभावादादावेव प्रत्येतु किं परम्परापरिश्रमेण। व्यक्तिप्रतिपत्तौ च सर्व्वार्थक्रियाप्रसिद्धिरिति न प्रवर्त्ततैव। तस्माद् बुद्धिविरचितमेव सामान्यं न बाह्यमिति युक्तं।**

**ननु बुद्धिरूपप्रतिपत्तावपि कथं बाह्ये वृत्तिः। एवमेव कार्यकारणभावदृष्टेः। अस्माकमपि तर्हि सामान्यप्रतीतेर्व्यक्तौ वृत्तिर्भविष्यति कार्यकारणभावस्यात्रापि तुल्यत्वात्। तदेतत प्राप्य हरीतकीं देवता विरेचयतीति प्राप्तं। यदि कार्यकारणभाव एव किमन्तर्गडुना सामान्येन।**

**तस्मात्**

संवृतिसत् सर्व्वं सामान्यमिति गृह्यतां। वस्तुसामान्यभावे हि न वृत्तिर्न्न निवर्त्तनम् ॥३३३॥

**सामान्यमभ्युपगच्छता व्यक्तिप्रतीतिरभ्युपगन्तव्याऽन्यथा प्रवृत्त्यभावात्। व्यक्तिप्रतीतौ तत एव लिङ्गाद् धूमादिकादस्तु किं सामान्येन। सामान्यतोपि लिङ्गभूतादेव तस्य प्रतीतिः।**

**अथ व्यक्त्यन्तरेण सह न सम्बन्धो लिङ्गव्यक्तेः। सामान्यस्य तु व्यापित्वादस्तीति सामान्याभ्युपगमः।**

---

[1] B. भेदमप्रतियतः

**तदेतदसत् ।**

व्यापित्वेपि हि सामान्यं तथैव ग्रहणे सति । व्यक्त्यन्तरस्य गमकं कथमिष्येत तत्त्वतः ॥३३४॥

**यद्यपि व्यापिसामान्यं तथापि तस्यानुमानकालभाविनो व्याप्यस्याग्रहणे कथन्तस्य व्यापकमिति गृह्येत । अगृहीतसम्बन्धा(च्च) प्रतीतावतिप्रसङ्गः । सामान्यान्तरव्यक्तेरपि प्रतीतिप्रसङ्गात् । अथ तया न सम्बन्ध(?द्ध)मिति प्रत्युच्येत । अग्रहीतसम्बन्धस्यापि तर्हि प्रतीतिः स्यात् । अपि च । कथमिदं ज्ञातव्यमिति प्राक् प्रतिपादितं । अपि च । यदि सामान्याद् व्यक्तिप्रतीतिः शब्दादपि सामान्यं प्रतीयते । ततः किं व्यक्त्यवाप्तिर्न्न भवेत् । असत्त्यासौ प्रतीतिरिति चेत् । सर्व्वा तर्हि सामान्यप्रतीतिरसत्त्येति किं सामान्येन ।**

**ननु सर्व्वत्र सामान्यमस्त्येव व्यक्त्यप्रतीतेस्तु न सम्वादः । व्यक्तीनामेवार्थक्रियासामर्थ्यात् । सामान्येन तु विना न शक्या प्रत्येतुमिति सामान्याभ्युपगमः (।) व्यक्त्यप्रतीतिस्तु तत्सम्बन्ध(? द्ध) लिङ्गाभावात् ।**

**ननु लिङ्गतोपि सामान्यमेव प्रत्येयं । तत्र चेद् व्यक्तिप्रतीतिः किन्न सर्व्वत्र । सामान्यमात्रमेव शब्देन प्रत्याय्यते । लिङ्गात्तर्हि व्यक्तिरपि प्रतीयत इति प्राप्तं । तथा च प्राक्तनो दोषः ।**

**अथापि स्याद् व्यतिरिक्तं सामान्यं दोषवत् । उभयरूपत्वे ह्यदोषः । तदप्यसत् ।**

व्यक्तैः प्रतीतिदोषः किं पक्षेत्रापि न सम्भवी ।
ततोपि हि न सामान्याद् व्यक्तेरस्पर्शतो गतिः ॥३३५॥

**सामान्यं हि यदि व्यक्तिव्यतिरिक्ताव्यतिरिक्तमिष्यते तदापि व्यक्तेः प्रतीतिरन्यथा वेति द्वयीं गतिं नातिवर्त्तन्ते प्रतिपत्तारः । प्रतीतिश्चेत् । सकलानुभवसम्भवात् किमिति प्रवर्त्तते । न चेत्प्रतीतिः कथं प्रवर्त्तनं । प्रतीतमप्यप्रतीतमिति प्रवर्त्तनमिति चेत् । तदेव तेनैव रूपेण प्रतिपन्नाप्रतिपन्नमिति व्याहतं(।) विधिनिषेधयोरेकनिष्पर्याये द्वयोरात्मलाभाभावात् । अत एव पर्यायाणां भेद इति चेत् । केनचित् पर्यायेण भिन्नं प्रतीतमपरेण नेति समयः । येन न प्रतीतं तदर्थं कथं प्रवर्त्तनं । तस्यैव पर्याय इति चेत् । अप्रतीतत्वे कथं तस्यैवेति प्रतीतिः । प्रतीते(पि)न प्रवर्त्तत इति स एव दोषः(।) ततः सम्वृतिसदेव धर्मिधर्मलक्षणं । एवन्तर्हि । अनित्यः शब्दः शब्दत्वादित्यत्रापि स्यात् । यस्य व्यतिरिक्तं सामान्यं तस्य कस्मान्न भवत्यप्रतिज्ञार्थैकदेशत्वं । तत्सामान्ययोगस्य धर्मिशब्देनैव प्रतिपादनात् । इहापि (तर्हि) व्यावृत्तेः प्रतिपादनान्न भविष्यति ।**

सामान्ययोगो व्यावृत्तिरन्यस्मात्तस्य वा गतिः। सामान्ययोगस्तद्वित्तिं विना नैव प्रवर्त्तते[1] ॥३३६॥
तद्रूपस्य प्रतीतिस्तु प्रागेव विनिवारिता । तस्माद् व्यावृत्तिरेवात्र शब्दतः संप्रतीयते ॥३३७॥

**यदि सामान्ययोगः शब्दतो विशेषाणां प्रतीयत इत्यभ्युपगमः । स तर्हि कथं व्यक्त्यप्रतीतौ प्रतीयते । यस्यैव भोजनं तस्यैव भग्नभाण्डभागिता । स्वरूपन्तु विशेषाणां न प्रतिपादनार्हमिति प्रागेव निर्ण्णीतं । तस्माद् व्यावृत्तिरेव शब्दार्थ इति स्थितिः ।**

---

[1] B. प्रतीयते

ननु व्यावृत्तिरपि व्यावृत्तवस्तुप्रतीतिमन्तरेण कथं प्रतीयते। यदि प्रतीयते किं व्यावृत्त्या(।) अन्यथाऽनुपपत्त्या तर्हि व्यावृत्तिकल्पनेति किन्न सामान्याभ्युपगमः। प्रतीत्यनुसारेणाभ्युपगम इति न (?) सामान्यस्य।

ननु किमहं व्यावृत्तिं प्रतिपद्ये इति लोकस्य प्रतीतिः। विलक्षणत्वप्रतीतेः। प्रतीतिरेवेति न दोषः। तथा हि (।)

यद्यनीप्सितभेदेन न प्रतीयेत शब्दतः। तद्वस्तु न विभागेन प्रवर्त्तनसमागमः ॥३३८॥

अवश्यं हि विजातीयविलक्षणेन रूपेण प्रतिपत्त्या भाव्यमन्यथानभिप्रेतपरिहारेण न प्रवर्त्तेत। सामान्यलक्षणादेव तस्यानभिप्रेतविलक्षणतेति चेत्। स्वयमतथाभूते कथं धर्मान्तरयोगेपि तथाभावः। तद्योगादस्य तथा प्रतीतिरिति चेत् (।) अतद्भूतस्यान्ययोगे स्वरूपेणाप्रतीयमानस्य प्रतीतिरेव न युक्ता। स्वरूपेण चेद् विलक्षणत्वगतिः। व्यर्थकस्तर्हि सामान्ययोगः। स एव भेदो न लक्ष्येत यदि सामान्यन्न भवेत्। सामान्यानां तर्हि कुतो भेदोपलक्षणं। सामान्यान्तरयोगेऽनवस्था। स्वरूपत एवोपलक्षणे व्यक्तीनामपि स एव प्रसङ्ग इति व्यर्थकं सामान्यं। द्वयोश्च यदा भेदप्रतीतिस्तदा कथं न ह्येकत्र सामान्यम्वर्त्तते। तस्मादवश्यमनेन व्यक्तीनां भेदः प्रत्येतव्यः। स च विजातीयाद् भेदः सर्वेषामेवेति तदेव सामान्यं।

ननु जातिमन्तरेण स एव सजातीयविजातीयभेदः कथं। तथा हि।

व्यक्तेः परस्परं भेदे सामान्यं न परस्परं। व्यक्तिभेदो भवेदेव तस्य नास्ति प्रतीतता ॥३३९॥

व्यक्त्यपेक्षया भेदे यथा शावलेयबाहुलेययोः कर्काद् भेदस्तथा कर्कशावलेययोरपि बाहुलेयादिति तयोरपि समानजातिताप्रसङ्गः। न सर्व्वदर्शनं येन सर्व्वदर्शी करणेन संकेत(व्यक्ती)करणे विभागो भवेत्।

तदेतदपि न युक्तं नायुक्तं यतः

सामान्यस्यापि सद्भावे न दोषोयन्निवारितः।
व्यक्तिव्यङ्ग्यं हि सामान्यमिष्यते न स्वरूपतः (।)३४०॥
व्यक्तिशून्यप्रदेशादौ तस्य व्यक्तेरदर्शनात्। व्यक्तिरेव ततोपेक्ष्या सा च सर्व्वा न दृश्यते ॥३४१॥
ततस्तत्रापि[1] संकेतक्रियाव्याप्तिर्न्न सिध्यति।

सामान्यमप्युपलक्ष्यैव संकेतो विधातव्यो व्यवहर्त्तव्यम्वा। न च सामान्यमुपलक्ष्यते व्यक्तिमन्तरेण। सकलव्यक्तिदर्शने हि नियतसामान्यदर्शनादनाकुलः संकेतो भवेत्। तदापि व्यक्तीनामेव दर्शनाद् व्यर्थकमेव सामान्यं(।) तथा ह्येकव्यक्तिदर्शनेन संकेतोयं गौरिति कथं प्रतिनियतसामान्यप्रतीतिः। नहि पशुत्वादिसामान्येषु कस्यचित् सामान्यविवेकेनोपलक्षणं। गोत्वमत्र संकेतविषय इति चेत्। किन्तद्गोत्वमिति न विवेकः कथं क्रियतां। यदेवंभूतव्यक्त्यभिव्यङ्ग्यमिति तेन व्यक्तीनामेवं भूतत्वमितीतरेतराश्रयदोषः। तत्सामान्योपलक्षणे व्यक्तीनामेकत्वं। व्यक्त्येकत्वे च प्रतिनियतसामान्योपलक्षणम्। गौर्गौरिति स्वयमेव विवेक इति चेत्। न(।) गौरिति सामान्यस्य कर्कादिष्ववृत्त्यैवोपलक्षणात्। यत्र गौरिति

---

[1] B. अ

बुद्धिस्तदेव गोत्वमिति प्रतीतिरिति चेत् । नन्वविभावितप्रमेयरूपा बुद्धिः कथं प्रमेयमुपलक्षयेत् । नहि वर्ण्णसंस्थानव्यतिरिक्तमस्यां प्रमेयमुपलक्षयामः । तदेव सामान्यमनुगतत्वादिति चेत् । न(।) अनुगमस्यासम्भवात् । नहि वर्ण्णस्यान्यव्यक्त्यनुगतं रूपं । एकव्यक्तिदर्शनेपि तदनुगमप्रतीतिप्रसङ्गः[1] । तथा च सर्व्वव्यक्तिप्रतिपत्तिः स्यात् । व्यक्तिव्यङ्ग्यत्वान्न सामान्यं तथा प्रतीयत इति चेत् । सर्व्वथा तर्हि न प्रतीतिः । यावद् व्यक्तिदर्शनं प्रतीयत इति चेत् । न । सामान्यस्य तावन्मात्रत्वाभावात् । तथा चेत्[2] सामान्यं व्यक्तय एवेति न सामान्यमपरं (।) तथाभूतज्ञान[3]जननमेव सामान्यमिति प्रतिवचने । तदन्यव्यावृत्तिरेव सामान्यमिति स्यात् । बहूनान्तदन्यव्यावृत्तिरेव सामान्यं (।) नहि तद्विजातीयव्यावृत्तिमात्रादपरं सामान्यमुपदर्शयितुं शक्यं विजातीयतापि तदितरव्यावृत्तिरेव । यथैव तस्मादेको भिन्नस्तथा परापरोपीति निदर्शनन्नान्यथा । सामान्यन्तु न शक्यं निदर्शयितुमिदन्तदिति । अभिन्नत्वान्नैव निदर्शनमिति न प्रत्युत्तरं तदभावप्रसङ्गात् । नहि व्यक्तीर्न्निरस्य सामान्यं व्यवस्थापयितुं शक्यं व्यवहाराभावप्रसङ्गात् । सामान्यनिरासेप्येवमेवेति (।) न युक्तं (।) व्यवहारस्य(न्य)व्यावृत्तिनिबन्धनस्यापि सम्भवात् । अकर्माद्रव्यवत् । सामान्यानामपि व्यावृत्तिरेव परस्परं व्यवहारहेतुः ।

अथ व्यक्तियोगो भेदव्यवहारहेतुः परस्परं सामान्यानां तथापि दोष एव । यतः ।

स्वरूपेण न भिन्नञ्चेदन्यस्माद् भिद्यतां कथं ।
　　　शुक्लयोगात् परः शुक्ल इति भेदः प्रतीयते[4] ॥३४२॥

न खल्वन्यस्य भेदोऽन्यत्र समवैति । समवैत्येव व्यक्तिसामान्ययोः समवायसम्बन्धादिति चेत् । सामान्यस्याभेदो व्यक्तौ समवेत इति व्यक्तीनामेवाभिन्नता । ततः सर्व्वसामान्ययोगाद् गौरपि स्यादश्वादिकः । अपि च । गोःसामान्यं गोत्वं व्यक्तीनाञ्च स्वरूपं सजातीयविजातीयानां न भिद्यते परस्परं । ततः कथं व्यक्तयः सामान्यस्य भेदिकाः ।

अथ स्वरूपादेव भिन्ना व्यक्तयो विजातीयाभ्यः । स एव तर्हि भेदः सामान्यमस्तु किमपरेण । सामान्यस्याभ्युपगमेपि स एव व्यक्तिभेदः सामान्यस्य भेदकः सामान्यान्तरेभ्यः (।) स तर्हि सिद्धोपस्थायी सामान्यविशेषः । अथ स्वरूपेणैव सामान्यम्भिन्नं सामान्यान्तरात् । तद्योगाद् भेदः सामान्यवतां । यथा शुक्लं रूपं स्वयमेव पटस्तु[5] तद्योगादिति (।) तदपि न सङ्गतं । यतः ।

वर्ण्णरूपं सितं नैव क्वचित् केवलमीयते । ततस्तस्य स्वयं शुक्लरूपता कथमीयते ॥३४३॥

द्रव्यस्थमेव सर्व्वदा सितादिकं ततः पृथगपरिदृश्यमानं स्वयमेव तद्रूपमिति कथं प्रतीयते केन चित् । द्रव्यादेव सा तस्य शुद्धतेति[6] न किं मतं (।)

## (४) द्रव्यनिरासः

ननु तस्य यदि द्रव्याच्छुक्लता स्वरूपं तर्हि किन्तस्य द्रव्यस्यापि तर्हि किं रूपमिति स एव दोषः । द्रव्यमित्येव प्रतीयमानमिति चेत् द्रव्यमित्यपि वर्ण्णसंस्थानसंस्पर्शिनी न (?)

[1] B. ०सङ्गात्　[2] B तथात्वे　[3] B तथा च तज्ज्ञान
[4] B प्रगीयते　[5] B घटः　[6] B शुक्लतेति

प्रतीतिः । वर्ण्णसंस्थानञ्च गुण एवेति । तदपरं द्रव्यं कथं भूतं प्रतीतिविषयः । न च संस्थानमपि वर्ण्णाद्यतिरिक्ततां स्वीकरोति । वर्ण्ण एव तथा वर्त्तुल(त्व)ादिरूपेण प्रतिभासते ।

ननु द्रव्यमपि प्रतिभासत एव । तथा हि । स्पर्शनज्ञानेनापि स एवायं घट इति एकतयावभासनं । न च गुणमात्रे प्रत्यभिज्ञानं अन्यथा रूपं स्पर्श इति स्यात् । न च स्पर्शनग्राह्यं रूपं युक्तं तस्माद् द्रव्य एव प्रत्यभिज्ञानं युक्तिमत् । तस्माद् यद्यतो भिन्नविषय-ज्ञानग्राह्यं ततः तद्भिन्नं तद्यथा घटात्पटः । भिन्नविषयज्ञानग्राह्यञ्च द्रव्यमिति स्वभावहेतुः ।

अत्रोच्यते ।

न रूपादिविविक्तेर्थे प्रत्यभिज्ञानदर्शनं । न ह्यस्मरत एवास्ति पूर्व्वप्रत्ययगोचरं ॥३४४॥

न तावद्दर्शने घटादिकस्य प्रतिभासः । नापि स्पर्शविज्ञाने प्रथमं । प्रथमं ह्यवयव-मात्रकमेव प्रतिभाति तच्च परावयवाभावेपि तथैवावभासते । न चासौ घटः । निखिलदि-ग्विभागावयवव्यापिनो घटावयवित्वात् । नापि रूपमात्रं घटः । रूपसमवायिकारणस्य तथा व्यपदेशात् । प्रत्यभिज्ञानस्य च तदाऽभावात् ।

अथापरापरावयवगुणान्तरादि प्रतिभासनेऽवयविग्रहणमिति मतिः ।

तदपि नास्ति । यतः ।

एकदेशान्तरस्यैव तदा ग्रहणसम्भवे । न संस्थानावयविनो ग्रहणस्यास्ति सम्भवः ॥३४५॥
तथा गुणान्तरस्यापि नष्टेपि स्मरणोदयः । अनुमानाद् गतिर्यातु नाप्रत्यक्षपुरःसरा ॥३४६॥

यदा घटादावयवगुणान्तराणामुपलब्धिस्तदा गुणावयवान्तराणा[1]मनुपलम्भे कथमव-यविनां । न तावन्मात्रं घटः ।

## ( ५ ) प्रत्यभिज्ञानिरासः

अथ स्मरणसहायप्रत्यभिज्ञानतो घटाद्यवयविपरिज्ञानं तदावयवि[2]गुणान्तरापोद्धारे कस्तत्र घट इत्यपि स्यात् । अवियोगस्तु परस्परमेकसामग्र्यधीनत्वात् । न चावियोगग्राहकं प्रमाणमस्ति परस्परपरिहारेणोपलम्भात् । अवियोगस्तु स्मरणप्रत्यभिज्ञानप्रत्ययग्राह्यः(।) न च स्मरणप्रत्यभिज्ञानयोः पृथगप्रामाण्ये समुदायः प्रामाण्यं प्राप्नुयात् ।

ननु शिविकोद्वहने पृथगशक्तानामन्यथा शक्तिरुपलभ्यते । न । तत्र तेषां कार्यजन-नात् तथाभूतपूर्व्वकारणजन्यस्वरूपमेव शक्तिर्न व्यतिरिक्ता । इह तु स्मरणप्रत्यभिज्ञयोः किं कार्यं । अवयविप्रतीतिरिति चेत् । न । तद्व्यतिरेकेणापरप्रतीत्यभावात् । अथ प्रतीत्यन्तरमुवेति निश्चयरूपं(।) तदसद्(।) अप्रमाणन्निश्चयोऽनिश्चय एव । न खल्वप्रमाण-न्निश्चयः प्रमाणस्य व्यर्थकताप्राप्तेः ।

अथ तदानुमानेनावयवान्तरनिश्चये प्रत्यभिज्ञानादेकताप्रतीतेरवयविप्रतीतिः । न ह्यव-यवस्यावयवान्तरेणैकता गुणान्तरस्य वा तदन्तरेणेति ।

---

[1] B गुणान्तराणा [2] B. ०वयव

तदप्ययुक्तमनुमानस्य प्रत्यक्षपुरःसरत्वात् । (यथा)भूतं तत्प्रत्यक्षेण प्रतिपन्नं केवलन्तथाभूतमेवानुमानेन प्रत्येयं । ततः केवलस्यापृथग्भूतस्य[1] प्रत्यक्षेण प्रतीतेस्तथा भूतस्यैवानुमानादपि प्रतीतिः । ततश्च ।

एकत्वं प्रत्यभिज्ञानादन्यथा दृष्टवस्तुनि । प्रत्यक्षेण कथं यायात् प्रतीतिपथमाञ्जसं ॥३४७॥

न हि प्रत्यक्षेणान्यथा प्रतिपन्नं प्रत्यभिज्ञानसहस्रेणापि प्रत्येतुमन्यथा शक्यं । प्रत्यभिज्ञानमपि प्रत्यक्षमेवेति चेत् । न (।) अनुमानविषये प्रवृत्तेः । तच्चानुमानमनेकविषयं(।) प्रत्यभिज्ञानं कथं व्यवहारहेतुरिति चेत् । प्रमाणत्वेनैवेति वदामहे । प्रमाणता चानुमानत्वेन । अनुमानेनैव तर्हि तदेकत्वं ततोवयवी सत्यताभाक् प्रसिध्यतीति नः पक्षसिद्धिः । न(।) पारमार्थिकस्यैकत्वस्याप्रसाधनात् । तदर्थक्रियाकारितयैकत्वं तत्रेति न परमार्थः । न च तेनैव सार्थक्रिया कर्त्तव्येति नियमोऽन्यन्तरेणापि दाह(क)स्य क्रियादृष्टेः । मुख्याभावात् कथमुपाचरितमेकत्वमिति चेत् । अनादिवासनात उपचारपरपरंपरैवैषेति न दोषः ।

अथवा प्रथमं दृष्टौ मुख्यमेकत्वमुच्यते । तदध्यारोपतः पश्चाद् भक्तितोर्थक्रियाकृतः[2] ॥३४८॥

तस्माद् धर्मधर्मिणोरपोद्धारपरिकल्पनातस्तत्त्वान्यत्वे भवतो न तु वास्तवे । तत्त्वतो न भेदो भेदस्तु बुद्धिपरिकल्पितापोद्धारतः । न चा(साव)पोद्धारः प्रत्यक्षतो नापि तत्पूर्व्वकानुमानतोऽपि त्वनादिवासनाकृतानुमानपरंपरागत इति न परमार्थः । अस्ति तर्हि तत्त्वान्यत्वं कस्मात् प्रतिषिध्यत[3] इति चेत् । न(।)

परमार्थविचारेषु तथाभूताप्रसिद्धितः । तत्त्वान्यत्वं पदार्थेषु सांवृत्तेषु निषिध्यते ॥३४९॥

इत्युक्तं । न हि परमार्थत्वेनाभेदः । सम्वृत्यैव भेद इति **दिगम्बरदर्शनं** । अपि तूभयं परमार्थ इति ।

अत एवाह ।

**अनुमानानुमेयार्थव्यवहारस्थितिस्त्वियं ।**
**भेदं प्रत्ययसंसिद्धमवलम्ब्य प्रकल्प्यते[4] ॥१८३॥**

स्यादेतत्( ) यदि न भेदः कथमनुमानानुमेयव्यवहारः । आपोद्धारिकभेदभावात् । सांवृतभेदाश्रयात् । नहि सांवृतो(भेदो)नाश्रीयते । परमार्थिकश्चाभेद इति (।) केवलं सम्वृतिभेदेन(।)विसम्वादः । परमार्थे च न व्यवहार इत्युभाभ्यां प्रयोजनं(।) तस्मात् यदा (?)

**यथास्वं भेदनिष्ठेषु प्रत्ययेषु विवेकिनः ।**
**धर्मो धर्माश्च भासन्ते व्यवहारस्तदाश्रयः ॥१८४॥**

नान्यथानुमा(ना)दिव्यवहारः । तथा चाह । सर्व्व एवायमनुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेनेति व्यावृत्तिभेदतो भेद एव शरणं ।

**व्यवहारोपनीतोत्र स एवाश्लिष्टभेदधीः ।**
**साध्यः साधनतां नीतस्तेनासिद्धः प्रकाशितः[5] ॥१८५॥**

---

[1] B. केवलस्य पृथग्भूतस्य [2] B. कुत [3] B. प्रसिध्यत
[4] B. M. ०लम्ब्यावकल्प्यते—हे. [5] B प्रसिद्धितः

नहि व्यावर्त्तमानभेदेन व्यावृत्तीनां भेद एकत्वात्तस्य । यतस्तु व्यावर्त्तते तद्भेदात् । तत्राशब्दव्यावृत्त्या शब्दो धर्मी । अकृतकव्यावृत्त्या तु कृतकत्वं धर्मः । साधारणासाधारणत्वेन भेदात् । न शब्दाशब्दत्वयोस्तथा (।) तत्कथं भावप्रत्ययो भेदाभावे भवेत् (।) भवतु वा पर्याय एव स्यात् । भावप्रत्ययवाच्यत्वादेव भेद इति चेत् । न(।)इतरेतराश्रयत्वेन दोषाद् । षष्ठीसमर्थाद् भावप्रत्ययः । भावप्रत्ययाद्भेदे षष्ठीसम्बन्धतेति । अपि च । अर्थनिमित्तकेन नाम शब्देन भवितव्यं न शब्दनिमित्तकेनार्थेनेति । एवम्भूत एवासावर्थः । यतः । शब्दप्रमाणका वयं (।))यच्छब्दाः प्राहुस्तदस्माकं प्रमाणं । शब्दान्तरेण च प्रतिपाद्यमानोसावर्थोन्य एव । एवन्तर्हि पर्यायताभावप्रसङ्गः । तस्मादनित्यः शब्दः शब्द(त्वा)दिति (।) स एव शब्दोऽविद्यमानभेदधीः । साध्यधर्मी सन् साधनतां नीत इत्यसिद्धः । अपि च । शब्दत्वादनित्यता यदि तर्त्हि शब्दत्वं शब्द इत्येव प्रतीतं । किं पुनरुच्चार्यते । पुनरुच्चारणं धर्मप्राधान्यार्थमिति चेत् । न । फलाभावात् । धर्मिप्राधान्येपि भवत्येव हेतुः (।) अनित्यः शब्दो यतः कृतक इति । प्रदीपन्यायेन तु नानुमानव्यवहारः । ततः पुनरुक्तं नाम निग्रहस्थानं । भेदविवक्षायामसिद्धमेवेति स्थितमेतत् ।

**भेदसामान्ययोर्द्धर्मभेदादङ्गाङ्गिता ततः[1] ।**
**यथाऽनित्यः प्रयत्नोत्थः प्रयत्नोत्थतया ध्वनिः ॥१८६॥**

यतोयमभेदे साध्यसाधनयोरभिन्नव्यावृत्तिकतया दोषस्ततो भेदसामान्ययोर्व्यावृत्तिभेदादङ्गाङ्गिता साध्यसाधनभावेन न विरुध्यते । न ह्यभेदभावी दोषः संभवति भेदभावे । नहि बधिरदोषः सकर्णकस्य । तस्मादनित्यः प्रयत्नानन्तरीयकः शब्दः प्रयत्नान तरीयकत्वादिति नासिद्धतादोषः । शब्दगतं हि प्रयत्नानन्तरीयकत्वं धर्मिशब्दाशब्दगतं हेतुरिति प्रतिपन्नः साध्यसाधनभेदः । शब्दगतं हि प्रयत्नानन्तरीयकत्वं प्रयत्नानन्तरीयक(त्व)ान्तरादपि भिद्यते । सामान्यरूपेण तु विवक्ष्यमाणं न तदन्तराद् भिद्यतेऽपि त्वप्रयत्नानन्तरीयकत्वादेव । ततो व्यापित्वाव्यापितया भेद एव । यथा वृक्षत्वशिंशपात्वयोः । न ह्यव्याप्येव व्यापि भवति । तेन शब्दविशेषणमव्यापि धर्मि तदतद्गतं हेतुः व्यापित्वेन भेदात् । व्यापित्वाभावेन तर्हि नास्ति शब्दत्वस्य भेद इति । सोयमनन्वयदोष एव प्राप्तोऽतः शब्दत्वादित्यत्र हेतावनन्वयदोष एव परिस्फुटो न त्वसिद्धतादिदोषः । असिद्धतायामप्यनन्वयित्वमेव कारणमिति स एव दोषः परिस्फुटो युक्तः ।

नैतदस्ति (यतः) ।

नैषानन्वयिता दोषो नास्तीत्येतेन भण्यते । असिद्धतापि दोषोत्र भवत्येव परिस्फुटः ॥३५०॥

न खलु भेदाभावादसि(द्ध)ता(ऽ)भावः । ततोसिद्धतायां सत्यां तामवकल्प्य परदोषोद्भावनं न न्यायमनुधावति[2] । हेतुसम्भवे हि सति तदन्वयादितापरिचोदनागोचर इत्युक्तम् । तस्मादसिद्धतादोषो भेदाभावे भेदत्वदोष एवेति सांप्रतं मन्यामहे(।)ततः ।

**पक्षाङ्गत्वेप्यबाधत्वान्नासिद्धिर्भिन्नधर्मिणि ॥**
**यथाश्वो न विषाणित्वादेष पिण्डो विषाणवान् ॥१८७॥**

---

[1] T. तंगुस्-दङ-तंगुस्-चन्-ञिद् (=लिंगलिंगिता)    [2] B न्यायमनुबध्नाति

यदि नाम पक्षविशेषणं विषाणित्वं पिण्डान्तरव्यवच्छेदाय तथापि हेतुत्वं न विरुध्यते। साध्यप्रतिबद्धो हि हेतुस्तथा प्रतीयमानः साध्यसाधकः। स च प्रतिबन्धः साध्याङ्गत्वेपि न विरुध्यते। ततो हेतुरेव भिन्नधर्मिणि धर्मिविशेषणं साध्यकालाङ्गतायामपि।

**साध्यकालाङ्गता वा न निवृत्तेरुपलक्ष्य तत्।**

न खलु विशेषणं विशेषकालभाव्येवाङ्गम्। तदुपलक्ष्य प्रागेव निवृत्तः यथा कतरद्देवदत्तस्य गृहं यत्र काकः परिरारटीति। स इदानीं देवदत्तादिगृहमुपलक्ष्य निवृत्तोपि तदुपलक्षयत्येव कालान्तरोपि।

नन्वविद्यमानः कथमुपलक्षणं। तत्फलाया विशेषनिष्टाया बुद्धेः सम्भवात्। तस्मादुपलक्षण(त्व) प्रतिज्ञार्थैकदेशतया(ऽ)सिद्ध(ता)दोषभागी। यदि तर्हि भिन्नधर्मिणि सामान्यविशेषभावेन भेदान्न प्रतिज्ञार्थैकदेशासिद्धतादोषोऽभिन्नधर्मिण्येव दोष इति प्राप्ता श्रावणत्वादेरपि प्रतिज्ञार्थैकदेशता। कृतकत्वानित्यत्वयोश्च समानव्याप्तिकयोः।

न सदेतत्। यततेः (।)

**विशेषोपि प्रतिज्ञार्थो धर्मभेदान्न युज्यते ॥१८८॥**

न केवलं विषाणित्वादित्येवमादिकः। विशेषोप्यसाधारणोपि श्रावणत्वादिको न भवति धर्मभेदादेव।

ननु यत एवाशब्दाद् व्यावृत्त्या शब्द(त्वं) तावन्मात्रकादेव श्रावणत्वं। तथा चाह। "श्रोत्रग्रहणलक्षणः शब्द" इति। तत्कथमसति व्यावृत्तिभेदे धर्मभेद[1] इति।

तदसत्। यस्मात्।

परस्परान्तर्भावे हि धर्मभेदो न युक्तिभाक्। अर्थान्तराभिसंवधासम्बन्धे हि विवेकिता[2] ॥३५१॥

श्रवणज्ञानसम्बन्धादसम्बन्धादेव व्यावर्त्तनं श्रावणत्वं। शब्दत्वन्तु अशब्दसामान्यादेव व्यावृत्तिः। यद्यपि शाब्दो नास्त्यश्रावणस्तथापि सामग्र्यभावादश्रावणोपि पुरुषान्तरापेक्षया भवेत्। अशब्दस्तु न पुरुषान्तरापेक्षयापीति। नाश्रावणत्वव्यावृत्तिः(।)शब्दत्वं श्रावणत्वमेव तथा भवेत्। न शब्दत्वं। तस्य श्रावणाश्रावणसाधारणत्वात्।

एतेन यदाचार्यवचनं। ननु दृष्टः संघातानां[3] पारार्थ्यं संघातत्वात्। संस्कृतमनित्यं संस्कृतत्वादिति प्रतिज्ञार्थैकदेशो हेतुः। नात्र सर्व्वे संघाताः संस्कृतम्वा प्रतिज्ञार्थोपि तु चक्षुरादयस्तदेकदेशश्च दृष्टान्ताभावप्रसङ्गात्। अथ पुनः शब्दत्वमसाधारणं स्यात्। शक्यमेवं भवितुं। प्रतिज्ञार्थस्य ह्यसाधारणो धर्मः श्रावणत्वमसाधारणं युक्तं। न तु शब्दस्यान्यच्छब्दत्वमस्तीत्यसिद्धत्वमेव हेतुदोषं (।) तदुक्तं। उक्तं पक्षलक्षणम्।[4]

## § ६ हेतुचिन्ता

### १. हेतुलक्षणम्

हेतुलक्षणमुच्यते। तत्र च (।)

---

[1] B. धर्मिभेद　[2] B. विभिन्नता　[3] B. संहृतानां　[4] दशममाह्निकं (समाप्तं)

पक्षधर्मो यतो हेतुस्तदाभासाश्च भूयसा । तस्मात्तद्विस्तरः पूर्व्वं हेत्वाद्यर्थात् प्रदर्श्यते ।।३५२।।
सपक्षे सन्नसद् द्वेधा पक्षधर्मः पुनस्त्रिधा । प्रत्येकमसपक्षेपि सदसद्द्विविधत्वतः ।।३५३।।

ननु हेतुलक्षणमेव वक्तव्यं यः सन् सजातीय इत्यादिकं हेत्वाभासलक्षणञ्च । किमर्थं पक्षधर्मविस्तरनिर्द्देशः । हेतुर्हेत्वाभासो वा प्रायशः पक्षधर्म एव ततो विवेकेन हेतुहेत्वाभासलक्षण(स्य) स्पष्टनिर्देशार्थमादौ प्रभेदनिर्द्देशः । तथा सत्ययं पक्षधर्मो हेतुरयं विरुद्धोऽयमनैकान्तिक इति सुखेनाख्यायते गृह्यते च । अत एवाह ।

**पक्षधर्मप्रभेदेन सुखग्रहणसिद्धये ।**
**हेतुप्रकरणार्थस्य सूत्रसंक्षेपउच्यते ॥१८६॥**

पक्षधर्मप्रभेदेन यः संक्षेप उच्यते । स सुखग्रहणार्थं हेतुप्रकरणार्थस्यैव । हेतुप्रकरणार्थो[२] हेतुहेत्वाभासलक्षणनिर्द्देशस्तदर्थो हेतुहेत्वाभासत्वं । अत एव हेत्वाभासात्पूर्व्वमित्युक्तं हेतुश्चाभासश्च हेत्वाभासं । आभासश्च[१] प्रत्यासत्तेर्हेत्वाभास एव नाभासमात्रं ।

ननु च धर्मिधर्ममात्रतयोपसंह्रियमाणो धर्मः साधनं । न पक्षधर्मतया । अस्ति चात्र प्रदेशे वनगहनादौ धूम इति धर्मिमात्रे प्रदर्शनात् । न च धर्मिमात्रं पक्षो नहि धर्मी साध्यस्तस्य सिद्धत्वात् । धर्मविशिष्टो धर्म्यनुमेय इति वचनात् ।

स यमेतत् ।

समुदायार्थसाध्यत्वाद् धर्ममात्रेथ धर्मिणि । अमुख्येप्येकदेशत्वात् साध्यत्वमुपचर्यते ।।३५४।।

हेतुव्यापारविषयः समुदायः साध्यः । स च न पक्षः सिद्धत्वात् । तस्मादसिद्धसाध्यधर्मा धर्मी तद्विशेषणः पक्षः । कथमसिद्धं विशेषणमुपचारात् । प्रयोजनाभावादनुपचार इति न संगतं । सर्व्वधर्मिधर्मप्रतिषेधार्थत्वादिकं प्रागेव प्रत्ययादिति नोच्यते पुनः । तथा च चाक्षुषत्वादिपरिहारः ।

ननु चाक्षुषत्वं सजातीय एव सत् । न धर्मिधर्मः । तत्र धर्मिधर्मग्रहणादेव तस्य निरासः । नोपचाररहितेन धर्मिधर्मग्रहणेन साध्यधर्मिधर्मता लभ्यते । वैधर्म्यदृष्टा तद्धर्मिणोपि धर्म इति स्यात् । न (।) असंस्तदत्यय इति वचनात् । कथं हि तत्रैवासन्तत्रैव च सन्निति । ततः साध्यधर्मिपरिग्रहार्थमुपचारः । साध्यधर्मिधर्मग्रहणमेव तर्हि कर्त्तव्यं । न । तत्राप्युपचार एव शरणं । न ह्यसिद्धमनध्यारोपितं विशेषणं सम्भवति । पक्ष इत्यनेनापि तदेवोच्यत इति को विशेषः । संज्ञासंज्ञिसम्बन्धप्रतिपादने प्रयासाद् गौरवदोष इति चेत् । न । पक्षशब्दस्यापि साध्यपर्यायत्वात् । तथा च जनव्यवहारः । अयं ममपक्ष इदं ममाभिप्रेतमिति । तथा **चाचार्यः** ।

समुदायार्थसाध्यत्वाद् धर्ममात्रेथ धर्मिणि । अमुख्येप्येकदेशत्वात् साध्यत्वमुपचर्यते[२] ।।३५५।।

न ह्यनुपचरितः केवलो धर्मी पक्षः ।

ननु धर्मविशिष्टो धर्म्यनुमेयो न च तत्रोपचारसम्भवः । न जिज्ञासितधर्मविशिष्ट इति तत्राभिप्रायात् । तथानुमानमर्हत्यनुमेय इत्यर्थर्थं(?) भावात । यश्चानुमानमर्हति यश्च

---

[१] B. आभास इति
[२] प्रमाणसमुच्चये

जिज्ञासितविशेषस्तत्र साध्यमसिद्धत्वादुपचरितमेव। तस्मादुपचरितार्थ एव पक्षः। उपचरितसाध्याङ्गविशिष्ट एव धर्मीति यावत्।

ननूपचरितधर्मिविशिष्टो धर्म इत्यपि स्यात् पक्षग्रहणं साध्यधर्मिपरिग्र[?]र्थं साध्यधर्मिणो यो धर्मः स एव हेतुर्न विरुद्धोनैकान्तिको वा। तस्य पक्षस्य धर्मः पक्षधर्मः।

नन्वेतस्मिन् विशेषणविशेष्यभावे विशेषणस्य व्यवच्छेदकत्वात्। अन्यधर्मितानिषेधात् असाधारणता सर्व्वस्य स्यात्। नहि विशेषणमव्यवच्छेदकं। शब्दविशिष्टञ्च कृतकत्वं शब्दात्मकं कथं पटाद्यात्मकं[1] तत्र वा यायात्। व्यतिरेके कदाचिद् भवेदपि। न च व्यतिरेको धर्मिणो धर्माणामिष्यते। न च व्यतिरिक्तस्य कारणादन्यद् विशेषणं। तथा च सति सर्व्वः कार्यहेतुरेव भवेत्। तस्माद् विशेषणेऽसाधारणता। अविशेषणे त्वपक्षधर्मत्वादसिद्धतादोषप्रसङ्गः[2]।

नैतदस्ति। यतः।

अयोगं योगमपरैरत्यन्तायोगमेव च।
व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेचकः ॥१९०॥

यद्येक(प्रकार)एव व्यवच्छेद्यव्यवच्छेदकभावः स्यादयं दोषः। अनेक प्रकारस्तु स दृश्यते(।) क्वचिदयोगं व्यवच्छिनत्ति। क्वचिदपरैर्योगं। क्वचिदत्यन्तायोगमिति प्रभेदाः। व्यतिरेचकेन हि निपातेन व्यवच्छेदो विधातव्यो नान्ययोगव्यवच्छेद(ा)नियमेन अवधारणमात्रमेव हि तस्यार्थो न चान्यथावधारणे दोषः। कथमयम्विभाग एकाकारत्वेऽभिधानस्यार्थभेदाभावात्। न केवलस्यार्थभेदोपि तु संसर्गिभेदात्। संसर्गिभेदस्तु।

विशेषणविशेष्याभ्यां क्रियया च सहोदितः।

संसर्गिण एव च प्रधानं[3]। यतः।

विवक्षातोप्रयोगेपि तस्यार्थोयं प्रतीयते ॥१९१॥

यथाक्रममभिसम्बन्धः।' विशेषणेन सह उदितोऽयोगं[4] व्यवच्छिनत्ति। विशेष्येणान्ययोगं क्रियया त्वत्यन्तायोगमिति विशेषणादिपदान्येव चावधारणं प्रतिपादयन्ति। निपातास्तु द्योतकास्तैस्तस्यैव स्पष्टीकरणात्। तथा हि। घटेनोदकमानयेति। यदि कारणविशेषापेक्षा न स्यात् करणविशेषप्रयोगो व्यर्थको भवेत्। तथा कर्मादेरपीत्यवधारणं घटादिपदप्रतिपाद्यमेव। तानि च भिन्नानीत्यर्थभेदः।

ननु तेषां भेदादर्थभेद एव प्राप्तः साधारणञ्चावाधारणं प्रतीमस्ततोन्वयव्यतिरेकाभ्यामपोद्धारपरिकल्पनयाऽवधारणनिपातवाच्यमेव। न(।) तदप्रयोगेऽप्रतीतिप्रसङ्गात्। योहि येन विनापि प्रतीयते। स कथन्तस्यार्थः। कथन्तर्हि भेदाभिधायिनामभिन्नमभिधेयं। न च शब्दानां व्यवच्छेद एवाभिधेयः।

तस्य वस्त्वभिधायित्वात् व्यवच्छेदस्य चाभावरूपत्वात्।

नैतदस्ति।

---

[1] B. घटा [2] B. त्वपक्षत्व [3] B. प्राधान्यं [4] B. योगं

**व्यवच्छेदफलं वाक्यं यतश्चैत्रो धनुर्धरः।**
**पार्थो धनुर्धरो नीलं सरोजमिति वा यथा ॥१९२॥**

परस्परसम्बद्धार्थः पदसमुदायो **वाक्यं**। अत्र तु वाक्यपूरकं पदमेव वाक्यशब्देनोक्तं (।) तेषामेव व्यवच्छेदफलत्वात्। तदन्यस्य वाक्यस्याभावाच्च। यस्य(च)वाक्यस्य यत्फलन्तदेव तस्य प्रतिपाद्यं[1]। स एवार्थः। न च व्यवच्छिद्यमानव्यतिरेकेणान्यो व्यवच्छेदः। ततो व्यवच्छिद्यमानार्थप्रतीतेर्व्यवच्छेद्योपि तदन्यव्यतिरेकात्[2] प्रतीयत एवेति व्यवच्छेद एव प्रतिपाद्यः।

अथ वस्तु प्रतिपाद्यते व्यवच्छेदस्तु प्रमाणान्तरप्रतिपाद्योऽभावरूप आक्षिप्यते। स चाक्षिप्त एवकारादिना द्योत्यते।

तदप्यसत्। यतः।

कथमन्याभिधानेऽन्य आक्षिप्येतान्वयम्विना।
असम्बन्धेपि चाक्षेपेऽतिप्रसङ्गो(ऽ)निवारितः ॥३५६॥

यदि हि व्यतिरेकोव्यतिरेकवदव्यतिरेकी तादात्म्यादाक्षिप्येत। व्यतिरेकेपि सम्बन्धादाक्षिप्यत इति चेत्। न (।) व्यतिरेके पदार्थस्य प्रत्यक्षेणापरस्मादव्यतिरेकेण प्रतीतिप्रसङ्गात्। ततोऽभावप्रमाणान्तराद् व्यतिरेकप्रतीतावपि तदसम्बद्धतयैव प्रतीतिः स्यात्। न ह्यव्यतिरेकिणा[3] व्यतिरेकसम्बन्धः प्रत्येतुं शक्यः। अथैकसामग्र्यधीनत्वाद् व्यतिरेकेणैव सह पदार्थ उत्पद्यते। अव्यतिरेकेपि (।)

## (१) अभावविचारः

तदयुक्तं। यतः।

व्यतिरेकेण तस्यासौ पदार्थस्यान्वयात् स्वयं।
नहि भिन्नस्य सद्भावेऽभिन्नो(ऽसौ) भेदमर्हति ॥३५७॥

नहि विषाणस्येदं विषाणमिति विशेषणविशेष्यभावः। द्वयोरपि परस्परव्यवच्छेदेन समानकालभावित्वेन प्रतीतेः समुच्चय एव भवेन्न विशेषणविशेष्यभावः। परस्परोपकारित्वेन समानकालता। आधाराधेयाभावो विशेषणविशेष्य(भावस्य) निबन्धनमिति चेत्। न (।)औत्तराधर्येणाप्रतीतेः। व्यतिरेकमध्ये पदार्थः प्रतीयत इत्याधाराधेयभाव इति चेत् यद्येवन्न सम्बन्धप्रतीतिः। नहि यस्य मध्ये यो व्यवस्थितः स तस्येति व्यपदिश्यते। न हि घटस्यालोकोऽन्धकार इति वाव्यपदिश्यते। घटमध्ये वा व्यवस्थितो घटस्य घट[4] इति। अभावमध्यावस्थितिरवश्यम्भाविनी। नाभावमन्तरेण पटादि[5]व्यवस्थितिः तद्व्यापिताप्रसङ्गात्। अभावमध्येपि तर्हि न स्थितिरपराभावमन्तरेण व्यापित्वप्रसङ्गादेव। न स्वरूपेणैव ह्यसौ पदार्थोऽभावमध्येपि तिष्ठेत्। या या मध्यस्थितिः साऽधारव्यतिरिक्ताऽभावमन्तरेण न भवति। यथा पटमध्यस्थितिः। अभावमध्यस्थितिरपि स्थितिरिति

[1] B तस्याभिधेयं [2] B तदव्यतिरेकात् [3] B ०रेकिणां [4] B पट [5] B घटादि

**स्वभावहेतुः । अभावमध्यस्थितिः स्वयमेव तत्स्वभावत्वादभावस्य । नहि जतुनः काष्ट-संयोग इति तस्यापि काष्टेन संयोगेऽपरेण संयोजकेन भाव्यं स्वयमेव तथाभावात् ।**

**तदेतदसत् । यतः ।**

जतु[1]स्वभावतो वह्नेः काष्टयोगमवाप्नुयात् ।
अभावो न स्वरूपेण व्यापिमध्यक्रियाक्षमः ।।३५८।।

अव्यापी स पदार्थश्चेत् अभावः स्यादनर्थकः ।
अभावस्यापि व्यापित्वे तन्मध्येऽन्यस्थितिः कथम् ।।३५९।।

**स्वभावमात्रेण न व्यापिनो मध्यस्थयत्यभावोऽव्यापित्वप्रसङ्गात् । अव्यापिन एवेष्यन्त इति चेत् । किमिदानीमभावेन । अभावो हि सांकर्यं मा भूदितीष्यते । तच्च स्वयमव्यापित्वेनैव पदार्थानां प्रसिद्ध( म् ) इति व्यर्थताऽनिवार्या । अभावेन व्यापी कुतोऽभावसहितेन वा स्वाकारणेनेति को विरोधः ।**

**तदप्यसत् ।**

अभावोऽव्यापिनं कुर्यात् पदार्थं व्यापिनं यदि ।
सांकर्यं पूर्व्वमस्य स्यादन्यथात्वं कथं पुनः ।।३।६०।

**न खलु व्याप्यव्यापी विधातुं शक्यः । पूर्व्वं हि व्यापित्वे पदार्थसंकरः । अथ पूर्व्वन्नास्त्येव । स्वरूपमेवास्य तर्हि तथाऽन्यथाऽदृष्टेः । अथ स्वरूपेण न व्यापी नाप्यव्यापी । व्याप्तिप्रयोगाद् व्यापी । तदभावयोगादव्यापी । तथा चाह ।**

भिन्ना इति परोपाधिरभिन्ना इति वा पुनः । भावात्मसु प्रपञ्चोयं संसृष्टेष्वेव लक्ष्यते ।।३६१।।

**तदप्यसद् यतः ।**

अन्यथा यदि तस्यास्ति प्रतीतिर्द्वयवर्जनी । तदान्ययोगाद् (तद्) वस्तुद्वयभागिति गम्यते ।।३६२।।

**अन्यथा त्वेतत् स्यात् ।**

स च भावस्तदन्यौ च तयोश्च तथा परः । स्वरूपेण प्रतीयन्ते उपाधीनामनिश्रिताः ।।३६३।।
तन्मिश्रणप्रतीतिश्चेद् भ्रान्तिरेव भवेत्तथा । तथा[2]पदार्थाभावः स्यादविद्यासाधकं[3] भवेत् । ३६४।।

**स चाप्युपाधिमान्[4] भिन्नः स्वयमेवोपाधिभ्य इति व्यर्थकमपरोपाधिकल्पनं । उपाधेः स्वयमेव भिद्यते । उपाधिमदन्तरादुपाधित इति न प्रमाणमत्र किञ्चित् । यदि च स्वरूपेणैव भिन्नः, तदेव भिन्नत्वमुपाधिमदन्तरापेक्षायामपि । प्रत्यपेक्ष्य[5]मन्यदेवभिन्नत्वमिति चेत् । न तावता[6] भिन्नत्वानामुपयोगाभावात् ।**

स्वरूपभेदाद् भेदेन सर्व्वेभ्यो विनिवृत्तितः । अपरेणापि भेदेन कल्पितेनात्र को गुणः ।।३६५।।

**अथास्मादपि भेदोस्मादपीति मतेर्भेदकल्पना । नहि प्रमाणप्रसिद्धमनर्थकमपि शक्यं परिकल्पयितुं परित्यागविषयं । यद्येवमुपाधेरपि भिन्न इति प्रतीतेरपरो भेदोऽभ्युपगन्तव्यस्तस्मादपि भेद इत्यनवस्था भेदानाम् । स्वरूपेण भेदाभाव एव प्रसक्तः ।**

---

[1] B यत्तु [2] B तदा [3] ०विद्यामात्रकं
[4] B सन्, मन् [5] ०पेक्ष [6] B तावतां

**स्वागतं भवतु दोषः । नन्वयमेवाभ्युपगमः । नैतदस्ति ।**

स्वरूपेण हि भेदस्याभावेपि पररूपतः । न भेदः परता तस्य भेदाभावे भवेत्कथं[1] ।।३६६।।

**नहि स्वरूपेणाभिद्यमानं पररूपेण भिद्यते । तस्यापरत्वमेवागतं भेदाभावे । तस्य हि स्वरूपेणाभेदे पर एव नास्ति । तदभावात् कथन्ततो भेदः ।**

**अथ भेदकं स्वरूपेण भिन्नं ततोऽभिन्नमपि धर्मिरूपं भेत्स्यते ।**

**तदप्ययुक्तं । यतः ।**

यदि तस्य स्वरूपेण भेदोन्यस्याप्यसौ भवेत् । अपसर्प्पतो हि दूरेण न शक्यमुपसर्प्पणं ।।३६७।।

**यदैव तस्मादपरो भेदकः स्वरूपेण भिद्यते । तदा तदन्यस्य दैवरक्ताः किंशुकास्त-वकावतंसकाः । न भिन्नाभिन्नेन भवितुं शक्यं । न खलु भेदः परमभिन्दन(?न्) भेदो भवति । तस्मादेकस्य स्वरूपभेदे भेदस्य भेदवतोपि तथा स इति न परस्माद् भेदः । तस्मात् स्वरूपमेवापरासंसर्गिस्वभावतो भेद इति तादात्म्यमेव भेदार्थस्वभावयोरिति भेद एव वाक्यार्थः । स एव तात्पर्येणाभिधातव्योऽन्यथा पदार्थाभिधानमपि न भवेत् । आकुलस्य पदार्थत्वायोगात् । अर्थक्रियाकारि हि वस्तु । न च सकलसंसर्गेऽर्थक्रिया सम्भविनी । स च पदार्थान्तराद् भेदः स्वरूपतः प्रत्यक्षगम्यस्तत्र संकेतकरणे स एव शब्दगम्य इति व्यवच्छेद एव शब्दस्याभिधेयः । नहि व्यावृत्तमव्यावृत्तयाभिधातुं शक्यं ।**

## (२) सामान्यनिरासः

**ननु स्वरूपगता सा व्यावृत्तिस्तत्र स्वरूपानभिधाने कथन्तदव्यतिरिक्तव्यावृत्त्यभिधानं । अथ व्यतिरिक्ता व्यावृत्तिस्तदासौ स्वव्यक्त्यनुगतत्वाज्जातिरेव भङ्ग्यन्तरेण प्रतिपादिता भवेत् । तथा चानुगतमेव रूपं प्रतिपाद्यं न व्यावृत्तिरिति कथं व्यवच्छेदफलं वाक्यम् ।**

**नास्त्येतद्यतः ।**

स एव हि तदन्यस्माद् व्यावृत्तो घट उच्यते । न नु सामान्ययोगेन(।) व्यावृत्तस्यैव भिन्नता ।।३६८।।

**प्रतिपादितमेतत् । नाव्यावृत्तं स्वयन्तदपरयोगाद् व्यावृत्तं । सामान्ययोगे हि सामान-मेव स्यात् । तद्वा न भवेदसमानस्य समानता परयोगेपि न युक्ता ।**

स्वयमेव समानञ्चेद वृथा सामान्यकल्पना ।
(अ)समानस्य सामान्यमभावेपि न तदात्मता ।।३६९।।

**यदि नाम सामान्यवत् स्यात् । न तु समानमेव । तस्य स्वेन रूपेण प्रतिभासनात् । भेदावभासने हि सामान्यवदिति युक्तं । अभेदावभासने सामान्यमित्येव । यदि न भेदग्रहणं सामान्यमित्येव स्याद्विशेष इति वा । अथ भेदेनापि प्रतिभासनमभेदेनापि ।**

**तदसत् । यस्मात् ।**

भेदेन प्रतिभासश्चेत् तेन सामान्यवद् भवेत् । अभेदेनावभासश्चेत् सामान्यं तेन तद् भवेत् ।।३७०।।

---

[1] B. हि तत्कथं

**न ह्येकस्य रूपद्वयं युक्तं भिन्नमभिन्नञ्च । न तत् सामान्यन्तेनैव रूपेण व्यक्तेर्भिन्नं तेनैव रूपेणाभिन्नं किन्तु केनचिद्रूपेण भिन्नं केनचिद् रूपेणाभिन्नमिति व्यवस्था ।**

**तत्सत्त्येतरत् । यतः ।**

न च द्विरूपं सामान्यं परस्परविभेदतः । स्यातां द्वे वस्तुनी तत्र सामान्यमपरं भवेत् ॥३७१॥
सामान्यरूपयोर्भेदाद् व्यक्तितैव प्रसज्यते । व्यक्तिसामान्यताप्यस्य रूपभेदान्न युज्यते ॥३७२॥

**यदि सामान्यस्य द्वे रूपे केनचिद्भिन्नमभिन्नमपरेणेति । तथा परस्परविभिन्नत्वात्तयोर्व्यक्तिरूपता भवेत् । नहि भिन्नस्वरूपादपरा व्यक्तिः । व्यक्तित्वयोगाद् व्यक्तिरिति चेत् ।**

व्यक्तित्वं ननु सामान्यं तद्योगात् स्यात् समानता ।
तस्य व्यक्तेरभिन्नत्वे व्यापिता न प्रसज्यते ॥३७३॥
रूपद्वयस्य कल्पे च प्रसङ्गः पूर्व्ववद् भवेत् ।

**तस्माद् भिन्नतैव व्यक्तीनां रूपं । ततो व्यक्तित्वेन तत् सामान्यं ।**

**अथ सामान्ययोगात् सामान्यं तत्रापरं सामान्यं । ततस्तद् द्वयं (सामान्यवन्न) सामान्यं । नहि सामान्यवदेव सामान्यं । ततः सामान्यरूपद्वये समानमिति बुद्धिः । सा न व्यक्तौ[1] नहि सामान्ययुक्ता सामान्यरूपेण भिन्नेन व्यवस्थानात्[2] ।**

**अथ भेदसामान्ययोर्भिन्नयोरपि केनचिद्रूपेण विभिन्नताऽपरेणाभिन्नतेति । तयोरपि भेदे परं सामान्यमुपप्लवते । तथा सति सामान्यसामान्यरूपयोर्व्यक्तिता । ततः पूर्व्वसामान्यसमानता न स्यात् सामान्यायोगादन्य[3]सामान्येन व्यवधानात् ।**

नैकस्यापि ततः सामान्ययोग इत्यसमानता[4] । ततः समानाकारेयं प्रतिपत्तिरवस्तुका ॥३७४॥

**नहि सामान्यानां स्याद् वादिनां परिसमाप्तिरिति । सर्व्वाव्यक्त एव प्रतिपत्तिगोचरः । परिसमाप्तावपि व्यक्त एव । नहि तत्र सामान्यमनिच्छतां सामान्यसम्भवः पूर्व्वत्रापि । अन्त्यसमानत्वे हि पूर्व्वकं सामान्यं तदभेदात् पूर्व्वकमपीति ततः सामान्यबुद्धिः सालम्बना स्यान्न चैवमिति यत्किञ्चिदेतत् । एवम्भेदानामपि यदि भेदो भिन्नः सर्व्वभेदव्यापी । ततोऽभिन्नानां परस्परं भेदयोगेपि तद्युक्तता नाभेदबाधनीति सकलमभिन्नमेव भवेत् । सामान्यतद्वतां भेद इति चेत् । न (।)**

व्यक्त्यभेदे न सामान्य व्यक्तिरेव तु तद् भवेत् ।
सा च स्वतो न भिन्नेति ततोऽद्वैतं प्रसज्यते ॥३७५॥

**तस्माद् व्यावृत्तिरेव सामान्यं ।**

**नन्वव्यतिरिक्ता व्यावृत्तिर्यथा विजातीयात्तथा सजातीयाभिमतादपि । तत्कथं सा विजातीयादेव निर्भक्ष्य शक्या प्रत्येतुं[5] । सत्यमेतत् ।**

यदि स्वरूपसंग्राही सकलः प्रत्ययो भवेत् । अभिन्नो न विभेदेन[6] शक्यो भेत्तुं कथञ्चन ॥३७६॥

---

[1] B. स्यान्न व्यक्तौ ।　　[2] B. व्यवधानात्　　[3] B. दन्य
[4] B. तत्सामान्य　　[5] B प्रतिपत्तु　　[6] B हि भेदेन

**यदा तु पुनः ।**

भ्रान्तिमात्रादपि प्राप्तिर्व्य[1]वहारजगद्गतिः ।

तदा निर्भक्ष्यते(ऽ) भिन्नं भिन्नसंसृष्टिसम्भवि ॥३७७॥

**स्थाणौ हि दवीयोदेशव्यवस्थितेन न भेदः सन्नपि प्रत्येतुं शक्यः । संस्थानमात्रकस्य तत्र प्रतिपत्तेः । न संस्थानमात्रं विशेषरहितं सम्भवति[2] । दूरदेशतया तु तस्याप्रतिभासने प्रतिभासमात्रकं समानं सर्व्वत्रोत्पद्यत इति व्यक्तिव्यतिरिक्तं तदेव सामान्यं । दृश्यविकल्प्यार्थैकीकरणेन तदेवाभिन्नमिति सम्वृ.या भवति भिन्न । भिन्नता न परमार्थतः । परमार्थत एव(।)भेदः कस्मान्न भवति । एकीकरणकल्पनायां द्वयोरप्रतिभासनात् । अस्तु तर्हि भेदः पारमार्थिकः । सामान्यस्यैव प्रतिभासनात् । यच्च व्यतिरिक्तं प्रतिभासते तद्व्यतिरिक्तमेव ।**

**तदप्यसत् । यतः ।**

व्यक्त्यसंसर्गिरूपस्य प्रतिभासेन तद्भवेत् । सामान्यं नहि सामान्यं केवलं व्यक्तिरूपवत् ॥३७८॥

**अथ केवलमपि समानतायोगात् सामान्यं । तदप्यसत् ।**

भिन्नसामान्ययोगे हि सामान्यानां समानता । ततः परन्तु सामान्यं व्यक्तिरेव परिस्फुटा ॥३७९॥

**भ्रान्ताप्रतिपत्तिरेव तर्हि सामान्यं । तद्व्यक्तीनां समानत्वात् व्यक्तौ तर्हि प्रतिपत्तिः प्रवृत्तिश्च न स्यात् । नहि भ्रान्तबुद्धिस्वरूपप्रतिपत्तौ व्यक्तिप्रतिपत्तिप्रवर्त्तने युक्तेऽतिप्रसङ्गात् (।) भ्रान्त्या प्रवृत्तिरिति चेत् । न । अपरस्याभ्रान्तेरभावात् । तदापि वा स्वरूपप्रतिपत्तिरेवेति[3] । न व्यक्तिप्रतिपत्तिः । ततः परापरभ्रान्त्यभ्युपगमेऽनवस्थानादप्रतिपत्तिरेवेति । यत्किञ्चिदेतत् । यदि तर्हि न सामान्ययोगो व्यतिरिक्तेतरतया नाप्युभयरूपतया न भ्रान्तिरूपतया[4] । नापि व्यक्तिप्रतिपत्तिः । कस्तर्हि शब्दलिङ्गाभ्यामर्थप्रतिपत्तावुपायः ।**

व्यवच्छेदफलत्वेन पारिशेष्यादुपायता । शब्दादर्थगतौ न्यायः क इवान्यो भविष्यति ॥३८०॥

**ननु पारिशेष्याद् वस्तुव्यवस्थापि तु प्रमाणेन । न च व्यवच्छेदप्रतीतिग्राहिप्रमाणमुपलभ्यते ।**

**अत्रोच्यते ।**

तदन्यव्यतिरेकेण प्रवृत्तेरुपलब्धितः । व्यवच्छेदफलं वाक्यमिति किन्नावधार्यते ॥३८१॥

**तदन्यव्यवच्छेदेन हि व्यवहारिणां प्रवर्त्तनमुपलब्धं । न चाप्रतीतिप्रवर्त्तनं । ततो व्यवच्छेदप्रतीतिराकृष्यते । तद्धि परासंसर्गेण प्रतीयते । प्रत्यक्षेण विकल्पेन च । तत्र प्रत्यक्षेण वस्तुस्वभावलीन एव व्यतिरेकः प्रत्ययविषयः । कल्पनानां तु न वस्तुविषयता । ततो व्यतिरेकमात्रमेव शब्दकल्पनाविषयः ।**

**ननु वस्तुप्रतिपत्तौ व्यतिरेकस्य खण्डशः कथं प्रतिपत्तिः ।**

**अत्रैवमुच्यते ।**

---

[1] B प्राप्तव्य [2] B सम्भवि [3] B. ०रेव [4] B. भ्रान्तबुद्धितया

वस्त्वस्ति व्यतिरेकयोगविषयो यः कल्पनागोचरः ।
सत्यासत्यतया तु भेदमपरं कः कल्पयेद् धीधनः ॥३८२॥
यन्मात्रा(द्)व्यतिरेकसङ्गमगतिस्तन्मात्रमेवास्तु वः ।
सामान्येन यदि प्रयोजनविधिः कस्तद्विशेषे गुणः ॥३८३॥

**यावता विना वस्तुना व्यवच्छेदः प्रत्येतुमशक्यः तावन्मात्रं व्यवहारिणां प्रयोजनप्रसिद्धये प्रभवति। न च सत्यवस्तुसंगतमेव व्यवच्छेदनं प्रत्येतुं शक्यमसत्यसङ्गमेनापि तस्य प्रतीतिदर्शनात् । तस्माद् व्यवच्छेदविषयमेव वाक्यं वस्तुनस्तत्रासत्यत्वात् ।**

**ननु वस्तुसत्त्वे[1] व्यतिरेकस्यापि तद[2]व्यतिरेके तल्लीनस्य कथं सत्यता ।**

**अत्रोच्यते ।**

प्रतीयमानमप्येतदसत्यमिति कः क्रमः । विसम्वादादसत्यञ्चेद् भेदः सत्यो न किम्मतः ॥३८४॥

**अयन्तावदव्यवच्छेदवाद्यनुयोक्तव्यः । किमिदं प्रतीतिविषयस्यासत्यत्वं नाम । यदि तेन प्रतीयमानेन रूपेण तदस्त्येव कथमसत्यता । अथाप्रतीयमानेन तदा तर्हि सर्व्वमसत्यमित्यसत्यमेव । सत्यमेव किञ्चिन्नास्तीति गर्द्धभीक्षीरायितं परपक्षेण । अथ प्राप्यरूपता नास्ति तेन विसम्वादादसत्यं न स्वरूपतः । स्वरूपसत्यत्वेपि प्राप्यरूपतार्थिनः । तदभावे दसत्यमेव विपर्ययप्रतीतिरसत्यत्वं । अप्राप्यरूपस्य यत प्राप्यरूपतया ग्रहणं । विपर्ययप्रत्ययादपरं । एवन्तर्हिप्राप्तमिदं व्यवच्छेदः सत्य इति यतः ।**

प्राप्यतेन्यव्यवच्छिन्नं प्रवृत्तैर्व्यवहारिभिः । वस्त्ववस्तुव्यवच्छेदभेदस्तत्रापरो वृथा ॥३८५॥

**यदि यत्प्राप्तं तत्सत्यमायातं व्यवच्छेदस्य सत्यत्वं तस्य प्राप्तेः ।**

**नन्वसत्यवस्तुव्यवच्छेदस्तेन प्रतिपन्नो न चासौ प्राप्तः सत्यवस्तुव्यवच्छेदप्राप्तेः । न चान्यप्रतीतावन्यप्राप्तावविसम्वादस्ततः कुतो व्यवच्छेदस्य सत्यता । कोयमस्थानाभिनिवेशिनोऽस्थानगतः पर्यनुयोगः । भेदस्तावत्प्राप्तस्तावन्मात्रेण व्यवहारिपरितोषः । न च प्राप्तपरितोषा व्यवहारिणः परापरभेदं निश्चेतुं क्षमा येन व्यवच्छेदभेदावधारणया विसम्वादसम्वेदनसङ्गमः । तस्माद् व्यवहारिजनप्रीत्याऽविसम्वादोयमुच्यते । न तत्त्वमविसम्वादः परमार्थविचारणे । उक्तमेतत् (।) सांव्यवहारिकमेव व्यतिरेकविषयं प्रमाणं । प्रामाण्यं व्यवहारेणे(प्र०वा०१।७)ति वचनात् । यदि प्रमाणेन प्रमाणं प्रतीयतेऽनवस्था । प्रमाणमन्तरेण प्रतिपत्तौ प्रमेयस्यापीति न प्रमाणाधीनः प्रमेयाधिगमः स्यात् । तत उक्तं ।**

प्रामाण्यं व्यवहारेण गम्यते न तु तत्त्वतः । प्रमाणेन मतिस्तत्त्वमनवस्था तथोदिता[3] ॥३८६॥

**यतः तत्रापि विचारणा**

व्यवहारः प्रमाणञ्चेदनवस्था निवेदिता[4] । अप्रमाणाद् गतौ सैव प्रमेयेपि भविष्यति ॥३८७॥
प्रमाणलक्षणं प्राप्तं व्यर्थकं सर्व्वसिद्धितः । प्रमाणेन विनैवेति तदिदं न समञ्जसं ॥३८८॥

**तस्मादविचारितसूक्ष्मतत्त्वं व्यवहारमात्रमाश्रित्य सर्व्वत्राविसंवादो न परमार्थतः ।**

**तथा हि ।**

---

[1] B. वस्त्वसत्यत्वे [2] B. तद् [3] B ततोदिता [4] B तथोदिता

इतस्तटमितो व्याघ्रः केनाऽस्तु प्राणिनो गतिः । भेदाभेदेऽविसम्वादो द्वयेपि हि न युज्यते ।।३८९।।

यदि प्रतीयमानात् प्राप्यं वस्तु भिन्नं कथमन्यप्राप्तौ विसम्वादाभावोऽविसंवादश्च । अथाभिन्नं सर्व्वात्मना । तथा सति तदपि तदैव[1] प्रतिपन्नं किमर्थं प्रवर्त्तते । किम्वा प्राप्स्यति ततो न(ा)विसम्वादः । **सोयमितस्तटमितो** व्याघ्र इति न्यायः । तस्माद् ।

व्यवच्छेदफलं वाक्यन्न वस्तुविषयं क्वचित् । एवकाराप्रयोगेपि यदेभ्योस्ति[2]प्रतीयते ।।३९०।।

आस्तां तावदेतत् । किमेवं क्वचिद् दृश्यते । दृश्यत एव । (पार्थोधनुर्धरः ।) चैत्रो धनुर्धरो नीलं सरोजमिति ।

विशेषणविशेष्यक्रियाणां प्रयोगे । विशेषणावधारणेऽयोग(स्य) व्यवच्छेदः । विशेष्यावधारणेऽन्ययोगस्य । क्रियावधारणेऽत्यन्तायोगस्येति विभागः । कथमप्रयोगे नियमविशेषावधारणं । प्रकरणविवक्षाविशेषादिभ्यः ।

ननु यथा पार्थ एव धनुर्धर इति विशेष्यसन्निधाने(ना)ऽवधारणात् । विशेष्यान्तरं व्यवच्छिनत्ति । तथा विशेषणसन्निधाने विशेषणान्तरमिति प्राप्तं । ततश्चैत्रो धनुर्धर एवेति सकलगुणान्तरव्यवच्छेदः ।

न चोपपत्तिमदेतत् । न चायोगान्ययोग(व्यवच्छेद)योर्विशेषः ।

सत्यमेतत् ।

**प्रतियोगिव्यवच्छेदस्तत्राप्यर्थेषु गम्यते ।**
**तथा प्रसिद्धेः सामर्थ्याद् विवक्षानुगमाद् ध्वनेः ॥१९३॥**

तत्र यदि धनुर्धरोयं न वेति धानुर्द्धयं[3] सन्देहप्रकरणे प्रस[4]ज्यते चैत्रो धनुर्धर इति(।) तदा तस्यैव सन्देहव्यवच्छेदङ्करोतीत्यधानुर्द्धयमेव[5] व्यवच्छिद्यते । अन्यथाऽश्रोतृसंस्कारकं ब्रुवाणः प्रवक्ता न भवेत् । ततः प्रतियोगिव्यवच्छेद एव गम्यते नान्यः । तथा तत्राप्यन्ययोगव्यवच्छेदवाक्ये यदि प्रतिनियतः प्रतियोगी प्रकृतः **पार्थराधेययोः** कः कोदण्डधरः । ततः **कर्ण** एव व्यवच्छिद्यते । पार्थ एव धनुर्धर इति न **रामा**दिव्यवच्छेदः । तथा योगव्यवच्छेदेपि यदि प्रक्रियते किमन्योप्यस्य गुणः संविद्यते । त ा सकलगुणव्यवच्छेद एवाव्यभिचारिवर्ज्यं । चैत्रो धनुर्धर एव न पण्डितादिः । पार्थविचारेपि यदि किमन्योपि जगति धनुर्धर इति सन्देहप्रकरणं तदा सर्व्वविशेष्यान्तरव्यवच्छेद एव सर्व्वस्य तदा प्रतियोगितया प्रक्रमात् ।

**तदयोगव्यवच्छेदाद् धर्मीधर्मविशेषणं ।**
**तद्विशिष्टतया धर्मो न निरन्वयदोषभाक् ॥१९४॥**

तस्य धर्मस्यान्येन योगे प्रसिद्धे तदयोग एवाशंक्यते । ततस्तस्य प्रतिपादनेनान्यव्यवच्छेद इति नान्वयशेषः । यतः । **पक्षस्य धर्म एवायमिति** प्रसिद्धेरेवेयमेवासद्भूता[6] । अयोगस्य प्रतियोगित्वादन्ययोगस्य च विपर्ययात् । सामर्थ्याच्चायमर्थः प्रतीयते ।

---

[1] B. तथैव  [2] B. ०पि  [3] B. धानुर्द्धयं (?)
[4] B. प्रयुज्यते  [5] ०त्यधनर्द्धरत्वमेव  [6] B. ०मेवभता

नह्यन्ययोगे लब्धे तत्रावधारणं तत्रैव पतति विरोधात् । सन्दिग्धं हि निराक्रियते विधीयते वा । न सिद्धं प्रतिषिद्धं वा । विवक्षानुरूपश्च प्रतियोगी । तथा शब्दोपील्येवमेव प्रतिपत्तिः । नहि विवक्षितमन्यथाऽन्यथा शब्दप्रतिपादनसामर्थ्यं । नहि स्वभावतः प्रदीपवत् प्रतिपादका ध्वनयः इति प्रतिपादितं ।

## २. हेतुभेदाः

ननु पार्थस्यैव धनुर्धरत्वमिति विशेषणेनापि सहावधारणमन्ययोगमेव व्यवच्छिनत्ति[1] नायोगमिति प्रकृतविरोधः ।

न विरोधो यतः ।

विशेषणत्वं पार्थस्य यद्यपि प्रतिपाद्यते । शब्देन न तु तत्तस्य परमार्थेन विद्यते ।।३९१।।

विशेषणमत्र गुणभावादाश्रितं धर्मभूतमुच्यते । पार्थस्तु धनुर्धरत्वस्याश्रयत्वाद् विशेष्य एव । अन्यो हि वास्तवो न्यायोन्यः शब्दनय[2] इति । अत्र च प्रकरणाद् वस्तुधर्मस्य ग्रहणमित्यदोष एव । अत्रावधारणार्थो व्यवच्छेदरूपः प्रत्यक्षतोनुमानाच्च प्रतीयते विभागेनेति ना प्रतीतिदोषः । अन्ययोगव्यवच्छेदेन हि विशेषण एकस्य तद्भावे ऽन्यस्यातत्त्वं स्याद् विशेषणविशेष्ययोगिनश्च निपातस्याविशेषः । यदि पक्षस्यैव धर्मः कृतकत्वन्तदाऽन्यत् सकलमकृतकं भवेत् । अन्यः प्रदेशश्च न धूमवान् । तदेतत् प्रत्यक्षानुमानविरोधि । प्रत्यक्षतो हि धूमोऽन्यत्र प्रतिपन्नः । अनुमानतः प्रत्ययभेदभेदित्वादेः । प्रत्यक्षाद्वा प्रतिपन्नं कृतकत्वं लोकप्रतीत्या चानुमानलक्षणया विशेषणादिसहचरितावधारणार्थनिपातस्य तदर्थस्य चायोगव्यवच्छेदादेर्वाच्यवाचकभावस्यान्यस्य वा प्रतीतिरिति कस्तत्रान्यथाभावः । तदेतत्पक्षधर्म इति समासार्थव्याख्यानं । भेदः संसर्गो भेदसंसर्गौ वा समासवाक्यार्थ इति विभागेन प्रतीतेः । भवतु पक्षस्य धर्मः स तु नवधा किमित्याचार्ये(ण) निर्दिष्टः । असिद्धविरुद्धानैकान्तिकसम्यग्घेतुप्रतिपादनार्थं हि तावन्त एव निर्देश्या न नवभिः प्रयोजनमित्याह ।

**स्वभावकार्यसिद्ध्यर्थं द्वौ द्वौ हेतुविपर्ययौ ।**
**विवादाद् भेदसामान्ये शेषो व्यावृत्तिसाधनः ॥१९५॥**

नवानामप्युपयोगोस्तीति नवधानिर्देशः । स्वभावकार्ययोस्तादात्म्यतदुत्पत्तिप्रतिबन्धाद्धेतुता नान्येषामिति द्वयस्य निर्देशः । तयोरेव च विपर्ययसाधने विरुद्धतेत्यपरं द्वयं । दर्शनादर्शनमात्रकादनैकान्तिकस्यापि परैरैकान्तिकत्वं प्रतिपादितमिति तद्व्यवच्छेदार्थमपरं द्वयं । शेषाणान्तु त्रयाणान्निर्देशो व्यावृत्तिप्राधान्यप्रदर्शनार्थं व्यावृत्तिद्वारेण हेतुर्गमकः । ततोऽनुमानेन व्यवच्छेद एव साध्य इत्यर्थः प्रदर्शितः ।

### (१) नव पक्षधर्माः

तत्र ते नव पक्षधर्माः ।

प्रमेयकृतकानित्यकृतश्रावणयत्नजाः । अनित्ययत्नजाः स्पर्शानित्यत्वादिषु ते नव ।।३९२।।

---

[1] नकारस्य द्वित्वं परिशोध्य पश्चात् कृतं हस्तलेखे ।  [2] B. शाब्दनयः

ननु कृतकत्वप्रयत्नानन्तरीयकत्वयोरेकत्वादावृत्तावप्यनेकता कथं। हेतुता विरुद्धता च। कथञ्च नवत्वं न हि स एवावर्त्तमानः संख्याभेदस्याश्रयः।

अत्रोच्यते। यस्मात्।

नित्यानित्यप्रयत्नोत्था मध्यमत्रिकशाश्वताः। अयत्नानित्यनित्याश्च प्रमेयत्वादिसाधनाः ॥३९३॥

तस्मात् सर्व्वमुपपन्नं।

न खलु साधनं नाम स्वरूपेण किञ्चित्। साध्यापेक्षया साधनत्वलाभात्। साध्ये च भेदसंस्पर्शिनि स एवैकः सम्यग्घेतुर्व्विरुद्धश्चेति न किञ्चदुपपन्नं[1]। तेन द्वौ हेतू। अनित्यः कृतकत्वादिति स्वभावहेतुः। प्रयत्नानन्तरीयकत्वादिति च कार्यं। कथमिदं व्यज्ञायि स्वभावहेतुः कृतकत्वं। कार्यहेतुः प्रयत्नानन्तरीयकत्वं। विपर्ययः कस्मान्न भवति। तल्लक्षणयोगात्। अन्यलक्षणाभावात्तु न विपर्ययः।

**नहि स्वभावादन्येन व्याप्तिर्गम्यस्य कारणे।**
**सम्भवाद् व्यभिचारस्य द्विधा वृत्तिफलन्ततः ॥१९६॥**

समानव्याप्तिकत्वात् कृतकत्वस्य। न च समानव्याप्तिकं कार्यं। कारणे व्यभिचारात् कार्यस्य। नावश्यं कारणानि तद्वन्ति भवन्तीति। ततः सकलं कार्यं द्विधावृत्ति द्विधावृत्ति च प्रयत्नान तरीयकत्वं। ततः कार्यहेतुः। न ह्यनित्या इत्येव प्रयत्नानन्तरभावि ज्ञानकार्यारम्भिणः। तेन तत्सपक्षे द्विधा वर्त्तते। हेत्वन्तरज्ञानकार्यारम्भिणस्तु सर्व्वत्र एवानित्याः। तेन व्यापित्वात् कार्यमपि ज्ञानं स्वभावहेतुरेव वस्तुतः। तथा चोपलम्भ एव सत्तोच्यते। न च प्रयत्नानन्तरीयकज्ञानलक्षणा सत्ता। तदन्येषामसत्त्वप्रसङ्गात्। ततस्तु ज्ञानमन्वयव्यतिरेकभावोपकल्पितभेदं कार्यकोटिविटङ्कमारोहति। ततः कार्यहेतुस्तत् ज्ञानं प्रयत्नानन्तरीयकशब्दव्यपदेश्यं।

कथं पुनर्गम्यते प्रयत्नान्तरं ज्ञानमनित्यकार्यमिति। तथा चाह। "प्रयत्नकार्यानेकत्वात् कार्यसमः"। व्यक्तिरपि प्रयत्नकार्याभावोपि। तद्यथा प्रदीपसन्निधापनप्रयत्नो न घटस्य कार्यतामुपपादयति। चक्रादिभ्रमणप्रयत्नस्तु तथेत्युभयथा दर्शनात् कथमेकान्तः। तथा चाह **भाष्यकारः**[2]। "यदि नित्यं शब्दमुपपादयिष्यामस्तदा व्यज्यते शब्दोऽथान्यथा तदा क्रियत" इति। न च शब्दं करोतीति करणव्यवहारात् क्रियते शब्द इति प्रतीमः(।) प्रयोगार्थत्वात् करोतेः। यथा पादौ मे कुरु पृष्ठम्वेति[3]। **प्रत्यभिज्ञा** च शब्दनित्यत्वे हेतुः। ततो नित्यस्य सतो व्यक्तिरेव घटवच्छब्दस्यापि प्रदीपतः।

तदतत्कालयोर्यस्य सिद्धिरस्ति प्रमान्विता। उपलम्भः पुनर्व्यक्तिर्व्यक्तेरन्यन्न लक्षणम् ॥३९४॥
तथा प्राग्विद्यमानस्य कुतश्चिदुपलम्भनं। न कार्यत्वं सतः पूर्व्वमकार्यन्तदा विदि[4] ॥३९५॥

अत्रोच्यते।

**प्रयत्नानन्तरं ज्ञानं प्राक् सतो नियमेन न।**
**तस्यावृत्त्यक्षशब्देषु सर्व्वथानुपयोगतः ॥१९७॥**

---

[1] B ०दनुपपन्नं
[2] वात्स्यायनः (?)
[3] B पृष्ठम्वेति
[4] एकादशमान्हिक (समाप्तम्)

**यथा खलु प्रयत्नानन्तरभावी घट प्रयत्नकार्यो न कुलालप्रयत्नव्यङ्ग्यः। सकलकारकग्रामस्य व्यर्थताप्रसङ्गात्(।) सर्व्वं सर्व्वस्यास्तीति न केनचित् किञ्चिदीहितव्यमित्यनीहितं जगत् स्यात्। नियमः कारकैः क्रियतेऽन्यथाऽसमञ्जसाभाव इति। कोयन्नियमो नाम। यतः।**

नान्यव्यावर्त्तनं ह्यस्य नियमो नाम विद्यते। ततो व्यावर्त्तनं नास्ति कारणानां शतैरपि ॥३९६॥
व्यावर्त्तनमभावश्च पुनस्तस्य कथङ्गतिः। अविद्यमानस्य पुनर्गतावुदय एव सः ॥३९७॥
अपि चास्त्येव नियमः सर्व्व(ः)सत्कार्यवादिनः।
ततोसतो न तस्यापि कृतिर्युक्तिमती क्वचित् ॥३९८॥
अथाप्यस्य विभागेन सतो[1]व्यक्तिर्व्विधीयते।
सापि कार्या यदि भवेत् तत्र स्यात् कल्पनाद्वयम् ॥३९९॥
यद्यसत्त्वं क्रियाऽशक्यासत्त्वेपि कारणं कथं[2]। सत्त्वासत्त्वन्तु नैकस्य विद्यते मानसंगतम् ॥४००॥
भावेपि तत् सदास्त्येव कारकैस्तत्र[3] किं कृतं। अभावेन क्रियाशक्तिरिति कारकता वृथा ॥४०१॥

**तस्मात् प्रयत्नानन्तरभावी कुलालादिकार्यो घटो[4] न व्यङ्ग्यः। यथा[5] तर्हि प्रदीपव्यङ्ग्यः स एव कालान्तरोपलब्धः तथा प्रयत्नव्यङ्ग्यः शब्दोपि भविष्यति। न(।) घटस्य प्राक् प्रमाणसद्भावात्। शब्दस्य तु प्रयत्नात् प्राक् प्रमाणाभावः। सत्त्वे प्रत्यभिज्ञातोऽत्रापि सत्त्वं प्रागिति चेत्। न।**

## (२) प्रत्यभिज्ञानिरासः

**प्रत्यभिज्ञाप्रत्ययस्य शतशो निराशा(? सा)त्। न हि निरस्तं पुनरायाति। न मृतः प्रत्युज्जीवति।**

**अपि च। प्रत्यभिज्ञा किं ज्ञातं साधयति सत्त्वमथ ज्ञातयोर्मध्यभावि। यदि ज्ञातं साधयति तदिदानीं ज्ञानेनैव प्राक्तनेन साधितं स्मरणेन व्यवहृतं कस्तत्र प्रत्यभिज्ञाया उपयोगः। प्रत्यभिज्ञयेदानीमपि तदस्तीति साध्यते। स्मरणन्तु तत्कालमेव साधयति। यथा दृष्टस्य स्मरणात्।**

**तदसद्यतः।**

यदि स्मरणसद्भावात् प्रत्यभिज्ञा प्रवर्त्तते। स्मृतेर्थे प्रत्यभिज्ञानमनिन्द्रियजमेव तत् ॥४०२॥
न चाक्षजस्मृतीमुक्त्वा प्रत्ययः पर इष्यते। तेनाक्षजत्वाभावेन स्मरणस्याप्रमाणता ॥४०३॥

**नहि स्मर्यमाणेर्थे प्रवर्त्तनमक्षाणामन्यथा कान्यकुब्जादीनामपि प्रत्यक्षता भवेत्। ततो मृतानामपि प्रत्यक्षताप्रसङ्गः।**

**अथ दृश्यमानतायामक्षवृत्तिर्दृश्यमानेपि किं प्रत्यभिज्ञया। स्मर्यमाणेन सहैकत्वप्रतीतिः प्रयोजनमिति चेत्।**

**तदसत्।**

---

[1] B सत्तो [2] B करणं [3] B ०स्तस्य [4] B कूटो [5] B यदा

स्मरणस्याप्रमाणत्वात् तत्प्रमेयैकता कथं। असत्त्यत्वे हि धर्मस्यासत्त्यत्वं धर्मिणः स्फुटम् ॥४०४॥
न पूर्व्वकालसम्बन्धः स्मरणेन विनेयते। रूपमात्रावभासस्तु विनापि प्रत्यभिज्ञया ॥४०५॥

**सितपीतावभासनमात्रकं हि न नित्त्यरूपावभासनं। प्रथमावभासनेपि तस्य भावात्। अथ तत्रापि नित्त्यता कालान्तरस्थायिता लक्षणा प्रतिभासत एव। न हि तस्या निषेधकं प्रत्यक्षम्।**

आहुर्व्विधातृप्रत्यक्षं न निषेधार्थ[1]वस्तुनः।
यदि कालकलाव्यापिवस्तुग्रहणमक्षतः। सर्व्वकालकलालम्बे ग्रह(:)स्यान्मरणावधेः ॥४०६॥

**तस्मात् स्मरणेन पूर्व्वकालावलम्बनं नाध्यक्षतः। ततः स्मरणस्याप्रमाणत्वात् तत्प्रतीतवस्त्वेकताऽसत्त्या। धर्मिणोऽसत्त्यत्वेऽसत्त्यत्वाद् धर्मस्य। अथ।**

वर्त्तमानस्य सत्त्यत्वे पूर्व्वस्यासत्त्यतास्थितौ। सत्त्यासत्त्यतयालीढा तयोः स्यादेकता ध्रुवं ॥४०७॥

**द्वयोः सत्त्यासत्त्यतायां तदेकतापि सत्त्यासत्त्यैव युक्ता नासत्त्यैव। तदपि यत्किञ्चित्। यतः।**

यदि धर्मिवशेनास्याः सत्त्यासत्त्यतयास्थितिः। वर्त्तमानतया सत्त्याऽवर्त्तमानतया मृषा ॥४०८॥

**वर्त्तमानरूपस्य सत्त्यत्वात् तद्गतैकत्वमपि सत्त्यं धर्मिरूपानुवृत्तेः(।) स्मर्यमाणैकता तु तत एवासत्त्येति प्राप्तमतो वस्तुन एकता न सिध्यति।**

एकैकता[2] कथन्नाम सत्त्या चेत् प्रत्यययो[3] न किम्।
आत्मन्येवात्मनः[4] कस्माद व्याहृतिः स्ववचस्यपि[5] ॥४०९॥
अथेदं प्रत्यभिज्ञानं भिन्ने दृष्टेन दृश्यते। दृश्यमानं ततोऽभिन्ने भवतीत्यवसीयते ॥४१०॥

**तदयं प्रत्यभिज्ञाप्रत्ययो भिन्नान्निवर्त्तमानोऽभिन्ने व्यवतिष्ठते। एतावदेव वस्तु यदुत भिन्नमभिन्नञ्च। ततो भिन्नाद् व्यावर्त्तमानमभेदं साधयति। अन्यथा न स्यादेव।**

**न खलु सर्व्वतो व्यावर्त्तितुं शक्यं। तदेतदसत्। यतः।**

भेदेप्यन्योविशेषोस्ति ततो येन निवर्त्तते। वरं विशेषस्तस्यैव न त्वर्थान्तरकल्पनं ॥४११॥

**प्रत्यभिज्ञाप्रत्ययोदयमात्रेण वरं भेदविशेष एवासाविति कल्पनं नत्वभेदस्य भेदविजातीयस्यादृष्टश्चायं प्रत्यभिज्ञोदयः। समानाकारपरामर्शविधायिषु लूनपुनःप्रसूतदर्भाभिकादिषु। ततः परत्रापि तथा कल्पनमेव न्याय्यं। तत्र लूनतोपलभ्यते मध्यमध्यासीना। तेन न तत्र[6] भेदेप्यभेदकल्पना। न पुनरत्र तथेति विषमः खलु केशपाशोपन्यासः। तदेतत्सत्त्यमेव पततः काशकुशावलम्बनं स्थवीयसः सम्पन्नं। तथा हि।**

लूनता नाम विच्छेदः परासंघटनं स च। तत्रः पूर्व्वपरित्यागाद् वित्तिः संघटते कुतः ॥४१२॥
असंघटितदृष्टिश्च समा दार्ष्टान्तिकेतरे।

**अपरस्त्रुटघतायामपि मृत(:)प्रत्यभिज्ञानमास्थितः। सोपि दुरात्मात्मनैवात्मानमाहन्ति।**

---

[1] B. निषेद्धुर्थं
[2] B. वर्त्तमानता—इति व्याख्या
[3] B. उत्तरं किं कार्ययोः ?—व्याख्या
[4] B. आत्मनैव
[5] B. प्रत्यक्षे प्रत्यक्षं न प्रमाणमिति वचस्यपि प्रमेयं—व्याख्या
[6] B. तेन तत्र

विनष्टे पूर्व्वके रूपेऽविनष्टेनैकता सह। नानात्वेपि तथैकत्वम्भवति प्रतिपादितं ॥४१३॥

**अपि च।**

विनष्टमक्षस्य न गोचरः क्वचित्ततः स्मृतेरेव स गोचरे चरेत।
स्मृतेः प्रमाणत्वमपाकृतं पुरः ततः प्रमाणानुमतैव[1] नित्यता ॥४१४॥
अतः प्रकाशं[2] स्मृतिरर्थसंग्रहे न वस्त्विदानीं यदि नाम साधयेत्।
तदातनं वस्तु तु गम्यते तया ततः प्रमाणावगता हि पूर्व्वता ॥४१५॥
तया सहैकत्वविनिश्चयो दृढः कथं प्रमाणादपरो भविष्यति।
दृढोपि संप्रत्यय उत्थितः सता पराक्रियेतेति विरोधिता स्वतः ॥४१६॥

**अविचलितनिश्चयप्रत्ययप्रत्ययप्रोत्साह्यमानमानसोपि यदि निश्चयमेव पराकुर्यात्। तद(ा)न्यद् वचसि, अन्यदस्य मनसि स्यात्।**

इदं तद्बोधसर्व्वस्वं प्रत्यभिज्ञानवादिनाम्। अति दूरं समारूढा पतन्त्येव झटित्यपि ॥४१७॥
अतिविषमं स्थानं दूरमारूढस्य प्रत्यासन्नतरः पातः।
निर्व्वापनिम्नो हि पुरः प्रदीपः सुदूरमुज्ज्वाल्यविनाशमेति ॥४१८॥

**तथाहि।**

अनुभूतार्थविषया स्मृतिश्चेन्नष्टता कथं।
नानुभूतार्थविषया (यदि सा) स्मृतिता कथं ॥४१९॥

**यद्यनुभूतार्थविषयता स्मृतेः स्वरूपन्नातीतस्मरणं स्यात्। नातीता प्रत्यक्षतोऽवगता। अथानवगतमेव स्मृत्यावधार्यते। तथा सति न स्मृतिः हि स्मृतिरपूर्व्वार्थविषया भवतु। तथापि न प्रत्यभिज्ञानं। प्रत्यक्षदृष्टवस्तुविषयं हि प्रत्यभिज्ञानमिष्यते। अन्यथा प्रमाणताऽभावः। तदेवातीतं सत्पूर्व्वमुच्यत इति चेत्। तदपि परस्परविरोधि।**

यदातीतं न तद् ग्राह्यं यदा ग्राह्यं न तत्तथा। स्मर्यमाणेन रूपेण तदतीतं न वस्तु तत् ॥४२०॥
निश्चयस्य दृढत्वाच्च प्रामाण्यमुपपत्तिमत्। प्रत्यभिज्ञानमप्येवमक्षयोगस्त्वपार्थकः ॥४२१॥

**यदि दार्ढ्यं निश्चयस्य विनाप्यक्षसम्बन्धं प्रमाणमेव। तदेतद् दुरात्मनो विचाराक्षमस्याक्षा(ि)न्तमात्रकं (।) तथा हि।**

अविसम्वादसद्भावात् प्रमाणं ज्ञानमिष्यते। वर्त्तमानेऽविसम्वादो न तु पूर्व्वविनाशिनि ॥४२२॥
न स्याद् यदि तदेकत्वं किन्ततोर्थक्रिया न सा।

**अपरेणापि दहने नार्थक्रिया सम्पाद्यत एव। तदर्थक्रियाकरणादेकत्वं तु तदकारिव्यावृत्तिलक्षणं साम्वृतमिष्यते एव एकमिति हि व्यपदेशविकल्पास्तदर्थसामर्थ्यमात्रेण समञ्जसजातयः। न खल्वर्थक्रियाविरहितार्थविषया व्यपदेशनिश्चयाः प्रेक्षावद्भिराद्रियन्ते। ततस्तदर्थक्रियाकारितयैकत्वं प्रत्यभिज्ञानविषयः। ततोनुमानं न (?) तद्रूपलिङ्गं। रूपस्यानेकता तदन्यकल्पितधर्मयोगादिति। न प्रत्यभिज्ञा तत्त्वत एकत्वे प्रमाणं। घटादिषु तर्हि तदर्थक्रियाकरणप्रवणेषु कस्मान्न प्रत्यभिज्ञा। स एवायं घट इति तत्समान इति**

---

[1] B. प्रमाणादगतैव [2] B. प्रमाणं

**प्रत्यय एव प्रत्यभिज्ञा । अपि च । स एवायं घट आनीतस्तदेवेदं शीतमुदकमिति । तथा हि ।**

यदान्यमानयेत्युक्ते तद्वचक्तचन्तरमानयेत् । तदेव पुनरानीतमिति स्यान्निश्चयोदय: ।।४२३।।

**यदा घटादन्य: पिठरिकादिक[1]आनेयत्वेन विवक्षितस्तदान्यमानयेत्युक्तौ यदा तद्घट-व्यक्तेर्व्यक्त्यन्तरानयनं तदा स एवायं घट आनीत इति व्यवहारदर्शनं ।**

**अत्यन्तरूढत्वात्तु व्यवहारस्यानादिवासनासङ्गतेर्न भाक्तभावाभिमानः ।**

तस्मान्न प्रत्यभिज्ञातः शब्दस्यैकत्वनिश्चयः । प्रतिपादनशक्तेस्तु समानत्वात्तथा भ्रमः ।।४२४।।
यद्यन्यः कथमन्यत्र विश्वासस्य प्रवर्त्तनं ।
न ह्य(न्य)त्रापरिज्ञाते कश्चिद् विश्वसिति क्वचित् ।।४२५।।
एकत्वेपि न विश्वासो व्यभिचारस्य दर्शनात् । तत्समाने तथान्यत्र विश्वसित्येव कश्चन ।।४२६।।

**समानसंस्कारसम्भावनामव्यभिचारिणीमवलम्ब्य विश्वासो यथा तत्पुत्रादौ[2] । तथा तदुपादानसन्तानेपि ।**

## (३) आत्मनित्यत्वनिरासः

**अथ क्षणिकत्व कथं प्रतिदानेच्छा एकत्वे (पुनः) सुतरामेव न घटते । तथा हि ।**

भयेन लज्जया युक्तं दत्तस्य प्रतिपादनं । भयलज्जाऽधिका यस्य भयलज्जे तु किंकृते ।।४२७।।
अथ तत्सन्निधेरस्य तद्ग्रस्तस्यात्मनो गतिः ।
अतद्ग्रासेपि तदग्रासस्तस्यात्मन्यपि विभ्रमः(।) ।।४२८।।
क्षणप्रबन्धेपि स एव विभ्रम. किमस्य नैतद् व्यवहारकारणं ।
न नित्यतायामपि कारणोदयात् परः पर[4]स्याप्यभिमानकारणं ।।४२९।।

**आत्मानं नित्यमभ्युपगच्छतोपि न कार्यकारणभावकृताभिमानतो युक्तिः[5] । तथा ह्यात्मा नैकस्वभावतायाः पौर्व्वापर्येण प्रच्यवते । ततस्तस्य भयलज्जादिविकारसम्भवात् कथम्भयावितो भयं । अथ तस्य भयमुत्पद्यते । तद्योगाद् भीतः । ना[6]स्वरूपेणाभीततया तस्य काचित् पीडा । कार्यकार(ण)भावमात्रमेव केवलं । तथा व्यवहारहेतुः । न च व्यवहारमात्रेण पीडा पीडा भवति । पुत्रपीडया व्यतिरिक्तयापि सम्बन्धात् पीडित एवेति चेत् । न । स्वगतास्यापरा पीडेति (तेन) पीडितः । अन्यथा शत्रुपीडयापि पीडितः स्यात्तेनाप्युपघा यो[7]पघातकलक्षणोऽस्यास्त्येव सम्बन्धः[3] ।**

पुत्रोपि यदि शत्रुः स्यान्न तत्पीडाकृता क्षतिः ।
तस्मात् पीडितरूपेण पीडा न परपीडनात् ।।४३०।।
ततः क्षणिकतैवेति न सन्ता(ना)द् विशिष्यते ।
आत्मेति तेन सर्व्वोयं व्यवहारस्तथाविधः ।।४३१।।

---

[1] B पिठरकादिरा [2] B पुत्रादौ [3] B हि
[4] B. कार्यकारणात् परस्पर [5] B. मुक्तिः [6] B. न [7] B. पघात

**सन्तानमात्रकेण हि सकलः स एवायमिति व्यवहारः। तेन शब्दस्य न नित्यता ततः कथं प्रयत्नानन्तरमस्य व्यक्तिः। उत्पत्तेरेव तु प्रमाणविषयस्तल्लक्षणयोगात्।**

भेदात्प्रत्ययभेदेन कार्यता न[1] ध्वनेः सती। न प्रदीपादिभेदेन विभिद्यन्ते घटादयः ॥४३२॥

**न खलु व्यञ्जकाल्पमहत्त्वेन भिद्यते व्यङ्ग्यम्। अथ प्रदीपाभि[2]व्यक्तं नीलोत्पलं रक्तं दृश्यते। चन्द्रातपाभिव्यक्तं पीतं सितं। खड्गभिव्यक्तं वदनं गौरमपि श्याममित्येवमादि।**

**तदप्यसत्। यतः।**

व्यञ्जकादन्यरूपत्वं भावानां यदि विद्यते। तदन्यरूपकारत्वाद् व्यञ्जकं कारकं भवेन् ॥४३३॥

**व्यञ्जकेन हि तद्रूपं[3] हापयता स्वरूप[4] विपरीतं प्रकाशयितव्यम्। तत्तु तस्य रूपमविद्यमानं कथं प्रकाशयितुं शक्यम्(।) अन्यथा शशविषाणादीनामपि प्रकाशन भवेत्। तदपि विपरीताख्यातितः[5] प्रकाशत एवेति चेत्। दत्तमत्रोत्तरं।**

**अथ भ्रान्तिरसौ तेनायमदोष इति चेत्।**

**तदसत्। यतः।**

व्यञ्जकं जनकं भ्रान्तेर्यदि तद् व्यञ्जकं कथं।

प्रकाशयद्धि किञ्चित् स्याद् व्यञ्जकं व्यञ्जकं स्फुटम् ॥४३४॥

अन्यथा तिमिरादीनामपि स्याद् व्यञ्जकात्मता।

नहि तेषामपि भ्रान्तिकारित्वाद् दूषणं परं ॥४३५॥

अथ भ्रमेपि तद्रूपमपरं परिगृह्यते। ध्वनेस्तेन प्रयत्नादिव्यञ्जकोस्य मतः सताम् ॥४३६॥

## (४) स्फोटनिरासः

**यद्यपि नामाल्पमहत्त्वादिको ध्वनिसंसर्गाच्छब्दस्य भेदस्तथाप्यसौ भ्रान्तिकृत एव न तत्त्वतः। भ्रान्तावपि शब्दस्यापरं तत्त्वं प्रतिभासत एव स्फोटात्मनः। तदपि प्रत्युच्यते।**

भ्रान्तरूपात् परं रूपं यदि शब्दस्य विद्यते (।) भेदेनैवावभासेत नान्यथा भ्रान्तता गतिः ॥४३७॥

नहि भिन्नमभिन्नेन रूपेण प्रतिभासितं(।) भिन्नमित्येव गम्येताभिन्नमेवान्यथा भवेत् ॥४३८॥

भ्रान्तावपि यदि भ्रान्तिर्भ्रान्तिरेव विशीर्यते।

भ्रान्तावभ्रान्तताविक्तौ भ्रान्तिस्सेति प्रतीयते ॥४३९॥

**नहि विभ्रमावभासिरूपादपरसत्यशब्दरूपसद्भावे[6] भेदेनानवभासनमुपपत्तिमत्। भ्रान्त्या न भेदोवभासत इति चेत्। भेदोपि भ्रान्तरूपादपरं शब्दस्य रूपं ततस्तस्य भेदेनावभासनप्रसङ्गे पुनर्भ्रान्तिरेवोपक्षेप्तव्या पुनस्तद्रूपभेद इत्यनवस्थानादप्रतिपत्तिरेव सत्यशब्दात्मनः। भ्रान्तावपि च भ्रान्तौ सत्यरूपमेव शब्दस्य केवलमवस्थितं। ततस्तदेव प्रतिभासेतेति न भ्रान्तिर्नाम भवेत्।**

---

[1] B. कार्यतास्य  [2] B. प्रदीपादि  [3] B. तद्रूपम

[4] B. स्वरूपम  [5] B. विपरीतख्यातितः  [6] B. सत्यरूपशब्द

तस्मात् तत्त्वावभासित्वे न भ्रान्तिर्न्नाम विद्यते ।

सर्व्वमेयपरित्यागे भ्रान्तिर्भ्रान्तिरिति स्थितम् ॥४४०॥

**ननु शब्दमात्रजनितार्थप्रतिपत्तिलक्षणार्थक्रिया विद्यते । न तु महत्त्वाविकृतः कश्चिदर्थप्रत्ययभेदः । ततोर्थक्रियाकारितया स्फोटमात्रमेव सत्यमितरदसत्त्यं । विपर्ययात्(।)**

**तदप्यसत्त्यं । यतः ।**

नार्थप्रत्यायनं शब्दस्यार्थकारित्वमिष्यते[1] । संकेतभावनातस्तु तदर्थप्रतिभोदयः ॥४४१॥
वासनायाः प्रबोधस्य शब्दवित् कारणं मतम् । पारंपर्येण जनकं न च भेदकमिष्यते ॥४४२॥
उपादानस्य भेदेन भेदो न सहकारिणः । तत्रापि[2] सहकारित्वान्न ध्वनिर्भेदको मतः ॥४४३॥

**सभागवासनासमागमादेवार्थप्रत्ययः तदर्थाकारविकल्परूप उपजायते । शब्दस्तु तत्र सहकारी । वासनाप्रबोधद्वारेण पारम्पर्येण जनकस्ततोस्य न भेदकता । शब्दस्य तु साक्षादर्थक्रिया तज्ज्ञानजननं तच्च दूरादूरभेदेन स्फुटास्फुटतयोद्वेगानुद्वेगसहभावितया भिद्यत एव ।**

**तत्कथन्न भेदः स्वार्थक्रियाकारी । तथा च वस्त्वेव भेदो न भ्रान्तिमात्रकं । यदि च नित्यः शब्दः स्यात् प्रयत्नानन्तरं ज्ञानं नियमेन न स्यात् । प्रागप्यर्थं कस्मान्न प्रतिपादयति । श्रुतस्य प्रतिपादनसामर्थ्यादन्यथाऽप्रतिपादनञ्चेत् ।**

**ननु श्रुत एवं संकेतकाले सोद्यापि अनुवर्त्तते । ततः प्रतीतिरेव भवेत् । न पश्चात्तनप्रयत्नात् प्रागप्रतीतिः । तदा व्यञ्जकाभावान्नेति चेत् । समानकालव्यक्तिकारी हि व्यञ्जकः ।**

**तदेतदसत् । यतः ।**

यथा समानकालस्य व्यञ्जको व्यञ्जको भवेत् ।

तथा सर्व्वात्मना व्यङ्ग्यव्यञ्जको व्यञ्जको भवेत् ॥४४४॥

तथा कालान्तरस्थायी स तेन व्यज्यते यदि ।

तदा कालान्तरे तस्य व्यञ्जकापेक्षिता कथं ॥४४५॥

**नहि व्यञ्जकमविपरीतरूपाव्यक्तौ व्यञ्जकं भवति । न च कालान्तरस्थायिरूपव्यक्तौ[3] कालान्तरे व्यञ्जकेन किञ्चित् कृतं[4] । अव्यक्तस्य व्यञ्जकापेक्षाऽन्यथा तदाप्यपर व्यञ्जकं पुनरपरमिति व्यक्तिरेव न स्यादनवस्था दुःस्थिता[5] । यदपि[6] पश्चात्तनज्ञानात् प्राक्(अपि) अनुपलम्भनं । तदप्ययुक्तप्रयत्नात् प्राक् सतः प्रयत्नानन्तरं यद्रूपं तत्र नियमेन ज्ञानायोगात् । नहि प्रागपि तदेव रूपं तस्मिन्नेवोपलभ्यमानेऽनुपलब्धं युक्तं । तस्य च प्राग्भाविनः प्रयत्नस्य तत्र सर्व्वथानुपयोगात् । परेणैव सर्व्वात्मना व्यक्तत्वात् । स्वकालसङ्गतमेव रूपं व्यनक्तीति चेत् । किम्वैतदन्येनान्यस्य व्यवच्छेदः । पूर्व्वापरज्ञानैकत्वे प्रयत्नभेदो(पि) न विभेदकः । अनेकत्वे ज्ञानकालाद् भिद्यते ज्ञेयमपि ।**

**अथावरणाभावो यदा तदोपलब्धिर्न्न विद्यमानस्याप्यावरणतिरस्कृतत्वात् ।**

कुड्यान्तरितो नैव कटः सन्नपि दृश्यते । तदभावे कृतेऽन्येन पुनर्दृष्टेः स गोचरः ॥४४६॥
इदं प्रत्यक्षतः सिद्धं प्रमाणेनावधारितं । शब्देप्यावरणाभावः प्रयत्नेन विधीयते ॥४४७॥

---

[1] B. मीक्ष्यते [2] B. ततोपि [3] B. व्यापिरूप
[4] B. कृत्यं [5] B. ०स्थानादुःस्थिता [6] यदि

सतामप्यावरणभावेऽनुपलम्भात् तदभावे पुनरुपलम्भादन्वयव्यतिरेकाभ्यामावरण(।)-भावकृत उपलम्भव्याघातः । नत्वावरणे स्वयमेव न भवति । विकारो वा परः प्रत्यक्षेणोपलम्भात् तदवस्थस्यैव ।

तदेतदनालोचितपरापरस्य परस्य वचनं । यतः ।

प्रतिभिज्ञोदयादेव तत्राप्यविकृतैर्गतिः । अभावेप्युपलम्भस्य कथं प्रत्यक्षतो गतिः ॥४४८॥
उपलम्भनिवृत्तिर्हि तद्रूपाभावसाधनी । उपलब्धिः परस्येति न प्रमाणमिहेष्यते ॥४४९॥
प्रत्यभिज्ञानतस्तस्य मध्येपि यदि साधनं(।) प्रत्यभिज्ञानुमानं स्यान् न प्रत्यक्षपुरःसरं ॥४५०॥
प्रत्यक्षापूर्व्वकत्वे हि भवेदन्धपरंपरा । अनुमानस्य तस्यापि तथाभूताप्रसिद्धितः ॥४५१॥

न ह्यावरणव्यवहितानुपलम्भे तदैव प्रत्यक्षत उपलम्भोऽविकृतस्य । पश्चादुपलम्भो निरावरणस्येति चेत् । तदैव भावो( ऽ )विकृतिर्व्वा स्यान्मध्यभावस्तु प्रत्यभिज्ञया परोक्षः प्रतीयते । तथा चानुमानं यतः । इदानीमविकृतं तस्मात् प्रागपीत्यनुमानलक्षणयोगात् । तत्र च प्रत्यक्षाभावे कथन्तदनुमानं प्रत्यक्षपूर्व्वकं । सर्व्वत्र च पूर्व्वापरभावः प्रत्यभिज्ञाप्रमाण(क)एव । अनुमानपूर्व्वकतायामनुमानस्य तदप्यनुमानमनुमानादेवेत्यपर्यवसानादन्धपरंपरा । परेण प्रत्यक्षतः प्रतीयते तेन प्रत्यक्षपूर्व्वकतेति चेत् । तत्रापि न प्रत्यक्षता(।) नहि परेण प्रत्यक्षतः प्रतिपन्नमिति परस्य प्रतीतिः । अथासौ कथयेत् । न । वचनस्य प्रामाण्याभावात् । सत्यवादित्वञ्च नात्मनोपि प्रतिपत्तुं समर्थः परः । यदनेन प्रतिपन्नं तदेव मया प्रतिपन्नमिति । नहि परप्रतिपत्त्या मिश्रितं प्रतीयमानं तथा प्रत्येतुं शक्यं । तदेवेदमिति । तत इतरेतराश्रयदोषः । परस्परकथनेनैकताप्रतिपत्तेः ।

अथानुमानेन प्रतीतिस्तथा भ्रूविकारदर्शनात् । तेनापि स एव प्रतिपन्न इति । तथाभूततैव तर्हि सिध्यति नैकतेति नेदं युक्तिमत् ।

न खल्वनुमानं स्वलक्षणविषयं । नहि धूमादग्निः स एव सिध्यति । यदि रोमांचसम्भवादिना समानव्यवहारेणैकता सुखादीनामात्मनश्च न किम् । अथ सुखादीनां परस्परव्यावृत्ततया प्रतीतेर्न्नैकता । तथा सति प्रतीयमानयोरपि स्वपराभ्याममिश्रितप्रतीतेर्भेद[1] एव युक्तः(।) समानदेशतापि तत्प्रतीत्यभावेन प्रतीयत एव । नहि भावस्वभावादपरो देशः । तस्मात्सतामप्यावरणसद्भावेनोपलम्भ इति न सिद्धमेतत् ।

## (५) सूक्ष्मेक्षिकार्थं शास्त्रारम्भः—

ननु प्रतीतिरस्ति तदेव परप्रतिपन्नं मया प्रतिपन्नमिति । न च बाधकमस्ति । न चात्र सूक्ष्मेक्षिकया बाधकमानेयं । यतः ।

उत्प्रेक्ष्येत[2] हि यो मोहादजातमपि बाधकं । स सर्व्वव्यवहारेषु संशयात्मा क्षयं व्रजेत् ॥४५२॥

नहि सूक्ष्मेक्षिकया निरूप्यमाणं किञ्चिदवस्थापनामर्हति ।

तदसत्तथा हि ।

सूक्ष्मेक्षिकानिषेधेन प्रमाणस्य निषेधनं । नहि प्रमाणादपरा परैः सूक्ष्मेक्षिकेष्यते ॥४५३॥

---

[1] B. प्रतिपत्ते [2] B. उत्प्रेक्षेत

**सूक्ष्मेक्षिका लोकव्यवहारबाधनी नावतारयितव्येति प्रमाणनिरपेक्षेणैव व्यवहर्त्तव्यमिति स्यात्। तथा च व्यर्थकः शास्त्रारम्भः। नहि स्थूलबुद्धिव्यवहारसंबर्द्धनार्थं शास्त्रव्यापारः। "शास्त्रं मोहनिवर्त्तन"मिति सर्व्वाभ्युपगमात्।**

निरूपणे बाधकञ्चेन्न निवारयितुं क्षमं। न हि वज्रं पतन्मूर्ध्नि पल्लवेन निवार्यते ॥४५४॥
संसारव्यवहारश्च नानुच्छेद्यो विपश्चिता। यथादृष्टविधानाद्वा व्यवहारस्य का क्षतिः ॥४५५॥

**अन्धपरंपरयैव कार्यकारणभावरूपो व्यवहारो व्यवहारिणामनुपरत एव। अत एवास्य भावनिरूपणेन[1] निवर्त्तनं निर्व्वाणमार्गाभिनिविष्टैः।**

नहि सम्वृतिमात्रत्वात संसारः पर ईक्ष्यते। तत्त्वमेव च निर्व्वाणमेवं सत्यवतिष्ठते[2](॥)४५६॥
न तत्त्वातत्त्वयोर्भेद इत्येषा परमार्थता। अतत्त्वमिति मन्वीत तत्त्वमेवाविचारितं ॥४५७॥

**तत्त्वं हि निरूप्यमाणं सकलमद्वैतीभवति अतन्निरूपणे[3] तु तदेव प्रपञ्चरूपमतत्त्वं संसारः। ततो विनिरूपणात्[4] संसारोच्छेद इष्ट एवापतित इति कथं ह्यपव्रज्या[5] या वर्त्तनतत्त्वदृष्टिस्तावत् व्यवहारो न बाध्यत एव। तस्मादिष्टमेवापतितमयमेव तु विद्वज्जनव्यवहारः। तत्र शनैः शनैरविद्यापनयार्थमनित्यत्वं तावत् प्रसाध्यते यत्र विपर्यस्तो लोकः। तस्माद् यद् यदा दृश्यते तदा तत् पूर्व्वापरकालव्यवच्छेदेन ग्रहणात्। यद् यथा दृश्यते तथा तदित्यवगन्तव्यमन्यथा पदार्थव्यवस्थाभाव एव स्यात्।**

**अत्र परः प्राह। यदि नामासन्निहितं पूर्व्वापरं रूपं मध्यग्रहणेऽनुपलब्धिलक्षणप्राप्तं न गृह्यते (सन्निहित) प्रत्यक्षेण। तथापि नानुपलम्भमात्रादभावः। कालान्तरे तद् उपलब्धिलक्षणप्राप्तं। तदा चोपलभ्यत एव। तथा हि।**

यत्रोपलब्धिलक्षणं यस्य तत्रोपलम्भनं। न ह्यन्यत्र घटस्तादृगन्यत्राप्युपलभ्यते ॥४५८॥

**तथा।**

यदोपलभ्यरूपत्वं तदा तस्योपलम्भनं। नान्यदा तस्य तादृक्त्वं नान्यदाप्युपलम्भनम् ॥४५९॥

**तदप्यनालोचनं यतः।**

एकत्वे तस्य रूपस्य तत्त्वातत्त्वं कथम्भवेत्। अनेकत्वे तु तत्पश्चादुपलभ्यत इत्यसत् ॥४६०॥

**नहि कालो नामापरो येन तदभावात्तत्रस्थरूपाभावे तदानुपलम्भः। तदेव रूपं पूर्व्वापरभावेनोपलभ्यमानं कालाख्यां लभ्य(?भ)ते। तथा हि। एष कालो वर्त्ततेऽस्माकमिति[6]। शीतपीडितावस्था शीतकालो नान्यः।**

एकत्वे तस्य भावस्य कालस्याप्येकता भवेत्। तत्कालाभाव[7]तस्तस्य ततो नानुपलम्भनम् ॥४६१॥

**तस्मिंस्तिष्ठति कालाभावासिद्धेः। अन्यत्वे वा कालस्यापि नित्यत्वात् सोप्युपलभ्यत एव पूर्व्व(ा)परादिरूपः। अथ क्षणलवादयः कलावयवास्तदा कालः क्षणिक एव प्राप्तः। कालत्वन्नाम सामान्यं नित्यमिति चेत्। न। कालस्य द्रव्यपदार्थत्वात् तदापि[8] वा पूर्व्वा-**

---

[1] B. तत्त्व [2] B. ०तिष्ठते
[3] B. अतत्त्व० [4] B. भिनिरू० [5] B.० क्षयव्रज्या
[6] B ०मपि [7] ०कालम्भव० [8] B तदपि

**परभावस्योपलब्धेः सार्व्वकालिक्येवोपलब्धिः । अथ कालावयवानामनुपलम्भात् अनुपलब्धिः । तदेतदप्यसत् । यतः ।**

अन्यस्य दर्शनाभावाद् दृष्टस्यादर्शनं कथम् । अदृश्यमानेनैकत्वं कथं गम्येत केनचित् ॥४६२॥

**एतेनातीतसहचारिपदार्थोपधानं प्रत्युक्तं ।**

**न च पूर्व्वापरभाविक्षणव्यङ्ग्यङ्ग कालत्वं युक्तं । तस्माद् यदि शब्दः प्रयत्नानन्तरमुपलभ्यः पूर्व्वव्यवस्थितरूपेणाप्युपलभ्येत । परेणापीतीत्येकान्त एषः । ततश्च तस्यापि पूर्व्वापरस्य रूपस्य तदैवोपलम्भात् अपरः स्वभावो नास्तीति क्षणि(क)तैव । तस्य च घटादिक्षणस्य सर्व्वात्मनोपलम्भादावरणमकिञ्चित्करत्वादयुक्तम् । अथाक्षोपकारी प्रयत्नः तदापि सर्व्वात्मनोपलब्धौ पूर्व्वरूपोपलब्धिरिति नाक्षोपकारः प्रतिनियतरूपोपलम्भकारी । ततो नियमेनान तररूपेणोपलब्धिरिति नास्त्येतत् । दृश्यते चानन्तरमेव । ततस्तावन्मात्रतैव तस्य न नित्येऽक्षोपकारः । तथा हि ।**

संस्कारतोपि तस्यैव तथाभूतोपलब्धितः । न संस्कारेपि यस्यास्ति तत्र[1] तस्योपलम्भनं ॥४६३॥
अविद्यमाननित्यत्वमुपलब्धुं न शक्यते । सत्तोपलम्भ एवेति नोपलम्भातिरिक्तता ॥४६४॥

**नहि नित्यत्वमन्यच्छक्यमुपलब्धुं ।**

**ननु यदि नाम नोपलभ्यते तथापि कथमनित्यताभावः[2] । अनुपलम्भएवासत्तोपलब्धिलक्षणस्य । न च तद्रूपमनुलब्धिलक्षणं ।**

**अत एवोपलम्भ एव सत्ता तदभावे कथं सत्तेति न नित्यतासम्भवः । शब्दोपकारपक्षे तु सैवानित्यता । अत एव ।**

**कदाचित्निरपेक्षस्य कार्याकृतिविरोधतः ।**
**कादाचित्कफलं सिद्धं तल्लिङ्गं ज्ञानमीदृशं ॥१९८॥**

**यद्यसौ शब्दोन्यो वा कालान्तरव्यापी तदा तथैवोपलभ्येत । कदाचिदुपलम्भः कार्यन्न स्यात् । नहि तस्य कादिचित्कं रूपं न चान्यथोपलम्भः तद्रूपग्रहणं । अथ भ्रान्तिरसौ न खल्वर्वाग्दर्शनो व्यापिरूपमुपलब्धुं समर्थः । न च तदसामर्थ्ये ग्राह्यमन्यथा भवति भ्रान्तिरपि च । तदविसम्वादात् प्रमाणं ।**

**ननु भ्रान्तिरभ्रान्तदर्शनेन बाध्यते । तदा चासौ भ्रान्तिरिति शक्यमवसातुं । न । प्रत्यभिज्ञाप्रत्ययेन कालदेशव्यापिरूपसाधकेन विनिवर्त्तनात् ।**

**तदेतदसत् ।**

प्रत्यभिज्ञानसामर्थ्यं प्रागेवात्रापहस्तितं । प्रत्यक्षेणैव बाधास्य भवतीत्युपपादितं ॥४६५॥

**नहि प्रत्यभिज्ञाप्रत्ययः प्रत्यक्षं प्रमाणं(।) प्रत्यक्षमव्यापिरूपग्राह्यमिन्द्रियव्यापारादविसम्वादसम्भवाच्च । ततः प्रत्यक्षेणैव प्रत्यभिज्ञाबाधनमिति प्रागेवोपपादितं । अपि च ।**

खण्डशो ग्रहणं व्याप्तावपि स्याद्यदि वस्तुनः ।
सर्व्ववस्त्वेकमेव स्यात् तस्य ग्रहणमङ्शशः ॥४६६॥

[1] B यन्नास्ति यस्य    [2] B. कथन्नित्यताऽभावः

**यदि वस्त्वेकमपि[1] नानारूपकालदेशसम्बन्धितया व्याप्यन्यथा परिगृह्यत इति सम्भवः। एकमेव सकलं वस्तु स्याद्वस्तु वस्त्विति सर्व्वस्य प्रत्यभिज्ञानात्। एकत्वे घटादिभेदो न स्यादिति चेत्। शब्दस्यापि तर्हि अल्पमहत्त्वादिभेदो न स्यादुदात्तादिभेदश्चेति समानं। उदात्तादिभेदेपि शब्द इति व्यवहारादेकत्वमपि चेत्। घटादिभेदेपि वस्तु वस्त्विति किन्न व्यवहारः। एकत्वानेकत्वमस्त्विति चेत्। एकत्वासत्त्यत्वमेव तर्हि प्राप्तं। तथा हि।**

प्रत्यभिज्ञानसामर्थ्याद् एक(त्व)ग्रहणे सति। एकतानेकताप्राप्तिरप्रमाणीकृतञ्च तत् ॥४६७॥

**यदा हि प्रत्यभिज्ञानमप्रमाणन्तदैकत्वं प्रत्यभिज्ञासाध्यमसत्यमिति भेद एव सत्यः परिशिष्यते।**

तस्मादभिन्नस्य न भिन्नरूपं ग्राह्यं प्रमाणं क्वचिदस्ति सत्यं।
भिन्ने तु भावे तदभेदसिद्धिर्व्विकल्पकादेव न तत्प्रमाणम् ॥४६८॥

**भेदे हि सत्ये सति तदभेदः कल्पनाशिल्पोपरचित एव प्रत्यवमर्शमात्रसाधनः। भेदेत्वसत्ये कस्यासावभेदः। न चाभेदमात्रेण व्यवहारः। तस्माद् भेदेन धर्मिणाभवितव्यं यस्य धर्मोऽभेदः। नहि धर्मिणोऽसत्यत्वे तदभेदस्तथा भवति। न हि शशविषाणासत्त्यत्वे (त)त्तैक्ष्ण्यं सत्यत्वं[2]।**

**ननु। भेदोप्यभेदधर्मिण्यसति कस्य प्रतीयताम्। तदसत् यतः।**

येनैवान्यसम्बन्धस्तेन भेदः स उच्यते। अन्यथान्येन संसर्गे भेद एव विशीर्यते ॥४६९॥

**अभेदस्तु भेदप्रत्याख्यानेन भवति तस्य धर्मरूपत्वात् सामान्यधर्मवत्। तस्मात्।**

कदाचिन्नरपेक्षस्य कार्याकृतिविरोधतः। कादाचित्कफलं सिद्धं तल्लिङ्गं ज्ञानमीदृशं ॥४७०॥

**यदि नान्यः[3] पदार्थात्मा(ऽ)त्रुट्यत्स्वभावः सर्व्वदा तदा ज्ञानमपि तथैव कार्यम्भवेत्। यत्तु कदाचित् कार्याकरणं[4] विच्छेदरूपन्तन्न स्यात्। नहि तद्रूपे गृह्यमाणे तद्रूपमेव परापेक्ष[5]-ग्रहणन्तस्याप्यग्रहणप्रसङ्गात्। तस्मात्तज्ज्ञानमीदृशं विच्छिन्नरूपन्तद्रूपस्यैव कादाचित्कस्य फलमिति सिद्धं। ततः कार्याद् अनित्यताप्रतीतिः।**

## (६) कार्यस्वभावहेत्वोर्निर्देशस्य फलम्—

**ननु स्वभावकार्यसिद्ध्यर्थं द्वौ हेतू निर्दिष्टावुदाहरणद्वयेनेत्ययुक्तं। प्रयत्नानन्तरीयकत्वादित्ययमेव कार्यहेतुः स्वभावहेतुश्चेति शक्यमुपदर्शयितुं। स्वभावहेतुस्तावदयमित्येकवाक्यतैवात्र वादिनां। कार्यहेतुस्तु ज्ञानं लिङ्गमितीदानीमेव प्रतिपादितं। तत एकेनैव तन्त्रेण द्वयन्निर्दिष्टमिति व्यर्थकः कृतकत्वादिति निर्देशः।**

**सत्यमेतत् तथापि।**

**एतेनैव प्रसिद्धोपि[6] स्वभावस्य पृथक्कृतिः।**
**कार्येण सह निर्देशे मा ज्ञासीत् सर्व्वमीदृशं ॥ १९९ ॥**

---

[1] B. ०मेव [2] B. सत्यं [3] B. नित्यः
[4] B. कार्यकरण [5] B. पर.पेक्ष्य [6] एतावतैव सिद्धोपि—हे०

कार्येण हि सह निर्द्देशे तत्साहचर्यात् ईदृश एव सर्व्वः स्वभावहेतुः। सपक्षैकदेशवृत्तिरेव स्वभावहेतुरपि स्यादाशंका तद्व्यावृत्यर्थमपरप्रकारोपि स्वभावहेतुरस्ति यः सपक्षव्यापीति कृतकत्वादित्यस्य पृथग् निर्द्देशः।

ननु।

तत्र यः सन् सजातीये द्विधा[1] चासँस्तदत्यये।

स हेतुर्व्विपरीतोस्माद् विरुद्धोन्यस्त्वनिश्चित ॥४७१॥ इति

किमर्थं पृथग्वचनं। अत्रोच्यते।

**व्युत्पत्यर्था च हेतूक्तिरुक्तार्थानुमितौ कृता।**
**प्रभेदमात्रमाख्यातुं लक्षणन्तु न भिद्यते ॥२००॥**

पृथग्वचने हि तदेव परिस्फुटं भवति। तत्र यः सन् सजातीये द्विधा च। यथा ऽनित्यः शब्दः कृतकत्वात् प्रयत्नानन्तरीयकत्वाच्चेति। अन्यथा द्वयस्याप्रदर्शने द्विधा चेत्येतदेव सम्भवति लक्षणं (।) सन्नेव सजातीय इत्येतत्तूदाहरणाभावादसम्भवि लक्षणं भवेत्।

ननु विपक्षाद् व्यावृत्तो भवतु तावता सर्व्वसङ्ग्रह इति नाशङ्का युक्ता।

सत्यमेतत् तथापि व्युत्पत्यर्थं तस्यैवायं स्वार्थानुमानलक्षणस्योदाहरणप्रपञ्चः। तदेव तु लक्षणं यत्स्वार्थानुमाने।

ननु त्रितयं तर्हि दर्शनीयं कार्यहेतुः स्वभावहेतुस्तादृशः सपक्षव्यापी चेति। तथा च व्युत्पादनम्भवेत्।

न चोद्यमेतत्। यतः।

**तेनात्र कार्यलिङ्गेन स्वभावोप्येकदेशभाक्।**

उक्तः।

**सदृशोदाहृतिश्चातः प्रयत्नाद् व्यक्तिजन्मनः ॥२०१॥**

यतो व्युत्पत्यर्थः प्रभेदनिर्द्देशः तेनानेनैव कार्यलिङ्गेन स्वभावोप्येकदेशभाक् प्रतिपादित **आचार्येण**। सदृशमुदाहरणमत एव। अन्यथाऽग्निरत्र धूमादिति परिस्फुटमेव कार्यहेतुं कस्मान्नोदाहरति। किं यत्नप्रतिपाद्यकार्यहेतुत्वेन प्रयत्नानन्तरीयकत्वोदाहरणेन। तस्मात् प्रयत्नाद् व्यक्तिजन्मनः कार्यस्वभावलक्षणस्य सदृशमुदाहरणमभ्यधायि। ज्ञानमपि हि प्रयत्नानन्तरभावि। स्वभावोपीति भवति सदृशमुदाहरणं।

ननु प्रयत्नानन्तरं स्वभाव एव स्वभावान्तरन्तु ज्ञानमकारणस्याविषयत्वात्।

न युक्तमेतत्। पराभिप्रायेणोक्तत्वात्। परे हि शब्दनित्यत्ववादिनो ज्ञानमेव प्रयत्नानन्तरभावीच्छन्ति तान् प्रतीदमुच्यते विषयस्यापि कारणत्वमस्त्येवाकारणस्याविषयत्वात्। ततः प्रयत्नानन्तरभावि ज्ञानं यत्त्वयेष्यते। शब्देनापि तज्जनयितव्य स्वाकारार्पणेन। ततः समस्तपूर्व्वापरभाविरूपग्रहणप्रसङ्गः। तस्यान्यथा ग्रहीतुमशक्यत्वात्। न खण्डशो ग्रहणमिति प्रतिपादितं।

[1] B द्वेधा

## ३. स्मृतिसंगतिः

**अथापि स्याद् गृह्यत एव भाविभूतरूपता सकलकालकलाकलापव्यापिनी। अन्यथा पश्चाद् दर्शने कथं स्मरणं। अयं स मया तदा दृष्ट इति। तथा हि।**

अयं दृष्टस्तदापीति नागृहीते प्रवर्त्तते। स्मरणेन गृहीतत्वं पूर्व्ववृत्तं हि साध्यते ॥४७२॥

**तदपि कुचोद्यमेव यतः।**

ग्रहणं न विजानाति मया भाव्यपि गृह्यते। स्मरणन्तु विजानाति तदेतत्परमाद्भुतं ॥४७३॥

**यत्र हि ग्रहणस्य ग्रहणस्वभावस्य[1] न व्यापारस्तत्र तदनुसारिण एव स्मरणस्य व्यापार इति महदेतद् वस्तुतत्त्वविवेककौशलं। नहि भाविरूपं ग्रहीतुं शक्यं सन्देहात्। कदाचिन्न भवेदपि। अथ मतिः। यदि भविष्यति गृहीतमेव मयेति। पश्चात् स्मरणेन गृहीतमिति विषयीकरिष्ये इति प्रतीतेर्गृहीतन्तदपीति न सत्।[2]**

गृहीतोपि हि यद्यर्थः कथमत्र प्रवर्त्ततां। सन्दिग्धञ्च गृहीतञ्च परस्परविरोधिनी ॥४७४॥

**यदि तदपि भविष्यति तदा गृहीतमेवेति (महान्) ग्रहणव्यापारः। विद्यमानं (हि) ज्ञानं ग्रहणस्वभावमन्यथा वा नापरः प्रकारः। परस्परविरोधादन्योन्यव्यवच्छेदरूपत्वात्।**

प्रत्यक्षेपि हि सन्देहो यदि प्रत्यक्षता कथम्। ग्रहणे हि न सन्देहोनुपलब्धौ तु संशयात् ॥४७५॥

**यदि ग्रहणं वर्त्तमान इव न संदेहस्तस्याव्यतिरेकात्। न च तदा गृह्यमाणं भाविवर्त्तमानरूपाव्यतिरेकाद् वर्त्तमानवदेव। अथ भाविकालसम्बन्धाद् भावि। एवन्तर्हि स्वरूपतो न भावानां वर्त्तमानादिता। अपि तु भाविवर्तमानभूतपदार्थसहभावमात्रं। कालस्यापरस्याभावात्। भावे वा सोपि पदार्थ एव सहकारी[3]। तथा सति तस्यापि भाविरूपग्रहणे भाविरूपतागृहीतैवेति न सन्देहो भवेत्। अनित्यपदार्थसहचरितत्वं भाविभूतत्वमिति चेत्। न(।) तथाभूतस्य ग्रहीतुमशक्यत्वात् कथमयमेव मया गृहीत इति स्मरणं। स्वरूपं गृहीतमेव साहचर्याग्रहणेपीत्यपि न सम्यक्। न हि स्वरूपं भूतभावितेति भवत एवेदं मतं। तस्माद् वर्त्तमानज्ञानग्रहणात् वर्त्तमानमेव गृह्यतां।**

नीलावभासज्ञानेन यथा नीलतया गतिः। वर्त्तमानावभासेपि वर्त्तमानतया गतिः ॥४७६॥

**अथागृहीते कथं स्मरणं। नन्वयं गृहीतेपि समानः प्रसङ्गः। तथा हि।**

गृह्यमाणे स्मृतिर्न्नास्ति ग्रहणानन्तरं हि सा।
अतीते ग्रहणे तस्य रूपाभावे न सा स्मृतिः ॥४७७॥
इदानीं स्मरणं जातं कथं जानाति पूर्व्वतां। अविद्यमानं नीरूपं कथन्तद्रूपता स्मृतेः ॥४७८॥
अतद्रूपापि जानाति स्मृतिरित्यतिसाहसं। अथात्माज्ञः तदाप्यासीत् स जानात्येव पूर्व्वतां ॥४७९॥
ग्रहणे ह्यस्य सामर्थ्यं स्मरणेप्युपपद्यते। स्मरणं ग्रहणं चादो व्यतिरिक्तं यदात्मनः ॥४८०॥
ग्रहणस्मरणे तस्य नैवं स्तोऽतत्स्वभावतः।

---

[1] B. ग्रहणव्यापारस्य
[2] द्वादशमाह्निकं (समाप्तम्)
[3] B. सहभावी
[4] B. वर्तमानतयाभासे

न स्मरणग्रहणपृथग्भावे तस्यातत्स्वभावस्य ग्रहीतृस्मर्तृता शरीरस्यापि प्रसङ्गात् । अनित्यतया नेति चेत् । आकाशादीनामपि स्यात् । तत्रासमवायादनयोरिति (यदि) मतं ।

तदप्यसत्सम । यस्मात् ।

अनुसन्धानतस्तस्य ग्रहणस्मृतियोगिता । व्योमादीनामपि भवेत्तुल्यन्तत्रापि चोदनं ॥४८१॥

स्मरणमन्यथा नोपपद्यत इति । स्मर्ता परिकल्प्यते । नहि पूर्वापरकालभाविनं कञ्चिदन्तरेणेदं युक्तिमदिति । तथा चाकाशादीनामेवेदमस्तु किमर्थान्तरपरिकल्पनाप्रयासेन । समवायोप्येवमेव परिचोदनीयः । स्मरणादीनाम्वा नित्यताभ्युपेया । स एव आत्मनि चेत् । तदेवायातं ।

स्मृत्वा च कथमज्ञायि यत्राग्रहण[१]संशयः ।

स्मरणस्य तदा(ऽ)भावात् पूर्व्वतायाः कथञ्चिति ॥४८२॥रिति

तस्मान्न प्रत्यक्षेणेति[२] यत्किञ्चिदेतत् । तस्मान्नित्यायां[३] न प्रयत्नानन्तरं पूर्व्वानुसन्धानेन ग्रहणसम्भव इति । अपूर्व्वापररूपग्रहणादनित्यता शब्दस्येति स्थितमेतत् ।

यच्चोक्तं । स्वभावान्तरं ज्ञानं न प्रयत्नानन्तरमिति तदन्यथापि परिहर्त्तुमलं । यदि नाम स्वभावानन्तरं तथापि प्रयत्नानन्तरता (पि) सम्भवत्येव । न ह्यत्राति[४]सूक्ष्मेक्षिका प्रयोजनवती । तस्मादनेनैवोदाहरणेन द्वयमपि कार्यस्वभावलिङ्गद्वयं दर्शितं ।

ननु कार्यस्वभावहेतूदाहणमेव कस्माद् भेदेनोपदर्शितं नान्योपि भेदः । अत्र समाधिः ।

**यत्नान्तरीयिका सत्ता यो वात्मा स्वो(ऽ)विभागवान् ।**
**स तेनाव्यभिचारी स्यादित्यर्थन्तत्प्रभेदनं ॥२०२॥**

यस्य यत्नानन्तरेण सत्ता स एव हेतुस्तदव्यभिचारात् । नहि व्यतिरिक्तः कार्यताम्विरहय्याव्यभिचारी ।

ननु व्यभिचारादेव हेतुः न कार्यतया भस्मापि हि कार्यमग्नेः न च तस्याव्यभिचारः । तथा कार्यतामन्तरेणापि संयोगि जलमाधारं गमयति ।

तदसद्यतः . नोच्यते कार्यतया गमक एव । अपि तु गमकः कार्यतयैव व्यतिरिक्तः कार्यताम्विना न गमयतीति । यथाभतम्वा भस्मकार्यमतीतादप्यग्नेर्भवद्देशान्तरस्थादपि तथाभूतं गमयत्येव । अत एव कार्यताप्रयुक्तं गमकत्वं येन तद्विशे(षा) द्विशिष्यते । एवम्भूत एव खल्वत्रापि निमित्तनिमित्तिभावः । संयोगेन तु गमकत्वेऽधारोप्याधेयस्य गमकः स्यात् । अथाधार आधेयमन्तरेणाप्यास्ते तेनासौ न गमकः । आधेयन्तु नाधारमन्तरेण जलाद्यास्ते ततो गमकं (।) यद्यवन्तदेव कार्यं गमकमित्यायातं (।) येन हि विना यन्न भवति तत्तस्य कार्यं न चाधेयस्य स्थितिराधारमन्तरेण भवत्यतः कार्यं । न तु स्थितिरेव कार्यन्न जलं । एवन्तर्हि स्थितिरेव गमिका न जलमिति न व्यभिचारः ।

---

[१] B यत्र ग्रहण [२] B तस्मान्न प्रत्यक्षेण पूर्वापररूपता गृह्यते । नापि स्मरणेनेति
[३] B ०ताया [४] B ०त्रापि

अथ स्थितिविशिष्टं जलमेव गमयति। जलविशिष्टा स्थितिरेव गमयतीति किन्न भवति। युक्तञ्चैतदेव। तस्या एवान्वयव्यतिरेकेण गमकत्वात् न च स्थितिव्यतिरिक्तमपरं जलं।

ननु एतदपि जलमेव भवति तज्जलं न तु तदेवान्यदपि जलं जलमेव। न च जलत्वं सामान्यमस्तीति प्रतिपादितं। सत्त्वे वा न तद् गमकं। व्यक्तिरेव गमिका सा च कार्यमिति न कार्यदन्यस्य गमकत्वं।

अथैकैव सा व्यक्तिरिति मतं। तदप्यसत्। तदेव स्थितं तदेवान्यथेति प्रसङ्गात्। पर्यायेण तथाभावेपि न दोष इति चेत्। एवन्तर्हि पूर्व्वापरयोरेकताप्रतीत्यभावात् कथमेका व्यक्तिः। नखल्वप्रतीयमानमितरेण सहैकं प्रतीतिरेकतां साधयति न प्रतीत्यप्रतीती। अप्रतीतेर्भावसाधनायोगात्। प्रत्यभिज्ञा तु प्रत्याख्याता। तस्मात् सर्व्वत्र निरूप्यमाणा कार्यतैव गमकत्वे निबन्धनं।

येन रूपेण जन्यत्वं जलभस्मादिवस्तुनः। तेनैव गमकत्वेपि स्थितमित्यन्यतो(ऽ)गतिः ॥४८३॥

**"योवात्मा स्वो विभागवानि"**ति। यस्य य आत्मा स गमकस्तस्य वृक्षात्मा शिंशपा सा गमिका वृक्षतायाः।

ननु यथा वृक्षात्मा शिंशपा तथा वृक्षोपि शिंशपात्मैव। तादात्म्यस्योभयगतत्वमन्तरेणाभावात्। न(।) अविभागवत्त्वाभावात्। वृक्षो हि शिंशपाव्यतिरेकेणाप्यस्ति पलाशादिः। न तु शिंशपा तथेति सैवाविभागवती गमिका। ननु(।)

समानेपि तदात्मत्वेऽविभागो गमको यदि। तादात्म्यं गमकत्वे स्यादेकन्तन्निबन्धनं ॥४८४॥
तादात्म्यन्तु विनाप्यन्योऽव्यभिचारस्तथेक्ष्यते। धूमस्य तेन तादात्म्यं गमकत्वे ऽनिबन्धनं ॥४८५॥
अन्वयव्यतिरेकाभ्यां न हि तस्यानिमित्तता।

तदेतदसत्।

उक्तमेतन्न तादात्म्यं तदुत्पत्ती विना क्वचित्। गमकाव्यभिचारित्वं तेन ते तन्निबन्धनं ॥४८६॥
तदवान्तरभेदेपि[1] गमकत्वस्य भिन्नता। तदात्मकस्य गमकस्तदात्मैव न भेदिनः ॥४८७॥
कार्यन्तद्व्यतिरिक्तस्य कारणस्येति भिन्नता।

अत एवाह।

**संयोग्यादिषु येष्वस्ति प्रतिबन्धो न तादृशं।**
**न ते हेतव इत्युक्तं व्यभिचारस्य सम्भवात् ॥ २०३ ॥**

संयोगेन गमकत्वेऽग्निरपि धूमसंयुक्त इति गमकः किन्न धूमस्य। अव्यभिचाराभावादिति चेत्। स तर्ह्यव्यभिचारः कार्यकारणभाव एव व्यतिरेकिणः।

अत्र परः। कार्यकारणभावेन गमकत्वे तस्य द्विष्ठत्वादग्निरपि गमकः स्यात्। न। **"यन्नान्तरीयिका सत्ते"**ति वचनात्। न च कार्यकारणव्यतिरेकेणापरः कार्यकारणभावः। तेन कार्यकारणभावेन गमक इति कार्यत्वेन कारणं न[2] च गमकः। एवन्तर्हि कारणमपि

[1] B भेदेहि [2] B कारणत्वे

**गमकं कस्मान्न भवति। भवत्येव नान्यथाभावः। स तु ज्ञातुन्तथा न शक्यते यथा ज्ञायते तथा अगमकत्वमेव[1]। तेन च रूपेण गमक एव। तथा हि।**

कुर्व्वता वह्निना धूमं कारणत्वमवाप्यते। कुर्व्वतां यदि गम्येत गमकत्वं भवेदपि ॥४८८॥
यत्त्वशक्यन्तथा गन्तुमिति दोषो न तस्य सः। तथा तत्कार्यमेव स्यात् धूमाभावादभावतः ॥४८९॥
व्यापकं व्यतिरिक्तत्वे कारणं सर्व्वमेव हि।

**एवं स्वभावहेतावपि** वाच्यं (।)

तत्रापि शिंशपात्मा स्याद् वृक्षोपि गमको यतः[2]। तादात्म्यं सुगमन्नेति गमकत्वं न विद्यते ॥४९०॥
तथा वागम(क)त्वे स्यादविभागतया गतिः।
तस्मात् सर्व्वा गतिः कार्याविभागत्वेन वस्तुनः ॥४९१॥

**यथा च वृक्षपावकयोरनियतं तादात्म्यं कारणत्वं च शिंशपा त्वधूमं प्रति तथा गमकत्वमप्यनियतत्वेनैव। अनियमे कथं गमकः। अनियमेन गमकत्वनिबन्धनस्य भावात्। एवं हि। तत्तन्निबन्धनम्भवति यदि तदनुवर्त्तनं। अन्यथापि तत्त्वेति प्रसङ्गः। संयोगेप्येवमेवेति चेत्। तन्न यतः।**

"संयोगादिषु[3] येष्वस्ति प्रतिबन्धो न तादृशः।
न ते हेतव इत्युक्तं व्यभिचारस्य सम्भवात्" ॥४९२॥

संयोगी आधार आधेयेन तुल्यत्वात् संयोगस्य। समवायी जातिगुणक्रियापदार्थः। **न चाधार आधेयं गमयति। अविनाभावस्य कार्यकारणभावाख्यस्यासंभवात्। तथा जातिः केवलापि प्रतीयमाना विनष्टायां व्यक्तौ न जातिमन्तमवगमयति। कार्यकारणभावस्यासम्भवादेव।**

अथाधेयमाधारं गमयति। तत्राविनाभावस्य सम्भवादिति मतिः। तथा तर्हि **कार्यकारणभाव एव गमकः। अविनाभाव एवेति चेत्। तदप्यसत्। अविनाभाव एव कार्यकारणभावः। अत आह।**

**सति वा प्रतिबन्धेस्तु स एव गतिसाधनः।**
**नियमो ह्यविनाभावोऽनियतश्च न साधनं ॥२०४॥**

**स च नियमः परस्य परत्र कार्यकारणभाव एव गमकत्वस्यान्यथाऽभावादिति प्रतिपादितं। स्वभावकार्यसिद्धयर्थं द्वौ हेतू द्वौ च विपर्ययौ निर्दिष्टाविति व्याख्यातं।**

## (१) "विवादाद् भेदसामान्य" इत्यस्य व्याख्यानम्—

**"इदानीं विवादाद् भेदसामान्य" इति व्याचष्टे। भेदो साधारण एकान्तव्यतिरेकी। सामान्यमेकान्तान्वयि। तयोरनैकान्तिकयोरपि गमकत्वमाह परस्तत्र तत्त्वं प्रतिपादयत्याचार्योऽ- "गमकत्वं तत्र यः सन्नि"त्यादिना।**

**नन्वैकान्तिकव्यतिरिकेणागमकत्वमेव युक्तं। सत्यं। यद्येकस्मादेवान्ताद् व्यतिरेकः सिध्यति स तु न सिध्यति। पक्ष एव व्यभिचाराशङ्कातः। तथा हि।**

---

[1] B न तथाऽगमक एव  [2] B मतः  [3] संयोग्यादि०

**ऐकान्तिकत्वं व्यावृत्तेरविनाभाव उच्यते ।**
**तच्च नाप्रतिबद्धेषु तत एवान्वयस्थितिः ॥ २०५ ॥**

निरात्मकाद् व्यावृत्तिमेव प्राणादि कथं सिध्यति । यदि सात्मकत्वेनाविनाभावो भवेत् । तच्चाप्रतिबद्धेषु न सम्भवति(।) सर्व्वतो विपक्षाद् व्यावृत्तेः स्वमुखेन प्रतिपत्तुमशक्तेः । न खलु सकलविपक्षदर्शनं येनात्र नास्त्यत्र नास्तीति प्रतीयात् । अन्वयमुखेन तु सम्भवति । यतः । तन्नियतत्वेन ग्रहणं प्रतिबन्धग्रहणं स च प्रत्यक्षप्रमाणव्यापारस्ततो नियतत्वग्रहणादन्यव्यावृत्तिराकृष्यतेऽन्यथा नियतरूपाग्रहणमेव । तथा हि(।)

अन्यभावेप्यतद्भावस्तद्भावेऽभाव एव च । अन्याभावेप्यभावो न ततस्तत्कार्यतागतिः ॥४९३॥

यदा हि । अन्यभावेपि भावो नास्ति चन्दनगन्धस्य तद्भावे भावश्च । तदा चन्दनगन्धस्तत्कार्यमिति सिध्यति । अन्यथा नेति निर्णयः । स च व्यतिरेकमन्तरेण नास्तीति व्यतिरेकोपि तदात्मभूतः प्रसिध्यति ।

नन्वन्वयोपि व्यापी न सिध्यति सर्व्वत्रास्मादस्योदय इति । नैतदस्ति ।

अस्मादेवोदयोस्येति तावन्मात्रेण तद्गतिः । स चान्यस्मादनुत्पादस्तदैवावगतस्तथा[1] ॥४९४॥

न ह्येतस्मादन्यत्र भवत्येवेत्येतद्गमकत्वे निबन्धनमपि त्वस्मादेव नान्यस्मादिति । तथा च प्रतिपत्तिरस्त्येव । तदन्यस्मात् प्रागनुत्पादस्य दर्शनात्तदभावेऽभावं झटित्येव प्रतियतां ।

ननु यदि नामास्वस्मान्नो[2]त्पत्तिमत् कुतश्चिदन्यविशेषाद् भविष्यति । न ह्यन्य इत्येव सर्व्वः समानस्ततो न व्यतिरेकस्तद्भावे(ऽ)भाव इत्यव्यतिरेकोपि न निश्चितोऽदृश्यस्यापि सम्भवात् ।

तदेतदसद् यतः ।

अयं हेतुस्तवैवं स्यात् तवैवायमनुग्रहः । स्वानुग्रहेप्यनिच्छा चेद् वत एवासि सर्व्वथा ॥४९५॥
तवैवं गमको हेतुरन्यथा(ऽ)सम्भवादिति (।)

प्रतिपादिते यद्येवं नेष्यतेऽन्या गतिरन्विष्यतां । न च सम्भवतीति स्ववधाय तर्हि शूलतक्षा । अपि च ।

तदभावादभावोस्य झटित्येष कथम्भवेत् । अनन्तरं भवेन्नैवं[3] यद्यन्यदपि कारणं ॥४९६॥

अविगुणसामग्रीसन्निधाना(त्त)द् भवत्येव । तदभावे तु झटित्येव न भवतीत्यनित्यपि[4]शाचादिकारणत्वेन सम्भवति । तदपि झटित्येवोपयात्यपयाति चेति यद्यभ्युपगमः स तर्हि पिशाचः पावकेन वशीकृत इति पावकस्यैव हेतुभावः । यद्यन्यस्मादपि भवेत् । अन्वयव्यतिरेकाभावाद् यादृच्छिकः सम्वाद इति प्रेक्षापूर्व्वकारिणामुपायान्वेषणं यत्प्रतिफलं नियमेन न स्यात् । अस्माकं त्वद्वैतवादिनां न परमार्थतः कार्यकारणभावो नाम । तस्मात् प्रतिबन्धसाधकप्रमाणाभ्युपगमे परिस्फुटान्वयस्थितिः । यस्मात् ।

---

[1] B.० स्तदा
[2] B. यदि नान्यस्मा०
[3] B. ०न्नैव
[4] B. अन्यदपि

**स्वात्मत्वे हेतुभावे वा सिद्धे हि व्यतिरेकिता ।**
**सिध्यत्यतो[1] विशेषे न व्यतिरेको न चान्वयः ॥२०६॥**

न ह्यतदात्मनि यतस्तदभावान्नियमेनाभाववान् । न ह्यप्रतिबन्धो निवर्त्तकः परस्य स्वयन्निवर्त्तमानोऽतिप्रसङ्गात् ।

तथा च । नेदं निरात्मकं जीवच्छरीरमप्राणादिता[2] प्रसङ्गादिति हेतुः (।) न ह्यप्रतिबन्धवतो निवृत्तौ प्रतिबद्धेतरस्य निवृत्तिः । न च प्रतिबन्धवानव्यापकः । न च तादात्म्यतदुत्पत्तिप्रतिबन्धमन्तरेण व्याप्यव्यापकभावः । अन्येनापि प्रकारेण कस्मान्न भवतीति चेत् । न । प्रकारान्तरासम्भवात् । सोपि च प्रकारः प्रतिपन्न एव साधकः समीहितस्य । न च तथाऽतो व्यतिरेकितया (भि)मतस्य न व्यतिरेको नाप्यन्वय इत्युभयाभावात्अगमक एव सात्मकं जीवच्छरीरं प्राणादिमत्वादिति ।

कथन्तर्हि तदुभयाभावादाचार्येणायं व्यतिरेक्युक्तः । तस्याप्येतदेव वक्तुमभिमतं[3] स्यात् ।

नैष दोषो यतः ।

**अदृष्टिमात्रमादाय केवलं व्यतिरेकिता ।**
**उक्ताऽनैकान्तिकस्तस्मादन्यथा गमको भवेत् ॥२०७॥**

पराभिप्रायेणादर्शनमात्रसिद्धं व्यतिरेकमुपादायाचार्येणायं व्यतिरेकीति प्रतिपादितो न तु निश्चितव्यतिरेकः । अन्यथा निश्चितव्यतिरेकसम्भवे गमकः स्यात् । तथा चाचार्यो न क्षिपेदनैकान्तिकमध्ये । तत आचार्यस्य नात्र निश्चितव्यतिरेकाभिप्रायः ।

### (२) आत्मनित्यत्वनिरासः—

ननु प्राणाद्यभावो नैरात्म्यव्यापी स च जीवच्छरीरे नास्तीति नियमेन व्यापकनिवृत्त्या व्याप्यस्य जीवच्छरीरे नैरात्म्यस्य निवृत्तिरिति कथन्नात्मसिद्धिः ।

न सिद्धिर्यतः ।

**प्राणाद्यभावो नैरात्म्यव्यापीति विनिवर्त्तने ।**
**आत्मनो विनिवर्त्तेत प्राणादिर्यदि तच्च न ॥२०८॥**

यदि विपक्षयोर्व्याप्तिः सिध्येत्तदाऽप्राणादि[4]निवृत्तौ जीवच्छरीरे नैरात्म्यनिवृत्तिरिति सिध्यत्यात्मा[5] विनाप्यन्वयेन(।) सैव तु व्याप्तिर्विपक्षयोः स पक्षप्राप्ति[6]मन्तरेण न सिध्यति । आत्मनोऽप्रतिबन्धे(वत्वे)न निवर्त्तकत्वमेव न सिध्यति । न चानिवर्त्तकस्य निवृत्तिर्निवर्त्यनिवृत्त्या व्याप्ता सिध्यति । तस्मादव्याप्यस्य निवृत्त्यभावे(प्य)ऽव्यापकस्य निवृत्तेरनिवृत्तिरिति नात्मसिद्धिः ।

**अन्यस्य विनिवृत्त्यान्यविनिवृत्तेरयोगतः ।**
**तदात्मा तत्प्रसूतश्चेन्नैतदात्मोपलम्भने ॥२०९॥**

---

[1] सिध्येदतो—हे०　　[2] ०दिमत्व　　[3] B वक्तुं क्षमं
[4] B प्राणादि　　[5] B ०त्मनो　　[6] B व्याप्ति

प्रतिबन्धमन्तरेणापि यदि निवृत्तिरतिप्रसङ्ग एव। **"तदात्मा तत्प्रसूतश्चेत्"।** अथात्मा प्राणादिः सर्व्वमिदमात्मैवेति। ततो वा प्रसूत आत्मनः समवायिकारणत्वात्।

नैष परिहारो यतः। एतदात्मोपलम्भने।

**तस्योपलब्धावगतौ च गतौ च प्रसिध्यति।**

यद्यात्मोपलब्धिस्तल्लक्षणत्वादपरोपि तत्स्वभाव इति सिध्यति। स एव तु नोपलब्धः कुतस्तल्लक्षणत्वादिति हेतुः सिध्यति। समवायोपीह बुद्धिनिबन्धनो नात्मानुपलब्धेः। कार्यकारणभावस्तु प्रत्यक्षानुपलम्भसाधनो नाप्रत्यक्षः। आत्मनीति कुतस्तदात्मत्वतत्प्रसूती यतः।

**ते चात्यन्तपरोक्षस्य दृष्ट्यदृष्टी न सिध्यतः ॥२१०॥**

न च घटादौ नैरात्म्यं यतः।

अत्यन्तं न परोक्षत्वेऽनुपलब्धेरभाववित्। आत्मनोऽसम्भवाभावे कथं तद्व्याप्तितागतिः ॥४९७॥

उपलब्धिलक्षणप्राप्तस्य (हि) भवतोऽन्वयव्यतिरेकौ कारणव्यापकत्वसाधकौ न चात्मोपलम्भः ततः कथन्तस्य कारणव्यापकभावः। तदभावे च न प्राणादिस्तदात्मा तत्प्रसूत इति च (न) सिध्यति। अपि च।

**अन्यत्रादृष्टरूपस्य घटादौ नेति वा कुतः।**
**अज्ञातव्यतिरेकस्य व्यावृत्तिव्यापिता कुतः ॥२११॥**

यो ह्यन्यत्र दृश्यते देशे काले वा स इदानीमत्र वा नास्तीति प्रतीयत इति सकलस्य जगतः प्रतीतिः। यस्तु न जातुचित् प्रतीतेर्व्विषयः स नास्त्यत्रेति कुत उल्लेखः।

न ह्यदृष्टे प्रवर्त्तन्ते वितर्क्काः कस्यचित् क्वचित्।
तादात्म्यप्रतिषेधस्तु सर्व्वापेक्षः परं यदि ॥४९८॥

वितर्क्का हि दृष्ट एव क्वचिदपरत्रादृश्यमाने प्रवर्त्तन्तेऽस्ति न वेति। नेति तु कुतो निश्चयः। यदि परमयमात्मा न भवतीति तादात्म्यनिषेधमात्रं। न तु घटादावात्मा नास्तीति निश्चयः। व्यापितायान्तु सुतरामेव।

तद्विविक्तोपलम्भेन यद्यात्मा नेति निश्चयः। घटादौ जीवतः कायेप्यसौ नेति भवत्वसौ ॥४९९॥

यथा व्यतिरिक्ततया[1] घटादिरुपलभ्यमानो निरात्मक इति गम्यते जीवच्छरीरमपि तथा स्यात्। नहि तदपि तद्विविक्ततया नोपलभ्यते (।) तस्मादुपलभ्यताऽभावादात्मनो न घटादौ नास्तिता गतिः। तेनात्मनोऽज्ञातव्यतिरेकस्य व्यावृत्तिव्यापिता प्राणाद्यभावव्यावृत्तिव्यापितात्मनः कुतः। यस्य हि व्यावृत्तिर्यद्व्यावृत्त्या व्याप्ता तद्व्यावृत्तिस्तेन व्याप्यते। न चात्मव्यावृत्तिरसिद्धा प्राणाद्यभावेन व्याप्तेति ज्ञायते ततः कथं प्राणाद्यभावव्यावृत्तिरात्मना व्याप्ता सिध्यति। येन प्राणाद्यभावव्यावृत्तेरात्मसिद्धिः। तस्मान्नात्र व्यतिरेकनिश्चयः।

ननु यथा घटादौ न प्राणादय इति प्रतीयते तथात्मा नास्तीति किमिति न प्रतीतिः। विषम उपन्यासः। यतः।

---

[1] यथात्मविविक्ततया

**प्राणादेश्च क्वचिद् दृष्ट्या सत्त्वासत्त्वं प्रतीयते ।**

नानुपलम्भमात्रात् ।

**तथात्मा यदि दृश्येत सत्त्वासत्त्वं प्रतीयते ॥२१३॥**

उपलब्धिलक्षणप्राप्तेः प्राणादीनामभावप्रतीतिरजीवच्छरीरे । नत्वेवमात्मेति विपर्ययः । अपि च । सन्तु नाम निरात्मका घटादयः तथापि नात्मा प्रसिध्यति प्राणाद्यभावनिवृत्त्या ।

ननु यद्यात्मा जीवच्छरीरे न भवेत् प्राणादीनामप्यसम्भवः । आत्माभावस्यप्राणादिनिवर्त्तकत्वस्य घटादौ दृष्टत्वात् । न (।) अन्याभावस्य निवर्त्तकत्वात् । तथा हि ।

**यस्य हेतोरभावेन घटे प्राणो न दृश्यते ।**
**देहेपि यद्यसौ न स्याद् युक्तो देहेन सम्भवः ॥२१३॥**

बुद्धिप्रयत्नादयोपि घटादौ न सन्त्येव । तत्किन्तदभावात् प्राणादिनिवृत्तिरथात्मन इति कः खल्वत्र भवतः सन्देहापोहहेतुः(।) तत्र यस्य बुद्ध्यादेः कार(ण)स्याभावेन घटे न दृश्यते प्राणादिः स एव यदि देहे न स्यात् स्यात् प्राणादिविरहप्रसङ्गः । न च बुद्ध्यादयो न सन्ति तत्कथं प्राणादिनिवृत्तिप्रसङ्गः ।

अथ नैरात्म्येन साधर्म्यमस्ति जीवच्छरीरघटादीनां(।) यदि नाम बुद्ध्यादिसद्भावासद्भावकृतं वैधर्म्यमपि तथापि निरात्मत्वाद् घटादिवज्जीवच्छरीरमपि प्राणादिविरहि । अप्राणादिविरहिधर्मतया वा सात्मकं ।

अत्रोच्यते ।

**भिन्नेपि किञ्चित् साधर्म्याद् यदि तत्त्वं प्रतीयते ।**

तदा ।

**प्रमेयत्वाद् घटादीनां सात्मत्वं किन्न मीयते ॥२१४॥**

न ह्येवमपि किञ्चिन्मात्रसाधर्म्यन्नास्ति ।

**अनिष्टश्चेत्प्रमाणं हि सर्व्वेष्टीनान्निबन्धनं ।**
**भावाभावव्यवस्थां कः कर्त्तुन्तेन विना प्रभुः ॥ २१५॥**

नहीच्छया प्रमाणं । अपि तु यत्र प्रमाणसम्भवस्तत्र प्रेक्षावदिच्छा । नानिष्टमपि प्रमाणानीतं विपर्येति । स्वातन्त्र्येण हीच्छानिरपेक्षं प्रमाणं युक्तं । अन्यथेच्छया प्रमाणस्य स्वातन्त्र्येण विना भावाभावव्यवस्था न स्यात् । वादीच्छया विषयभूतसाध्यप्रतिपादनं प्रतिवादीच्छया परित्याग इति न भावाभावव्यवस्था(ऽ)संकरः ।

तेपि तर्हि बुद्ध्यादय आत्माभावेन स्युरिति प्रतिपादयामः । ततो यदुक्तं बुद्ध्यादि सद्भावे न प्राणादिनिवृत्तिरिति तदयुक्तं ।

नायुक्तं(।) अन्येषामेव तत्र प्रवर्त्तकत्वात् । यद्यात्माबुद्ध्यादीनां प्रवर्त्तकतया निश्चितो युक्तं निवर्त्तमानो निवर्त्तक इति । न चैवं यतः ।

**(३) स्मृतिच्छायत्नजः प्राणनिमेषादिः—**

**स्मृतीच्छायत्नजः प्राणनिमेषादिस्तदुद्भवः।**
**विषयेन्द्रियवित्तिभ्यस्ताः स्वजातिसमुद्भवाः ॥२१६॥**
**अन्योन्यप्रत्ययापेक्षा अन्वयव्यतिरेकभाक्।**
**एतावत्यात्मभावोयमनवस्थान्यकल्पने ॥२१७॥**

क्वचिदनिष्टे तदन्यत्र वा स्मृतिरिच्छाप्रयत्नश्च। ततः प्राणनिमेषादयः प्रवर्त्तन्ते। स्मृत्यादीनां कुत इति चेत्। विषयेन्द्रियायत्तवित्तिभ्यस्ताः स्वजातिसमुद्भवाः। विषयस्य विषय एव पूर्व्वकस्तथेन्द्रियवित्त्योरन्योन्यप्रत्ययापेक्षितया। एतावति हेतुप्रत्ययकलापेऽयमात्मभावः प्रतिबद्धः किमपरेणानुपयोगिना।

ननु स्मृतिः पूर्व्वपरानुसन्धानरूपात्मानं विना न भवति। तथा हि। येन दृष्टं स एव स्मर्त्ता न ह्यन्यदृष्टमन्यस्य स्मरणविषयः। नन्विदमपि व्यतिरेकमात्रमेव कथमतोपि प्रसिद्धिः। न हि स्मरणमेकत्वे दृष्टं पूर्व्वापरयोरेकत्वस्य प्रत्यक्षेणाप्रतिपत्तेः(।) स्मरणस्य चाप्रमाणत्वात्। यद्यपि परेणोपलब्धं न स्मर्यते परविशेषेण स्मरिष्यते (।) नहि पर इत्येव सर्व्वः समानः (।) स्वहेतुतस्तथाभूतः स जातो येन स एव स्मरणस्य हेतुर्नापरः कार्यकारणभावनियमात्। न ह्यात्मेत्येव स्मरणम्(।)अपि तु पाटवाभ्याससम्भविसन्तानभावादन्यथा सदा स्मरणप्रसङ्गः।

ननु नैवमुच्यते आत्मनि सति स्मरणमेव। यदि स्मरणमात्मन्येव सति आत्मान्तरे स्मरणाभावात्।

नैतदपि सम्यक्। यतः।

तद्विकारविकारित्वादन्वयव्यतिरेकतः। कार्यकारणभावोयमन्यथा न व्यवस्थितिः ॥५००॥

पूर्व्वानुभवाभ्यासान्वयव्यतिरेकानुविधायिनी स्मृतिस्तद्विकारविकारिणी चेति नात्मा कारणम्।

अथ नित्यव्यापिना विना न भवति। तथा सति कालादीनामपि कारणत्वप्रसङ्गो विशेषाभावात् (।) अथानुभवितृस्मर्तृत्वेन विना न भवति।

तदेतदसत्।

स्मरणानुभवाभ्यां हि स्मर्तानुभविता च यः[1]। कल्प्यते व्योम्नि तद्भावः कथन्नेत्यवगम्यते ॥५०१॥

स्मरणानुभवान्यथानुपपत्त्या हि स्मर्त्तानुभविता च कल्प्यते कश्चित्। न स्वाकाशाविव्यतिरिक्तः। तथा च एकः कश्चिदस्तीति कल्प्यतां। स च नाकाशादिविलक्षणो व्यापिनित्यत्व(रमूर्त्त)त्वादिना विशेषाभावात् (।) अथाहमिति कर्त्तृत्वेन प्रतीयमान आत्मा नामूर्त्तत्वमात्रं।

नन्वहमिति प्रत्यये शरीरमेव प्रतिभात्यहं देवदत्तो गार्ग्यः कृष्ण इति। शरीरमनित्यमिति चेत्। न। शरीरावस्था अनित्याः। अवस्थाता तु परलोकादौ न भिन्न इति

[1] B सः

वरमेषैव[1] कल्पना(।)न तु व्यतिरिक्तस्य शरीराधिष्ठानमेव च स्मरणादिः[2] प्रतीयते नामूर्त्ताधिष्ठितं। अथ नित्यस्तावत्प्रतिपत्ता सिद्धः। शरीरमन्यद्वेति किमपरेण विचारेण।

तदप्यसत्।

अवस्थासंहृतिर्यस्मादपरस्याप्रवेदनात्। शरीरमत एवास्मत्पक्षसिद्धिरबाधिता ॥५०२॥

अपि च।

नित्यरूपेऽविकार्येहि स्मरणानुभवौ कुतः। यदि स्मर्त्ता तदेवास्य सदा रूपं कुतोर्थवित् ॥५०३॥
सुखादिना विकारेस्य नित्यतापि न युज्यते। सुखादिनाऽविकारेस्य न युक्ता सुखितादिता ॥५०४॥
स्मरणन्तु फलं यस्मादनुभूतेः ततो न किम्। अथाहमिति विज्ञानान्न हेतुफलमात्रकं ॥५०५॥
तथा हि पूर्व्वदृग्ग्राह्यमहं स्मृत्यार्थनिश्चितं[3]। प्रत्येमीति जनः सर्व्वः कर्त्तृत्वमवगच्छति ॥५०६॥

तदसत्। यस्मात्(।)

पूर्व्वदृष्टं स्मरामीति नैवात्मोदयमात्रतः। प्रमाणं प्रत्ययः सर्व्वस्तथा सत्यसमञ्जसं ॥५०७॥

यद्यात्मनः कारणतामात्रात् प्रत्ययः प्रमाणं सर्व्वः प्रमाणं भवेदिति सकलमेव सकलस्य सिद्धिमत् ततो महदसमञ्जसं। तस्मादनुपहताश्रयेण यदुत्पद्यते तदेव प्रमाणं। तथा च सति चक्षुरादिजनितः प्रत्ययो नानुसंहितं परिच्छिनत्तीति कथमेकतागमः पूर्व्वापरयोः सत्यः स्यात्। येन स्मरणेन चास्य सामर्थ्यं सन्धाने चापि विद्यत इति वचः सत्यतां यायात्। नहि प्रमाणभूतं प्रत्ययं विनात्मानमन्यद्वानुसंहितं प्रत्येत्यात्मा। ततोऽहं स्मरामीति सम्वृतिमात्रकमेतत्। अतः साम्वृतेनैवात्मना सकलं समञ्जसमेव। अपि च।

**श्रावणत्वेन तत्तुल्यं प्राणादिर्व्यभिचारतः।**
**न तस्य व्यभिचारित्वात् व्यतिरेकेपि चेत्कथं ॥२१८॥**

**नासाध्यादेव विश्लेषस्तस्य नन्वेवमुच्यते।**
**साध्येनुवृत्त्य[4]भावोर्थात्तस्यान्यत्राप्यसौ समः ॥२१९॥**

नहि श्रावणत्वस्य प्राणादेश्च विशेषः। व्यतिरेकस्य केवलस्योभयत्र समानत्वात्। तत एकस्य व्यभिचारिताऽन्यस्य नेति कोयं न्यायः

ननु न व्यतिरेकस्य समानत्वं विषयभेदात्। श्रावणत्वं हि सपक्षविपक्षाभ्यामपि व्यावर्त्तते। न प्राणादिरसाध्यादेव व्यावृत्तः। ननु सपक्षादपि व्यावृत्तं श्रावणत्वमिति सपक्षानुगमाभावः प्रतिपाद्यते। स प्राणादेरपि समान एव नहि तस्यापि सपक्षास्थिता सपक्षभावाभावोपन्यासस्तत्त्वोपयोगी। तथा हि।

**असाध्यादेव विच्छेद इति साध्येस्तितोच्यते।**
**अर्थापत्त्याऽत एवोक्तमेकेन द्वयदर्शनं ॥२२०॥**

नियमेनावधारणमवधार्यमाणविपर्य(य) साधनमन्यथा यद्यसाध्यादेव विच्छेदः सपक्षादपि स्यात्तदवधारणमपार्थकं। अत एव भवद्भिरपि अर्थापत्त्यैकेन द्वयदर्शनं अतो वाक्यादसाध्यादेव विच्छेद इति कृतं।

---

[1] B. ०मेकैव [2] B. ०णादिकं [3] B. ०नन्यनिश्चितं [4] साध्येपि वृत्त्य०—हे०

**ईदृगव्यभिचारोतोनन्वयेषु न सिध्यति ।**

यो ह्य व्यभिचारोन्वयेन व्याप्तोऽवधारणलक्षणः । स कथं व्यापकान्वयाभावे भवेत् । अथवाऽसाध्यादेव विच्छेद इति । नेदमन्वयप्रतीतिमन्तरेण प्रतीयते । नहि सकलविपक्ष-दर्शनसम्भवः । अन्वयद्वारेण तु सम्भवति ।

आत्मनि प्रतिबद्धत्वादन्यस्माद् विनिवर्त्तते । अनिवृत्तस्तदन्यस्मात् कथन्तत्र निबध्यते ॥

अथ साध्येस्तिता नास्ति नास्तिता तर्हि प्राप्तेति कथमसाध्यादेवेत्यव्यभिचारः । यतः ।

**प्रतिषेधनिषेधश्च विधानात् कीदृशोऽपरः ॥२२१॥**

असाध्य एव नास्तीति यदवधारणं तत्साध्ये नास्तित्वं निषेधति । असाध्य एव नास्ति साध्ये तु न नास्तीति प्रतिषेधनिषेधने विधानमेव प्रतिपादयेत् । अथ (।)

**निवृत्तिर्नासतः साध्यादसाध्येष्वेव नो ततः ।**
**नेति सैव निवृत्तिः किं निवृत्तेरसतो मता ॥२२२॥**

अथ प्राणादिहेतोः सपक्षाभावान्न ततो निवर्त्तनं । नह्यसतो निवर्त्तनं शक्यं । अपादा-नत्वाभावात् । न चासन्नाम किञ्चित् यतो निवर्त्तनं प्रतीयेत । यद्य(स)तो न निवृत्तिः । निवृत्तिनिवृत्तिः कथं । सापि नेति चेत् । ननु निवृत्तिनिवृत्तेर्निषेधे निवृत्तिनिवृत्तिनिवृत्तिः कथमसत इत्यनवस्थानादप्रतिपत्तिः । प्रतिषेधो निवृत्तिरिति चैक एवार्थः । यदेव निवृत्ति निर्वृत्ति प्रत्यधिकरणं तदेव निर्वृत्ति प्रत्यपादानं ।

ननु येन संयोगः समस्ति तद्वियोगेपादानं । न चाभावेन संयोगः । येन न सम्भवति स किं सुतरां नापादानं ।

विश्लेषमात्रेपादानं न संयोगे सतीत्यपि । सदैव पापाद् विरत इत्येतत् कथमन्यथा ॥५०८॥
बुद्धया संभावना तत्र यद्यत्रापि न कि(म)मता । अतोस्तु सुतरामेव तस्यापादानता गतिः ॥५०९॥

यत्र सोर्थो न सम्भ(व)ति कदाचित् सुतरामेव तत्तस्यापादानं । यतः ।

**निवृत्त्यभावस्तु विधिर्व्वस्तुभावो[1]ऽसतोपि सन् ।**
**वस्त्वभावस्तु नास्तीति पश्य बान्ध्यविजृम्भितम्[2] ॥२२३॥**

असत्यभावो नेति निवृत्त्यभावो विधिरेव वस्तुभावलक्षणः । सोऽसतोप्यस्ति । अभावस्त्वभावे युक्तरूपोपि नास्ति विपर्ययेपीतर इति किमन्यद्बान्ध्यविचेष्टितात् । यतः ।

अन्योन्यपरिहारेण स्थितिर्व्विधिनिषेधयोः । प्रकारान्तरताभावादुभयञ्चेत्ययुक्तिमत् ॥५१०॥

असति भावेऽसत्त्वं नियमभावीति तदेव निवृत्तिरपि व्यपदिश्यते । नहि तत्राविद्यमानम-निवृत्तन्ततः । अविद्यमानमपि तत्र नैवाधिकरणत्वस्यायोगात् । न विद्यमानताऽभाव एव तत्राभावः । सोपि नेति चेत् । न(।) अन्योन्याभावरूपत्वाद् भावाभावयोः कुतः प्रतिषेधो द्वयोरपि । भावो हि नियमेनाभावव्यवच्छेदेन तत्त्वं प्रतिलभते । अभावे हि न भावस्याविति यतो भावोऽभावाद् व्यावृत्तस्ततस्तन्निवृत्तो नियमेन भावी । अन्यथा भावनिवृत्तावपि यदि न भवेत् न भवेदेव । तथा हि ।

---

[1] T. वस्त्वभावो [2] T. पश्य बान्ध०

यदि भावो (नाभावे) न भाव एव प्रतीयते। अभावो यदि नास्त्येव ततो भावः प्रतीयते ॥५११॥
सोपि न प्रतिषेधः सोनुपलब्धेरसत्त्वतः। द्वयोरसत्त्वेऽभावस्य न सत्त्वं विनिवारितम् ॥५१२॥

यद्यपि भावाभावयोर्द्वयोरप्यसत्त्वन्तथापि भावस्यासत्त्वमनिवारितमेव। एवं हि भावस्यासत्त्वं यदि भावो न भवति। तथाऽभावस्याप्यसत्त्वं भवेद्य(द्य)भावो न भवति। भावस्यानवगमने स एवाभावः प्रतीयते। तस्मात् प्रतिषेधः प्रवर्त्तमान एव तद्विविक्तोपलम्भलक्षणः प्रत्यक्षेण विधिबहिर्भावेन व्यवस्थाप्यते (।) तत एकप्रमाणवृत्त्यैवान्यथात्वेऽन्यथाभावव्यवस्थापनं। न प्रकारान्तरसम्भवः। यत्तत्र प्रत्यक्षेनान्तर्यातं तत्सर्व्वमन्यदेव भावरूपग्राहिणा च प्रत्यक्षेण। तत्र यत्र ताद्रूप्येण परिच्छिद्यते। तस्य तेन रूपेणाभाव एव न प्रकारान्तरता। अभावेपि परिच्छिद्यमाने यः तथा न परिच्छिद्यते स भाव एवेति कुतः प्रकारान्तरं। भवतु प्रकारान्तराभावः। स तु भावोभावो वा ऽभावे नेति साधिकरणता न परिच्छेत्तुं शक्या तस्यैवापरिच्छेदात्। न ह्यसन् परिच्छेत्तुं शक्यः।

तदसत्। यतः।

**निवृत्तिर्यदि तस्मिन्न हेतोर्वृत्तिः किमिष्यते।**
**सापि न प्रतिषेधोयं निवृत्तिः किन्निषिध्यते ॥२२४॥**

भवन्तमेव तावत् पर्यनुयुंज्महे(।) यदि तस्मादसतः सपक्षान्न निवृत्तिः किम्वृत्तिर्भविष्यति। न प्रकारान्तरमस्तीति। एवं हि निवृत्तिरभावरूपा न भवति। यदि भावः स्याद् वृत्तिरूपः (।) सापि नेति चेत्। न निवृत्ता र्तहि निवृत्तिर्यतोऽयमेव भवेत् प्रतिपादितः। प्रतिषेधो निवृत्तिस्ततः किन्निषिध्यते। नहि प्रतिपादितं तदेव च निषिद्धं भवितुं युक्तम्। तस्माद् वृत्तिनिषेध एव निवृत्तिरिति न निषेधस्तस्याः।

अथाधिकरणतया न तस्य प्रतीतिः अपादानतया वेति न तस्मान्निवृत्तिरित्युच्यते।

अत्रोच्यते।

**विधानं प्रतिषेधञ्च मुक्त्वा शाब्दोस्ति नापरः।**
**व्यवहारः स चासत्सु नेति प्राप्तात्र मूकता ॥२२५॥**

यदि कश्चित् पर्यनुयुंक्ते भवन्तं ननु प्राणादिः सपक्षे न दृश्यते। ततो निवृत्तस्तस्मादसाधारणः कथमगमकः[1]। तथात्वे चाश्रावणत्वमपि गमकं स्यात्। ततो नियमेनासति सपक्षे न निवृत्तिरिति वक्तव्यमन्यथा मूकतात्र प्राप्ता।

अथापि भवेदेवमेव भवतु। न स्वयमपि कथञ्चित् परिच्छेदसम्भवात्। वचनं निवारयितुं शक्यं न बुद्धिः(।) अवश्यमेव कथञ्चित् प्रतिपत्तव्यं। अपि च। यद्यभावो नाधिकरणत्वेनापादानत्वेन वा प्रत्येतुं शक्यः। सदा सर्व्वात्मनैव व्यवहारोच्छेदः। यतः।

**सताञ्च न निषेधोस्ति सोऽसत्सु च न वर्त्तते।**
**जगत्यनेन न्यायेन नञर्थः प्रलयङ्गतः ॥२२६॥**

नञर्थोऽभाव एव ततश्चाभावस्यापरिच्छेदे कथन्तस्य प्रयोगः। यतः।

बुद्धिस्तेनाभिधेयेन वाचकं विनियुज्यते। तस्य प्रतीतयेऽभावद्वयमेतन्न सम्भवि[2] ॥५१३॥

---

[1] B. कग थंमकः　　[2] T. त्रयोदशमाह्निकं (समाप्तम्)

यद्यभावमात्रं विषयीक्रियते । व्यर्थक एव प्रयोगो नञः । अनिरूपितविषयस्य नञोऽप्रयोगात् । प्रयोगे वा न प्रयोजनं । अथ यस्याभावः स विषयीकर्त्तव्यः । तथा सति कथं प्रतीयमानस्यैवाभावः । अथान्यथा प्रतीयतेन्यथाभावः । तथा हि । सन्त एव केनचिद्देशादियोगेन निषिध्यन्ते ।

अत्रोच्यते ।

देशकालनिषेधश्चेद् यथास्ति न निषिध्यते ।
न तथा न यथा सोस्ति तथापि न निषिध्यते ॥२२७॥

इदानीमिहानेन रूपेण नास्तीत्यपि न शक्य एव निषेधः । तथाहि । यद् रूपं यः कालो यो देशः स यद्यस्ति कथन्निषिध्यते । अथ नास्ति न बुद्ध्या विषयीकरणसम्भवो(ऽ)भावस्य परिच्छेत्तुमशक्यत्वात् । अथ विषयीक्रियते तथा सत्यधिकारणादितयापि । अन्यथा विषयीकर्त्तुमशक्यत्वात् । अवश्यं हि कारकभावेन परिच्छेदोन्यथा(ऽ)सम्भवात् । अत्र देशे नास्तीति यद्यधिकरणभावोस्ति विषयीकृतः । कथमभावः । (अथाभावः) कथं विषयीकरणं ।

अथ प्रतिषेध्यमानोप्यनिषेधः क्रियते तथा सति सपक्षारोपेणापि सपक्षाद् विनिवर्त्तनमस्त्येवेति कथं सपक्षादव्यावृत्तिः । तेन विधिनिषेधव्यवहारो न बाह्याश्रयः सम्भवति । अतो व्यवहारोच्छेदः ।

ननु विधिव्यवहारः सम्भवति (। अतो न व्यवहारोच्छेदः ।) न (।) विषयीकृतस्य विधानाभावात् । घटोस्तीति यदि सत्त्वेन परिग्रहस्तदेव विधानं किं पुनरस्तीति विधानेन । अथासत्त्वेन ततो विरोधात् नासदस्तीति विधातुं शक्यं ।

सत्त्वेन चेत् परिच्छेदो विधिस्तत्र निरर्थकः । असत्त्वेन परिच्छेदे विधिस्तत्र निरर्थकः[1] ॥५१४॥

## (४) विधिनिषेधव्यवस्था—

असत्त्वेन परिच्छेदादसमर्थः परो विधिः ।

तस्मा(दा)श्रित्य शब्दार्थं भावाभावसमाश्रयं ।
अबाह्याश्रयमत्रेष्टं सर्व्वं विधिनिषेधनम् ॥२२८॥

अन्यो हि प्रमाणार्थोऽन्यश्च शब्दार्थः । भावाभावसमाश्रयः शब्दार्थो नत्वेवं (प्रमार्थः ।) प्रमाणार्थो हि न भावाभावसमाश्रयः । नहि प्रमा(णा)र्थोन्यथा सम्भवति । नियतरूपेण ग्रहणात् ।

शब्दात्तु यादृशी बुद्धिर्न्नष्टे(ऽ)नष्टेपि तादृशी । भावाभावाश्रयस्तेन शब्दार्थो न प्रमा तथा ॥५१५॥

ततो विकल्पबुद्धिनिरूप्यमाणो विषयो विधिनिषेधयोः । विकल्पानां वस्तुवृत्तिनियमाभावात् । न च सर्व्वमविकल्पकमपि प्रमाणं । विधिरूपेण चेद् वृत्तमप्रमाणन्ततस्तदप्रमाणताप्रतिपादनाय प्रतिषेधः । प्रतिषेधरूपेण चेद् विधिः ।

ननु यद्यसौ भ्रान्त एव प्रत्ययः । तदा तथात्वेनैवात्मानं प्रकटीकरोति । स्वसम्वेदन-

[1] B. नास्ति

स्याभ्रान्तत्वात्। न हि स्वरूपमन्यथा दर्शयितुं शक्यं। स्वरूपहानिप्रसङ्गात्। अन्याकारप्रतिभासने हि तदेव स्वरूपं तत्रापि तथेत्यनवस्था भवेत्। स्वरूपस्य च भावे भावोपादनता निषिध्यते। स च धर्मी स्वेन रूपेण प्रतिपन्नः कथं विधिनिषेधसाधारणः। येन ताभ्यां सम्बध्येत।

अत्रोच्यते।

ताभ्यां स धर्मी सम्बद्धः ख्यात्यभावेपि तादृशः।
शब्दप्रवृत्तेरस्तीति सोपीष्टो व्यवहारभाक् ॥२२६॥

न खलु बाह्यान्तर(स्व)स्वरूपाश्रयोयं व्यहारोऽपि तु शब्दा(र्था)श्रयः। न च शब्दाद् बाह्याभ्यन्तरस्वरूपप्रतीतिः[1]।

ननु तद्व्यतिरेकेणापर(स्या)भावात् किमधिकरणो विधिनिषेधव्यवहारः। अन्यापोहाधिकरण इति ब्रूमः। कोयमन्यापोहो नाम(।) यः शब्दात् प्रतीयते।

ननु तदेवेदमुच्यते। कः प्रतीयत इति। न किञ्चिदपि। तथापि व्यवहारोयमनादिव्यामोहवल्ली। यतः (।) शब्दार्थलक्षणो धर्मी विधिनिषेधाभ्यां सम्बद्धः प्रकाशते। विचार्यमाणस्य बाह्यस्यान्तरस्य वा तादृशस्याभावेपि। तथा चोक्तं। "रूपन्तस्य न किञ्चन"।

नन्वारोपितबाह्यरूपं। रूपन्तस्य विद्यत एव। न (।) ज्ञानज्ञेयव्यतिरेकेणापरस्याभावात्। भ्रान्तं रूपमिति चेत्। तदपि यदि स्वरूपेण प्रतीयते कथं भ्रान्तं। अथ न प्रतीतिविषयः कथमप्रतीयमानमस्तीति शक्यमध्यवसातुं। पश्चाद् भ्रान्तता ज्ञायत इति चेत्। प्रथमन्तर्हि स्वरूपेण न प्रतीयते। कथमस्तीति व्यवस्थाविषयः। पररूपेण प्रतिपत्तौ प्रतिपत्त्यन्तरं भ्रान्तं। न स इत्यनवस्था।

अथ सत्येपि तस्मिन् सत्यतानिश्चयाद् भ्रान्ततोच्यते। का तस्य सत्यता। अर्थासंस्पर्शिता। ननु तदेव तस्य रूपं कथमसत्यता। नहि निजरूपस्थितिरेवासत्यता। अन्यथा निश्चयजननादसत्य इति चेत्। निश्चय एव तर्ह्यसत्यः। तेन तस्य जननात् सोप्यसत्य एवेति चेत्। न (।) अन्यथा निश्चयस्य वासनया जननात्। निश्चयस्य भ्रान्तता तर्हीत्यपि न सङ्गतं। तस्यापि स्वरूपेऽवस्थानात्। तस्मादरूप एव शब्दार्थः। कथन्तर्ह्यस्तीति व्यवहारः। शब्दवृत्तेरस्तीति व्यवह्रियते। शब्दप्रवृत्तिलक्षणाद्धि व्यवहारादस्तीति प्रतीयतेन्यापोह इति नाम्ना प्रत्याख्यते सामान्यादिग्रहव्यावृत्तयोः (।) यदि तु न किञ्चिदित्युच्यते तदो(त्)त्रासः स्यात् परेषां। अत एवाह। "सोपीष्टो व्यवहारभाक्" (।) अन्यथा व्यवहारोच्छेद एव स्यादिति परः प्रतिक्षिपेत्।

तथा हि।

अन्यव्यावर्त्तनं शब्दात् कार्यकारणभावतः। परस्पराप्रतीतानां केवलैवात्र विद्यते ॥५१६॥

अग्निमानयेत्युक्तेऽनग्निपरिहारेण प्रवर्त्तते। प्रतियन्त्यपि[2] पावकं शब्दादवस्तुसंस्पर्शी विकल्पः स्वरूपसम्वेदन उदयभागी। ततः प्रवृत्तिविकल्पः। ततो गमनस्वरूपानुभवः। ततः प्राप्तिरन्यथा वेति[3] व्यवहारः। न नाम वाच्यवाचकभावः कश्चित्।

---

[1] B प्रतिपत्तिः [2] B. अप्रतिपन्नमपि [3] B. नेति

**अन्यथा स्यात् पदार्थानां विधानप्रतिषेधने।**
**एकधर्मस्य सर्व्वात्मविधानप्रतिषेधनं ॥ २३० ॥**
**अनानात्मतया[1] भेदे नानाविधिनिषेधवत्।**
**एकधर्मिण्यसंहारो विधानप्रतिषेधयोः ॥ २३१ ॥**

यदि धर्मिणो धर्मणामभेदस्तदैकधर्मस्य विधाने प्रतिषेधने वा सर्व्वधर्मविधानप्रतिषे(ध)ने स्यातां। नहि तस्मिन् विहिते तदात्माऽविहितो नाम। तस्याप्यविधानप्रसङ्गात्। तथा प्रतिषेधस्य(।) नहि खलु गोविधाननिषेधने भेदाभावेन खण्डताऽभावात्। नहि तेन शब्देन प्रतिपादिते तस्मिंस्तदात्माऽप्रतिपादितो युक्तः। प्रतिपादित एवासौ भ्रान्त्या नावसीयते। सर्व्वमेव तर्हि नावसितमिति प्रतीतिविलोपः(।) न च किञ्चिदवसितं किञ्चिन्नेति शक्यसमर्थनं। विभागस्यासत्त्वात्। विभागे हि सत्येवं भवति नान्यथा। उपलम्भ एव हि सत्तोच्यते। तद्विभागाद् विभाग एव सत्तायाः(।)ततः कथमेकस्यैव किञ्चिदवसितं नापरमिति।

यत्किञ्चिदेतत्। ननु क्षणिकताऽविनिश्चयेपि भवति नीलन्निश्चितं। न च दृष्टेऽनुपपन्नं नाम। न। तत्रापि विरोधात्। तथा हि।

निश्चयेन यदि नीलतागतिः सा क्षणस्थितिविधानवर्जिता।
नापरैः क्षणिकभावसाधनं मानसिद्धमपरैर्न्न बाध्यते ॥५१७॥

यदि प्रमाणासिद्धं परप्रमाणेन बाध्यते। अनवस्था तदप्यपरेणेत्यनाश्वास एव। अथ यदि नाम नीलनिश्चयस्य क्षणिकतायामप्रवर्त्तनं तथापि न तेन क्षणिकता बाध्यते नापि तत्साधनेन नीलनिश्चयः समुच्चयेन द्वयोरपि प्रवर्त्तनात्। त्रयो हि योगाः समुच्चयो विकल्पो बाधनमिति। समुच्चयो नीलमिदमुत्पलञ्च धर्मयोः समुच्चयात्। विकल्पः स्थाणुः पुरुषो-वेति द्वयोरेकत्रासम्भवात्। बाधनं सर्प्पो रज्जुरिति सर्प्पता (ऽ) सम्भवात्। त(द)त्र नीलत्वक्षणिक वसमुच्चये को दोषः।

अत्रोच्यते।

बाधलक्षणयोगेन कथमत्र समुच्चयः। न बाध्यं बाधकेनैव समुच्चेतुं क्वचित् क्षमं ॥५१८॥

निश्चयो हि नीलतायाः क्षणिकतापरिहारेण यदि स्याद् बाधितैव क्षणिकता भवेत्। तद्विविक्तरूपग्रहणात्। विविक्तरूपप्रतिपादनमेव हि बाध(नं)।

ननु नेवमत्रेति बाधनमभावप्रमाणेन। न च प्रत्यक्षं कस्यचिद् बाधकं।

न युक्तमेतत्। यतः।

नति निश्चय एवायं न प्रमाणं फलं हि सः। तद्विविक्तोपलम्भस्तु प्रमाणं निश्चयस्ततः ॥५१९॥

न खल्वयं निश्चयः स्वतन्त्रं प्रमाणं। प्रत्यक्षप्रमाणानुसारी खल्वयं। नास्यान्यथाभावः। यदि नाम कथञ्चिद् विविक्तप्रत्ययोदयेपि नोदयमासादयति। तथापि तद्योग्यतयैव तस्य निषेधः। एतच्चोत्तरत्र प्रतिपादयिष्यामः। तत्र यदि नीलं क्षणिकपरिहारेण

[1] B. अनात्मात्मतया

निश्चितं। तेनैव क्षणिकता बाधिता कथं सा परेण साध्यते। अथ साधितैव तेनापि तथापि परेण स्पष्टीक्रियते।

अत्रोच्यते[1]।

यदि प्रमाणं तत्पूर्व्वं गतेरस्पष्टता कथं। न च स्पष्टीकृतः सोर्थः साधितश्चेति दुर्घटं ॥५२०॥
अस्पष्दता कथन्नाम निश्चयेपि भवेदियं।

अत्रासौ स्पष्टतान्यत्र निश्चयो(ऽ)युक्तिसङ्गतः ॥५२१॥

तस्मात् स पूर्व्वको भ्रान्त उत्तरो वेति गम्यतां। न ह्येकविषये ज्ञाने परस्परविरोधिनी ॥५२२॥

तस्मादेकविधाने तदव्यतिरिक्त(सकल)विधानमिति व्यर्थकः शब्दान्तरविकल्पान्तरावतारः। अथ नानाभूता उपाधयो नानाभूतशब्दविकल्पानां विषयः। तदयमप्रसङ्गः।

तदसत्। भेदे(।)

"एकधर्मिण्यसंहारो विहितप्रतिषिद्धयोः[2]।

यदि परस्परमाश्रयाच्च भेदस्तदा भिन्ना एव तेर्थाः प्रतिपादिता धर्मी च तदा नापरस्तेषामाश्रय इति कथं सामानाधिकरण्यं। तथा हि नीलमुत्पलमिति गुणद्रव्यप्रतिपादने। नापरमधिकरणन्तयोस्तन्न सामानाधिकरण्यं। न च विशेषणविशेषता[3]प्रतीतिः पृथगर्थप्रतिपादनात्। घटपटवत्। अथ नीलन्न केवलं। तथा सति। नीलरूपप्रतिपत्त्यैव द्रव्यप्रतीतिः खण्डशः प्रतीत्यभावात्। अथ जातिगुणौ। तथापि सामानाधिकरण्यप्रतीतिरधिकरणवाचकस्यापरस्याभावात्। अथ नीलं द्रव्यमेव प्रतीयते न नीलतामात्रं। तथा सत्येकशब्देन द्वयाभिधानमपरेणापि तथेति चतुष्टयस्य त्रयस्य वाऽभिधाने कथमिव सामानाधिकरण्यम्विशेषणविशेष्यभावो वा (।) न ह्येकेनानेकेन वा शब्देन प्रतिपादिता भिन्नरूपाः सामानाधिकरणभाजः। अथ नीलादि केवलं प्रत्येतुमशक्यं ततो न भिन्नप्रतीतिवत् असामानाधिकरण्यं। ते तु नीलादयोऽनियतजातिभाविनो जात्यादयश्चानियतगुणभाविनस्ततो नियतत्वप्रतिपादनाय शब्दान्तरप्रयोगः।

तदसत्।

प्रत्यक्षाद् व्यतिरिक्तत्वं नीलादेर्गम्यते न चेत्। शब्देनापि स एवार्थः प्रतीयेतान्यथा कथं ॥५२३॥

यदि प्रत्यक्षे निष्कृष्टं नीलादि न प्रतिभासते शब्दादपि तथैव प्रतिभासतां। तत्रैव सम्बन्धप्रतिपत्तेः। अथ परोक्षतया तथा न प्रतीतिः। प्रतीयमानं कथं परोक्षं। असन्निहितत्वाच्चेत्। न। असन्निहितेपि शब्दज्ञानवृत्तेः। अक्षव्यापाराभावादिति चेत्। न(।) अक्षमेव प्रतीतिकारणं। स्वरूपप्रत्यायनश्चेदक्षानक्षयोः को विशेषः। यत्र च सन्निधानं तत्र कथमन्यथा प्रतीतिः। अक्षव्यापाराभावस्तु न कि(ञ्च)द्विहन्ति। स्पष्टतां विहन्तीति चेत्। ननु यदि नाम स्पष्टताऽभावः। तथापि नीलताप्रतिनियतद्रव्यावेशेनैव प्रत्याय्या। कथमन्यथा प्रत्येया। तथा च पदान्तरप्रयोगाभावः। अथानियतद्रव्यवृत्तयो नील(ाद)यः। तथा सति नीलमप्यनियतं नीलशब्दाद् गम्यते, उत्पलमपि तद्वाचकत्वात्ततः[4]

---

[1] B. तत्रो
[2] B ०षेधयो
[3] B. विशेष्यता
[4] B वाचकात्। तत

**पुनरपि न सामानाधिकरण्यं। द्वयोरनियतवाचकयोरेकार्थप्रतिपादनासम्भवात्। परस्पर-व्यवच्छेदादेवं प्रतीतिरित्यपि न सङ्गतं।**

उपात्तस्य व्यवच्छेदः कथमन्योन्यतो भवेत्। व्यवच्छेदक्रियायां हि सान्यापोहस्य वाच्यता ॥५२४॥

**यद्यनियतं नीलादिशब्दप्रतिपाद्यं न पुनरन्येन नियन्तुं शक्यं। नहि प्रत्यक्षे प्रतिपन्न-मन्येन विवर्त्यते भ्रान्तताप्रसङ्गात्। संशयस्तर्हि शब्दान्तरान्निवर्त्यते। समुच्चयेन हि प्रतिप(ादि)तमशक्यं निवर्त्तयितुं। यदा तु विकल्पः। किं नीलमुत्पलमथान्यदिति तदा विकल्पस्य निवर्त्तनं शब्दान्तरादुपपन्नं (।)**

**तदप्यसत्। यतः।**

विकल्पोपि हि यद्यर्थः सत्यः तच्छब्दतो गतः। निवर्त्तनं कुतस्तस्य शब्दान्तरसमागमे ॥५२५॥

**यद्यसावर्थ एवासत्यः कल्पनाविषयः किमपरेणान्यथा कर्त्तुं शक्यः। द्वयोरपि प्रमाण-त्वात्। अथ तेन सन्दिग्धरूप एव प्रतिपादितः। सन्दिग्धरूपता च दृढप्रत्ययनिवर्त्यतैव। ततोपरेण निवर्त्तनमुपपन्नं। नहि तथाभूत एव न तथाभूतः।**

**तदप्यसत्।**

निवर्त्यता हि तेनैव शब्देन प्रतिपादिता। ततः परस्य शब्दस्य किम्विधेयं भविष्यति ॥५२६॥

**ननु पूर्व्वप्रत्ययेन नियमेन निवर्त्यता प्रतिपादितापरेण तु नियमेनेत्यस्त्युपयोगः।**

**तदप्यसद् यतः।**

यः प्रमाणबलायातो (ऽ)नियमः सोन्यथा कथम्।
मानान्तरगतेनापि शक्यः कर्त्तुमिति स्थितं ॥५२७॥

**तस्मादप्रमाणतैव पूर्व्वस्य परस्य वा। ततोऽसाधकत्वात्। परस्यापि तथा भूतत्वात्। सामान्यमात्रवचने परं व्यर्थं।**

## ४. सामान्यं कल्पितम्

**अथानुमानं बाधकमेव। न। तस्यापि प्रत्यक्षेण बाधनात्। नानुमानात् तीक्ष्ण-ज्वालादिविशेषणपरिग्रहः। ततस्तत्रापि सन्देह एव। सामान्येन सन्देह इति चेत्। न। सामान्यप्रतिपत्तेः सन्देहरूपत्वात्। अनियतविशेषप्रतिपत्तिर्हि सामान्यप्रतिपत्तिः[1]। न ह्याकार-नियमसम्भवि सामान्यं। तथा हि।**

सामान्यं यत्र तत्रास्ति व्यक्तिरेवं विधेति न। प्रतीतिस्तेन सामान्यज्ञानं सर्व्वमुपप्लवः ॥५२८॥

**तदा किमपरत्रानुपप्लवेनापि। नहि सामान्यं प्रतीयमानमपि व्यक्तिप्रतिनियमप्रति-नियतप्रतीतिमाकर्षति। ततः सामान्यप्रतीतिरुपप्लुता। व्यक्तावुपप्लता न सामान्य इति चेत्। तदसत्।**

व्यक्तावुपप्लता सा चेत् सामान्यं क्वोपयुज्यते। न सामान्यं क्वचिद्वाहदोहादावुपयोगवत्॥५२९॥
यदर्थश्चायमारम्भस्तत्र चेत्तदुपप्लवः।

---

[1] B प्रतीतिः

ननु सामान्यप्रतिपत्तिमन्तरेण स एव व्यक्तिविषयो विकल्पोपप्लवो न युक्तः। ननु सामान्यनिश्चयेपि तदेव सामान्यं निश्चितं भवेत् कथमपरत्र संशयः। नान्यस्मिन् निश्चिते परत्र सन्देहो युक्तः। सर्व्वत्र निश्चये सर्व्वसन्देहप्रसङ्गात्। अथापि स्यात्। सम्भविन एव (अर्थस्य) सन्देहविषयता नापरस्य। तथा हि।

यो यत्र सम्भवी दृष्टः स यत्र व्यभिचारभाक्। तद्दर्शनेन तत्रैव संशयः संप्रवर्त्तते ॥५३०॥

संशयो हि सम्भविनि व्यभिचारिणि नोपपन्नः[१]। सामान्ये च यत्र यः सम्भवति तत्र दृश्यमाने तत्र संदेहः। गोत्वे निश्चिते शावलेयादावश्वत्वे कर्कादाविति नातिप्रसङ्गः (।)

तदेतदसत्। यतः।

शवलेयादिसन्दिग्धरूपप्रत्ययमात्रकात् (।) प्रतीतिर्न्नापरस्यात्र कथं सामान्यकल्पना ॥५३१॥

किमयं शावलेयोऽथ वाहुलेयो गर्जितमात्रकमेव श्रूयते। शावलेयादिविशेषं तु नावधारयाम इति। शावलेयाद्याकारविकल्प(क)मेव केवलं लोकः प्रत्येत्येवमन्यदपि सामान्यविकल्पनं द्रष्टव्यं।

अथवा।

अनादिवासनासङ्गिसामान्याकारवित्तितः। विकल्पोपमतः साम्यपदार्थस्य न कल्पना ॥५३२॥

तस्मान्न बाह्याश्रयो विधिनिषेधव्यवहारः सामानाधिकरण्याद्ययोगात्। अथोपाधय एव केवलाः शब्दैर्व्विकल्पैश्च प्रतीयन्ते। लक्षितलक्षणेन तु तदुपाधिमतः प्रतीतिः। लिङ्गता तद्र्युपाधिविभागानां ततो लिङ्गेन निश्चिते द्रव्ये न सन्देह इति किमपरोपाधिप्रत्यायनेन। द्रव्यं न ज्ञायते किम्भूतमिति तदर्थमपरोपाधिप्रतिपादनं।

तदसत्।

यद्येकोपाधिना सं ऽर्थः प्रतीतः स्वस्वरूपतः। उपाध्यन्तरसम्वित्तिरपरं किं करिष्यति ॥५३३॥
अथान्यथा प्रतीतोसावेकोपाधिसमागमे। उपाध्यन्तरसंसर्गः परं कर्त्तुमशक्तिकः ॥५३४॥

अथो ।ध्यन्तरयोगमात्रकमेव शब्दान्तरप्रतिपाद्यं न तस्य विशेषः। तथा सति केवलप्रतिपादने कथमर्थक्रियायाः प्रसिद्धिः। न खल्वर्थक्रियोपाधिनैव केवलेन विधातुं शक्या। अथ तद्वारेणोपाधिमतः प्रतीतिः। न(।) पूर्व्वोपाधिनैव प्रतिपादनात्। अथ पूर्व्वोपाधिनोपाध्यन्तररहितस्य प्रतिपादनं तथा च स्वयमेवाभ्यधायि। न स शक्यस्ततोन्येनेति।

ननु यद्यन्योपाधिना सोऽन्यथा प्रमाणभूतप्रत्ययप्रतिपाद्यः कृतः। कथमुपाध्यन्तरसहस्रैरप्यन्यथा विधीयेत। नहि प्रमाणेन विहितमन्यथा प्रमाणेनान्येन विधातुं शक्यं। समवायसम्बन्धाद्धि सकलोपाध्यवपृक्त एव व्यवस्थितस्तत् कथमन्यथा प्रत्येतुं शक्यं(।)प्रतिपादने वा तदेव तस्य रूपं कथमन्येनान्यथा विधानं। अथ नैवान्येनान्यथा विधानमपि त्वध्यारोपमात्रमन्यतो भवति तदन्यनिवृत्तिस्त्वसम्भवनियमात्। नहि तद्धर्मयुक्तञ्च स्यात्तदन्यधर्मयुक्तञ्चेति।

तदसत्यं यतः।

प्राप्तिः पश्वन्तराणाञ्चेत् प्रमाणेनोपपादिता। नाध्यारोपसहस्रेपि तस्याः शक्यं निवर्त्तनं ॥५३५॥

---

[१] B चोपपन्नः

अथाप्यप्राप्तिरन्येषां तदर्थस्यैव मानतः। किमुपाध्यन्तरेणात्र निवर्त्त्यं नहि किञ्चन ॥५३६॥

**तस्मादभ्रान्तप्रत्ययेन सकलमेव प्रत्येयं। प्रत्यक्षप्रमाणवत्। ततः परोपाधिप्रतिपादनं व्यर्थं। यदि तु पृथगेवोपाधयः पृथगुपाधिमाँस्तत उपाधिप्रतिपादनमात्रादलक्षितलक्षणादेकधर्मिण्यसंहार एव। अथोपाधिप्रतिपादनेप्युपाधिमतां (।) तथा सति पुनरप्येकोपाधिना प्रतीतेः सर्व्वोपाधिग्रहणं (।) न हि प्रत्यक्षेण न तथाग्रहः। अथ प्रत्यक्षेणापि कदाचित् संस्थानमात्रस्य ग्रहणं दूरात् संनिकर्षे[1] तु वर्ण्णसाक्षात्[2]।**

**तदप्ययुक्तं।**

वर्ण्णसंस्थानमात्रस्य ग्रहो द्रव्यम्विना यदि। कदाचिदपि न द्रव्यं ग्राह्यं प्राप्तं न वस्तु तत् ॥५३७॥
अथ संस्थानमद्रव्यं ग्रहीतुं नहि शक्यते। वर्ण्णोप्यद्रव्यको नेति ततो द्रव्यं परं कथं ॥५३८॥

**तस्मान्न सामान्याधिकरण्यं।**

**भवतामपि कथन्तदिति चेत्। तदाह।**

> **एकं धर्मिणमुद्दिश्य नानाधर्मसमाश्रयं।**
> **विधावेकस्य तद्भाजामिवान्येषामुपेक्षकम् ॥२३२॥**
> **निषेधे तद्विविक्तञ्च तदन्येषामपेक्षकं।**
> **व्यवहारमसत्यार्थं प्रकल्पयति धीर्यथा ॥२३३॥**
> **तं तथैवाविकल्प्यार्थभेदाश्रयमुपागताः।**
> **अनादिवासनोद्भूतं बाधन्तेर्थं न लौकिकम् ॥२३४॥**

**न खल्वस्माकमयं पारमार्थिको व्यवहारः सामानधिकरण्यादिविषयः। शब्दार्थमाश्रित्यावस्तुसन्निवेशिनं प्रवर्त्तनात्। तथा हि। शब्द इत्यशब्दव्यावृत्त्यपेक्षया धर्मितया व्यवस्थापनं शब्दशब्दार्थस्य। स च शब्दः प्रत्यभिज्ञानबलात् सदा स्थायितया स्वीकृतः। कृतकताबहिर्भावे न च (।) ततः प्रतिभासितमप्य नित्यत्वं विपर्यस्तव्यवहारापहारादनुपलब्धमिवासदितीव व्यवस्थापितं ततोऽनित्यता साधकप्रमाणादपरव्यवहारप्रवर्त्तने न विपर्ययव्यवहारविषयापहारात्। तदा सत्त्वेन व्यवस्थापितं विहितमिति प्रतीयते। ततः स शब्दशब्दार्थो धर्मी तद्भाजात्मभावेन प्रतिपन्नः। निषेधे च तदपसारितं ततस्तद्विविक्ततया प्रतिपत्तौ तद्विपर्यस्तधर्मापेक्षकतया[3] प्रतीयते। प्रतीतय एव विधिनिषेधवत्यः केवलं न भावः तथाभतरूपतश्चलति। तथा हि। एवमेव मया प्रतिपन्नः प्रागिति सैव प्रतिपत्तिः प्रत्यक्षा तथात्वेन व्यवहारविषयतामापादिता। न तु (तत्र) विकल्पैरपरापरैर्विहितं निषिद्धं वा किञ्चित्।**

### (१) अन्यापोहः शब्दार्थः—

न खलु विकल्पा अतीतप्रतिपत्तिरूपसंस्पर्शिनः तदा तस्या अभावात्। अत एवान्यापोहः शब्दविकल्पार्थो भ्रान्तिमात्रव्यावर्त्तनात्। यदा तर्हि न भ्रान्तेरवतारः। प्रत्यक्षानन्तरमेव घटोयमिति विकल्पोऽकस्माच्च धूमादग्निप्रतिपत्तिः। तत्र कथमन्यापोहशब्दार्थता।

---

[1] B सन्निकृष्टेर्थे [2] B वर्ण्णस्य [3] B ०पेक्षतया

नेदमपि साधीयः। तथा हि।

अवृत्तिविषयो वह्निः प्रवृत्तेर्व्विषयीकृतः। अवृत्ति[1]विषयत्वस्य तत्रापि विनिवर्त्तनं[2] ॥५३९॥

तथा हि। वह्निनिश्चयः प्राह प्रवृत्तिविषयोयमग्निः किमौदासीन्यमत्र भवत इति(।) तदौदासीन्यविषयतानिवर्त्तनमात्रकं विकल्पस्यार्थः। न हि तत्र वह्निः स्वरूपेण प्रतीयते न चान्यथा प्रतिपत्तिप्रतीतिः। प्रतिपत्तिर्न्न च प्रत्यक्षोत्तरकालभाविना वस्तुविकल्पेन नीलं शब्दविषयं प्रतिपन्नं पूर्व्वापररूपासन्निधानात्। इदन्तदिति तु विकल्प एव न भवति मानसप्रत्यक्षत्वात्। अथ क्षणिकता (तेन) न प्रतिपन्ना ततो न प्रत्यक्षता। न वर्त्तमानता। प्रतिपत्तिरेव क्षणिकताप्रतिपत्तिरिति निवेदितं निवेदयिष्यते। तस्मादन्यापोहाश्रयेण धर्मधर्मिभावसामानाधिकरण्यादिव्यवहाराः। अर्थभेदे हि व्यवहारविषये सर्व्वमुपपन्नं (।) तस्यैव सर्व्वतो व्यावृत्तेर्न्न हि व्यावृत्तिस्तस्मादन्यायेनैकार्थोपसंहारो न स्यात्। कथन्तर्हि शब्दस्यानित्यत्वमिति भेदनिबन्धना विभक्तिः। शिलापुत्रकस्य शरीरमिति यथा।

ननु व्यावृत्तीनामभिन्नत्वात् कथम्भेदः। न हि वस्तुनो व्यावृत्तयो भिद्यन्ते।

नैष दोषः।

सम्वृत्या भेदिना तासां परमार्थतया न सा। तेन शब्दार्थताभेदाभेदरूपनिबन्धनं ॥५४०॥

परमार्थापेक्षया न कदाचिद् भेदः। सम्वृत्या तु तासामुभयरूपता। तथा हि।

**तत्फलोऽतत्फलश्चार्थो भिन्न एकस्ततस्ततः।**
**तैस्तैरुपप्लवैर्न्नीतसञ्चयापचयैरिव ॥ २३५ ॥**

**अतद्वानपि सम्बन्धात्कुतश्चिदुपनीयते।**
**दृष्टिम्भेदाश्रयैस्तेपि तस्मादज्ञातविप्लवाः ॥ २३६ ॥**

ननु यदि संवृत्यायं व्यवहारः स वासनामात्रनिबन्धनः। कथन्न विसम्वादी लौकिकैर्न्न विकल्प्य परित्यज्यते। न खल्वविसम्वादिनं व्यवहारं कश्चिन्न परित्यज्यते[3]। उक्तमेतत्। "तं तथैवाविकल्प्ये"त्यादि। नन्वेतदेव कथम्। न खल्वत्यन्तमूढोपि प्रमाणबाधनमनुत्प्रेक्ष्यास्ते।

अत्रोच्यते। अविसम्वादादविकल्पनं। अविसम्वादसम्भवे हि नावान्तरसूक्ष्मेक्षिका युक्ता व्यवहारिणः। अविसम्वादार्थी हि तल्लाभाय खलु विकल्पयितुं क्षमः।

भेदाभेदविसम्वादः क्व नु तस्योपयुज्यते। अर्थक्रिया न भिन्नेन म(ा)धुर्येण भवेद् गुडात् ॥५४१॥
अतद्व्यावृत्तिमात्रेण प्राप्तेनार्थक्रियोदयः ॥५४२॥

धर्मभेदस्त्वनादिवासनातः तत्फलेतरावधिनिबन्धनबुद्ध्याकारपरिकल्पितः। सत्यवस्तु[4]प्रतिबन्धादविसम्वादी। तत्र प्रतिभासभेदनिरूपणायामभिमतफलप्राप्तिजनितपरितोषः पुरुषो नाद्रियते। वस्तुतत्वनिरूपणापरो[5]पि तदर्थक्रियार्थी लोकव्यवहारमेवानुसरति।

तथा चोक्तं।

---

[1] B. प्रवृत्ति० [2] B. न निवर्त्तनं [3] B. परित्यजति
[4] B स वस्तु [5] B ०पणपरो

रूपणव्यवहाराभ्यां लौकिके वर्त्मनि स्थितौ। ज्ञानं प्रत्यभिलापञ्च सदृशौ बालपण्डितौ ॥५४३॥

तेन स धर्मी व्यावृत्तिभेदनिबन्धनैरुपप्लवैर्विकल्पलक्षणैर्नीति सञ्चयोपचयैरिव कुतश्चिद् व्यवहारसम्बन्धाद् दृष्टिमुपनीयते (।) दर्शनपथं तादात्म्यतदुत्पत्तिलक्षणात् प्राप्तिलक्षणं। तस्मात्ते व्यवहारिणः परिज्ञात[1]विप्लवा इति। तस्मादसतो विपक्षाद् व्यावृत्तिः सपक्षाद्वा न विरुद्धा।

(२) आत्मनित्यत्वनिरासः—

अपि च। नैरात्म्ये घटादीनां प्रसिद्धे सति प्राणाद्यभावे व्याप्तिसिद्धिर्नान्यथा। न चात्मा घटादिषु नास्तीति सिध्यति।

> सत्तासाधनवृत्तेश्च सन्दिग्धः स्यादसन्न सः।
> असत्त्वं चाभ्युपगमादप्रमाणान्न युज्यते ॥२३७॥

जीवच्छरीरे हि सन्दिग्ध आत्मा कथं घटादावसन्दिग्धः। न खलु सन्दिग्धं साधनेन प्राणादिनान्येन वा विषयीकर्त्तुं शक्यं। ततश्च।

> असतोऽव्यतिरेकेपि सपक्षाद् विनिवर्त्तनं।
> सन्दिग्धं तस्य सन्देहाद् विपक्षाद् विनिवर्त्तनम् ॥२३८॥

आत्मनः सन्देहे घटादय एव स्युः सपक्षा वा। ततः सपक्षाद् विनिवृत्तिः सन्दिग्धा। ततः कथमयं व्यतिरेकी।

ननु बौद्धाभ्युपगमान्निरात्मन एव घटादयः। यद्येवं "सर्व्वधर्मा अनात्मान" इति जीवच्छरीरेपि नात्मा स्यात्। अप्रमाणक एव बौद्धाभ्युपगम इति चेत्। तदा तर्हि घटादयोपि तदभ्युपगमान्न[2] निरात्मान इति स एव दोषः। यतः।

> एकत्र नियमे सिद्धे सिध्यत्येव[3] निवर्त्तनं।
> द्वैराश्ये सत्यदृष्टेपि स्याददृष्टेषु संशयः ॥२३९॥

अदर्शने सत्यप्यदृष्टेष्वनुपलब्धिलक्षणप्राप्तेषु संशय एव। नहि कश्चिदनुपलम्भमात्रकादभावं साधयितुं समर्थः। अपि च। सिद्धो नाम घटादिष्वात्माभावः तथापि प्राणादयो नात्मसाधनसमर्थाः। नहि तेषां विपक्षाद् व्यावृत्तिरेव सिद्धा वृत्तेरपि सम्भवात्।

ननु विपक्षान्निवृत्तः कथन्तत्रैव वर्त्तते। नहि निरात्मकमेकं प्राणादिमदन्यथा च युक्त। न हीदमर्द्धजरतीयं लभ्यमेकभावनियम एव युक्तः।

नैतदस्ति। यतः।

> अव्यक्तिव्यापिनोप्यर्थाः सन्ति तज्जातिभाविनः।
> क्वचिन्न नियमो दृष्ट्या पार्थिवा लोहलेख्यवत् ॥२४०॥
> भावे विरोधस्यादृष्टौ कः सन्देहं निवारयेत्[4]।

---

[1] B अपरिज्ञात [2] B ०भ्युपगमात्

[3] T. सिध्यत्यन्य—हे० [4] B. निवर्त्तयेत्

नहि नैरात्म्यमित्येव सकलं समानं येन निरात्मकतया जीवच्छरीरमप्राणादिकं भवेत्। अपि तु निरात्मकमेव किञ्चित्प्राणादिमदपरमन्यथा। यथा पार्थिवं (एव) लोहलेख्यमपरमितरत्। तथा हि।

"भावे विरोधस्यादृष्टौ कः संदेहं निवारयेत्[1]।"

न खलु नैरात्म्येन सह विरोधाप्रसिद्धौ प्राणादेर्न्निवृत्तिर्न्नैरात्म्यस्य। नहि प्राणादिसहानवस्थाने ने(त)रेण वा विरोधलक्षणेन विरुद्धं नैरात्म्येन येन तन्निवर्त्तयेत्। अथ साक्षाद् विरोधभावेपि पारम्पर्येण विरोध इति निवर्त्तकाः प्रणादयो नैरात्म्यस्य।

तदसत् यतः।

**क्वचिद् विनियमात् कोन्यस्तत्कार्यात्मतया स च ॥२४१॥**

यदि प्राणादय आत्मनि नियताः स्युः। स्यान्नैरात्म्येन सह पारम्पर्येण विरोधो व्यापकविरोधेन व्याप्यस्यापि विरोधात्। न चास्त्यात्मनि नियमः प्राणादीनां तादात्म्यं तदुत्पत्तिमन्तरेण नियमायोगात्। अन्यथा नियमस्यासम्भवात्। न च प्राणादीनामात्मकार्यत्वमात्मात्मकत्वं वा प्रसिद्धं प्रमाणतः।

**नैरात्म्यादपि तेनास्य सन्दिग्धं विनिवर्त्तनम्।**

नैरात्म्यादपि तेन। आत्मप्रतिबन्धाभावेन। अस्य सन्दिग्धं विनिवर्त्तनम्। नहि तत्राप्रतिबद्धस्तद्विपक्षाद् व्यावर्त्तते।

**अस्तु नाम तथाप्यात्मा नानैरात्म्यात् प्रसिध्यति ॥२४२॥**
**येनासौ व्यतिरेकस्य नाभावं भावमिच्छति।**
**यथा नाव्यतिरेकेपि सपक्षे प्राणतादिकः[2] ॥२४३॥**
**सपक्षाव्यतिरेकी चेद्धेतुर्हेतुरतोन्वयी।**
**नान्वय[3]व्यतिरेकी चेदनैरात्म्यन्न सात्मकम् ॥२४४॥**

यथा सपक्षाभावाभावेपि न सपक्षे भावः। तथा नैरात्म्याभावेपि नात्मा जीवच्छरीर इति।

ननु। विषमोयमुपन्यासः। सपक्षे हि व्यतिरेकाभावेपि न भावस्तस्यासत्त्वात्। न ह्यसति भावसंभवः। जीवच्छरीरे तु तस्य सत्त्वाद् व्यतिरेकाभावे नियमेन भावः। परस्य राशेरभावात्।

सत्यमेतत्। न विषमोपन्यासमात्रकादेवेष्टसिद्धिः। यदि सपक्षे नाभावः। स एव तर्हि न निवृत्तो भावः। अभावे तु निवृत्ते नियमेन भावोऽभावव्यावृत्तिरेव भाव इति।

सपक्षाभावान्नैवमिति चेत्। न (।) अभावत्वायोगात्। प्राणादिभावे हि कथं सपक्षस्याभावता। यथा हि असति सपक्षे ऽप्राणादिव्यतिरेकेपि न विपर्ययस्तथा जीवच्छरीरेपि नरात्म्यव्यतिरेके। अथ जीवच्छरीरस्य सत्त्वाद् विपर्ययो न सपक्षेऽविद्यमानत्वात्। न ह्यविद्यमाने भावसम्भवः।

---

[1] निवर्त्तयेत्—हे०   [2] B. प्राणनादिकः; प्राणादिर्न्न सपक्षतः—हे०

[3] T. नान्वय्य—हे०

अविद्यमानतैव तर्हि न निवृत्तेत्यायातं । अविद्यमाने विद्यमानताया विरोध इति सा व्यावृत्ताऽविद्यमानतायास्तु न विरोध इति । साऽव्यावृत्तित्तैव । यथैव सपक्षोऽविद्यमानस्तथा तत्रापि । न ह्यविद्यमानेऽवि(द्य)मानताविरोधः ।

अथ साप्यविद्यमानता न तत्र । तथा सति जीवच्छरीरे नैरात्म्यव्यावृत्तावपि न नैरात्म्यव्यावृत्तिः । यथा सपक्षे भावाभावेपि नाभावः । तस्य सत्त्वादिति चेत् ।

नेदमस्ति । यतः ।

अन्यसत्त्वे कथन्नाम व्यभिचारी नियम्यते । व्यभिचारी स्वदोषेण परस्मात् कथमन्यथा ॥५४४॥

यो हि स्वयं व्यभचारी स कथमन्यसत्त्वे(ना)ऽन्यथा वा तदव्यभिचारी स्यात् । किञ्च । यद्य विद्यमाने किञ्चिन्न सन्नासत् विद्यमानं । अविद्यमानमपि विद्यमानेन सन्नासदिति किन्नाभ्युपगम्यते । यथाऽविद्यमानस्य नाधारता तथाऽधेयतापीति यत्किञ्चिदेतत् । एतच्च प्रागेव प्रत्यपादि । अपि च । नाभावमात्रं नैरात्म्यमपि तु प्रतिनियतरूपस्यात्मनोऽभावः । न च प्रतिनियतरूपादर्शने तदभावसिद्धिः । न खल्वभावाः परस्परतो व्यावर्त्तन्ते । भावभेदे तदभावानां भेदात् । भावप्रतिनियमाभावे च कुतस्तदभावभेदः । न चात्मा प्रतिनियतरूपतयोपलब्धो येन तद्विपर्ययाभावे(स) सिध्येत् । ततो नैरात्म्याभावे ऽभावनिवृत्तिमात्रं न त्वात्मसिद्धिः । तस्मात् ।

सपक्षाव्यतिरेकी चेद्धेतुर्हेतुरतोऽन्वयी ।

नान्वय्यव्यतिरेकी चेदनैरात्म्य न सात्मकमिति ॥५४५॥ संग्रहतिः

अपि च ।

यन्नान्तरीयकः स्वात्मा यस्य सिद्धः प्रवृत्तिषु ।
निवर्त्तकः स एवातः प्रवृत्तौ च प्रवर्त्तकः ॥२४५॥

यस्य धूमस्याग्निनान्तरीयकः स्वभावः प्रवृत्तिषु विधिषु सिद्धः । स एवाग्नेर्न्निर्व्वर्त्तकः स्वयं निवर्त्तमाने । नान्यथा । प्रवृत्तौ च स एव प्रवर्त्तकोऽग्निर्धूमादेरिति हि प्रामाणिकी गतिः ।

नान्तरीयकता सा च साधनं समपेक्षते[1] ।
कार्ये दृष्टिरदृष्टिश्च कार्यकारणता हि ते ॥२४६॥

न खलु नान्तरीयकतासाधनं दर्शनादर्शनं लक्षणमन्वयव्यतिरेकसाधनं विना प्रसिध्यति ।

ननु व्यति(रि)क्तयोः कार्यकारणभावानान्तरीयकतासाधनं न दृष्टयदृष्टी । न । तयोरेव दृष्यदृष्टयोः कार्यकारणभावत्वात् । न ह्यन्वयव्यतिरेकाभ्यामन्यः कार्यकारणभावः । नापि दृष्टयदृष्टिभ्यामन्यावन्वयव्यतिरेकाविति । यस्य तु पुनः ।

अर्थान्तरस्य तद्भावेऽभावो नियमतोऽगतिः ।

अर्थान्तरस्य न साधनं नान्तरीयकतायाः । तद्भावेपि नापरस्याभावनियम[2] इति न तदभावेऽभावस्य गतिः, तस्य व्यापकता(ऽ)भावात् । न चाव्यापकं निवर्त्तमानमपरस्य निवर्त्तकं । न चात्मा व्यापकः सिद्धः तत्कथमसौ प्राणादेर्न्निर्व्वर्त्तकः । यतः ।

---

[1] B व्याख्यानान्तरीयत्वसाधकं प्रमाणमपेक्षते    [2] B ०स्य भावनियम

**अभावासम्भवात्तेषामभावे नित्यभाविनः ॥२४७॥**

आत्मा हि न स्वयं देशकालयोर्व्विनिवर्त्तते नित्यताव्याप्तिसद्भावात् । ततस्तदभावादभावः प्राणादीनामित्यसिद्धमेतत् ।

## ५. हेतुसामग्रीशक्तिभेदाद् विश्वरूपता

अथान्वयमात्रादेवात्मा कारणं प्राणादीनां नहि व्यतिरेकमपेक्षते । सर्व्वत्र कार्यकारणभावः सर्व्वः (?)।

तदप्ययुक्तं यतः ।

**कार्यस्वभावभेदानां कारणेभ्यः समुद्भवात् ।**
**तैर्विना भवतोन्यस्मात्तज्जं रूपं कथम्भवेत् ॥२४६॥**

यद्यन्वयमात्रादेव कार्यकारणभावस्तदा तदभावेपि भवतीति प्राप्तं । ततस्तैर्विनापि कार्यस्य भवतोऽन्यस्मात् कथं तज्जं रूपं । अन्यस्मादपि भविष्यतीति चेत् । न (।) अन्यस्मात् तद्रूपाभावात् ।

अतद्रूपत्वे स एव न भवति । यतः ।

**सामग्रीशक्तिभेदाद्धि वस्तूनां विश्वरूपता[1] ।**
**सा चेन्न भेदिका प्राप्तमेकरूपमिदं जगत् ॥२४८॥**

ननु सामग्रीभेदाद् भेद इति कुत एतत् । भेदस्तावदुपलभ्यते । स कारणभेदादन्यथा चेति चिन्तान्तरमेवैतत् ।

तदसत् । यतः ।

आत्मा प्रकल्प्यतेऽदृष्टः प्राणादेः प्रतिबन्धतः । नियमेन विना तस्य प्रतिबन्धः कथन्न सः ॥५४६॥

यथैवात्मा व्यापी नित्योऽन्वयमात्रेण कारणं तथाकाशादयोपि । तत आत्मवदाकाशादिगतिरपीति नार्थसिद्धिः ।

अथात्मना प्रेरकेण विना न प्राणादयस्तत आत्मा भस्त्राध्मापयितेव प्रतीयते । गोलकप्रेरयितेव करणैः गवाक्षान्तरितप्रेक्षक इव दर्शनेनेति ।

तदप्ययुक्तं । यतः ।

निष्क्रियस्य विभोर्नैव प्रेरकत्वं प्रमाणवत् ।
करणैर्न्न विना दृष्टिरिति नात्मा प्रसिध्यति[2] ॥५४७॥

भस्त्राध्मापयिता हि सक्रियः स प्रेरकः तथाऽव्यापितया न त्वेवमात्मा । कथन्तस्य प्रेरकत्वं(।) नहि व्याप्यमूर्त्तस्य प्रेरकत युक्तिसङ्गता । अथ प्रेरकः तस्याप्यन्यः प्रेरक इत्यनवस्था । गवाक्षकान्तरितश्च करणचक्षुरादिसमन्वितः पुरुष आत्मा तु नैवंभूतः कथं प्रेक्षकः । अथ तस्यापि करणानि सन्ति । तत्राप्यपरो गवाक्षकान्तरितन्याय इत्यनवस्थैव ।

[1] B भिन्न०     [2] T. चतुर्दशमाह्निकं (समाप्तम्)

अपि च। अन्वयव्यतिरेकाभ्यामग्न्यादौ कार्यकारणभावः स कथं अ(त्रा)न्यथा भवेत्। अथ तत्राप्यन्वयमात्रकादेव तथा सति तैर्व्विनान्यस्मादपि भवतीति प्राप्तम्(।) अन्यथा व्यतिरेकस्यापि सम्भवः। तथा च तैर्व्विना भवतोऽन्यस्मादपि शक्रमूर्द्धादेर्भवतः कथमग्निजन्यता। उभयजन्यता चेत्। न। ततो(न्य)स्माद् भवतीति नोभयमपि कारणं(।) तस्मादन्यतोपि भवतो न तत्कार्यता नाप्यन्यकार्यतेति कार्यकरणभाव एव[1] स्यात्। तथा सति कार्यभेदाभेदौ कारणभेदाभेदायत्ताविति तदभावान्न स्यातां। दृश्यते[2] कथं प्रतिक्षेप इति चेत्। न दर्शनस्यापि कार्यकारणभावासम्भवेऽसम्भव एव।

नीलं हि नीलविज्ञानात् प्रतीतिनियमे सति (।) प्रतीयतेऽन्यथा नैव भ्रान्ताऽभ्रान्तविवेचनं ॥५४८॥

यदि हीदृशी सामग्री भ्रान्तेतरप्रत्ययजनिकेति नियमस्तदा भवेत्प्रमेयप्रतिनियमः। अन्यथा यथाकथञ्चित् प्रतिभासमात्रकमिति सकललोकव्यवहारोच्छेदप्रसङ्गः।

अथ प्रतिभासः स्वयं परस्परभेदी स्वसम्वेदनप्रत्ययप्रमेयः।

तदप्यसत्यं।

प्रतिभास[3]मात्राल्लोकस्य व्यवहारो न सिध्यति।

तावन्मात्रावभासे हि कर्त्तव्यं किमतः परं ॥५४९॥

अर्थक्रियाकरणप्रवणो[4] हि भाव उपादेयोऽन्योऽन्यथेति प्रेक्षावतां व्यवहारः। प्रतिभासमात्रकन्तत्क्षण एव तथा भवदहेयोपादेयं। तथा विज्ञप्तिमात्रकमद्वैतमिति न भेदाभेदौ। स च कार्यकारणभावोऽन्वयव्यतिरेकाभ्यामिति। नात्मा कस्यचित् कारणमिति न तस्य कुतश्चिदनुमानं। ततः।

सामग्रीशक्तिभेदाद्धि भावानां विश्वरूपता। सा चेदभेदिका प्राप्तमेकरूपमिदं जगत् ॥५५०॥

एकरूपमित्यहेयोपादेयं प्रतिभासमात्रकमद्वैतमिति यथा। अथ शक्रमस्तकस्याग्निरूपमप्यस्ति तद्विलक्षणमप्यस्ति। ततः कार्यमग्निस्ततोपि भविष्यति। अत्राह।

**भेदकाभेदकत्वे स्याद्[5] व्याहता(ऽ)भिन्नरूपता।**
**एकस्य नानारूपत्वे द्वे रूपे पावकेतरो ॥२५०॥**

रूपभेदलक्षणत्वात् पदार्थभेदस्य (।) ततोग्निरेव धूमस्य जनक इति न व्यभिचारः कार्यहेतोः। न हि तदग्निरूपतायामपरं शक्रशिरः। येन तु रूपेण भिन्नं तदजनकमेव कुतो व्यभिचाराशङ्का।

**तत्तस्याजननं रूपमन्यस्य यदि सैव सा।**
**न तस्याजननं रूपन्तत्तस्याः सम्भवेत् कथं ॥२५१॥**

**ततः स्वभावौ नियतावन्योन्यं हेतुकार्ययोः।**
**तस्मात् स्वदृष्टाविव तद् दृष्टे कार्येपि गम्यते ॥२५२॥**

ननु।

---

[1] B. एव न [2] B. दृश्येत [3] B. निर्भास
[4] B. ०क्रियाप्रवणो [5] B. स्या

एकं कथमनेकस्मात् क्लेदवद् दुग्धवारिणः ।
द्रवशक्तेर्यतः क्लेदः सा त्वेकैव द्वयोरपि ॥२५३॥
भिन्नाभिन्नः किमस्यात्मा भिन्ने च[1] द्रवता कथं ।
अभिन्ने ह्युच्यते बुद्धेस्तद्रूपाया अभेदतः ॥२५४॥

न खलु दुग्धवारिणोरभिन्नरूपता तदन्यकठिनरूपभेदाद् व्यावृत्तेरेकत्वादेकता । तथा कार्यस्यापि विक्लेदस्य । नहि विक्लेदोपि परमार्थतोऽभिन्नः । तदन्यव्यावृत्त्या तु तथा व्यपदेश इति न व्यभिचारः ।

तद्वद्भेदेपि दहनो दहनप्रत्ययाश्रयः ।
येनांशेन दधद् धूमं तेन तेन[2] तथा गतिः ॥२५५॥
दहनप्रत्ययाङ्गादेवान्यापेक्षात् समुद्भवात् ।
धूमो तद्व्यभिचारीति तद्वत्[3] कार्यन्तथा परं ॥२५५॥

तद्वदिति दुग्धवारिवदेव द्रवतायास्तदन्यव्यत्वत्त्या भेदेपि द्रव्यप्रत्ययाश्रयत्ववत् । भेदोपि दहनप्रययाश्रयस्तदन्यव्यावृत्त्यैव (।) येनांशेनेति दहन (प्रत्यय) कारणत्वेन तेनैव गतिः । अन्यत्र द्रव्यव्यभिचारात् । दहनप्रत्ययाङ्गतामन्तरेण नोत्पद्यते धूम इति न तद्वचभिचारः । तथा हि ।

धूमेन्धनविकाराङ्गतापदे दहनस्थितेः[4] ।
अनग्निश्चेद्धूमोसौ सधूमश्चेत्सपावकः ॥२५७॥

धूमश्चेन्धनविकारश्च तयोरेवाङ्गं वह्निर्नान्यः । तेन यद्यसौ नोष्णादिलक्षणः शक्रमूर्द्धादिस्तदा न स धूमोपि तुष्पादिरेव ।

एतदेव कुतो न ह्यदृष्टं नियममर्हति नान्यथा भवतीति । नीलमपि तर्हि नान्यदान्यथा भवतीति । कुत एतत् । तथा सति नीलमेव न भवतीति चेत् । समानमेतत् । धूम एव न भवतीति । कुत एतदिति समानमपरत्रापीति

ननु स्वरूपलक्षणं नीलादि न स्वरूपाभावे सति[5] । न च जन्यतालक्षणं धूमादिकं तत्रापि (स्व)रूपमेव लक्षणमिति न समानमेतत् ।

अत्रोच्यते ।

न स्वरूपाभासमात्राद् वस्तुतो वस्तुतास्थितिः ।
स्वरूपस्यावभासो हि भ्रान्तेतरविदां समः ॥५५१॥

स्वरूपमात्रनीलपीताद्यवभासनं हि भ्रान्ताभ्रान्तप्रत्ययसमानमिति न वस्तु सिध्यति । कारणकार्यताकृतस्तु विभाग इत्यलं प्रसङ्गेन । स्वभावहेतोः कथन्नान्तरीयकतेति चेत् ।

अत्रोच्यते ।

नान्तरीयकता ज्ञेया यथा स्वं हेत्वपेक्षया ।
स्वभावस्य यथोक्तं प्राक् विनाशकृतकत्वयोः ॥२५८॥

---

[1] B. भिन्नाथ—हे० न भिन्नो देवता कथमिति पाठान्तरं [2] तेनाङ्शेन—हे०
[3] T. सिद्धं—हे०, च । [4] B. ०स्थितिः [5] B. भवति

वस्तुमात्रानुबन्धी विनाश इति प्राक् प्रतिपादितोयमर्थ इति पुनर्न चर्व्वितचर्व्वणस्य विधानं। तस्मादन्वयव्यतिरेकलक्षण एव कार्यकारणभाव इति नात्मना प्राणादीनामिति न गमकाः।

**आचार्यस्याप्ययमेवाभिप्रायः सकल इति (।) कुत एतदिति चेत्।**

**अहेतुत्वगतिन्यायः सर्व्वोयं व्यतिरेकिणः।**
**अभ्युह्यः श्रावणत्वोक्तेः कृतायाः साम्यदृष्टये ॥२५९॥**

सकलव्यतिरेकहेतूदाहरणसाम्यकथनार्थमाचार्येण श्रावणत्वस्य व्यतिरेकिणो नैकान्तिक-प्रतिपादनं कृतमिति सर्व्वोयं न्याय **आचार्यस्याप्यभिप्राय(स्थ)** इति मन्तव्यम्।

एवन्तावद् व्यतिरेकी न हेतुरिति प्रतिपादितं। सर्व्वस्य व्यतिरेकिणः श्रावणत्वेऽसमानत्वात्तस्य चासाधारणत्वेनानैकान्तिकत्वात्। तथा हि।

सपक्षाच्च विपक्षाच्च व्यतिरेको न भाविकः। सम्भव्यदृष्टिमात्रेण व्यतिरेकीति कथ्यते ॥५५२॥

नित्यानित्यनिरात्मकसात्मकराशिद्वयव्यतिरेकेण न राश्यन्तरं। भावाभावयोः परस्पर-परिहारविरोधस्य भाविकत्वादन्यथाऽव्यवहार[1]मसमंजसं जगत् स्यात्। न चोभयपक्षासम्भवि किञ्चित्। यदि नित्यादनित्याच्च व्यावृत्तं श्रावणत्वं न भवेदेव तर्हि निरधिकरणत्वात्। शब्द एवाधिकरणमिति चेत्। न। शब्दत्वस्यापि समानो दोषः। तदपि सर्व्वतो व्यावृत्तेर्न्न भवेदेव। तथा हि।

नित्यानित्यत्वसन्देहे शब्दे हेतूपपाचनं। स चेदुभयतो हीनः सन्देहोत्र तयोः कथं ॥५५३॥

नहि ततो व्यावृत्तत्वेन निश्चितस्तयोरेव सन्देहसम्भवी। न तर्हि श्रावणत्वं सन्देह-हेतुः शब्दत्वमात्रेणैव सन्देहात्।

ननु शब्दत्वात् सन्देहे किमपरेणापि न सन्देहहेतुताभाजा भाव्यम्।

ननु यो हि क्वचिद् दृष्टः सोपरत्र दृश्यमानस्तत्र शङ्कामुपजनयेत्। तदेव च सन्देह-हेतुत्वमुच्यते। श्रावणत्वन्न कथं सन्देहहेतुः।

नैतदस्ति। यतः।

दृष्टे विधिविधानेन संदेहेत्र निषेधतः। भावाभावेन संदेहे कः स्वपक्षपरिग्रहः ॥५५४॥

यत्र हि प्रमेयत्वादौ साधारणानैकान्तिके संदेहः। स दर्शनद्वारेण विधिमुखेन असाधारणे तु प्रतिषेधमुखेनेति तु कोनयोर्विशेषः।

ननु न दृष्टं श्रावणत्वं नित्यानित्ययोरिति तयोरप्रतिपत्तिहेतुरेव युक्तं। अप्रतिपत्ति-मुखस्यैव दृष्टत्वात्।

नेवं साधीयः। यतः।

व्यावृत्तिरेकस्य यदा नियमात् प्रतियोगिनः। वृत्याभाव्यविरोधे हि व्यावृत्तिर्नोभयोरपि ॥५५५॥

नैकान्ते द्वाभ्यां परस्परविरोधिभ्यां व्यावृत्तिसम्भव औदासीन्यं त्वत्र न लभ्यत एव।

---

[1] B ऽव्यवहार्यं

**ननु द्वयोरेकत्र प्रमाणाभावादेव सन्देहो न श्रावणत्वहेतुकृतः। यदि परं तदप्रतिपत्ति (हेतु)रेव, साधारणानैकान्तिकेपि तर्हि प्रमाणाभावादेव सन्देहो न सहेतुकृतः। दर्शनद्वारेण सोपि संदेहहेतुरेव। श्रावणत्वमप्यदर्शनद्वारेणेति समानमेतत्।**

**अथ सन्देहे सति न संदेहव्यावृत्तिस्तत इति संदेहहेतुरुच्यते। श्रावणत्वमप्येवमेवेति यत्किञ्चिवेतत्।**

**अपि च।**

प्रमेयत्वं द्वयोर्दृष्टं द्वयोर्न्निश्चयकृन्न किम्। द्वयोर्दर्शनयोगे हि विधाने स्याद् द्वयोरपि ॥५५६॥

**दृष्टं हि यद्यत्र (तत्) तद्विधानमेव कुर्यात्। नास्तीति द्वीतीयांशावलम्बनं कुतः। अथ द्वयं नैकत्र परस्परविरोधिनोर्भावो युक्तः। एवन्तर्हि पक्ष एव संदेहो न १ पक्षद्वारकः। दर्शनेपि पक्षसंदेहद्वारक एव संशयः स उभयत्रादर्शनेपि समानः।**

**नन्वेकान्तव्यावृत्तिकृतः संदेहः। एकान्तेन द्वाभ्यां व्यावृत्तत्वेन निश्चयात्। योहि द्वाभ्यां राश्यन्तरासम्भविभ्यां व्यावृत्तः स तेनैव रूपेणाप्रतिपत्तेर्हेतुः। तथाचाचार्यैणाप्यव्यतिरेकी कथितः[१]। तथा चाह। यो ह्यसाधारणः साधनधर्मः स यावता भेदेन सर्व्वसंग्र- : स्तत्र संशयहेतुः तद्वता तत्संग्रहादेकान्तव्यावृत्तेश्च तत्कथमयं व्यावृत्तेरेव संशयात् संशयहेतुः।**

**नैतदस्ति।**

उक्तमेतद् यतो द्वाभ्यां व्यावृत्तेर्यस्य निश्चयः।
अन्यत्र तस्य भावेऽसन्निश्चयः स्याद् द्वयोरपि ॥५५७॥

व्यावर्त्तकञ्च तत्रैव पुनः संदेहकृत् कथ। तद्व्यावृत्तेर्द्वयोरन्यन्न व्यवच्छेदसाधनम् ॥५५८॥

**यो हि यस्माद व्यावृत्तः स कथन्तस्य न व्यवच्छेदसाधकः। अथ द्वयोर्व्यवच्छेद साध्यकत्वादेवाप्रतिपत्तिहेतुः।**

**नेदमस्ति। यतः।**

सर्व्वस्य हेतोर्हेतुत्वं व्यवच्छेदप्रसाधने। व्यावृत्तिः शब्दलिङ्गाभ्यां प्रसाध्यत इति स्थितं ॥५५९॥

**सत्यमन्यव्यावृत्तिसाधक एव हेतुः किन्तु तदन्यविधानाक्षेपकत्वेन। इह तु न किञ्चिदन्यदाक्षिप्यते द्वयोरपि निवृत्तेः। कृतकत्वेन तु नित्यतानिवृत्त्याऽनित्यताक्षेपः।**

**सत्यमेतत्।**

नित्यव्यावर्त्तनादन्यन्नानित्यत्वं विधीयते। अन्यव्यावर्त्तनादेव कृतोर्थोनुमया यतः[२] ॥५६०॥

**अनित्यस्य[३] नित्यत रोपस्य व्यवच्छेदमात्रेण कृतार्थमनुमानं। नित्यानित्यविकल्पयोरेकव्यावर्त्तनेनापरस्य स्वत एव स्थानात्। तदपि कदाचिन्न भविष्यतीति चेत्। न। तस्य प्रत्यक्षसिद्धत्वात्। कार्यहेतौ। कथमिति चेत्। आस्तान्तावदेतत्। श्रावणत्वेन तु यदि द्वयमपि व्यवच्छिन्नं तदन्यथात्वविधानं प्रत्यक्षसिद्धम्भवेदिति हेतुरेव भवेत्। अन्येन (तु) हेतुना तदेकसाधनेन न हेतुरिति चेत्। न। प्रत्यक्षसिद्धे कथमन्यो**

---

[१] B. कृत०	[२] B ततः	[३] B अन्यस्य

**हेतुर्निषेधकः स्याद् विधायको वा। अथ प्रत्यक्षं न निषेधकृत्। ततो परस्य परेण विधानं निषेधनम्वा न श्रावणत्वेन। द्वयोर्व्यवच्छेदे कथमपरेण विधानं। अन्यथा तत्राप्यपरेण विधानमिति कथमपरस्यापि प्रमाणता भवेदिति सर्व्वत्रानाश्वासः। न च प्रत्यक्षमनिषेधकं। तथाभावे हि विधायकमपि न स्यात्। विधानं वस्तुप्रतिपादनं न च वस्तु तदपरव्यतिरिक्त-निषेधमन्तरेण प्रतिपादितं भवति। यतः।**

अन्यासंसर्गि तद्वस्तु भवेद्वान्येन मिश्रितं। अन्येन मिश्रणे वस्तु न स्यादव्यवहारतः ॥५६१॥
तथा वा न निषेधस्य परस्मादपि सम्भवः ॥५६२॥

**अत्र विचार्यते। वस्तु स्वयं स्वरूपतः परस्मादव्यावृत्तमन्यथा वा। यदि व्यावृत्तं प्रत्यक्षेण तथा गृहीतमगृहीतम्वा। गृहीतञ्चेत् कथमन्यस्यानिषेधः। स एव हि परस्य तत्र निषेधो यत्परिहारेण तस्य रूपान्तरतया प्रतिभासनं। अन्यथा संकुलप्रतिपत्तेरव्यवहार इति निष्फलं प्रमाणं। अथ परेण प्रमाणेनापरस्य निषेधव्यवहारः।**

**तदप्यसत। यत।**

प्रत्यक्षेण प्रतीतस्य परस्माद् यदि बाधनं। प्रत्यक्षस्याप्रमाणत्वे परस्याप्यप्रमाणता ॥५६३॥

**प्रत्यक्षस्याप्रमाणत्वे कः परत्र समाश्वासः। अथ वस्तुमिश्रणमेव परेण। ततः परप्रमाणशतेनापि न निषेधः। न हि स्वरूपमन्यथा कर्त्तुं शक्यं। अथ केनचिद् रूपेणा-मिश्रितमिति[1] निषेधः। येन रूपेण(ा) मिश्रणं तेनापि रूपेण प्रत्यक्षेण गृहीतमेव। अन्यथा-न्यथाग्रहणे कथं व्यावृत्ततार्थस्य। (परेण प्रतीतौ व्यावृत्ततावगम इति चेत्) परेण-(ान्यथा) प्रतीतौ सर्व्वत्रानाश्वास इति प्रतिपादितं।**

उष्ट्रात् प्रविष्टमात्रस्य योन्यथा गर्भवेश्मनि। प्रतिभासः परोध्यक्षस्तेन पूर्व्वस्य बाधनं ॥५६४।

**गर्भगृहे हि प्रथम(?)प्रवेशेऽप्रमाणमेव प्रथमदर्शनं। तेन तद् बाध्यते न तु प्रमाण-मेव। तस्माद् यदि प्रत्यक्षेणोभयव्यावृत्तशब्दग्रहणं तदा न परस्मात् संदेहोन्यथा वा तथा श्रावणत्वेन वा। तस्मादव्यावृत्ततयैव श्रावणत्वात् संदेहः। एवं सर्व्वो व्यतिरेकी। अदर्शनमात्रन्तूपादायाचार्येण व्यतिरेकी प्रतिपादितः। कथन्तर्हि एकान्तव्यावृत्तेरिति वचनं। नैकान्तेन निश्चये व्यावृत्तेरित्यर्थोपि त्वेकान्तस्य निश्चयस्य व्यावृत्तेरिति। नहि नित्येऽनित्ये वास्य भावेनाभावेन वा निश्चयः। ततः परमार्थतो ऽव्यावृत्तिरेव ततोनैकान्तिकता। एवन्ता-वद् "विवादाद् भेद" इति व्याख्यातं।**

**सामान्यमिदानीं व्याख्यायते। यथैकान्तव्यावृत्तो व्यतिरेकी गमकस्तथैकान्तेनान्वय्यपि। तथा हि।**

प्रमेयत्वादनित्यत्वं शब्दस्यापि घटादिवत्। आकाशादसतस्तस्य व्यावृत्तेर्हेतुरन्वयी ॥५६५॥

**न ह्याकाशस्य सत्त्वमसत्त्वम्वा तस्यासत्त्वात्। तेनाव्यभिचारितान्वयो हेतुर्गमक एव।**

**नैतदस्ति।**

आकाशासत्त्वपक्षे हि यद्यप्यस्य न सम्भवः। तथाप्यस्या[2]प्रमेयत्वं कथञ्चिन्न निवर्त्तते ॥५६६॥

---

[1] B. मिश्रणमि०          [2] B. ०प्यस्य

असतामपि कथञ्चित् प्रमेयताऽस्त्येवान्यथा विधिनिषेधाभ्यां व्यवहार एव न भवेत्। नहि सत्त्वं केवलं व्यवहर्तुं शक्यं। परस्परपरिहारेण हि व्यव्यस्थिताः पदार्थात्मानो व्यवहारविषयो ऽन्यथार्थक्रियाविरहादनर्थता स्यात्। अर्थक्रियार्थिनां स्वपरविभागाभावे च को व्यवहरेत्। क्व वा किमर्थम्वेति सर्व्वमसदेव भवेत्। नहि परपक्षमसद[1]प्रतियता स्वपक्षः शक्यः समर्थयितुं। आकाशञ्च स प्रतिघपदार्थाभावमात्रमवश्यं प्रमातव्यमन्यथा न पदात् पदमपि चलितव्यमापतेत्। तस्मात् सतः पदार्थान् प्रतिनियमेन व्यवस्थापयता प्रमेयोऽभाव एवं स व्यवस्थापितः। प्रमाणेन व्यवस्थापित इति प्रमेयः। नहि वस्तुविषयमेव प्रमाणं। परिच्छेदलक्षणत्वात् प्रमाणस्य। परिच्छेदकार्यैव प्रमाणं। न चेत् स्वविषये परेण बाध्यते। तस्माद् व्यवहाराविसम्वादसाधनप्रत्ययपरिच्छेद्यत्वात् प्रमेय एवाभाव इति नाव्यभिचरितान्वयं प्रमेयत्वादिति। ततः साधारणतया[2] नैकान्तिकं। अथ प्रमेयता प्रत्यक्षपरिच्छेद्यतैवोच्यते। तथा सति प्रत्यक्षस्य वस्तुन उदयादर्थक्रियासामर्थ्यमेव प्रमेयत्वं। ततोऽर्थक्रियाकारित्वमेव गमकमित्यापतितं(।) तच्चावस्तुनो(पि) व्यावृत्तेर्व्यतिरेकसम्भवात् कथमन्वयी हेतुः। भवति चासतोपि व्यावृत्तिरिति प्रतिपादितं।

एतेन वस्तुत्वादयोपि व्याख्याताः। तस्मादन्वयव्यतिरेक्येव कार्यस्वभावलक्षणो हेतुः।

नन्वनुपलब्धिरपि तृतीयो हेतुरिति प्रतिपादितं। प्रतिषेधस्तु सर्व्वत्र साध्यतेऽनुपलम्भत इत्यादिना।

अथ वस्तुविषयहेतुप्रभेदोपदर्शनमेतत्। तथा सति प्रतिबन्धोनुपलब्धेरुपपादनीयः न च तादात्म्यतदुत्पत्तिभ्यामपरप्रतिबन्धप्रकार इति प्रतिपादितं।

अत्रोच्यते।

कारणव्यापकाभावादभावो व्याप्यकार्ययोः।
गम्यते न(ा) परः कश्चिदभावस्य प्रसाधकः ॥५६७॥

अभावो हि नाम न कश्चित् स्वतन्त्रो व्यवहारविषयोऽपि तु विवक्षितस्य वस्तुन एव। तच्च वस्तु सन्दिह्यमाने परोक्षतया कथन्नास्तीति सिध्यति[3]। नहि तस्यानुपलब्धिरेव गमिकाऽभावस्यानुपलब्धिलक्षणप्राप्तत्वात्। एवं तु तदभावः सिध्यति(।) यदि तस्य कारणं वा नास्तीति। तत्र च (दर्शितः) स एव द्विविधः प्रतिबन्ध इति सिद्धप्रतिबन्धिकैवानुपलब्धिः।

## § ५. अनुपलब्धिचिन्ता

### १. अनुपलब्धिः पृथग् हेतुः

उदाहरणं कस्मान्नोपात्तं। उपात्तमेव यतः।

**हेतुस्वभावव्यावृत्त्यैवार्थव्यावृत्तिवर्णनात्।**
**सिद्धोदाहरणेत्युक्तानुपलब्धिः पृथग् न तु ॥२६०॥**

---

[1] B. मसन्तम०　　[2] B साधारणा　　[3] B साध्यते

उपात्तमेवानुपलब्धेरुदाहरणं न तु पृथक् । किं कारणं । हेतुस्वभावव्यावृत्यैवार्थस्य (कार्यस्य) स्वभावस्य च व्यावृत्तिकथनात् ।

निवेदितमेतत् ।

आत्मत्वे[1] हेतुभावे वा सिद्धे हि व्यतिरेकिता ।

सिध्यतीत्यादिस्वभावानुपलब्धिरपि निर्दिष्टैव । हेतुस्वभावयोरनुपलब्धयोरेव भावस्य निवर्त्तनात् । तथा चोक्तं । "सिद्धं प्रमाणैर्वदता"मित्यादि । उपलब्धिलक्षणप्राप्तत्वं विशेषणमिति कथं सिध्यति ।

अत्रोच्यते ।

तत्राप्यदृश्यात् पुरुषात् प्राणादेरनिवर्त्तनात् ।
सन्देहहेतुताख्यात्या दृश्यार्थे सेति सूचितं ॥२६१॥

परेणोक्तं घटादौ प्राणादिनिवृत्तिरात्मनिवृत्तेर्यदि च जीवच्छरीरादप्यात्मा व्यावृत्तः प्राणादयोपि व्यावर्त्तेरन् ।

अत्राचार्येण प्रतिपादितं । घटादावात्मा सत्त्वमेव दृश्यत्वमेवादृश्यत्वादात्मनो न सिद्धमनुपलब्धिमात्रात् संदेहा (? देहा)दिति । अतो दृश्येर्थेऽनुपलब्धिर्गमिकेति सूचितमेव ।

ननु व्यवच्छेदसाधनत्वे सर्व्व एव हेतुरनुपलम्भ एव तत्कथं हेतुत्रितयं ।

नैष दोषः । यतः ।

अनङ्गीकृतवस्त्वंशो[2] निषेधः साध्यते नया ।
वस्तुन्यपि तु पूर्व्वाभ्यां पर्युदासो विधानतः ॥२६२॥

वस्तुन्यपि प्रदेशे न पर्युदासः साध्यतेऽपि त्वनङ्गीकृतवस्त्वभावे[3] निषेधः साध्यते । पूर्व्वाभ्यां तु स्वभावकार्यहेतुभ्यां पर्युदासद्वारेण । तेन विषयभेदाद् भेद एव प्रतिबन्धसमानतायामपि ।

ननु कः स्वभावानुपलब्धौ प्रतिबन्धः तादात्म्यमित्याह ।

तत्रोपलम्भेष्वस्तित्वमुपलब्धेर्न्न चापरं ।

न ह्यनुपलब्धेरन्यैवासत्ताऽपि त्वनुपलब्धिरेव ।

ननु ज्ञानव्यतिरेकोऽनुपलब्धिः । सत्ताव्यतिरेकोनुपलब्धिः (?) सत्ताव्यतिरेकस्त्वभावस्तत्कथमनयोस्तादात्म्यं । यथा च ज्ञानज्ञेययोर्भेदस्तथा तदभावयोरपि (।) न खलु ज्ञानमेव पदार्थस्य सत्ताज्ञानव्यतिरेकेणापि तस्याभावात् । तथा हि ।

सत्ता परोक्षाप्यर्थानामनुमानेन गृह्यते । पावकस्य न किम्भावो धूमदृष्ट्यानुमीयते ॥५६८॥

न च तत्राप्यनुमानोपलम्भ एव सत्ता । अनुमानाभावेपि सत्तायां व्यभिचारात् । नानुमाननिवृत्तिरभावं गमयति । अतीतानागतयोरप्यनुमानवृत्तेः ।

नेवं साधीयः ।

---

[1] B स्वात्मत्वे  [2] T. दृङोस्-पोऽि-छोस् (=वस्तुधर्मः)  [3] B वस्तुभावो

**न ह्यन्यानुपलभ्येषु नास्तितानुपलम्भनात् ।**

उपलब्धिलक्षणप्राप्तस्य (हि) तदनुपलब्ध्याऽभावव्यवहारः साध्यते न च तेषामुपलम्भादन्यैव सत्ता । तथा हि विप्रतिषिद्धमेतत् । उपलब्धियोग्यो न चोपलभ्यत इति । तस्मादुपलब्धिलक्षणप्राप्तपदार्थसत्तोपलम्भ एव । तथा हि । यद्युपलभ्यमानतोपलब्धिस्सा पदार्थस्वभावैव । अथोपलम्भनमुपलब्धिः कर्तृस्थतयो[1]च्यते । तदाप्युपलब्धिलक्षणप्राप्तसत्ता तया प्राप्तैव[2] । तदव्यतिरेके च न भेदप्रतिपत्तिर्व्यतिरेकस्य गम्यत्वाद् भेदस्य । तदव्यभिचारादुपलम्भः सत्तोच्यते । न च व्यतिरिक्तसमानकालोपलम्भादुपलम्भः पदार्थानां । अपि तु तदनुप्रविष्टोपलभ्यमानतालक्षणोपलम्भादेव । तस्मादुपलम्भ एव सत्ता । ततस्तदनुपलम्भ एवासत्तेति वक्ष्यति । न हि परस्परमभावानां परमार्थतः कश्चिद् भेदः । भावविशेषणभेदे तु भेदः । पटस्याभावः शकटस्येति च । न च निर्विशेषणो भावः तत्त्वं प्रतिलभते । अथ भावाभावयोर्भावभूतम्विशेषणमेकमेव । अतस्तदभावयोरप्येकत्वमेव । न च परमार्थतोऽभावस्य ततः[3] प्रतिषेध्यभेदेपि ।

ननु यद्यभाव एवानुपलब्धिस्तदाऽविप्रतिपत्तिरेव । सत्यमेतत् । यतः ।

**इत्यज्ञज्ञापनायैकानुपाख्योदाहृतिर्मता ॥२६३॥**

एका स्वभावानुपलब्धिलक्षणा इति । परिज्ञानरहितस्य यो हि ज्ञानज्ञेयाभावयोरभेदं नावगच्छति । यो वा सांख्योत्यन्तविमूढः सर्व्वं सर्व्वत्र विद्यत इत्याग्रहवान् । तस्याज्ञस्य प्रती.यर्थमेका स्वभावानुपलब्धिः । किन्तर्हि तत्र प्रसाध्यते ।

**विषयासत्त्वतस्तत्र विषयि प्रतिषिध्यते ।**
**ज्ञानाभिधाने सन्देहं यथाऽदाहादपावकः ॥२६४॥**

विषयो हि ज्ञानाभिधानयोः सत्त्वं । तत्संदेहश्च तयोः सन्देहस्य । तस्य विषयस्याभावे नियमेन ज्ञानमभिधानं सन्देहश्च निवर्त्तते । विषयस्य विपर्ययस्य सत्त्वात् । यथा न पावको दाहाभावात् । दहनभावे हि पक्षान्तरे पावकसंदेहः तदभावे तु विपर्ययस्य भावात् । कुतस्तस्य सम्भवः । यतोऽदाहादपरा नास्त्यपावकता । यथा च नादाहादपराऽपावकता ।

**तथान्यानोपलभ्येषु नास्तितानुपलम्भनात् ।**
**तज्ज्ञानशब्दाः साध्यन्ते तद्भावात् तन्निबन्धनाः ॥२६५॥**

न खल्वन्यैव नास्तिता नामोपलब्धिलक्षणप्राप्तेष्वनुपलम्भनस्वरूपाद् बहिः । ततस्तत्सिद्धौसिद्ध एव तदात्मीभावः[4] ।

नन्वभावोऽनु(प)लम्भेन साध्यते । तत्कथं साध्यसाधनयोरेकता ।

तदप्यसत् ।

न सिद्धमेतदेवात्र न चासिद्धमसिद्धतः । सिद्धिमृच्छति नैवात्र प्रतिबन्धस्ततो न तत् ॥५६९॥

यदुच्यते साध्यसाधनयोर्भेदेन भवितव्यं(।)स एवात्र साध्यसाधनभावो न सिद्धः । तत्कथं तथा भेदस्य सिद्धिः । न खल्वसिद्धमसिद्धतः सिद्धिमता यावत् साध्यसाधनभावो न

[1] B ०स्थक्रियो　[2] B व्याप्तैव　[3] B ०स्य भेदः　[4] B. तदात्मोऽभावः

सिद्धः परं प्रति न तावद् भेदसिद्धिः। यावच्च न भेदसिद्धिर्न तावत् साध्यसाधनभावः। प्रतिबन्धे हि सति साध्यसाधनभावः न तादात्म्यं प्रतिक्षिपतोऽनुपलम्भाभावयोरपरः प्रतिबन्धः। नहि कार्यकारणभावस्तयोः।

नन्वभावेनानुपलम्भः क्रियते। यदैव घटादेरपनयनं करोति कश्चित् तदैवानुपलम्भः।

सत्यमेतद् यद्यभावः परेणानुपलम्भतः प्रमाणेन ज्ञायते ततो न सहानुपलम्भवदस्य प्रतिबन्धः प्रसिध्येत्। अन्यथेतरेतराश्रयदोषप्रसरः केन निवार्यः।

प्रतिबन्धे प्रमासिद्धेनुपलम्भप्रमाणता। प्रमात्वेनुपलम्भस्य प्रतिबन्धः प्रसिध्यति ॥५७०॥
अन्योन्याश्रयतो नैवमेकस्यापि प्रसिद्धता। इतरेतरकृतकार्यमत एव न सिध्यति ॥५७१॥

तस्मादनुपलम्भान्नाभावः प्रसिध्यति। प्रतिबन्धाभावात्। तादात्म्यप्रतिबन्धे तु स एवानुपलम्भोऽभाव इति व्यवहार एव साध्यते।

**सिद्धो हि व्यवहारोयं दृश्यादृष्टावसन्निति।**
**तस्याः सिद्धावसन्दिग्धौ तत्कार्यत्वेपि धीध्वनी ॥२६६॥**

ननु व्यवहारसाधनेपि नास्त्येव दृष्टान्तः। अनुपलब्ध्यैव सकलो व्यवहारः साधनीयः। तदा च दृष्टान्तान्तरस धनेऽनवस्थैव। व्यवहारश्च कार्यभूत एवानुपलब्धेः। ततः कारणात् कार्यसाधनमयुक्तं। नावश्यं कारणानि तद्वन्तीति(।)

तदसत् यतः।

सिद्ध एवायं व्यवहारो दृश्यादृष्टिनिबन्धनः। तावन्मात्रनिबन्धनतया अभाव-व्यवहारयोग्यताऽनुपलब्धिस्वभावैव योग्यतायाऽ(?अ)नर्थान्तरत्वात्। व्यवहारस्त्ववश्यमेव तद्दर्शनात् सचेतनः प्रवर्त्तयेत्। तावन्मात्रनिबन्धनमभावव्यवहारं स्मरन्नवश्यमेव तच्चेतना-वान् भवति। कायवाग्व्यवहारन्तु यदि नाम न प्रवर्त्तयति। मा स्म प्रवर्त्तयत्। प्रमाणस्य प्रमाणताप्रतीतिसाधनतया न कायादिव्यवहारसाधनात्। तस्मात्(।)

**विद्यमाने हि विषये मोहादज्ञाननुब्रुवन्।**
**केवलं सिद्धसाधर्म्यात् स्मार्यते समयं परः ॥२६७॥**

—इति संग्रहः।

**कार्यकारणता यद्वत् साध्यते दृष्ट्यदृष्टितः।**
**कार्यादिशब्दा हि तयोर्व्यवहाराय कल्पिताः ॥२६८॥**

न खलु दर्शनादर्शनविशेषव्यतिरेकेणापर(ा) कार्यकारणता। कार्यमस्येत्ययमेवार्थ एतदन्तरेण न भवतीति। यदि तु व्यतिरिक्त एतस्मात्तदैतदभावेपि भवेदेव(।) तथा सति व्यर्थकः प्रतिबन्धः परः।

अथ तदभावे न भवेत्तथा सति स एव सम्बन्ध इति व्यर्थकः परः।

ननु सम्बन्धे सति तदभावे न भवति। तद्भावे भवतीति सिध्यति।

सम्बन्धे सति तद्भावे भवतीति यदीष्यते। तदभावेपि सम्बन्धः पूर्व्वकस्येति चिन्त्यतां ॥५७२॥
द्विष्ठ एव हि सम्बन्धः एकभावे कथम्भवेत्। योग्यता यदि सम्बन्धः कारणस्य फलोदये ॥५७३॥

कारणादेव कार्यस्य भाव इत्येव युक्तिमत् । तथा हि कारणं तादृक् निजकारणसम्भवि ।।५७४।।

**न चान्वयव्यतिरेकाभ्यामपरः कार्यकारणभावः प्रतिभात्यतीन्द्रियदृशोपि । तस्मादन्वयव्यतिरेकाभ्यां कार्यकारणभावव्यवहारस्य साध्यता ।**

**कथन्तर्हि शब्दान्यत्त्वमर्थान्यत्त्वमन्तरेण न तयोरेव दृष्टचदृष्टचोर्व्यवहारार्थं लाघवेन कार्यादिशब्दनिवेशः । तेन ।**

**कारणात् कार्यसंसिद्धिः स्वभावान्तर्गमादियं ।**
**हेतुप्रभेदाख्यानेन दर्शितोदाहृतिः पृथक् ॥२६६॥**

**कारणं(हि)[1] समर्थं कार्यस्वभाव एव वस्तुतः । ततोनुपलब्धिः स्वभावहेतुरेव । ततो नास्याः पृथगुपन्यासः ।**

**ननु कथं स्वभावानुपलम्भः स्वभावहेतावन्तर्भवति तादात्म्यप्रतिबन्धमन्तरेण । यथा च भावयोर्न परस्परं भेदः तथाऽभेदोपि । न खलु निरात्मनः तादात्म्यसम्भवः । न हि शशविषाणं खरविषाणात्मकं ।**

**अत्र हि प्रतिविधीयते । प्रतिषेध्यविपरीतस्वभावात्मिकैवानुपलब्धिः । तथा हि ।**

**एकोपलम्भानुभवादिदं नोपलभे इति ।**
**बुद्धेरुपलभे वेति कल्पिकायाः समुद्भवः ॥२७०॥**

**न खलु रिक्तात्माऽभावः प्रमाणगोचरविचारवत्तरः । न च तेन सिद्धेनापि स्वरूपमात्रतः किञ्चित् प्रसिद्धिमत् । वस्तुसांकर्यपर्यालोचनलोचनैरेव स तथेष्यते । तत्र यदि वस्तुदेशकालावस्थान्तरभावाद् व्यावृत्तं स्वरूपतः किमपराभावकल्पनया । अथ न व्यावृत्तं स्वरूपतः तथापि व्यर्थकः परोऽभावः । एकत्र व्यर्थः परत्रासमर्थ इति प्रत्यपादीदं प्रागेव । तस्माद् अन्यभावरिक्ततयैव स्वभावभूत(ो) धर्मभेदेन तथा व्यपदिश्यते घटादेरभाव इति । यतः । एकस्य पदार्थस्य विवक्षितपदार्थस्वरूपविविक्तात्मनो य उपलम्भः तस्य योऽनुभवः स्वसम्वेदनतया तस्मादेवेदं नोपलभे इति स्मरणविपरिवर्त्तमानमतिः कल्पनारूपोपजायते । तत्र प्रदेशानुभव[2] एवापरस्यानुपलम्भः । यत एतदन्येन स्वरूपेण नोपलभे इत्ययमेवात्रार्थः । तेन स्वरूपेणानुपलब्धिरस्य । तेन रूपेणेदं नास्तीति ।**

ननु च तदुपघातकमिह नास्तीति[3] तस्याभावोऽनेन रूपेणेति साध्यं तत्कथं विपर्ययस्य वचनं । सत्यमेतद् यदि परोप्यत्रार्थो नान्तर्भवेत् (।) स त्वन्तर्भवत्येव । तथा हि ।

विविक्तस्तेन रूपेण प्रदेशोनेन वा घटः । न भेदोत्र विदग्धानां प्रतिभाति कथञ्चन ।।५७५।।

**यदि सोनेन रूपेण विविक्तो न स्यादयमपि न तेनेति परिस्फुटार्थे कः परस्य व्यामोहः । तस्मात् तद्विविक्ततैवास्यात्राभावः । यतश्च तद्विविक्तप्रदेशदर्शनादेव नोपलभे तदिति मतिः । तदन्यरूपेण चोपलभे इति ततोनुपलम्भस्योपलम्भस्य च तादात्म्यादुपलम्भ एवानुपलम्भः ।**

---

[1] T. इतोऽग्रे यावत् २७० कारिकां (०समुद्भवः) भाषान्तरं न दृश्यते

[2] T. प्रदेशानुपलम्भः

[3] T. ननु च स घट इह नास्तीति तस्य स्वभावो नेति साध्यं कथं विपर्ययस्य वचनम् ।

ननु भवत्वयमनुपलम्भो ज्ञानान्तरस्य ज्ञेयान्तरन्तु[1] कथं। ज्ञानज्ञेययोरभेद इति प्रतिपादनाददोषः। अथवा वा शब्द इवार्थे। यथा उपलभे इति विकल्पविषयत्वात्तथाध्यवसीयमान उपलम्भस्तथा नोपलभे इति व्यवसायादनुपलम्भोपि।

इति चेत्। न (।)अविविक्तस्य वेदनेऽभाववेदनस्य सामर्थ्यं (।) प्रमाणेन गृहीतस्यान्यथा कर्त्तुमशक्यत्वात्। प्रतिपादितञ्चैतदिति नोच्यते। तथा हि।

नहि स्मृतिं विना(ऽ)भावप्रमाणस्यास्ति सम्भवः।

विना विशिष्टानुभवं प्रतियोगिस्मृतिर्न यत् ॥५७६॥

नन्वभावसाधिता भावसंभवादेव विशेषसिद्धिर्भावानां तत्कथमभावमन्तरेणासाकर्यं।

नैतदस्ति। यतः[2]।

**विशेषो गम्यतेर्थानां विशिष्टादेव वेदनात्।**
**तथाभूतात्मसंवित्तिर्भेदधीहेतुरस्य च ॥२७१॥**

यदि न विशिष्टं वेदनं वेदनान्तरविविक्तं भवेत्। न वेद्यविशेषगतिः। यदि च स्वसम्वेदनेन तद्रूपसम्वेदनस्याननुभवः तदा तस्यापि विशिष्टता न गम्यते। अभावसम्वेदनेन गम्येत

नहि प्रतियोगिस्मरणमन्तरेणाभावप्रमाणोदयः। न च विशिष्टसम्वेदनाभावे प्रतियोगिनः स्मरणं। अथ पूर्व्वन्तस्य विशिष्टानुभवः तथा सत्यस्यापीति व्यर्थक एवाभावः। अथाभावेन स एवाभावव्यवहारः साध्यते। किमन्येन सिद्धस्यान्येन साधनेन। व्यवहारसाधने सैवानुपलब्धिः स्वभावहेतुस्वभावा। तस्मादन्यविविक्तस्वसम्वेदनभावादेव भेदविकल्पः (।) स एव च भेदस्तदन्याभावः।

**तस्मात् स्वतो धियोर्भेदसिद्धिस्ताभ्यां तदर्थयोः।**
**अन्यथा ह्यनवस्थानाद् भेदः सिध्येन्न कस्यचित् ॥२७२॥**

धियः स्वसम्वेदनादेवान्यव्यावृत्तताप्रसिद्धिः। ततोप्यर्थस्येति परिसमाप्तः स्व(?)-सम्वेदनव्यवहारः। यदि तु न प्रत्यक्षादेव भेदः अपि त्वभावप्रमाणतः। तथा सत्यनवस्थानादप्रतिपत्तिः।

तथा हि।

अभावेन प्रमाणेन यदि भेदस्य कल्पना। सोप्यभावः परेणान्याभावे नैवावतार्यते ॥५७७॥

सोप्यन्येन ततोन्येन तदन्योप्यनवस्थितिरिति न व्यवहारः[3]। अभावेन हि प्रमाणेन यद्यनधिगतः प्रत्यक्षेण भेदः प्रतीयते। तस्याभावस्य प्रतियोगिस्मरणे सत्यवतारः। प्रतियोगितया च स्मरणं प्रत्यक्षतो भेदग्रहणे सति भवतीति व्यर्थकोऽभाव इदानीमपि पूर्व्ववत् प्रत्यक्षेणैव भेदग्रहणमिति।

अथ तथापि[4] नाभावमन्तरेण भेद इति नाभावस्य व्यर्थता। तथा सति तत्राप्यपरेण

---

[1] B ०न्तरस्य तु
[2] T. भोटभाषान्तरेऽत्र २७० कारिका
[3] T. पंचदशमाह्निकं (समाप्तम्)
[4] B तदा

प्रतियोगिस्मरणेनाभावावतारकृता भाव्यं (।) तदपि स्मरणमपेक्ष्यत[१] इत्यनवस्था। अभ्युपगम्य चेदमुच्यते न तु पुनः सम्भवतीदानीं गृह्यमाणस्य तदा प्रतियोगितया स्मरणं येन तदानीमभावावतारे तस्यास्माद् भेदग्रहणमिति न सम्भवत्यभावावतारः। तस्मादप्रतिपत्तिरेव परदर्शने भेदस्य।

विशिष्टरूपानुभवान्नातोन्यान्यनिराक्रिया।
तद्विशिष्टोपलम्भोतः तस्याप्यनुपलम्भनं ॥२७३॥

विशिष्टरूपानुभव एव तदन्यस्याभावसाधनं। ननु विशिष्टरूपानुभवमन्तरेणान्यस्य तत्राभावसिद्धिः।

ननु विशिष्टरूपानुभवात् तथाभूततैव तस्य सिध्यति। कथन्तत्र तस्य(भेद)। भावः। नहि देशकालान्तरभाविनस्तत्राभावस्तस्यानुपलब्धिलक्षणप्राप्तत्वात्।

तदसद् यतः।

विशिष्टरूपानुभवे कथमन्यानिराक्रिया। अन्यानिराक्रियायां हि स एव तु न सिध्यति ॥५७८॥

विशिष्टरूपानुभवे हि पदार्थानुभव एव न स्यात्। विशिष्टश्चेदधिगम्यते रूपं घटादेः किमपराभावप्रतिपत्त्या। न चा भावसहस्रप्रतिपत्त्यापि विशिष्टरूपानुभवः स्वरूपविशेषप्रतिपदम्विना। स्वरूपप्रतिपत्तिस्त्ववश्यमेषितव्या। न च (।)परो भावः स्वरूपतः प्रत्येतुं शक्य इति प्रतिपादितं। तस्माद् विशिष्टरूपानुभव एवापरस्याभावसाधनं। अनुपलम्भनमपि तस्य विशिष्टोपलम्भनमेवान्यस्य।

तस्मादनुपलम्भोयं स्वयं प्रत्यक्षतो गतः।
स्वमात्रवृत्तेर्गमकस्तदभावव्यवस्थितेः ॥२७४॥

तन्नियतरूपोपलम्भ एवाभाव इति सिद्धमभावानुपलम्भयोस्तादात्म्यं प्रत्यक्षसिद्धत्वञ्च(सिद्धमि)ति नासि(f)द्धप्रतिबन्धाभावदोषः। स चानुपलम्भः समर्थ एव हेतुरिति। स्वमात्रवृत्तेरेवाभावव्यवहारस्य प्रवर्त्तकः। अन्यथा यद्यनुभवाभावो[२]ऽनुपलब्धिर्भावाभावश्चाभावः। तदानवस्थानादसिद्धिरेवेत्याह।

अन्यथार्थस्य नास्तित्वं गम्यतेनुपलम्भतः।
उपलम्भस्य नास्तित्वमन्येनेत्यनवस्थितिः ॥२७५॥

यथाभावाभावोऽनुपलम्भेन तथोपलम्भाभावरूपोप्यनुपलम्भः। तस्यापरेणानुपलम्भेन तदभावोप्यपरेणेति नानवस्थानतो मुक्तिः। अथार्थस्याभाव उपलम्भसाधनत्वादुपलम्भाभावेन साध्यते। उपलम्भस्य तु भावो नापरसाधन इति तदभावोपि नापरसाधनः।

तदेतदसत्।

स्वसम्वेदनसिद्धत्वमुपलम्भस्य युक्तिमत्। तदभावस्य सम्वित्तिः स्वत इत्यतिसाहसम् ॥५७९॥
स्वसम्वेदनभावे हि भाव एव भवेदयं। प्रत्यक्षसिद्धो(ऽ)भावश्चेद् विज्ञानस्यान्यवित्तितः ॥५८०॥

अथापरप्रत्यक्षसिद्धोऽभावः सम्वेदनस्य वस्तुनोपि तर्हीति प्राप्तं।

---

[१] B पेक्षत　　　　[२] B यद्यनुपलम्भाभावो

ननु वस्त्वनुपलब्धिलक्षणप्राप्तत्वात् न परप्रत्यक्षतः सिध्यति। तस्य विज्ञानादन्यद् रूपमिति। सम्वेदनस्य सम्वेदनत्वादपररूपाभाव इति (।) तदपरप्रत्यक्षसिद्धोऽभावः। तथा च। इदं नोपलभे इति। उपलम्भमेवोत्तमपुरुषेण निरस्यति न वस्त्विदं नास्तीति।

"तस्मादनुपलम्भोयं स्वयं प्रत्यक्षतो गतं इति। ज्ञानाभावलक्षण एव।"

तदसत्।

अन्योपलम्भेनान्यस्य पराऽसत्ता गतिः कथं।

तद्विविक्ततया चेत् स्यात् तत्किं नानुपलब्धिता ॥५८१॥

न खलु तद्विविक्ततामन्तरेण ज्ञानान्तरस्याभावसाधनं ज्ञानान्तरसम्वेदनेन। तद्विविक्तोपलब्धेरेव च तदनुपलब्धिः। तत्कथं प्रत्यक्षसिद्धस्तदन्यसम्वेदनाभावः। अथोपलब्धिलक्षणप्राप्तमिति न विशेषणमव्यभिचारात्। तथा सति विशेषणं न स्यादनुपलब्धिता(तु) नापैति। तस्माद् यावान् कश्चित् प्रतिषेधः स सर्व्वोनुपलब्धेरिति पर्युदासलक्षणो(ऽ)भावः प्रत्यक्षसिद्धः। स एव चान्यापेक्षयानुपलम्भः। यत्तु पुनरिदं नोपलभे इत्युत्तमपुरुषप्रयोगः स ज्ञानपर्युदासलक्षणानुपलब्धिप्रकरणतो न त्वर्थाभावनिरासाय। तदव्यतिरेकादसावेव वस्तुनोप्यभाव इति। यदा हि सत्तोपलम्भयोरेकता तदा वस्तुव्यतिरेकस्यापि प्रत्यक्षसिद्धतैव न खण्डशः सम्भवः।

ननु व्यापकानुपलब्ध्या(ऽ)भावः सिध्यति। तथा हि। उपलब्धिलक्षण(प्राप्तस्य)-भाव उपलम्भेन व्याप्तः तदभावतस्तत्सरूपाद्[1] वस्त्वभावप्रसिद्धिः।

सत्यमेतत्।

स्वभावानुपलम्भोयमभावस्याप्रसाधकः। सर्वत्रैव भवेदेवं प्रत्यक्षात् तदभाववित् ॥५८२॥

यदि व्यापकानुपलब्धिरुपलब्धिलक्षण(प्राप्त)स्य प्रत्यक्षप्रसिद्धोऽभावः(।) सर्व्वत्र तर्हि तदभावः प्रत्यक्षसिद्ध एव न स्वभावानुपलब्धिर्न्नाम। व्यापकानुपलब्धिश्चामूढस्य यद्यभावसाधनी (।) मूढस्यापि सैव स्मरणेन विषयीक्रियतो किमनुपलब्ध्यन्तरकल्पनया। स्वभावानुपलब्धिर्व्वा यदि मूढस्य सैव पुनरमूढस्यापि भविष्यत्यकस्माद् धूमप्रतिपत्तिवन्न खलु तत्र त्रित्वमपैति। किञ्च।

व्याप्यव्यापकयोरत्र भेदो न परमार्थतः। उपलम्भ एव सत्तेति पूर्व्वं संप्रतिपादनात् ॥५८३॥

दृश्यस्य हि सत्तोपलम्भेन व्याप्तेत्ययमवष्टम्भो व्यापकानुपलब्धिवादिनः। अयञ्च स्वभावानुपलब्धिवादेपि समान एव। न हि तादात्म्ये सति न व्याप्यव्यापकभावः। तथा चोपलम्भः (एव) सत्तेति प्रतिपादितं। तत्कार्यहेतुव्याप्त्यव्यतिरेकात् तत्स्वभावाविशिष्टमिति तदनुपलम्भः स्वभावानुपलम्भ एवोक्त इति कार्यानुपलब्धिं स्वभावानुपलम्भ एवान्तर्भावितां यो व्याचष्टे व्यामूढः स कथं संवेदनानुपलम्भं स्वभावानुपलम्भनं न व्याख्यास्यति। तस्मादन्यभाव एवापरस्याभावोऽन्योपलब्धिरेव चान्यस्यानुपलब्धिः(।) सा च स्वभावानुपलब्धिरेव।

---

[1] B. ०वतस्तुच्छरूपाद्

## २. दृश्यानुपलब्धिः सद्भावबाधिका

नन्वेवमपि व्यापकानुपलब्धिरसम्भविनी (।) सत्यं स्वभावानुपलब्धावेव सर्व्वासामन्तर्भाव इतीष्टमेव संगृहीतं न काचिन्नः क्षतिः। कथन्तर्हि भेदः।

व्याप्यव्यापकयोर्भेदात् प्रचयापचयाप्तितः। वृक्षशिंशपयोर्दूरादूरत्वेन च भिन्नता। ५८४॥

वृक्षता प्रचयिनी शिंशपात्वं त्वपचयवत्। दूरे व्यापकानुपलब्धिर्व्याप्यापेक्षया। समीपे तु स्वभावानुपलब्धिरित्यनयोर्भेदः। उपलब्धिलक्षणप्राप्तसत्त्वोपलम्भयोस्तु परस्परं व्याप्यव्यापकभावान्न भेदः शक्यकल्पनः। तेन स्वभावानुपलब्धिरेवेति स्थितमनुपलब्धिः स्वभावहेतावन्तर्भवतीति। अत एव।

अदृश्ये निश्चयायोगात् स्थितिरन्यत्र वार्यते।
यथाऽलिङ्गोन्यसत्त्वेषु विकल्पादिर्न सिध्यति ॥२७६॥

अतः (।)

अनिश्चयफला ह्येषा नालं व्यावृत्तिसाधने।
आद्याधिक्रियते हेतोर्निश्चयेनैव साधने ॥२७७॥

एषा स्वभावानुपलब्धिर्हेतोर्न्नाभावं विपक्षे निश्चाययति। दूरदेशादौ निश्चयायोगात्। अदृश्यापेक्षया हि नेयमुपलब्धिलक्षणप्राप्तानुपलब्धिः। आद्या तु हेतोर्व्विपक्षात् सर्व्वतोव्यावृत्तिनिश्चये व्याप्रियते। या कारणव्यापकानुपलब्धिर्हेतुस्वभावव्यावृत्त्यैवेत्यादिर्वर्णिता। तत्रापि प्रसङ्गसाधनतामङ्गीकृत्य साधिका।

ननु विरोधी नाम लिङ्गान्तरं। नास्त्यत्र शीतस्पर्शोऽग्नेरिति। स कथं प्रभेदलक्षणेनोक्तः। अनुपलब्धावेव तस्याप्यन्तर्भावात् (।) यतः।

तस्याः स्वयं प्रयोगेषु स्वरूपं वा प्रयुज्यते।
अर्थबाधनरूपम्वा भावे भावादभावतः ॥२७८॥

विरोधी हि हेतुस्तस्या एवानुपलब्धेः प्रभेदस्तदन्यप्रभेदवत्। अन्यथा विरोधिविरोधिकार्यविरोधिव्यापकादीना[1]मपि परः पृथग् निर्द्देशकृद् भवेत्। यदा तु तस्या एवायमनेकप्रकारो भेदस्तदायमदोषः। तथा हि। स्वरूपं वा प्रयुज्यते। स्वभावकारणव्यापककार्यानुपलब्धिरिति। अथाप्रतिषेधस्य[2]बाधनरूपं वा। नास्त्यत्र शीतस्पर्शोग्नेरिति (।) यथैवानुपलब्धिरभावसाधिका तथा साक्षात् परम्परया वा विरोधिन उपलब्धिरपि(।) कस्माद् (।) विरोधस्य निवर्त्तकत्वात्। कथम्विरोधप्रसिद्धिः। एकस्याग्नेर्भावे ऽविकलकारणस्य शीतादेरभावाद् विरोधगतिः। उपलम्भानुपलम्भलक्षणो हि विरोधः। ततो विरोधिदर्शनादनुपलम्भ उपलब्धिलक्षणप्राप्तस्य साध्यते। तत्र दूरदेशवर्त्तिनो वह्ने रूपलब्धिलक्षणप्राप्तानुपलब्धिरनुमानसिद्धा सा ऽभावं साधयतीति न विरोधोपलब्धिः स्वभावानुपलब्धेरन्या स एव चोष्णस्पर्शः शीतस्प(र्श)भावः तद्विविक्तत्वादनुष्णाशीतस्पर्शश्च। ततः त योपलब्धे[3] एव तदन्यानुपलब्धिः[4]। एवं विरुद्धकार्योपलब्धिरपि कार्यहेत्वनुमानसिद्धस्वभावानुपलब्धिः। पूर्व्वत्र विरुद्धोपलब्धौ एकसामग्र्यधीनतयानुमानं।

---

[1] B व्याप्तादीना [2] B अर्थस्याप्रतिषेधस्य [3] B ०ब्धिः [4] B तदनपलब्धिः

**अन्योन्यभेदसिद्धेर्वा ध्रुवभावविनाशवत् ।**

परस्परपरिहारस्थितिलक्षणतया विरोधः । शाश्वतेतरवत् । तादात्म्यप्रतिषेधो हि परस्परपरिहारस्थितिलक्षणविरोधतः साध्यते । तद्यथा न सघटोयं प्रदेशः तत्परिहारेणोपलब्धेः । सर्व्वत्र साक्षादभावसाधनी विपर्ययोपलब्धिरेव ।

**प्रमाणान्तरबाधाद्वा सापेक्षध्रुवभाववत् ॥२७९॥**

यथा परस्परबाधने विरोधः तथा प्रमाणबाधनेपि सापेक्षध्रुवभावयोरिव । तथा हि । सापेक्षमनपेक्षमिति परस्परविरोधः । ध्रुवभावित्वमितरदिति च सापेक्षध्रुव(भावित्व)योस्तु परस्परपरिहाराभोवोपि प्रमाणबाधनलक्षणो विरोध इति विरोधान्तरमेतत् तथा हि ।

सापेक्षाद् विरुद्धो[1] भावः स ध्रुवाध्रुवयोरपि । अन्योन्यपरिहारेण विरोधः परमार्थतः ॥५८५॥

यद्येवं प्रमाणं विरोधिनं साधयति न तु प्रमाणविरोधो नामापरः ।

सत्यमेतत् । तथापि विरोधिव्याप्तेन रूपेणार्थतो विरोधात् उक्तमेतत् । अस्यापि किं प्रयोजनं (।) विरोधिव्याप्तोपलब्धिरपि प्रतिषेधस्य साधिका यथा स्यादिति दर्शनार्थं । तथा हि । न ध्रुवभावी भूतस्यापि भावस्य विनाशो हेत्वन्तरापेक्षणादिति दृश्यते प्रयोगः ।

अपरः पुनराह ।

विरुद्धकार्यव्याप्यस्य योपलब्धिः प्रयुज्यते । तत्र कार्यस्वभावस्य हेतोरन्तर्गमादपि ॥५८६॥
सर्व्वएकतया हेतुर्न्न भिन्नोऽनुपलब्धितः । त्रिविधोपि ततो हेतुस्तस्या एव प्रभेदनम् ॥५८७॥
अनुपलब्धिरेवैको हेतुः कार्यस्वभावयोः (।)

तत्प्रभेदत्वात् । न खलु तत्प्रभेदस्ततो भिद्यते । नहि शावलेयादिकस्य गोत्वाद् भेदः । तत्र कार्यहेतुर्व्विरुद्धकार्योपलब्धिः (।) स्वभावहेतुरपि विरुद्धव्याप्तोपलब्धिः । अनग्निनित्यत्वाभाव[2]साधनात् ।

तदेतदसत् ।

प्रतिबन्धानुरूप्येण यदि हेतुः प्रकल्प्यते । तादात्म्येन तदुत्पत्त्या स्वभावः कार्यमेव च ॥५८८॥

अनित्यत्वेन सह वह्निना च प्रतिबन्धे व्यापकविरुद्धेन विरुध्यते हेतुरिति तदनुपलब्धिभावकल्पनं । तत्र च साक्षाद्धेतुकल्पनं परित्यज्य पारंपर्याश्रयणमसम्भवि । कार्येण वह्निगतौ तद्विरु(द्ध)शीतनिवृत्तिर्न्न तु शीतनिवृत्तावेव साक्षाद् व्यापारो धूमस्य । ततः पारम्पर्येण हेतुताकल्पनमनुमितानुमानं । न च द्वयोरेकेन शब्देन प्रतिपादने त्रयाणां वा नान्य एवासौ हेतुः ।

नहि शब्दवशादर्थः सम्भवत्यन्यथा क्वचित् ।
भेदः प्रयोगमात्रस्य कल्पितः स्यात् तथा सति ॥५८९॥

नास्त्यत्र शीतस्पर्शो धूमादिति । धूमादग्न्यनुमानं कार्यहेतुः । अग्निना शीतस्पर्शाभावसाधनं विरुद्धोपलब्धिः । शीतानुपलब्ध्या शीताभावव्यवहारसाधनं स्वभावानपलब्धिरिति पारम्पर्यहेतूनामतोऽनुमितानुमानमपरमेवानुमानं । न च त्रयाणामेकशब्दप्रतिपादने

---

[1] B ०पेक्षादध्रुवो [2] B ०नित्याभाव

भवत्येकत्वं हेत्वन्तरत्वञ्च। प्रयोगसमास एष: न रूपसमास इति न्यायः। तस्मात् सर्व्वत्र एव हेतुरनुपलब्धिरित्ययुक्तं।

अथ व्यवच्छेदसाधने सर्व्वानुपलब्धिः। न। विषयभेदादेव हेतुभेदात्। तथाचोक्तं।

अनङ्गीकृत वस्त्वंशो निषेधः साध्यतेनया।

वस्तुन्यपि तु पूर्व्वाभ्यां पर्युदासो विधानत ॥५९०॥ इति

## § ८. भावस्वभावचिन्ता

अथ परमार्थतो व्यवच्छेदसाधनादनुपलब्धिरेवेति मतं। तथा सति प्रत्यक्षमेव स्वसम्वेदमिति किन्नोक्तं।

तस्मादसदेतत्। ततः प्रयोगभेदादेव भेदो विरुद्धव्याप्तोपलब्धेः। सापेक्षत्वाद् विनाशस्य न ध्रुवभावः। यतः।

हेत्वन्तरसमुत्थस्य सन्निधौ नियमः कुतः।

तस्यापि हेत्वन्तरस्य स्वहेतुसापेक्षत्वादनियमः। पुनरपरस्यापीति न फलभा-(f)वनियमः।

अथ भावस्य यो हेतुः कुलालादिः स एव तद्विनाशस्यापीति नियमः। अत्रोच्यते।

भावहेतुभवत्वे किं पारम्पर्यपरिश्रमैः ॥२८०॥

तथा हि।

नाशनं जनयित्वान्यं स हेतुस्तस्य नाशनः।
तमेव नश्वरं भावं जनयेद् यदि किम्भवेत् ॥२८१॥

यदि विनाशं जनयित्वा स(स्व)हेतुरेव तस्य नाशनः। नश्वरमेव जनयतु किमनेन पारम्पर्येण अत्र वस्तुस्वभावैरुत्तरं वाच्यमिति चेत्। अन्यथा वस्तुस्वभावत्वान्नैतदिति। तथा हि।

आत्मोपकारकः कः स्यात् तस्य सिद्धात्मनः सतः।
नात्मोपकारकः कः स्यात् तेन यः समपेक्ष्यते ॥ २८२ ॥

यद्यात्मोपकारको विनाशहेतुर्न्न सम्भवति सिद्धस्वभावस्य स(त) इति सिद्धेतरस्वभावेन (तेन) भाव्यं[१]···तस्वभावेन तेन भाव्यं(।) तथा च न स तस्य विनाशहेतुः।

अथ सिद्धस्यापि विशेषस्य कर्त्ता। तथा सति स विशेषः सिद्धस्तदन्यो वा भवेत्। यदि स सिद्धः पूर्व्ववत् प्रसङ्गः। अथ सिद्धे तस्मिंस्तदात्मा न शक्यः कर्त्तुमिति तदात्मव्यतिरेकी विधेस्तथा सति तस्य नोपकारक एवासाविति कस्तस्यासौ भवेत् (।) न कश्चिदित्यर्थः। स्या द्वा व भङ्गस्तु विहित एव न स विधेयः पुनः।

अपि च स पदार्थः स्वकारणात् कालान्तरव्यापी तदन्यथा वा (।) यदि पूर्व्वपक्षस्तदा(।) सर्वकालकलाव्यापी सर्वकार्यस्य साधकः। प्रतिपन्नो यदि तदा नाशकः किङ करिष्यति ॥५९१॥

[१] A. ग्रंथः खंडितोऽत्र

गतोदके कः खलु सेतुबन्धः पयोनिरोधाय हि सेतुबन्धः ।
पयोऽविरोधी नहि सेतुबन्धः प्रयासमात्रं हि स सेतुबन्धः ।।५९२।।

अथ न तथास्य सम्प्रतिपत्तिस्तथा सत्यनिरूपितस्वविषयः कथम्विनाशहेतुः प्रवर्त्तेत । निरूप्य भाविनं भावम्प्रवर्त्तेत इति चेत् । न । नरूपिते सिद्धिस्वभावे क इव विनाशहेतोरुपयोगः । विरोधिस्वभावे कपाले उपयोग इति चेत् । नन्वसावपि विरोधी निवर्त्तक एव । तत्रापि स एव पूर्व्वकः प्रसङ्गः । परस्परपरिहारमात्रेण तु निवर्त्तक एव न स्यात् ।

अथ सिद्धस्य कालान्तरस्थायितयाऽभावं करोति शून्यतालक्षणम्विनाशहेतुः । कालान्तरस्थायिनः शून्यता क्रियमाणा तदविरोधिनी न तस्य निर्वर्त्तिका जलमिवाधारस्य । जलमप्यासक्तकुम्भस्तस्य निवर्त्तकमेवेति चेत् । न । तत्र कालान्तरस्थानस्याप्रसिद्धत्वात् ।

नन्वनुमानेन कालान्तरसिद्धमेव निवर्त्यते । तदसत् ।

अनुमानाप्रसिद्धस्य न तस्यैव निवर्त्तनं । अन्यस्याभाव एवेति न तस्यापि निवर्त्तनं ।।५९३।।

प्रत्यक्षवदनुमानमपि प्रमाणमेव तत्सिद्धमपि सत्यमेव कथमभावः (।) तस्याभावे हि तस्य तत्प्रतीतिरसत्या भवेदिति न प्रत्यक्षानुमाने स्तः । तदभावान्न भावसिद्धिरिति कस्य विभागः । संभाव्यमानस्य विभाग इति चेत् । अन्वयादभ्यास एवैष न च वस्तुनो निर्णय इति यत्किञ्चिदेतत् ।

अथ तस्यैवान्यथात्वङ्करोति कपालादिलक्षणम्विनाशहेतुः (।) अत्राप्युच्यते ।

घटादावन्यथात्वङ्कि्ङ्कृत्वा मृद्द्रव्य इष्यते । घटादावन्यथात्वस्य सिद्धेर्भावः कथन्न सः ।।५९४।।

यदि घटरूपे सोन्यथाभावः (।) स एवाधारोन्यथात्वस्य ततो घटः स्वेन रूपेण दृष्टः कथमन्यथा । अथ न दृश्यते घटः कस्यासावन्यथाभावः । घटपूर्वकोन्यथाभावस्तस्येति व्यपदेश्यः ।

ननु विनाशे सति तत्पूर्वकः सोपि विनाशोन्यथाभावेत्यनवस्था अथ मृद्द्रव्यस्यान्यथा भावस्तदप्यविनष्टमेव कथन्तस्यान्यथाभावलक्षणो विनाशः । तत्रापि पूर्वस्य मृद्द्रव्यस्य न विनाशस्तदाऽभावान्नोत्तरस्य भावादिति । ननु भवत्पक्षेप्ययमेव दोषः । कार्यकाले हि न कारणङ्कथन्तस्य तत्कार्यं । नैतदस्ति यतः ।

कारणम्पूर्व्वभाव्येव समकालन्न कारणं । विनाशः समकालस्तु भावेनेत्यसदुत्तरम् ।।५९५।।

न ह्यन्यदा भावोन्यदा विनाश इति उपपत्तिमदेतत् । यदैव भावस्तदैव विनाशे विनष्ट इति युक्तं । न त्वभावेऽभावो युक्तो मृतस्य मरणाभावात् । कार्यन्ते मृतेपि युक्तमेव तस्य भावान्तरत्वात् । अभावस्तु तस्यैव शून्यता । नास्ति तदिति सामानाधिकरण्येन प्रतीतेः । असामानाधिकरण्यन्तु पदार्थस्य विनाश इति व्यपदेशिवद्भावाच्छिलापुत्रकस्य शरीरमिति यद्वत् । न त्वेवमग्निर्धूम इति सामानाधिकरण्यं ।

नन्वत्रापि न सामानाधिकरण्यम्परमार्थतः । स्मर्यमाणं हि पूर्वकं रूपम्विनष्टमिति प्रतीयते (।) तदुत्तरकालभाविना विनाशेन न च तथा सामानाधिकरण्यं ।

तदप्यसत् (।) एवं हि सति महाम्विरोधः । तथा हि ।

स्मर्यमाणस्य रूपस्य न विनाशोऽस्ति तत्त्वतः । त.। दृश्यस्य रूपस्य विनाश इति साहसं ।।५९६।।

विनाश इति हि नास्तित्वमुच्यते । न च विद्यमानावस्थाया नास्तिता । अविद्यमानावस्थायान्तु स एव नास्तीति कथन्नास्तिता । तस्मान्नास्तीति व्यतिरिक्ताभाववादिनः सामानाधिकरण्याभावः । तस्मान्नान्योऽभावो भावात् । ततः सामानाधिकरण्यं । उत्तरकालभाविनो हि स एवाभावो यस्तद्व्यावृत्तिमतः पूर्व्वस्य भावः । तस्य चोपलब्धिरूप(ा)न्तरस्यानुपलब्धिः (।) सा च वर्त्तमानरूपग्राह्यग्राहिप्रत्यक्षस्वभावोत्तरेण सह संघटितस्य ग्रहणे कारणावधिग्रहणप्रसङ्ग इति प्रतिपादितम् (।) अतः परासंघटितस्यैव प्रतीतिरुदयमात्रादेवेति परानपेक्षो विनाशः ।

ननु(।)स्वभावो हि स तस्येत्थं येनापेक्ष्य विनश्यति । तत्कथमनपेक्ष्यः । अत्रोच्यते ।

व्यापी यदि भवेद् भावः कस्मै परमपेक्ष्यते । अथाव्यापी स्वयम्भावस्तदपेक्षा वृथा भवेद् ।।५९७।।

इत्युक्तम् । अत एवाह ।

**अनपेक्षश्च किम्भावोऽतथाभूतः कदाचन ।**
**यथा न क्षेपभागिष्टः स एवोद्भूतनाशनः ॥२८३॥**

प्रथमतरमेव प्रत्यक्षदृष्टस्त्रुटयत्तया कथमतथाभूतः कदाचित् । यथा स एव नित्यवादिनो नश्यदवस्थायां ।

**क्षणमप्यनपेक्षत्वे भावो भावस्य नेति चेत् ।**

यद्यनपेक्षो भावो विनाशे क्षणमप्येकेन्नापेक्षत इति न भावो भावस्य भवेत् क्षणमपि । तथा हि (।)

नित्यं सत्त्वमसत्त्वम्वाऽहेतोरन्यानपेक्षणाद् (।)

इत्युक्तं । तथा भावक्षणानन्तरम्भवन्विनाशः कथन्तदात्मा भवेत् ।

अतदात्मतायाञ्च न सामानाधिकरण्यं । तदेतदपि काशकुशावलम्बनं ।

**भावो हि स तथाभूतोऽभावे भावस्तथा कथं ॥२८४॥**

भाव एवोत्तरभावासंघटितो विनाशः स कथं भावाभावे भवेत् । न हि तदात्मा च स्यात् तदभावे च भवति चेति युक्तं । एवन्तर्हि विनाशोस्तीति कथम्विनाशभावे विनष्टः । व्यतिरिक्तविनाशभावेपि स्वरूपस्याप्रच्युतेः कथम्विनाशः । सैव व्यतिरिक्तविनाशभावेपि स्वरूपस्याप्रच्युतेः कथम्विनाशः । सैव व्यतिरिक्तविनाशासिका प्रच्युतिरिति चेत् । भवतु तथाप्यसौ व्यतिरिक्ततयैव प्रत्ययविषय इति भावस्तदवस्थ उपलभ्यतां । एतदेव व्यतिरिक्तस्य व्यतिरिक्तत्वं यत्पररूपाविहन्तृत्वं नाम । विरोधाद् विघातः प्रत्युक्त एव । विनाशमन्तरेण विरोधाप्रसिद्धेः । तस्मात् ।

**येऽपरापेक्ष्य तद्भावास्तद्भावनियता हि ते ।**
**असम्भवाद् विबंधे च सामग्री कार्यकर्म्मणि ॥२८५॥**

तद्यथान्त्या कारणसामग्री विबन्धसम्भावनावहिता स्वप्रसवजनने न किञ्चिदपेक्षत इति तन्नियता । तथा विनाशेपि भाव इत्यनपेक्षत्वाद विनाशे क्षणिको भाव इति सापेक्षताया-

**नावश्यम्भावविभावि नाशस्य। उत्पत्तिमत्त्वाद् विनाशितैवेति चेत्। न। प्रतिबन्धाभावात। नहि प्रतिबन्धमन्तरेण हेतुः साध्यस्य साधकः।**

अहेतुत्वेपि नाशस्य तादात्म्ये साध्यसाधनं।

कारणत्वन्तु साध्यस्य पश्चाद्भावान्न युक्तिमत् ॥५९८॥

**नहि पश्चाद्भाविना विनाशेन कारणेन भवितुं युक्तं प्राग्भाविन उत्पत्तिमत्वस्य। कार्यन्तु नावश्यम्भावि कारणाद् (।) अतस्तत्कारणत्वेन न हेतुः।**

**ननु तादात्म्यमहेतुकत्वे भवतीति कुत एतत्। कथं वा हेतुकत्वन्नाशस्य मुद्गरादन्वयव्यतिरेकानुविधानात्। स एव हि कार्यधर्म्मः। अत्रोच्यते।**

भावाभावो विनाशश्चेदुत्तराघटनात्मकः। स पूर्वमपि दृष्टत्वान् कथन्नाशकहेतुकः ॥५९९॥

**यो हि यमन्तरेणापि दृश्यते स कथन्तद्धेतुकः। नान्वयमात्रेण हेतुरिति प्रतिपादितमेतत्। यथा च विनाशकसन्निधौ कपालादिभावे परासंघटितस्य घटस्य प्रतीतिस्तथोदयानन्तरमपि। नहि पूर्वमपि पररूपसंघटना प्रतीयते मरणावधिप्रतीतिप्रसङ्गादिति प्रतिपादनात्। परासंघटनमेव च यदत्रापि विनाशः। विनाशेनैवासंघटना क्रियत इति चेत्। तदसद् यतः।**

असामर्थ्यादपार्थत्वान्नाशेनैव न तत्क्रिया। न ह्यसंघटिते नाशः समर्थो घटितेपि हि ॥६००॥

**यद्यसौ हेतोः संघटित एवोत्पन्न इति तथैव प्रत्यक्षगृहीत इति कस्तत्र नाशस्योपयोगो ऽसामर्थ्ये हि तदा तस्य भवेत्। अथासंघटित एवासौ स्वहेतुतः (।) तथा सति व्यर्थको नाशः। कृतस्य करणाभावात्। तस्मात् क्षणिक एव स्वभावतः प्रत्यक्षतोवगतोन्यथा प्रतिपत्तेरसभवात्। यश्चान्यथा प्रतिपत्तुमशक्यः स नोन्यथा भवति प्रत्यक्षतोन्यथात्वस्य बाधा (? ध)नात्। तस्मादनपेक्ष एव तन्नियतो नापरः। यथान्त्या कारणमामग्री।**

**ननु सापेक्ष्योप्यादित्यस्यास्तमय उदयश्चावश्यम्भावी निरपेक्षतायामुदयास्तमयानन्तरमेव भवेदस्तमयोदयं। सामाग्री चाभेदेन नियताऽपि तु पदार्थान्तरेंकुरादिके (।) ततस्तद्दृष्टान्ततो विपर्यय एव भवेत् न तु प्रकृतसाध्यसिद्धिः। अत्रोच्यते।**

नोदयास्तमयव्याप्तिरादित्यास्तमयोदये। कदाचिदन्यथापि स्यात् प्रमा नास्ति विपर्यये ॥६०१॥

**यदि नाम भूयो दर्शनन्तथापि प्रमाणाभावन्न व्याप्तिरुदयास्तमयाभ्यामस्तमयोदयभावयोः। तथा हि पतिव्रतोपाख्यानं श्रूयते।**

सम्भवश्चास्ति हेमन्ते चिरादुदयभावतः। झटित्यस्तङ्गनेर्भावात् तद्वदत्यन्तसंभवः ॥६०२॥

**न चास्तमयावित्यस्यापि शैलादिनान्तरितत्वं। तच्चान्तरितत्वमस्मदाद्यपेक्षया परे तु योगिनः पश्यन्त्येव। अपि च। सापेक्षाणान्ताव( दव )श्यम्भावितेति (।) यदि नाम केषाञ्चिदवश्यम्भावो परेषान्तु न तथेति संशयः।**

**यदप्युक्तं (।) व्यतिरिक्तभावनियतान्त्या सामग्री। विनाशस्तु न व्यतिरिक्तः। तदप्यसद् यतः।**

योन्यस्वभावे नियतः स्वहेतोस्सुतरामसौ। स्वस्वभावात्मके नाशे किमेवन्न प्रकल्प्यते ॥६०३॥

**नहि विनाशो नामावस्तुस्वभावोन्य एव वस्तुन एव तु तत्त्वमपरासंघटितं प्रतीयमानं**

शिलापुत्रकस्य शरीरमिति न्यायेन (।) तथा प्रतिपादनविषयो भावस्य विनाश इति यथान्त्या कारणसामग्री तदंकुरोत्पादनस्वभावनियता तथा भावोपि तदुत्तरस्वभावासंघटित-व्यवहारनियत इति किन्नामानिष्टं। अपि चानपेक्ष्यतया तन्नियतत्वं सामान्येन साध्यते(।) वस्त्ववस्थाभेदकल्पनन्तु जात्युत्तरमेव घटशब्दमूर्त्तामूर्त्तविकल्पनावत। तस्मादनुपलब्धि-प्रभेद एव विरुद्धव्याप्तोपलब्धिः(।) सा च स्वभावहेतावेव हेतुर्भवती-भूद्भावे च विपर्ययौ। तेन यः सन्सजातीये द्वेधा च स हेतुः। विपर्यये विरुद्धः। तदन्यस्त्वनिश्चितः पञ्चप्रकारः। तत्र भेद[1]सामान्ययोर्गमकत्वविवादः प्रतिक्षिप्तः। शेषस्त्रिप्रकारो व्यावृत्तिद्वारेण गमकत्व-प्रतिपादनार्थः। तथा हि।

नान्वयद्वारको हेतुर्गमकत्वव्यवस्थितः। भावमात्रसमाधिक्ये त्रिधाप्यगमकत्वतः ॥६०४॥

यद्यन्वयो गमकत्वे प्रयोजको ऽनित्यत्वादप्रयत्नानन्तरीयक इत्यपि गमकः स्यात्। अस्त्यभा(वा)न्वयः। अथानभावमात्रेण गमकत्वमन्वयस्य व्यतिरेकसाहित्यापेक्षया गमकत्वात्। अयन्तर्हि गमको स्पर्शत्वान्नित्य इति। अयमपि न गमकः समत्वादन्वयस्य अयन्तर्हि स्यादनित्यत्वात् प्रयत्नानन्तरीयक इति। अत्र हि बलवानन्वयो दुर्बलो व्यतिरेकः। तथाहि।

न प्रधानन्तदन्यस्य विशेषं समपेक्षते। प्रयोजकपरापेक्षन्न दृष्ट भोजनादिषु ॥६०५॥

यदि प्रयोजकत्वमन्वयस्य गमकत्वे स्यान्न व्यतिरेकस्य सपूर्णतामपेक्षेत तमनादृत्यैव गमकत्वं प्रयोजयेद् भोजनप्रयोजकवत् (।) व्यतिरेकस्तु प्रयोजकः सद्भावमात्रमेवान्वयस्यापेक्षते न समत्वादिकं। यथा प्रयत्नानन्तरीयकत्वादनित्य इति। यः प्रयत्नानन्तरीयकः सो नित्य एव नित्यताव्यवच्छेदकत्वेन गमकः। एवमन्योपि हेतुः। तथा हि।

नित्याद् व्यावर्त्तते येन तदभावं स साधयेत्। अनित्ये वर्त्तमानन्न तदभावस्य साधकं ॥६०६॥

अनित्ये यदि नाम दृष्टन्तथापि न नित्याभावं साधयति(।) नित्यताऽभावे तु दृष्टन्तद-भावसाधने नियमेन राश्यन्तरसंक्रान्तिः। दृष्टन्तु न नियमेन[2] अन्यत्र न भवति तदन्यत्र[3]। यदि च दर्शनद्वारेण गमकस्तदा दृष्टमेवाग्निं गमयेत् सकलन्न तदपरव्यक्तिगतिः। ततस्तदन्य-व्यक्तिप्राप्तावप्रमाणता भवेत्। अथ सोपि क्रोडीकृत एव। न। दृष्टानुसारेण क्रोडी-करणासंभवात्।

ननु व्यावृत्तिरपि तदन्वयद्वारेणैव निश्चिता तत्कथन्नान्वयप्राधान्यं। न। दर्शनस्य व्यावृत्तिनिश्चये नधिकारात्। दर्शनं हि दृश्यमानतामेव निश्चाययति न तदपरं। नान्यदर्शन-मन्यनिश्चयहेतुः। संस्कारादन्यत्रापि निश्चय इति चेत्। तदसत्।

संस्काराः खलु यद्वस्तुरूपप्रख्याप्रभाविताः। व्यवस्थाहेतवस्तत्र ततोन्यत्र न निश्चयः ॥६०७॥

यदा तु स एव प्रतिबन्धो व्यतिरेकप्रधानतया गृह्यते तदा तद्द्वारेण हेतुरन्यापोहस्य गमकः।

---

[1] तत्रैव—केवल व्यतिरेकी केवलान्वयी। [2] तत्रैव—अनित्यत्वं।

[3] तत्रैव—नित्यत्वे भवतीति न।

ननु दर्शनद्वारेण प्रतिबन्धगतौ कथम्व्यतिरेकेण प्रतिबन्धगतिः । नैतदपि समुचितम्वचः ।

अन्वयेनापि सम्बन्धो व्यतिरेकप्रधानतः । अतिक्रम्य न साम्भाव्य इति प्रागेव वर्णितं ॥६०८॥

अन्वयेन हि सम्बन्धग्रहणे तद्व्यक्त्यैव भवेन्नान्यथोक्त्या । तथा हि नान्यस्योक्तेस्तदान्वयगतिः । अथ तयापि पश्चात् तथा सति व्यभिचारादसम्बन्ध एव प्राक्तन्या न स्यात् । व्यभिचारतः । व्यक्तिसामान्ये सम्बन्ध इति चेत् । किमिदं व्यक्तिसामान्यन्नाम । न खल्वविभावितस्वरूपं सम्बन्धितयान्यथा वा प्रत्येतुं शक्यं । व्यक्तिषु समानप्रतिपत्तिनिबन्धनमिति चेत् । अस्ति समान इति प्रतिपत्तिर्न तु तस्यानिबन्धनमिदमिति शक्यन्निदर्शयितुं । यदि नाम प्रत्यक्षतो न प्रतीतिं कार्यदर्शनादनुमानात् प्रतीयतां । प्रतीयतां कारणसामान्यन्न तु तत्सामान्यन्तस्येदंतया निरूपणात् । एककार्यकारित्वम्वा निबन्धनङ्किमपरेण । तथा हि ।

नास्माकमस्मिन् कर्त्तव्ये भेदः कश्चन विद्यते ।

इति लोकः समस्तोयमेकवाक्यतया स्थितः ॥६०९॥

तस्मादयं धूम एषाम्पावकभेदानामेकेन केनचिद विना न भवतीत्येतदभावाद् व्यावृत्तो धूम इत्यन्यापोहसम्बन्धेनैव सम्बन्धग्रहणन्नान्येनेति व्यावृत्तिरेव साध्यते हेतुना शब्देन वा । ततो व्यावृत्तिरेव प्राधान्येन गम्यते । सामर्थ्यात्तु व्यक्तिसत्तानान्तरीयकतया प्रतीयते । अनग्नेरभावे नियतं काचिदग्निव्यक्तिराक्षिप्यते । अन्यथा नग्निव्यावृत्तिरेव न स्यात् ।

नन्वन्यस्त्वनिश्चित इति पञ्चप्रकारो ऽनैकान्तिक उक्तः । न चेदं युक्तं शेषवतो विरुद्धाव्यभिचारिणश्चापरस्याप्यनेकान्तिकत्वात् । नाभिप्रायपरिज्ञानात् । न ह्ययमर्थः । अन्यः पञ्चप्रकारो निश्चितः । अपि तु तत्र यः सत्सजातीये द्वेधा चासँस्तदत्यये निश्चितः स हेतुः । विपरीततया निश्चितः स विरुद्धः । स च सर्व्वस्तादात्म्यतदुत्पत्तिभ्याम्प्रतिबद्ध एव । अन्यस्तु न निश्चित एव । स एव स प्रतिबद्धो ऽनैकान्तिक इति वाक्यार्थः । शेषवद्विरुद्धाव्यभिचारिणोरपीदमेव लक्षणमिति तयोरप्यनैकान्तिकत्वं न निवार्यं । तस्मात् सकलमनवद्यं । तथा हि (।) विरुद्धाव्यभिचारिणोन्येनापहृतविषयस्य साध्याप्रतिबद्धविषयत्वं । कथन्तर्ह्यव्यभिचारी । अप्रतिबद्धोऽव्यभिचारी चेति व्याहतं । एवन्तर्ह्यव्यभिचारी संशयहेतुरित्यपि व्याहतमेव । अस्मत्पक्षे त्वप्रतिबन्धादेव संशयहेतुः । अव्यभिचारित्वङ कथमिति चेत् । अभ्युपग(म)द्वारेणेति न दोषः । तथा चाह (।) यदा तर्हि शब्दत्वं नित्यमभ्युपैति तदायं हेतुरेव स्यात् । यतः ।

न क्वचिच्छ्रावणत्वस्य नाशित्वे दृष्टिसम्भवः ।

नित्य एव हि दृष्टत्वाद् गमकत्वस्य सम्भवः ॥६१०॥

गमकत्वलक्षणाभ्युपगमाद् गमकः । दर्शनादर्शनमात्रेण च वैशेषिकस्य गमकहेतुता । सा चात्रास्तीति गमक एव प्राप्तः । आचार्यः प्राह । स्याद् गमको यद्यत्र कृतकत्वमपि कश्चिदनित्यत्वे हेतुन्न ब्रूयात् । उभयन्तु गमकमुपलभमानस्य स्वाभ्युपगमादेव संशयः । तस्माद् वैशेषिकस्यैवमभ्युपगच्छतोतिसङ्कटप्रवेशः । तथा हि ।

शब्दस्यानित्यतेष्टा चेद् योज्या शब्दत्वनित्यता । तद्द्वारेण हि नित्यत्वे परोपि गमको भवेत्॥६११॥

न खलु समानन्याययोगी न तथा भवति । न्याय एवासौ तथा न स्यात् । तथा च

सकलव्यवहारोच्छेद एव। समानश्च कृतकत्वेन हेतुत्वन्यायः श्रावणत्वस्यापीत्यसावपि कृत[1]-कत्वसाध्यविपर्ययाव्यभिचारी न गमकः कथं तस्मात् पराभ्युपगमेन विरुद्धाव्यभिचारी नान्यथे-त्याचार्यस्याभिप्रायोऽवगन्तव्यः।

यदा तर्हि शब्दत्वं नित्यमभ्युपैतीति वचनात्। तस्मादप्रतिबद्ध एव संशयहेतुरिति व्याप्तिहेत्वादिलक्षण। तत्र पक्षधर्मो हेतुरिति (।) सामर्थ्यादपक्षधर्मो न हेतुः। विपरीतः पक्षधर्माविरुद्ध इत्यपक्षधर्मो न विरुद्धः।

अन्यस्त्वनैकान्तिकाः पक्षधर्म इत्यपक्षधर्मो नानैकान्तिकः (।) ततः स्वनाम्नैव व्यप-देष्टव्यः। सिद्धमिति[2]। धर्म्यसिद्धावप्यसिद्ध एव। अन्यतराद्यसिद्धावपि। तथा चाचार्यः।

"द्वयो. सिद्धेन धर्मेण व्यवहाराद् विपर्यये। द्वयोरेकस्य चासिद्धौ धर्म्म्यसिद्धौ च नेष्यते" ॥६१२॥

यदि तर्हि पक्षधर्मो हेतुः। कथमनित्यः शब्दः नित्यस्याकृतकत्वात्। अनित्यस्य कृतकत्वादिति। तथा।

(अ)सदकरणादुपादानग्रहणात् सर्व्वसम्भवाभावात्।
शक्यस्य शक्यकरणात् कारणभावाच्च सत्कार्यमिति[3] ॥६१३॥

अत्रोच्यते।

हेतोः साध्यान्वयो यत्राभावे ऽभावश्च कथ्यते। पञ्चम्यां तत्र दृष्टान्तो हेतुस्तूपनयान्मतः ॥६१४॥

तद्यथा नित्यः शब्दः अनित्यस्य कृतकत्वात्। तथा च कृतकः शब्द इति। तथाऽ नित्यः शब्दः नित्यस्याकृतकत्वात्। तथा च कृतकः शब्द इति पञ्चम्यन्तेन[4]।

ननु दृष्टान्तः साधर्म्यवैधर्म्याभ्यामित्यर्थसतत्वं। तथाऽसदकरणादिकमपि द्रष्टव्यं। एते च यथा न हेतवः तथा प्रतिपादितं। अपि च।

असिद्धप्रतिबन्धस्य न हेतोः साध्यसाधने। सामर्थ्यमत्र नास्त्येतदत एव न हेतवः ॥६१५॥

असदकरणादिति कथमयं हेतुः। असतः शशविषाणादेर्न करणं दृष्टमिति। न चैतावता व्यतिरेकेण विपर्ययसाधनं (।) यदि कस्यचिदसतः क्रिया नोपलभ्यते (।) सर्व्वस्य तथा नेति कुत इयं व्याप्तिः। नहि विपर्यये प्रतिबन्धमन्तरेण व्यतिरेकव्याप्तिप्रसिद्धिः।

धूमाभावेऽग्न्यभावस्य कथं व्याप्तिः प्रसिध्यति।
पावकेन यदि व्याप्तो धूमः सिध्यति मानतः ॥६१६॥

न खलु सकलं जगद् बंभ्रम्यमाणेनापि तत्रान्यत्रात्र च नास्तीति व्यापी व्यतिरेकः प्रत्येतुं शक्यः। कालदेशव्याप्तिकस्य भ्रमणस्यैवासम्भवात्।

अन्वयेन तु प्रतिबन्धग्रहणे तत्सामर्थ्यादेव व्यापिव्यतिरेकप्रसिद्धिः। एतच्च प्रागेव प्रतिपादितं।

तस्मादेते न हेतवः। पक्षधर्म एव हेतुर्व्विरुद्धोनैकान्तिकश्च।

अनेन च परार्थानुमानमेव सदसत्त्वप्रख्यापनप्रक्रमेण प्रकटितं (।) शेषः प्रपञ्चः प्रमाण-समुच्चय एवावगन्तव्यः। परिशिष्ट[5]रूपनिरूपणायेति व्युदासितं मनोस्य वार्तिककृतः।

[1] B. कृतकत्व [2] B असिद्ध इति [3] B सांख्यकारिका
[4] B. पञ्चम्यन्तेनात्र दृष्टान्तः [5] B. ०रूपत्रैरूप्य०व्युदासित०

हे वादिनो न खलु संततपक्षपातद्वेषं मनः स्वपरपक्षकृतान्धकारं ।
तत्त्वप्रबोधन[1] विधायि मनस्विवृत्तं मध्यस्थभाव इति तत्र मतिर्व्विधेया ॥६१७॥
तीर्थ्याः श्रीधर्मकीर्त्तेर्म्मतमिदममलं तादृशामेव गम्यं ।
मादृग् व्याख्यातुमीशः कथमिति सुचिरं चिन्त्यतामत्र हेतुः ॥६१८॥
अस्मिस्त्वभ्यासमात्राद् यदि भवति परः तत्र तत्वार्थसिद्धचै ।
युक्तोस्मिन् पक्षपातः स्वपरमतिरियं युक्त्ययुक्त्योः कृतार्था ॥६१९॥
संक्षेपतः कृतमिदं परबोधसिद्धचै वक्तुं पुनः सुबहु साधु च शक्यमत्र ॥६२०॥
रत्नाकरादधिगतस्य हि रत्नराशेः प्रौढः प्रतिग्रहकृदस्ति न तेन भाष्यम् ॥६२१॥
शरीरशोभां रागाय ग्राम्या वाञ्छंत्यलंकृतिम् ।
वार्त्तिकस्याप्यलङ्कारो मयाकारि न गर्व्वतः ॥६२२॥
इत्यु(न्)मुक्तपरार्थसाधनधियामेवं मतिः श्रेयसे ।
तत्ताथागतधर्मनीतिनिपुणं चेतो विधेयं सदा ॥६२३॥
क्षीरोदादपरोपि किं जलनिधिर्दृष्टो विधाता क्वचित् ।
लक्ष्मीचन्द्रमसोः समस्तजगतामानन्ददात्रो[2] र्जनैः ॥६२४॥
इत्यनिन्द्यमिदमारचय्य यत् प्राप्तमर्थकुशलम्मयामलं[3] ।
तेन सर्व्वजगदर्थसाधनी सिद्धरस्तु जगतोस्य सर्व्वदा[4] ॥६२५॥

**इति वार्त्तिकालङ्कारप्रमाणमहाभाष्ये तृतीयः परिच्छेदः ।**

**समाप्तश्चायं प्रमाणमहाभाष्यवार्त्तिकालंकारः ।**

**कृतिरियं[5] कुतीर्थ्यतमस्तोमविघनपटोराचार्यप्रज्ञाकरगुप्तसहस्राङ्शुमालिनः ॥०॥[6]**

## प्रमाणवार्तिकलंकार तालपत्र (७०० पे०)

---

[1] B. प्रकाशन० । [2] B. यित्रो० । [3] B. मयोज्ज्वल०

[4] B. इति प्रमाणवार्त्तिकालङ्कारे भाष्ये परार्थानुमान परिच्छेदश्चतुर्थः । समाप्तञ्चेदं प्रमाणवार्त्तिकालङ्कारभाष्यमिति ।

[5] T. प्रमाणमहाभाष्यं वार्त्तिकालंकारः महापंडितप्रज्ञाकरगुप्तपादेन कृतः । षष्ठ्यधिकमाह्निकं (बम्-पो) । (१) कश्मीरपंडितभाव्यराजेन लोकचक्षुषा धीमत्प्रज्ञेन (ब्लो-ल्दन्-शेस्-रब्) भाषान्तरीकृतः (२) पुनश्च कश्मीरपडित (म्खन्-पो) कुमारश्रिया शु-छेन् (वास्तव्येन) लोकचक्षुषा भिक्षुणाऽऽर्यप्रज्ञेन (ऽफग्स्-पऽि-शेस्-रब्) निर्णीतः (भाषान्तरपाठः) ।

[6] A. लिखिता भूतिचन्द्रेण भिक्षुणा ज्ञानकांक्षिणा । यदस्पष्टमशुद्धम्वा तज्जनाः क्षन्तुमर्हथ (।) लिखिता लकृतिरुत्तरस्याम्(।)